VV-2.2.12: यत्तु एकत्वाविवक्षायामपि भावाख्यात-स्थले एकवचनस्य साधुत्वदर्शनात् संख्याया अविवक्षणेऽपि 'संपन्नो व्रीहिः'[22] इत्यादौ एकवचनोपपत्तेः अलं जात्येकत्वपरतया तत्र समर्थनेन इति। तदपि अकिञ्चित्करम्।

भावाख्यातस्थले गत्यन्तरविरहेण विभक्तेः निरर्थ-कत्वोपगमात्। अत्र[23] च सार्थकत्वोपगम[24]-सम्भवे तत्परित्यागस्य अनुचितत्वात्। सति तात्पर्ये तद्बोधस्य आनुभविकत्वाच्च इति।

VV-2.2.13: एवं 'त्रयः समुदिता हेतुः' इत्यत्र हेतुपदं कार्योत्पाद[25]प्रयोजकतावच्छेदकसमुदायत्वावच्छिन्न-परम्। तादृशसमुदायत्वान्वितम् एकत्वम् एक-वचनार्थः। अत एव शक्त्यादीनां त्रयाणां तृणारणिमणिन्यायेन हेतुत्वशङ्कानिरासः[26]। तथा सति एषाम् एकैकसमवधानदशायाम् अपि कार्योत्पत्तेः आवश्यकतया तत्त्रितयपर्याप्त-समुदायत्वस्य कार्योत्पत्तिप्रयोजकतानवच्छेदकतया तेषां त्रयाणां तथाविधैकसमुदायत्वाश्रयत्वानुपपत्तेः।

VV-2.2.14[27]: एवं 'व्यक्त्याकृतिजातयः पदार्थः[28]' इत्यत्र त्रितयनिष्ठस्य पदशक्तिरूप-पदार्थस्य[29]

---

उभयसम्बन्धेन वा यागे विशेषणतया अन्वयबोधोपगमात् न उभयकरणकयागाददृष्टसिद्धिः। एतादृशोभयसम्बन्धेन एकत्वविशिष्ट-यागकत्वमेव पशौ सजातीयद्वितीयराहित्यं, तच्चोभयाकरणकयागस्थल एव।

अथवा पशुविशेषितकरणत्वस्यैव स्वनिरूपकत्व-स्वसमानाधि-करणैकत्वावच्छिन्नप्रतियोगिताकभेदवत्त्वपशुकरणकत्वसम्बन्धावच्छिन्न-स्वनिष्ठा वच्छेदकप्रतियोगिताकभेदवत्त्वोभयसम्बन्धेन यागान्वयोपगमात् नोभय-करणक-यागाददृष्टसिद्धिरिति विभावनीयम्।"

**VV-G-A (पृ. 320.321)**

[22] **V-Jha** ब्रीहिः

[23] **VV-D, VV-G, VV-P, VV-J,** तत्र।

[24] **VV-D** उपगम- इति नास्ति।

[25] **VV-K** कार्योत्पादक।

[26] **SM** एतेषाम्

[27] **VV-D** अयं भागः नास्ति।

[28] **VV-J, VV-A, VV-G, VV-S, VV-G-A** जात्याकृतिव्यक्तयः पदार्थः।

[29] **VV-S, VV-K, V-Jha, SM, VPB,** पदार्थत्वस्य।

एकत्वं विवक्षितमिति। तत्र विशेष्यपदस्य बहुवचनान्तत्त्वेऽपि विशेषणपदस्य एकवचनान्तता-उपपत्तिः।

VV-2.2.15[30]: 'प्रत्यक्षानुमान.' इत्यादिसूत्रे प्रमाकरण-त्वरूप-प्रकृत्यर्थतावच्छेदकस्य प्रत्यक्षानुमानादि-निष्ठस्य एकताया बाधितत्वेन अविवक्षितत्वात् प्रमाणपदस्य बहुवचनान्तता इति।

VV-2.2.16: एवं 'पितरो देवता' इत्यत्रापि पितृ-पितामहादीनां सहितानाम् एकरूपेण देवतात्व-विरहेण[31] पितृ[32]पितामहत्वादिना पृथगेव त्यागो-द्देश्यत्वरूपदेवतात्वम्। उद्देश्यतावच्छेदक-भेदेनैव उद्देश्यताभेदात्। तत्र एकत्वस्य अविवक्षया देवतापदस्य बहुवचनान्तता इति दिक्।

VV-2.3.1: स्वप्रकृतिकत्वं च स्वाव्यवहितोत्तरत्वेन प्रति[33]-सन्धीयमानत्वम्। तेन 'दधि सुन्दरम्' इत्यादौ विशेष्यपदानन्तरं विभक्तेरसत्त्वेऽपि न क्षतिः। तत्र विभक्तेरनुसन्धानं विना शाब्दबोधा-नुपगमात्[34]।

VV-2.3.2: एवं तादृशविभक्तिसजातीयविभक्तिकत्वमपि तथाविधविभक्त्यव्यवहितपूर्ववर्तितया प्रतिसन्धीय-मानत्वम्। तेन 'इदं दधि' इत्यादौ विशेषण-पदानन्तरं विभक्तेरसत्वेऽपि न क्षतिः।

VV-2.4.1: अथ 'नीलस्य घट'इत्यादावपि पदार्थोपस्थि-त्यादिकारणसमवधानसंभवात् कथं न नील-

---

[30] **VV-D** अयमपि भागः नास्ति।

[31] **VV-J, VV-D** पितृपितामहादीनां सहितानामेकरूपेण देवतात्वविरहेण – इति पाठः नास्ति।

[32] **VV-K, VV-P, V-Jha, SM, VPB,** पितृत्व ।

[33] **VV-D** अनु

[34] **VV-D** इदं वाक्यं नास्ति।

घटाद्योः[35] अभेदान्वयबोधः ? सामग्र्या[36] कार्यजनने उक्तनियमभङ्ग–प्रसङ्गरूप–बाधकस्य अकिञ्चित्करत्वादिति चेत् ? तथाविधान्वयबोध–औपयिकाकाङ्क्षाविरहात्। तथा हि तादृशा–न्वयबोधे प्रथमाविभक्त्यन्तघटादिपदसमभिव्याहृत–प्रथमान्तनीलादिपदत्वमेव असमस्तनीलघटपदाद्या–काङ्क्षा। समासस्थले च घटपदाद्यव्यवहित–पूर्ववर्ति[37]–नीलादिपदत्वं नीलादि–पदाव्यवहितो–त्तरवर्ति–घटादिपदत्वं वा आकाङ्क्षा। उक्तस्थले च तादृश्या एकस्या[38] अपि आकाङ्क्षाया विरहात् न आपत्तिः।

VV-2.4.2:कार्यतावच्छेदककोटौ अव्यवहितोत्तरत्वनिवेशात् न उक्ताकाङ्क्षाज्ञानयोः परस्परबोधे व्यभिचारः।

VV-2.5.1: यत्तु समासव्याससाधारणं विशेषणपदस्य विशेष्यवाचकपदाप्रकृति[39]विभक्ति–अप्रकृतित्वरूपं विरुद्ध[40]विभक्तिराहित्यम् एव तादृशान्वयबोध–औपयिकाकाङ्क्षा, विशेष्यवाचकपदनिष्ठ–विशेषण–वाचकपद[41]–अप्रकृतिक–विभक्ति–अप्रकृतित्वं च न तथा 'नीलघटम् आनय' इत्यादौ असंभवाद् इति।

VV-2.5.2: तदसत्। विशेष्यवाचकपद–अप्रकृतिकत्वस्य तादृश पदानुत्तरत्वस्य[42] तदुत्तरत्वेन अप्रति–सन्धीयमानत्वरूपस्य वा 'नीलो घट' इत्यादौ

---

[35] **VV-S** नीलघटयोः – इति पाठः।
[36] **V-Jha** सामग्रया
[37] **VV-A, VV-P** घटपदाव्यवहितपूर्ववर्ति। **V-Jha, SM** घटादिपदाव्यवहितपूर्ववर्ति।
[38] **SM** एक–एकस्या
[39] **VV-G, VV-K, VV-J, VV-P, VV-D, SM** अप्रकृतिक ।
[40] **V-Jha** विरुद्ध
[41] **V-Jha** वाचकपदाःप्रकृतिकत्विभक्त्य
[42] **V-Jha, SM, VPB,** पदानुत्तरत्वरूपस्य

नीलादिपद[43]–समभिव्याहृतविभक्तौ घटपदसमभि–व्याहृतविभक्ति–भिन्नतया सत्त्वात्।

VV-2.6.1: अथ वचकपदोत्तरावृत्तिविभक्तिविभाजक–धर्मवद्–विभक्तिराहित्यस्य विवक्षणात् न दोष इति चेत्?

VV-2.6.2: तर्हि विभक्तित्वादिकमजानतः पुरुषस्य तादृशधर्मज्ञानासंभवात् शाब्दबोधानुपपत्तिः।

VV-2.6.3: 'नीलो घट' इत्यादावपि सु–पदस्य अम्–पदत्वादिभ्रमदशायां तादृशबोधस्य[44]अनुदयात्। 'नीलस्य घट' इत्यादावपि षष्ठ्यादेः सुपदत्वादि–भ्रमदशायां शाब्दबोधोत्पत्त्या स्वरूपतो विरुद्ध[45]–विभक्तिराहित्यस्य अप्रयोजकत्वात्।

VV-2.6.4: अथ 'नीलो घटः', 'नीलघटः' इत्यादि–द्विविधबोधसाधारणं स्वोत्तरसुपदभिन्न[46]पदानुत्तरत्व विशिष्टस्वोत्तरत्वादिरूप[47]स्वाव्यवहितोत्तरत्वसम्बन्धे न नीलादिपदवत् स्वन्त[48]–घटादिपदत्वम् एव तथा अस्तु इति चेत् ?

VV-2.6.5: न। 'नीलघटरूपम्' इत्यादिवाक्य–साधारण्यानुरोधेन अन्यादृश्यापि आकाङ्क्षायाः समासस्थले उपगन्तव्यतयोपदर्शितसमासव्यास–साधारणानुगताकाङ्क्षानुसरणस्याप्रयोजकत्वादिति।

VV-2.7.1: अथ 'नीलं घटमानय' इत्यादौ नीलादेः घटादौ अन्वयोपगमे[49]नीलादिपदोत्तरविभक्त्यत्यर्थ–

---

[43] **VV-D** नीलपद

[44] **VV-P** शाब्दबोधस्य।

[45] **VV-D** विरुद्ध इति नास्ति।

[46] **VV-A, VV-K, SM, VPB,** सुप्पदभिन्न।

[47] **SM** पदानुत्तरत्वादिरूप.

[48] **VV-A, VV-S, VV-G-A, VPB,** सुबन्त ।

[49] **VV-P** नीलादेः घटादौ अन्वयोपगमे – इति पाठः नास्ति।

कर्मत्वादेः कुत्र अन्वय इति चेत् ? न कुत्रापि। विभक्तिपदं साधुत्वार्थमेव प्रयुज्यते।

VV-3.1.1: अभेद एव वा विशेषणविभक्तेः अर्थः। अभेदस्य संसर्गमर्यादया भानं तु समासस्थल एव। तत्र लुप्तविभक्तेः अनुसन्धानं[50] विनापि शाब्दबुद्धेः आनुभविकत्वाद् इत्यपि[51] वदन्ति।

VV-3.1.2: अथ एतन्मते अभेदो यदि भेदत्वावच्छिन्ना-भावः तदा अप्रसिद्धिः। यदि च भेदप्रतियोगिकः अभावः तदा 'नीलं जलम्' इत्यादि-वाक्यस्यापि प्रामाण्यापत्तिः। जले द्वित्वादिना नीलभेदाद्य-भावस्य सत्त्वात्[52]। नीलभेदत्वावच्छिन्नाभावस्य विभक्त्यर्थत्वे[53] नीलादिपदार्थानन्वयप्रसङ्गः।

VV-3.1.3: न च भेदप्रतियोगिकाभाव एव विभक्त्यर्थः। नीलपद-समभिव्याहारात् नील-भेदत्वावच्छिन्नाभावः प्रतीयते इति वाच्यम्। पदार्थद्वयसंसर्गभानस्य[54] एव आकाङ्क्षानियम्यत्वात् नीलभेदत्वावच्छिन्न-प्रतियोगिताकत्वान्तर्भाविण[55] वृत्तिं विना भेदरूप-पदार्थता-अवच्छेदकस्य अभावे तादृश-संबन्धेन भानासंभवात्।

VV-3.1.4: मैवम्। भेदो अभावश्च विशेषणविभक्तेः अर्थः। विशिष्टलाभः तु आकाङ्क्षादिवशात्[56]। एतेन भेदे नीलादिपदार्थान्वये[57] एकदेशान्वय-प्रसङ्ग इत्यपि[58] निरस्तम्।

---

[50] **VV-J, VV-G-A** लुप्तविभक्त्यनुसन्धानं ।
[51] **VV-D** इति
[52] **VV-K** नीलभेदाद्यभावसत्त्वात्।
[53] **VV-S, VV-G-A, V-Jha** विभक्त्यर्थत्वेन।
[54] **VV-D** संसर्गस्य।
[55] **VV-J, VV-K, VV-P, VV-D** प्रतियोगितान्तर्भाविण ।
[56] **VV-D** आकाङ्क्षावशात्
[57] **V-Jha** नीलपदार्थान्वये
[58] **VV-K, VV-P, VV-G-A** इति

VV-3.2.1: न च विशेषणविभक्तेः अभेदार्थकत्वे[59] 'नीलं घट' इत्यादौ अपि अभेदान्वयबोधापत्तिः। 'धान्येन धनवान्' इत्यादौ तृतीयया अभेद-बोधनात्। अभेदप्रकारकबोधे विरुद्धविभक्ति-राहित्यस्य अनपेक्षणादिति वाच्यम्। द्वितीयादिना अभेदबोधने द्वितीयाद्यन्त-विशेष्यवाचकपद-समभिव्याहारस्य प्रयोजकत्वम् इत्युपगमात्।

VV-3.3.1: अथ 'प्रमेयो घट' इत्यादौ प्रमेयत्वा-वच्छिन्न[60]-भेदाप्रसिद्ध्या[61] लघुधर्मसमनियतगुरु-धर्मस्य अभाव-प्रतियोगिता-अनवच्छेदकत्वे[62] 'कम्बुग्रीवादिमान् घट' इत्यादावपि कम्बुग्रीवा-दिमत्त्वावच्छिन्नप्रतियोगिताक-भेदाप्रसिद्ध्या[63] विशेषणविभक्तेः अभेदार्थकत्वा[64]सम्भवः।

VV-3.3.2: एवं नीलपटादिपर-नीलादिपदघटितस्य 'नीलो घट' इत्यादि[65]वाक्यस्यापि प्रामाण्यापत्तिः। नीलत्वादिना पटादेः भेदाभावस्य नीलघटादौ[66] सत्त्वात्।

VV-3.3.3: एतेन विशेषणतावच्छेदकीभूत-नीलत्व-प्रमेयत्वादिकमेव विशेषणविभक्त्यर्थः। नीलत्वादेः नीलत्वावच्छिन्नभेदाभावरूपतया भेदार्थकत्वप्रवादो-पपत्तिरित्यपि निरस्तम्। नीलत्वादौ नीलत्वादि-मतः स्ववृत्तित्वसम्बन्धेनान्वये आकाङ्क्षा-विरहाच्च[67]। यथा हि तद्विशिष्टे अधिकरणे आश्रयतया[68] तदन्वयः अनुभवविरुद्धः, तथा

---

[59] **VV-J, SM** अभेदार्थकत्वमते ।
[60] **VV-J** प्रतियोगिताक - इति अधिको पाठः ।
[61] **V-Jha** भेदाप्रसिद्ध्या
[62] **VV-A, VPB** प्रतियोगितानवच्छेदकत्वेन ।
[63] **V-Jha** भेदाप्रसिद्ध्या
[64] **VV-P** अभेदकार्थकत्व.
[65] **VV-D** इति
[66] **VV-P** नीलादौ
[67] **VV-D** विरहात्।
[68] **VV-A, VV-K, VV-P, SM, VPB,** तदधिकरणतया, **VV-G, V-Jha** आश्रयतया तदधिकरणतया।

तद्धर्मे आधेयतया[69] तद्धर्मवद् अन्वयोऽपि। अत एव 'कर्म गच्छति' इति वाक्यस्य निराकाङ्क्षता।

VV-3.4.1: न च एवं संसर्गतामतेऽपि अनिस्तारः। 'नीलो घट' इत्यादौ स्ववृत्तिनीलत्वादेः संसर्गता-स्वीकारे उक्तस्थले प्रामाण्यापत्तेः दुर्वारत्वाद् इति वाच्यम्।

VV-3.4.2: स्ववृत्ति-नीलत्वादेः स्वस्मिन्नेव[70] सम्बन्धता-उपगमेन[71] पटादिवृत्तिनीलत्वादेः घटादौ पटादि[72]-सम्बन्धताविरहेण तादृशातिप्रसङ्गाभावात्[73]।

VV-3.5.1: वस्तुतस्तु [74]तत्तद्व्यक्तित्वावच्छिन्नभेदाभाव एव नीलत्वादिप्रकारेण भासमानानां[75] तत्तद्-व्यक्तीनां स्वस्मिन् सम्बन्धतया भासते इति न काप्यनुपपत्तिः। सम्बन्धता च तस्य भेद-प्रतियोगिताक-अभावत्वेन तत्तद्व्यक्तिभेदप्रति-योगिताक-अभावत्वेन वा इति अन्यदेतत्।

VV-3.5.2: न चैवं विशेषणविभक्तेः अभेदार्थकत्व-मतेऽपि तत्तद्व्यक्तित्वा[76]वच्छिन्नाभेद एव विभक्त्यर्थो वक्तव्य[77] इति वाच्यम्। तथा सति अपूर्वव्यक्तिनिष्ठ-तत्तद्व्यक्तित्वस्य कथंचिदपि भानासम्भवेन तदवच्छिन्नभेदाभावे शक्तिग्रहा-सम्भवेन अपूर्वव्यक्तीनाम् अभेदान्वयबोधा-नुपपत्तेः। संसर्गज्ञानस्य विशिष्टबुद्धौ अहेतुत्वेन

---

[69] **VV-P** आश्रयतया

[70] **VV-D, VV-G, VV-K, VV-P, VV-G-A, V-Jha** स्वस्मिन्

[71] **VV-P** उपगमे

[72] **VV-D** घटादि.

[73] **VV-P** प्रसङ्गभावात्।

[74] **VV-P** तत्तद्वस्तु. इति अधिकः पाठः।

[75] **VV-D** भासमानां

[76] **VV-P** तद्व्यक्तित्व.

[77] **VV-D** वाच्यम्

अनुपस्थितस्यापि संसर्गतया भानसम्भवेन[78] संसर्गतामते अनुपपत्त्यभावात्।

VV-3.5.3: न च विभक्त्यर्थेऽपि भेदे तत्तद्व्यक्तित्वा-वच्छिन्न-प्रतियोगिताकत्व-सम्बन्धेन नीलत्वादिना तत्तद्-व्यक्तीनाम् अन्वयः। तादृशभेदानामपि तत्तद्-व्यक्तिभेदत्वा[79]-वच्छिन्न-प्रतियोगिताकत्व-सम्बन्धेन अभावे अन्वय[80] उपेयते। तावता एव तत्तद्व्यक्तित्वावच्छिन्नाभेदलाभ इति न किञ्चिद् अनुपपन्नमिति वाच्यम्।

VV-3.5.4: विशेषणतावच्छेदकावच्छिन्नाया एव प्रतियोगि-ताया अभावे प्रतियोगिनः सम्बन्धतया भानात्। अन्यथा विशिष्ट-वैशिष्ट्यबुद्धित्वानुपपत्तिः[81]। 'प्रतियोगि-विशेषिताभावज्ञानं च विशिष्टवैशिष्ट्य-बोधमर्यादां नातिशेत' इति दर्शनात्, केवलं विशेष्ये विशेषणमिति रीत्या न कश्चिद् अभ्युपैति इति चेत् ?

VV-3.6.1: सत्यम्। अभेदः तादात्म्यम्। तच्च स्ववृत्त्यसाधारणो धर्मः। असाधारण्यं च एकमात्रवृत्तित्वम्। तच्च स्वसामानाधिकरण्य-स्वप्रतियोगिवृत्तित्व-उभयसम्बन्धेन भेदविशिष्टं यत् तदन्यत्वम् इति एकमात्रवृत्तिधर्म एव विशेषणविभक्तेः अर्थः। वृत्तिश्च तत्र प्रकृत्यर्थस्य संसर्गमर्यादया भासते। तादृशधर्मः तत्तद्व्यक्ति-त्वादिरूप[82] एव। अपूर्वव्यक्तिनिष्ठ-तादृशधर्मस्य विशिष्य[83] ज्ञातुम् अशक्यत्वेऽपि एकमात्रवृत्ति-धर्मत्वादिना सामान्यप्रत्यासत्तितः सुग्रहत्वमेव।

---

[78] **VV-P** अपूर्वव्यक्तीनाम् ........ भानसम्भवेन - इति भागः नास्ति।

[79] **VV-P** व्यक्तित्व.

[80] **V-Jha** अभावेऽवय

[81] **VV-A, VV-K,VV-D, VV-G, VV-P, VV-G-A, V-Jha, VPB,** अनुपपत्तेः।

[82] **VV-P** व्यक्तित्वरूप

[83] **VV-P** विशेष्यं

VV-3.7.1: अभेदस्य संसर्गतामतेऽपि एतादृशानुगत-अभेदस्य एव तथात्वमुचितम्। तत्तद्व्यक्तित्वावच्छिन्न-भेदाभाव-कूटस्य विशिष्य तथात्वे 'घटो न नील' इत्यादि[84]'वाक्यजन्यबोधे 'प्रतियोग्य-भावान्वयौ च तुल्ययोगक्षेमौ' इति न्यायेन तादृशाननुगत-संबन्धावच्छिन्न-प्रतियोगिताक-अननुगत-अभावा एव भासेरन् न तु नीलवृत्तिः एको अभावः। तथा सति यत्किञ्चित् तादृशा-भावतात्पर्येण प्रयुक्तस्य नीलेऽपि न नील इत्यादि-वाक्यस्य प्रामाण्यं स्यात्।

VV-3.7.2: इदन्तु बोध्यम्। विशेषणविभक्तेः अभेदार्थकत्वे 'घटो न नील' इत्यादौ नञा नीलाद्यभेदाभाव एव प्रत्याययिष्यते न तु नीलादिभेदः। यादृशसमभिव्याहारस्थले येन संबन्धेन यत्र[85] धर्मिणि येन रूपेण यद्धत्त्वं नञसत्त्वे प्रतीयते तादृशस्थले नञा तद्धर्मिणि तादृश-संबन्धावच्छिन्नतादृशधर्मावच्छिन्न[86]-प्रतियोगिताकतदभावबोधस्य[87] व्युत्पत्तिसिद्धत्वात्। 'प्रतियोग्यभावान्वयौ च' इत्यादेरपि[88] अयमेव अर्थः।

VV-3.7.3: एवं च नञो भेदबोधकत्वं न कुत्रापि संभवति। 'अनीलं घटमानय' इत्यादौ घटपद-सामानाधिकरण्यानुरोधेन अनीलपदस्य नीलभिन्न-परतया नञो भेदवत्येव लक्षणाया उपगन्तव्यत्वात्।

---

[84] **VV-D, VV-P** इतिवाक्य.

[85] **VV-K** यत्।

[86] **SM** तादृश-धर्मावच्छिन्न - इति पाठो नास्ति।

[87] **VV-D** तदभावस्य

[88] **VV-P** अपि नास्ति।

VV-3.7.4:[89] इदं तु अत्रावधेयम्। अभेदस्य प्रकारता–मतेऽपि 'घटो न नील' इत्यादि–वाक्यस्य नीलाभेदाभावबोधकत्वेऽपि तृतीयाभावस्य प्रति–योगिस्वरूपतया नञो भेदबोधकत्वं नानुपपन्नम्। परं तु भेदत्वप्रकारेण भेदबोधो भवति न वा इत्यन्यदेतत्।

VV-3.7.5: इदं तु तत्त्वम्। असमस्त[90]–'नीलो घट' इत्यादिस्थले[91] अभेदस्य संसर्गता उपगमेऽपि गौरवविरहात् तत्र विशेषणविभक्तेः वृत्तिकल्पनम् अनुचितम्।

VV-3.7.6: न च[92] अभेदे यत्र विशेषणविभक्तेः शक्तिभ्रमः स्वारसिक–लक्षणाग्रहो वा तत्र सर्वमत एव अभेद–प्रकारकबोधस्य 'नीलो घट' इत्यादि–वाक्याद्[93] उत्पत्त्या तादृश–समभिव्याहारज्ञानस्य द्विविधबोधे हेतुताद्वयं कल्पनीयम् अभेदस्य संसर्गतावादिना इति गौरवम्। एवं तादृश–समभिव्याहारज्ञानघटितसामग्र्या भिन्नयोग्यताज्ञान–घटितत्वेन द्वैविध्यमिति भिन्नविषयक–प्रत्यक्षादिकं प्रति तादृशशाब्दसामग्रीप्रतिबन्धकतायाप्याधिक्यम् इति वाच्यम्। अभेदस्य[94] संसर्गतावादिना उक्त–स्थलेऽपि तत्संसर्गकबोधस्य एव उपगमादिति दिक्।

VV-4.1.1: 'स्तोकं पचति', 'मृदु पचति' इत्यादौ विरुद्धविभक्त्यवरुद्ध–पदोपस्थापितस्यापि स्तोक–

---

[89] अयं भागः मुद्रितपुस्तकेषु **आदर्शाख्य**व्याख्यया सह वाणीविलास–प्रकाशन, वाराणसीतः (विक्रमाब्दः 2041) मुद्रितपुस्तके दृश्यते। कृष्णंभट्टीटीकायामप्ययं पाठोऽस्ति। कृष्णंभट्टस्तु 'नायं पाठः सार्वत्रिक' इति ब्रूते व्याख्याति च। **आदर्शकारो**ऽप्यस्य प्रामाणिकतामङ्गीकृत्य व्याख्याति।

[90] **VV-A, V-Jha, SM** असमस्त – इति पाठो नास्ति।

[91] **VV-A, SM, VPB,** 'नील घट' इत्याद्यसमासस्थले । गूढार्थतत्त्वालोक–व्याख्यातोऽयं पाठः म.म.बच्चाझा–महोदयानामभिमत इत्यवगम्यते।

[92] **VV-J, VV-D, VV-K, VV-P, V-Jha, VV-G-A, SM** यत्राभेदे ।

[93] **VV-D** इतिवाक्याद्।

[94] **VV-A, V-Jha, SM, VPB,** अभेदस्य इति पाठः नास्ति।

मृद्धादेः धात्वर्थपाकादौ अभेदान्वयोऽपि[95] व्युत्पत्तिसिद्धः। तद् अनुरोधेन च द्वितीयान्त-पदधातुपदयोः समभिव्याहारस्यापि अभेदान्वय-बोध-औपयिक-आकाङ्क्षात्वमुपगम्यते। क्रिया-विशेषणस्थले च न द्वितीयातिरिक्तविभक्तिः उत्पद्यते। 'क्रियाविशेषणानां क्लीबत्वं[96] कर्मत्वं च' इत्यनुशासनेन तत्र कर्मत्वातिदेशात्।

VV- 4.1.2: न चैवं 'स्तोकः पाक' इत्यादावपि द्वितीयाप्रसङ्गः। तत्रापि स्तोकादेः क्रियायाम् एव विशेषणत्वात्। भावकृतां प्रयोगसाधुत्वमात्रा-र्थकतया धातुना एव तत्र पाकादिप्रतिपादनाद् इति वाच्यम्। क्रियापदस्य तत्र सार्थक-प्रत्ययान्तधातूपस्थाप्यार्थपरत्वात्। 'स्तोकं स्थीयत' इत्यादौ आख्यातस्यापि वर्त्तमानत्वार्थकतया[97] सार्थकत्वात्।

VV- 4.1.3: न च वर्त्तमानत्वाद्यविवक्षायां द्वितीया-नुपपत्तिः इति वाच्यम्। वर्तमानत्वादिविवक्षास्थल इवार्थबोध[98]-स्वरूपयोग्यता प्रयोजिका[99]काङ्क्षा-शालित्वेनैव[100]तदविवक्षास्थलेऽपि भावाख्यातस्य अर्थवत्त्वात्[101]।

VV- 4.2.1: केचित्तु धातोरिव घञन्तस्यापि पाकादौ शक्तिः उपेयते। अन्यथा सुब्-विभक्त्यर्थ-संख्या-कर्मत्वादीनां तत्र पाकादौ अन्वयानुपपत्तेः। प्रकृत्यर्थान्वितस्वार्थ-बोधकत्वं प्रत्ययानाम् इति व्युत्पत्तेः। धातूनां च सुब्विभक्त्यप्रकृतित्वात् प्रकृत्येकदेशार्थेऽपि प्रत्ययार्थान्वयोपगमे 'पचन्तं

---

[95] **VV-D, VPB,** अपि - नास्ति।

[96] **VV-D, VV-J, VV-K, VV-P, VV-G-A** क्लीबत्वं - नास्ति।

[97] **VV-P** वर्त्तमानार्थकतया

[98] **VV-A, VV-K** इवाऽर्थबोधप्रयोजकाकाङ्क्षा॰ । **VV-S** इति ग्रन्थे तु 'इव अर्थबोधकप्रयोजकाकाङ्क्षा.' इति पाठः। **VPB,** अर्थबोधप्रयोजकाकाङ्क्षा.।

[99] **VV-S, VV-P, VV-D, VV-G-A, SM** प्रयोजक।

[100] **VV-D** आकाङ्क्षाशक्तित्वेनैव।

[101] **VV-K** भावाख्यातार्थवत्त्वात्।

पश्यति'इत्यादितः 'पचमानं पश्यति' इत्यादितश्च पाकादौ द्वितीयाद्यर्थकर्मत्वाद्यन्वयबोधप्रसङ्गात्।

VV- 4.2.2: एकत्र[102] विशेषणत्वेन[103] उपस्थितस्य अन्यत्र विशेषणत्वेन[104] अन्वयस्याव्युत्पन्नतया तत्र प्रत्ययार्थ–विशेषणपाकादेः न कर्मत्वे विशेषणतया अन्वय इति चेत्? तथापि पाकादिविशेषणतया सुबर्थसंख्याया अन्वय–सम्भवात्। यत्र पाककर्त्रादेः द्वित्वादिकं बाधितं पाकादेश्च तदबाधितम्, तत्र 'पचन्तौ पश्यति', 'पचमानौ पश्यति' इत्यादि–प्रयोगप्रसङ्गस्य[105] दुर्वारत्वात्। धातूपस्थाप्यार्थे सुबर्थान्वयबोधं प्रति तत्तद्धातूत्तरप्रत्ययधर्मिक[106]–किंचिदर्थपरत्वज्ञानस्य प्रतिबन्धकताम् उपगम्य[107] एतादृशातिप्रसङ्ग–वारणे च गौरवात्।

VV- 4.2.3: एवं 'शोभन पचनम्' इत्यादौ धातु–मात्रेण पाकाद्युपस्थितौ च तत्र शोभनाद्यभेदा–न्वयबोधानुपपत्तिः। विशेषणविभक्तिसजातीय–विभक्ति[108]– प्रकृत्यनुपस्थाप्यत्वात्।

VV-4.2.4: प्रकृत्येकदेश–साधारण–तादृशविभक्ति–प्रकृतित्वस्य प्रयोजकत्वे तत्र ल्युडादेः अधिकरण–परत्वेऽपि तथाविधान्वयबोधापत्तेः। कस्यचित् प्रतिबन्धकतां कल्पयित्वा तद्वारणे च गौरवात्।

VV- 4.3.1: न च एवम् 'उपकुम्भ–अर्द्धपिप्पली'–आदिरूपपूर्वपदार्थप्रधानसमासपदात् कुम्भसमीप–पिप्पल्यर्द्धादौ विभक्त्यर्थान्वयस्य प्रातिपदिका–न्तरार्थ–अभेदान्वयस्य चानुपपत्तिः। पूर्वपदस्य

---

[102] **VV-K, SM** एक

[103] **VV-J** विशेषणतया ।

[104] **VPB.** अन्यत्राविशेषणत्वेन

[105] **VV-D** इतिप्रयोगापत्तेः

[106] **VV-J** प्रत्ययधर्मि ।

[107] **VV-P** अभ्युपगम्य

[108] **VV-S** विभक्ति – इति पाठः नास्ति।

समासोत्तर-विभक्ति-अप्रकृतित्वाद् इति वाच्यम्। तदनुरोधेन एव तत्र कुम्भपिप्पल्यादिपदानाम् एव कुम्भसमीप-पिप्पल्यर्द्धादौ लक्षणायाः पूर्वपदस्य तात्पर्यग्रहमात्रोपयोगितायाः[109] च स्वीकारात्।

VV- 4.3.2: वस्तुतस्तु तत्र उत्तरपदार्थविशेषित-पूर्वपदार्थ-समीपार्द्धादौ प्रत्ययार्थान्वयबोधे तादृश-समस्तपद-प्रत्ययपदयोः अव्यवहितपूर्वापरीभावो-ऽपि आकाङ्क्षा।

VV- 4.3.3: एवं तत्र प्रातिपदिकान्तरार्थाभेदान्वयबोधे समानविभक्तिकयोः तादृशसमस्त[110]पदपदान्तरयोः च समभिव्याहारोऽपि आकाङ्क्षा। तथा सति अतिप्रसङ्ग-विरहात्। धात्वर्थ-पाकादौ प्रत्यया-र्थान्वयबोधे प्रातिपदिकान्तरार्थाभेदान्वयबोधे च ल्युड्-घञाद्यन्त[111]-समुदायप्रत्यययोः[112]अव्यवहित -पूर्वापरीभावस्य समान-विभक्तिकयोः तादृश-समुदाय[113]-पद-पदान्तरयोः समभिव्याहारस्य च आकाङ्क्षात्व[114]उपगमे दर्शिताधिकरणार्थक-ल्युट्-प्रत्ययस्थलीय-अतिप्रसङ्गस्य दुरुद्धरतया न तत्सम्भवः।

VV- 4.4.1: अथ घञन्तसमुदायस्य पाकाद्यर्थकत्वे घञन्त-समुदायस्य संयोग-विभागत्वादि-विशिष्ट-अवाचकत्वं व्युत्पाद्य संयोगविभागादि-पदानां नैमित्तिकसंज्ञात्व-निराकरणं दीधितिकृतां विरुद्धम् इति चेत् ? का क्षतिः ? न हि कस्यचिद् ग्रन्थकृतो विपरीतलेखनं युक्तिबलाद् वस्तुसिद्धौ बाधकम्।

---

[109] **VV-G-A** .....उपयोगिताश्च।

[110] **VV-D, VV-P,** समस्त - इति नास्ति।

[111] **V-Jha** ल्युड्घञाधन्तत

[112] **VV-A, SM** आनुपूर्वीरूप - इति अधिकः पाठः। **V-Jha** प्रत्ययोरव्यवहित.

[113] **VV-P** समस्त.

[114] **VV-A** आकाङ्क्षत्व - इति पाठः।

VV- 4.4.2: एवं च यत्र धातुमात्रस्य एव पाकादौ तात्पर्यं तत्र तद्विशेषणवाचकपदाद् द्वितीया एव। यत्र तु कृदन्त-समुदायस्य पाकादौ तात्पर्यं तत्र तादृशपदं तथाविधकृदन्तसमुदायसमानविभक्तिकम् एव। तदुक्तं कातन्त्र-परिशिष्टकृता 'कथं 'स्तोकः पाकः'कृदन्तविशेषणत्वात्। धात्वर्थैकाधिकरण्ये[115] तु 'स्तोकम् ओदनस्य पाक' इति स्यादेवेति' वदन्ति[116]।

VV- 4.5.1: तदर्थबोधक[117]पदोत्तरविभक्त्या संख्याबोधने अभेदसंसर्गा[118]वच्छिन्नप्रकारताभिन्न-तदर्थविषयता-शालिशाब्दबोधसामग्री अपेक्षिता। तादृशश्च बोधः तदर्थविशेष्यकः तदर्थनिरूपितभेदान्वयविषयकश्च। 'नीलौ घटौ' इत्यादौ च विशेष्यवाचकपदोत्तर-विभक्त्या एव द्वित्वादिकं प्रत्याय्यते।

VV- 4.5.2: एवं च क्रियाविशेषणवाचकपदोत्तरविभक्त्या अबाधितयोरपि द्वित्वबहुत्वयोः प्रत्यायनासम्भवात् तादृशपदोत्तरम् औत्सर्गिकम् एकवचनम् एव भावाख्यातस्थलवद् इत्यवधेयम्।

VV- 5.1.1: अभेदान्वयबोधश्च विरूपोपस्थितयोरेव इति व्युत्पत्तिः। 'घटो घटः', 'दण्डवान् दण्डवान्', 'पाकं पचति' इत्यादौ[119] घटत्व-दण्डवत्त्व-पाकत्वाद्यवच्छिन्ने तत्तद्रूपावच्छिन्नस्य तथाविधान्वय-बोधानुदयात्।

VV- 5.1.2: अथ तत्प्रयोजक-समानविभक्तिकत्वादेः सत्त्वात् कथं न तादृशान्वयबोधः[120]?

---

115 **VV-K** धात्वेकाधिकरण्ये। अयं पाठः गूढार्थतत्त्वालोककारस्याप्यभिमतः।

116 **VV-K** वदन्ति- नास्ति।

117 **VV-G-A, VPB.** तदर्थक.

118 **VV-D** संबन्ध.

119 **VV-G** इत्यादी - इति पाठः।

120 **VPB** तादृशबोधः।

VV- 5.1.3: अत्राहुः। यादृशं फलं क्वचित् प्रसिद्ध्यति तादृशस्य एव आपत्तिः सम्भवति क्लृप्तसामग्री-बलात्। यादृशं च सर्वथा एव अप्रसिद्धम्, तादृशस्य च आपादकाप्रसिद्धेः आपत्तिरशक्या एव इति घटत्वाद्यवच्छिन्न-विशेष्यताक-अभेदसंसर्गक-घटत्वाद्यवच्छिन्न-प्रकारताक[121]शाब्दबोधस्य क्वचिदपि अनुदयात् कथं तदापत्तिः ?

VV- 5.1.4: अथ 'घटो नीलघटः', 'दण्डवान् रक्तदण्डवान्'इत्यादौ तादृशशाब्दबोधस्य प्रसिद्धिः। विधेयकोटौ अधिकावगाहिनः शाब्दबोधस्य नवीनैः स्वीकारादिति चेत्? तर्हि घटाद्यंशे विशेषणता-वच्छेदकविधया नीलादि-भाननियामक-नीलाद्युप-स्थिति-तात्पर्यज्ञान-विशेषादिघटिता एव सामग्री घटत्वावच्छिन्नविशेष्यक-नीलघटत्वाद्य[122]वच्छिन्ना[123] भेदान्वयबोध-प्रयोजिका[124]। तदभावादेव 'घटो घट' इत्यादिषु न तादृशशाब्दबोधापत्तिरिति केचित्।

VV- 5.2.1: अथ[125] द्रव्यत्वादौ धर्मितावच्छेदकता-संसर्गेण प्रसिद्धस्य शुद्धघटत्वाद्यवच्छिन्न[126]-प्रकारक-अभेदान्वय-बोधस्य घटत्वादावापत्ति-संभवात्[127]। न च तत्र आपादकाभावः। तात्पर्यज्ञानविशेषादि-घटिताया धर्मितावच्छेदक-तया[128] द्रव्यत्वादौ तदुत्पादनियामक-सामग्र्या एव आपादकत्वात्।

VV- 5.2.2: न च धर्मितावच्छेदकतासम्बन्धेन द्रव्यत्वादौ तादृशान्वयबोध-उत्पत्तिप्रयोजिका द्रव्यपदजन्य-

---

121 **VV-D, V-Jha** प्रकारक.।

122 **VV-D** आदि – नास्ति।

123 **VV-D** प्रकारक॰ – इति अधिकपाठः।

124 **VV- D** वाच्या – इति अधिकपाठः।

125 **VV-G, VV-K, VV-J, VV-P, SM** तत्र ।

126 **VV-P** घटत्वावच्छिन्न.।

127 **VV-A** आपत्तिः संभवात् ।

128 **VV-D, V-Jha** धर्मितावच्छेदकतासंबन्धेन।

द्रव्यत्वाद्यवच्छिन्न[129]विशेष्यकोपस्थिति–तदवच्छिन्न–विशेष्यक–योग्यताज्ञानादिघटित–सामग्री एव। धर्मितावच्छेदकतायाः तत्कार्यता–अवच्छेदक–सम्बन्धता[130] विरहेऽपि द्रव्यत्वादिनिष्ठायाः तत्कार्यतावच्छेदकधर्म–घटकत्वात् तादृशसामग्र्याश्च आत्मनिष्ठ–प्रत्यासत्त्या द्रव्यत्वाद्यवच्छिन्न[131] विशेष्यकघटत्वाद्यवच्छिन्नादि–अभेद–बुद्धित्वरूप–स्वीयकार्यता[132]वच्छेदकावच्छिन्नोत्पत्तेरेव व्याप्यतया घटत्वादौ धर्मितावच्छेदकता–सम्बन्धेन घटत्वा–वच्छिन्नाभेदबोधापादकत्वं न सम्भवतीति वाच्यम्।

VV- 5.2.3: योग्यताज्ञानस्य धर्मितावच्छेदकं निवेश्य तद्भेदेन अनन्तकारणता–कल्पनम् अपेक्ष्य लाघवाद् धर्मितावच्छेदकतासम्बन्धेन शाब्दबुद्धौ तादृश–सम्बन्धेन तस्य[133] धर्मितावच्छेदकम् अनिवेश्य हेतुताकल्पनस्य एव युक्तत्वात्। घटत्वादि–धर्मितावच्छेदकक[134]–घटत्वाद्यवच्छिन्न–प्रकारताक[135]योग्यता–ज्ञानबलाद् एव घटत्वादौ धर्मितावच्छेदकता–सम्बन्धेन तदापत्तेः[136]।

VV- 5.2.4: न च योग्यताज्ञानस्य[137]धर्मितावच्छेदक–निष्ठ–प्रत्यासत्त्या हेतुत्वोपगमे द्रव्यत्वाद्यवच्छिन्नस्य पदादनुपस्थितत्वेऽपि द्रव्यत्वादौ तादृशप्रत्यासत्त्या प्रत्यासन्नयोग्यताज्ञानात् तत्र तादृशप्रत्यासत्त्या[138] शाब्दबोधापत्तिः। आत्मनिष्ठ–प्रत्यासत्त्या हेतुभूतां द्रव्यत्वाद्यवच्छिन्न–उपस्थितिम् अन्तरेणापि तादृश–

---

[129] **VV-D, V-Jha** द्रव्यत्वावच्छिन्न.।

[130] **VV-J** तत्कार्यतावच्छेदकता – इति पाठः। **VV-G** तत्तत्कार्यतावच्छेदक–सम्बन्धता, **VV-P** सम्बन्धता – नास्ति। **VV-D, V-Jha** संसर्गता।

[131] **V-Jha** द्रव्यत्वावच्छिन्न.

[132] **VV-D** स्वीकार्यता

[133] **VV-G, VV-J, VV-D, VV-P, V-Jha** तस्य – इति नास्ति।

[134] **VV-J** –धर्मितावच्छेदक.।

[135] **VV-D, V-Jha, SM; VPB** प्राकारक.।

[136] **VV-K** संभवात् – इति अधिकपाठः।

[137] **SM** अवच्छेदकनिष्ठ.

[138] **V-Jha** तादृश.

प्रमेयत्वाद्यवच्छिन्न-उपस्थित्यादिदशायां प्रमेयत्वादौ धर्मितावच्छेदकता-सम्बन्धेन योग्यता[139]ज्ञानस्य फलजनकत्वात् तादृश-द्रव्यत्वाद्यवच्छिन्नोपस्थिति-विरहस्य अकिञ्चित्करत्वाद् इति वाच्यम्।

VV- 5.2.5: समानप्रकारता-प्रत्यासत्त्या पदार्थोपस्थितेः शाब्दबोधे हेतुत्वोपगमात्।

VV- 5.2.6: येन सम्बन्धेन यद्धर्मावच्छिन्नकार्यं प्रति येन सम्बन्धेन यद्धर्मावच्छिन्नकार्यस्य व्यापकता तेन सम्बन्धेन तद्धर्मावच्छिन्नकार्योत्पादकसामग्र्या अपि तेन सम्बन्धेन तद्धर्मावच्छिन्नकार्योत्पत्तौ अपेक्षित-तया प्रकारतासम्बन्धेन द्रव्यत्वादौ द्रव्य[140] पदजन्य-पदार्थ-उपस्थिति-असत्त्वे तत्र धर्मिता[141] वच्छेदकता-सम्बन्धेन शाब्दबोधापत्तेः अयोगात्।

VV- 5.2.7: न च यत्र प्रमेयत्वाद्यवच्छिन्न-विशेष्यक-वृत्ति-ज्ञानजन्यप्रमेयत्वाद्यवच्छिन्न-विशेष्यकोपस्थितौ एव उद्‌बोधकान्तरात् द्रव्यत्वाद्यवच्छिन्नस्य भानं तत्र द्रव्यत्वाद्यवच्छिन्न-विषयकशाब्दापत्तिवारणाय तद्धर्मावच्छिन्नविषयक[142]शाब्दबोधं प्रति तद्धर्मा-वच्छिन्न-विशेष्यकवृत्तिज्ञानजन्य-तद्धर्मप्रकारकोप-स्थितित्वेन एव[143] पदार्थो[144]पस्थितेः हेतुता वाच्या। तथा च प्रकारविशेषनिवेशस्य[145] आवश्यकत्वे विषयनिष्ठ[146] प्रत्यासत्त्या[147]

---

[139] **VV-A, VV-K, VV-S, VPB** योग्यता - नास्ति।

[140] **VV-G, V-Jha** द्रव्य - नास्ति।

[141] **VV-J** तद्धर्मिता.।

[142] **VV-K, VPB** विशेष्यक.

[143] **VV-G, VV-S, VV-D, VV-K, VV-P, V-Jha, VPB** उपस्थितित्वेन एव - इति पाठः नास्ति।

[144] **VV-D, V-Jha, VPB** पदार्थ - नास्ति।

[145] **VPB** प्रकारविशेष्यनिवेशस्य।

[146] **VV-K** आत्मनिष्ठ.।

[147] **VV-K** एव - इति अधिकपाठः ।

हेतुताकल्पनमयुक्तम्। तथासति[148] पुरुषभेदेन कार्यकारणभावबाहुल्यप्रसङ्ग इति वाच्यम्।

VV-5.2.8: स्वजनकज्ञानीयवृत्तिनिष्ठ–प्रकारता–निरूपित–विशेष्यतावच्छेदकता–विशिष्ट–प्रकारता–सम्बन्धेन उपस्थितेः हेतुतां स्वीकृत्य तादृशापत्तेः वारणात्।

VV- 5.2.9: न च पदार्थेऽपि प्रकारता–सम्बन्धेन शाब्दबोधोत्पत्त्या तत्र निरुक्त[149]प्रकारतासम्बन्धेन पदार्थोपस्थितेः अभावात् प्रकारनिष्ठ–प्रत्यासत्त्या पदार्थोपस्थितेः हेतुता व्यभिचारेण कल्पयितुम् अशक्या इति वाच्यम्।

VV-5.2.10: परामर्शकारणताविचारदर्शितदिशा व्यभि–चारस्य वारणीयत्वादिति चेत्? तर्हि तद्धर्मा–वच्छिन्नाभेद–संसर्गावच्छिन्न–प्रकारता–निरूपित–विशेष्यतावच्छेदकता–सम्बन्धेन शाब्दबुद्धित्वा–वच्छिन्नं[150] प्रति तद्धर्मभेदस्य अपि हेतुतायाः स्वीकरणीयतया न 'घटो घट' इत्यादि–स्थले शाब्दबोधापत्तिः[151]।

VV- 5.3.1: 'स घट' इत्यादिवाक्यात् जातित्वादिना घटत्वादिधर्मितावच्छेदककस्य[152] स्वरूपतो घटत्वादि–प्रकारता[153]वच्छेदककस्य[154]'घटः सः' इत्यादिवाक्यात् स्वरूपतो घटत्वादिधर्मिता–

---

[148] **VV-K** अन्यथा।

[149] **VV-A, VV-P** 'तादृश'। **VV-D, VV-K, VV-S, V-Jha, VPB** निरुक्त – नास्ति।

[150] **VV-D** शाब्दबोधं ।

[151] **SM** स्वीकरणीयतया **घटो घट** इत्यादिस्थले न शाब्दबोधः – इति पाठः।

[152] **VV-S 'घटः सः'** इत्यादिवाक्यात् – इति अधिकपाठः ।

[153] **VV-S** घटत्वादिधर्मिता – इति पाठः ।

[154] **VV-D** स्वरूपतो घटत्वादिप्रकारता--अवच्छेदककस्य – इति नास्ति।

अवच्छेदककस्य[155]जातित्वादिविशिष्टघटत्वावच्छिन्न-प्रकारताकस्य[156] शाब्दबोधस्योपपत्तये विशेष्यत्व-प्रकारत्वयोः अवच्छेदकत्वे निरवच्छिन्नत्वेन विशेषणीये। 'घटो नीलघट' इत्याद्यन्वयबोधस्य प्रामाणिकत्वे अन्यत्र[157]दर्शितरीत्या सोऽपि उपपादनीयः।

VV- 5.3.2: एवं[158] 'स स' इत्यादिवाक्यात् जातित्वाद्यवच्छिन्नधर्मितावच्छेदकताक-तद्धर्मावच्छिन्नप्रकारता-वच्छेदकताकाभेदान्वयबोधस्य वारणाय तद्धर्मावच्छिन्नावच्छेदकताक-प्रकारता-निरूपित-धर्म्मिता-वच्छेदकतावच्छेदकत्वप्रत्यासत्त्या[159] शाब्दबोधं प्रति तद्धर्मभेदस्यापि पृथक्कारणत्वं कल्पनीयम्।

VV- 5.3.3: एवं 'दण्डवान् दण्डवान्' इत्यादिवाक्याद् दण्डसंयोगत्वाद्यवच्छिन्नवति तदवच्छिन्नवदभेदान्वय-बोधस्य वारणाय[160]दण्डसंयोगत्वाद्यवच्छिन्नावच्छेद-कताक-प्रकारता-निरूपित-विशेष्यता-निरूपित-संयोगत्वाद्यवच्छिन्ना[161]-वच्छेदकतानिरूपितावच्छेदकताअवच्छेदकत्व-सम्बन्धेन शाब्दबोधे दण्डत्वादि-भेदस्य अपि[162] पृथक्कारणत्वं कल्पनीयम्। अवच्छेदकतायां निरवच्छिन्नत्वनिवेशोऽपि पूर्ववद् बोध्यः।

VV- 5.4.1: वस्तुतस्तु तद्धर्मान्यवृत्तिविषयतासम्बन्धेन ज्ञानं प्रति तद्धर्मभेदत्वेन हेतुता कल्प्यते[163]

---

[155] **VV-S घटः सः** इत्यादिवाक्यात् स्वरूपतो घटत्वादिधर्मितावच्छेदककस्य - इति पाठः नास्ति।

[156] **VV-K** घटत्वादिप्रकारतावच्छेदककस्य।

[157] **VV-K** प्रामाणिकत्वेन अन्यत्रा।

[158] **VV-G, VV-D, VV-K, VV-P, V-Jha, VPB** एवं - इति पाठः नास्ति।

[159] **VV-G** प्रत्यासाया - इति पाठः।

[160] **VV-D** अभेदान्वयबोधवारणाय, V-Jha अभेदान्वयवारणाय

[161] **VV-D** संयोगत्वाद्यवच्छिन्न - इति पाठः नास्ति।

[162] **VV-K** अपि - इति नास्ति।

[163] **VV-A, VV-G, VV-K, VV-S, VV-P, VV-D, V-Jha, VPB** कल्प्यते - इति पाठः नास्ति।

लाघवात्। एवं च[164] घटत्वाद्यवच्छिन्न–प्रकारता–निरूपित–विशेष्यतावच्छेदकता–सम्बन्धेन शाब्दबोधं प्रति घटत्वाद्यन्यवृत्तिविषयतासम्बन्धेन ज्ञानत्वाद्य-वच्छिन्नस्य व्यापकतया घटत्वादौ तादृशविषयता–सम्बन्धेन ज्ञानत्वावच्छिन्न–उत्पादक–सामग्रीविरहेण न तत्र तादृश–विशेष्यतावच्छेदकता–सम्बन्धेन शाब्दबोधापत्तिः।

VV- 5.4.2: एवं च 'घटवान् घटवान्' इत्यादि[165] शाब्दबोध–वारणानुरोधेन धर्मिता–अवच्छेदकता–अवच्छेदकादिनिष्ठ–प्रत्यासत्त्या कारणत्वान्तरमपि न कल्प्यते।

VV- 5.4.3: एवमुद्देश्यतावच्छेदक–विधेययोरैक्येन 'एको द्वौ' इत्यादिवाक्याद् एकत्व–द्वित्वाद्यवच्छिन्ने एकत्वद्वित्वादीनां भेदान्वयबोधानुदयात्, एकत्व-त्व[166]–द्वित्वत्वाद्यवच्छिन्नसमवायादि–संसर्गावच्छिन्न–प्रकारता–निरूपित–विशेष्यता–निरूपित[167] सम-वायादि–संसर्गावच्छिन्नावच्छेदकतावच्छेदकत्वादि–सम्बन्धेन शाब्दबुद्धौ एकत्वत्व–द्वित्वत्वादि–भेदस्य[168]।

VV- 5.4.4: एवं 'कर्म गच्छति' इत्यादौ च कर्मत्व-त्वावच्छिन्ने[169] आधेयता सम्बन्धेन तद्वतः अन्वयबोधवारणाय कर्मत्वत्वाद्यवच्छिन्नावच्छेदक-ताक–आधेयता–सम्बन्धावच्छिन्न–प्रकारतानिरूपित–धर्मितावच्छेदकता–सम्बन्धेन शाब्दबोधे कर्मत्व-त्वादि–भेदस्य[170]। 'घटो न घट' इत्याद्यनुमितेः

---

[164] **VV-K** एवं च – इति नास्ति।

[165] **VV-J** वाक्यस्थलीय – इति अधिकः पाठः।

[166] **VV-J** एकत्वत्व.।

[167] **SM** विशेष्यतानिरूपित. – इति नास्ति।

[168] **VV-J, VV-D, VV-K** एकत्वत्वादि–भेदस्य, **V-Jha, VPB** (हेतुत्वान्तरकल्पनमनादेयमेव) – इति अधिकः पाठः।

[169] **SM** कर्मत्वत्वाद्यवच्छिन्ने

[170] **V-Jha** (हेतुत्वान्तरकल्पनमनादेयमेव) – इति अधिकः पाठः।

शाब्दबोधस्य च वारणाय घटत्वावच्छिन्न[171]भेद-प्रकारता-निरूपित-धर्म्मितावच्छेदकता-सम्बन्धेन अनुमितौ शाब्दबोधे च घटत्वादिभेदस्य हेतुत्वान्तरकल्पनम् अनादेयम् एव। तद्धर्मभेदस्य एक-कारणतया[172] एव सकलातिप्रसङ्ग-वारणसंभवाद् इति कृतं पल्लवितेन।

इति व्युत्पत्तिवादे प्रथमाकारकेऽभेदान्वयबोधविचारः।।

==========

---

[171] VV-G, VV-P घटत्वाद्यवच्छिन्न.।

[172] VV-J, VV-D, VV-P, एककैकारणतया।

श्रीः

# कृष्णंभट्टी-टीका

श्री गणेशाय नमः

**VV-K. 1.1.1:** शाब्दबोधे चेति - सप्तमी निरूपितत्वे । च शब्दः प्रसिद्धौ। **एकपदार्थे** घटे। सप्तमी अनुयोगित्वे। **अपरपदार्थस्य** = नीलपदार्थस्य। षष्ठी प्रतियोगित्वे। **संसर्गो** अभेदादिः। **संसर्गमर्यादा** = समभिव्याहारज्ञान-कार्यतावच्छेदक कोटिप्रविष्ट-सम्बन्धता। तृतीया अभेदे। **भासते** इत्यत्र भासन-विषयता आख्यातार्थ आश्रयता। तथा च घटरूप-एकपदार्थ-अनुयोगिकः नीलरूप-अपरपदार्थ-प्रतियोगिको अभेदादिः संसर्गः शाब्दबोधनिरूपित-संसर्गत्वाभिन्न-विषयताश्रय इति वाक्यार्थः। एकत्वम् अपरत्वं च न पदे अन्वेति। अन्यथा आख्यतार्थकृति-वर्त्तमानत्वयोः परस्परम् अन्वयो न स्यात्। नापि अर्थे। नीलो घटः इत्यादौ अभेदान्वयो न स्यात्। नीलघटयोः एकत्वात् अपि तु पदार्थतावच्छेदके। तथा च एकं पदार्थतावच्छेदकं, तदवच्छिन्ने घटादौ अपरं यत् पदार्थतावच्छेदकं नीलत्वादि तदवच्छिन्ननीलादेः अभेदान्वय इत्यर्थः।

पदात् उपस्थितार्थस्य एव प्रकारतया विशेष्यतया च भानोपगमे 'नीलो घट' इत्यादौ नीलरूपाश्रय-प्रकारक-अभेदसंसर्गक-घटविशेष्यक-शाब्द-बुद्धित्वावच्छिन्नं प्रति प्रथमान्त-नीलपदसमभिव्याहृत-प्रथमान्तघट-पदजन्य-उपस्थितित्वेन समभिव्याहाररूपाकाङ्क्षाज्ञानस्य कारणता। एवं 'घटम् आनय' इत्यादौ घटप्रकारक-कर्मताविशेष्यक-आधेयतासंसर्गक-शाब्दबुद्धित्वावच्छिन्नं प्रति घटपदाव्यवहितोत्तर-अम्-पदजन्य-उपस्थितित्वेन समभिव्याहाररूपाकाक्षाङ्ज्ञान-कारणता-अङ्गीकारात् इति भावः।

**VV-K. 1.2.1:** स च - संसर्गश्च। **क्वचित् अभेदः**। 'नीलो घटः' इत्यादौ। **क्वचित् तदतिरिक्त एव** इत्यादिः। 'घटम्' इत्यादौ कर्मत्वे घटादेः आधारतानिरूपित-कर्मत्वनिष्ठ-आधेयता सम्बन्धः। 'घटो नास्ति' इत्यादौ नञर्थाभावे घटनिष्ठप्रतियोगिता-अनुयोगिता सम्बन्धः। 'घटं जिज्ञासति' इत्यादौ सनर्थ-इच्छायां ज्ञा-धात्वर्थ-ज्ञानस्य विषयतानिरूपित-विषयिता सम्बन्धः। **विषयविषयिभावादिः** इत्यादिना पचति इत्यादौ आख्यातार्थकृतौ धात्वर्थपाकादेः जन्यतानिरूपित-जनकत्वादिपरिग्रहः।

**VV-K. 2.1.1:** व्याससमासभेदेन विकल्पमाह - **अभेदश्च** इत्यादिना। **स्वसमानविभक्तिकेन** - स्वं विशेष्यवाचकघटादिपदम्। तत्समानविभक्तिकं प्रथमान्तं

नीलादिपदम्। तेन उपस्थितस्यैव नीलादिरूपाश्रयस्य अभेद संसर्ग। व्यासे गतिम् उक्त्वा समासे ताम् आह - **स्वाव्यवहितपूर्ववर्त्तिना** चेति। स्वं विशेष्यवाचकं घटपदम्। तदव्यवहितपूर्ववर्त्तिना नीलादिपदेन इत्यर्थः। उपस्थि(स्थापि?) **तस्य एवेति** एवकार-व्यवच्छेद्यमाह। न त्विति। 'नीलस्य घटः' इत्यत्र नीलपदार्थस्य असमानविभक्तिकपदेन षष्ठ्या व्यवधानात्। अव्यवहितपदेन च अनुपस्थाप्यत्वादिति भावः। 'नीलस्य घटः' इत्यत्र तु नीलपदोत्तरषष्ठ्या घटपदाव्यवहितपूर्ववर्तित्वेऽपि अयोग्यत्वात् न षष्ठ्यर्थसम्बन्धस्य अभेदेन घटे अन्वयः।

**VV-K. 2.2.1:** ननु **स्वसमानविभक्तिकेन** इत्यत्र स्वं विशेष्यवाचकं पदं तेन स्वेन समानविभक्तिः यस्य इति विग्रहात् स्वतुल्यविभक्तिकत्वे विशेषणपदं लभ्यते। तच्च बाधितम्। विशेष्यपदस्य प्रातिपदिकत्वात् विभक्तेश्च तद्भिन्नत्वात्। अतः स्वसमानविभक्तिकत्वं परिष्करोति - **स्वसमानविभक्तिकत्वं** चेति। स्वसमानत्वं न तुल्यत्वम् अपि तु स्वपदलक्षणया स्वप्रकृतिकविभक्तितुल्यत्वम्! एवं च **स्वं** विशेष्यवाचकं पदं प्रकृतिर्यस्या सा, ईदृशी वा प्रथमादिविभक्तिः। प्रथमात्वादिना तत्सजातीया विभक्तिर्यस्य तत्स्वप्रकृतिकविभक्ति-सजातीयविभक्तिकं विशेषणपदं तत्त्वं विशेष्य-वाचकपदोत्तर-विभक्तिवृत्ति-विभक्ति-विभाजक-प्रथमात्वादिमद्विभक्ति-प्रकृतित्वम् इति यावत्। न तु समानानुपूर्वीकत्वं साजात्यमिति। न तु विशेष्यवाचकपदोत्तरविभक्तिवृत्ति-सु-काररूप-सकारोत्तर-उत्वरूपानुपूर्वी विशेषवत्त्वं विशेषणवाचकपदोत्तरविभक्ति-निष्ठमित्यर्थः। 'वेदाः प्रमाणम्' 'शतं ब्राह्मणाः' इत्यादौ अन्वयानुपपत्तेः इति। जसि जस्त्वरूपायाः सुविभक्तौ सुत्वरूपाया आनुपूर्व्याः भेदात् साजात्यं न स्यात्। प्रथमात्वादिना साजात्यमस्ति इति न बोधानुपपत्तिरिति भावः।

**VV-K. 2.2.2:**

> या विशेष्येषु दृश्यन्ते लिङ्ग-सङ्ख्या-विभक्तयः।
> प्रायस्ता एव कर्तव्याः समानार्थे विशेषणे।।

इति भर्तृहरिकारिकाम् अर्थतोऽनुवदन् शङ्कते - **ननु विंशत्याद्या** इत्यादिना। कारिकास्थं प्रायः पदार्थमाह - **असति विशेषानुशासने** इति। "विंशत्याद्याः सदैकत्वे" इत्यादिविशेषानुशासनस्थले तु न विशेषण-विशेष्यपदयोः समानलिङ्गसङ्ख्यानियमः। समानविभक्तेः नियमस्तु अस्ति इति 'प्राय' इत्युक्तमिति भावः। समानवचनत्वमित्यत्र वचनं संङ्ख्या। **अन्यथा** विशेष्य-विशेषणपदयोः समानवचनकत्व-नियमाभावे।

**VV-K. 2.2.3: तथानियमोपगमेन** - समानवचनकत्व-नियमाङ्गीकारेण। प्रमाणमित्यस्य ल्युडन्तत्वेन नित्य-नपुंसकत्वात् अजहल्लिङ्गतया 'वेदाः' इत्यस्य च भिन्नलिङ्गकत्वात् समानवचनकत्वाभावो न दोषाय इत्याशय।

शक्तिर्निपुणता लोक शास्त्रकाव्याद्यवेक्षणात्।
काव्यज्ञशिक्षयाभ्यास इति हेतुस्तदुद्भवे।। (का.प्र. १.३)

इति काव्यप्रकाशकारिका। तत्र शक्तिः कवित्वबीजभूतः संस्कारविशेषः। स च वासना। सा जन्मान्तरीया ऐहिकी वा। काव्य-लोक-शास्त्रादिज्ञानजन्या निपुणता। कविशिक्षया अभ्यासश्चेति। 'त्रयः समुदिताः' दण्डचक्रादिन्यायेन समुदितानां फलोपधायकत्वेन हेतुः इत्येकवचनम्। तत्र त्रयः हेतुरिति समानलिङ्गकत्वेऽपि वचनैक्याभावात् नियमभङ्ग इति भावः। तादृशस्थले - असमान-लिङ्गक-स्थले। आप-स्त्री भूम्नि इत्यादि बलवद्बाधकापाद्यनियम उत्सर्गः। उत्सर्गात् प्राप्तम् औत्सर्गिकम् एकवचमेव विशेषणपदोत्तरम् उचितमिति। 'प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानि' 'पितरो देवता' इत्यादेः अनुपपत्तिरिति। पितृ-पितामह-प्रपितामहेषु पितर इति प्रयोगस्तु सपिण्डीकरणोत्तरश्राद्धजन्यफलभागित्वं पारिभाषिकं पितृत्वमादाय समर्थनीयः। द्रव्यत्यागोद्देश्यत्वं च देवतात्वम्।

**VV-K. 2.2.4:** ननु समानलिङ्गकस्थले समानवचनकत्वनियम-अङ्गीकारेण 'त्रयः समुदिता हेतुः' इत्यत्र अनुपपत्तिसम्भवेऽपि **असमानलिङ्गकस्थले** न किञ्चित् नियतं निमित्तमिति कथं प्रमाणानि इत्यत्र बहुवचनानुपपत्तिः शङ्कितेति चेत् ? न। बहुवचनप्रयोगे हि क्वचिन्नियमो नियामको यथा 'नीलाः घटाः' इत्यत्र समानलिङ्गकेषु समानवचनकत्वरूपः। क्वचिच्च बहुत्वसङ्ख्याबोधः। यथा 'घटान्' इत्यत्र 'प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानि' इत्यत्र तु उभयविध-हेत्वभावात्। प्रथमोपस्थितत्वात् च एकवचनप्रयोगस्य एव भावाख्यातवत् साधुत्वात्।

**VV-K. 2.2.5-6:** विशेषणपदोत्तर-वचनेषु अनुगतनिमित्तमाह - **यत्र** इति। ननु 'घटाः नीलाः' इत्यत्र विभक्त्यर्थः सङ्ख्यारूपः। 'नीला वर्णाः' इत्यादौ तु गुणे गुणानङ्गीकारात् अपेक्षाबुद्धिविशेषविषयत्वरूप एव विभक्त्यर्थो न तु सङ्ख्यारूपः इति। शक्य-लक्ष्यसाधारण-विभक्त्यर्थमाह - **विशेष्यवाचकपदोत्तर-विभक्ति-तात्पर्य-विषयसङ्ख्या-विरुद्धसङ्ख्याया अविवक्षितत्वमिति**। तथा च नियमशरीरे न सङ्ख्यात्वेन न वा अपेक्षाबुद्धिविशेषविषयत्वेन विभक्त्यर्थस्य निवेशः। किन्तु विशेष्यवाचक-पदोत्तर-विभक्तितात्पर्यविषयत्वेन इति न अननुगम इति भावः। 'घटा नीला' इत्यादौ विशेष्यवाचकं घटपदं, तदुत्तरा जस्-रूपप्रथमाविभक्तिः। तत्तात्पर्यविषयीभूता बहुत्वसङ्ख्या। ततो विरुद्धा एकत्वसंख्या। तस्याः विशेषणपदोत्तरविभक्त्या अविवक्षितत्वमेव विशेष्य-विशेषणपदयोः समानविभक्तिकत्वे नियामकमित्यर्थः। **अत एवेति** - ईदृशनियमाङ्गीकारादेव। 'पुरूरवोमार्द्रवसौ विश्वेदेवाः' इत्यत्र विश्वेदेवा इति

विशेष्यवाचकं पदम्। तदुत्तरविभक्तितात्पर्यविषयसङ्ख्या बहुत्वसङ्ख्या, तद्विरुद्धा सङ्ख्या द्वित्वरूपा। सा पुरूरवोमार्द्रवसौ इत्यत्र विवक्षिता एव इति न समानवचनत्वम्। विश्वेदेवानां बहुत्वेऽपि द्वित्वविशिष्टयो एव पुरूरवमार्द्रवसोः एवं कालकामयोः तत्र तत्र कर्मणि पूज्यत्वविधानात् इति भाव। प्रभृत्योरिति - प्रभृतिग्रहणं विशेष्यवाचक-विश्वेदेवपदोत्तरविभक्ति-तात्पर्यविषयबहुत्वसङ्ख्ययाः अन्वय-योग्यत्वं सूचयति, विश्वेदेवानां बहुत्वात्। तथा हि

> इन्द्रस्य दुहिता ज्येष्ठा विषा नाम महातपाः।
> तस्याः पुत्राः समुत्पन्ना विश्वेदेवास्त्रयोदशाः।।
> नैमित्तिके कालकामौ काम्ये च धूरिलोचनौ।
> अन्वष्टके दिवि देवौ नान्द्यां सत्यवसू स्मृतौ।।
> पुरूरवोमार्द्रवसौ पार्वणे समुदाहृतौ।
> यज्ञे दक्षक्रतू नाम सदः सापिण्ड्यके विधौ।। इति।

**VV-K. 2.2.7:** इदमत्र तत्त्वम् - कार्याव्यवहित प्राक्क्षणावच्छेदेन कार्याधिकरणवृत्त्यभावाप्रतियोगित्वं न सकलशब्देषु, चालनीन्यायेन प्रतियोगित्वात्। अतः तादृशप्रतियोगितानवच्छेदक-शब्दत्वरूप-धर्मवत्त्वमेव शाब्दधियं प्रति कारणत्वं वाच्यम्। तच्च शब्दत्वमेव इत्याह - **शब्दत्वावच्छिन्न-यावच्छब्दनिष्ठमेकमेव इति।** यदि च शब्दत्वमेव कारणत्वं तदा कारणतावच्छेदकत्वं शब्दत्वेन सम्भवति, अभेदे अवच्छेद्यावच्छेदक-भावानङ्गीकारात्। तथापि तादृशप्रतियोगिता अनवच्छेदकत्व-विशिष्टशब्दत्वस्य कारणत्वं स्वरूपतः शब्दत्वस्य कारणतावच्छेदकत्वमिति न अनुपपत्तिः। **'सम्पन्नो व्रीहिः' इत्यनेकव्रीहितात्पर्यकेऽपि पदे तादृशव्युत्पत्ति-संकोचस्य** इति। एकत्वं पदार्थतावच्छेदके व्रीहित्वेऽन्वेति। तथा च एकव्रीहित्व-जात्यवच्छिन्नः क्षेत्रस्थः सर्वोऽपि व्रीहिः सम्पन्नः परिपक्व इत्यर्थः। **तादृशव्युत्पत्ति-सङ्कोचस्यापि।** *पदार्थः पदार्थेन अन्वेति न तु पदार्थैकदेशेन* इति व्युत्पत्तिसङ्कोचस्य। पदार्थः पदजन्यप्रतीतिविशेष्यः, पदार्थेन पदजन्य-प्रतीतिविशेष्ये नान्वेति। तथा च एकपदार्थविशेष्यक-अपरपदार्थप्रकारक-शाब्दबोधं प्रति समानविशेष्यताप्रत्यासत्त्या पदजन्यपदार्थोपस्थितिः हेतुः। क्वचित् 'वेदाः प्रमाणम्' इत्यादौ अनुभवानुरोधेन विशेष्यतया एकत्वादिपदार्थप्रकारकबोधे विशेषणतया प्रमाणादिपदजन्य-पदार्थोपस्थितिः हेतुः। व्यभिचारवारणं तु अव्यवहितोत्तरत्वसम्बन्धेन कारणवैशिष्ट्यनिवेशेन बोध्यम्।

**VV-K. 2.2.8:** एकदेशान्वयं परिहरति **यदि चेति** **स्वाश्रयप्रकृत्यर्थता-वच्छेदकवत्त्वसम्बन्धेन प्रकृत्यर्थे एव अन्वय** इति। स्वं व्रीहिपदोत्तरप्रथमार्थ-एकत्वम्। स्वाश्रयीभूतं यत्प्रकृत्यर्थतावच्छेकं व्रीहित्वं तद्वत्त्वं, तेन सम्बन्धेन व्रीहौ

एव एकत्वान्वयो न तु प्रकृत्यर्थतावच्छेदके व्रीहित्वे। तेन न व्युत्पत्तिसङ्कोच इति भावः। उक्तसम्बन्धेन एकत्वविशिष्टा व्रीहयः इति अन्वयबोधः। प्रकृत्यर्थतावच्छेदके एकत्वान्वयो न भवति इत्यत्र हेतुमाह - व्रीहित्वादिजातेः स्वरूपत एव व्रीह्यादिपदशक्यतावच्छेदकतया अन्वयितावच्छेदकरूपेण अनुपस्थितेः इति। **तत्र** = व्रीहित्वे। **पदार्थान्तरस्य अन्वयानुपपत्तेः** इत्यत्र हेतुत्वेन अन्वेति। क्वचित्तु अन्वयितावच्छेदकरूपेण अनुपस्थिते इति सप्तम्यन्तपाठः। अनुपस्थिते तत्र व्रीहित्वे इत्यत्र हेतुगर्भविशेषणम्। प्रकृतेऽपि ईदृश्येव गतिरिति। 'वेदाः प्रमाणम्' इत्यत्र एकत्वाश्रय-प्रमाणतावच्छेदकवत्त्व-सम्बन्धेन एकत्वविशिष्टं यत्प्रमाणं तदभिन्ना वेदा इत्यर्थः। शाब्दबोधमात्रे धर्मितावच्छेदकरूपेण धर्म्युपस्थितेः हेतुत्वादिति भावः।

**VV-K. 2.2.9:** **यत्त्विति** - पदार्थतावच्छेदके स्वाश्रयप्रकृत्यर्थतावच्छेदकवत्त्व-सम्बन्धेन पदार्थे वा अन्वेति। पक्षद्वयेऽपि जातेरेकत्वभानोपगमो निरर्थक इत्यर्थः।

**VV-K. 2.2.10:** यतः **स्वसजातीयनिष्ठ-भेदप्रतियोगिता-अनवच्छेदकत्वरूप-स्वसजातीयद्वितीयरहितत्वम् एकवचनार्थ इति।** भूतले एकघटसत्त्वदशायाम् 'अत्र घट' इत्यादौ स्वं = प्रकृत्यर्थः एतद्देशवृत्तिर्घटः, तत्सजातीयः स एव। तन्निष्ठः एकपटादिभेदः, तत्प्रतियोगितावच्छेदकं तन्निष्ठमेकत्वम्, अनवच्छेदकं तद्घटनिष्ठम् एकत्वम्। तदेव सजातीयद्वितीयरहितत्वं घटपदोत्तरम् एकवचनार्थः। तद्देशे बहुघटसत्त्वदशायां स्वसजातीयो द्वितीयोऽपि घटः, तन्निष्ठैकत्ववदेतद्घटभेदः तत्प्रतियोगितावच्छेदकमेव एतद्घटनिष्ठम् एकत्वम्। एवं सजातीय-एतद्घटनिष्ठ-भेदप्रतियोगितावच्छेदकानि एवैतद्घटभिन्ननिष्ठानि एकत्वानि इति अनवच्छेदक-एकत्व-अप्रसिद्ध्या 'नात्र घट' इति प्रयोगः। **न तु एकत्वमात्रम्** = न तु सङ्ख्यारूप-एकत्वमात्रम्। **तस्य** = सङ्ख्यारूप-एकत्वस्य। **वस्तुमात्रवृत्तित्वेन अर्थत एव**। शब्दं विना एव, तद्बोधने शब्दानपेक्षणात् इति भावः। **अनुपयोगाच्चेति** = एकवचनान्तघटादिपदस्य द्व्यादिघटव्यावृत्तिरेव फलम्। तदसम्भवाच्च इत्यर्थः। ईदृशैकत्वार्थे उपष्टम्भकमाह - **अत एव** इति। तादृशैकत्वस्य = **सजातीयेत्यादि**-निरुक्तैकत्वस्य।

**VV-K. 2.2.11:** **साजात्यञ्च स्वसमभिव्याहृतपदार्थसंसर्गित्वविशिष्ट-प्रकृत्यर्थतावच्छेदकरूपेण** इति। 'अत्र घटोऽस्ति' इत्यत्र स्वम् एकवचनान्तं घटपदम्। तत्समभिव्याहृतं पदं 'अत्र' इति पदम्। तदर्थः एतद्देशवृत्तित्वम्, तत्संसर्गित्वं तत्संसर्ग एव। स च एतद्देशवृत्तित्वीय-स्वरूपसम्बन्धरूपः। तद्विशिष्टं यत्प्रकृत्यर्थतावच्छेदकं घटत्वं तेन रूपेण सजातीयः स एव घटः। तन्निष्ठो यः एकपटभेदः तत्प्रतियोगितावच्छेदकं तत्पटनिष्ठैकत्वम्। तदनवच्छेदकं घटनिष्ठम् एकत्वम्। तद्रूपपारिभाषिक सजातीयद्वितीय-रहितत्वम् एकवचनार्थो घटेऽस्ति इति

पूर्वमुक्तम्। एतद्देशे बहुघटसत्त्वदशायां तादृशवाक्यप्रयोगश्च जात्येकत्वमादाय समर्थनीय इति। एतद्देशे बहुघटसत्त्वदशायाम् 'अत्र घटोऽस्ति' इति प्रयोगो न भवति। यदि कदाचिद् भवति तदा घटपदोत्तरप्रथमैकवचनार्थ-एकत्वं घटत्वरूपजातौ अन्वेति। तत्र प्रकृत्यर्थतावच्छेदकतावच्छेदक सम्बन्धेन समभिव्याहृत-पदार्थसंसर्गित्व-विशिष्ट-प्रकृत्यर्थतावच्छेदक मात्रवृत्तिधर्मेण साजात्यं ग्राह्यम्। तथा च घटपदसमभिव्याहृतम् अत्रेति सप्तम्यन्तपद तदर्थः। एतद्देशवृत्तित्वं तस्य स्वरूपेण संसर्गि, घटः तत्र घटप्रकृत्यर्थतावच्छेदकतावच्छेदक-सम्बन्धेन समवायेन वृत्तिः, यस्य तादृशघटत्व तस्य तादृशवृत्तित्वरूपं घटत्वेऽस्ति। अथ च प्रकृत्यर्थतावच्छेदकमात्रवृत्तिधर्मो घटत्वत्वम्। तदपि घटत्वे अस्ति इति सामानाधिकरण्यसम्बन्धेन समभिव्याहृतपदार्थ संसर्गित्वविशिष्टो यः प्रकृत्यर्थतावच्छेदकमात्रवृत्तिधर्मो घटत्वत्वं तेन धर्मेण घटत्वसजातीय घटत्वमेव। तन्निष्ठो यो भेदः एकत्ववत्पटत्वभेदः तत्प्रतियोगितावच्छेदक पटत्वादिनिष्ठम् एकत्वम्, तदनवच्छेदकं घटत्वनिष्ठमेकत्वम्। तदेव सजातीयद्वितीयरहितत्वं घटपदोत्तर-प्रथमैकवचनार्थः। जात्येकत्वादे एव इत्यादिपदात् स्वाश्रयप्रकृत्यर्थतावच्छेदकवत्त्वसम्बन्धेन एकत्वस्य घटेऽन्वयः। स्व घटपदोत्तर-प्रथमैकवचनार्थ एकत्वं, तदाश्रयीभूत-प्रकृत्यर्थतावच्छेदकं घटत्वं, तद्वत्व घटेऽस्ति इति तदर्थः। युक्तं च एतत्। घटत्वे एकत्वान्वयो न सम्भवति। 'घटोऽस्ति' इत्यत्र घटत्वस्य स्वरूपत एव घटपदशक्यतावच्छेदकतया अन्वयितावच्छेदकरूपेण अनुपस्थितेः। अन्वयितावच्छेदकरूपेण उपस्थितेः एव पदार्थान्तरान्वयनियमादिति।

**VV-K. 2.2.12:** मतान्तरम् आह - यत्त्विति। 'युष्मद्युपपदे समानाधिकरणे स्थानिन्यपि मध्यम' (पा.१.४.१०५) इति पाणिनिसूत्रम्। युष्मत्पदे तिङ्वाच्यकारकवाचिनि प्रयुज्यमाने सति स्थानिनि गम्यमाने वा सति मध्यमः पुरुषः। "प्रयुक्ते गम्यमाने वा उक्ते युष्मदि मध्यम" इति हर्युक्तेः। एवम् अस्मदि (उत्तमः) (पा. १.४.१०७) इत्यस्य 'शेषे प्रथम' (पा. १.४.१०८) इत्यस्य च अर्थ इति वैयाकरणमतेऽपि भावाख्यातप्रयोगो न प्राप्नोति। कर्तृ-कर्म-कारकाणां तिङ्वाच्यत्वाभावात्। एवं न्यायनयेऽपि भावप्रधाननिर्देशेन प्रयुक्तगम्यमान-अन्यतर-युष्मत्पदबोध्यनिष्ठे युष्मत्त्वे तिङर्थसङ्ख्या-समानाधिकरणे सति मध्यमः पुरुष इत्यर्थकरणात्। वर्त्तमानत्वार्थक-भावाख्यातस्य आवश्यकत्वेऽपि भावनान्वयिनि सङ्ख्यान्वयनियमेन अत्र भावनान्वयविरहेण सङ्ख्यान्वयविरहात् आह - **एकत्वविवक्षायामपि** इत्यादि। **अलं जात्येकत्वपरतया तत्समर्थनेन।** एकत्व-समर्थनेन इत्यर्थः। प्रत्ययानां प्रकृत्यर्थान्वित-स्वार्थबोधकत्व-नियमभङ्गापत्तेः इति भावः। दृष्टान्त-दार्ष्टान्तिकयोः वैषम्यम् अभिप्रेत्य समाधत्ते। **भावाख्यातस्थले**

**गत्यन्तरविरहेण विभक्तेः निरर्थकत्व-उपगमादिति।** भावाख्यातस्थले 'सुप्यते' इत्यादौ स्वापे विभक्त्यर्थ एकत्वं विशेषणं वक्तव्यम्। तच्च स्वापत्वव्याप्यानां द्विकर्तृकस्वापत्व-बहुकर्तृकस्वापत्वानां व्यावर्तनार्थम् एव वक्तव्यम्। तच्च न सम्भवति। स्वापत्वव्याप्यधर्माणां व्यावर्त्यानां कदापि अनवगमात् एकत्वं विशेषणं व्यर्थम् इति भावाख्यातस्य सङ्ख्या अर्थो नास्ति इत्यर्थः। 'सुप्यत' इत्येतावन्मात्रं शृण्वतः कतिपयैरिति प्रश्नासङ्गतेश्च न सङ्ख्या विभक्त्यर्थः। तथा हि - 'सुप्यते' इत्यत्र आख्यातार्थैकत्वस्य धात्वर्थस्वापेऽन्वयाङ्गीकारे 'एकः स्वाप' इति अन्वयबोधो वाच्यः। तत्र एकस्मिन् स्वापे निद्रानाड्यवच्छिन्न-मनोयोगरूपे कतिपयैः इति जिज्ञासाविषय बहुनिष्ठकृतिजन्यत्वं बाधितमिति 'कतिपयैः' इति प्रश्नासङ्गतिः। एवं स्वापे द्वित्व-बहुत्वयोरपि सम्भवात् 'सुप्येते' 'सुप्यन्ते' इति द्वि-बहुवचनापत्तिरपि द्रष्टव्या। तस्मात् सङ्ख्यार्थाभावेन स्वापत्वरूपेण धातूपस्थापिते तृतीयान्तोपस्थाप्य-कर्तृणा तृतीयार्थकृतिद्वारा अन्वयाभ्युपगमात् उक्तप्रश्नसङ्गतिः उपपद्यते इति भावाख्यातस्थले 'सुप्यते' इत्येतावन्मात्रोक्ते, केन, काभ्यां, कैः इति तु अनेकश्रोतृ-जिज्ञासा-बोधकपदैः विभिन्नविभक्तिकैः सङ्ख्याबोधकस्य श्रोतृगताभावस्यापि व्यञ्जनात्, तद्बोधस्य अनुभवबाधितत्वात् इति गुरवः। तदर्थश्च अनेकविषयिणी या श्रोतुः जिज्ञासा तद्बोधकैः एक-द्वि-बहुवचनान्तैः पदैः श्रोतृगताभावस्य स्वापत्वव्याप्यधर्माणां द्वि-बहु-कर्तृक-स्वापत्वानां स्वापान्वित-तिङर्थ-एकत्वव्यावृत्यानां कदापि अवगमाभावस्य द्वि-बहु-कर्तृक-स्वागमरूपस्य स्वापान्विताख्यातार्थैकत्व-सङ्ख्या-बोधकस्य अभिव्यञ्जनात् इति अन्वयः। तथा हि धात्वर्थस्वापे निद्रानाड्यवच्छिन्न-आत्म-मनो-योगरूपे आख्यातार्थैकत्वान्वये एकस्मिन् स्वापे एककर्तृकत्वमेव अस्ति, न द्वि-बहु-कर्तृकत्वमिति व्यावर्त्यमेव द्वि-बहु-कर्तृकत्वं व्यावर्तकस्वापनिष्ठमेकत्वं व्यञ्जयति। स्वापत्वव्याप्य-धर्माणां द्वि-बहु-कर्तृकस्वापत्वानाम् अवगम एव श्रोतृगत-अभावरूपाख्यातार्थैकत्व सङ्ख्या-बोधकमित्यर्थः। तद्बोधस्य द्वि-बहु-कर्तृक-स्वापबोधस्य अनुभवबाधितत्वादिति व्यावर्त्यानाम् एकत्व-व्यञ्जकानाम् अभावात् न सङ्ख्या भावाख्यातार्थ इत्यर्थः। 'सम्भवति अर्थसाधुत्वे पदसाधुत्वम् अन्याय्यम्' इत्यभिप्रेत्य आह - **अत्र चेति।** अत्र च 'सम्पन्नो व्रीहिः' इत्यादौ तु व्रीहिपदोत्तरप्रथमार्थ-एकत्वस्य व्रीहित्वेऽन्वयसम्भवेन सति तात्पर्ये एकत्ववद्व्रीहित्वं, तदवच्छिन्नः सर्वोऽपि व्रीहिः सम्पन्न इति बोधस्य अनुभवसिद्धत्वात् च इत्यर्थः।

**VV-K. 2.2.13:** ननु असति विशेषानुशासने विशेष्य-विशेषण-वाचकपदयोः समानवचनत्वम् इति नियमस्य समानलिङ्गकस्थले एव अभ्युपगमेन 'वेदाः प्रमाणम्' इत्याद्यनुपपत्तिवारणेऽपि 'त्रयः समुदिताः हेतुः' इति **काव्यप्रकाश-**

व्याख्यायाः असङ्गतिः दुर्वारा एव इत्यत आह - एवं 'त्रयः समुदिता हेतुः' इत्यत्र इति। अत्र विशेष्यवाचकं 'त्रय' इति पदं, तदुत्तर जस्-रूपविभक्तेः तात्पर्यविषयीभूता बहुत्वसङ्ख्या। तद्विरुद्धा सङ्ख्या एकत्वरूपा। सा च हेतुपदोत्तरप्रथमैकवचनेन विवक्षिता एव इति। अविवक्षितत्वाभावात् त्रि-पदस्य बहुवचनान्तत्वेऽपि हेतुपदस्य एकवचनान्तता उपपत्तिः। एवञ्च एकत्वविशिष्ट यत्कार्योत्पाद-प्रयोजकतावच्छेदकसमुदायत्वं तद्धर्मवन्तः त्रयः इति बोधः। **अत एव** इति। समुदायत्वे एकत्वाङ्गीकारादेव इत्यर्थः। तथा सति - तृणारणिमणिन्यायेन शक्त्यादीनां कारणत्वाङ्गीकारे सति । एषां शक्तिः लोक-शास्त्र-काव्याद्यवेक्षण-जन्यनिपुणता काव्यज्ञशिक्षापूर्वकाभ्यासश्च एषामिति तदर्थः। **एकैकसमवधान-दशायामपि** - एषां मध्ये केवलशक्त्यादीनां काव्योत्पत्तेः शक्तित्वादिकमेव काव्योत्पादप्रयोजकतावच्छेदकम्। न तु शक्त्यादि-त्रित्वपर्याप्त-समुदायत्वमिति। तेषां शक्त्यादीनां काव्योत्पाद-प्रयोजकता-अवच्छेदक-समुदायत्व-आश्रयत्व-अनुपपत्तिरित्यर्थः।

**VV-K. 2.2.14:** एवं 'जात्याकृतिव्यक्तयः पदार्थः' इत्यत्रेति। विशेष्यवाचकं जात्याकृतिव्यक्तय इति पदं, तदुत्तरा विभक्तिः जस्-विभक्तिः, तत्तात्पर्यविषयीभूता सङ्ख्या बहुत्वसङ्ख्या, ततो विरुद्धा एकत्वरूपा सङ्ख्या। सा विशेषणवाचकपदोत्तरप्रथमया विवक्षिता एवेति न विशेष्य-विशेषणपदयोः समानवचनत्वमिति। एवञ्च एकत्वविशिष्टं पदशक्तिरूपं पदार्थत्वं, तद्वत्यः जात्याकृतिव्यक्तयः इति बोधः। एवम् असमानलिङ्गकस्थले विशेष्यवाचकपद-असमानवचनस्यापि विशेषण-वाचकपदस्य साधुत्वे असमानलिङ्गकस्थले औत्सर्गिकम् एव सर्वत्र विशेषणपदानन्तरं प्रयोक्तुमुचितम् इति।

**VV-K. 2.2.15-16:** 'प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानि' (न्या.सू. १.१.३) 'पितरो देवता' इत्यादेः अनुपपत्तिं वारयति - **प्रत्यक्षानुमानेत्यादिना। दिगिति।**

'शालास्युः भ्रातरः पत्न्याः स्वामिनो देवृ-देवरौ'

इत्यत्र भ्रातृपदस्य बहुवचनान्तत्वेऽपि देवृ-देवर-पदस्य द्विवचनान्तत्व-उपपत्तिः। अत्र विशेष्यवाचकपदं स्वामिभ्रातर इति पदं, तदुत्तरा जस्-विभक्तिः तत्तात्पर्यविषयीभूता बहुत्वसङ्ख्या, तद्विरुद्धा द्वित्वसङ्ख्या। सा देवृदेवर-पदोत्तर-औ-विभक्त्या विवक्षिता एव इति। अविवक्षितत्वाभावात् देवृदेवर-पदे द्विवचनान्तता। अत्र देवृदेवर-पदस्य देवृदेवर-पदवाच्ये लक्षणा। तेन वाच्यतावच्छेदकतयोः देवृदेवर-पदयोः द्वित्वान्वयः। पदरूप-पदार्थतावच्छेदक-भेदसत्त्वात् देवृदेवरौ इत्यत्र द्वन्द्वोपपद्यते।

**VV-K. 2.3.1:** 'दधि सुन्दरम्' इत्यत्र एवं विशेष्यवाचकं दधि-पदम्। तदुत्तरत्वेन प्रतिसन्धीयमाना सुब्विभक्तिः, प्रथमात्वादिना तत्सजातीया विभक्तिः यस्येति तत्त्वम्। सुन्दर-पदे इयमेवात्र आकाङ्क्षा बोध्या इत्यर्थः।

**VV-K. 2.3.2:** एवम् 'इदं दधि' इत्यादौ विशेष्यवाचक-पद-उत्तरत्वेन प्रतिसन्धीयमान-विभक्तिसजातीय-विभक्तिकत्वमपि। तथाविध-विभक्त्यव्यवहित-पूर्ववर्तितया प्रतिसन्धीयमानत्वमिति। विशेष्यवाचकम् इदम् पदमिति पदोत्तर-सुप्-विभक्तिः प्रथमात्वादिना तत्सजातीयविशेषणवाचक-पदोत्तरत्वेन प्रतिसन्धीयमाना विभक्तिः यस्य तत्त्वं विशेषणवाचके दधि-पदेऽस्ति।

**VV-K. 2.4.1:** शङ्कते - **अथेति। सामग्र्या कार्यजनने** = आकाङ्क्षा-योग्यतादिना शाब्दबोध-जनने। विशेष्य-विशेषण-पदयोः समानविभक्तिकत्वरूप-तथाविधनियमभङ्ग-प्रसङ्गरूपप्रयोजनक्षतेः अप्रतिबन्धकत्वात् इत्यर्थः। समाधत्ते - **तथाविधान्वयबोध-औपयिक-आकाङ्क्षाविरहादिति।** विशेष्य-विशेषण-पदयोः समान-विभक्तिकत्व-रूप तथाविध-नीलप्रकारक-अभेदसंसर्गक-घटविशेष्यक-अन्वयबोधजनिकायाः विशेष्य-विशेषण-पदयोः समानरूपाया आकाङ्क्षाया अभावादित्यर्थः। विनिगमनाभावात् आह - **समासस्थले चेति। उक्तस्थले** = 'नीलघट' इति स्थले। समासे व्यासे च उक्त-आकाङ्क्षाविरहात् नीलप्रकारक-अभेदसंसर्गक-घटविशेष्यक-बोधापत्तिः इत्यर्थः।

**VV-K. 2.4.2:** **उक्ताकाङ्क्षाज्ञानयोः** इति। समास-व्यास-स्थलीय-उक्त-आकाङ्क्षाज्ञानयोः इत्यर्थः।

**VV-K. 2.5.1:** **यत्त्विति** - **समास-व्यास-साधारणं विशेषण-वाचकपदस्य विशेष्यवाचकपद-अप्रकृतिकविभक्ति-अप्रकृतित्वस्वरूपं विरुद्धविभक्तिराहित्यमेव तादृशान्वयबोधौपयिकाकाङ्क्षा। विशेष्यवाचक-पदनिष्ठ-विशेषणवाचक-पदाप्रकृतिक-विभक्त्यप्रकृतित्वं तु न तथा, 'नीलघटम् आनय' इत्यादौ असम्भवात् इति।** 'नीलो घट' इत्यत्र विशेष्यवाचकं पदं घटपदं, तदप्रकृतिका या विभक्तिः द्वितीयादि-विभक्तिः, तदप्रकृतित्वं विशेषणवाचके नीलपदे अस्ति। एवं 'नीलघट' इत्यत्रापि। तथा हि - विशेष्यवाचकं घटादिपदं, तदप्रकृतिका विभक्तिः द्वितीया, तदप्रकृतित्वं नीलपदे इति विरुद्धविभक्तिराहित्यमेव। समास-व्यास-साधारणी नीलादिप्रकारक-अभेदसंसर्गक-घटविशेष्यक-अन्वयबोधजननिका आकाङ्क्षा। 'नीलस्य घट' इत्यादौ तु विशेष्यवाचक-घटपदाप्रकृतिका विभक्तिः षष्ठीविभक्तिः, तत्प्रकृतित्वम् एव नीलपदे। अतो न 'नीलस्य घट' इति वाक्यात् नीलप्रकारक-अभेदसंसर्गक-घटविशेष्यक-शाब्दबोधः। विशेष्य-वाचकपदनिष्ठ-विशेषणवाचक-पदाप्रकृतिक-विभक्ति-अप्रकृतित्वरूप-आकाङ्क्षा या 'नीलघट' इत्यत्र विशेषणवाचकं पदं नीलपदम्, तदप्रकृतिका विभक्तिः द्वितीयादिविभक्तिः,

तदप्रकृतित्वं विशेष्यवाचकपदे घटपदे इति 'नीलो घट' इत्यादौ सत्त्वेऽपि 'नीलघटम् आनय' इत्यादौ अभावात् न विशेष्यवाचकपदनिष्ठविशेषण-वाचकपदाप्रकृतिक-विभक्त्यप्रकृतित्वस्य विनिगमनाविरहेण आकाङ्क्षात्वम् इत्यर्थः। न च 'नीलघट' इति समस्तं विहाय 'नीलघटम् आनय' इत्यादिसमस्तानुसरणे किं बीजमिति वाच्यम्। तत्र विशेषणवाचकपदाप्रकृतिका इत्यस्य विशेषणवाचक-पदोत्तरत्वेन अप्रतिसन्धीयमाना इत्यर्थकरणे न दोषः। तथा हि - 'नीलघट' इत्यत्र विशेषणवाचकं नीलपदम्। तदुत्तरत्वेन अप्रतिसन्धीयमाना वा विभक्तिः द्वितीया, न तु प्रथमाविभक्तिः, तदप्रकृतित्वं विशेषणवाचकपदे घटपदे इति न दोष इत्याशयेन 'नीलघट' इति समस्तम् उपेक्षितवान्। न च 'नीलघटम् आनय' इत्यत्रापि 'नीलं च तं घटं च' इति परिनिष्ठित-विभक्त्या समासाश्रयणात् न दोष इति वाच्यम्। प्रथमान्तेन समास इत्यभिप्रायेण दोषाभिदानादिति।

**VV-K. 2.5.2:** तदसत् इति। विशेष्यवाचकपदाप्रकृतिकत्व विशेष्यवाचक-पदानुत्तरत्वं विशेष्यवाचकपदोत्तरत्वेन अप्रतिसन्धीयमानत्वम् इति वा। तथा च विशेष्यवाचकपदानुत्तर-विभक्ति-अप्रकृतित्वरूपम् अथवा विशेष्यवाचक-पदोत्तरत्वेन अप्रतिसन्धीयमान-विभक्ति-अप्रकृतित्वरूपं वा विरुद्धविभक्ति-राहित्यम् एव आकाङ्क्षा 'नीलो घट' इत्यादौ न सम्भवति। तथा च विशेष्यवाचकं पदं घटपदम्। तदनुत्तरा विभक्तिः सु-विभक्तिः, तत्प्रकृतित्वमेव विशेषणवाचके नीलपदे इति, नीलपदोत्तरविभक्तेः घटपदोत्तरविभक्ति-भिन्नत्वात् इत्यर्थः।

**VV-K. 2.6.1:** शङ्कते - **अथ विशेष्यवाचकपदोत्तरावृत्ति-विभक्तिविभाजक-धर्मवद्-विभक्तिराहित्यस्य विवक्षणान्न दोष इति चेत्** इति। 'नीलो घट' इत्यत्र विशेष्यवाचकं घटपदं, तदुत्तरस्मिन् अवृत्तिः यो विभक्तिविभाजको धर्मो द्वितीयात्वादिः, तद्विभक्तिराहित्यस्य नीलपदे सत्त्वात्। एवं 'नीलघटम् आनय' इत्यत्र विशेष्यवाचकं घटपदं, तदुत्तरस्मिन् अवर्त्तमानो यो धर्मः तृतीयात्वादिः, तद्वद्विभक्तिराहित्यस्य नीलपदे सत्त्वात् 'नीलो घटः' 'नीलघट' इति द्वयात् नीलप्रकारक-अभेदसंसर्गक-घटविशेष्यक-बोधः। 'नीलस्य घट' इत्यादौ तु घटपदोत्तरावृत्तिधर्मः षष्ठीत्वं, तद्वद्विभक्तिराहित्यस्य सत्त्वात् न तादृशबोध इत्यर्थः।

**VV-K. 2.6.2:** समाधत्ते - **विभक्तित्वमजानतः पुरुषस्य तादृश-धर्मज्ञानासम्भवात् शाब्दबोधानुपपत्तिः** इति। यस्य विभक्तित्वज्ञानं नास्ति तस्यापि 'नीलो घट' इति वाक्यात् शाब्दबोधो जायते। स न स्यात्। विशेष्यवाचक-पदोत्तरावृत्ति-धर्मज्ञान-असम्भवात् इत्यर्थः। स्वरूपतो विरुद्धविभक्तिराहित्यस्य प्रयोजकत्वं न सम्भवति। तथा हि - 'नीलस्य घट' इत्यादौ षष्ठ्यां सुत्व-भ्रमो जातः। तदानीं 'नीलस्य घट' इति वाक्यात् नीलप्रकारक-अभेदसंसर्गक-घटविशेष्यक-बोधो जायते। स न स्यात्। विरुद्धविभक्तिराहित्यस्य स्वरूपतो

अभावात्। अत तादृशज्ञानमेव प्रयोजकत्वं वाच्यम् इति। यस्य विभक्तित्वज्ञानं नास्ति तस्य बोधो न स्यात् इति युक्तमेव सर्वमित्यर्थः।

**VV-K. 2.6.3:** विरुद्धविभक्तिराहित्यज्ञान-हेतुत्वपक्षेऽपि विभक्तित्वादिकम् अजानतः पुरुषस्य शाब्दबोधानुपपत्तिम् उद्धर्तुं शङ्कते - **अथ 'नीलो घटो' 'नील घट' इत्यादि-द्विविध(बोध)साधारणमिति।** स्वोत्तर-सु-आदिभिन्नं यत्पदं तदुत्तरं यत् तद्भिन्नत्वविशिष्टं यत् सु उत्तरत्वादि-तद्रूपेत्यर्थः। यथा 'नीलो घट' इत्यत्र स्वं नीलपदम्। तदुत्तर सु-आदिभिन्न घटपदम्। तदुत्तरं यत् तद्भिन्नत्वं घटपदेऽस्ति। एवं 'नीलघट' इत्यत्रापि स्वोत्तरं नीलपदोत्तरं सु-आदिभिन्नं पदं घटपदम्। तदनुत्तरत्वं घटपदे अस्ति। अथ च स्वोत्तरत्वं च नीलपदोत्तरत्वमिति स्व-रूप-स्वाव्यवहितोत्तरत्वसम्बन्धेन नीलपदवत् सु-आद्यन्त-घटपदवत्त्व-रूप-आकाङ्क्षा समास-व्यास-साधारणी। नीलप्रकारक-अभेदसंसर्गक-घटविशेष्यक-बोधजनिका इत्यर्थः। 'नीलस्य घट' इति प्रयोगवारणाय सु-आदिभिन्नेत्यत्र विशेष्यवाचक-घटादिपदोत्तर-विभक्तिवृत्ति विभक्ति-विभाजक-प्रथमात्वादि-धर्मावच्छिन्न-भिन्नेत्यर्थः। तथा च नीलपदोत्तर-षष्ठ्याः प्रथमात्वावच्छिन्नभिन्नत्वात् न दोषः।

**VV-K. 2.6.4:** समाधत्ते - **'नीलघटरूपम्' इत्यादिवाक्य-साधारण्यानुरोधेन अन्यादृशाया (अपि) आकाङ्क्षाया (समासस्थले) उपगन्तव्यतया उपदर्शित-व्यास-समास-साधारणानुगत-आकाङ्क्षा-अनुसरणस्य अप्रयोजकत्वादिति।** नीलं च तत् घटरूपं चेति कर्मधारयः। तत्रोक्ता आकाङ्क्षा व्यास-समास-साधारणी न संभवति। तथा हि - स्व नीलपदम्। तदुत्तरत्वरूप-स्वाव्यवहितोत्तरत्वसम्बन्धेन नीलपदवद् भवति रूप-पदम्। अथ च स्वाद्यन्तं भवति। तथापि स्वं नीलपदम्। तदुत्तरं स्वादिभिन्नं घटपदम्। तदुत्तरत्वमेव रूप-पदे इति तदनुत्तरत्व-वैशिष्ट्यं सामानाधिकरण्येन स्वोत्तरत्वेन अस्ति इति, नीलघट-रूपमित्यादिसाधारणी या अन्यादृशी आकाङ्क्षा उपगन्तव्या, सा च स्वादिभिन्ने निराकाङ्क्षत्वप्रक्षेपेण बोध्या। तथा च स्वोत्तरं नीलपदोत्तरम्। स्वादिभिन्नं निराकाङ्क्षं पदं, तदुत्तरं यत् तद्भिन्नत्वरूप-स्वोत्तर-स्वादिभिन्न-पदानुत्तरत्वं जातम्। घटपदं तु स्वोत्तरं स्वादिभिन्नं निराकाङ्क्षं पदं न भवति। किन्तु रूप-साकाङ्क्षमेवेति। इयमाकाङ्क्षा समास-व्यास-साधारणी न पूर्वोक्ता इत्यर्थः। यद्यपि 'नीलघट-रूपम्' इत्यत्र नील-घटयोः अभेदान्वयाभ्युपगमे नीलपदोत्तरं स्वादिभिन्नं पदं घटपदम्। तदुत्तरं यद् रूप-पदं तदनुत्तरत्वं घटपदेऽस्ति। अथ च स्वोत्तरत्वं = नीलपदोत्तरत्वं च अस्ति। तथापि घटपदे स्वाद्यन्तत्वं नास्तीति उक्ताकाङ्क्षा नास्ति। तत्र स्वाद्यन्त-घटादिपदत्वमित्यस्य अनुसन्धीयमान-स्वाद्यन्तघटादिपदत्वम् इति विवक्षणात् प्रकृताकाङ्क्षा-उत्पादनेऽपि 'नीलघट-रूपम्' इति वाक्यात् रूपं नीलम्

अन्यद्वा इति संशयोच्छेदो जायते। स न स्यादिति, घटपदोत्तर स्वादिविभक्त्या अनुसन्धानं न आदरणीयमिति। घटपदे स्वाद्यन्तत्वाभावात् नील-घटयोः आकाङ्क्षाभावात् अन्वयो नास्ति। किन्तु नील-रूपयोः एव अभेदान्वयो वक्तव्यः। सोऽपि न सम्भवति। स्वोत्तरं नीलपदोत्तरम्, यत्स्वादिभिन्नपद घटपदम्, तदुत्तर-रूप-पदे स्वोत्तर-स्वादिपदभिन्न-पदोत्तरत्वाभाव-वैशिष्ट्य नास्तीति प्रकृताकाङ्क्षा-विलयापत्तिः इति बोध्यमिति। न च स्वोत्तर-स्वादिभिन्न-निराकाङ्क्षपद-अनुत्तरत्वविशिष्ट-स्वोत्तरत्वरूप-स्वाव्य-वहितोत्तरत्व-सम्बन्धेन नीलादिपदवत् स्वाद्यन्त-घटादिपदत्वमेव समास-व्यास-साधारणीति अभेदान्वयबोधौपयिकाकाङ्क्षा अस्ति इति चेत् ? न। सिद्धान्तिमते तु सकलसमासे विशेष्यवाचकपद-अव्यवहितपूर्ववर्त्ति-विशेषणवाचकपद-अव्यवहितोत्तरवर्त्ति-विशेष्यवाचक-पदत्वं वा आकाङ्क्षा। एवं सकल-व्यासे प्रथमान्त-विशेष्यवाचकपद-समभिव्याहृत-प्रथमान्त-विशेषणवाचक-पदत्वम् आकाङ्क्षा इति आकाङ्क्षा द्विविधा अपि विशेष्य-विशेषणेति शब्दानुगमसम्भवात्। पूर्वपक्षिणस्तु शब्दानुगमस्यापि अभावात् स्वोत्तर-स्वादिभिन्नं निराकाङ्क्षं पदं, तदुत्तरं यत्तद्भिन्नत्वरूप यत्स्वोत्तरस्वादिभिन्न-पदानुत्तरत्वं तद्विशिष्टेत्यत्र भेदकूटनिवेशेन गौरवात् दुर्ज्ञेयत्वाच्च। अर्थानुगमेन सिद्धान्तिमतस्यैव उचितत्वात्।

**VV-K. 2.7.1:** अथ 'नीलं घटम् आनय' इत्यादौ नीलादेः **घटादौ अन्वयोपगमे नीलादिपदोत्तर-विभक्त्यर्थस्य** कर्मत्वादेः कुत्र अन्वयः इति **चेत्** इति। समाधत्ते - **न कुत्रापि** इति। पदसाधुत्वाय प्रयुज्यमाना विभक्तिः निरर्थिका इति भावः।

**VV-K. 3.1.1:** '*सम्भवत्यर्थसाधुत्वे पदसाधुत्वम् अन्याय्यम्*' इति अभिप्रायिकं मतान्तरम् आह - **अभेद** इत्यारभ्य **वदन्तीति** अन्तेन। 'नीलो घट' इत्यादौ 'नीलप्रतियोगिक-भेदाभाववान् घट' इति बोधात्, विशेषणविभक्तेः अभेदोऽर्थः। ननु अभेदो नामार्थयोः संसर्गतया भासते इत्युक्तम्। तत्राह - **समासस्थल एवेति**। 'नीलघट' इत्यादितो नीलप्रकारक-अभेदसंसर्गक-घटविशेष्यक-बोधोदयाद् इति भावः। ननु समासेऽपि विभक्त्यनुसन्धानसम्भवे अभेदो विभक्त्यर्थ एव अस्तु इत्यत आह - **तत्र...विभक्त्यनुसन्धानं विना** इति।

**VV-K. 3.1.2:** **तदा अप्रसिद्धिः** इति। भेदस्य केवलान्वयितया अभावाप्रसिद्धिः इत्यर्थः। **जले द्वित्वादिना** इति। घटत्व-नीलभेद-एतदुभय-प्रतियोगिकाभावस्य जले सत्त्वादित्यर्थः। नीलभेदत्वाद्यवच्छिन्न-अभावस्य विभक्त्यर्थत्वे नीलादिपदार्थानन्वय-प्रसङ्ग इति। जले नीलभेदरूप-प्रतियोगिसत्त्वेन तदभावासत्त्वात्। 'नीलं जलम्' इति प्रयोगवारणेऽपि 'नीलो घट' इत्यत्र विभक्त्यर्थे नीलभेदाभावे प्रकृत्यर्थस्य नीलस्य अन्वये निराकाङ्क्षत्वादिति भावः।

**VV-K. 3.1.3:** न च **भेदप्रतियोगिकाभाव एव विभक्त्यर्थः**। नीलपद-समभिव्याहारात् नीलभेदत्वावच्छिन्नाभाव प्रतीयते इति वाच्यमिति। नीलपद-समभिव्याहारे नीलभेदत्वावच्छिन्न-प्रतियोगित्व-सम्बन्धेन भेदविशिष्टो अभाव एव नीलभेदत्वावच्छिन्नाभाव इत्यर्थः। समाधत्ते - **पदार्थद्वय-संसर्गभानस्यैव आकाङ्क्षा-नियम्यत्वादिति** मूलम्। ननु तत्तत्पदार्थे तत्तत्पदार्थतावच्छेदकस्यापि संसर्गः। पदान्तर-समभिव्याहार गम्योऽपि तु शक्तिगम्य इति भाव। 'नीलघट' इत्यत्र नीलपदार्थस्य घटपदार्थे अभेदससर्गो भासते। स च नीलपद समभिव्याहाररूप-आकाङ्क्षानिगम्य। 'नीलो घट' इत्यत्र तु भेदाभावो नीलपदोत्तर-प्रथमार्थः। तत्र भेदः पदार्थतावच्छेदकः। अभावः पदार्थः पदजन्यप्रतीतिविशेष्य। तत्र अभावे पदार्थतावच्छेदकरूप-भेदस्य नीलभेदत्वावच्छिन्न-प्रतियोगिताकत्व-रूप संसर्गः पदान्तर-समभिव्याहार-रूप आकाङ्क्षालभ्यो न भवति, अपि तु शक्तिगम्यः। शक्तिस्तु भेदप्रतियोगिकाभावे एव। न तु नीलभेदत्वावच्छिन्न-प्रतियोगिताकत्व-सम्बन्धेन भेदविशिष्टे। अतो न भेदरूप-पदार्थतावच्छेदकस्य अभावरूप-तदर्थे नीलभेदत्वावच्छिन्न-प्रतियोगिताकत्वरूपस्य तादृशसम्बन्धस्य भानमिति। यथा 'घट' इत्यादौ घटत्वस्य घटे समवायसंसर्गः शक्त्यैव भासते न तु पदार्थान्तरसमभि-व्याहारेण। घटे घटत्वे वैशिष्ट्ये च शक्तिस्वीकारात्, तथा प्रकृतेऽपीति भावः।

**VV-K. 3.1.4:** समाधत्ते - **भेदोऽभावश्चेत्यादिना**। **विशेषणेति**। विशेषणविभक्तेः नानार्थकत्वेऽपि आख्यातार्थ-कृति-वर्त्तमानतयो इव आकाङ्क्षादि-वशाद् विशिष्टलाभ इत्यर्थः। **एतेन** = विभिन्नशक्तिस्वीकारेण। तथा च पदार्थः पदार्थेन अन्वेतीति व्युत्पत्तिभङ्गो न इति भावः।

**VV-K. 3.2.1:** **'नीलं घट' इत्यादौ अपि अभेदान्वय-बोधापत्तिरिति**। नीलपदोत्तर-द्वितीयार्थे भेदे नीलपदार्थस्य स्वनिष्ठप्रतियोगितानिरूपकतया भेदस्यापि अभावे प्रतियोगितानिरूपकतया अभावस्य च विशेषणतया घटे अन्वयसम्भवात्। नीलाभेदप्रकारक-घटविशेष्यक-बोधापत्तिरित्यर्थः। ननु अभेदप्रकारक-बोधे विरुद्धविभक्ति-राहित्यं तन्त्रमिति नियमात् न आपत्तिः इत्यत आह - **'धान्येन धनवान्'** इत्यादौ तृतीयया भेदबोधनात् अभेदप्रकारक-बोधे विरुद्धविभक्ति राहित्यस्य अनपेक्षणात् इति। **द्वितीयादिना** इति। विशेषणवाचक-पदोत्तर-द्वितीयादिना इत्यर्थः।

> या विशेष्येषु दृश्यन्ते लिङ्ग-सङ्ख्या-विभक्तयः।
> प्रायस्ता एव कर्त्तव्याः समानार्थे विशेषणे ।।

इति हर्युक्तेः, 'नीलं घट' इति वाक्यमेव न भवतीतिभावः। **द्वितीयाद्यन्त-विशेष्यवाचक**-इत्यत्र **द्वितीयादीत्यादिना** तृतीया-परिग्रहः। सा च **कर्तृ-करणयोः**

(पा.२.३.१८) इत्यादिसूत्रविहिता एव ग्राह्या। तेन 'धान्येन धनवान्' इत्यादि-उपपदविभक्तिस्थले विशेष्य-विशेषण-पदयोः असमानविभक्तिकत्वेऽपि न अभेदबोधानुपपत्तिः।

**VV-K. 3.3.1-2:** शङ्कते - **'प्रमेयो घट'** इत्यारभ्य चेत्। **सत्यम् (VV.3.5.4 - 3.6.1)** इत्यन्तेन। सर्वोऽपि प्रमेय इति प्रमेयभेदाप्रसिद्धिः इत्यर्थः। नीलत्वादिना नीलभेदाभावस्य नीलघटादौ सत्त्वादिति। नीलरूपाश्रयत्वादिना नीलभेदस्य पीतरूपाश्रयपटादौ प्रसिद्धस्य नीलघटे अभावसत्त्वात् इत्यर्थः।

**VV-K. 3.3.3:** **एतेन** इति - एतेन नीलघटपर-नीलपदघटित-**'नीलो घट'**-इति वाक्यप्रामाण्य-प्रसङ्गेन। **विशेषणतावच्छेदकीभूत-नीलत्व-प्रमेयत्वादिकमेव विशेषणविभक्त्यर्थ** इति। 'प्रमेयो घट' इत्यादौ प्रमेयवृत्ति-प्रमेयत्ववान् घटः। एवं 'कम्बुग्रीवादिमान् घट' इत्यत्रापि कम्बुग्रीवादिमद्वृत्ति-कम्बुग्रीवादिमत्त्ववान् घट इति बोधस्य न अनुपपत्तिरिति भावः। न तु विशेषणतावच्छेदक-प्रमेयत्वादेः विशेषणविभक्त्यर्थत्वे अभेदार्थकत्वप्रवादो व्याहत इत्यत आह - **नीलत्वादेः** इति। 'नीलो घट' इत्यत्र 'नीलत्ववान् घट' इति बोधः। नीलत्वं च नीलत्वावच्छिन्न-प्रतियोगिताक-भेदत्वावच्छिन्न-अभावरूपम् इति अभेदार्थकत्वप्रवादो अव्याहत इत्यर्थः। ननु नीलत्वं नीलरूपम् एव, न तु नीलभेदाभावरूपम्। अतो दोषान्तरम् आह - **नीलत्वादौ नीलत्वादिमत** इत्यादिना = 'नीलो घट' इत्यादिना। 'नीलो घट' इत्यत्र विशेषणविभक्त्यर्थे नीलत्वे नीलत्वादिमतः प्रकृत्यर्थस्य, स्वं प्रकृत्यर्थो नीलत्वादिमान्, तद्वृत्तित्वं नीलत्वे इति, एवं स्ववृत्तित्वसम्बन्धेन अन्वयो वाच्यः। स च न सम्भवति, आकाङ्क्षा विरहाद् इत्यर्थः। आकाङ्क्षा-विरहमेव उपपादयति - **यथा हीत्यादिना**। **तद्विशिष्टे** भूतले, **अधिकरणतया तदन्वयो** = घटान्वयो विरुद्धः। 'घटवान् घटवान्' इति बोधाभावात्। तथा तद्धर्मे घटे आधेयतया तद्धर्मवतो घटवतोऽन्वयोऽपि न। 'घटवति घट' इति बोधाभावात् इत्यर्थः। 'उद्देश्यतावच्छेदक-विधेययोः ऐक्ये शाब्दबोधो न जायते' इति नियमेऽपि आकाङ्क्षाविरह एव बीजं बोद्ध्यम्। तथा हि तत्प्रत्ययार्थ-नीलत्वे आधेयतासम्बन्धेन प्रकृत्यर्थस्य नीलत्वादिमतोऽपि अन्वयो न सम्भवति, आकाङ्क्षाविरहादिति भावः। अत एव **'कर्म गच्छति' इति वाक्यस्य निराकाङ्क्षता** इति। **अत एव** तद्धर्मे तद्धर्मवतः आधेयतया अन्वयविरहादेव। कर्मत्वे द्वितीयार्थे कर्मत्ववतः प्रकृत्यर्थस्य कर्मणः आधेयतया अन्वये निराकाङ्क्षता इत्यर्थः।

**VV-K. 3.4.1:** **न चैवं संसर्गतामतेऽपि अनिस्तार** इति। एवं 'नीलो घट' इत्यादौ नीलाभेदस्य नीलत्वादिरूप-पदार्थतावच्छेदकरूपत्वे उक्तस्थले नीलपटपर-

नीलपदसमभिव्याहृत-'नीलो घट' इति वाक्ये प्रामाण्यापत्तेः दुर्वारत्वात्। नीलवृत्ति नीलत्वादिरूप-अभेदसम्बन्धेन नीलपदार्थवान् घटो भवति एवेति प्रामाण्यापत्तिः दुर्वारा इत्यर्थः।

**VV-K. 3.4.2:** समाधत्ते - **स्ववृत्तिनीलत्वादेः स्वस्मिन्नेव सम्बधतोपगमेन** इति। स्व नीलपदार्थो नीलपटः। तद्वृत्तेः पटवृत्तेः नीलत्वादेः स्वस्मिन्नेव पट एव संबन्धता न घटे इति तादृशातिप्रसङ्गाभावात्। नीलपटपर-नीलपदघटित-नीलो घट इति वाक्यप्रामाण्यापत्तिरूपातिप्रसङ्गाभावाद् इत्यर्थः।

यथा काष्ठ-लोष्टादौ विद्यमानोऽपि लौहित्यस्य स्वाश्रयसंयोगो न सम्बन्धः किन्तु स्फटिकादौ एव 'लोहितः स्फटिकः' इति, विशिष्टबुद्धि-नियामकत्वात्। तथा नीलपटपर-नीलपदघटितात् 'नीलो घट' इति वाक्यात् घटे नीलत्वविशिष्टबुद्ध्यनुदयेन स्ववृत्तिनीलत्वादेः घटे पटसम्बधता न स्वीक्रियते, किन्तु पटे एव स्वीक्रियते। 'नीलपट' इति विशिष्टबुद्ध्युदयादिति भावः।

**VV-K. 3.5.1:** **वस्तुतस्तु** इति। 'नीलो घट' इत्यत्र नीलघटव्यक्तिगत-तद्व्यक्तित्वावच्छिन्न-भेदाभाव एव, तत्तद्व्यक्तीनां नीलादिरूपाश्रयव्यक्तीनाम्, स्वस्मिन् घटे सम्बन्धः। एवं नीलपटपर-नीलपद-समभिव्याहृत-'नीलो घट'-इति वाक्येऽपि नीलपटपर-तन्नीलव्यक्तित्वावच्छिन्न-भेदाभावो घटे नास्ति इति नैतद्वाक्यप्रामाण्यम्। **अन्यदेतदिति**। यथा 'भूतलं घटवद्' इत्यत्र भूतले घटस्य घटप्रतियोगिकः संयोगसम्बन्धः। तत्र सम्बन्धतावच्छेदकं संयोगत्वं, घटप्रतियोगिक-संयोगत्वं वा इति विचारो न प्रकृतानुकूलः। उभयथापि विशिष्टबुद्धिनियामकत्व-रूपसम्बन्धत्वाक्षतेः। तथा इहापि इति भावः।

**VV-K. 3.5.2:** **न चैवं विशेषणविभक्तेः अभेदार्थकत्वमतेऽपि तत्तद्व्यक्तित्वावच्छिन्नाभेद एव विभक्त्यर्थो वक्तव्य इति वाच्यमिति**। एवं तत्तद्व्यक्तित्वावच्छिन्नाभेदस्य सम्बन्धत्वस्वीकारे, *सम्भवत्यर्थसाधुत्वे पदसाधुत्वम् अन्याय्यम्* इति न्यायेन तत्तद्व्यक्तित्वावच्छिन्नाभेद एव विशेषणविभक्त्यर्थोऽस्तु। तेनैव नीलपटपर-नीलपद-समभिव्याहृत-'नीलो घट'-इति वाक्यप्रामाण्यवारणं सम्भवति इति भावः। समाधत्ते - **तथा सत्यपूर्वव्यक्तिनिष्ठ-तत्तद्व्यक्तित्वस्येति**। 'नीलो घटो भविष्यति' इत्यत्र तत्तद्व्यक्तित्वावच्छिन्न-प्रतियोगिताको यो भेदः, तादृशभेदत्वावच्छिन्न-प्रतियोगिताकोऽभावो नीलपदोत्तर प्रथमार्थः। तदेकदेशे तद्व्यक्तित्वे प्रकृत्यर्थस्य नीलरूपवतोऽन्वयः। तथा च अपूर्वा भविष्यतीया नीलरूपाश्रयव्यक्तिः, तन्निष्ठं यत्तत्तद्व्यक्तित्वं **तस्य कथंचिदपि भानासम्भवेन** = सामान्यलक्षणारूपभासकविरहाद् भानासम्भवेन, **तदवच्छिन्नाभेदाभावे** = अपूर्व-व्यक्तित्वावच्छिन्न-प्रतियोगिताकभेदस्याभावे, **शक्तिग्रहासम्भवेन अपूर्वव्यक्तीनाम्**

**अभेदान्वयानुपपत्तेः।** अभावज्ञाने हि प्रतियोगिज्ञानं कारणमिति प्रतियोगिज्ञानाभावात् शक्तिग्रहासम्भवाद् अपूर्वव्यक्तीनाम् अभेदान्वयबोधानुपपत्तिरित्यर्थः। अभेदस्य संसर्गतामतेऽपि न एष दोष इत्याह - **संसर्गज्ञानस्य** इति। **अनुपपत्त्यभावादिति।** नीलपटपर-नीलपदघटितस्य 'नीलो घट' इति वाक्यस्य प्रामाण्याभावादित्यर्थः। नीलपटव्यक्तित्वावच्छिन्नाभेदो नीलपटे एव न तु घटे इति न प्रामाण्यापत्तिः इति भावः।

**VV-K. 3.5.3:** पुनः शङ्कते - **न च विभक्त्यर्थेऽपि भेदे** इति। भेदः अभावश्च प्रथमार्थः। तत्र नीलत्वादिना नीलत्वादिप्रकारेण भासमानानां तत्तन्नील-व्यक्तीनां तत्तद्व्यक्तित्वावच्छिन्न-प्रतियोगिताकत्व-सम्बन्धेनैव भेदेऽन्वयः। **एवं तादृशभेदानामपि** = नीलादिव्यक्तिभेदानामपि तत्तन्नीलादिव्यक्ति-भेदत्वावच्छिन्नाप्रतियोगिताकत्व-संबन्धेन अभावेऽन्वयः। **तावतैव** = एवम् अन्वयाङ्गीकारेणैव **तत्तद्व्यक्तित्वावच्छिन्नाभेदलाभ** इति न काप्यनुपपत्तिः। न नीलपटपर-'नीलो घट'-इति वाक्यस्य प्रामाण्यापत्तिः। नीलपटव्यक्तित्वावच्छिन्न-भेदाभावस्य घटे अभावादिति भावः।

**VV-K. 3.5.4:** समाधत्ते - **विशेषणतावच्छेदकावच्छिन्नाया एव प्रतियोगिताया** इति। विशेषणतावच्छेदकं नीलत्वं न तु नीलव्यक्तित्वम्। तथा च अभेदस्य विभक्त्यर्थतामते नीलपटपर-नीलपद-घटितस्य 'नीलो घट' इति वाक्यस्य प्रामाण्यापत्तिः। नीलत्वावच्छिन्न-प्रतियोगितायाश्च स्वरूपतया अभावे भेदे प्रतियोगिनो नीलस्य सम्बन्धतया भानात्। यद्वा **सम्बन्धतया** = सम्बन्धघटकतया भानात्। नीलत्वावच्छिन्नभेदाभावस्य घटे सत्त्वात् नीलपटपर-नीलपद-घटितवाक्यस्य प्रामाण्यापत्तिः। अन्यथा विशेषणतावच्छेदक-नीलत्वावच्छिन्न-प्रतियोगितायाः सम्बन्धत्वाद्यघटकत्वे विशिष्टस्य वैशिष्ट्यमिति रीत्या बोधे हि विशेषणतावच्छेदक-प्रकारक-निर्णयस्य कारणत्वाद् इति भावः। ननु विशेष्ये विशेषणमिति रीत्यैव अभावस्थले बोधः। यावद्विशेषणोपस्थितिजन्ये तस्मिन् बोधे न विशेषणतावच्छेदकनिर्णयः कारणम्। अत आह - *प्रतियोगिविशेषिताभाव* इति। *न त्विति।*

**VV-K. 3.6.1:** सिद्धान्ती समाधत्ते - **अभेदस्तादात्म्यम्** इत्यादिना। **स्वसामानाधिकरण्य-स्वप्रतियोगिवृत्तित्व-उभयसम्बन्धेन भेदविशिष्टं यत् तदन्यत्वमिति।** **स्वं** = नीलघटव्यक्तिभेदः, **तत्सामानाधिकरण्ये** द्रव्यत्वे, अथ च **स्वं** = नीलघटव्यक्तिभेदः, **तत्प्रतियोगि**-नीलघटव्यक्तिः **तद्वृत्तित्वं** द्रव्यत्वे इत्युभय-सम्बन्धेन **भेदविशिष्टं** द्रव्यत्वमेव **तदन्यत्वं** तद्व्यक्तित्वे इत्यर्थः। स्वप्रतियोगिवृत्तित्वस्यैव सम्बन्धत्वे, **स्वं** नीलव्यक्तिभेदः तत्प्रतियोगिनी नीलव्यक्तिः,

तद्वृत्तित्व तत्तद्व्यक्तित्वे इत्यनेन सम्बन्धेन भेदविशिष्टमेव तत्तद्व्यक्तित्वम्। अतो द्वितीयसम्बन्धनिवेश। तथा च एवं नीलव्यक्तिभेदः **तत्सामानाधिकरण्यं** तत्तद्व्यक्तित्वे नास्ति। नीलव्यक्तिभेदवति पटे तत्तद्व्यक्तित्वस्य अभावात्। स्वसामानाधिकरण्यस्यैव सम्बन्धत्वे स्वपदेन पटादिभेदः तत्सामानाधिकरण्यं तत्तद्व्यक्तित्वे इति भेदविशिष्टमेव भवतीति स्वप्रतियोगिवृत्तित्वनिवेशः। तथा एवं पटादिभेदः तत्प्रतियोगि पटादि तद्वृत्तित्वं तद्व्यक्तित्वे नास्तीत्यर्थः। **अपूर्वव्यक्तिनिष्ठस्य तादृशधर्मस्य** इति। 'नीलो घटो भविष्यति' इत्यत्र भाविव्यक्तिनिष्ठस्य तद्व्यक्तित्वस्य विशिष्य ज्ञातुम् अशक्यत्वेऽपि सामान्यलक्षणया अर्थसम्भवात्। तद्व्यक्तित्वस्य एकमात्रवृत्तितया विशेषरूपेण ज्ञातुमशक्यत्वेऽपि एकमात्रवृत्तिधर्मत्वादिना सामान्यलक्षण-प्रत्यासत्त्या सुग्रहत्वमेव। एकव्यक्तिमात्र-वृत्तिधर्माः एतद्व्यक्तित्वादिरूपाः सर्वेषां तेषां एकव्यक्तिमात्रवृत्तिधर्मत्वेन ज्ञानसम्भवात् इत्यर्थः।

**VV-K. 3.7.1: अभेदस्य संसर्गतामतेऽपि एतादृशानुगताभेदस्यैव तथात्वम् उचितमिति।** **एतादृशानुगताभेदस्यैव** = तादात्म्यस्यैव। **तथात्वम्** = संसर्गत्वम् उचितमित्यर्थः। **संसर्गतामतेऽपि** इत्यपिना प्रकारतामते तादात्म्यस्य विभक्त्यर्थत्वम् उक्तमेवेति सूचितम्। अभेदस्य संसर्गतामते दूषणमाह - **तत्तद्व्यक्तित्वावच्छिन्न-भेदाभावकूटस्य विशिष्य तथात्वे 'घटो न नीलः' इति वाक्यजन्यबोधे प्रतियोग्यभावान्वयौ तुल्ययोगक्षेमौ इति न्यायेन तादृशाननुगतसम्बन्धावच्छिन्न-प्रतियोगिताकाननुगता एव अभावा भासेरन्निति।** **तथात्वे** = संसर्गत्वे। अत्रायमर्थः - पीतघटे 'घटो न नील' इति वाक्यं प्रयुज्यते। तत्र नञ्विनिर्मोकदशायां 'घटो नील' इत्यत्र येन सम्बन्धेन नीलपदार्थो घटे प्रतीयते तेनैव सम्बन्धेन नीलप्रतियोगिकाभावः 'घटो न नील' इति वाक्यात् प्रत्येतव्य इत्येव हि प्रतियोग्यभावान्वययोस्तुल्ययोगक्षेमता नाम। तथा च 'घटो नील' इत्यत्र घटे नीलस्य अभेदः संसर्गः। स च तन्नीलव्यक्तित्वावच्छिन्न-प्रतियोगिक-भेदत्वावच्छिन्नाभावः तन्नीलव्यक्ति-निष्ठः। एवम् अनन्तासु नीलरूपाश्रयव्यक्तिषु तत्तद्व्यक्तिभेदत्वावच्छिन्न-प्रतियोगिताकानन्ताभावाः सम्बन्धतया वक्तव्याः। ते एव च सम्बन्धाः पीतघटे 'घटो न नील' इत्यत्र नीलाभावप्रतियोगितावच्छेदक-सम्बन्धतया भासन्ते इति तादृशाननुगत-सम्बन्धावच्छिन्न-प्रतियोगिताकाननुगता एव अभावा भासेरन् इत्यर्थः। ननु पीतघटे 'घटो न नील' इत्यत्र नीलव्यक्तित्वावच्छिन्न-प्रतियोगिताक-भेदत्वावच्छिन्न-प्रतियोगिताकाभाव-रूप-एक-सम्बन्धावच्छिन्न-प्रतियोगिताकैक एव नीलाभावः प्रतीयतामिति आशङ्काम् अपनुदति **न तु नीलादिवृत्तिः एको अभाव** इति। तत्र हेतुमाह - **तथा सति।** एक-अभावभाने सति। **यत्किञ्चित्तादृशा-भावतात्पर्येण प्रयुक्तस्य 'नीलेऽपि न**

नील' इति वाक्यस्य प्रामाण्यं स्यादिति। तथा सति नीलनिष्ठ-एतद्व्यक्तिभेदाभाव-संसर्गेण नीलाभावबोध-तात्पर्येण इत्यर्थः। अत्र अयमाशयः यथा पीतघटे 'घटो न नील' इत्यत्र यत्किञ्चिन्नीलव्यक्तित्वावच्छिन्नप्रतियोगिताक भेदत्वावच्छिन्न-प्रतियोगिताक-अभावसम्बन्धावच्छिन्न-प्रतियोगिताक-अभाव प्रतीयते। तथा यत्किञ्चिन्नीलेऽपि एतत्सम्बन्धावच्छिन्नप्रतियोगिताक नीलाभावसत्त्वात् 'नीलेऽपि न नील' इत्यस्य प्रामाण्यं स्यात् इत्यर्थः। यत्किञ्चित्तादृशाभावतात्पर्येण एतद्व्यक्तित्वावच्छिन्नभेदाभावसम्बन्धेन नीलम् एतन्नीलवद्व्यक्तौ एवास्ति। एतद्व्यक्तित्वावच्छिन्न-भेदाभाव-सम्बन्धावच्छिन्न-प्रतियोगिताक-नीलाभाव तन्नील-व्यक्तिभिन्ने सर्वत्र इति नीलान्तरव्यक्तौ अपि नीलाभावो अस्ति इति 'नीलेऽपि न नील' इति प्रयोगप्रामाण्यं स्यात् ।

**VV-K. 3.7.2:** **विशेषणविभक्ते अभेदार्थकत्वे 'घटो न नील' इत्यादौ। नञा** तु घटविशेष्यकः तादात्मीय-स्वरूपसम्बन्धावच्छिन्न-प्रतियोगिताक-तादात्म्याभाव-प्रकारकबोधो जन्यते। न तु नीलादिप्रतियोगिताकः तादात्म्यसम्बन्धावच्छिन्न-प्रतियोगिताकः अभावः। येन नञो भेदबोधकत्वं स्यात् तादात्म्यसम्बन्धावच्छिन्न-प्रतियोगिताकाभावत्वस्यैव भेदलक्षणत्वादिति भावः। तादात्म्यं संसर्ग इति मते तु नैष दोषः। 'घटो नील' इत्यत्र नीलप्रकारको घटविशेष्यकस्तादात्म्यसंसर्गको बोधः। नञा तु तादात्म्यसंसर्गावच्छिन्न-प्रतियोगिताको नीलाभावो घटे प्रत्याय्यते इति एतन्मते नञो भेदबोधकत्वम् अव्याहतमेव इति।

ननु नञ्विनिर्मोके 'नीलो घट' इत्यत्र तादात्म्य प्रकारतया भासते। नञ्समभिव्याहारे 'घटो न नील' इत्यत्र तादात्म्यं संसर्गतया भासतामिति नञो भेदार्थकत्वं तादात्म्यस्य प्रकारतावादिमतेऽपि न अनुपपन्नम् इत्याह - **यादृशसमभिव्याहारस्थल** इत्यादि। 'नीलो घट' इत्यत्र। **येन सम्बन्धेन** = तादात्मीयस्वरूपसम्बन्धेन । **यत्र धर्मिणि** = घटे। **येन रूपेण** = नीलतादात्म्यत्वेन रूपेण। **यद्वत्त्वम्** = नीलतादात्म्यवत्त्वम्। तत्सत्त्वे प्रतीयते। **तादृशस्थले** = 'घटो न नील' इत्यादिस्थले। **नञा तत्र धर्मिणि** = घटरूपे धर्मिणि। तादृशसम्बन्धावच्छिन्न-तादात्मीय-स्वरूपसम्बन्धावच्छिन्न-तादृशधर्मावच्छिन्न-नील-तादात्म्यवत्त्वावच्छिन्न-प्रतियोगिताकाभावबोधस्य **व्युत्पत्तिसिद्धत्वात्** = नियम-सिद्धत्वात् इति। नञा नीलतादात्म्याभाव एव बोध्यते। न तु तादात्म्यसम्बन्धावच्छिन्न-प्रतियोगिताक-नीलाभाव इति नञो न भेदबोधकत्वं तादात्म्यप्रकारतावदिमते इति भावः।

**VV-K. 3.7.3:** ननु व्यासस्थले नञो न भेदबोधकत्वम् इत्युक्त्या समासेऽपि तन्नास्ति इत्यत आह - **'अनीलं घटमानय' इत्यादौ घटपद-**

**सामानाधिकरण्यानुरोधेन** इति। समानविभक्तिकयोः पदयोः **अभेदबोधकत्वं** सामानाधिकरण्यं तन्नियमेन इत्यर्थः। **नीलभिन्नपरतया** = नीलभिन्नबोधतात्पर्यकतया। नञो भेदवति लक्षणायाः स्वीकारात्। तथा च नीलपदार्थस्य एकदेशे भेदेऽन्वयः, भेदवतो घटेऽन्वयः। ननु 'अनीलं घटम्' इत्यत्र नीलपदार्थः नञर्थे भेदे, अभेदश्च घटे अन्वेतु। व्यासवत्समासेऽपि निपातार्थत्वेन भेदान्वयस्य इष्टत्वादिति नञो न भेदवति लक्षणा इति चेत् ? न। तथा सति अनीलमिति द्वितीयानुपपत्तेः।

**VV-K. 3.7.4:** **इदन्तु अत्र अवधेयम्।** अभेदस्य प्रकारतामतेऽपि 'घटो न नील' इत्यादिवाक्यस्य नीलाभेदाभाव-बोधकत्वेऽपि तृतीय-अभावस्य प्रतियोगि-स्वरूपतया नञो भेदबोधकत्वं न अनुपपन्नम्। परन्तु भेदत्वप्रकारेण बोधो भवति न वा इत्यन्यदेतत् इति। **नीलाभेदाभावबोधकत्वेऽपि** इति विरोधार्थकेनापि शब्देन अभेदाभावबोधनेऽपि न भेदबोधकत्वं नञ इति सूचितम्। तथापि द्वितीयाभावस्य प्रतियोगिरूपत्वेन अभेदाभावो नाम भेदाभावाभावः, स च भेद एवेति भेदबोधकत्वं नञः सूपपन्नमित्यर्थः। तादात्म्यसम्बन्धावच्छिन्न-प्रतियोगिताक-अभावत्वं भेदत्वम्। भेदाभाव-प्रतियोगिताक-अभावत्वं भेदाभावाभावत्वम् इति प्रकारभेदेऽपि धर्म एक एव। अत्रेदं चिन्त्यते अभेदो न भेदाभावः किन्तु अभेदः तादात्म्यं, तदभावो भावप्रतियोगिकत्वाद् अतिरिक्तोऽत्यन्ताभाव एव, न भेदरूप इति नञो भेदबोधकत्वम् एतन्मते दुरुपपादमेव इति। **इदमत्र अवधेयम्** इत्यारभ्य **इत्यन्यदेतत्** इत्यन्तो पाठोऽसार्वत्रिकः।

**VV-K. 3.7.5:** इदं तु तत्त्वमिति। तत्र अभेदे वृत्तिकल्पनं गौरवमिति।

**VV-K. 3.7.6:** न च **अभेदे** यत्रेति। एकत्वादिसङ्ख्यावाचिकाया **विशेषणविभक्तेः अभेदे शक्तिभ्रमः स्वारसिकलक्षणाग्रहो वा।** भेदस्य संसर्गतामते विभक्त्यर्थतामते च तादृशसमभिव्याहारज्ञानस्य प्रथमान्तनीलपद-प्रथमान्तघटपद-समभिव्याहारज्ञानस्य द्विविधबोधे अभेद-संसर्गक-अभेदप्रकारक-बोधे गुरुभूतं हेतुताद्वयम् अभेदस्य संसर्गतामतेऽस्ति। प्रकारतामते तु अभेदप्रकारक-एकविध-बोधाङ्गीकारात् न गौरवमिति।

**VV-K. 3.7.7:** स्थलान्तरे प्रकारान्तरेण संसर्गतामते गौरवमाह - **एवं तादृशसमभिव्याहारज्ञानघटितसामग्र्याः भिन्नभिन्नयोग्यताज्ञानघटिततया द्वैविध्येन भिन्नविषयकप्रत्यक्षादिकं प्रति तादृशशाब्दबोधसामग्री-प्रतिबन्धकताया अपि आधिक्यमिति।** संसर्गतावादिमते शक्तिभ्रमाधीने स्वारसिकलक्षणाधीने अभेदप्रकारकबोधे अभेदसंसर्गकबोधे च एकपदार्थे अपरपदार्थवत्त्व-संसर्गवत्त्व-रूपयोग्यताज्ञानघटित प्रथमान्तनीलपद-प्रथमान्तघटपद-समभिव्याहारघटित-शाब्द-सामग्रीभिन्नविषयक-प्रत्यक्षं प्रति प्रतिबन्धकताधिक्यम्। प्रकारतामते एकविधशाब्द-

सामग्री प्रतिबन्धिका इति न गौरवम्। समाधत्ते - अभेदस्य संसर्गतावादिना उक्तस्थलेऽपि तत्संसर्गकबोधस्यैव उपगमादिति। उक्तस्थलेऽपि = शक्तिभ्रम-स्वारसिक-लक्षणाभ्याम् अभेदप्रकारकबोधस्थलेऽपि। अभेदसंसर्गकबोधस्यैव उपगमात् शक्तभ्रमेण स्वारसिकलक्षणया च उपस्थापितस्यापि अभेदस्य संसर्गतया भानम् उपगम्यते। अत एव नामार्थ-धात्वर्थयोः साक्षाद् भेदसम्बन्धेन अन्वयबोधो न सम्भवति इति व्युत्पत्तौ साक्षात्पददानेन 'ग्रामं गच्छति' इत्यादौ ग्रामस्य गमने साक्षादन्वयो नास्ति, किन्तु विभक्त्यर्थ-कर्मत्वद्वारा भवति। तथा च ग्रामनिष्ठकर्मतानिरूपकत्वसम्बन्धेन ग्रामस्य गमने अन्वयः स्वीक्रियते इति द्वितीयार्थोऽपि कर्मत्वसंसर्गघटकतया संसर्गो भवतीति भावः। तेन संसर्गतामतेऽपि एकविधबोधाङ्गीकारात् न दोषावकाश इति।

**VV-K. 4.1.1- 3:** ननु स्वसमानविभक्तिकेन स्वाव्यवहितपूर्ववर्त्तिना च पदेनोपस्थापितस्यैव अर्थस्य अभेदः संसर्गतया भासते इति (cf. VV - 2.1.1) व्यास-समास-भेदेन निरुक्ताकाङ्क्षयोः एकस्यापि अभावात् कथं 'स्तोकं पचति' इत्यादौ अभेदान्वयबोध इत्यतो नामार्थ-धात्वर्थयोः अभेदान्वयबोधम् आकाङ्क्षान्तरेण उपपादयति - स्तोकं पचति इत्यादिना। कर्मत्वातिदेशात् = कर्मत्वोपचारात्। क्रियापदस्य तत्र सार्थकप्रत्ययान्त-धातूपस्थाप्य अर्थपरत्वात् इति। तत्र "क्रियाविशेषणानां कर्मत्वम्" इत्यनुशासने क्रियापदं सार्थकप्रत्ययान्त-धातूपस्थाप्यार्थपरम्। सार्थकप्रत्ययान्तधातूपस्थाप्यक्रियायाः तद्विशेषणानां कर्मत्वमिति अनुशासनार्थः।

प्रकृते 'स्तोकः पाक' इत्यत्र च घञो निरर्थकतया सार्थकप्रत्ययान्त-धातूपस्थाप्यत्वाभावात् न पाकक्रियाविशेषणे स्तोके कर्मत्वसंज्ञाप्रयुक्ता द्वितीया इति भावः।

वर्त्तमानत्वादिविवक्षास्थल इव अर्थबोधप्रयोजिकाकाङ्क्षाशालित्वेन एव तदविवक्षास्थलेऽपि भावाख्यातस्य अर्थवत्त्वादिति। 'स्तोकं स्थीयते' इत्यादौ वर्त्तमानत्वविवक्षायां तात्पर्ये सति स्तोकावर्त्तमाना स्थितिः इत्यर्थबोधप्रयोजिका आत्मनेपदपूर्व-यक्पूर्व-धातुत्वरूपाकाङ्क्षा। यद्वा धातूत्तर-यगुत्तरात्मनेपदत्व-रूपाकाङ्क्षाशालित्वमस्ति यथा, तथा वर्त्तमानत्वाविवक्षायामपि। 'स्तोकं स्थीयते' इत्यादिभावप्रत्ययस्थले इयमेव अर्थबोधप्रयोजिकाकाङ्क्षा अस्तीति आकाङ्क्षाकत्त्वमेव पारिभाषिकार्थवत्त्वम्। तच्च स्थीयते इति भावप्रत्यये ते-रूपे अस्ति इति सार्थकप्रत्ययान्तधातूपस्थाप्यक्रियाया विशेषणे स्तोके द्वितीया उपपद्यते इत्यर्थः। आकाङ्क्षासत्त्वेऽपि विवक्षारूपतात्पर्याभावात् न वर्त्तमानत्वबोधः।

**VV-K. 4.2.1:** केचित्तु इति। तत्र पाकादौ इति। तत्र घञन्तस्थले। प्रकृत्येकदेशार्थेऽपि इति। प्रकृत्यर्थे इव प्रत्ययान्तपाकादि-स्थलेऽपि। अनुभवबलात्

प्रकृत्येकदेशार्थे प्रत्ययार्थान्वय इति। *प्रकृति-तदेकदेशान्यतरान्वित-स्वार्थबोधकत्वं प्रत्ययानाम्* इति व्युत्पत्तिः कल्पनीया इति भावः।

**VV-K. 4.2.2:** ननु 'पचन्तं पश्य' इत्यादौ **एकत्र** शत्रर्थे कर्तरि विशेषणत्वेन अन्वितस्य धात्वर्थपाकस्य **अन्यत्र** द्वितीयार्थ-कर्मत्वादौ **विशेषणत्वेन** अन्वयस्य **अव्युत्पन्नत्वेन** पाकादौ द्वितीयार्थ-कर्मत्वान्वय-वारणेऽपि द्वितीयार्थसङ्ख्याया विशेष्यतया पाकादौ अन्वयमापादयति। **तथापि** इति। एको यः पाकः तदनुकूलकृतिमन्तं पश्य इत्यर्थः। इष्टापत्तिं वारयति - **यत्र पाककर्त्रादेः द्वित्वं बाधितं** पाकादेः तद्द्वित्वादिकम् अबाधितं तत्र 'पचन्तौ पचमानौ वा पश्य' इति अतिप्रसङ्गस्य दुर्वारत्वादित्यर्थः। **धातूपस्थाप्यार्थे** इति । 'पचन्तं पश्य' इत्यादौ धातूपस्थाप्येऽर्थे पाके 'पचन्तम्' इति द्वितीयादिरूप-सुबर्थैकत्वसङ्ख्यादिबोधं प्रति पचादितत्तद्धातूत्तर-शत्रादिप्रत्ययधर्मिक यत्किञ्चिदर्थपरत्वज्ञानं कर्त्रादिरूपार्थ-तात्पर्यकत्वज्ञानं तत्प्रतिबन्धकमिति। 'पचन्तम्' इत्यादौ पाके द्वितीयार्थसङ्ख्या-अन्वयापत्तिवारणं सम्भवति। 'पाकं पश्य' इत्यादौ च धातूपस्थाप्ये पाके पाकमिति द्वितीयार्थैकत्वान्वयो भवति। पच-धातूत्तर-घञ्प्रत्यय-धर्मिक-किञ्चिदर्थपरत्व-ज्ञानरूप-प्रतिबन्धका-भावात् घञो निरर्थकत्वाद् इति दोषोद्धारेऽपि प्रतिबध्य-प्रतिबन्धके गौरवमेव दोष इत्यर्थः।

**VV-K. 4.2.3:** **विशेषणविभक्ति** इति। **शोभनमिति**। प्रथमा विशेषणविभक्तिः प्रथमात्वात्, तत्सजातीया पचनमिति प्रथमाविभक्तिः, तत्प्रकृतिः पचनमिति ल्युडन्तं न तु पच इति धातुभागः। तथा च पचनमिति ल्युडन्त-प्रकृत्यनुपस्थाप्ये पाके शोभनान्वयो न सम्भवति इति पचनमिति ल्युडन्तस्य शक्तिः अवश्यमभ्युपेया इति भावः।

**VV-K. 4.2.4:** **प्रकृत्येकदेशसाधारणेति**। *प्रत्ययविधौ उद्देश्यत्वं हि प्रकृतित्वम्*। तच्च पचनमित्यत्र प्रत्ययभाग इव धातुभागेऽपि अस्ति। 'शोभनं पचनम्' इत्यत्र विशेषणविभक्ति-सजातीयविभक्ति-प्रकृतिधातूपस्थाप्ये पाके शोभनान्वयोपपादनेऽपि 'पचन्ति अस्मिन्' इति अधिकरणार्थ-ल्युडन्त-पचनपदस्थलेऽपि 'शोभनं पचनम्' इत्यत्रापि पाके शोभनान्वयः स्यात् न तु अधिकरण इत्यर्थः। **कस्यचित्प्रतिबन्धकतां कल्पयित्वा तद्वारणे च गौरवादिति**। धातूपस्थाप्यार्थे प्रातिपदिकार्थाभेदान्वयबोधं प्रति तत्तद्धातूत्तर-प्रत्ययधर्मिक-किञ्चिदर्थपरत्वज्ञानं प्रतिबन्धकम्। प्रकृते च पचधात्वर्थे पाके शोभनादौ अभेदान्वयबोधं प्रति पचधातूत्तर-ल्युट्प्रत्ययधर्मिक-अधिकरणार्थपरत्व-ज्ञानं प्रतिबन्धकमिति न धात्वर्थपाके शोभनान्वयः, किन्तु अधिकरण इति पचनमिति भावप्रत्ययविशिष्टे शक्तिकल्पनम् अनर्थकम् इति भावः। अत्र प्रतिबध्य-

प्रतिबन्धकभावकल्पने गौरवं दोष इति प्रतिबध्य-प्रतिबन्धकभावो न कल्पनीयः। तथा च अधिकरणल्युडन्त-प्रकृत्येकदेशार्थे पाके शोभनान्वयवारणाय प्रकृतित्वं न प्रकृत्येकदेशसाधारणम्। यतः प्रत्ययविधौ उद्देश्यत्वं प्रकृतित्वम्। उद्देश्यत्वं च पचनमित्यादौ धातुप्रत्ययसमुदाये पर्याप्तमिति 'शोभनं पचनम्' इति भाव-ल्युडन्तस्थले शोभनाभेदान्वयानुपपत्तिरिति। ल्युट्घञाद्यजन्तसमुदाये शक्तिः आवश्यकी इति भावः।

**VV-K. 4.3.1-2:** न चैवम् उपकुम्भार्धपिप्पल्यादि इति। एवं प्रकृतित्वस्य प्रकृत्येकदेशवृत्तित्वे। ननु यदर्थयोः अन्वयः तत्पदयोः अव्यवहितपूर्वापरीभावो नास्ति, कुम्भपदेन व्यवधानाद् इत्यत आकाङ्क्षान्तरम् आह - **तादृशसमस्तपद-प्रत्ययपदयोः अव्यवहितपूर्वापरी-भावोऽपि आकाङ्क्षा इति।** 'उपकुम्भं पश्य' इत्यादौ कुम्भसमीपवर्तिनी कर्मता इति बोधं प्रति उपकुम्भ-पदाव्यवहितोत्तर-द्वितीयापदजन्योपस्थितित्वेन कारणता इत्यर्थः। ननु प्रत्ययानां प्रकृत्यर्थान्वित-स्वार्थबोधकत्वम् इति भङ्गः, उपपदस्य द्वितीयाप्रकृतित्वाभावात्। प्रत्ययः (पा.३.१.१) परश्च (पा. ३.१.२) इति सूत्रेण 'बहुंजादिभिन्नप्रत्यय-अव्यवहितपूर्वपदत्वं प्रकृतित्वम्' इति प्रतिपादनादिति चेत् ? न। 'उपकुम्भम्' इत्यत्र समस्तपदात् द्वितीया विहिता, न तु केवल-कुम्भपदादिति प्रत्ययाव्यवहितपूर्ववृत्तिपदत्वरूपं प्रकृतित्वं समस्तपदेऽस्ति इति न प्रत्ययानाम् इत्युक्तव्युत्पत्तिविरोध इति।

**VV-K. 4.3.3:** वस्तुतस्तु प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थ-बोधकत्वमिति व्युत्पत्तिः आकाङ्क्षारूपे पर्यवस्यतीति न उक्तानुपपत्तिरिति। **तादृशसमस्तपद-पदान्तरयोश्चेति** = उपकुम्भ-शोभनम् इति पदयोः चेत्यर्थः। **तथासति अतिप्रसङ्ग-विरहादिति। तथा सति** उपकुम्भ-पदाव्यवहितोत्तर-अम्-पदत्वमेव शोभन-पदसमभिव्याहृत-उपकुम्भ-पदत्वरूपाकाङ्क्षयोः नियामकत्वस्वीकारे सति। उपकुम्भम् अर्धपिप्पल्लीत्यादौ कुम्भसमीपे पिप्पल्यर्धादौ द्वितीयार्थान्वयस्य शोभनान्वयस्य च न अनुपपत्तिरितिभावः।

ननु घञन्ते शक्तिर्मास्तु इत्याशङ्क्य निराचष्टे। **धात्वर्थपाकादौ प्रत्ययार्थान्वयबोध** इति। यथा उपकुम्भम् अर्धपिप्पलीत्यादौ प्रकृत्येकदेशार्थे समीप-अर्धादौ विभक्ति-शोभनादिरूप-प्रातिपदिकान्तरार्थयोः अन्वयः स्वीकृतः तथा मयापि 'पाकं पचनं च पश्य' इत्यत्र धात्वर्थे पाके द्वितीयारूप-प्रत्ययार्थे कर्मत्वान्वयबोधोपपत्तये घञन्त-/ल्युडन्त-अम्-पदयोः अव्यवहितपूर्वापरीभाव आकाङ्क्षा। एवं 'स्तोकं पाकं पश्य' इत्यत्र धात्वर्थे पाके स्तोकाभेदान्वयबोधे समानविभक्तिक-स्तोक-पाक-पदसमभिव्याहार आकाङ्क्षा। एवं भाव-ल्युटि 'शोभनं

पचनम्' इत्यत्र धात्वर्थे पाकादौ शोभन रूपप्रातिपदिकान्तरार्थ-अभेदान्वयार्थ ल्युडन्त-पचनपद शोभनपदयो समानविभक्तिकयो अव्यवहित-पूर्वापरीभाव आकाङ्क्षा स्वीक्रियते। एवञ्च घञन्त ल्युडन्तसमुदाये शक्ति न कल्पनीया इत्यत आह - **दर्शितातिप्रसङ्गस्य दुर्वारतया इति।** अधिकरणार्थक-ल्युडन्त पचनपद-स्थलेऽपि 'शोभन पचनम्' इत्यत्र धात्वर्थपाकादौ द्वितीयार्थकर्मैकत्वान्वयस्य शोभनान्वयस्य च दुर्वारतया इत्यर्थ। न तत्सम्भवः। ल्युड्घञाद्यन्त समुदाय-द्वितीयादिरूप-प्रातिपदिकाद्युक्त समभिव्याहारयो न आकाङ्क्षात्वसम्भवः। शोभन-अभेदान्वयेन धात्वर्थपाके अन्वयविरहात्। उक्ताङ्क्षाकारणत्वे व्यभिचारात्। तथा च घञाद्यन्तसमुदाये शक्तिः आवश्यकीति भावः।

**VV-K. 4.4.1:** शङ्कते - **अथेति। घञाद्यन्तसमुदायस्य** सार्थकत्वे संयोगविभागादिपदाना नैमित्तिकसंज्ञात्वनिराकरण **दीधितिकृतां** विरुद्ध्येत इत्यन्वयः। **दीधितिमते** हि घञाद्यन्तसमुदायस्य संयोग-विभागादिपदस्य संयोगत्वजाति-विभागत्वजाति-विशिष्टवाचकत्व व्युत्पाद्य घञोऽसत्त्वेऽपि 'गच्छति' 'विभजते' इत्यादौ क्लृप्तया संयोगत्वजाति-विभागत्वजाति-विशिष्टे वा धातुशक्त्यैव संयोग-विभागादि-घञाद्यन्तेऽपि संयोगत्व-विभागत्वजाति-विशिष्टबोध-निर्वाहे घञन्ते पदे शक्तिकल्पनम् अनर्थकमिति घञादिभावप्रत्ययो निरर्थक इति युक्त्या संयोगत्वादि-विशिष्टवाचकत्वं प्रसाध्य संयोग-विभागादि-पदानां घञन्तानां **नैमित्तिकसंज्ञात्वनिराकरणं** संयोगत्वादिजात्यवच्छिन्न-वाचकत्वरूपस्य नैमित्तिक-संज्ञात्वस्य निराकरणं विरुद्ध्येत। धातुमात्रस्य संयोगत्वरूप-जात्यवच्छिन्न-वाचकत्वस्य आवश्यकत्वे प्रत्ययविशिष्टस्य जात्यवच्छिन्नवाचकत्वरूप नैमित्तिक-संज्ञात्वं न संयोगादिपदानामिति **दीधितिग्रन्थः। युक्तिबलाद् वस्तुसिद्धौ** 'स्तोकः पाकः' 'शोभनं पचनम्' इत्यत्र धातुमात्रेण पाकाद्युपस्थितौ स्तोकपाकाद्यभेदान्वयो न स्यात्। विशेषणविभक्ति- प्रकृत्यनुपस्थाप्यत्वाद् इत्युक्तहेतोः घञन्तसमुदायस्य वाचकत्वसिद्धौ **दीधितिविरोधो न बाधक** इत्यर्थः।

**VV-K. 4.4.2:** **एवञ्चेति** = घञन्तस्य शक्तिसिद्धौ च इत्यर्थः। **यत्र धातुमात्रस्यैव पाकादौ तात्पर्यं तत्र तद्विशेषणवाचकपदाद् द्वितीयैव** इति। **यत्र** पाकादौ धातुमात्रस्य भागं विहाय पच-धातुभागस्य पाकादौ विभक्त्यनुकूल-व्यापारबोधे तात्पर्यम्, **तत्र** = 'स्तोकं पाक' इत्यत्र। **तद्विशेषणवाचकपदात्** = स्तोकादिपदात्। क्रियाविशेषणानां कर्मत्वम् इत्यनुशासनात् **द्वितीयैव। यत्र तु कृदन्तसमुदायस्य** घञन्तवाचकपदस्य **पाकादौ** विभक्त्यनुकूलव्यापारे **तात्पर्यम्, तत्र** = पाकपदे। **तादृशपदम्** = स्तोकादिपदम्। **तथाविध**-घञन्तपाकादि-**समानविभक्तिकमेव**, 'स्तोकः पाकः' इत्येव। स्तोके सम्मतिमाह - **तदुक्तमिति।**

धात्वैकाधिकरण्ये तु धातुमात्रोपस्थाप्य विक्लित्यनुकूलव्यापारेऽभेदान्वये तु 'स्तोकम् ओदनस्य पाकः' इत्यत्र स्तोकपदात् द्वितीयैव। कर्तृकर्मणो कृति (पा २ ३ ६५) इति षष्ठी कर्मणि। ओदनकर्मकपाक इत्यर्थः। आधेयत्वे ओदनकृति-कर्मतानिरूपकः पाकः। धातोः व्यापारमात्रार्थकत्वे तु कर्मत्वे षष्ठी। ओदननिष्ठकर्मतानिरूपकः पाक इत्यर्थः। वैयाकरणास्तु 'स्तोकं पाकः' फलविशेषणत्वात्। यथा हि 'तण्डुल पचति' इत्यत्र तण्डुलनिष्ठा विक्लितिः इति बोधात्। तण्डुलस्य भेदसम्बन्धेन विक्लितिरूपे फलेऽन्वयात् विक्लितिरूपफलाश्रयत्वात् तण्डुलं कर्म। तथा स्तोक पाक इत्यत्रापि अभेदेन विक्लितिरूपफलाश्रय-स्तोकवाचकपदेऽपि द्वितीया। स्तोकाभिन्न-विक्लितिरिति बोधात् 'स्तोकः पाकः' व्यापारविशेषणत्वादित्याहुः। तेषां मते 'स्तोकं पचति' इत्यत्र व्यापारविशेषणत्वतात्पर्ये गतिविरह इति। नव्यनैयायिकास्तु 'स्तोकं पचति' इत्यादौ व्यापारविशेषणत्वेऽपि न दोषः। सामान्ये नपुंसकम् इति सूत्रेण नपुंसकलिङ्गतया औत्सर्गिक-एकवचनतया च स्तोकमित्यत्र प्रथमा-विभक्त्यङ्गीकारात्। फलविशेषणतात्पर्येऽपि प्रथमा एव। एवं क्रियाविशेषणत्वेऽपि क्रियावाचकपदोत्तरं द्वितीया-प्रतिपादक-पाणिन्यनुशासनविरहेऽपि न क्षतिरित्याहुः। वदन्ति इति अस्वरसः। तद्बीजं तु भावार्थकघञ्-ल्युट्-क्तिन्-आदि-अनेक-कृदन्तसमुदाये अनन्तशक्ति-तज्ज्ञान-तत्कारणत्व-कल्पनमपेक्ष्य 'शोभन पचनम्' इत्यधिकरणार्थकल्युट्स्थले धात्वर्थे सुबर्थकर्मत्वादीनां शोभनादिप्राति-पदिकान्तरार्थानां च अन्वयबोधापत्ति-वारणाय पचादिधातूत्तर-ल्युडादि-प्रत्ययधर्मिक-अधिकरणादिरूपम्। अतः किञ्चिदर्थपरत्वज्ञानस्य सिद्धस्य प्रतिबन्धकरूपधर्मकल्पनमेव उचितम्। धर्मिकल्पनातो धर्मकल्पनाया एव लघीयस्त्वादिति।

**VV-K. 4.4.3: तदर्थबोधकपदोत्तरविभक्त्या सङ्ख्याबोधने अभेद-संसर्गावच्छिन्न-प्रकारताभिन्न-तदर्थविषयताशालि-शाब्दबोधसामग्र्यपेक्षिता। तादृश-बोधः तदर्थविशेष्यकः तदर्थनिरूपितभेदान्वयविषयकश्चेति।** यथा 'राजा अस्ति' इत्यत्र तदर्थः राजपदार्थः, तद्बोधकं राजपदं, तदुत्तर-प्रथमा एकत्वरूप-सङ्ख्याबोधने 'एको राजा अस्ति' इति बोधे अभेदसंसर्गावच्छिन्नप्रकारता 'राजा पुरुष' इत्यत्र राज्ञि प्रसिद्धा। तद्भिन्ना या तदर्थविषयता राजनिष्ठविशेष्यता तच्छालिशाब्दबोधस्य 'एको राजा' इत्याकारकस्य सामग्री राज-पदार्थोपस्थिति-राजपदसमभिव्यहृत-प्रथमादिविभक्त्युपस्थितिरूपा अपेक्षिता इत्यर्थः। यथा 'राज्ञः पुरुष' इत्यत्र राजपदोत्तर-षष्ठ्या एकत्वबोधने एकराजनिरूपित-स्वत्त्वमिति शाब्दबोधे अभेदसंसर्गावच्छिन्नप्रकारताभिन्ना या स्वत्त्वनिष्ठा विशेष्यतानिरूपिता निरूपितत्व-सम्बन्धावच्छिन्ना राजनिष्ठाप्रकारतारूप-विषयता तच्छालि-बोधस्य

एकराजनिरूपितं स्वत्वमिति बोधस्य सामग्री राजपदोत्तर-ङस्-पदसमभिव्याहाररूप-आकाङ्क्षा-योग्यता राजपदजन्योपस्थिति-ङस्-पदजन्योपस्थितिरूपा अपेक्षिता इत्यर्थः।

ननु 'पुरूरवोमाद्रवसौ विश्वेदेवाः' इत्यत्र पुरूरवोमाद्रव-पदोत्तरविभक्त्या द्वित्वबोधनात् अभेदसंसर्गावच्छिन्नैव विश्वेदेवनिष्ठ-विशेष्यता-निरूपिता प्रकारता पुरूरवोमाद्रवसोः न तु अभेदसंसर्गावच्छिन्न-प्रकारताभिन्न-पुरूरवोमाद्रवो-निष्ठा विषयता इति अभेदसंसर्गावच्छिन्न-प्रकारताभिन्न-पुरूरवोमाद्रवोनिष्ठा-विषयताशालिशाब्दबोधस्य सामग्र्यपेक्षणाद् व्यभिचार इति चेत् ? न। विशेष्यान्वयिसङ्ख्याविरुद्धसङ्ख्यानवच्छिन्नत्वेन प्रकारताविशेषणात्। पुरूरवोमाद्रवोनिष्ठा प्रकारता विशेष्यान्वयिना या सङ्ख्या विश्वेदेवनिष्ठा बहुत्वसङ्ख्या तद्विरुद्धा द्वित्वसङ्ख्या तदवच्छिन्नैवेति अदोषात्। 'नीलो घटो' **'नीलौ घटौ' इत्यादौ च विशेष्यवाचकपदोत्तरविभक्त्यैव द्वित्वादिकं प्रत्याय्यते** इति। **विभक्त्यैवेति** एव-कारेण विशेषणवाचकपदोत्तरविभक्त्या क्वापि सङ्ख्या न प्रत्याय्यते। किन्तु विशेषणविभक्तिः साधुत्वार्थैव। यतो 'नीलौ घटौ' इत्यत्र नीलनिष्ठ-विषयता अभेदसंसर्गावच्छिन्नप्रकारतारूपैव, न तु तद्भिन्ना इति निरुक्तविषयताशालिशाब्दसामग्र्यभावात् न नीलपदोत्तरविभक्त्या सङ्ख्याबोध इति भावः।

**VV-K. 5.1.1: अभेदान्वयश्च विरूपोपस्थितयोः एवेति व्युत्पत्तिरिति।** विभिन्नाभ्यां नीलत्व-घटत्व-धर्माभ्याम् उपस्थितयोः नील-घटयोः एव 'नीलो घट' इत्यादौ अभेदान्वयबोधः। ननु 'घटो घटः' इत्यादौ एव घटत्वरूपेण उपस्थितयोः इत्यर्थः।

**VV-K. 5.1.2: अथेत्यादि।** अभेदान्वयप्रयोजक-समानविभक्तिकत्व-विरुद्धविभक्तिराहित्यादेः सत्त्वात् कथं न अभेदान्वयबोध इत्यर्थः।

**VV-K. 5.1.3-4: अत्राहुः इति।** आकाङ्क्षा-योग्यतादि-क्लृप्तसामग्रीवशाद् यादृशशाब्दबोधः क्वचित् प्रसिद्धः तादृशबोधस्यैव अन्यत्रापत्तिः सम्भवति आकाङ्क्षादिबलात्, न तु आपादकाभावेन अप्रसिद्धस्येत्यर्थः। तर्हि घटांशे विशेषणतावच्छेदकविधया नीलादिभाननियामक-नीलाद्युपस्थिति-तात्पर्यज्ञान-घटितैव सामग्री घटत्वाद्यवच्छिन्नविषयक-नीलाद्यवच्छिन्ना-भेदान्वयबोधप्रयोजिका। तदभावादेव 'घटो घटः' इत्यादौ न तादृशान्वयबोधापत्तिरिति इति। तर्हि विधेय-कोटावधिकावगाहिनः शाब्दबोधस्य नवीनैः उपगमात्। अधिकांशविषयतानियामिका सामग्री नवीनैः वक्तव्या। सा च सामग्री 'घटो नील घट' इत्यादौ घटांशे नीलरूपविशिष्टो घटो विशेषणतया भासते। नीलरूपं च विशेषणतावच्छेकतया भासते। तत्र नीलादिभाननियामिकासामग्री

नीलपदजन्य-नीलोपस्थितिः। 'नीलो घटो घट' इति पद घट'विशेष्यक-नीलघटाभेदबोधं जनयतु इति ज्ञानं च तद्घटितैव इति नीलपदजन्य-नीलाद्युपस्थित्यभावात् 'घटो घटः' इत्यादितो न घटत्वावच्छिन्नविशेष्यको घटाभेदबोध इत्यर्थः।

**VV-K. 5.2.1:** **अथ द्रव्यत्वादौ धर्मितावच्छेदकतासम्बन्धेन प्रसिद्धस्य शुद्धघटत्वावच्छिन्नप्रकारक-अभेदान्वयबोधस्य घटत्वादौ आपत्तिः। न च आपादकाभावः।** तत्र तात्पर्यज्ञानविशेषादिघटितायाः धर्मितावच्छेदकतया द्रव्यत्वादौ तदुत्पादनियामकसामग्र्या एव आपादकत्वादिति। 'द्रव्यं घट' इत्यादौ घटपदं द्रव्यपदार्थान्वितस्वार्थं बोधयतु इति तात्पर्यज्ञानं धर्मितावच्छेदकतासम्बन्धेन द्रव्यत्वे वर्तते। एवं द्रव्यपदार्थो घटत्वावच्छिन्नाभेदसंसर्गवान् इति योग्यताज्ञानं स्मरणात्मकं प्रत्यक्षात्मकं वा धर्मितावच्छेदकतासम्बन्धेन द्रव्यत्वे अस्ति इति तद्रूपा सामग्री यथा 'द्रव्यं घट' इत्यत्र धर्मितावच्छेदकतासम्बन्धेन द्रव्यत्वे अस्ति तथा 'घटो घटः' इत्यत्रापि तात्पर्यज्ञान-योग्यताज्ञानादिरूपा सामग्री धर्मितावच्छेदकता-सम्बन्धेन घटत्वेऽस्तीति 'घटो घटो' इत्याकारकशाब्दबोधापत्तिरित्यर्थः।

**VV-K. 5.2.2:** 'घटो घटः' इत्यतः शाब्दबोधापत्तिम् उद्धर्तुं शङ्कते - **न च** इत्यादिना। धर्मितावच्छेदकतासम्बन्धेन द्रव्यत्वादौ तादृशान्वयबोधोत्पत्तिप्रयोजिका = घटप्रकारकाभेदान्वयबोधोत्पत्ति-प्रयोजिका द्रव्यपदजन्यद्रव्यत्वावच्छिन्नोपस्थिति-तदवच्छिन्नविशेष्यक-योग्यताज्ञानादिघटिता सामग्री एव द्रव्यत्वावच्छिन्नविशेष्यक-योग्यता-ज्ञानादीत्यर्थः। तथा च द्रव्यपदजन्योपस्थिति-द्रव्यत्वावच्छिन्नविशेष्यक-योग्यताज्ञानाद्यभावात् न 'घटो घटः' इत्यादिशाब्दबोधः इति भावः। **सामग्र्येवेति** एव-कारेण पूर्वोक्तघटत्वावच्छिन्नप्रकारक-अभेदसंसर्गक-योग्यताज्ञानात् तादृश-तात्पर्यज्ञानस्य केवलस्य द्रव्यपदजन्योपस्थित्यादि-रहितस्य कारणत्वनिरासः। ननु द्रव्यपदजन्यद्रव्यत्वावच्छिन्नोपस्थिति-द्रव्यत्वावच्छिन्नविशेष्यक-योग्यताज्ञानादि-घटितसामग्र्या आत्मनिष्ठप्रत्यासत्त्या एव 'द्रव्यं घट' इति शाब्दबोधजनकत्वेन कथं द्रव्यत्वनिष्ठधर्मितावच्छेदकतासम्बन्धेन द्रव्यत्वादौ 'द्रव्यं घट' इति शाब्दबोध-प्रयोजकत्वम्। समवायेन योग्यताज्ञानम् आत्मनि 'द्रव्यं घट' इति शाब्दबोधश्च धर्मितावच्छेदकतासम्बन्धेन द्रव्यत्वे इति वैयधिकरण्यात् कार्यतावच्छेदकतासम्बन्धेन कार्योत्पत्तिं प्रति कारणतावच्छेदकसम्बन्धेन कारणसत्त्वमेव प्रयोजकम्। स च सम्बन्ध उभयत्र समवाय इत्यत आह - **धर्मितावच्छेदकतायाः तत्कार्यतावच्छेदक-सम्बन्धताविरहेऽपि** इति। द्रव्यत्वनिष्ठ-धर्मितावच्छेदकतायाः द्रव्यपदजन्य-द्रव्यत्वावच्छिन्नोपस्थिति-द्रव्यत्वावच्छिन्नविशेष्यक-योग्यताज्ञानादिघटितसामग्र्या कार्यतावच्छेदक-सम्बन्धत्वाभावेऽपीत्यर्थः। तथा च समवायसम्बन्धेन 'द्रव्यं घट'

इति बोधं प्रति सामतागरसम्बन्धेन द्रव्यपदजन्यद्रव्यत्वावच्छिन्नोपस्थितिद्रव्यत्वावच्छिन्नविशेष्यक योग्यताज्ञानादिघटितसामग्री नियामिका। न तु द्रव्यत्वनिष्ठधर्मितावच्छेदकतासम्बन्धेन 'द्रव्यं घट' इति शाब्दबोधं प्रति द्रव्यपदजन्यद्रव्योपस्थिति-द्रव्यविशेष्यक योग्यताज्ञानादि घटितसामग्री नियामिका। येन एतत्सामग्र्यभावात् धर्मितावच्छेदकतासम्बन्धेन द्रव्यत्वे 'द्रव्यं घट' इति शाब्दबोधो न स्यात्। एवञ्च द्रव्यत्वनिष्ठधर्मितावच्छेदकतासम्बन्धेन 'द्रव्यं घट' इति शाब्दबोधे घटत्वावच्छिन्नप्रकारकाभेदसंसर्गक योग्यताज्ञानादिघटितसामग्री एव नियामिका। सा च सामग्री यथा द्रव्यत्वे तथा घटत्वेऽपि अस्ति इति 'घटो घट' इति शाब्दबोधापत्तिः तदवस्था इति भाव।

पुनरपि 'घटो घट' इति शाब्दबोधापत्तिम् उद्धरति। **द्रव्यत्वादिनिष्ठायाः तस्याः तत्कार्यतावच्छेदकधर्मघटकत्वात्।** द्रव्यत्वादिनिष्ठायाः तस्याः धर्मितावच्छेदकतायाः। **तत्कार्यतावच्छेदकधर्मः** द्रव्यपद-जन्यद्रव्यत्वाद्यवच्छिन्नोपस्थिति-द्रव्यविशेष्यक-योग्यताज्ञानादिघटितसामग्री कार्यतावच्छेदकधर्मः। द्रव्यत्वावच्छिन्नधर्मिताक-घटत्वावच्छिन्न-प्रकारताक अभेदसंसर्गक-शाब्दत्वरूपो धर्मः, तद्घटकत्वं द्रव्यत्वनिष्ठधर्मितावच्छेदकतावच्छेदकतायाः अस्ति। अत्रायं भावः। द्रव्यत्वनिष्ठधर्मितावच्छेदकता यदि द्रव्यपदजन्योपस्थिति-योग्यताज्ञानादि-घटितसामग्र्याः कार्यतावच्छेदकसम्बन्धः स्यात् तदा धर्मितावच्छेदकतासम्बन्धेन 'द्रव्यं घट' इति शाब्दबोधे द्रव्यपदजन्योपस्थिति-योग्यताज्ञानादिघटितसामग्री प्रयोजिका स्यात्। प्रयोजकीभूत-द्रव्यपदजन्योपस्थिति-योग्यताज्ञानादि-घटितसामग्र्यभावाच्च 'घटो घट' इति शाब्दबोधापत्तिर्न स्यात्। द्रव्यत्वनिष्ठ-धर्मितावच्छेदकतायाः सामग्रीकार्यतावच्छेदकसम्बन्धता अनङ्गीकारे च तत्सम्बन्धेन 'द्रव्यं घट' इति शाब्दबोधप्रयोजकत्वं नैतत् सामग्र्या इति शाब्दबोधापत्तिः तदवस्थैव। तथापि द्रव्यत्वनिष्ठधर्मितावच्छेदकतायाः द्रव्यपदजन्य-द्रव्यत्वाद्यवच्छिन्नोपस्थिति-द्रव्यत्वावच्छिन्नविशेष्यक-योग्यताज्ञानादि-घटित-सामग्री-कार्यतावच्छेदक-धर्मघटकत्वं वर्तते एव। द्रव्यत्व-रूपावच्छेदकाद्यवच्छिन्न-धर्मिताक-घटत्वावच्छिन्नप्रकारताक-अभेदसंसर्गक-शाब्दत्वस्य कार्यतावच्छेदक-धर्मघटकत्वादेव हेतोः द्रव्यत्वनिष्ठ-धर्मितावच्छेदकताघटित-द्रव्यत्वावच्छिन्न-धर्मिताक-घटत्वावच्छिन्न-प्रकारताक-अभेदसंसर्गक-शाब्दत्वावच्छिन्नं प्रति द्रव्यपद-जन्योपस्थिति-तादृशयोग्यताज्ञानघटिता सामग्री प्रयोजिका भवत्येवेति तादृशद्रव्य-पदजन्योपस्थित्यादिघटित-उक्तसामग्रीरूप-प्रयोजक-अभावात् न 'घटो घट' इति शाब्दबोधापत्तिरितिभावः। तस्याश्च **आत्मनिष्ठप्रत्यासत्त्या** इति। तस्याश्च द्रव्यपदजन्य-द्रव्योपस्थिति-द्रव्यत्वावच्छिन्नविशेष्यक-योग्यताज्ञानादि-घटितसामग्र्या

व्यापिकाया आत्मनिष्ठ-प्रत्यासत्त्या समवायसम्बन्धेन द्रव्यत्वावच्छिन्नविशेष्यक-घटत्वाद्यवच्छिन्न-अभेदबुद्धित्वरूप-कार्यतावच्छेदकावच्छिन्नोत्पत्तिव्याप्या। समवाय-सम्बन्धेन यत्र 'द्रव्यं घट' इति शाब्दबोधो व्याप्यः तत्र आत्मनिष्ठ-द्रव्यपदजन्य-द्रव्यत्वावच्छिन्नोपस्थतिद्रव्यत्वावच्छिन्नविशेष्यकयोग्यताज्ञानादिघटितसामग्री व्यापिका। कार्यतावच्छेदकसम्बन्धेन यत्र कार्यं कारणतावच्छेदकसम्बन्धेन तत्र कारणमिति सामग्री व्याप्तिः। प्रकृते च 'द्रव्यं घट' इत्याकारककार्यैव शाब्दव्यक्तिः। समवायेन आत्मनि धर्मितावच्छेदकतासन्बन्धेन सैव शाब्दव्यक्तिः द्रव्यत्वे वर्तते इति 'द्रव्यं घट' इति शाब्दधीः स्यन्नाम, 'घटो घट' इति शाब्दधीः तु कथं स्यात् ? सामग्रीविरहात्। तथा हि - आत्मनिष्ठ-समवाय-प्रत्यासत्त्या योग्यताज्ञानादिघटितसामग्री द्रव्यत्वनिष्ठ-धर्मितावच्छेदकतासन्बन्धेन शाब्दबोधव्यापिका। तथा च व्यापिकाया द्रव्यादिपदजन्य-द्रव्यत्वावच्छिन्न-उपस्थिति-द्रव्यत्वावच्छिन्नविशेष्यक-योग्यताज्ञानादिघटितसामग्र्याः धर्मितावच्छेदकतासन्बन्धेन घटत्वे अभावात् न 'घटो घट' इति शाब्दबोधापत्तिः इत्यर्थः। अत्रायं भावः। अत्र सामग्रीव्याप्तिः द्वेधा, दैशिकी कालिकी च । तथा हि यत्र कारणतावच्छेदकप्रत्यासत्त्या योग्यताज्ञानघटितसामग्री तत्र कार्यतावच्छेदक-प्रत्यासत्त्या तादृशबोध इत्येका। यत्र कारणतावच्छेदकधर्मघटक-प्रत्यासत्त्या इतरकारणविशिष्ट-योग्यता-ज्ञानादिरूपा सामग्री तत्र कार्यतावच्छेदक-धर्मघटक-प्रत्यासत्त्या तादृशबोध इत्यपरा। तथा च प्रथमव्याप्तिबलात् यदा कारणतावच्छेदकसम्बन्धेन कारणाधिकरणे तदवच्छेदकसम्बन्धेन आत्मनि कार्यमुत्पद्यते तदा कारणतावच्छेदकधर्मघटकसम्बन्धेन कारणाधिकरणे द्रव्यत्वे कार्यतावच्छेदकधर्मघटकावच्छेदकताप्रत्यासत्त्या द्रव्यत्वेऽपि उत्पद्यते।

**VV-K. 5.2.3:** ततश्च एतादृशसामग्र्या धर्मितावच्छेदकता-सन्बन्धेन द्रव्यत्वे तादृशबोधप्रयोजकत्वम् अक्षुण्णमेवेति भूयो 'घटो घट' इत्याकारकशाब्दबोधम् आपादयितुम् आत्मनिष्ठप्रत्यासत्तिं दूषयित्वा धर्मितावच्छेदकताप्रत्यासत्त्या शाब्दधियम् उपपादयति **योग्यताज्ञानस्य धर्मितावच्छेदक**मिति। समवायेन द्रव्यत्वावच्छिन्नधर्मिक-घटत्वावच्छिन्नप्रकारक-शाब्दबोधं प्रति समवायेन द्रव्यत्वावच्छिन्नधर्मिक-घटत्वावच्छिन्नप्रकारक-अभेदसंसर्गक-'द्रव्यं घट' इत्याकारक-योग्यताज्ञानम् आत्मनिष्ठप्रत्यासत्त्या कारणत्वे द्रव्यत्व-प्रमेयत्वाद्यनन्त-धर्मितावच्छेदकभेदेन अनन्तकार्यकारणभावकल्पने गौरवेण, लाघवात् धर्मितावच्छेदकतासम्बन्धेन 'द्रव्यं घटः' 'प्रमेयो घट' इत्याकारक-घटत्वावच्छिन्नप्रकारक-अभेदसंसर्गक-शाब्दबुद्धौ **तादृश-सम्बन्धेन** = धर्मितावच्छेदकतासम्बन्धेन, **तस्य** = घटत्वावच्छिन्नप्रकारक-अभेदसंसर्गक-योग्यताज्ञानस्य, द्रव्यत्व-प्रमेयत्वादिरूपधर्मितावच्छेदकम् अनिवेश्य हेतुताकल्पनस्यैव उचितत्वात्।

तथा च धर्मितावच्छेदकतासम्बन्धेन यत्र 'द्रव्यं घट' इत्याकारक घटत्वावच्छिन्नप्रकारक अभेदसंसर्गक योग्यताज्ञानम्, तत्र धर्मितावच्छेदकतासम्बन्धेन 'द्रव्यं घट' इत्याकारक घटत्वावच्छिन्नप्रकारक अभेदसंसर्गक शाब्दबोध। धर्मितावच्छेदकतासम्बन्धेन योग्यताज्ञानं च द्रव्यत्व-प्रमेयत्वादौ इव घटत्वेऽपि अस्ति इति 'घटो घट' इत्याकारकशाब्दबोधापत्ति इत्यर्थ। घटत्वावच्छिन्नप्रकारक-अभेदसंसर्गक-शाब्दबोधत्व कार्यतावच्छेदक घटत्वावच्छिन्नप्रकारक-अभेदसंसर्गक-योग्यताज्ञानत्व कारणतावच्छेदक धर्मितावच्छेदकता सम्बन्धेन शाब्दबोधो निश्चयात्मकः। योग्यताज्ञान संशयनिश्चय साधारणमिति भेद। तदापत्तेः। 'घटो घट' इति शाब्दबोधापत्ते इत्यर्थः।

**VV-K. 5.2.4:** आत्मनिष्ठप्रत्यासत्त्या योग्यताज्ञानकारणतावादी 'घटो घट' इति शाब्दबोधापत्तिं निरसितुं शङ्कते - न च **योग्यताज्ञानस्य धर्मितावच्छेदक-निष्ठप्रत्यासत्त्या हेतुत्वोपगमे** इत्यनूद्य दूषयति - द्रव्यत्वावच्छिन्नस्य पदात् अनुपस्थितत्वेऽपि द्रव्यत्वादौ तादृशप्रत्यासत्त्या। धर्मितावच्छेदकनिष्ठप्रत्यासत्त्या, प्रत्यासन्नं सम्बद्धं यद् 'द्रव्यं घट' इति योग्यताज्ञानं तस्मात् तादृशप्रत्यासत्त्या धर्मितावच्छेदकनिष्ठप्रत्यासत्त्या 'द्रव्य घट' इत्याकारकशाब्दबोधापत्तिः इत्यर्थः। **आत्मनिष्ठप्रत्यासत्त्या हेतुभूतामिति**। तादृशप्रमेयत्वावच्छिन्नोपस्थित्यादिदशायाम् आत्मनिष्ठ-समवायप्रत्यासत्त्या हेतुभूत प्रमेयपदजन्य-प्रमेयत्वावच्छिन्नोपस्थिति-इत्यादि-दशायाम्, प्रमेयत्वादौ **धर्मितावच्छेदकतासम्बन्धेन** 'प्रमेयो घट' इति **योग्यताज्ञानस्य फलजनकत्वात्** = 'प्रमेयो घट' इति शाब्दबोधो जनकत्वात्, **तादृशद्रव्यत्वावच्छिन्नोपस्थितिविरहस्य** आत्मनिष्ठप्रत्यासत्त्या हेतुभूतद्रव्यपदजन्य-द्रव्यत्वावच्छिन्नोपस्थितिविरहस्य। **अकिञ्चित्करत्वात्**। धर्मितावच्छेदकनिष्ठ-प्रत्यासत्त्या घटत्वाद्यवच्छिन्नप्रकारक-अभेदसंसर्गक-शाब्दबोधः प्रमेयत्वे जायते। तत्र द्रव्यपदजन्योपस्थितिव्यभिचारः। एवं घटाभेदबोधो द्रव्यत्वे जायते। तत्र प्रमेयपदजन्योपस्थितिव्यभिचारः।

एवं परस्परव्यभिचारेण पदजन्यपदार्थोपस्थितीनाम् अकारणतया तदभावस्य घटत्वावच्छिन्नाभेदशाब्दबोधाभावाप्रयोजकत्वाद् इत्यन्वयः। आत्मनिष्ठ-प्रत्यासत्त्या योग्यताज्ञानस्य कारणत्वे तु द्रव्यपदजन्य-द्रव्यत्वप्रकारकोपस्थिति-शून्यतादशायां न 'द्रव्यं घट' इति शाब्दबोधापत्तिः। समवायसम्बन्धेन द्रव्यत्वावच्छिन्नधर्मिक-घटत्वावच्छिन्नप्रकारक-अभेदसंसर्गक-शाब्दबोधं प्रति कारणी-भूतस्य समवायसम्बन्धेन द्रव्यत्वावच्छिन्नधर्मिक-घटत्वावच्छिन्न-प्रकारक-अभेदसंसर्गक-योग्यताज्ञानस्य समवायेन सहकारिकारणतया अपेक्षणीय द्रव्यपदजन्यद्रव्यत्वप्रकारकोपस्थित्यभावात्। तथा च समवायेन द्रव्यत्वावच्छि

विशेष्यक-घटत्वावच्छिन्नप्रकारक-अभेदसंसर्गकयोग्यताज्ञानस्य 'द्रव्यं घट' इत्यादिशाब्दबोधजनकतया क्लृप्तस्य अभावात् न 'घटो घट' इत्यत्र शाब्दबोधापत्तिरिति भावः।

**VV-K. 5.2.5: समानप्रकारताप्रत्यासत्त्या** पदजन्यपदार्थोपस्थितेः **शाब्दबोध-हेतुत्वोपगमादिति।** द्रव्यपदजन्यद्रव्यत्वप्रकारकोपस्थितिसत्त्वे प्रकारतया द्रव्यपदजन्य-द्रव्यत्वप्रकारकोपस्थितिरूप-व्यापकसामग्र्यभावात्। द्रव्यत्वे धर्मितावच्छेदकनिष्ठ-प्रत्यासत्त्या शाब्दधीनिवारणे अनन्तधर्मितावच्छेदकनिवेशेन आत्मनिष्ठप्रत्यासत्त्या योग्यताज्ञानस्य न कारणत्वं, किन्तु धर्मितावच्छेदकता-सम्बन्धेन धर्मितावच्छेदकं द्रव्यत्व-प्रमेयत्वादिकम् अनिवेश्य घटत्वावच्छिन्नप्रकारक-अभेदसंसर्गक-योग्यताज्ञानस्यैव कारणत्वात् तस्य च घटत्वेऽपि सत्त्वात् 'घटो घट' इत्यत्र शाब्दबोधापत्तिः दुर्वारेति भावः।

**VV-K. 5.2.6: येन सम्बन्धेन** = धर्मितावच्छेदकतासम्बन्धेन। **यद्धर्मावच्छिन्न-कार्यं प्रति** = घटत्वावच्छिन्नप्रकारक-अभेदसंसर्गक-शाब्दत्वावच्छिन्नकार्यं प्रति। **येन सम्बन्धेन** = प्रकारतासम्बन्धेन। **यद्धर्मावच्छिन्नस्य** = शाब्दबोधत्वावच्छिन्नकार्यस्य **व्यापकता। तेन सम्बन्धेन** = प्रकारतासम्बन्धेन। **तद्धर्मावच्छिन्नकार्योत्पादकसामग्र्या अपि** = शाब्दत्वरूपसामान्यधर्मावच्छिन्नकार्योत्पादकसामग्र्याः प्रकारतासम्बन्धेन पदजन्यपदर्थोपस्थितिरूपायाः अपि। **तेन सम्बन्धेन** = धर्मितावच्छेदकतासम्बन्धेन **तद्धर्मावच्छिन्नकार्योत्पादादौ** = घटप्रकारकाभेदसंसर्गकशाब्दबोधादौ। **अपेक्षिततया** प्रकारतासम्बन्धेन। **प्रकृताभिप्रायेण आह - द्रव्यत्वादौ।** द्रव्यपदजन्य-पदर्थोपस्थितिरूप-व्यापकसामग्र्यसत्त्वेन । **तत्र** = द्रव्यत्वे। धर्मितावच्छेदकता-सम्बन्धेन 'द्रव्यं घट' इत्याकारकशाब्दबोधापत्तेः असम्भवादित्यर्थः।

**VV-K. 5.2.7: न च यत्र प्रमेयत्वाद्यवच्छिन्नविशेष्यक**-वृत्तिज्ञानजन्य-**प्रमेयत्वाद्यवच्छिन्नविशेष्यकोपस्थितौ एव** उद्बोधकान्तरात् **द्रव्यत्वाद्यवच्छिन्नस्य भानं तत्र द्रव्यत्वावच्छिन्न**-विषयक-शाब्दापत्तिः। प्रमेयं प्रमेयपदशक्तिमद् इति वृत्तिज्ञानेन प्रमेयविषयकसंस्कार-सहकृतेन जन्यायां प्रमेयत्वाद्यवच्छिन्नविषयक-समूहालम्बन-स्मृतौ एव उद्बोधकान्तराद् द्रव्यपदवृत्तिज्ञानातिरिक्तात् कालादृष्टादिरूपात् द्रव्यविषयक-संस्कारोद्बोधकात् द्रव्यत्वावच्छिन्नस्य भानं विषयता। तत्र प्रमेयपदजन्यप्रमेयद्रव्यरूपोपस्थित्या 'द्रव्यं घट' इति शाब्दबोधापत्तिः। तद्वारणाय द्रव्यत्वावच्छिन्नविशेष्यक-शाब्दं प्रति द्रव्यत्वावच्छिन्न-विशेष्यक-वृत्तिज्ञानजन्यद्रव्यत्वप्रकारक-उपस्थितेः हेतुता इत्यर्थः। आत्मनिष्ठ-प्रत्यासत्त्या हेतुत्वकल्पनम् उचितमिति। विषयनिष्ठप्रत्यासत्त्या हेतुताकल्पने धर्मितावच्छेदकप्रत्यासत्त्या यदा एकपुरुषस्य योग्यताज्ञानं तदा पुरुषान्तरस्य

शाब्दधीः स्यादिति। तत्पुरुषीयशाब्दे तत्पुरुषीययोग्यताज्ञानं हेतुरिति पुरुषविशेषनिवेशेऽपि प्रकारतानिवेशो बीजम्। स च न सम्भवति। वृत्तिज्ञानजन्य द्रव्यविषयक वृत्तिज्ञानजन्य प्रमेयविषयक उक्तसमूहालम्बनस्मृतिस्थले द्रव्यविषय-शाब्दापत्तेः। अत उभयनिवेशापेक्षया प्रकारविशेष निवेश्य पुरुषभेदम् अनिवेश्य आत्मनिष्ठप्रत्यासत्त्या हेतुताकल्पनमेव उचितमित्याशयः। तथा च आत्मनिष्ठ-समवायप्रत्यासत्त्या द्रव्यत्वावच्छिन्नधर्मिक घटत्वावच्छिन्न-प्रकारक-अभेदसंसर्गक शाब्दबोधं प्रति क्लृप्ता या तादृशयोग्यताज्ञानरूपा सामग्री, तदभावात् न 'घटो घट' इत्यत्र शाब्दबोधापत्तिरिति भावः।

**VV-K. 5.2.8:** स्वजनकज्ञानीयवृत्तिनिष्ठप्रकारतानिरूपितेति। 'द्रव्यं घटः' इत्याकारकशाब्दबोधः प्रकारतासम्बन्धेन द्रव्यत्वे जायते। तत्र द्रव्यपदजन्य-पदार्थोपस्थितिरूपं कारणमप्यस्ति। कारणीभूतोपस्थितेः सम्बन्धश्च, स्वं = द्रव्यपदजन्योपस्थितिः, तज्जनकं = द्रव्यपदशक्यं, द्रव्यपदशक्तिमद् इति शक्तिरूपवृत्तिज्ञानात् तादृशज्ञाननिरूपिता या शक्तिरूपवृत्तिनिष्ठप्रकारता, तन्निरूपिता विशेष्यता द्रव्ये, विशेष्यतावच्छेदकता द्रव्यत्वे द्रव्यपदजन्य-द्रव्यपदार्थोपस्थितिनिरूपिता प्रकारता अपि द्रव्यत्वेऽस्ति इति सामानाधिकरण्य-सम्बन्धेन निरुक्तविशेष्यतावच्छेदकताविशिष्टा या प्रकारता तत्सम्बन्धेन पदजन्यपदार्थोपस्थितेः हेतुमद्भावसिद्धौ तादृशापत्तेः वारणात्। प्रमेयत्वावच्छिन्न-विशेष्यकवृत्तिज्ञानरूपोद्बोधकोद्बुद्ध-प्रमेयत्वावच्छिन्नविषयकसंस्कारद्रव्यविषयवृत्ति-ज्ञानातिरिक्तकालादृष्टादिरूपोद्बोधकोद्बुद्ध-द्रव्यत्वावच्छिन्नविषयक-संस्काराभ्यां जनितायां प्रमेयत्व-द्रव्यत्व-उभयत्वावच्छिन्न-विषयक-समूहालम्बनात्मकस्मृतौ सत्यां तादृशी आपत्तिः 'द्रव्यं घट' इति शाब्दापत्तिः, तस्या वारणाद् इत्यर्थः। यतः शाब्दबोधो द्रव्यत्वे आपद्यते, तत्र द्रव्यत्वे उक्तसम्बन्धेन कारणं द्रव्यपद-जन्योपस्थितिरूपं नास्ति। तथा हि, स्वं = द्रव्यपदजन्य-द्रव्यत्वावच्छिन्नोपस्थितिः। तज्जनकं द्रव्यपदशक्तिमद् इति शक्तिज्ञानम्। तन्निरूपिता शक्तिनिष्ठप्रकारता, तन्निरूपिता या द्रव्यनिष्ठा विशेष्यता तदवच्छेदकता द्रव्यत्वे, द्रव्यपदजन्य-द्रव्यत्वावच्छिन्नोपस्थितिश्च द्रव्यत्वे प्रकारतासम्बन्धेन वर्तते इति तादृश-विशेष्यतावच्छेदकताविशिष्ट-प्रकारतासम्बन्धेन द्रव्यपदजन्योपस्थितेः सत्त्वात् 'द्रव्यं घट' इत्यत्र शाब्दबोधो जायते। द्रव्यपदजन्य-द्रव्यत्वावच्छिन्नानुपस्थितौ स शाब्दबोधः कथं स्यात् इति ? एवञ्च विषयनिष्ठप्रत्यासत्त्या योग्यताज्ञानकारणतायां निर्दुष्टायां धर्मितावच्छेदकता-प्रत्यासत्त्या 'घटो घट' इत्यत्र शाब्दबोधापत्तिः तदवस्था इति भावः।

**VV-K. 5.2.9:** **न च पदार्थेऽपि प्रकारतासम्बन्धेन** इति। **पदार्थेऽपि =** पदजन्यप्रतीतिविशेष्येऽपि। 'द्रव्यं घट' इत्यत्र द्रव्येऽपि = विशेष्येऽपि

अभेदसम्बन्धेन, घटरूपे प्रकारेऽपि प्रकारतासम्बन्धेन शाब्दबोध उपपद्यते। **तत्र =** घटरूपप्रकारे। **प्रकारतासम्बन्धेन =** स्वजनकज्ञानीय-वृत्तिनिष्ठ-प्रकारतानिरूपित-विशेष्यतावच्छेदकताविशिष्ट-प्रकारता-सम्बन्धेन। **पदार्थोपस्थितेः अभावात् =** घटपदजन्य-घट इत्याकारक-पदार्थोपस्थितौ घटस्य विशेष्यतया भानात् प्रकारता-सम्बन्धेन शाब्दबोधे प्रकारतासम्बन्धेन पदार्थोपस्थितेः हेतुत्वे व्यतिरेक-व्यभिचारादित्यर्थः। एवञ्च आत्मनिष्ठ-प्रत्यासत्त्या योग्यताज्ञानकारणतासिद्धौ **'घटो घट'** इत्यत्र शाब्दबोधापत्तिः नास्ति इति भावः।

**VV-K. 5.2.10: परामर्शकारणताविचारदर्शितदिशा व्यभिचारस्य वारणीयत्वात् इति चेदिति।** धूम-आलोकपरामर्शयोः परस्परजन्यानुमितौ व्यभिचारेण धूमपरामर्शविशिष्टानुमितौ धूमपरामर्शस्य आलोकपरामर्श-विशिष्टानुमितौ आलोकपरामर्शस्य च कारणत्वम्। वैशिष्ट्यञ्च कार्यकारणतावच्छेदक-समवायघटित-सामानाधिकरण्येन, स्वाव्यवहितोत्तर-उत्पन्नत्वेन च। तथा स्वजनकज्ञानीय-वृत्तिनिष्ठप्रकारतानिरूपित-विशेष्यतावच्छेदकता-विशिष्टप्रकारता-शुद्धप्रकारता-घटित-सामानाधिकरण्य-सम्बन्धेन पदजन्यपदार्थोपस्थितिविशिष्ट-शाब्दबोधं प्रति स्वजनकज्ञानीय-वृत्तिनिष्ठ-प्रकारता-निरूपित-विशेष्यतावच्छेदकता-विशिष्ट-प्रकारतासम्बन्धेन पदजन्यपदार्थोपस्थितिः हेतुः इति शुद्धप्रकारतासम्बन्धेन घटरूपपदार्थे शाब्दत्वावच्छिन्नसत्त्वेऽपि विशिष्टप्रकारता-शुद्धप्रकारताघटित-सामाना-धिकरण्यसम्बन्धेन उपस्थितिविशिष्टशाब्दत्वावच्छिन्नाभावात् न व्यतिरेक-व्यभिचार इति। एवञ्च घटत्वे धर्मितावच्छेदकतया घटप्रकारक-अभेदसंसर्गक-योग्यताज्ञानस्य स्वजनकज्ञानीय इत्यादिविशिष्टप्रकारता-सम्बन्धेन घटपद-जन्योपस्थितेश्च सत्त्वात् 'घटो घट' इत्यत्र शाब्दबोधापत्तिरिति भावः। समाधत्ते - **तर्हि** इति। **तद्धर्मावच्छिन्नाभेदसंसर्गावच्छिन्ना** च या घटनिष्ठप्रकारता तन्निरूपिता विशेष्यता द्रव्ये। तदवच्छेदकतासम्बन्धेन 'द्रव्यं घट' इति शाब्दत्वावच्छिन्नं द्रव्यत्वे जायते। तत्र द्रव्यत्वे तद्धर्मभेदो घटत्वभेदो हेतुरस्ति। 'घटो घट' इत्यत्र तु न शाब्दबोधापत्तिः। घटत्वे घटत्वभेदाभावादित्यर्थः।

**VV-K. 5.3.1: 'स घट' इति वाक्यात् जातित्वादिना घटत्वादि-धर्मितावच्छेदककस्य स्वरूपतो घटत्वादिप्रकारतावच्छेदककस्य 'घटः स' इत्यादिवाक्यात् स्वरूपतो घटत्वादिधर्मितावच्छेदककस्य जातित्वादिविशिष्ट-घटत्वावच्छिन्नप्रकारकस्य च शाब्दबोधस्य उपपत्तये विशेष्यत्व-प्रकारत्वयोः अवच्छेदकत्वे निरवच्छिन्नत्वेन विशेषणीये** इति। तद्धर्मावच्छिन्ननिरवच्छिन्न-तद्धर्मनिष्ठावच्छेदकतानिरूपिता या अभेदसंसर्गावच्छिन्ना प्रकारता तन्निरूपिता या विशेष्यता तन्निरूपिता या निरवच्छिन्नावच्छेदकता तद्रूपसम्बन्धेन शाब्दत्वावच्छिन्नं

प्रति तद्धर्मभेदो हेतुः । 'द्रव्यं घटः' इत्यत्र घटत्वनिष्ठा या निरवच्छिन्नावच्छेदकता तन्निरूपिता या अभेदसंसर्गावच्छिन्ना घटनिष्ठा प्रकारता तन्निरूपिता या द्रव्यनिष्ठा विशेष्यता तन्निरूपिता या द्रव्यत्वनिष्ठा निरवच्छिन्नावच्छेदकता तत्सम्बन्धेन शाब्दत्वावच्छिन्नं द्रव्यत्वे जायते। तत्र द्रव्यत्वे घटत्वभेदरूपहेतुरस्ति इति। 'स घट' इत्यस्य 'जातिमान् घटः' इत्यर्थः। अत्र अभेदसम्बन्धेन घटः प्रकारः। घटत्वनिष्ठप्रकारतावच्छेदकता निरवच्छिन्ना। अथ च जातिमान् विशेष्यः। विशेष्यतावच्छेदकता जातौ। सा च जातित्वावच्छिन्ना इति, घटत्वनिष्ठ-निरवच्छिन्नावच्छेदकतानिरूपिता अभेदसंसर्गावच्छिन्न-घटनिष्ठाप्रकारतानिरूपिता या जातिमन्निष्ठा विशेष्यता तन्निरूपिता या जातिनिष्ठावच्छेदकता सा जातित्वावच्छिन्नेति निरवच्छिन्नतादृशावच्छेदकतासम्बन्धेन शाब्दत्वावच्छिन्नं जातौ जायते इति जातौ घटत्वभेदाभावेऽपि शाब्दबोध उपपद्यते। एवं 'घटः स' इत्यस्य घटो जातिमान् इत्यर्थः। अत्र घटो विशेष्यः। घटत्वनिष्ठा विशेष्यतावच्छेदकता निरवच्छिन्ना। अत्र च अभेदसंसर्गः। जातिमान् प्रकारः। जातिनिष्ठाप्रकारता-वच्छेदकता जातित्वावच्छिन्ना इति। जातिनिष्ठ-निरवच्छिन्नावच्छेदकता निरूपिता इत्यादिसम्बन्धेन घटत्वे घटविशेष्यक-जातिमत्प्रकारक-अभेदसंसर्गक-शाब्दबोधो जायते। घटत्वे जातिभेदाभावेऽपि शाब्दबोध उपपद्यते इति। **'घटो नीलघट' इत्याद्यन्वयबोधस्य** इति। विधेयकोटौ अधिकावगाहिशाब्दबोधो 'अनुमितिकरणम् अनुमानम्' इत्यादौ बहुशः सूत्रकारादिभिः अङ्गीकृतः। तथा हि अनुमानमित्यस्य अनुपूर्वक-मा-धात्वर्थ-अनुमितेः निरूपितत्वसम्बन्धेन ल्युडर्थे करणेऽन्वयः। अनुमितिकरणम् इत्यत्र नामार्थयोः अभेदान्वयात् अनुमितिपदलक्षित-अनुमितिसम्बन्ध्यंशस्य अधिकरणस्य अभेदेन करणेऽन्वयः। तथा च अनुमितिकरणम् अनुमितिसम्बन्ध्यभिन्नं करणमित्यर्थः। वस्तुतस्तु न तथा बोधः प्रामाणिकः। अन्यथा तुल्ययुक्त्या 'नीलो घटो घट' इति बोधस्यापि स्वीकारापत्तेः इति भावः। **अन्यत्रदर्शितदिशा सोऽपि उपपादनीय** इति। अवच्छेदकतायाः तद्धर्मपर्याप्त्यादिविवक्षया इत्यर्थः। निरवच्छिन्ना तद्धर्मपर्याप्त्या च या अवच्छेदकता तन्निरूपिता या अभेदसंसर्गावच्छिन्ना प्रकारता तन्निरूपितविशेष्यतानिरूपित-निरवच्छिन्नावच्छेदकतासम्बन्धेन शाब्दं प्रति तद्धर्मभेदः कारणम्। 'घटो नीलघट' इत्यत्र अवच्छेदकता न केवलघटत्वपर्याप्ता। किन्तु नीलत्व-घटत्वोभयपर्याप्ता। तद्घटितोभय-सम्बन्धेन घटत्वे शाब्दबोधाभावात् घटत्वे नीलघटत्वभेदाभावेऽपि शाब्दबोध उपपद्यते इति भावः।

**VV-K. 5.3.2:** 'स स' इत्यादिवाक्यादिति। 'जातिमान् जातिमान्' इत्यर्थः। निरवच्छिन्ना तद्धर्मपर्याप्ता च या अभेदसम्बन्धावच्छिन्न-प्रकारतानिरूपित-

विशेष्यतानिरूपित-निरवच्छिन्नावच्छेदकतासम्बन्धेन शाब्द प्रति तद्धर्मभेद कारणम्। 'घटो नीलघट' इत्यत्र अवच्छेदकता न केवलजातित्वाद्यवच्छिन्ना धर्मितावच्छेदकता यस्य ईदृशोऽभेदान्वयबोधः। अत्र जातिमान् धर्मी। धर्मितावच्छेदकता जातौ । सा जातित्वावच्छिन्ना इत्यर्थः। तद्धर्मो जातित्वम्। तदवच्छिन्ना प्रकारतावच्छेदकता यस्य स तद्धर्मावच्छिन्नप्रकारतावच्छेदकताकः योऽभेदान्वयबोधः तद्वारणाय इत्यर्थः। अत्रापि जातिमान् प्रकारः। प्रकारतावच्छेदकता जातौ। सा जातित्वावच्छिन्ना इत्यर्थ। तद्धर्मो जातित्वम्। तदवच्छिन्ना जातिनिष्ठावच्छेदकता यस्याः तादृशी जातिमन्निष्ठाऽभेदसंसर्गावच्छिन्ना प्रकारता। तन्निरूपिता धर्मिता जातिमति। तदवच्छेदकत्वं जातित्वे। तादृशप्रत्यासत्त्या शाब्दबोधो जातित्वे जायते। तद्धर्मभेदः = जातित्वभेदः कारणं, स नास्ति इति न 'जातिमान् जातिमान्' इत्यत्र शाब्दबोध इति।

**VV-K. 5.3.3:** एवं 'दण्डवान् दण्डवान्' इत्यादिवाक्यादिति। मतुपः सम्बन्धिनि शक्तेः 'दण्डसंयोगवान् दण्डसंयोगवान्' इत्यर्थः। दण्डत्वनिष्ठ-अवच्छेदकतानिरूपित-दण्डनिष्ठावच्छेदकतानिरूपित-संयोग-निष्ठावच्छेदकता-निरूपितसंयोगि-पुरुष-निष्ठाभेद-संसर्गावच्छिन्न-प्रकारता-निरूपित-विशेष्यता-निरूपित-संयोग-त्वाद्यवच्छिन्न-संयोग-निष्ठावच्छेदकता-निरूपित-दण्डनिष्ठा-वच्छेदकतावच्छेदकत्वसम्बन्धेन दण्डत्वे शाब्दबोध आपाद्यते। तत्र दण्डत्व-भेदरूपकारणं नास्ति इति न आपत्तिरित्यर्थः। अवच्छेदकतायां निरवच्छिन्नत्व-निवेशोऽपि पूर्ववद्बोध्य इति। 'जातिमद्वान् दण्डवान्', 'दण्डवान् जातिमद्वान्' इत्युभयत्र जातित्वेन दण्डत्वमेव भासते। तत्र 'जातिमद्वान् दण्डवान्' इत्यत्र दण्डत्वरूपजाति-निष्ठावच्छेदकता-जातित्वावच्छिन्नेति तद्व्युदासः। एवं 'दण्डवान् जातिमद्वान्' इत्यत्रापि दण्डनिष्ठप्रकारतानिरूपित-संयोगनिष्ठ-अवच्छेदकता-निरूपित-दण्डनिष्ठावच्छेदकतानिरूपित-दण्डत्वनिष्ठावच्छेदकत्वं जातित्वावच्छिन्नम् इति तत्र शाब्दबोधानापत्तिः।

**VV-K. 5.4.1:** वस्तुतस्तु तद्धर्मान्यवृत्ति इति। धर्मितावच्छेदकतासम्बन्धेन घटत्वावच्छिन्नप्रकारकाभेदसंसर्गक योग्यताज्ञानं 'द्रव्यं घट' इत्याकारकं 'प्रमेयो घट' इत्याकारकं च द्रव्यत्व-प्रमेयत्वादौ अस्ति, तत्र द्रव्यत्वप्रमेयत्वादौ धर्मितावच्छेदकतासम्बन्धेन 'द्रव्यं घट', 'प्रमेयो घट' इति शाब्दबोधो जायते। स च शाब्दबोधः व्याप्यः। व्यापकं च तद्धर्मान्य-वृत्तिविषयतासम्बन्धेन ज्ञानम्। प्रकृते तद्धर्मः प्रकारीभूतस्य घटस्य धर्मो घटत्वं, तदन्यद् द्रव्यत्वं, तद्वृत्तिः या धर्मितावच्छेदकतारूपा विषयता तत्सम्बन्धेन ज्ञानं 'द्रव्यं घट' इति शाब्दबोधरूपं ज्ञानम्। तद्धर्मान्यवृत्तिविषयतासम्बन्धेन ज्ञानत्वेन स्वं प्रति स्वस्य व्यापकत्वात्। तथा च व्यापकीभूतशाब्दबोधो धर्मितावच्छेदकतासम्बन्धेन द्रव्यत्वेऽस्ति। तत्र

द्रव्यत्वे तद्धर्मभेद घटत्वभेदो हेतु अस्ति। एवञ्च घटत्वावच्छिन्न-प्रकारक-अभेदसंसर्गक योग्यताज्ञानेन 'घटो घट' इत्यत्र घटत्वे धर्मितावच्छेदकता-निष्ठप्रत्यासत्त्या 'घटो घट' इत्यत्र शाब्दबोध आपादयितुमशक्य। योग्यताज्ञानापाद्य शाब्दव्यापकस्य तद्धर्मान्यवृत्ति-विषयतासम्बन्धेन ज्ञानस्य द्रव्यत्वे घटत्वभेदसत्त्वे न 'द्रव्यं घट' इत्यादौ द्रव्यत्वादौ प्रसिद्धस्य या तद्धर्मभेदरूपा सामग्री तदभावात् घटत्वे घटत्वभेदाभावात् इति भाव। **घटत्वावच्छिन्नप्रकारतेत्यादि**। अभेद-संसर्गावच्छिन्ना या घटत्वाद्यवच्छिन्ना घटनिष्ठाप्रकारता तन्निरूपिता द्रव्यनिष्ठ-विशेष्यता तदवच्छेदकता द्रव्यत्वे, तत्सम्बन्धेन 'द्रव्यं घट' इति शाब्दं प्रति घटत्वान्य-द्रव्यत्ववृत्ति-धर्मितावच्छेदकतारूप-विषयता-सम्बन्धेन प्रत्यक्ष स्मृत्यनुमिति-शाब्दरूपज्ञानत्वावच्छिन्नस्य व्यापकतया घटत्वादौ तादृशविषयतासम्बन्धेन घटत्वावच्छिन्नप्रकारता-निरूपित-विशेष्यतावच्छेदकता-सम्बन्धेन ज्ञानत्वावच्छिन्नस्य घटत्वाद्यन्यवृत्ति-विषयता-सम्बन्धेन ज्ञानत्वावच्छिन्नस्य उत्पादिका घटत्वे घटत्व-भेदरूपा सामग्री। तस्या विरहेण न तत्र घटत्वे तादृशविशेष्यतावच्छेदकतासम्बन्धेन अभेद-संसर्गावच्छिन्नघटत्वाद्यवच्छिन्न-घटनिष्ठप्रकारता-निरूपित-घटनिष्ठ-विशेषता-निरूपित-घटत्वनिष्ठ-धर्मितावच्छेदकता-सम्बन्धेन 'घटो घट' इत्यत्र शाब्दबोधा-पत्तिरित्यर्थः।

**VV-K. 5.4.2:** उक्ते लाघवमाह - **एवञ्च** इत्यादिना। तद्धर्मान्यवृत्ति-विषयतासम्बन्धेन ज्ञानं प्रति तद्धर्मभेदत्वेन हेतुत्वाङ्गीकारे च घटवान् देशो धर्मी। धर्मितावच्छेदको घटो। धर्मितावच्छेदकतावच्छेदकता घटत्वे। तत्र प्रत्यासत्त्या 'घटवान् घटवान्' इत्यत्र शाब्दबोधोपपत्तये अभेदेन प्रकारः, घटवान् घटे प्रकारतावच्छेदकता तदवच्छेदकस्य भेदः कारणमिति तस्य कारणत्वान्तरं पूर्वं कृतं, तदपि न कल्प्यते। 'घटवान् घटवान्' इत्यत्र योग्यताज्ञानजन्यशाब्दबोधव्यापकस्य तद्धर्मान्यवृत्ति-विषयता-सम्बन्धेन ज्ञानस्य तद्धर्मभेदरूपसामग्र्यभावात्। घटत्वे घटत्वभेदाभावात्। एवं 'घटवान् घटत्ववद्वान्' इत्यत्र न शाब्दबोधानुपपत्तिः। तत्र हि धर्मितावच्छेदकतावच्छेदकतारूप-विषयतासम्बन्धेन शाब्दबोधो घटत्वे जायते। तत्र प्रकारतावच्छेदकतावच्छेदकतावच्छेदकरूप-घटत्वत्व-भेदसत्त्वादिति भावः।

**VV-K. 5.4.3:** **एवम् उद्देश्यतावच्छेदक-विधेययोः ऐक्य** इति। 'एकः' इति वाक्ये एकवचनार्थः एकत्वम्। तत्र एकत्वे एकत्वभेदाभावात् एकत्ववान् एकत्ववान् इति शाब्दानुदयः। तथा 'द्वौ' इत्यत्र द्वित्ववान् द्वित्ववान् इति न शाब्दधीः। योग्यताज्ञानजन्य-शाब्दव्यापक-तद्धर्मान्यवृत्तिविषयतासंसर्गक-ज्ञानजनक-तद्धर्म-भेदाभावात्। तथा च एकत्वत्वद्वित्वत्वाद्यवच्छिन्ना समवायादिसंसर्गावच्छिन्ना या विभक्त्यर्थैकत्वादिनिष्ठा प्रकारता तन्निरूपिता एक-द्वि-पदार्थनिष्ठा विशेष्यता,

तन्निरूपिता समवायादि-संसर्गावच्छिन्ना एकत्व-द्वित्व निष्ठावच्छेदकता. तदवच्छेदकता एकत्वत्व-द्वित्वत्वादिनिष्ठा। तेन सम्बन्धेन एकत्वत्व-द्वित्वत्वादौ जायमानशाब्दबुद्धौ एकत्वत्व-द्वित्वत्वादिभेदस्य हेतुत्वान्तरकल्पनम् अनादेयमेव इत्यर्थः। 'घट' इत्यत्र 'एको घट' इति 'घटौ' इत्यत्र 'द्वौ घटौ' इति शाब्दबोधोदयात् तद्धर्मः एकत्वं द्वित्वं च। तदन्यघटत्ववृत्तिविषयतासम्बन्धेन ज्ञानं योग्यताज्ञानजन्य-शाब्दव्यापकज्ञानं प्रति हेतुभूतस्य एकत्व-द्वित्व-रूप-तद्धर्मभेदस्य घटत्वे सत्त्वात् इति भावः।

**VV-K. 5.4.4:** एवमिति। 'कर्म गच्छति' इत्यादौ कर्मपदोत्तर-द्वितीयार्थे कर्मत्वत्वावच्छिन्ने कर्मत्वे, आधेयतासम्बन्धेन तद्वतः = कर्मत्ववतः, कर्मण इति यावत्। अन्वयबोधवारणाय कर्मत्वत्वाद्यवच्छिन्ना कर्मत्वनिष्ठावच्छेदकता यस्या ईदृशी या आधेयतासंसर्गावच्छिन्ना कर्मनिष्ठा प्रकारता, तन्निरूपिता धर्मिता कर्मत्वे. तदवच्छेदकता कर्मत्वत्व इति, तेन सम्बन्धेन कर्मत्वत्वे शाब्दापत्तिवारणाय कर्मत्वत्वादिभेदस्य हेतुत्वान्तरकल्पनम् अनादेयमित्यर्थः।

"कर्मवत्कर्मणा तुल्यक्रियः" (पा.३.१.८७) इति सूत्रे कर्मपदोत्तरं वत्-पदार्थतावच्छेदकं यत्सादृश्यं, तद्वृत्तिसादृश्यत्वे कर्मत्वत्वावच्छिन्न-कर्मत्वनिष्ठ-अवच्छेदकतानिरूपित-कर्मनिष्ठाप्रकारतानिरूपिता सादृश्य-निष्ठा धर्मिता, तन्निरूपितावच्छेदकता-सम्बन्धेन कर्मणः शाब्दबुद्धौ कर्मत्वभेदः कारणम्। तच्च न वस्तुतस्तु मते योग्यताज्ञानजन्य-शाब्दव्यापकस्य तद्धर्मान्यवृत्तिविषयतासम्बन्धेन ज्ञानस्य तद्धर्मभेदरूप-सामग्र्यभावात् कर्मत्वत्वे कर्मत्ववतो बोधानापत्तेः। **'घटो न घट' इत्याद्यनुमितेः शाब्दस्य च वारणाय घटत्वावच्छिन्नभेदप्रकारता इत्यादि।** 'पटो न घट' इत्यत्र घटत्वावच्छिन्नस्य यो भेदः तन्निष्ठा या प्रकारता, तन्निरूपिता या पटनिष्ठा धर्मिता तदवच्छेदकतासम्बन्धेन शाब्दबोधः अनुमितिश्च पटत्वे वर्तते। तत्र घटत्वादिभेदोऽस्ति इति। 'घटो न घट' इत्यत्र तु घटत्वे घटत्वभेदाभावात् घटत्वावच्छिन्नभेदनिष्ठ-प्रकारतानिरूपिता धर्मितावच्छेदकता सम्बन्धेन अनुमिति-शाब्दबुद्धौ अत्रापि योग्यताज्ञानजन्यशाब्दव्यापकस्य तद्धर्मान्यवृत्तिविषयता-सम्बन्धेन ज्ञानस्य या तद्धर्मभेदरूपा सामग्री, तदभावादेव घटत्वे घटभेदानुमिति-शाब्दबोधवारणसम्भवे घटत्वभेदस्य पृथक्कारणत्वं न कल्पनीयमिति भावः। **तद्धर्मभेदस्य एकैकेति** घटत्वभेदत्वेन पटभेदत्वेन या कारणता। तथैव 'घटो घटः', 'पट पट' इत्यत्र शाब्दमात्रजनक-पदसमभिव्याहाररूप-आकाङ्क्षा-योग्यता-तात्पर्यज्ञानबलात् आपाद्यमानशाब्दबोध-वारणसम्भवात् इत्यर्थः।

*।। इति व्युत्पत्तिवादे अभेदान्तराविवरणम् ।।*

श्रीधर्मदत्तझा(बच्चाझा)विरचितो

# गूढार्थतत्त्वालोकः

श्रीः

# व्युत्पत्तिवादः

## गूढार्थतत्त्वालोकः

व्याजरवीकृतसेवया विधुरभूदग्रेसर श्रीमता
मानव्याहतिकैतवावनमनादीशरित्रलोकीपति ।
राभिवाञ्छकुलप्रसूतिविभवादम्भोजमब्जालयो
यस्य श्रीगिरिजापदाम्बुजयुग तत्स्यादभीष्टप्रदम् ।। १ ।।
मैथिलान्वयजातेन धर्मदत्तेन धीमता ।
व्युत्पत्तिवाद-गूढार्थतत्त्वालोको वितन्यते ।। २ ।।

**VV-G. 1.1.1-1.2.1:** अथ शब्द-आकाङ्क्षाविज्ञान-विशेषकार्यकारणभाव-विज्ञान-रूपाया व्युत्पत्तेः अनुकूले अन्तरा मतान्तरखण्डनगर्भत्वेऽपि तदुद्देशेन अप्रवृत्ततया जल्पव्यवहारायोग्ये व्युत्पत्तितत्त्वबुभुत्सया आरम्भणीयत्वेन वादपदव्यवहार्ये निकीर्षितसन्दर्भे भेदाभेदान्वयविषयकत्वेन द्विविधे शाब्दबोधे सामान्यतो विशेषतश्च आकाङ्क्षाज्ञानस्य कार्यकारणभावम् **अभेदान्वयबोधश्च** इत्यादिना वक्ष्यति। तत्प्रथममेव शाब्दद्वैविध्यप्रयोजकं सम्बन्धद्वैविध्यं वक्तुम् उचितमिति **क्वचित् अभेदः क्वचित् च तदतिरिक्त** एवेति प्रथमत उक्तम्, तावन्मात्रस्य च परिचायक-साकाङ्क्षत्वेन परिचायकाकाङ्क्षानिवृत्तये तदुक्तिः अपेक्षिता। 'तत्र शाब्दबोधेऽपि संसर्गो भासते, स च' इत्येवम् उक्तौ अविशेषेण वृत्त्युपरथाप्य अभेदादिसंसर्गस्यापि संगृहीतत्वेन तदन्वयबुद्धेः आकाङ्क्षाज्ञान-व्यभिचारितया आकाङ्क्षाज्ञानविशेषकार्य-कारणभाव-बोधकस्य अभेदान्वयबुद्धि-सामान्यकार्यकारण भावबोधपर्यवसायिनः **अभेदान्वयबोधश्च** इत्यादेरसङ्गतिः। एवमाकाङ्क्षाज्ञानप्रयोज्यतत्कार्यतावच्छेदककोटिनिविष्टविषयताश्रय-अखिलसंसर्गा-संग्राहकपरिचायकोक्तौ तदसंगृहीतसंसर्ग-विशेषविषयक-शाब्दबुद्धौ एव आकाङ्क्षा-ज्ञानकार्यकारणभावकथनम् असङ्गतं स्यात्। अनुपक्रान्तविषयकत्वादिति। वृत्तिविषयतावच्छेदकसम्बन्धासङ्ग्राहकम् आकाङ्क्षाभास्याखिलसम्बन्ध-सङ्ग्राहकं परिचायकम् आह - **शाब्दबोधे च** इत्यादिना। तस्य चैकपदार्था-नुयोगिक-अपरपदार्थप्रतियोगिकः संसर्ग आकाङ्क्षा प्रयोज्य-संसर्गत्वाभिन्न-शाब्दबोधनिरूपितविषयतावान् इत्यर्थः।

स च इति। आकाङ्क्षाप्रयोज्य-सांसर्गिकविषयतावान् च इत्यर्थः। अत्र असति बाधक उद्देश्यतावच्छेदकावच्छेदेन विधेयान्वयस्य सर्वानुमततया एकपदार्थानुयोगिक-अपरपदार्थप्रतियोगिक-संसर्गत्वस्य आकाङ्क्षाप्रयोज्य-सांसर्गिक-विषयत्व-व्याप्यतालाभात् उक्तसंसर्गत्वं वृत्तिविषयाखिलसंसर्गादि-व्यावर्तमानं साधकाभावात् आकाङ्क्षाप्रयोज्यसंसर्गता विनिवर्तयति आकाङ्क्षाभास्यसकलसंसर्गे चानुवर्तमानम् अनुवर्तयतीति वृत्तिविषयक-सकलसंसर्गासंग्रह आकाङ्क्षाभास्य-सकलसंसर्ग-सग्रहश्च।

अथ (१)एकं यत्पदं तदर्थ इत्यर्थः, (२)एकस्मिन् पदार्थ इति वा अर्थः, (३)एकत्ववत्पदार्थतावच्छेदकावच्छिन्न इत्येव अर्थ एकपदार्थ इत्यस्य विवक्षितः। तत्र न आद्य, आख्यातार्थ-काल-कृत्योः आकाङ्क्षाभास्यससर्गस्य असंग्राहकत्वात्। न द्वितीयः। आकाङ्क्षाभास्य-तादात्म्यस्य असंग्राहकत्वात्। अनुयोगि-प्रतियोगिनोः भेदविरहात्। न तृतीयः। 'सम्पन्नो व्रीहिः' इत्यादौ पदार्थतावच्छेदकानवच्छिन्न-व्रीहित्वैकत्वसंसर्गस्य आकाङ्क्षाभास्यस्य संग्रहासम्भवात्। न च व्रीहित्वे अन्वयपक्षो न सिद्धान्त इति तृतीये न दोष इति वाच्यम्। 'चैत्रस्य गुरुकुलम्' इत्यत्र गुरुत्वस्य सखण्डतया अन्वयितावच्छेदकरूपेण उपस्थितिसम्भवेन पदार्थतावच्छेदके तत्र पदार्थान्तरान्वयस्य सम्मततया तत्संसर्गासंग्रहात्। न च गुरुत्वस्यापि पदार्थतावच्छेदकत्वात् न दोष इति वाच्यम्। साक्षात्परम्परा-साधारणावच्छेदकत्वस्य विवक्षणे लाङ्गूलत्व-लोमत्वयोरपि पशुपदार्थतावच्छेदक-तया तदवच्छिन्नयोः अन्वयस्य वृत्तिविषयस्य संग्रहप्रसङ्गात्। यत्तु एकत्वापरत्वयोः अविशेषितयोः सर्वसाधारणत्वात् उपादान-वैफल्यं, विशेषितयोः उपादाने अननुगम इति तन्न। पदविशिष्ट-सांसर्गिकविषयत्वादिप्रवेशे दोषासम्भवात्। वैशिष्ट्यञ्च स्वप्रयोज्यप्रकारताकत्व-स्वभिन्नपदप्रयोज्यविशेष्यताकत्व-उभयसम्बन्धेन विवक्षितम्। एतेन एकस्यैव संसर्गस्य पदार्थतया आकाङ्क्षाभास्यतया न संग्रहो न दोषाधायकः। कृति-प्रकारतानिरूपित-चैत्रादिविशेष्यताक-समवायनिष्ठ-संसर्गतायाः पद-विशिष्टत्वेऽपि घटत्व-प्रकारता-निरूपित-घटविशेष्यताक समवाय-निष्ठ-संसर्गतायाः पदविशिष्टत्वासम्भवेन तद्ग्रहणासम्भवात्। न चैवं तृतीये स्वावच्छिन्नविशेष्यताकत्व-स्वभिन्नधर्मावच्छिन्नप्रकारताकत्व-उभयसम्बन्धेन पदार्थता-वच्छेदकविशिष्टत्वं धर्मविशिष्टत्वं वा प्रवेश्यम्। तदुभयमपि लोमत्व लाङ्गूलत्वयोः लोमलाङ्गूल-पदार्थतावच्छेदकत्वात् धर्मत्वाच्च पशुपदार्थतावच्छेदकघटक-लोम-लाङ्गूल-उभयसंसर्गत्व-संग्राहकत्वात् न सम्भवदुक्तिकम्। अत्र हि पदस्य विशिष्य प्रवेशो न सम्भवत्येवेति वाच्यम्। वृत्तिज्ञानीयविषयताप्रयोज्य-उपस्थितीय-मुख्यविशेष्यता-निरूपित-प्रकारता-विशिष्टत्वस्य संभवद् उक्तिकत्वात्।

(१)स्वप्रयोज्य-अवच्छेदकताक प्रकारताकत्व (२)स्वाभिन्न तादृश-प्रकारता-प्रयोज्य-अवच्छेदकताक-विशेष्यताकत्व उभयसम्बन्धेन वैशिष्ट्यद्वयस्य च वाच्यत्वात्। पशुत्व-लोमत्वावच्छेदकत्वयो मुख्यविशेष्यतानिरूपित-प्रकारत्व अप्रयोज्यत्वात् उक्तसंसर्गत्व-संग्रहस्य असम्भवात्। यदि च अत्र षष्ठ्यर्थ-प्रतियोगित्वस्य स्वाश्रयगुरुत्वसम्बन्धेन एकदेशान्वयभीत्या गुरौ एकान्वय स्वीक्रियते इति तृतीये न दोषः। न च गुरुत्वस्य स्वनिरूपकतया नित्यसाकाङ्क्षत्वेन निरूपकेण अनन्वयः. आकाङ्क्षाप्रशमात् एकदेशान्वयोऽपि स्वीकार्य। व्रीहित्व च न एवं नित्यसाकाङ्क्षमिति तत्र स्वाश्रयव्रीहित्वसम्बन्धेन अन्वयेऽपि न क्षतिः इति वाच्यम्। संसर्गघटकतया निरूपकत्वज्ञानस्यापि आकाङ्क्षानिवर्तकत्वाभ्युपगमस्य एकदेशानन्वयनियमभङ्गापेक्षया अभ्यर्हितत्त्वादिति विभाव्यते. तदापि 'इदं रजतम्' इति प्रत्यक्षसाधारणप्रवर्तकतावच्छेदकधर्मनिर्वाहाय 'इदं रजतम्' इति वाक्यजज्ञानं इदमर्थे स्वरूपतो रजतत्वभानस्य स्वीकृततया रजतत्वनिष्ठप्रकारतानिरूपित-इदन्त्वावच्छिन्नविशेष्यताकसंसर्गतायाः सग्रहासम्भवात्। एवं 'घटो नास्ति' इत्यादौ स्वरूपतो भासमानघटत्वस्य अवच्छिन्नप्रतियोगिताकत्वसम्बन्धेन अभावे अन्वयाभ्युपगमात् तत्संसर्गतया अपि असंग्रहादिति चेत् ?

अत्र केचित्। एकपदार्थेऽपरपदार्थस्य संसर्ग इत्यस्य उपस्थितीय-विषयताविशिष्टसंसर्गतावान् इत्यर्थः। वैशिष्ट्यञ्च स्वप्रयोज्यप्रकारता-निरूपितत्व-स्वानिरूपितविषयताप्रयोज्यविशेष्यताकत्वोभयसम्बन्धेन वाच्यम्। अत्र स्वानिरूपिता इत्यत्र निरूपितत्वं साक्षात्पराम्परासाधारणं विषयतात्वेनैव च प्रकारता-विशेष्यतयोः प्रवेशः कार्यः इत्यपि सुवचम्। प्रकारतात्वादिप्रवेशात् साक्षात्पराम्परासाधारण-निरूपितत्वस्य प्रवेशाद् वा उपस्थितीय-संसर्गतावच्छेदकत्वात्मक-विषयताप्रयोज्य-शाब्दबोधीयसंसर्गत्वावच्छेदकत्वात्मक-विषयतानिरूपितत्वस्य साक्षात् तदनिरूपित-विशेष्यत्वाद्यात्मकविषयताप्रयोज्यविषयतानिरूपितत्वस्य च वृत्तिप्रयोज्य-संसर्गतायां सत्त्वेऽपि न तत्संग्रह इति वदन्ति।

तन्मन्दम्। 'नीलो घट', 'नीलः कलशः' इति द्विविधाकाङ्क्षाज्ञाने घटपदस्य घटे शक्तिग्रहे तदुत्तरविभक्तेः एकत्वे शक्तिग्रहे कलश-पदस्य एकत्व-विशिष्टघटे लक्षणाग्रहे च 'एको घटो नील' इति शाब्दबोधे घटत्व-घटविषयताया विनिगमका-भावेन वृत्तिद्वय-ज्ञानजन्य-उपस्थितीय-द्विविधविषयता-प्रयोज्यत्वेन उपस्थित्योः असमानाकारकतया तदीयविषयत्वयोः परस्परनिरूप्य-निरूपक-भावासम्भवेन च एकोपस्थितीय-घटत्व-विषयता-वैशिष्ट्यस्य समवायनिष्ठ-सांसर्गिक-विषयतायां वृत्तिप्रयोज्यायां सत्त्वेन तत्संग्रहप्रसङ्गात्। न च स्वानिरूपितत्व-इत्यादि-संसर्गं विहाय स्वनिरूपितविषयत्वाप्रयोज्यविशेष्यताकत्वमेव

संसर्गतया उपादेयम्। तथा च स्व-अनिरूपित विषयता-प्रयोज्यत्वमिव स्वनिरूपित-विषयता-प्रयोज्यत्वमपि घटविशेष्यतायाम् अस्तीति न दोषः। एकत्वप्रकारता-निरूपित-संसर्गतायां वृत्तिज्ञानीय-विषयताप्रयोज्यत्वस्य इव आकाङ्क्षा-प्रयोज्यत्वस्यापि सत्त्वेन तत्संग्रहो न दोषाय इति वाच्यम्। 'संयोगेन अभावो नास्ति' इति वाक्यजन्य-शाब्दबोधे नञर्थाभावे अवच्छिन्नप्रतियोगिताकत्व-सम्बन्धेन अभावत्वस्य अन्विततया आकाङ्क्षा-प्रयोज्याया तत्संसर्गताया असंग्रहापत्तेः नञ्पद-अभावपद-जन्योपस्थित्योः समानाकारकत्वेन तदीयविषयतयोः निरूप्य-निरूपक-भावेन अभावत्वविषयता-निरूपित-विषयताप्रयोज्यत्वस्यैव अभाव-विषयतायां सत्त्वात्।

परे तु पदार्थत्वं च पदवृत्तिज्ञानीयविषयताप्रयोज्यविषयत्वं तद्घटकवृत्ति-ज्ञानीय-विषयत्व एव एकत्वापरत्वयोः अन्वयः। तथा सति संसर्गताविशिष्टसंसर्गत्वं पर्यवसितार्थः। वैशिष्ट्यञ्च (१)स्वनिरूपकप्रकारता-प्रयोजक-वृत्तिज्ञानीय-विषयता-निरूपित-विषयत्वाप्रयोज्य-विशेष्यताकत्व-(२)स्वतादात्म्य-उभयसम्बन्धेन। एवञ्च अभावपद-नञ्पद-वृत्तिज्ञानयोः असमानाकारकतया नञ्पदप्रयोज्यविषयतायाः प्रतियोगित्व-सम्बन्धावच्छिन्न-प्रकारता-निरूपितविशेष्यतात्वस्यैव अनुभवसिद्धत्वेन उभयपद-वृत्तिज्ञानीय-विषयतयोः विनिगमकाभावेन प्रकारत्व-विशेष्यत्वयोः प्रयोजकत्वस्य वक्तुम् अशक्यत्वात् न उक्तदोष इत्याहुः। तदपि तत्प्रयोज्यत्वस्य स्वप्रयोज्य-उपस्थितीय-विषयता-प्रयोज्यत्व-अनतिरिक्तत्व उपस्थितीय-विषयतयोः अनतिरिक्ततया उक्तदोष-तादवस्थ्यात्। अतिरिक्तत्वेऽपि नञ्द्वयगर्भ-वाक्यस्थले वृत्तिज्ञानयोः अपि समानाकारकत्वात् अभावत्वाभावयोः भासमानावच्छिन्न-प्रतियोगिताकत्व-संसर्गत्वासंग्राहकत्वात् उपेक्षणीयम्। अत्र च स्वनिरूपकप्रकारता-प्रयोजक-वृत्तिज्ञानीयविषयतानिरूपित-विषयत्वाप्रयोज्यत्वस्य संसर्गत्वे न कोऽपि दोषो यद्यपि सम्भवति, तथापि तस्य तथात्वे वृत्त्यविषयसंसर्गः संसर्गमर्यादया भासते इति। अस्यैव लिखितुम् उचितत्वेन तदुपेक्षाया निर्बीजत्वापत्तेः तदुपेक्षणीयम्। न च तथैव कथं नोक्तम् इत्याशङ्कनीयम्। शाब्दबोधविषयो हि संसर्गो द्विविधो। वृत्तिभास्य आकाङ्क्षाभास्यश्च। तत्र एकभेदेन अपरो न लक्षणीयः। विनिगमकाभावेन परस्परलक्षणत्वापत्त्या लक्षणकार्य इतरेतराश्रय-प्रसङ्गात्। प्राक् उपदर्शितस्य वृत्तिविषयस्य आकाङ्क्षाभास्य-संसर्गस्य असंग्रह-प्रसङ्गाच्च। तस्मात् **एकपदार्थ** इत्यादेरन्यत्रैव तात्पर्यस्य वक्तव्यत्वात् इति चेत् ?

अत्राहुः - पदार्थान्तरत्वव्यवहारो हि पदभेदप्रयुक्तो वृत्तिभेदप्रयुक्तश्च परिदृश्यते इति। तदुभयसाधारणम् एव अपरपदार्थत्वम् अत्र विवक्षितम्। तथा सति संसर्गताविशिष्टसंसर्गत्वं पर्यवसितार्थः। वैशिष्ट्यञ्च स्वतादात्म्य-स्वनिरूपित-प्रकारता-विशिष्टविशेष्यताकत्व-उभयसम्बन्धेन। वैशिष्ट्यञ्च स्वप्रयोजकपदभिन्न-

पदप्रयोज्यत्व-स्वप्रयोजक वृत्तिज्ञानीय-विषयतानिरूपित-विषयत्वाप्रयोज्यत्वान्यतर-सम्बन्धेन। नञ्द्वयगर्भ-वाक्यस्थले एकनञ्पदार्थीभूताभावत्व-निष्ठप्रकारता-विशिष्ट-अपरनञ्-पदार्थीभूत-अभावनिष्ठ-विशेष्यताया सत्त्वात् तदुभय-प्रयोजक-पदयोः भिन्नत्वात् तन्निरूपितसंसर्गताया न असङ्ग्रहः। घटत्वप्रकारत्व-घटविशेष्यत्वयोः प्रयोजकपदभेदाभावात् तन्निरूपित-संसर्गताया न सङ्ग्रहः। न च 'घटोऽस्ति', 'कलशोऽस्ति' इति द्विविधाकाङ्क्षा-समूहालम्बनज्ञानोत्तरं घट-कलश-उभयपद-वृत्तिज्ञानजन्य-घटोपस्थिते घटशाब्दबुद्धौ घटत्व-प्रकारत्व-घट-विशेष्यत्वयोः विनिगमकाभावेन पदयोः प्रयोजकत्वात् तन्निरूपित-संसर्गत्व-संग्रहापत्तिः। स्वप्रयोजक-पदसामान्यभिन्नत्वगर्भ संसर्गस्य स्वप्रयोजक-पद-अप्रयोज्यत्वस्य वा निवेशे नञ्द्वयगर्भवाक्यस्थलीय संसर्गासंग्रह इति वाच्यम्। स्वप्रयोजक-पदनिष्ठ-आकाङ्क्षाज्ञानीय-विषयतानिरूपित-सांसर्गिक-विषयतानिरूपित-पदनिष्ठविषयता-प्रयोज्यत्व-संसर्गस्यैव तेन विवक्षणात् घटपद-कलशपद-विषयतयोः निरूप्य-निरूपक-भावविरहात् न तत्र तत्संसर्गता-संग्रहः। नञ्द्वयगर्भवाक्यस्थले नञ्पदयोः साकाङ्क्षत्वात् तत्रत्यसंसर्गतासंग्रहः। स्वप्रयोजकविषयत्वं च इह स्वप्रयोजक-वृत्तिज्ञानीय-विषयतासमानाधिकरणं ग्राह्यम्। तेन कार्यतावच्छेदकघटक-निखिल-विषयतानां कारणतावच्छेदककोटिप्रविष्ट-सकलपद-विषयता-प्रयोज्यत्वेऽपि न वृत्तिप्रयोज्यसंसर्गता-सङ्ग्रहप्रसङ्गः। एवञ्च स्वप्रयोज्यत्वमपि स्वसमानाधिकरण-वृत्तिज्ञानीय-विषयताप्रयोज्यत्वरूपमेव बोद्ध्यम्। स्वप्रयोजकवृत्तिज्ञानीय-विषयता-समानाधिकरणत्वेन आकाङ्क्षाज्ञानीय-विषयतोपादानेऽपि स्वप्रयोजकत्वमुपादेयम्। अन्यथा 'अस्ति घटः', 'कलशोऽस्ति' इत्यादौ एकस्य तदुभयवाक्यज्ञानं घटपद-कलशपदयोः घटे शक्तिग्रहः। अपरस्य घटपद-कलशपदयोः समभिव्याहारज्ञानं घटपदस्य घटे कलशपदस्य कम्बुग्रीवादिमति वृत्तिज्ञानम्। तत्र घट-घटत्वयोः संसर्गविषयत्व-सङ्ग्रहापत्तेः। स्वप्रयोजकवृत्तिज्ञानीय इत्यादि-सम्बन्ध-प्रवेशात् आख्यात-एव-कारादि-स्थलीयसंसर्गता-सङ्ग्रहः। केचित्तु पदविशिष्ट-संसर्गतायाम् एकपदार्थ इत्यादेः तात्पर्यम्। पदवैशिष्ट्यञ्च स्वविशिष्टविशेष्यताकत्व-स्वविशिष्ट-प्रकारताकत्व-अन्यतरसम्बन्धेन। प्रथमसम्बन्ध-घटकवैशिष्ट्यं स्ववृत्ति-ज्ञानीय-विषयता-प्रयोज्यत्व-स्ववृत्तिज्ञानीय-मुख्यविशेष्यता-प्रयोज्य-प्रकारताकत्व-उभयसम्बन्धेन। प्रथमसम्बन्धकथनं तु एकपदार्थद्वयनिरूपित-संसर्गतामात्रस्य सङ्ग्राहकतया प्रथमसम्बन्धोपन्यास इति सूचयितुं न च अस्ति तत्फलमिति बोध्यम्। द्वितीयसम्बन्ध-घटकवैशिष्ट्यञ्च स्ववृत्तिज्ञानीय-विषयताप्रयोज्यत्व-स्वभिन्नपद-वृत्तिज्ञानीय-विषयता-प्रयोज्यविशेष्यताकत्व-उभयसम्बन्धेन। तथा च आख्यातार्थ-द्वयनिरूपित-संसर्गतायाः पदद्वयार्थ-निरूपित-संसर्गतायाः संग्रहः,

पदार्थ-पदार्थतावच्छेदकद्वय-निरूपित-संसर्गताया न संग्रह इति वदन्ति। तदपि एवकारार्थ-व्यवच्छेदनिरूपिताया अन्ययोगत्वनिरूपितायाः च अवच्छिन्नप्रतियोगिता-कत्व-संसर्गताया आकाङ्क्षाप्रयोज्याया असङ्ग्रहात् उपेक्षणीयम्। अथवा सामान्यत आकाङ्क्षाज्ञान-शाब्दबोधयोः कार्यकारणभावे सत्येव आकाङ्क्षाज्ञान-विशेष-शाब्दविशेषयोः कार्यकारणभाव-विचारात्मक-उक्तग्रन्थ प्रवृत्तिः सम्भवति, नान्यथा। न च तत्कार्यकारणभावस्य सम्भवः। तथा हि एकत्वाविवक्षायां 'घट' इति कर्तृकारकपदे प्रयुक्ते तस्मात् घटोपस्थितौ प्रमाणान्तराद् अस्तित्वादि-योग्यक्रियायाम् उपस्थितायं विना एव आकाङ्क्षाज्ञानं 'घटोऽस्ति' इति शाब्दबुद्ध्युत्पत्तेः प्रभाकर-सम्मतत्वात्।

पश्यतः श्वेतिमारूपं ह्रेषाशब्दं च शृण्वतः।
खुरविक्षेपशब्दं च श्वेतोऽश्वो धावतीति धीः।।

इति शाब्दप्रकरणे भट्टोक्तेः श्वैत्यादिज्ञानस्य प्रत्यक्षादिजन्यत्वेऽपि विशिष्टज्ञानस्य अलौकिकप्रत्यासत्त्यनङ्गीकर्तुः तस्य मते प्रमाणपञ्चकाजन्यत्वेन शाब्दमतौ अन्तर्भावनीयत्वात्; तस्यापि आकाङ्क्षाज्ञानं विनैव उत्पत्तेः आकाङ्क्षाज्ञानस्य व्यतिरेकव्यभिचारात् इति तत्समाधित्सया उक्तमतद्वयप्रतिक्षेपाय शाब्दबुद्धित्वा-वच्छेदेन एकपदार्थप्रतियोगिक-अपरपदार्थानुयोगिक-संसर्गस्य विषयत्वं दर्शयति - **शाब्दबोधे चेत्यादिना**। अत्र चैकत्वम् अपरत्वं च पदे एव अन्वेति। नास्ति कोऽपि तादृश-शाब्दबोधो न यः पदद्वयार्थसंसर्गम् अवगाहते। उक्तज्ञानद्वयस्य अलौकिक-प्रत्यक्षत्वमेव अभ्युपेयते इति न व्यभिचारः। पदार्थत्वं च पदवृत्त्युपस्थाप्यत्वरूपम् इह विवक्षितमेव। तेन उक्तोपस्थितिविषयत्व-संसर्गत्वयोः एककालतालाभाभावात् यदा कदाचित् उपस्थितिविषयत्वम् आदाय न उक्तस्थल उक्तसंसर्ग-विषयत्व-प्रसङ्गः। एवञ्च **स चेति** अवयुत्य शाब्दबोध-विषयसंसर्गम् आह। तेन एकपदार्थ-द्वयसंसर्गासङ्ग्रहनिबन्धनासङ्गतेः न प्रसङ्गः इति **शाब्दबोधे चेति**। च-कारः तु-अर्थः अनुमानादितो वैलक्षण्यम् उपदर्शयति। तच्च अनुपपन्नं, प्रयोजकविशेषम् अपेक्षमाणम् आकाङ्क्षाज्ञानम् एव उपक्षिपति इति तत्कार्यकारणभाव-दार्ढ्याय भवतीति सर्वमवदातम्।

**क्वचिच्च तदतिरिक्त एव** इत्यनेन अभेदातिरिक्त-सम्बन्धानां तेषां सर्वेषां संग्रहेऽपि के ते सम्बन्धा इत्याकाङ्क्षाया अनतिवृत्तित्वात् तन्निवृत्तये तद्विशेषान् आह - **आधाराधेयेत्यादि**। अत्र द्वन्द्वान्ते श्रूयमाणस्य भाव-पदस्य प्रत्येकेण अभिसम्बन्धात् आधाराधेयभावादिलाभः। विषयविषयिभावादिरिति। अयं सम्बन्धो धात्वर्थस्य सन्नर्थ-इच्छादौ वेदितव्यः। आदिपदात् जन्यजनकभाव-समवाय-स्वरूपादि-परिग्रहः।

अथ आधाराधेय-भावादीनां यत्सम्बन्धत्वोक्तिः तत्किं (१)मिलितयोः आधारत्व-आधेयत्वयोः (२)आहोस्वित् प्रत्येकस्य (३)उत वा उभयसाधारण-एक-अखण्डोपाधि-विशेषस्य। न आद्यः। उभयोः एकत्र अवर्तमानत्वात्। न द्वितीयः। आधारत्वादीनां स्वसिद्धान्ते क्वापि संसर्गत्वादर्शनात्। न तृतीयः। आधेयत्वादिना एव विशिष्टबुद्धि-उपपत्तौ तत्र मानाभावात्। न च संयोगादि-प्रसिद्ध-सम्बन्धानाम् उभयनिष्ठत्व-दर्शनात् विभक्त्यर्थकर्मत्वादौ प्रातिपदिकार्थस्य संसर्गतया भासमाने विवादाध्यासितसंसर्गेऽपि तथात्वमेव उचितमिति तत्सिद्धिरिति वाच्यम्। साधर्म्यस्य बलवत्प्रमाणपक्षपातं विना अभिमतार्थोपगमयायित्वात्। अन्यथा संयोगस्य समवायेन उभयत्र सतः संसर्गत्वदर्शनात् अत्रापि तथा स्यात्। तत्किं सम्बन्ध्य-सम्बद्धस्यैव सम्बन्धत्वम् ? न। तेन तेन सम्बन्धेन प्रतिनियतेन तत्तत्सम्बन्धिनि सम्बद्धस्य। अथ तर्हि कः प्रत्याख्येय इति चेत् ? एकसम्बन्धेन सम्बन्धिनोः सम्बद्धत्वं बलवत्तरप्रमाणाभावात्। एवञ्च आधेये स्वरूपेण आधारे निरूपकतया प्रत्यासन्नस्य आधेयत्वस्य संसर्गत्वे न कापि हानिरिति चेत्? न। प्राचीन-नवीन-मत-भेदेन आधारत्वाधेयत्वयोः प्रत्येकं सम्बन्धत्वात् उभयमतानुरोधेन पक्षपातपरित्यागेन तथोक्तेः। यद्वा आधारतानिरूपिताधेयत्व-प्रतियोगितानिरूपित-अनुयोगितात्वादीनां संसर्गतामतम् आलम्ब्य इयमुक्तिः। तत्र वह्नित्वावच्छिन्नत्व-प्रतियोगित्वस्य संसर्गत्वे वह्नित्वावच्छिन्नत्व-प्रतियोगित्वानां संसर्गत्वम् इव आधारत्व-आधेयत्वाद्योः उभयोः संसर्गत्वोपपत्तिरिति ध्येयम्।

**VV-G. 2.1.1: अभेदश्च प्रातिपदिकार्थ** इत्यादि। एतेन 'वह्निमत्येव धूम' इत्यत्र वह्निव्याप्यत्वम् इव आकाङ्क्षाप्रयोज्य-अभेदनिष्ठ-सांसर्गिकविषयतात्वस्य प्रातिपदिक-विशिष्टत्व-व्याप्यत्वं लभ्यते। वैशिष्ट्यञ्च स्वप्रयोज्य-विशेष्यताकत्व-स्वविशिष्ट-प्रकारताकत्व-उभयसम्बन्धेन। स्ववैशिष्ट्यञ्च स्वप्रकृतिक-विभक्ति-सजातीय-विभक्तिकत्व-स्वाव्यवहित-पूर्ववर्तित्व-अन्यतर-सम्बन्धेन। स्वविशिष्ट-प्रातिपदिक-प्रयोज्यत्वसम्बन्धेन। न च क्रियाविशेषणस्थले व्याप्यत्वहानिरिति वाच्यम्। अभेदः संसर्गः प्रातिपदिकार्थे स्वसमानविभक्तिकपदोपस्थापितार्थस्यैव इति हि न योजना। किन्तु प्रातिपदिकार्थे अभेदसंसर्गः तथाविधार्थस्यैव इति। तथा सति प्रातिपदिकार्थानुयोगिक-अभेदसंसर्गे स्वसमानविभक्तिक-पदोपस्थाप्य-अर्थातिरिक्त-प्रतियोगिकत्व-व्यवच्छेदवति सांसर्गिक-विषयत्वलाभेन प्रातिपदिकार्थ-निष्ठ-विशेष्यतानिरूपित-आकाङ्क्षाप्रयोज्य-सांसर्गिकविषयतात्वस्य व्याप्यतालाभात् उक्तदोषासम्भवात्। अथ एतद्व्यापकम् अर्धपिप्पल्यादि-पूर्वपदार्थप्रधान-समास-स्थले पिप्पली-पदलक्ष्यार्थ-पिप्पली-सम्बन्धि-प्रतियोगिक-अर्ध-पदार्थानुयोगिक-संसर्गनिष्ठ-विषयतायाम् अवर्तमानं ततो व्याप्यं विनिवर्तयति इति

प्रातिपदिकार्थयोः अभेदान्वयनियम-भङ्ग इति चेत् ? न। पूर्वपदार्थप्रधान-समासस्थले उत्तरपदस्यैव पूर्वपदार्थघटितार्थे लक्षणास्वीकारेण पूर्वपदस्य तात्पर्यमात्र-ग्राहकतया तत्रत्य-सांसर्गिक-विषयतायां व्याप्यनिवृत्तेः इष्टत्वात्। पूर्वोत्तरपदार्थयोः अन्वयपक्षे च स्वविशिष्ट-प्रातिपदिक-प्रयोज्यत्वस्यैव संसर्गत्वं वाच्यम्। वैशिष्ट्यञ्च स्वाव्यवहितोत्तरत्वघटित-अन्यतमसम्बन्धेन बोध्यम्। प्रातिपदिकत्वप्रवेशाच्च 'घटः पचति चैत्रः' इत्यादौ घट-एकत्व-संसर्गविषयतायां चैत्र-कृति-संसर्ग-विषयतायां च न व्यापक-सत्त्वप्रसङ्गः। न च तत्सत्त्वेऽपि का हानिरिति वाच्यम्। उक्तव्याप्यप्रयोजकान्तरस्य दुर्वचतया भेद एव संसर्गमर्यादया भासते इति। समभिव्याहारकल्पनया वा तयोः परस्परव्याप्यव्यापकभावे पर्यवसानेन उक्तसांसर्गिक-विषयतायाम् अभेदसंसर्गतात्वापत्तेः इति। द्वितीयव्याप्यव्यापकभावश्च यत्र यत्र पदविशिष्टसांसर्गिकविषयतात्वं तत्र तत्र अभेदसंसर्गतात्वम् इति। वैशिष्ट्यञ्च स्वप्रयोज्यविशेष्यताकत्व-स्वविशिष्टप्रातिपदिकप्रयोज्य-प्रकारताकत्व-उभयसम्बन्धेन स्ववैशिष्ट्यमुक्तान्यतम-सम्बन्धेन।

'नीलो घटः', 'नीलघटम् आनय' इत्यादि। अत्र प्रथमान्तपदघटित-व्यस्त-वाक्यम् उदाहृत्य प्रथमान्तमेव समस्तवाक्यम् उदाहर्तुम् उचितम्। तत्परित्यागबीजं तु मृग्यम्। क्वचिच्च 'नीलं घटम् आनय' इत्यादौ इत्येव पाठः। आदिपदाच्च तृतीयाद्यन्त-पदघटितवाक्य-समस्तवाक्यपरिग्रहः। तत्र च नानुपपत्तिः। विरुद्धविभक्तिमदिति। विरुद्धत्वं यद्यपि असमानाधिकरणत्वमेव प्रसिद्धं, तथापि विधर्म-इत्यादौ इव अत्रापि वि-शब्दो विरुद्धवचनः। तथा च विरुद्धेन रुद्धो विरुद्धधर्मवान् इत्यर्थः विरुद्धशब्दस्य। विरोध-प्रतियोगि-धर्मश्च प्रथमात्वादिः तत्र तत्र ग्राह्य इति तत्समान-विभक्तिकत्व-विपरीते पर्यवसन्नम्। 'नीलस्य घटः' इत्यादौ इति। सप्तम्याः प्रयोज्यत्वमर्थः। तथा च तादृश-वाक्यप्रयोज्यत्व-प्रकारक-अनुभवविषयत्व-अभाववत्त्वात् तादृशबोधस्य इति तात्पर्यार्थः। तेन उक्तप्रयोज्यत्व-विशिष्ट-उक्तबोधस्य अप्रसिद्धत्वेऽपि न क्षतिः।

**VV-G. 2.2.1:** विभक्तिविभाजकेति। अत्र विभक्तित्वेन न विभाज्यता अपि तु सुप्त्वेन तथा सति विभक्तित्वव्याप्यत्वे सति विभक्तित्व-व्याप्याव्याप्यत्वरूपस्य विभक्तित्वेन विभक्तिविभाजकत्वस्य प्रथमात्वे असम्भवात् प्रथमात्वादिना इत्यस्य असङ्गत्यापत्तेः। सुप्त्वं च स्वादि-एकविंशति-विभक्तिसाधारणं सङ्केतविशेष-सम्बन्धेन सुप्पदवत्त्वमेव। न च एवंविध सुप्त्वज्ञानाभावकाले समानविभक्तिकत्वस्य दुर्ज्ञेयत्वात् अभेदान्वयबोधानुपपत्तिः। न हि समानविभक्तिकत्वं स्वरूपसदेव शाब्दबोधोपयोगि, समानविभक्तिकस्थलेऽपि विरुद्धविभक्तिकत्वज्ञानदशायां शाब्दमतेः अनुत्पादात् इति वाच्यम्। उक्तसमानविभक्तिकत्वादीनां कारणावच्छेदक-

घटकत्व-अनभ्युपगमात् शिष्याणाम् अवगतिसौलभ्याय तत्प्रदर्शनस्य शब्दानुगम-मात्रत्वात्। एतेन प्रदर्श्यमान-निगमेषु अपि ईदृश-शङ्कानां न अवकाशः। न च **प्रथमात्वादिना** इति व्यर्थम्। सुब्विभाजकत्वस्य तेषु एव सत्त्वात् इति वाच्यम्। तदुपादानादेव सुप्त्वेन विभाज्यतालाभात्। न च सुब्विभाजकधर्मेण इत्येव कुतो नोक्तम् इति वाच्यम्। कोऽसौ सुब्विभाजको धर्म इत्याकाङ्क्षा-निवृत्तये **प्रथमात्वादिना** इत्यस्य वक्तव्यत्वे विशेषाभावात्। वस्तुतः प्रथमात्वाद्यन्यतम-पुरस्कारेणैव साजात्ये तात्पर्यम्। तथा हि सुब्विभाजकत्वं सुप्त्वव्याप्यत्वे सति सुप्त्वव्याप्याव्याप्यत्वं, विभक्तित्वस्य विभाजकत्ववारणाय सत्यन्तम्। तदपि स्वसमानाधिकरणत्वे सति स्वसमानाधिकरण भेदप्रतियोगितावच्छेदकत्व-रूपमेव वाच्यम्। तेन सुप्त्वस्य न विभाजकत्व-प्रसक्तिः। अत्र सत्यन्तोपादानात् तिङ्त्वादि-वारणम्। सुप्त्वादीनां विभाजकत्ववारणाय विशेष्यम्। तत्र सुप्त्वव्याप्य-प्रथमात्वादिव्याप्यत्वस्य प्रथमात्वादौ व्यावृत्तये द्वितीयं व्याप्यत्वं न्यूनवृत्तित्वरूपम् एव वक्तव्यम्। प्राथमिकं च व्याप्यत्वं लाघवात् सामानाधिकरण्य-अविशेषितं स्वसमानाधिकरण-भेदप्रतियोगितावच्छेदकत्वरूपम् उपादेयम्। तत्र सुप्त्वव्याप्य-सु-अम्-आदिगत-अन्यतरत्व-व्याप्यत्वस्य प्रथमात्वादौ वारणाय स्वव्याप्यं स्वाश्रय-वृत्तित्व-स्व-अनाश्रयवृत्तित्व-उभयसम्बन्धेन प्रथमात्वादिमदन्यत्वेन विशेषणीयम्। एवञ्च तिङ्त्वादिवारणाय सुप्त्वसामानाधिकरण्यं सु-अम्-आदि-अन्यतरत्ववारणाय प्रथमात्वादिमदन्यत्वं च उपादाय तदुभयविशिष्टधर्मेण साजात्यं वाच्यम्। सुत्व-औत्वादि-सङ्ग्रहेऽपि क्षत्यभावात् इति। एतस्य लाघवात् अङ्गीकर्तव्यतायां प्रथमात्वादिमदन्यत्व-अन्यतम-घटितधर्मेण साजात्यापेक्षया लाघवेन उचितोपादेय-भावस्य प्रथमात्वाद्यन्यतमधर्मेण साजात्यस्य वक्तव्यतापत्तौ अगत्या प्रथमात्वादि-शब्देन उपादाने असङ्ग्राह्य-अन्यतमत्वादि-सङ्ग्रहो मा प्रसाङ्क्षीद् इति उपरञ्जकतया सुब्विभाजकत्वं तत्त्वेन तान्त्रिकव्यवहार-विषयत्व-लक्षणम् उक्तम् इति। अस्य वक्तव्यतया प्रथमात्वाद्यन्यतम-धर्मेण साजात्ये तात्पर्यमवधार्यते इति।

**समानानुपूर्वीकत्वमिति**। तच्च स्ववृत्त्यानुपूर्वी-सजातीय-आनुपूर्वीमत्त्वम्। आनुपूर्वी च वर्णानां पूर्वापरीभावः। अथ आनुपूर्व्याः केन रूपेण प्रवेशः। न तावत् तत्तद्वर्णोत्तर-तत्तद्वर्णत्वत्वेन अननुगमेन सामान्यस्य असम्भवेन। तन्निबन्धन-व्यवहारस्य विलयप्रसङ्गात्। घटपद-समानानुपूर्वीकत्वस्य नीलघट-पदे प्रसङ्गाच्च। तत्रापि घकारोत्तर-अकारोत्तर-टकारोत्तर-अत्वस्य सत्त्वात्। (१)स्वघटकता-अनवच्छेदकावच्छिन्न-अघटितत्व-(२)स्वघटकतानवच्छेदकावच्छिन्न-अघटितत्व-सम्बन्धावच्छिन्न-स्ववृत्तित्व-उभयसम्बन्धेन पद-विशिष्ट-पदत्वस्यैव तत्त्वमित्यपि न वक्तुम् उचितम्। लता-ताल-पदयोः समानानुपूर्वीकत्व-प्रसङ्गात्,

पदत्वस्यापि अनुगतत्व-अभावाच्च। न च अर्थबोधप्रयोजकता-अवच्छेदकधर्मत्वेन तत्प्रवेशः कार्यः। तथा हि न अननुगमः। स च घत्वं पदाश्रयविशेषः तदुत्तर-अकारो अत्वं च। घकारोत्तर-अकारोत्तर-टकारः। टत्वं तु तादृश-टकारोत्तर-अकार इत्येते यावन्तः पदार्थाः तद्गत-समुदायत्वमिति वाच्यम्। निरर्थकयोः समान-आनुपूर्वीकत्व-अनुपपत्तेः इति यद्धर्मावच्छिन्ने यद्धर्मावच्छिन्न-समानानुपूर्वीकत्वं विवक्षितं विषयतया तद्धर्म-समनियत-ज्ञानीयविषयतात्व-समनियतज्ञान-समनियत-तद्धर्मत्वेन तत्प्रवेश इति गृहाण। ज्ञाने विषयतात्व-सामनैयत्य च स्वीय-विषयतावत्त्व-सम्बन्धेन। विषयतावत्ता च स्वानवच्छेदक-सम्बन्धानवच्छिन्नत्व-स्वसामानाधिकरण्य-उभयसम्बन्धेन। उक्तानवच्छिन्नत्वं च स्वनिरूपित-संसर्गता-अवच्छेदकत्व-सम्बन्धावच्छिन्न-प्रतियोगिताक-स्व-अभाववद्-धर्मावच्छिन्न-संसर्गत्व-अनिरूपित्वम्। नातो व्यवहितोत्तरत्वयोः भेदेऽपि विशेष्यत्वादावच्छेदक-सम्बन्धा-प्रसिद्धौ अपि समानानुपूर्वीकत्वानुपपत्तिः। न च वर्ण-विषयतयोः अव्यवहितोत्तरत्व-विषयतयोश्च न सामानाधिकरण्यमिति तत्परित्यज्य स्वावच्छेदकावच्छिन्नत्वम् उपादेयम्। तस्य च घत्वादिनिष्ठ-निरवच्छिन्न-विषयतायाम् अभावात् अनुपपत्तिरिति वाच्यम्। यदि एकरूपेण विभिन्नविषयकज्ञानयोः अपि समानाकारकत्वं तद्विषयतयोः एकधर्मावच्छिन्नयोः एकधर्मनिष्ठयोः च ऐक्यं तदा तादात्म्यमात्रं सम्बन्धः। अन्यथा उक्तसम्बन्धानवच्छिन्नत्व-स्वसामानाधिकरण्य-स्वावच्छेदकावच्छिन्नत्व-अन्यतरवत्त्व-उभयस्य सम्बन्धता वाच्या। यत्त्वं तत्त्वं च अनुगतमिति न अननुगमः। सार्थकपदयोः समानानुपूर्वीकत्वं च तद्धर्मस्य अर्थबोधप्रयोजकतावच्छेदकत्वेन निवेशनं विधाय यत्त्व-तत्त्वयोः अननुगतत्वेऽपि भवति कथञ्चित् निर्वाच्यम्। धर्मसामनैयत्यघटक-विषयतासंसर्गता अन्या वाच्या। नातः संसर्गान्तर्भावेण व्यभिचारात् सामनैयत्यहानिः। ज्ञानं च मुख्यविशेष्यताद्वयशून्यत्वेन विशेषणीयम्। तेन तद्धर्माश्रय-यावत्पदार्थविषयक-समूहालम्बनम् आदाय न लता-तालपदयोः समानानुपूर्वीकत्वप्रसङ्गः। यदि च अव्यवहितोत्तरत्व-घटितसमुदायभावेन पदत्व-व्यवहारः अर्थबोधप्रयोजकता च इष्यते, तदा सामनैयत्य-प्रतियोगितया तादृशसमुदायत्वमेव उपादेयम्। विषयतायां संसर्गतान्यत्वं च न विशेषणीयम्। स्वत्वाघटितमपि अव्यवहितोत्तरत्वं स्ववृत्तिप्रागभावप्रतियोगित्व-स्ववृत्तिकृतिमत्त्व-उभयसम्बन्धेन स्वाश्रयत्वरूपं निरुक्तमस्ति इत्युक्तप्रकारस्य न दुर्वचता। विशेषतश्च घटपदसमानानुपूर्वीकत्वं स्वनिष्ठ-घत्वावच्छिन्नविषयतानिरूपित-अत्वावच्छिन्नविषयतानिरूपित-टत्वावच्छिन्नविषयतानिरूपित-अत्वावच्छिन्नविषयत्व-अवच्छिन्न-भेदप्रतियोगितावच्छेदकविषयतात्व-समनियतज्ञान-विषयता-पर्याप्ति-अवच्छेदकधर्मवत्त्वम्। सामनैयत्यं च स्वनिरूपितविषयतावत्त्व-सम्बन्धेन। एवञ्च

तादृशो धर्मो निरुक्त-समुदायत्वात्मक-घटपदत्वमेव। नीलघट-पदत्वात्मक-समुदायत्वस्य च तदनवच्छेदकतया तदवच्छिन्ने न घटपदसमानानुपूर्वीकत्व-व्यवहारः। प्रकृते च सुत्वादि-एकविंशत्यानुपूर्वी अन्यतमत्वेन उपादाय स्ववृत्ति-तादृशान्यतमवत्त्वमपि समानानुपूर्वीत्वमपि विवक्षायोग्यम् इति अलम्।

**अन्वयबोधानुपपत्तेरिति।** अथ 'सुन्दराभ्यां घटाभ्याम्' इत्यादौ एकविभक्तौ चतुर्थीत्वग्रहे अपरत्र च तृतीयात्वग्रहे विभक्त्योः समानानुपूर्वीकत्वग्रह-सम्भवेन अभेदान्वयबोधप्रयोजक-सत्त्वप्रसङ्गात् तदापत्तिः। प्रथमात्वादिना साजात्यपक्षे च न सा स्वप्रकृतिकविभक्तेः प्रथमात्वादिना सजातीयाया विभक्तेः प्रकृतित्वज्ञानस्य असम्भवात् विशेष्यवाचकपद-प्रकृतिक-विभक्तिवृत्ति-धर्मविरुद्ध-प्रथमात्वाद्यन्यतम-घटकधर्मस्य विशेषणवाचकपदप्रकृतिक-विभक्तौ ग्रहादिति चेत्? अत्र केचित्। "यावन्तो दोषाः सम्भवन्तीति" न्यायेन एकस्य उद्भावनीयत्वे आपत्त्यपेक्षया अनुपपत्तेः प्रबलत्वेन तस्या एव उक्तत्वात् न न्यूनता। वस्तुतस्तु उक्तविभक्ति-प्रकृतित्वेन ज्ञायमानपदोपस्थाप्यत्वमपि न प्रयोजकं, प्रकृतित्व-प्रथमात्वाद्यज्ञानेऽपि शाब्दबोधोदयात् इति स्वरूपसदेव तादृशप्रकृतित्वं शाब्दबोध-स्वरूपयोग्यता-निर्वाहकता-घटकं वाच्यम्। भवत्येव च तृतीयान्त-सुन्दरपद-चतुर्थ्यन्त-घटपदयोः 'सुन्दराभ्यां घटाभ्याम्' इति वाक्य-घटकयोः शाब्दबोध-स्वरूपयोग्यता। 'सुन्दराभ्याम्' इत्याकारकपद-वृत्त्यानुपूर्वीप्रकारेण तादृशपद-विशिष्टस्य 'घटाभ्याम्' इत्येतादृशानुपूर्वी-अवच्छिन्नस्य ज्ञानत्वेन एव कारणत्वात्। न च विरुद्धविभक्त्यन्तत्वग्रहे कथं शाब्दबोधाभावः आकाङ्क्षाज्ञानस्य सत्त्वादिति वाच्यम्। विभक्त्योः आनुपूर्वीसाम्ये विशेषणवाचकपद-प्रकृतिक-विभक्तौ विशेष्य-वाचक-पदप्रकृतिक-विभक्तवृत्ति-चतुर्थीत्वविरुद्ध-तृतीयात्वग्रहो हि तृतीयार्थ-करणत्व-परत्वज्ञानेन एव आधेयः। तथा सति अभेदान्वयपरत्वस्य दुर्ग्रहत्वात् करणत्व-विशेषणत्वेन बुबोधयिषितस्य विशेषणस्य अभेदेन अन्यत्र बुबोधयिषितत्व-असम्भवात् **एकविशेषणत्वेन** इत्यादि-व्युत्पत्तेः जागरूकत्वात्। करणत्वाद्यर्थपरत्व-ज्ञानं विनापि विरुद्धविभक्तित्वज्ञाने कथञ्चित् अभ्युपगम्यमाने तत्र शाब्दबोधस्य अनुपगमे च तादृशविभक्तित्वज्ञानस्य प्रतिबन्धकतया एव अगत्या स्वीकरणीयत्वात्। 'सुन्दराभ्याम्' इत्येतस्मात् शाब्दप्रसङ्गभीत्या सुन्दरपदाभ्यां पद-समभिहारज्ञानत्वेन न यदि कारणता किन्तु 'सुन्दराभ्याम्' इत्येतादृशानुपूर्वी-ज्ञानत्वेनैव तदा हि का एव कथा ? यस्य प्रथमात्वादेः अज्ञानेऽपि शाब्दबोधोदयः तद्घटितधर्मज्ञानत्वेन कारणतायामिति न समानानुपूर्वीकत्वेन साजात्यपक्षेऽपि आपत्त्यवकाश इति बोध्यम्।

**VV-G. 2.2.2:** नन्विति। समुद्भावितायाम् अनुपपत्तौ एव आशङ्कते इत्यर्थः। **विंशत्याद्या** इति। तथा च "विंशत्याद्या" इति एतदनुशासनात् 'शतं ब्राह्मणा' इति एतस्य साधुत्वे उक्तनियमशरीरे असति बाधक इत्युक्तौ अनुपपत्त्यभावः। 'वेदाः प्रमाणम्' इत्येतस्य च साधुता एव नास्ति। क्व तत्र अनुपपत्तिरिति सानानुपूर्वीकत्वेन साजात्योक्तौ एव न दोषः। प्रत्युत विभक्ति-विभाजक-धर्मपुरस्कारेण साजात्योक्तौ 'नीला घट' इत्यादौ आपत्तिरिति भावः। विंशत्याद्याः शब्दाः सङ्ख्याविशिष्टपरा एकवचनान्ता भवन्ति, सङ्ख्यापराश्च द्विवचन-बहुवचनान्ता अपि। **एकत्व** इति द्वि-बहुत्व इति च सङ्ख्यायाः प्रातिपदिकार्थतापक्षे यथाश्रुतमेव एकत्वाद्यर्थका इत्यर्थकतया साधु अन्यथा तु कथञ्चिदिति।

**असति** बाधक इति। येषां पदानां नियतवचनत्वम् अनुशिष्टं तत्तद्भेदकूटविशिष्ट-प्रातिपदिकप्रयोज्यविशेष्यतानिरूपित-तादात्म्यसम्बन्धावच्छिन्न-प्रकारताप्रयोजकत्वविशेषित-तादृशभेदकूटवत्त्वं यत्र तत्र तत्तद्-विशेष्य-वाचकपद-प्रकृतिकविभक्तिवृत्ति-आनुपूर्वीमद्-विभक्तिप्रकृतित्वमिति फलितार्थः।

**VV-G. 2.2.3-4:** **समानलिङ्गकस्थल** इति। समानलिङ्गकत्वं च स्ववृत्तिपुँलिङ्गत्वाद्यन्यतमवत्त्वम्। पुँलिङ्गत्वादिकं च अप्राणिसाधारण-पुंस्त्वादि-व्यवहारप्रयोजक-सत्त्वादिगुणोपचयापचयस्य पुंस्त्वादिरूपत्वनये पुंस्त्वादिबोधकत्वम् एव। स्वमते गुणत्रयानङ्गीकारात् सत्यां ब्राह्मण्यां ब्राह्मणो नास्ति ब्राह्मणे च सति ब्राह्मणी नास्तीति प्रतीत्योः उत्पादात् लिङ्ग-योन्यादिमत्त्वलक्षण-पुंस्त्व-स्त्रीत्वादि-प्रत्ययस्य अङ्गीकरणीयत्वेऽपि तटः, तटी इत्यादौ तत्प्रत्यस्य बाधात् प्रयोजना-भावाच्च अनङ्गीकरणीयत्वमेवेति न पुंस्त्वादिबोधकत्वं पुँलिङ्गत्वादिकम्, अपि तु प्राणि-अप्राणि-प्रतिपादक-साधारणम्। पदसंस्कारप्रयोजकं पुँलिङ्गत्वादिना परिभाषितत्वमेव पुँस्त्वादिबोधस्वरूपयोग्यत्वमेव पुँलिङ्गत्वादिकं तत्त्वं च अनुगतं प्रातिपदिकवृत्यानुपूर्वीविशिष्ट-स्वानुपूर्वीकत्वम्। वैशिष्ट्यञ्च स्वविशिष्टविषयतात्व-व्यापकत्व-सम्बन्धेन। स्ववैशिष्ट्यञ्च स्वघटकवर्णावृत्तित्व-स्वावच्छिन्न-विषयता-प्रयोज्य-विशेष्यतानिरूपित-पुंस्त्वादिप्रकारता-प्रयोजकत्वोभयसम्बन्धेन। व्यापकता च स्वावच्छिन्नविषयता-प्रयोज्य-विशेष्यतानिरूपित-सङ्ख्यानिष्ठप्रकारता-प्रयोजक-विषयता-अवच्छेदकावच्छिन्नत्व-सम्बन्धेन। 'तट' इत्यादौ पुंस्त्वबोधाभावेऽपि 'ब्राह्मण' इत्यादौ तद्बोधात्। तादृशबोधानुकूलाः ब्राह्मणादि-पदघटकवर्णावृत्तयः स्वादि-एकविंशति-विभक्तिवृत्तयो यादृशधर्मावच्छिन्न-विषयताः 'घटः' इत्यादौ सङ्ख्या-बोधानुकूलाः तादृशधर्मावच्छिन्ना एव विभक्तिवृत्तयः ताः इति। तत्र योग्यता न नदीशब्दादौ विभक्त्यानुपूर्वीभेदात्। येषां शब्दानां स्वप्रकृतिक-अखिल-

विभक्ति-समानानुपूर्वीक अविवर्तिभिः प्रकृतिभिः पुरस्तादि-बोधोपधायकः शब्दो नास्ति तेषाम् आनुपूर्वी विशिष्टैव योग्यताकुक्षौ अन्तर्गतत्वेन प्रवेशनीया इत्यपि कश्चिदिति।

इति हेतुरिति। "शक्तिर्निपुणता-लोक-शास्त्र-काव्याद्यवेक्षणात्। काव्यज्ञ-शिक्षयाभ्यास" इत्यादि। इति त्रय इति। शक्तिः कवितावीजभूतः संस्कारविशेषः। प्रतिभा अव्यपदेश्य लोक शास्त्र-काव्याद्यवेक्षणप्रयुक्त निपुणता-व्युत्पत्तिविशेषः। काव्यज्ञशिक्षाप्रयुक्तोऽभ्यासः करणे योजने च पौनःपुन्येन प्रवृत्तिरिति त्रितयमिति शब्देन परामृश्यते। औत्सर्गिकमिति। नित्य द्विवचन-बहुवचन-साकाङ्क्षविशेषणपदानाम् असमानलिङ्गकस्थलेऽपि नैकवचनान्तत्वमिति उपात्तम्।

**VV-G. 2.2.5:** नियम-सङ्कोचेन समाधत्ते - **मैवमित्यादिना।** **यत्र** इति त्रल्-प्रत्ययस्य घटकत्वमर्थः। तस्य विशेष्यवाचकपदेऽन्वयः। यदिति विशेष्य-विशषण-वाचकपद-घटितं वाक्यमाह **वाचक**शब्दो बोधकपरः। तेन लाक्षणिक-विशेष्यपदस्थले न नियमहानि। **उत्तरविभक्ति** इति। अव्यवहितोत्तरत्वेन अनुसन्धीयमाना विभक्तिः इत्यर्थः। तेन दध्यादिविशेष्य-पदोत्तरविभक्त्यश्रवणेऽपि न क्षतिः। **विभक्तितात्पर्यविषये**ति। विभक्तिजन्य-बोधविषयत्वेन इच्छाविषय इत्यर्थः। नातः समूहालम्बनतात्पर्यम् आदाय असमानवचनस्थले विशेषणपदोत्तर-विभक्त्यर्थ-सङ्ख्यासमानाधिकरण सङ्ख्याया विशेष्यपदोत्तर-विभक्ति-तात्पर्य-विषयत्वप्रङ्गः। तात्पर्यविषय-सङ्ख्याविरुद्धत्व तादृशसङ्ख्यासमानाधिकरणत्वम्। तात्पर्यविषयतावच्छेदक-सङ्ख्यात्वव्याप्यधर्मावच्छिन्नभिन्नत्वं वाविवक्षितत्वामित्यस्य विशेषणवाचकपदोत्तरविभक्त्येत्यादिः। तथा च तादृशविभक्तिजन्य-बोधविषयत्वेन इच्छाविषयभिन्नत्वं तदर्थः। तत्र इत्यस्य तद्घटकत्वमर्थः। तस्य विशेष्य-विशेषणपदयोः अन्वयः। **नियमो** व्याप्तिः। तत्र सप्तम्यर्थाधेयत्वान्वयः। व्याप्यता च तादात्म्येन। व्यापकं च समानवचनत्वम्। यद्यपि वचनशब्देन स्वघटितानाम् एकवचन-द्विवचन-बहुवचनानाम् अवगतत्वे स्वोत्तरविभक्तिवृत्ति-एकवचनत्वाद्य-न्यतमवद्विभक्तिकत्वं प्रतीयमानं प्रथमा-द्वितीयान्त-साधारणमपि न क्षतिकरं, विशेष्यविशेषणपदयोः समानविभक्तिकत्व-नियमान्तरस्य सद्भावात्, तथापि स्वोत्तरविभक्तिवृत्त्यानुपूर्वीमद्-विभक्तित्वरूपमेव लाघवात् तदुपादेयम्। न च नोपादेयं नियतासमानलिङ्गविशेषणपदस्थले विभक्त्यानुपूर्वीभेदात् इति वाच्यम्। आदेशिनिष्ठानुपूर्वीम् आदायैव तत्रापि तत्सम्भवात्। कथम् अन्यथा साजात्यं च विभक्तिविभाजकप्रथमात्वादिना न तु **समानानुपूर्वीकत्वेन** (VV.2.2.1) इत्यत्र 'वन्द्यौ हरी' इत्यादौ अनुपपत्तिम् अनुद्भाव्य असमानवचनकस्थले तदुद्भावनं न

असङ्गतं स्यात्। एवञ्च यत्र यत्र यत्पदवत्त्वं तत्र तत्पदोत्तरविभक्तिवृत्ति-उक्तधर्मवद्विभक्तिकत्वमिति नियमः पर्यवसितः। विशेष्यपदवत्ता च स्वप्रयोज्य-विशेष्यता-निरूपित-तादात्म्य-सम्बन्धावच्छिन्न-प्रकारताप्रयोजकत्व-स्वाव्यवहितोत्तर-त्वेन अनुसन्धीयमान-विभक्तिजन्यबोध-विषयत्व-प्रकारतानिरूपितेच्छीय-विशेष्यता-वच्छेदकसङ्ख्यावृत्ति-धर्मभिन्न-धर्मावच्छिन्न-सङ्ख्यानिष्ठ-विषयताकबोध-जनकत्व-प्रकारतानिरूपित-इच्छीयविशेष्यत्वाभाववद्विभक्तिकत्व-उभयसम्बन्धेन। न च एवं यत्र वक्तुः सङ्ख्याधर्मिक एव इच्छा तत्र का गतिः ? विभक्तेः इच्छाविशेष्यत्व-विरहात् सङ्ख्यानिष्ठ-विशेष्यतानिरूपित-इच्छीयप्रकारत्व-उपादाने च विभक्ति-धर्मिकेच्छास्थले दोषप्रसङ्ग इति वाच्यम्। विभक्ति-प्रयोजक-इच्छीय-सङ्ख्यानिष्ठविषयत्वावच्छेदकधर्मभिन्न-धर्मावच्छिन्नविषयतानिरूक-इच्छाप्रयोज्यत्व-अभाववद्विभक्तिकत्वस्य संसर्गतया विवक्षितत्वेन स्थलद्वयेऽपि अदोषात्। यद्यपि उक्तपदवत्त्वस्य व्याप्यत्वमेव यथाश्रुतग्रन्थतः प्रतीयते तथापि समानवचनत्व-प्रयोजकान्तरस्य अभावेन उक्तपदवत्त्वस्य एव प्रयोजकत्वस्य वाच्यतया व्याकत्वम् अपि स्वीकार्यमेव।

अथ विभक्तित्वेन उपादानं किमर्थम् ? न च तद्-अनुपादाने 'सुन्दरं दधि', 'बहवो गुणा' इत्यत्र सौन्दर्य एकत्वविवक्षायां समानवचनत्वस्य इष्टतया विशेष्यवाचकपद-अव्यवहितोत्तर-बहुपदार्थबहुत्वसङ्ख्याविरुद्ध-एकत्वस्य विवक्षित-तया प्रयोजकाभावात् समानवचनत्वानुपपत्तिः इति वाच्यम्। उक्ताविवक्षितत्वस्य उक्तग्रन्थतः समानवचनत्वव्याप्यत्वस्यैव प्रतीतत्वेन व्यापकत्वम् अवलम्ब्य दोषस्य असम्भवात्। न च प्रयोजकान्तराभावेन तस्य तथात्वमुचितमिति वाच्यम्। पदान्तरप्रयोजक-वक्तृबुबोधयिषादेः विभक्त्यंशेऽपि प्रयोजकतया तस्य निराकाङ्क्षेषु अनुदयेन तत्र तत्र समानासमानवचनत्वनिर्वाहत्वात् इति। समानवचनत्वस्य अर्थसमाजग्रस्तत्वेन तादृशप्रयोजक-अनपेक्षत्वात् कुत्र अभेदान्वयप्रयोजकं समानवचनत्वं कुत्र च न इति आकाङ्क्षानिवृत्तये शब्दानुगममुखेन तत्प्रसञ्जकस्य व्याप्यस्यैव प्रदर्शनीयत्वात्। 'वेदाः प्रमाणम्' इत्यादौ प्रसञ्जकाभावादेव तत्प्रसक्त्यसम्भावात्। व्याप्यविरहस्य च व्यापकविरहाप्रयोजकतया उक्तस्थले उक्ताविवक्षितत्वविरहेऽपि क्षत्यभावात्। समानवचनत्वस्य एकत्वस्य विवक्षितत्वेन विभक्त्यन्तरोत्पत्त्यसम्भवेन निर्वाह्यत्वात्। अस्तु वा व्यापकत्वमपि। तावतापि न क्षतिः। तादृशस्थले विशेष्यवाचकपदाव्यवहितोत्तरविभक्तेः अप्रसिद्धतया अव्यवहित-उत्तरत्वेन अनुसन्धीमानत्वस्य विवक्षणीयत्वात्। तथाविधविभक्तितात्पर्यविषय-एकत्वविरुद्धत्वस्य एकत्वे असम्भवात्। अत्र केचित् 'सम्पन्ना लता', 'बह्व्यः सम्पत्तयः' इत्यादौ सम्पत्तौ बहुत्वविवक्षायाम् असमानवचनकप्रयोगस्यापि साधुतया

विभक्तित्वेन अप्रवेशे तदनुपपत्ति। स्मृतिविषयतया विभक्तेः इव प्रत्यक्षविषयतया बहुपदस्यापि लतापदोत्तरत्वेन अनुसन्धीयमानत्वेन तत्तात्पर्यविषय-बहुत्व-विरुद्धत्वस्य बहुत्वेऽसम्भवात्। न च अवच्छेदकता-अनात्मक-तात्पर्यविषयत्व-विवक्षणे न दोष इति वाच्यम्। एकत्वपर पदाव्यवहितपूर्ववर्ति-लुप्तबहुवचनान्त-पद-घटिते 'प्रमाण वेदशाखा', 'वाच्य घट' इत्यादौ असमानवचनत्वानुपपत्तेः इति वदन्ति। परे तु 'स्तोकम् अत्त' इत्यादौ समानवचनत्व-प्रसङ्गवारणाय विशेष्य-वाचकपदे प्रातिपदिकत्व-प्रवेशापेक्षया विशेष्यवाचकपदाव्यवहितोत्तरपदे सुप्त्वप्रवेशे लाघवेन तस्यैव उपादेयतया विभक्तित्वेन प्रवेशे कथन्ताया न उन्मेष इत्याहुः।

विभक्त्यर्थत्वेन सङ्ख्याप्रवेशम् अकृत्वा विभक्तितात्पर्यविषयत्वेन तत्प्रवेशनं 'वेदाः प्रमाणम्' इत्यादौ यत्र जसि सुत्व भ्रमात् एकत्व-शक्तत्वभ्रमात् वा शाब्दत्वम् एकत्वस्य, तत्र एकत्वस्य विभक्त्यर्थतया असमानवचनत्व प्रसङ्ग-वारणाय विभक्तिशक्यत्वरूप-विभक्त्यर्थत्वप्रवेशे च लोके सुब्विभक्तेः सङ्ख्या-लाक्षणिकत्वविरहेण दोषाभावेऽपि ततो न लाघवम्। केचित्तु वेदगत-बहुत्वतात्पर्येण वेदपदोत्तरं जसि प्रयोक्तव्ये दोषवशात् प्रयुक्तया सु-विभक्त्या घटितस्य 'वेदः प्रमाणम्' इति प्रयोगस्य समानवचनत्वनिबन्धनम् असाधुत्वम् अभ्युपगच्छन्ति, वक्तृतात्पर्यविदो विशेषदर्शिनः तत्रैवं समानवचनत्वव्याप्यस्य सत्तया कथन्ताया अनिवृत्तिः स्यादिति तात्पर्यविषयत्वेन उपादानं सङ्ख्यायाः कृतमिति वदन्ति। तात्पर्यविषयसङ्ख्यायाः सङ्ख्यात्वेन प्रवेशात् प्रमाणे वेदेषु द्वित्वान्यप्रमेयम् इत्यादौ वेदनिरूपित-तादृशप्रमेयत्वावच्छिन्न-आधेयत्वस्य विभक्तितात्पर्य-विषयतया आधेयत्वस्य आधेयरूपत्वे तादृशविषयत्वावच्छिन्नभेदस्य एकत्वे विरहात् समानवचनत्वापत्तेः न अवकाशः। तन्निवेशे च तात्पर्यविषयतावच्छेदक-सङ्ख्यात्व-व्याप्यधर्मावच्छिन्नभेदस्य विवक्षितत्वेन तात्पर्यविषयसङ्ख्याभेदासत्त्वेऽपि न क्षतिः। विशेष्यवाचकपदोत्तरविभक्ति-तात्पर्यविषयसङ्ख्याविरुद्धस्य सङ्ख्यात्वेन प्रवेशात् तादात्म्यस्य विशेषणविभक्त्यर्थतापक्षे विशेषणपदोत्तरविभक्त्या तादात्म्यस्य सर्वत्र विवक्षितया विशेषणविभक्तिमात्रे तस्य असत्त्वेऽपि न क्षतिः।

विशेषणवाचकपदोत्तरत्वेन अनुसन्धीयमानविभक्त्या अविवक्षितत्वदले अनुसन्धीयमानस्य विभक्तित्वेन अप्रवेशे तादृश-अनुसन्धीयमान-यत्किञ्चद्व्यक्त्या अविवक्षितत्वप्रवेशे 'प्रकृष्टा मितिः यस्मात्' इति विग्रहानुसारात् प्रमितिजनका-र्थकेन प्रमितिपदेन तादृशजनकत्वांशे एकत्वतात्पर्यकस्वन्तेन घटितस्य 'वेद-वाक्यानि प्रमितिजायन्ते' इति वाक्यस्य निराकाङ्क्षत्वप्रसङ्गः। प्रमितिपदोत्तरत्वेन ज्ञायमान-ज्ञाधातुना अविवक्षितत्वस्य एकत्वे सत्त्वेन समानवचनत्वप्रसङ्गात्। विशेषणपदाव्यवहितोत्तरत्वेन अनुसन्धीमानपदसामान्याविवक्षितत्वस्य प्रवेशे च यत्र

विशेषणपदाव्यवहितोत्तरत्वेन एकविभक्तिव्यक्तिरेव ज्ञाता तत्र तद्विभक्तिव्यक्ति-विवक्षितत्वत्वस्य लघोरतिप्रसङ्गादि-अनापादकस्य सत्तया तादृशाभावाप्रसिद्धिः स्यात्। तादृशानुसन्धीमानत्वम् उपलक्षणीकृत्य तद्विभक्तिव्यक्तिविवक्षितत्वाभावकूट-निवेशे च विभक्तित्वप्रवेशापेक्षया न लाघवम्। अविवक्षितत्वस्य समानवचनत्व-प्रयोज्यत्वपक्षे समानवचनक-विवक्षितसङ्ख्याक-लुप्तविभक्त्यन्तविवक्षित-विरुद्ध सङ्ख्याकपद-पूर्ववर्तिविशेषणपदघटिते वाक्ये समानवचनत्वानुपपत्तिश्च स्यादिति विभक्तित्वेन प्रवेशः। तत्र च अनुसन्धीयमानत्वस्य उपलक्षणत्वेऽपि न क्षतिः। तादृशविरुद्धसङ्ख्याविवक्षाविषयत्वाभाववद्विभक्त्यव्यवहितपूर्वत्वेन अनुसन्धीयमान-त्वस्य विशेषणपदनिष्ठस्य तद्-दलार्थत्वपक्षेऽपि विभक्तित्वेन प्रवेशस्य एवमेव फलम् अनुसन्धेयमिति।

अथ विरुद्धान्तोपादानम् अफलमिति चेत् ? न। उक्त-अविवक्षितत्वस्य समानवचनत्वव्यापकत्वपक्षे वेदत्वसामान्य एकत्वविवक्षया प्रयुक्ते 'वेदः प्रमाणम्' इति वाक्ये समानवचनत्वानुपपत्तिवारणाय तत्सार्थक्यसम्भवात् तस्य समानवचन-त्व-व्यापकत्वाभावपक्षे च शाब्दप्रयोजकसमानवचनत्वस्य सौकर्येण शिष्याणां ज्ञानाय तद्व्याप्यस्य इव असमानवचनत्वस्यापि तथा ज्ञानाय तद्व्याप्यस्यापि वाच्यतया सङ्ख्याविवक्षामात्रस्य तथात्व-असम्भवेन तादृशविरुद्धत्वविशेषित-सङ्ख्याविवक्षाया एव तद्व्याप्यत्वेन उपादानं कार्यमिति। तत्र ग्रन्थगौरवप्रसङ्गः स्यादिति तद्भयेन असति बाधके विशेषणविशेष्यपदत्वरूपप्रसञ्जक-प्रसञ्जितस्य समानवचनत्वस्य वारणाय अवश्यविशेषणीये प्रसञ्जके समानवचनत्वव्याप्तौ अनुपयुक्तेन उपरञ्जकभूतेन विरुद्धान्तत्वेन घटितस्य विशेषणस्य उपादानम्। तथा सति अर्थत एव असमानवचनत्वव्याप्यस्यापि लाभेन तदुक्त्यपेक्षाविरहात् न ग्रन्थगौरवम्। दृश्यते च एवम् उक्तिः यद्विषयत्वेन लिङ्गज्ञानस्य इत्यादौ। यत्तु 'स्तोकं पचत' इत्यादौ समानवचनत्वप्रसङ्गवारणाय तदुपादानं, तथा सति विशेष्यवाचक-पदा-व्यवहितोत्तरत्वस्य विभक्तौ विरहात् न दोषः। न च 'रामाणाम्' इत्यादौ प्रकृति-प्रत्यययोः आगमेन व्यवहितत्वेन अव्यवहितोत्तरत्वं न स्यादिति। यद्यद्व्यवधानेन प्रकृति-प्रत्यययोः अन्वयबोधौपयिकाकाङ्क्षा निर्वाह्यते तत्तद्भिन्नप्रकृत्युत्तरानुत्तरत्वे सति प्रकृत्युत्तरत्वस्यैव प्रकृत्यव्यवहितोत्तरत्वस्य वाच्यतया आगम-आदेश-विकरणादि-व्यवधानेऽपि अव्यवहितोत्तरत्वं सम्भवत्येव इति, न 'स्तोकम् पचत' इत्यादौ तद्वारणम्। एवं 'स्तोकम् अत्तः' इत्यादौ नास्ति एव व्यवधानमिति सुतरामिति वाच्यम्। विशेष्यान्वयित्वेन विभक्तितात्पर्यविषयत्वस्य विवक्षणे दोषा-भावात् आख्यातार्थसङ्ख्यायाः धात्वर्थेन अन्वयादिति। तदसत्। विशेष्यान्वयित्वेन सङ्ख्या-विषयक-तात्पर्यविषय-विभक्तिक-विशेष्यपद-समभिव्याहृतत्व-विशिष्ट-उक्त-

अविवक्षितत्वोपादानादेव उक्तदोषवारणसम्भवे तादृशविरुद्धत्वोपादान-कथन्ताया अनिवृत्तेः विशेष्यवाचकपदोत्तर सुप्-समभिव्याहृतत्वोपादानादेव वा उक्तदोषवारण-सम्भवे विरुद्धत्वांशोपादानवैफल्यशङ्काया अनुद्धारात्। न च क्विबन्त-प्रातिपदिकोत्तर-सुविभक्तेः क्विपो लुप्तत्वेन धात्वव्यवहितोत्तरतया तत्र का गतिरिति वाच्यम्। विशेष्यवाचकपदप्रकृतिकत्वस्य विवक्षितत्वात्। तत्त्वञ्च विशेष्यवाचकपदार्थ-शाब्दबुद्धित्वावच्छिन्न-जन्यतानिरूपिता या अव्यवहितोत्तरत्व-सम्बन्धावच्छिन्न-विशेष्यवाचकपदनिष्ठ-प्रकारतावच्छिन्न-कारणता तदवच्छेदक-विशेष्यतावत्त्वम्। न हि धात्वर्थशाब्दबोध आख्यात-कृदादिविशेष्यक-धातुप्रकारक-निश्चयमिव धातुप्रकारक-सुप्-तद्धितादि-विशेष्यक-निश्चयमपि कदाचित् अपेक्षते इति न धातुप्रकृतिकत्वस्य सुपि सम्भवः। आकाङ्क्षाज्ञानकारणतावच्छेदकशरीरे तत्र तत्र एतादृश-प्रकृतिकत्वस्य अप्रवेशनञ्च भट्टाचार्याणाम् एतदज्ञानकाले शाब्दा-नुपपत्तिभयेनैव इति। उक्तधर्मस्य कारणतावच्छेदकाघटकतया तत्रोक्तप्रकृतिक-त्वस्य प्रवेशे नास्ति कापि क्षतिः।

यद्वा तदव्यवहितोत्तरत्वं तदुत्तरत्वेन अनुसन्धीयमानोत्तरत्वेन अननुसन्धीयमानत्वे सति तदुत्तरत्वेन अनुसन्धीमानत्वमिति। धातूत्तरत्वेन अनुसन्धीमान-क्विप्प्रत्ययोत्तरत्वेन अनुसन्धीमानत्वस्यैव सुपि सत्त्वात् न धातु-प्रकृतिकत्वस्य तत्र प्रसङ्गः। अथ विशेषणविभक्तेः अभेदार्थकतापक्षे विशेष्य-विशेषणपदत्वस्य उक्तविवक्षितत्वस्य च 'नीलो घटः' इत्यादौ इव 'प्रकृत्या चारवः' इत्यत्रापि सत्तया समानवचनत्वप्रसङ्गः। न च विशेष्यवाचकपदोत्तर-विभक्तिवृत्ति-सुब्विभाजकधर्मवत्त्वप्रवेशे न अयं दोष इति वाच्यम्। 'प्रकृत्या चारुभिः' इत्यत्र दोषादिति चेत्? न। विशेष्यवाचकपदोत्तर-विभक्तिवृत्ति-सुब्विभाजकधर्मशून्य-विभक्तिप्रकृति-विशेष्यवाचकपद-समानानुपूर्वीक-पदार्थधर्मिक-अभेदबोधानुकूल-आकाङ्क्षाघटकविशेषणवाचकपदसमानानुपूर्वीकपदप्रकृतिकवृत्ति-सुब्विभाजकधर्मशून्यत्वस्य विवक्षितत्वात्। न हि 'प्रकृत्या चारुभिः' इत्यादौ विशेषणविभक्तौ तादृशधर्मशून्यत्वसम्भवः। 'प्रकृत्या चारुभिः' इत्यत्रेव 'प्रकृत्या चारवः' इत्यत्रापि अभेदबोधोदयात् 'नीलो घटः' इत्यादौ च भवत्येव तत्सम्भवः। न हि 'नीलो घटः' इत्यत्रेव जात्वपि 'नीलो घटाय' इत्यत्र अभेदबोधः। एवञ्च उक्तनिवेशस्य यथोक्तविरुद्धत्वान्तोपादानेऽपि आवश्यकत्वेन तावतैव 'स्तोकम् अत्तः' इत्यादेरपि वारणसम्भवेन तद्विपक्षावैफल्यं दुर्वारम्। अथ 'शोभना रामदाराः' इत्यत्र समानवचनत्वानुपपत्तिः। विशेष्यवाचक-पदोत्तरविभक्ति-तात्पर्यविषय-सङ्ख्याया अप्रसिद्धत्वात्। न च स्वतात्पर्य-विषयसङ्ख्याविरुद्धसङ्ख्या-विवक्षा-विषयत्व-सम्बन्धावच्छिन्न-प्रतियोगिताकस्य विशेष्यवाचकपदोत्तर-विभक्त्यभावस्य

विवक्षितत्वात् नानुपपत्तिः इति वाच्यम्। 'रामदारा मैथिली' इत्यत्र एकत्वविवक्षा-विषयैकवचनान्ते 'मैथिली' इति विशेषणवाचकपदे दारपदोत्तरविभक्त्यभावसत्त्वेन समानवचनत्वापत्तेः इति चेत् ? न। स्वतात्पर्यविषय-सङ्ख्याऽविरुद्धत्व-सम्बन्धावच्छिन्न-प्रतियोगिताक-विभक्त्यभाववत्-सङ्ख्याविवक्षाविषयत्व-अभावस्य विवक्षितत्वात् उक्तदोषाभावात्। अथ दारपदस्य विशेषणपदत्वे 'मैथिली रामदारा' इत्यादौ समानवचनत्वापत्तिः। दारपदोत्तरविभक्त्या सङ्ख्याया अविवक्षितत्वात्। न च सङ्ख्याविवक्षायोग्यविभक्तिकत्वं विवक्षणीयम्। दारपदोत्तरविभक्त्या कुत्रापि सङ्ख्याबोधस्य अदर्शनेन दारपदे तादृशविभक्तिकत्वविरहात् अदोष इति वाच्यम्। सम्भवति सार्थकत्वे निरर्थकत्वस्य अन्याय्यतया दारैकत्वस्थले योग्यताविरहेण बहुत्वस्य विवक्षितुम् अशक्यत्वेऽपि दारबहुत्वस्थले योग्यतया बहुत्वस्य विवक्षणीय-त्वेन सर्वत्रैव दारपदोत्तरविभक्तौ सङ्ख्याविवक्षायोग्यत्वं विवक्षाविषयतावच्छेदक-आनुपूर्वीरूपम् अस्ति इत्युक्तदोषस्य दुरुद्धरत्वात्। अत एवोक्तमग्रे अवादिपदोत्तर-बहुवचनमपि क्वचिन्निरर्थकमेव इत्यत्र क्वचिदिति चेत्, न। उक्तस्थले हि प्राप्तमपि समानवचनत्वं 'दाराः पुंसि च भूम्न्यि एव' इत्याद्यनुशासनेन बाधितमिति न प्रसज्यते। न च व्यभिचारः, असति बाधक इति व्याप्यशरीरे वक्तव्यत्वात्। तथा च नियतवचनकान्यत्वविशेषिताविवक्षितत्वस्य व्याप्यत्वं पर्यवसितम्। नियतवचनक-त्वञ्च धर्मविशिष्टम्। वैशिष्ट्यञ्च स्वावच्छिन्नपरत्व-स्वविशिष्टशाब्दजनकता-वच्छेदक-विभक्तिनिष्ठ-विषयतानिरूपित-अव्यवहितोत्तरत्व-सम्बन्धावच्छिन्न-विषयता-वच्छेदकानुपूर्वीमत्त्वोभयसम्बन्धेन विभक्ति-विषयतायाम्। स्ववैशिष्ट्यञ्च स्वावच्छिन्न-विषयता-निरूपित-सङ्ख्यानिष्ठ-प्रकारता-प्रयोजकविषयतावत्त्व-सम्बन्धावच्छिन्न-प्रतियोगिताक-स्वाभाववत्त्व-सम्बन्धेन। विषयतावत्त्वञ्च (१)स्वसमानाधिकरण-सुब्-विभाजकधर्मसामानाधिकरण्य-(२)स्वावच्छेदकानवच्छिन्नत्व-(३)स्वनिरूपिताव्यवहित-उत्तरत्व-सम्बन्धावच्छिन्न-विषयतावच्छेदकावच्छिन्न-विषयता-निरूपितत्व-एतत्त्रितय-सम्बन्धेन दारपदोत्तर-जसादिविभक्ति-विषयतायां दारसदृश-आचरणकर्तृत्वावच्छिन्न-विशेष्यतानिरूपित-सङ्ख्यानिष्ठ-प्रकारताप्रयोजक-दारपदनिष्ठ-विषयता-निरूपित-स्वादिनिष्ठविषयतावत्त्वसत्त्वेऽपि स्त्रीत्वावच्छिन्नपर-दारशब्दस्य दारसदृश-आचरण-कर्तृत्वावच्छिन्नपरत्वाभावेन तद्धर्मस्य अनुपादेयत्वाद् भवति नियतवचनकत्वम्। न च प्रथमसम्बन्धानुपादानेऽपि स्त्रीत्वरूपधर्मम् आदाय नियतवचनत्वं सम्भवत्येव इति वाच्यम्। क्विबन्ताद् घञि निष्पन्नस्य दारपदस्यापि स्त्रीत्वरूपधर्ममादाय नियत-वचनकत्वापत्त्या धर्मसामान्याभाववद्विभक्ति-विषयताघटितस्यैव नियतवचनकत्वस्य उपादेयत्वात् अन्यथापत्तिवारणायैव अस्तु प्रथमसम्बन्धोपादानम्। दारपदोत्तर-जसादि-विषयतायां तादृश-सङ्ख्यानिष्ठ-विषयता-प्रयोजक-शस्-आदि-निष्ठ-

विषयतावत्त्ववारणाय त्रितयसम्बन्धघटक प्रथमोपादानम्। जस्-विषयतायां जस्-अविषयतावत्त्ववारणाय द्वितीयस्योपादानम्। स्वादि पदोत्तर-स्वादिनिष्ठविषयता-वत्त्ववारणाय तृतीयस्य च। अत एव 'शतं ब्राह्मणाः' इत्यत्रापि न समानवचनत्व-प्रसङ्गः। शतपदोत्तरविभक्त्या शतत्वावच्छेदेन सङ्ख्यान्वयस्य अदर्शनेन शत-पदोत्तरविभक्तिविषयतायाः शतत्वरूपधर्मावैशिष्ट्येन नियतवचनकत्वस्य शतपदे सत्त्वात्। न च शतपदोत्तरविभक्त्यैकत्वस्य विवक्षितत्वादेव न समानवचनत्व-प्रसङ्गः इति वाच्यम्। तथा सति एकत्वाविवक्षायां 'शतानि ब्राह्मणाः' इत्यस्य आपत्तेः। न च इष्टापत्तिः। "विंशत्याद्याः सदैकत्वे" इत्यनुशासनविरोधात्। तद्धि एकत्वविवक्षा-औदासीन्येन नियतैकवचनान्तत्वं विंशत्यादिशब्दानाम् आह। विवक्षादरे तु तत एव एकवचनप्राप्तौ अनुशासनवैफल्यात्। किञ्च शतत्व-एकत्वान्वये सङ्ख्यायाः विभक्त्यर्थ-सङ्ख्यान्वयित्वरूपस्य अवश्य-विवक्षणीय-प्रधानत्वस्य सत्त्वेन शतशब्दस्य प्रधानीभूतसङ्ख्यार्थकत्वरूपस्य सङ्ख्यार्थकत्वस्य सत्तया प्रातिपदिकान्तरस्य षष्ठ्यर्थद्वारकस्वार्थान्वय एव तत्र साकाङ्क्षत्वेन 'ब्राह्मणानां शतम्' इत्येव स्यात् न तु 'शतं ब्राह्मणाः' इति। न च प्राधान्येन सङ्ख्याबोधकमेव तदिति वाच्यम्। 'गवां शतम् ददाति' इत्यस्य अनुपपत्तिः। न च एवं 'ते शतानि वयं पञ्च' इत्यादेः का गतिरिति वाच्यम्। तेषाम् आर्षत्वे तत एव साधुत्वात् उक्त-अविवक्षितत्वस्य समानवचनत्व-प्रयोजकपक्षे तत्तद्भेदविशिष्ट-नियतवचनकत्वाभावस्य प्रवेश्यत्वात् तत्र समानवचनत्वोपपत्तेः। अत एव 'असङ्ख्याताः सहस्राणि ये रुद्राः' इति वैदिकप्रयोगेऽपि न अनुपपत्तिः। 'ते शतानि' इत्यादीनाम् अनार्षत्वे तु अप्रामाण्यमेव। अथ एकत्वाविवक्षया वा 'शतं ब्राह्मणाः' इति कथं न प्रयोगः इति चेत् ? न। सार्थकत्वसम्भवे निरर्थकतायाः स्वायत्ते शब्दप्रयोगे सार्थकं विहाय निरर्थकप्रयोगस्य च अन्याय्यत्वात्। जात्येकत्वविवक्षाया एकदेशान्वयदुष्टतया सिद्धप्रयोगोपपादकत्वेऽपि स्वारसिक-प्रयोगस्य तन्मूलताया वक्तुम् अशक्यत्वाच्च बहुत्वविवक्षया बहुवचन-प्रयोगस्यैव प्राप्तत्वादिति। विषयतावदन्यत्वं नियतवचनकत्वम्। विषयतावत्त्वं च (१)स्वावच्छेदकावच्छिन्नपरत्व-(२)स्वनिरूपकबोधजनकत्वप्रकारक-तात्पर्यविषयता-वच्छेदक-आनुपूर्वीमत्त्व-(३)स्वविशिष्ट-विषयताक-बोधजनकत्व-प्रकारक-तात्पर्य-विषयतावच्छेदक-आनुपूर्वीमत्त्व-एतत्त्रितयसम्बन्धेन। स्ववैशिष्ट्यञ्च (१)स्व-निरू-पित-प्रकारतावच्छेदक-सङ्ख्यात्व-व्याप्यधर्मातिरिक्त-तादृशधर्मावच्छिन्न-प्रकारताक त्व-(२)स्वावच्छेदकावच्छिन्नत्व-उभयसम्बन्धेन बोध्यम् इत्यपि कश्चित्।

अथवा विशेष्यवाचकपदोत्तर-विभक्त्यर्थसङ्ख्या-निष्ठप्रकारता-निरूपित-विशेष्यतावत्त्वमपि विशेषणवाचकपदे विशेषणम्। विशेष्यतावत्ता च

**(१)स्वावच्छेदकावच्छिन्नपरत्व**-(२)स्वनिरूपकबोधजनकत्व-प्रकारक-तात्पर्य-**विशेष्यतावच्छेदक-आनुपूर्वीमत्त्व-उभयसम्बन्धेन**। तथा च दारपदस्य **विशेषण-वाचकत्वे एकवचनान्ते विशेष्यवाचकपदे** एकवचनार्थैकत्वनिष्ठ-**प्रकारता-निरूपितस्य स्त्रीत्वावच्छिन्नविशेष्यत्वस्य** स्वनिरूपकबोधजनकत्वेन तात्पर्य**विषयता-वच्छेदकानुपूर्वीमत्त्वविरहात्। दारसदृश**-आचरण-कर्तृकत्वाद्यवच्छिन्न-**विशेष्यत्वस्य च स्वावच्छेदकावच्छिन्न-परत्वविरहात्** न सत्त्वमिति न समानवचनत्व-**प्रसङ्गः। विशेष्यवाचकपदे बहुवचनान्ते विशेषणवा**चक-दारपदे उक्तविशेष्यत्वस्य **सत्त्वात् भवत्येव समानवचनत्वम्। दारपदस्य** विशेष्यवाचकपदत्वे च शोभनादि**विशेषण-वाचकपदे तादृशविशेष्यतावत्त्वस्य अविवक्षित**-सङ्ख्याकविभक्तिकत्वस्य **च सत्त्वात् समानवचनत्वम्। सङ्ख्याया विवक्षितत्वे च** तादृशविभक्तिकत्वाभावात् **न समानवचनत्वम्। न च मैथिल्यादिपदोत्तर**विभक्त्या यदा न एकत्वादिकं **विवक्षितं तदा 'मैथिल्यो रामदाराः'**, 'कुन्तीमाद्र्यः पाण्डुदाराः' इत्यादिप्रयोगापत्तिः **इति वाच्यम्। प्रधानीभूतविशेष्यगतत्वेन प्राक्प्रयोक्त**व्य-विशेष्यवाचकपदोत्तर-**विभक्त्या सङ्ख्यायाः सति योग्यत्वे अवश्यविवक्षणीयतया** तत्समानाधिकरण**सङ्ख्याया विशेषप्रतिपत्ति-अनाधायकत्वेन दुष्परि**हर-निरर्थककल्पनया **विशेषणविभक्त्या विवक्षितत्व-असम्भवेऽपि यत्र अयोग्यतया** विशेष्यवाचकपदोत्तरविभक्त्या **सङ्ख्या न विवक्षिता। तत्र योग्यायाः** सङ्ख्याया विशेषणविभक्तेः निरर्थक**त्ववारणाय अवश्यविवक्षणीयत्वात्। सार्थकप्रयोग**सम्भवे निरर्थकप्रयोगस्य **अन्याय्यत्वात् उक्तस्थले एकत्व-द्वित्वार्थकयोः** एकवचन-द्विवचनयोः एव **प्रसक्तेः। न च एवं घटत्वादौ एकत्वसङ्ख्याया योग्याया** विवक्षया सार्थक-एकवचन-**प्रयोगसम्भवे निरर्थक-बहुवचन-प्रयोगस्य अन्याय्यतया** 'एते घटः' इति **प्रयोगापत्तिः इति वाच्यम्। एकदेशान्वयस्य व्युत्पत्तिविरुद्ध**त्वेन **प्रामाणिकप्रयोगोपपत्त्यर्थं क्वचित्तद्विवक्षायाः सम्भवेऽपि स्वरसतः** तादृशविवक्षाया **असम्भवेन अगत्या निरर्थकस्यैव प्रयोक्तव्यत्वे समानवचन-प्रयोगस्यैव** न्याय्यत्वात् इति दिक्।

**पुरूरवोमाद्रवसौ विश्वदेवा** इति। अत्र

पिशाचा राक्षसा यक्षा भूता नानाविधास्तथा।
प्रतिलुम्पन्ति सहसा श्राद्धमारक्षवर्जितम्।।
तत्पालनाय विहिता विश्वेदेवाः स्वयम्भुवा।
इष्टिश्राद्धे क्रतुर्दक्षः सत्यो नान्दीमुखे वसुः।।
नैमित्तिके कालकामौ काम्ये च धुरिलोचनौ।
पुरूरवा माद्रवाश्च पार्वणे समुदाहृतौ।।
उत्पत्ति नाम चैतेषां न विदुर्ये द्विजातयः।

अयमुच्चरणीयस्तैः श्लोकः श्रद्धासमन्वितैः।।

आगच्छन्तु महाभागा विश्वेदेवा महाबलाः।

ये यत्र योजिताः श्राद्धे सावधाना भवन्तु ते।।

इत्यस्ति वचनम्। तत्र क्वचित् पुरूरवोमाद्रवसौ इत्यपि अस्ति पाठः। तदवलम्ब्य अयं ग्रन्थः।

इन्द्रस्य दुहिता ज्येष्ठा विषा नाम महातपाः।

तस्याः पुत्राः समुत्पन्ना विश्वेदेवास्त्रयोदश।

इत्यादिवचनलिखनं कस्यचिन्नातिप्रामाणिकमिव प्रतिभाति। **अमरटीकादौ** "आदित्या द्वादश प्रोक्ता विश्वेदेवा दश स्मृता" इति दशत्वोक्तेः **श्राद्धकल्प-श्राद्धचिन्तमण्यादि**-उदाहृतवचनात् अपि दशत्वप्रतिपत्तेश्च। अथ "स्वयम्भुवा तत्पालनाय विहिता" इति सन्निहितवाक्यार्थान्वितरवार्थकत्वेन विश्वेदेवा इति पदस्य निराकाङ्क्षत्वे पुरूरवोमाद्रवसौ इत्यनेन अन्वयस्य असम्भवात् 'पुरूरवोमाद्रवसौ इत्यस्य च पार्वणे समुदाहृतौ' इति एतदर्थान्वित-स्वार्थकतया पूर्णाकाङ्क्षत्वेन विश्वेदेवा इति लिखनम् असङ्गतमिति चेत् ? न। पार्वण इत्यस्य हि पुरूरवोमाद्रवसौ इत्यनेन अन्वयः, समुदाहृतौ इत्यनेन वा ? नाद्यः। साङ्ग-षट्पुरुष-श्राद्धविशेषस्य घटकतायाः तत्प्रयोजकतया वा पुरूरवोमाद्रवसौ इत्यादिना विश्वेषां देवानाम् एतद्वचनार्थप्रतिपत्तिपूर्वं प्रत्येतुम् अशक्यत्वात्। विधि-मन्त्र-लिङ्गादितो विश्वेदेवत्वेन एव कर्मणि देवतात्वप्रतिपत्तेः 'पार्वणे पुरूरवोमाद्रवसौ' इत्यस्य उद्देश्यसमर्पकत्वासम्भवात्, विश्वेदेवत्वेन देवतात्व-प्रतिपत्तेः एव पार्वण इत्यस्य न विधेयत्वमपि। नापि द्वितीयः। तावन्मात्रस्य साकाङ्क्षत्वेन वाक्यार्थपर्यवसानात् अध्याहारस्य दुष्टत्वात् तयोः विश्वेदेवत्वस्य अनुभवसिद्ध-शाब्दत्वकस्य अलाभ-प्रसङ्गाच्च। तस्मात् योऽसौ गणो विश्वेदेव-पद-निर्देश्यः तत्र क्रतु-दक्षादि-युग्मस्य इष्टिश्राद्धादौ मुख्यत्वं चिन्तनीयमिति। एवम्परताया उक्तवचनस्य तान्त्रिकसिद्धाया निर्वाहाय च पार्वणे विश्वेदेवाः पुरूरवोमाद्रवसौ समुदाहृतौ इत्येवम् अन्वयो वाच्यः। तदर्थम् उत्तरवाक्ये विश्वेदेवा इति पदम् अनुकर्षणीयम्। न चात्र मुख्यत्वेन चिन्तनीय-पुरूरवः-प्रभृतिघटित-समुदाये पुरूरवः-प्रभृतिपदस्य लक्षणैव दोष इति वाच्यम्। 'प्राधान्येन व्यपदेशा भवन्तीति' न्यायेन मुख्यत्वस्य अनुष्ठानोपयोगित्वेन आवश्यकतया चिन्तनीयत्वस्य च सुग्रहतया प्रामाणिकत्वात् तत्र तात्पर्यस्य तदनुपपत्तेः उक्तलक्षणाया निर्दोषत्वात् इति।

**द्वित्वविशिष्टयोः पुरूरवोमाद्रवःप्रभृत्योः** इति। न च बहुत्वविशिष्टेषु कथं द्वित्वविशिष्टस्य अन्वयः ? तथासति 'द्वौ बहव' इति प्रयोगापत्तेः इति

वाच्यम्। विशेषणतया इत्यस्य परम्परया विशेषणत्वपरत्वेन अदोषात्। प्रभृतिपदात् क्रतु-दक्षादीनां सङ्ग्रहः। पुरूरवः-प्रभृतिपदं पुरूरवः-प्रभृतिघटित-समुदायपरम्। माद्रवः-प्रभृतिपदं च माद्रवः-प्रभृतिघटित-समुदायपरम्। तादृश-समुदायत्व-द्वये च द्वित्वान्वयो विवक्षित इति कश्चित्। तत्र तादृशसमुदायत्वयोः वैलक्षण्यासम्भवेन द्वित्वान्वयासम्भवात्। व्यक्तिभेदमादाय बहुत्वस्यापि योग्यतया सार्थकबहुवचनत्यागे बीजाभावात्। द्वित्वविशिष्टयोः इत्यादिग्रन्थे कुसृष्टि-कल्पनापत्तेश्च।

**VV-G. 2.2.6: शाब्दप्रमाकरणत्वं चेति।** अथ किं तावत् शाब्दप्रमाकरणत्वम् (१)शाब्दत्व-प्रमात्व-उभय-धर्मावच्छिन्न-कार्यतानिरूपित-कारणत्वम्। (२)प्रमानिष्ठ-शाब्दत्वावच्छन्न-कार्यतानिरूपित-कारणत्वम्। (३)प्रमात्व-न्यूनवृत्ति शाब्दत्वघटित-धर्मावच्छिन्न-कार्यतानिरूपित-कारणत्वं वा ? नाद्यः। प्रमात्वस्य अर्थसमाजग्रस्तत्वेन कार्यतानवच्छेदकत्वात्। न द्वितीयः। शाब्दत्वावच्छिन्नं प्रति शाब्दत्वेन कारणत्वस्य 'वह्निना सिञ्चति' इति वाक्येऽपि सत्त्वेन तत्रापि प्रमाणत्वव्यवहारापत्तेः। न तृतीयः। तादृशकरणत्वस्य अनेकत्वेन एकमेव इति ग्रन्थासङ्गतिः इति चेत् ? तृतीयकल्पाङ्गीकारे क्षतिविरहात् स एव अङ्गीकरणीयः। उक्तग्रन्थस्तु शाब्दत्वजातेः एकत्वेन भाक्तैकत्वव्यवहारपरत्वे न उपपादनीयः। सुबर्थैकत्वस्य शाब्दत्वजातौ एव अन्वयः। एवञ्च करणत्वस्य करणस्वरूपत्वपक्षे व्यक्तिभेदेन भिन्नत्वेऽपि न क्षतिः। अत एव 'ध्वनिः प्रमाणम्', 'घटः कर्मत्वम्' इत्यादि-निराकाङ्क्षवाक्यं प्रमाणमित्यादीनां न प्रसङ्गः। प्रमां प्रति शब्दत्वेन स्वरूप-योग्यत्वस्यैव प्रमाणव्यवहारप्रयोजकत्वे अविशेषेण 'वेदाः प्रमाणम्' इतिवद् उक्तप्रयोगाः प्रसज्येरन्। न च इष्टापत्तिः। 'आप्तोपदेशः शब्दः प्रमाणम्', 'प्रयोग-हेतुभूतार्थतत्त्वज्ञानजन्यः शब्दः प्रमाणम्' इत्यादिना अयोग्य-निराकाङ्क्ष-ध्वन्यादि-व्यावृत्तस्यैव शब्दप्रमाणलक्षणस्य सिद्धान्तितत्वेन तस्यैव च व्यवहार-औपयिकतया तत्-शून्ये लक्ष्यव्यवहारस्य अयुक्तत्वात्। किञ्च सर्वं हि वाक्यं सावधारणमिति अवलम्ब्य 'वेदाः प्रमाणम्' इतिवत् लौकिकवाक्यानि प्रमाणमिति न व्यवहरन्ति। तदपि शब्दत्वावच्छिन्न-प्रमाकरणत्वस्य व्यवहारविषयत्वेन उपपद्यते। कस्मिंश्चिदपि लौकिकवाक्ये प्रमाणत्वाभावरूपस्य अप्रमाणत्वस्य असम्भवेन तद्व्यवच्छेदस्य तत्रापि सम्भवात्। एवं वेदत्वावच्छेदेनेव लौकिकवाक्यत्वावच्छेदेनापि प्रमाणत्वस्य उक्तस्य सम्भवेन 'सर्वे वेदाः प्रमाणम्' इत्यस्य इव अवच्छेदकावच्छेदेन अन्वयविवक्षया तत्समानार्थपर्यवसायिनो 'वेदाः प्रमाणम्' इत्यस्येव वा 'सर्वाणि लौकिकवाक्यानि प्रमाणानि' इत्यस्य 'लौकिकवाक्यानि प्रमाणानि' इत्यस्य वा आपत्तिः दुरुद्धरा। न चैवं **शब्दत्वावच्छिन्नं यावत्-शब्दनिष्ठमिति** ग्रन्थस्य का गतिरिति वाच्यम्। **शब्दत्व**-पदेन ज्ञापकासाधारणधर्मस्य आकाङ्क्षारूपस्य

**शब्द-पदेन** च प्रमाणशब्दस्य बोधनीयत्वात्। तदभावात् यथाश्रुतग्रन्थानुरोधिनस्तु उक्तप्रयोगयो वैलक्षण्यम् अनुभवसिद्धम् अपलपन्तो 'ध्वनिः प्रमाणम्' इत्यादिप्रसङ्गम् इष्टापत्त्या वारयन्तो "यद्विशेषयोः" इति न्यायेन क्लृप्तं शाब्दत्वावच्छिन्नं प्रति शब्दत्वेन करणत्वमवलम्ब्य उक्तग्रन्थम् अवतारयेय मन्यन्ते। केचित्तु स्वतात्पर्यविषय प्रमानिष्ठ शाब्दत्वावच्छिन्नकार्यतानिरूपित शब्दत्वावच्छिन्न-करणत्वरूपं शाब्दप्रमाकरणत्वं विवक्षितम्। तथा च ध्वनेः निराकाङ्क्षस्य च तात्पर्याभावात् अयोग्यस्य स्वतात्पर्यविषयप्रमाया अप्रसिद्धे उक्तदोषाणां न अवकाशः। न च स्वत्वाननुगमेन एकत्व असम्भव इति वाच्यम्। शब्दविशिष्टत्वस्य एव (१)स्वतादात्म्य (२)स्वतात्पर्यविषय-प्रमानिष्ठ शाब्दत्वावच्छिन्न-निरूपित-करणत्व-उभयसम्बन्धेन तद्रूपत्वात्। उक्तविशिष्टत्व एव चैकत्वान्वयः। तत्परतया एव च उक्तग्रन्थो व्याख्येय इति वदन्ति। तत्र स्वतात्पर्यविषय-प्रमाकरणत्वस्य संसर्गत्वेऽपि निर्वाहात् अतिरिक्तस्य वैफल्यम्। न च इष्टापत्तिः। प्रमाणपदस्य पारिभाषिकत्वापत्तेः इति चिन्तनीयम्।

**VV-G. 2.2.7**: न चेति एवमिति शेषः। **पदार्थः पदार्थेनान्वेतीति व्युत्पत्ति-विरोध** इति। अत्र इति शब्दस्य स्वरूपवचनस्य न अभेदेन व्युत्पत्तिपदार्थान्वित-परत्वम्। वाक्यस्य व्युत्पत्तिरूपत्वाभावात्। अन्यथा 'व्युत्पन्नोऽयम्' इति व्यवहार-अनुपपत्तेः। वाक्यस्य यथाकथञ्चित् पुरुषनिष्ठत्वेन तदुपपादने च अर्थज्ञान-विरहिणि व्युत्पन्न इति व्यवहारापत्तेः, ग्रन्थे व्युत्पादकत्वव्यवहारानुपपत्तेश्च। अपि तु सन्निहितवाक्य-स्वरूपवचनस्य लुप्तपञ्चमीकस्य व्युत्पत्ति-अन्वितवाक्य-प्रयोजकत्वपरत्वमेव। तथा च पदार्थ इत्यादेः इति वाक्यात् आप्तपुरुषपरम्परा-अधिगतात् जायमानस्य निर्धारितप्रमाणभावस्य तदर्थज्ञानस्य तदर्थान्यथानुपपत्त्या कल्पितस्य तादृशस्य कार्यकारणभावविशेषज्ञानस्य वा व्युत्पत्तेः विरोधः पदार्थता-वच्छेदके पदार्थान्वयस्वीकारे वस्तुभूतेन तेन विषयतया असामानाधिकरण्यम् अप्रमात्वपर्यवसितमित्यर्थः। स्यादिति शेषः। न च तदभ्युपगन्तुं शक्यमिति भावः। अथ कीदृश उक्तकार्यकारणभावः ? न तावद्विशेष्यतासम्बन्धेन शाब्दबुद्धित्वेन मुख्यविशेष्यतासम्बन्धेन उपस्थितित्वेन च सः। पश्वादिपद-शक्यतावच्छेदके लाङ्गूलादौ व्यभिचारात्। नापि मुख्यविशेष्यतासम्बन्धेन शाब्दबुद्धित्वेन वृत्तिग्रहामुख्यविशेष्ये शाब्दमतौ विशेषणतया भासमाने पदार्थान्तरान्वयप्रसङ्गात्। नापि पदार्थान्तर-निष्ठप्रकारता-निरूपित-विशेष्यता-सम्बन्धेन शाब्दबुद्धित्वेन पदार्थान्तरत्वस्य अव्यावर्तकत्वादिति चेत् ? विशेष्यताविशिष्ट-विशेष्यतात्व-सम्बन्धेन शाब्दबुद्धित्वेन कार्यत्वमिति गृहाण। वैशिष्ट्यञ्च (१)स्वतादात्म्य-(२)स्वप्रयोजकवृत्ति-ज्ञानीयविषयतानिरूपित-विषयत्वाप्रयोज्य-विषयता-निरूपितत्व-

उभयसम्बन्धेन। न चैवं सत्यपि 'शोभनः पशुः' इत्यत्र शोभनपदजन्योपस्थितेः मुख्यविशेष्यतासम्बन्धेन शोभनमात्रे सत्त्वेन लोमलाङ्गूलादौ अपि सत्तया तत्रैकत्वादिसङ्ख्यान्वयप्रसङ्गः शोभनपदार्थन्वयप्रसङ्गश्च। शोभनपदार्थस्य द्विधा भानानुपगमात्। न "सकृदुच्चरित" इत्यादि व्युत्पत्तिविरोध इति वाच्यम्। विशेष्यताविशिष्ट-विशेष्यतात्व-सम्बन्धेन शाब्दबुद्धौ स्वीयमुख्यविशेष्यता-प्रयोज्यत्व-सम्बन्धेन उपस्थितत्वेन कारणत्वस्य वाच्यत्वात्। वैशिष्ट्यञ्च (१)स्वतादात्म्य-(२)स्वप्रयोजकवृत्ति-ज्ञानीय-विषयतावशिष्ट-विषयता-निरूपित-विषयत्व-अप्रयोज्य-विषयतानिरूपित-विषयतावत्त्व-उभयसम्बन्धेन। विषयतावैशिष्ट्यञ्च विषयतावत्ता च (१)स्वावच्छेद्यत्व-(२)स्वतादात्म्य-अन्यतरसम्बन्धेन बोध्यम्। 'नीलो घटः' इत्यादिशाब्दबोधीयघटत्वनिष्ठ-प्रकारतानिरूपित-विशेष्यतायामपि उपस्थितेः सत्त्वेन तत्र उक्तसम्बन्धेन शाब्दबोधस्य असत्त्वेन अन्वयव्यभिचारः स्यादिति। निरुक्त-विषयत्वाप्रयोज्य-विषयतानिरूपितत्वं विहाय निरूपितविषयतावत्त्वमुपात्तम्। तथा सति तादृशघटत्वावच्छिन्न-विषयतावत्त्वात् न व्यभिचारः। लाङ्गुलत्व-प्रकारता-निरूपित-विशेष्यतायां स्वप्रयोजक-वृत्तिज्ञानीय-तादृशविषयता-निरूपितत्वस्य लाङ्गूलत्वविषयतायामेव सत्त्वेन लोमविषयतायाः तदनिरूपितत्वेन निरुक्त-विषयत्वाप्रयोज्यतया तन्निरूपितलाङ्गूलत्वावच्छिन्नविषयतावत्त्वस्य सत्त्वेन तत्र व्यतिरेकव्यभिचार इति स्वप्रयोजकविषयताविशिष्टविषयतानिरूपितत्वमुपात्तमिति। यद्वा वृत्तिज्ञानीय-विषयत्वाप्रयोज्य-सांसर्गिकविषयता-निरूपित-विषयता-विशिष्ट-विशेष्यता-सम्बन्धेन शाब्दबुद्धित्वेन बोध्यः। वैशिष्ट्यम् उक्तान्यतरसम्बन्धेन यद्यत्र विशेष्यतात्वं न उपादीयेत तदा "एकत्र विशेषणत्वेन उपस्थितस्य" इत्यादि-व्युत्पत्तेरपि अत एव गतार्थत्वम्। न च पारतन्त्र्येण भासमाने प्रकारे तद्धर्मिणि च व्यतिरेकव्यभिचारः। विषयताविशिष्टान्यत्वस्य विशेषणतया उपादानेन तद्विषयत्वस्य व्यावर्तनीयत्वात्। वैशिष्ट्यञ्च (१)स्वावच्छेद्य-निरूपितत्व-(२)स्वनिरूपित-विषयत्वावच्छेद्य-विषयतानिरूपित-प्रकारतावत्त्व-उभयसम्बन्धेनेति।

ननु आप्तसाधारण-अपरिच्छिन्न-देशकाल-भूरिप्रयोग-विषयत्वेन सिद्धप्रामाणिक-परम्पराधिगमं 'सम्पन्नो व्रीहिः' इति वाक्यं स्वायत्ते शब्दप्रयोगे निरर्थकप्रयोगस्य अन्याय्यतया कल्पितविवक्षितार्थकताक-स्वन्त-व्रीहिपदघटितम् ऋते व्रीहित्वजातौ एकत्वान्वयं न प्रामाण्यम् अर्हति। न च एकत्वस्य व्रीहौ एव अन्वयः सम्भवति। एकत्वविशिष्टे सम्पत्ति-विशिष्टस्य अभेदान्वय-असम्भवात् सम्पत्तेः बहुत्वात्मकत्वात् (१)स्वाश्रयावधिक-अन्तिकत्वग्रह-विषयत्वाभावविशिष्ट-स्वाश्रयावधिक-दूरत्वग्रह-विषयत्व-असामानाधिकरण्य-(२)स्वतादात्म्य-उभयसम्बन्धेन सङ्ख्याविशिष्ट-अनिर्धारित-बहुत्वत्वान्य-सङ्ख्यात्व-व्याप्यधर्मिका बहुत्वसङ्ख्या हि व्रीह्यादिगता

सम्पत्तिः। व्रीहित्र्यादेर्गते क्षेत्रे 'सम्पन्नो व्रीहि' इति व्यवहारवारणाय अनिर्धारित इत्यादि। तत्र सङ्ख्यायाः त्रित्वत्वेन अवधारितत्वात्। यद्वा सङ्ख्यात्वव्याप्येन यादृश-यादृश-धर्मेण सङ्ख्याग्रहे न सम्पन्नत्वव्यवहारः तत्तदवच्छिन्न-भेदकूटवत्त्वं सङ्ख्याविशेषणम्। यत्र एकस्मिन्नेव क्षेत्रे कस्यचिदेकैकस्यान्तिके 'सर्वे व्रीहय' इति बुद्धिः कस्यचित् 'दूरे व्रीहय' इति तत्र तयोः सम्पन्नत्वासम्पन्नत्व-व्यवहारयोः उपपत्त्यर्थं स्वाश्रयावधिक इत्यादि। यत्र अनेकत्व-ग्रहविषयेऽपि व्यवहितापेक्षया दूरत्वग्रहः तत्र सम्पन्नत्वव्यवहारोपपत्त्यर्थं तादृशाभाव-विशिष्टत्वं विषयत्व-विशेषणतया उपात्तम्। वैशिष्ट्यञ्च स्वसामानाधिकरण्येन यत्र व्रीह्यादि-अनेक-जातीयाः सजातीयदूरवर्तिनो विजातीयान्तिकस्थाः तत्र 'सम्पन्नो व्रीहिः' इति न व्यवहारः, अपि तु 'सम्पन्नं शस्यम्' इत्येव यदि प्रामाणिकः, तदा अनेकजातीय-गत-बहुत्वसङ्ख्याम् आदाय आपत्तिवारणाय उद्देश्यतावच्छेदकव्याप्यत्वमपि सङ्ख्याविशेषणतया उपादेयम्। दूरान्तिकत्वग्रहश्च स्वप्रयोजकज्ञान-समानाधिकरणो ग्राह्यः। स च विषयतायां विशेषणम्। तेन पुरुषान्तरीयग्रहम् आदाय कालान्तरीयग्रहम् आदाय च न दोषः। एवञ्च व्रीहित्वजातौ एकत्वान्वयः सिद्धः। तथा च उक्तवाक्योक्तव्युत्पत्त्योः द्वयोः एव प्रामाणिकतया जातौ एकत्वान्वयेन वाक्यस्येव सङ्कोचेन व्युत्पत्तेरपि प्रामाण्यम् उपपाद्यम्। ततश्च प्रमाणत्वेऽपि एकत्वान्वयः सम्भवत्येव। तत्प्रयोगस्यापि प्रामाणिकत्वेन अवधृतत्वादिति आशयेन आह - **सम्पन्नो व्रीहिरित्यादि**। परे तु विजातीयः संयोगः सम्पत्तिः। वैजात्यञ्च सम्पन्नत्वव्यवहारान्यथानुपपत्त्या कल्पनीयम्। सम्पन्नव्यवहार-श्च परस्परसमासक्तेषु एव व्रीहिषु न विरलेषु। न च एकस्मिन्निति तादृशवैजात्य-विशिष्टः संयोगो न एकत्वविशिष्टे व्रीहौ। न च तस्य अव्यासज्यवृत्तितया कथं न एकत्वविशिष्टे सम्भव इति वाच्यम्। एकत्वस्य सजातीयद्वितीय-राहित्यात्मकतया तद्विशिष्टे व्रीहौ सम्पन्नत्वव्यवहारविरहेण तन्निष्ठसंयोगे वैजात्याभावात्। तस्मात् जातौ एकत्वान्वयो वाच्यः। तथा सति नियमसङ्कोच आवश्यक इति वदन्ति। तन्मन्दम्। व्यवहारस्य अन्यथापि उपपन्नतया तादृशवैजात्ये मानाभावात्, अभिघातत्वादिना साङ्कर्यात्। अभिघातत्वादि-व्याप्य-नानावैजात्य-स्वीकारे अनुगमकाभावेन सम्पन्नपद-प्रवृत्तिनिमित्तत्व-असम्भवात् परस्परम् अत्यन्त-सन्निहितेषु असंयुक्तेषु अपि सम्पत्तिव्यवहारदर्शनात्, तादृशव्यवहारस्य कादाचित्कत्व-अनुपपत्तेश्च। मन्त्रादिपदवत् सम्पत्त्यादिपदमपि प्रामाणिक-स्वव्यवहारविषयत्व-प्रवृत्तिनिमित्तक एव। तादृशविषयता च अपेक्षाबुद्धि-विशेष-विषयत्ववद्व्यासज्यवृत्तिः इति न तस्य एकत्वविशिष्टे अन्वयसम्भव इत्यपि कश्चित्।

व्युत्पत्तिसङ्कोचस्येति। उक्तवाक्यात् प्रथमतो जायमानस्य सामान्यतः कार्यकारणभावज्ञानस्य व्युत्पत्तेः अंशतो भ्रमत्वकल्पनस्य इत्यर्थः। यद्वा आपाततो जायमाने प्राथमिकज्ञाने भ्रमत्वग्रहे तत्परत्वासम्भवेन यत्तत्पदार्थतावच्छेदकयोः अन्वयः प्रामाणिकः। तत्तद्भेदकूटविशेषित-पदघटित-वाक्यार्थे तात्पर्यस्य वक्तव्यतया तद्ग्रहात् जायमानाया द्वितीयग्रहरूप-व्युत्पत्तेः प्राथमिकज्ञानविषयत्व-न्यूनवृत्तिविषयताकत्वस्य इत्यर्थः। अथ व्रीह्यादिपदभेदस्य व्रीहित्वादिपदार्थता-वच्छेदकभेदस्य वा उपादाने निरुक्त-कार्यकारणभावे कार्यतावच्छेदकविशेष्यत्व-सम्बन्धे व्रीह्यादिपदाप्रयोज्यत्वस्य व्रीहित्वाद्यवृत्तित्वस्य वा विशेषणत्वे मुख्यविशेष्यता-भिन्नत्व-व्रीह्यादि-पदाप्रयोज्यत्व-उभयाभाववद्विषयत्वस्य कारणता-वच्छेदक-सम्बन्धत्वे वा पर्यवसानम्। तथा सति 'नित्यो व्रीहिः' इत्यपि स्यात्। न च 'सम्पन्नो व्रीहिः' इत्यादिवाक्यघटक-व्रीह्यादिपदस्यैव तत्तद्व्यक्तित्वेन तत्र प्रवेश्यत्वात् न दोष इति वाच्यम्। तथा सति 'नित्यः सम्पन्नो व्रीहिः' इति वाक्यस्य प्रामाण्यापत्तेः। तत्र व्रीहित्वे एकत्वान्वयानुरोधेन तद्व्रीहिपदाप्रयोज्यत्वादेः विशेष्यत्वादौ विशेषणीयतया व्रीहित्वे एकत्वस्य एव नित्यपदार्थस्यापि अन्वयसम्भवेन अयोग्यताया अभावात् इति चेत् ? उच्यते। उक्तवाक्याद् हि पदवृत्तिज्ञानीय-मुख्यविशेष्यता-प्रयोज्य-विशेष्यतावति पदार्थे तादृशविषयतावद् अनुयोगिक-भासमान-संसर्गप्रतियोगित्वं पदवृत्ति-ज्ञानीय-धर्मितावच्छेदकताप्रयोज्य-विषयतावद्-रूपपदार्थतावच्छेदकनिष्ठानुयोगिताक-संसर्गप्रतियोगित्वाभावश्च न बोधयितुं शक्यः। पदार्थतावच्छेदके संसर्गभानाभानयोः व्याघातात् इति। पदवृत्तिज्ञानीय-मुख्यविशेष्यताप्रयोज्य-प्रकारतानिरूपित-संसर्गतानिरूपित-विशेष्यत्वे तादृशविशेष्यताप्रयोज्यत्वस्य पदवृत्तिज्ञानीय-धर्मितावच्छेदकता-प्रयोज्यत्वाभावस्य च बोधे उक्तवाक्यस्य तात्पर्यम् अङ्गीकरणीयम्। अत एव यत्र समवायादेः पदार्थतावच्छेदकतावच्छेदकता-घटकसम्बन्धत्वं तत्र पदार्थे पदार्थतावच्छेदका-नुयोगिक-समवायरूपसम्बन्ध-प्रतियोगित्वस्य समवायस्य एकत्वेन प्रतिषेद्धुम् अशक्यतया पदार्थतावच्छेदके पदार्थान्तरान्वयप्रसङ्ग इत्यपि निरस्तम्। एवञ्च सङ्कोचे क्रियमाणे वाक्यार्थज्ञानस्य व्युत्पत्तिरूपतापक्षे तादृशविशेष्यत्वे 'सम्पन्नो व्रीहिः' इत्यादिवाक्यघटक-स्वाद्यर्थैकत्वनिष्ठ-प्रकारतानिरूपित-व्रीह्यादि-पदार्थता-अवच्छेदकताप्रयोज्य-विशेष्यत्वादिभेदकूटवत्त्ववृत्ति-ज्ञानीयधर्मितावच्छेदकता-प्रयो-ज्यत्व-उभयाभावात्मक-तादृश-अप्रयोज्यत्वस्य वाक्यार्थघटकत्वं पर्यवस्यति इति न 'नित्यः सम्पन्नो व्रीहिः' इत्यस्य प्रसङ्गः। उक्तवाक्यार्थ-आक्षिप्तकार्यकारणभाव-ज्ञानस्य व्युत्पत्तिरूपत्वपक्षे च उक्तकार्यकारणभावघटक-मुख्यविशेष्यत्वस्थाने मुख्यविशेष्यत्व-भिन्नत्वनिरुक्तवाक्यघटक-स्वप्रयोज्य-एकत्वनिष्ठप्रकारता-निरूपित-

व्रीहित्वनिष्ठविशेष्यताप्रयोजक विषयताभिन्नत्व उभयाभाववद्विषयत्वस्य प्रवेशो यद्यपि न सम्भवति, समानाकारकज्ञानीयविषयतयो ऐक्येन उक्तदोषतादवस्थ्यात्, तथापि कार्यतावच्छेदक-सम्बन्धघटक विषयताया तादृशवाक्यघटक-स्वादिप्रयोज्य-एकत्वादि-निष्ठप्रकारताक विषयताभेदकूटवत्त्वस्य विशेषणत्वे सम्भवत्येव इति न उक्तदोष-प्रसङ्गः। व्रीहित्वे नित्यान्वयबोधस्य आपादकत्वेन अभिमतस्य उक्तसम्बन्धस्य प्रसिद्धतया कारणीभूतोपस्थितेः मुख्यविशेष्यतया अभावात् व्रीहित्वविशेष्यक एकत्वप्रकारक बोधस्य उक्तसम्बन्धस्य अप्रसिद्धत्वेन तं प्रति उक्तकारणविरहस्य अकिञ्चित्करत्वेन तत्सम्भवाच्च। अथ उक्तरूपेण कार्यकारणभावो न प्रामाणिकः। पदवृत्तिज्ञानात् द्रव्यत्वादिना घटोपस्थितौ यथाकथञ्चित् घटत्वोपस्थितौ च विनिगमकाभावेन घटत्वेन द्रव्यत्वेन च घटे पदार्थान्तरान्वय-प्रसङ्गात्। एव निराकाङ्क्षपदात् घटोपस्थितौ आकाङ्क्षाज्ञाने च सति शाब्दबोधप्रसङ्गात्। विशेष्यपदनिवेशे च पर्यायस्थले व्यतिरेक व्यभिचारप्रसङ्गात्। पदार्थैकदेशे पदार्थान्तरान्वयप्रसङ्ग-वारणाय तत्तत्पदजन्य-तत्तद्धर्मावच्छिन्न-विशेष्यकोपस्थित्यव्यवहितोत्तर-वृत्तिज्ञानीयसांसर्गिक-विषयत्वा-प्रयोज्य-संसर्गता-निरूपित तद्धर्मावच्छिन्न विषयताक-शाब्दबुद्धित्वावच्छिन्न प्रति तत्तद्धर्मप्रकारतानिरूपित तत्तन्निष्ठमुख्य-विशेष्यताकोपस्थतित्वेन कार्यकारण-भावस्य वक्तव्यत्वात्। तथा सति न कथञ्चिदपि व्रीहित्वे पदार्थान्वयसम्भवः। न चोपस्थितिशाब्दबुद्ध्योः तत्तद्धर्मावच्छिन्न-विषयकत्व-पदविशेष-वृत्तिज्ञानजन्यत्व-घटितधर्माभ्यां कार्यकारणभावस्य सिद्धान्तितत्वेन तत एव उक्तदोषवारणसम्भवात् पदार्थतावच्छेदके पदार्थान्तरान्वयप्रसङ्ग-वारणाय उक्तसामान्यकार्यकारणभाव एव अभ्युपेय इति वाच्यम्। उपस्थिति-शाब्दबुद्ध्योः उक्तरीत्या कार्यकारणभावस्य निर्वचने फलद्वयसम्पत्तौ कार्यकारणभावद्वयाङ्गीकारस्य निर्युक्तिकत्वात्। आकाङ्क्षाबहिर्भूतपदात् मुख्यविशेष्यतया पदार्थतावच्छेदकोपस्थितौ आकाङ्क्षा-घटकपदात् वा येन रूपेण पदार्थतावच्छेदकस्य शाब्दबुद्धौ प्रवेशः तद्धर्मविशिष्टावच्छिन्नोपस्थितौ रूपान्तरेण च मुख्यविशेष्यतया उपस्थितौ च तत्र पदार्थान्तरान्वय-प्रसङ्गाच्च। न च वीहित्वनिष्ठविशेष्यताया निरवच्छिन्नत्वेन तन्निरूपक-शाब्दबुद्धेः कार्यतावच्छेदकानाक्रान्तत्वेन तं प्रति उक्तकारणविरहो अकिञ्चित्कर इति वाच्यम्। एवमेव 'नित्यो व्रीहिः' इत्यत्रापि नित्यान्वय-बुद्धिप्रसङ्गात् प्रसञ्जकसम्वलनासम्वलनयोः उभयत्रापि तुल्यत्वात् इति चेत् ? उच्यते। उपस्थितिकारणतया हि पदार्थभानं पदार्थद्वयसंसर्गभानं च आकाङ्क्षाज्ञानकारणतया निर्वाह्यम् इति पदार्थः पदार्थेनेत्यादि-नियमान्यथा-नुपपत्त्या पदयोः समभिव्यहारज्ञानं पदार्थयोः एव अन्वयबुद्धौ कारणमिति। यत्तु

अतत्त्वेन अनुगतेन पद-पदार्थौ विषयीकृत्य तत्तत्पदयोः समभिव्याहारज्ञानं तत्तत्पदार्थयोः एव अन्वयबुद्धौ कारणमिति वा सामान्यतः आकाङ्क्षाज्ञान-कार्यकारणभाव-विज्ञानरूपैव प्रथमतो व्युत्पत्तिः जायते। अनन्तरं 'सम्पन्नो व्रीहिः' इत्यादिवाक्यानां प्रामाणिकत्वे एकदेशान्वयतात्पर्ये चावधृते यत्र यत्र पदार्थतावच्छेदके पदार्थान्वयभानं प्रामाणिकं तत्र तादृशान्वयबुद्धौ आकाङ्क्षा-ज्ञानस्य कारणत्वं नान्यत्र इति सङ्कोच्यते व्युत्पत्तिरिति न आपत्त्यनुपपत्ती। उपस्थितेः आकाङ्क्षाज्ञान-कारणतावच्छेदक-संसर्गघटकत्वम् आकाङ्क्षाज्ञान-सहकारित्वं वा इति अन्यदेतत्। तथा हि (१)स्वघटकव्रीहिपदजन्य-व्रीहित्वा-वच्छिन्नोपस्थितिमत्व-(२)स्वघटक-स्वपदजन्यैकत्वत्वावच्छिन्न-उपस्थितिमत्व-उभय-सम्बन्धेन व्रीहिरित्याकारकानुपूर्वी-ज्ञानविशिष्टायाम् एकत्वप्रकारतानिरूपितव्रीहित्व-निष्ठ-निरवच्छिन्न-विशेष्यत्वावच्छिन्न-अवच्छेदकताक-विशेष्यता-निरूपित-सम्पन्नत्वा-वच्छिन्न-प्रकारताक-शाब्दबुद्धौ व्रीहिरित्याकारकानुपूर्वीज्ञानस्य स्वघटकसम्पन्नत्वा-वच्छिन्न-उपस्थितिमत्त्वसम्बन्धेन उक्तशाब्दबुद्धौ सम्पन्न इत्याकारकानुपूर्वीज्ञानस्य च कारणत्वम्। 'नित्यो व्रीहिः' इत्यस्य आप्तसाधारण-अपरिच्छिन्न-देश-काल-भूरिप्रयोगविषयत्वेन अनवधृत-प्रमाणभावतया व्रीहित्वे नित्यान्वये बीजाभावेन तत्र तात्पर्यस्य अनवधृतत्वात् उक्ताकाङ्क्षाज्ञानस्य नित्यनिष्ठप्रकारतानिरूपित-व्रीहित्व-निष्ठ-विशेष्यत्वघटित-धर्मावच्छिन्नं प्रति च न कारणत्वमिति प्रथमज्ञानस्य अंशतो भ्रमत्वात् तदंशपरिहारेण जायमानस्य द्वितीयज्ञानस्य न्यूनविषयकत्वात् भवति सङ्कुचितत्वमिति। कश्चित् तु उक्तनियमान्यथानुपपत्त्या तद्धर्मिकेतरान्वयबुद्धौ तत्तद्धर्मिकवृत्ति-ज्ञानजन्य-तदुपस्थित्यभावविशिष्ट-तत्तद्धर्मावच्छिन्नधर्मिक-वृत्तिज्ञान-जन्य-तत्तद्धर्मावच्छिन्नविषयक-उपस्थितित्वेन प्रतिबन्धकत्वम् आक्षिप्यते। सति च नियमसङ्कोचे तत्तद्धर्मावच्छिन्नविषयक-यद्यदुपस्थितिकाले तत्तद्धर्मिकेतरान्वय-बोधः प्रामाणिकः तत्तद्व्यक्तेः उत्तेजकत्वं च लभ्यते। तथा च एकदेशान्वयस्य न आपत्त्यनुपपत्ती। अत्र च विशेष्यपदनिरूपितत्वं प्रथमवृत्तिपदार्थे प्रवेशनीयम्। तेन वाक्यबहिर्भूतपदात् तद्धर्मस्य मुख्यविशेष्यतया उपस्थितौ अपि न एकदेशान्वय-प्रसङ्ग इत्याह, तच्चिन्त्यम्। ननु 'सम्पन्नो व्रीहिः' इति वाक्यस्य अवधारितेन प्रामाण्येन सामान्यतः सद्भूतेऽर्थे तात्पर्यम् उन्नीयते तच्च व्रीहौ पर्याप्तिसम्बन्धेन एकत्वान्वये बाधे गृहीते व्रीहित्वे च अनन्यगतिकत्वाभावेन दुष्टरस्य पदार्थ इत्यादि-नियमसङ्कोचस्य प्रसङ्गः। अर्थान्तरस्य प्रकृतपदानभिधेयत्वेन विशिष्य तात्पर्यनिर्णयाभावात् अलक्ष्यत्वेन च प्रकृतपदार्थत्वाभावे च सिद्धे स्वाश्रयव्रीहित्व-वत्त्व-सम्बन्धेन एकत्वविशिष्टव्रीहिघटितार्थे पर्यवस्यति इति पदार्थ इत्यादि नियमसङ्कोचो न आवश्यकः। न च विभक्त्यर्थसङ्ख्यायाः प्रकृत्यर्थे पर्याप्ति-

**सम्बन्धेनैव** अन्वय इति गृहीतस्य अन्वयव्यतिरेकाभ्यां नियमस्य अत्रापि पक्षे सङ्कोचप्रसङ्गो दोष इति वाच्यम्। वृत्तिज्ञानीयविषयत्वाप्रयोज्य-संसर्गता-निरूपितस्य स्वतन्त्रभासमाननिष्ठ प्रकारत्वस्यापि विशेष्यत्वस्य च अवच्छिन्नत्व-नियमात् तत्सङ्कोचदोषस्यापि तत्र प्रसङ्गात् नियमैकसङ्कोचदूषितोक्तपक्षस्य ततोऽभ्यर्हितत्वात्। न च परम सुन्दर इत्यादौ परमपदार्थान्वयस्य सौन्दर्ये सखण्डपदार्थे विवक्षितत्वेन पदार्थैकदेशे सौन्दर्ये परमपदार्थान्वयपक्षे नियमसङ्कोचस्य परमपदलक्ष्यार्थस्य स्वाश्रयसौन्दर्यवत्त्व-सम्बन्धेन परमत्व-विशिष्टस्य सुन्दरे अन्वयपक्षे च लक्षणाप्रसङ्गस्य एकैकस्यैव दोषस्य सद्भावात् अनध्यवसाय इति वाच्यम्। एकदेशान्वय-नियमसङ्कोच-प्रसङ्गदोषस्य तात्पर्यग्रह-पुरःस्फूर्तिकतया लक्ष्यार्थे एव तात्पर्यस्य गृहीतत्वात् लक्षणायाः समूलत्वेन अदोषात्। न च विवक्षित-एकैकवचनघटिते महान् धान्यराशिः इत्यादि वाक्ये का गतिः ? सखण्डवस्तुनि पदार्थतावच्छेदके धान्यराशित्वे एकत्वान्वये पदार्थ इत्यादिनियमसङ्कोचो दोषः। स्वाश्रयपदार्थतावच्छेदकवत्त्वसम्बन्धेन पदार्थ एवान्वये च पर्याप्तिसम्बन्धेन अन्वयनियमसङ्कोचो दोष इति पक्षयोः अपि एकैकदोषस्य एव सद्भावेन अनध्यवसायापत्तिः इति वाच्यम्।

**VV-G. 2.2.8:** 'सम्पन्नो वीहिः' इत्यत्र उक्तयुक्त्या पर्याप्तिसम्बन्धेन अन्वयनियमस्य अंशतो भ्रमविषयत्वे सिद्धे अन्यांशेऽपि तस्यैव तथात्वौचित्यात् क्लृप्तानुसारित्वात् कल्पनायाः पदार्थ इत्यादिनियमस्य भ्रमविषयतायाः कुत्रापि अक्लृप्तत्वेन तस्य तथात्वस्य कल्पयितुम् अयुक्तत्वात् इत्याशयेन आह - **यदि च** इत्यादि। **यदि** चेति विवादप्रदर्शनाय। तथा हि आकाशपदात् स्वरूपत उपस्थितस्य शाब्दबोधविषयत्वे अन्वयितावच्छेदकरूपेण अन्वय्युपस्थितेः अनपेक्षितत्वात् व्रीहित्व-एकत्वान्वये नियमद्वय-सङ्कोचदोषस्य अनवकाशात् तस्य व्रीहित्व एवान्वयः। शब्दाश्रयत्वादिना उपस्थितस्य एव आकाशस्य भानमितिपक्षे च व्रीहित्वजातौ अन्वये दोषद्वयप्रसङ्गात् व्रीहौ एव तस्य अन्वयोऽङ्गीकार्य इति।

**अन्वयितावच्छेदकरूपेण अनुपस्थितेरिति**। अथ अन्वयितायाः प्रकृतायाः अवच्छेदकत्वं विवक्षितम्, अन्वियितामात्रस्य वा ? नाद्यः। तथाहि अन्वयितायाः सम्बन्धित्वरूपाया अवच्छेदकत्वं न तावदनतिप्रसक्तत्वनियतं प्रतियोगित्वादीनाम् इव सम्भवति। 'नीलो घटः' इत्यादौ नीलान्वयित्वविरहिणि पीतघटे वर्तमानस्य घटत्वस्य तत्त्वानुपपत्तेः घटविशेषत्वस्य तत्त्वापत्तेश्च। न च अनतिरक्तवृत्तत्व-उदासीनं सर्वत्र तद्व्यवहारापत्तेरिति भासमानवैशिष्ट्य-प्रतियोगित्व-अनुयोगि-त्वात्मक-प्रकारत्व-विशेष्यत्वयोः अन्वयित्वरूपतया तदवच्छेदकस्य अतिरिक्त-प्रकारत्व-विशेष्यतावच्छेदकत्व-नियतस्य स्वरूपसम्बन्धात्मकावच्छेदकत्वस्य वा

तत्त्वं वाच्यम्। एवञ्च व्रीहित्वत्वावच्छिन्ने अन्वयस्वीकार एव व्रीहित्वत्वस्य अन्वयितावच्छेदकत्वम्। न च तत्स्वीक्रियते इति प्रकृतान्वयितावच्छेदकाप्रसिद्धेः। न द्वितीयः। अन्वयितावच्छेदक इत्युक्तिवैफल्यादिति चेत् ? न। शाब्दबोध-विशेष्यत्व-विशेषणस्य अवच्छिन्नत्वनियमेन एकत्वस्य व्रीहित्वेऽन्वयाङ्गीकारे व्रीहित्वत्वेनैव रूपेण सोऽङ्गीकरणीयः। न च तत्सम्भवति। व्रीहित्वत्वेन उपस्थितेः तत्र अपेक्षणीतया तदभावात् व्रीहिपदस्य स्वरूपतो व्रीहित्वविशिष्ट एव शक्तेः। न च लक्षणया तत्सम्भवः। उक्तलक्षणाया निरूढत्वाभावेन उक्तप्रयोगस्य स्वारसिक-त्वानुपपत्तेः इत्याशयात् अन्वयितावच्छेदरूपेण इत्यस्यान्वयितावच्छेदकतया सम्भाव्यमानेन रूपेण इत्यर्थकत्वादिति। अथोक्तनियमनिर्वाहकं वक्तव्यमिति चेत् ? अत्र केचित्। विशेष्यतात्व-विशेष-सम्बन्धेन प्रकारतात्व-विशेषसम्बन्धेन च शाब्दबुद्धिं प्रति स्वप्रकारावच्छिन्नत्व-सम्बन्धेन उपस्थितेः कारणत्वात् उक्तनियम-निर्वाह इत्याहुः।

वस्तुतस्तु शाब्दबोधविषयताद्वयी वृत्तिज्ञानीयविषयताप्रयोज्या आकाङ्क्षा-प्रयोज्या च। आद्याया न अवच्छिन्नत्वनियमः अन्त्यायाः तु अपरतन्त्रभासमान-गतायाः तथात्वनियमः। स च आकाङ्क्षाज्ञानकार्यकारणभावेनैव निर्वाह्यः। आकाङ्क्षाज्ञानमात्रस्य हि तत्तद्धर्मावच्छिन्नविशेष्यता-निरूपित-तत्तत्सम्बन्धावच्छिन्न-तत्तद्धर्मावच्छिन्न-प्रकारताक-शाब्दबोधं प्रति एव कारणत्वम्, न हि कस्यापि अनवच्छिन्नविशेष्यताकबोधं प्रति। तथा च निर्विशेषस्य सामान्यस्य अभावेन शाब्दविशेषसामग्रीं विना सामान्यसामग्रीतः कार्योत्पत्त्यसम्भवेन विशेषसामग्र्या अपेक्षणीयतया तस्याश्च सर्वस्या अवच्छिन्नविशेष्यताक-बोधकारण-घटितत्वात् अनवच्छिन्न-विशेष्यताक-बोधस्य अलीकत्वात् नियमनिर्वाह इति। प्रकृतेऽपि 'वेदाः प्रमाणम्' इत्यादौ अपि तादृश्येव गतिः। यथा स्वाश्रयव्रीहित्ववत्त्व-सम्बन्धेन व्रीहौ एकत्वान्वयेन 'सम्पन्नो व्रीहिः' इत्यत्र प्रामाण्योपपत्तिरूपा गतिः, तथा स्वाश्रय-प्रमाणत्ववत्त्व-सम्बन्धेन प्रमाण एकत्वान्वयेन प्रामाण्योपपत्तिरूपैव गतिः।

**VV-G. 2.2.9:** एकत्वस्य एकमात्रवृत्ति-सङ्ख्यात्वेन निरुक्तसम्पन्नत्वन्यून-वृत्तितया तदनुयोगितावच्छेदकत्वासम्भवे जातौ एकत्वभानाभ्युपगम-उपष्टम्भकतां मन्यमानस्य एतद्देशविद्यमान-व्रीहित्वसहित-एकत्वजातीयस्य अन्यूनानतिप्रसक्ततया तादृशावच्छेदकमुपपाद्य जातौ एकत्वभानस्य निरर्थकतां वदतः पक्षं दूषयितुम् उपन्यस्यति - **यत्त्विति**।

**एकवचनोपस्थितानि** इति। एकवचनस्य एकत्वत्वेन एकत्वशक्ततया तेन रूपेण अनेकेषु शक्तिग्रहे एकत्वानाम् उपस्थितिसम्भवात् तदभिप्रायेण इदम्। अथ एकवचनोपस्थितानि नानैकत्वानि इति नाना-एकत्वेषु उपस्थितत्वोक्तिः निरर्थिका।

शाब्दबुद्धौ अपूर्वव्यक्तिभानाय उपस्थिति-शाब्दबुद्ध्योः समानप्रकारकत्वेनैव कार्यकारणभावस्य दीधिति-कारानुमतत्वेन एकत्वत्वेन यद्किञ्चिदेकत्वोपस्थितौ अपि शाब्दबुद्धौ योग्यानां नानैकत्वानां भानसम्भवात्। स्मृति-अनुभवयोः समानविषयकत्वेन कार्यकारणभावात् शाब्दबोधविषय-व्रीहिगतस्य यदेकत्वस्य न प्रागनुभवः तस्य न उपस्थितित्वसम्भव इति सामान्यलक्षणानङ्गीकारपक्षे व्रीहिगतैकत्वानाम् उपस्थितित्वपरस्य उक्तग्रन्थस्य न हि उक्तिरपि सम्भवति। न च शाब्दबोधविषयसकलव्रीहिषु एकत्वभानं निष्प्रयोजनत्वात् न विवक्षितमिति वाच्यम्। 'एको द्वौ' इति प्रयोगवारणाय भासमान-सङ्ख्यानुयोगितावच्छेदकतया एव सङ्ख्याभानस्य स्वीकरणीयतया उक्तग्रन्थस्य एकत्वजातीयेषु सम्पन्नत्वा-नुयोगितावच्छेदकत्वोपदानपरत्वेन तथा भानस्य अवश्योपेयत्वात्। अन्यथा **प्रत्येकं नानाव्रीहिषु** इत्यादिउक्तिवैफल्यात्। यत्किञ्चिद्व्रीहिव्यक्तौ यत्किञ्चिदेकत्वान्वयेन अपि तदंशे प्रामाण्यस्य अक्षतेरिति चेत् ? सत्यम्। सामान्यलक्षणाभ्युपगमपक्षीय एवोक्तग्रन्थः। तत्पक्षे च समानविषयतया उपस्थिति-शाब्दबुद्ध्योः कार्यकारणभाव इति सकलैकत्वस्य उपस्थितित्वापेक्षा अस्ति इति न असङ्गतिः। वस्तुतस्तु शाब्दबोधविषयेषु एकत्वेषु प्रचुरस्य उपस्थिततया छत्रिन्यायेन भवति तथोक्तिः सङ्गता। तथा च शाब्दबोधविषय-सकल-एकत्वानाम् उपस्थितत्वलाभेन तत्प्रयोजनान्वेषणाया अपि न उन्मेषः। धर्म-धर्मिणोः द्वयोः नानात्वेन उक्तेः सकल-तादृशव्रीहिषु एकत्वान्वयलाभः। उपस्थितमित्युक्तौ तत्रापि जात्येकत्वविवक्षापत्तेः। उपस्थितानीत्यादिबहुवचनोक्तिः प्रत्येकम् इत्यनुक्तौ नानैकत्वानाम् एकैकव्रीहि-अन्वयलाभः स्वरसतः स्यादिति तदुपात्तम्।

**VV-G. 2.2.10: स्वसजातीयनिष्ठ-भेदप्रतियोगितानवच्छेदकैकत्वरूपम्** इति। अथात्र स्वपदेन कस्य प्रतीतिरभिमता ? न तावत् एकत्वस्य। तस्या व्युत्पत्ति-सिद्धत्वेऽपि तत्तद्ग्रन्थपर्यालोचनया प्रकृत्यर्थस्यैव साजात्य-प्रतियोगित्व-प्रतिपत्तेः तद्विरुद्धत्वात्। नापि प्रकृत्यर्थस्यैव स्वपदस्य स्वप्रयोजकबुद्धिविषयत्वे सति साक्षात्परम्परया वा यः स्वार्थस्य विशेष्यो यश्च समभिव्याहृत-क्रियाकारकपदार्थः तदुभयत्र शक्तेः, उक्तस्वपदघटितवाक्यज-बुद्धौ प्रकृत्यर्थो हि न स्वार्थघटितार्थस्य विशेष्यः। तद्बोधकपदाभावात् सजातीयद्वितीयराहित्यस्यैव विशेष्यतया भातत्वात् च। न हि अध्याहृतक्रियापदार्थ-कारकरूपोऽपि च सः। भवतीत्यादिक्रिया-पदानामेव अध्याहर्तव्यतया उक्तराहित्यस्य एव तत्कारकतया प्रतीतेः। एवमत्र स्वपदेन हि प्रकृत्यर्थग्रहणे स्वसमभिव्याहृतपदार्थसंसर्गित्वविशिष्ट-(VV-2.2.11) -इत्यादौ अपि स्वपदेन तस्यैव ग्राह्यतया तस्य शब्दानात्मकत्वेन तत्समभिव्याहृत-त्वाप्रसिद्धिश्च। न च **स्वसमभिव्याहृत**-इत्यादिग्रन्थदर्शनेनात्र स्वपदेनैकवचनग्रहणं

सम्भवति। शक्त्युपाधिविरहात्। साजात्यस्य प्रतियोग्यनुयोगि-उभयवृत्तित्वनियमेन एकवचनावृत्तेः वक्ष्यमाणधर्मस्य साजात्यरूपतानुपपत्तेश्चेति चेत् ? न। प्रकृत्यर्थे वर्तमानम् इत्येतावदध्याहृत्य प्रकृत्यर्थस्य स्वपदार्थत्वोपपादनसम्भवात्। तस्य वर्तमानत्वरूप-क्रिया-कारकत्वात्। यत्तु सम्बन्ध-बोधक-स्वसामानाधिकरण्यादि-पदघटक-स्वपदेन सम्बन्धिबोधनिर्वाहाय शक्त्युपाध्यन्तरस्य वक्तव्यतया तथैव अत्रापि तद्विशेषोक्त्या निर्वाह इति। तदसत्। अन्वयपदस्य कृदन्ततया वैशिष्ट्यपदस्य च कृदन्तनिष्पन्नतया तद्घटकक्रियापदार्थ-कारकत्वादेव षष्ठ्यन्त-प्रतियोगिबोधक-पदार्थस्य स्वपदार्थतासम्भवात्। स्वसमभिव्याहृतेत्यादौ स्वपदार्थस्य प्रकृत्यर्थसम्बन्धिनः तादात्म्येन समभिव्याहृतपदार्थेन सह अन्वयः। तेन स्वपदार्थस्य शब्दरूपत्वेऽपि न क्षतिः। स्वपदं सम्पातायातम् इति कश्चित्। समभिव्याहारश्च सम्बन्धिनम् अपेक्षमाणः प्रकृतिपदं प्रकृतिपदार्थश्च तथाभूत-एकवचनं तत्त्वेन कल्पयति इति न काप्यनुपपत्तिः। स्वपदमात्मीयपरम्। तथा च स्वबोधकशब्दलाभ इत्यन्ये।

अथ सजातीयनिष्ठभेदप्रतियोगित्वाभावस्यैव लाघवात् सजातीय-द्वितीय-राहित्यरूपत्वम् उचितम्। न च उभयभेदप्रतियोगित्वम् आदाय असम्भव इति वाच्यम्। भेदप्रतियोगितानवच्छेदकत्वविवक्षायामपि एकत्ववद्-गगनाद्युभयभेदमादाय असम्भव-तादवस्थ्यात्। न च प्रतियोगितावच्छेदकता पर्याप्त्यनधिकरणत्वविवक्षया अत्र न दोष इति वाच्यम्। पूर्वक्षणावच्छिन्नैकत्ववद्भेदस्य अपरक्षणावच्छेदेन एकत्वव्यक्तिमद्भेदस्य च उत्पत्तिकालावच्छेदेन स्वसजातीयनिष्ठत्वेन असम्भव-वारणाय निरवच्छिन्नविशेषणतया अवृत्तित्वस्य प्रतियोग्यवृत्तित्वस्य भेदविशेषणत्व-प्रसक्तौ लाघवात् प्रतियोग्यवृत्तित्वस्य एव हि तत्त्वमुचितम्। तावतैव उभयभेदस्यापि वारणेन तद्वारकान्तरानुपादानात्। न च प्रतियोग्यवृत्तित्वस्यापि उभयाभावादिकम् आदाय दोषवारणाय परिष्करणीयतया न लाघवमिति वाच्यम्। निरवच्छिन्नत्वस्यापि एवमेव परिष्करणीयत्वात् पर्याप्त्यंशविवक्षाया आधिक्यादिति। यत्तु प्रतियोगिताया अव्याप्यवृत्तित्वे सजातीयद्वितीयकेऽपि समान्यधर्मावच्छेदेन तादृशप्रतियोगित्वाभाव-सत्त्वादापत्तिरिति। तन्न। एकत्वावच्छेदेन तादृशावच्छेदकता-पर्याप्त्यनधिकरणत्वस्य सजातीयद्वितीयवृत्त्येकत्वे सत्त्वेन आपत्तेः तुल्यत्वात्। निरवच्छिन्न-विशेषणतया उभयावृत्तिधर्मावच्छेदेन वा तादृशाभाववत्त्वस्य विवक्षया वारणस्यापि तुल्यत्वादिति चेत् ? ओमिति ब्रूमः। अत एव एकवचनतुल्य-एकपदशक्तिविचारे निरुक्त-प्रतियोगित्वाभावस्यैव सजातीय-द्वितीय-राहित्यरूपता उक्ता। इह तु तावत् दूरानुधावनं "द्व्येकयोर्द्विवचनैकवचने" (पा.१.४.२२) इति शक्तिग्राहक-शास्त्रतः सङ्ख्यारूप-द्वित्वसाहचर्यात् सङ्ख्यारूपैकत्व एव शक्तिप्रतीतेः तस्याः सर्वथा

बाधकल्पनापेक्षया अशतो बाधकल्पनस्य न्याय्यतया तदर्थमिति गृहाण। एकत्वमात्रम् अविशेषित-एकत्वत्वावच्छिन्नम्। अर्थतः पदार्थत्वेन गृहीतैकत्व-व्याप्तिकत्वेन लिङ्गभूतात् अर्थान्तर-प्रतिपत्त्यर्थम् अवश्यप्रयोक्तव्यपदार्थात् लाभात् = ज्ञानात्। तथा च प्रत्ययस्य प्रकृतिं विना प्रयोगानर्हत्वेन प्रकृतिपदस्य अवश्यप्रयोक्तव्यतया उक्तयुक्त्या विलम्बेनापि ततः तदर्थप्रत्यये सम्भवति तत्र शक्तिकल्पनम् अनुचितम्। अत एव अपूर्वादौ लिङ्गादीनां शक्तिः निराकृता। सजातीयद्वितीयराहित्येन तु न प्रकृत्यर्थे नियत इति तस्य अनन्यलभ्यतया एकवचनार्थतासम्भव इति भावः। **अनुपयोगात्** इति। अनेकव्यावृत्तिः एकत्व-प्रतिपत्तेः फलम्। तच्चैकत्वमात्र-प्रतिपत्तेः न भवतीति विशेषस्य तदर्थता इति भावः। अत एव विशिष्टैकत्वस्य एकवचनार्थत्वादेव। **पशुकरणकेति**। गौणमत्र करणत्वम्। तत्र कर्मण एव करणसंज्ञाविधानाद्। एवं कर्मत्वमपि गौणमेव। सम्प्रदानस्य कर्मसंज्ञानुशासनात्। तथा च एकपशुनिष्ठ-रुद्रनिरूपित-स्वत्त्व-विषयको मन्त्रपूर्वकस्त्याग इष्टसाधनम् इति वाक्यार्थः। तत्र अनेकपशुकरणक-यागस्य अनन्तर्भावेण इष्टसाधनत्वेन अदृष्टसाधनत्वाक्षेपस्य असम्भवेन अदृष्ट-साधनताया अप्रामाणिकतया न ततोऽदृष्टसिद्धिः इति भावः।

**VV-G.2.2.11-12:** **स्वसमभिव्याहृत-पदार्थसंसर्गित्व-विशिष्ट-प्रकृत्यर्थता-वच्छेदकरूपेणेति**। अथ समभिव्याहृत-यत्किञ्चित्पदार्थ-संसर्गित्वं विवक्षितम्, यावत् तादृशपदार्थसंसर्गित्वं वा ? संसर्गोऽपि यः कश्चिदुपादेयः प्रकृत-शाब्द-बोध-विषयो वा ? सोऽपि साक्षादेव प्रवेश्यः, साक्षात्परम्परासाधारणो वा ? तत्र न तावत् आद्यः सम्भवदुक्तिकः। नील-पीत-उभयघटवति 'अत्र नीलो घटोऽस्ति' इत्यस्य भोजनकर्तृ-शयनकर्तृ-ब्राह्मणद्वयवति 'अत्र ब्राह्मणो भुङ्क्ते' इत्यस्य च अनुपपत्तेः। समभिव्याहृतपदार्थ-एतद्देशवृत्तित्व-संसर्गित्वस्य पीतघटे शयनकर्तृ-ब्राह्मणे च सत्त्वात्। नापि द्वितीयः। समभिव्याहृतपदार्थ-नीलसंसर्गित्व-तादृश-भोजनकर्तृत्व-संसर्गित्वयोः पीतघट-शयनकर्तृकब्राह्मणयोः अभावेन उक्तदोषा-प्रसक्तावप्यस्य संसर्गावलम्बिपक्षसत्त्वसापेक्षत्वेन तदसत्त्वोपपादानेन सुनिरासत्वात्। तेषु प्रथमः नीलादेः अपि कालिकादिसंसर्गस्य पीतघटादौ सत्त्वात्। नापि तृतीयः। कालिकेन नीलरूपवति 'अत्र नीलो घटः' इत्यत्र कालिकस्यापि प्रकृतशाब्दबोध-विषयत्वात्। समभिव्याहृततत्तत्पदार्थनिष्ठविषयतानिरूपित-शाब्दबोधीयसंसर्गत्वस्य विवक्षणे च निरूपितत्वस्य साक्षात्प्रवेशे साक्षात्संसर्गकल्पादरः स्यात्। तत्र नीलघटेऽपि यावत्पदान्तर्गत-इदम्-आदि-अर्थनिष्ठविषयतासाक्षान्निरूपित-संसर्गता-वन्निरूपितत्वानुयोगित्वाभावेन सजातीय-अप्रसिद्धिः। परम्परासाधारण-निरूपितत्व-प्रवेशे च कालिकस्यापि उक्तस्थले सङ्ग्रहप्रसङ्गात्। पीतघटवति 'अत्र नीलो

घटः' इत्यत्र पीतघटसंसर्गताया अपि नीलविषयतया परम्परानिरूपितत्वात्। 'फलं भुङ्क्ते' इत्यादौ फले भोजनसंसर्गित्वोपपत्त्यर्थं प्रतियोगित्वानुयोगित्वान्यतररूपस्यैव संसर्गित्वस्य प्रवेश्यत्वात् पीतघटस्यापि यावत्पदार्थ-संसर्गित्वापत्त्या तदनुपपत्तिः स्यात्। एवम् 'अत्र ब्राह्मणो ब्राह्मणाय गां ददाति' इत्यत्र कर्तृभूत-सम्प्रदानीभूत-ब्राह्मणयोः एकत्वानुपपत्तिः समभिव्याहृतपदार्थदानादिक्रियया द्वयोरेव सम्बद्धत्वात् इति चेत् ?

अत्र केचित्। एकवचनोपलक्षितम् एकत्वम् एकवचनार्थः। सम्बन्धश्च (१)स्वप्रकृत्यर्थतावच्छेदकवत्त्व-(२)स्वविशिष्टसंसर्गता-निरूपकत्व-उभयसम्बन्धेन यत्स्वाधिकरणं तन्निष्ठ-भेदप्रतियोगिता-अनवच्छेदकत्वम्। स्ववैशिष्ट्यञ्च (१)स्वप्रयोज्य-शाब्दबोध-विषयत्व-सामानाधिकरण्य-(२)स्व-समानाधिकरण-प्रत्यय-प्रयोज्य-तादृशविषयता-सामानाधिकरण्य-अन्यतरसम्बन्धेन। तथा च 'अत्र नीलो घटः' इत्यत्र एतद्देशस्य आधेयत्वं नीलघटनिष्ठमेव शाब्दबुद्धौ भासते। तादृश-आधेयत्वनिष्ठसंसर्गत्व एव च स्वसमानाधिकरण-त्रल्-प्रत्यय-प्रयोज्य-शाब्द-विषयता-सामानाधिकरण्यं, न तु पीतघटनिष्ठ-आधेयत्वसंसर्गत्व इति न तत्र अनुपपत्तिः। एवं 'ब्राह्मणो भुङ्क्ते' इत्यादौ भोजन-निरूपितमेव कर्तृत्वं शाब्दबोधविषयो, न तु शयनकर्तृत्वमिति तन्निष्ठसंसर्गताया न सङ्ग्रहः। प्रत्ययार्थ-निष्ठत्वोपादाने च कर्तृत्वत्वेन तस्यापि आख्यातार्थतया तन्निष्ठसंसर्गताया अपि सङ्ग्रहः स्यादिति प्रत्ययप्रयोज्य-शाब्दविषयता-सामानाधिकरण्यम् उपात्तम्। द्वितीयादेः एकत्ववाचकत्वरक्षायै स्वप्रयोज्य इत्यादिसंसर्गनिवेशः। प्रथमाया एकत्ववाचकत्वोपपत्तये स्वसमानाधिकरण इत्यादिप्रवेशः। सुप्तब्राह्मणे 'अत्र ब्राह्मणो भुङ्क्ते' इत्यत्र स्वघटित-वाक्यघटक-प्रत्ययप्रयोज्य-शाब्दविषयत्वस्य शयनकर्तृत्वेऽपि सत्त्वेन स्वघटित-वाक्यघटकत्वेन उपादाने अनुपपत्तिः स्यादिति स्वसमानाधिकरणत्वेन उपादानम्। तत्त्वं च स्वप्रकृत्यर्थनिष्ठ-विशेष्यता-निरूपित-प्रकारता-प्रयोजकत्वम्। 'ब्राह्मणो ब्राह्मणाय गां ददाति' इत्यत्र चतुर्थी-सामानाधिकरण्यं न तिङः, प्रथमार्थता च न सम्प्रदानत्वस्य, इति चतुर्थी-प्रथमयोः न एकत्ववाचकत्वानुपपत्तिः। संसर्गतानिरूपकत्वं च प्रतियोगित्वानुयोगित्व-अन्यतरात्मकं वाच्यम्। तिङर्थभूत-संसर्ग-प्रतियोगित्वस्य द्वितीयाद्यर्थ-संसर्ग-अनुयोगित्वस्य च एकवचनप्रकृत्यर्थे असम्भवात्। तथा च सर्वत्रानुपपत्तिवारणाय स्वप्रकृत्यर्थतावच्छेदकवत्त्व-उपादानम्। न च तात्पर्य-भ्रमादिजन्य-शाब्दबुद्धि-विषयत्वस्य 'अत्र ब्राह्मणो भुङ्क्ते' इत्यादौ अपि शयनकर्तृत्वादौ सम्भवात् अनुपपत्तिरिति वाच्यम्। तात्पर्यभ्रमाद्यनधीनत्वस्य शाब्दबुद्धौ विशेषणीत्वात् स्वप्रयोजक-तात्पर्यीयस्य स्वप्रयोज्यबोधविषयत्वेन विषयत्वस्य वा विवक्षणीयत्वात्।

अथ तत्तत्पशुषु तत्तद्यागकरणकत्वानां शाब्दबोधविषयतया तत्रानुपपत्तिरिति चेत् ? न। यत्र समभिव्याहृतपदार्थे एकस्मिन् प्रकृत्यर्थस्य द्वयोः विवक्षितसम्बन्धेन सम्बद्धार्हत्वम्। तत्र एकत्वविवक्षायाम् एकवचनविशिष्टत्वम्। एकत्वे स्वविशिष्ट-निरूपकता-विशिष्टान्यत्व-सम्बन्धेन वाच्यम्। स्ववैशिष्ट्यञ्च (१)स्वप्रकृत्यर्थता-वच्छेदक-सामानाधिकरण्य-(२)स्वविशिष्टसंसर्गताकत्व-उभयसम्बन्धेन। संसर्गतायां स्ववैशिष्ट्यञ्च पूर्वोक्तसम्बन्धेन। विशिष्टान्यत्वघटक-वैशिष्ट्यं च (१)स्वसमाना-धिकरण-भेदप्रतियोगिता-अवच्छेदकत्व-(२)स्वनिरूपित-संसर्गता-विशिष्ट-संसर्गता-निरूपकत्व-सामानाधिकरण्य-उभयसम्बन्धेन। संसर्गता-वैशिष्ट्यञ्च (१)स्व-अवच्छेदकावच्छिन्नत्व-(२)स्वनिरूपकनिरूपितत्व-उभयसम्बन्धेन। तथा च तद्याग-करणपशुनिष्ठैकत्वे यागान्तरकरणत्व-निरूपकत्व-समानाधिकरण-भेदप्रतियोगिता-अवच्छेदकत्वेऽपि तन्निरूपित-संसर्गता-विशिष्ट-संसर्गता-निरूपकत्वस्य पश्वन्तरे यागान्तरे च सत्त्वेन तत्सामानाधिकरण्य-विरहेण विशिष्टान्यत्व-सम्भवात् भवति एकवचनार्थता। पशुद्वयकरणक-यागकरणपशुनिष्ठैकत्वे च पश्वन्तरनिष्ठकरणत्व-निरूपकत्व-समानाधिकरण-भेद-प्रतियोगितावच्छेदकत्वस्य तादृशसंसर्गतानिरूपक-याग-निरूपित-तत्पशुनिष्ठ-करणत्व-संसर्गता-निरूपकत्व-सामानाधिकरण्यस्य च सत्त्वेन न विशिष्टान्यत्व-सम्भवः। अन्यत्र तु प्राक् उक्ता एव रीतिः इति वदन्ति।

परे तु विशेष्यतावच्छेदक-तत्कोटिप्रविष्टेषु परम्परया अपि प्रकारता-वच्छेदकत्वस्य, प्रकारतावच्छेदक-तत्कोटिप्रविष्टेषु परम्परया अपि विशेष्यता-वच्छेदकत्वस्य च न व्यवहार इति साक्षात्-परम्परा-अवच्छेदकत्वनिष्ठं प्रकारता-वच्छेदकत्वव्यावृत्तं विशेष्यत्वस्य विशेष्यतावच्छेदकत्वव्यावृत्तं प्रकारत्वस्य च निरूपितत्वं निरूपकत्वं च विलक्षणमेव। अत एव तत्र तत्र विशेष्यत्व-प्रकारत्व-अवच्छेदकत्वादीनां पर्याप्तिनिवेशनं प्रामाणिकानां सङ्गच्छते।

न च अवैलक्षण्ये प्रकृते को दोष इति वाच्यम्। यत्र हि राजद्वय-सम्बन्धि-धनं गृहित्वा एकस्य राज्ञो दासो जिगमिषति तत्र 'राज्ञो धनं गृहीत्वा जिगमिषति दासः' इति प्रयोगो न। उभयत्र राजगतैकत्वविवक्षायां प्रमाणभावम् अवलम्बते। निरूपितत्वाद्यवैलक्षण्ये तत्प्रामाण्यं दुरुद्धरं स्यात्। राजगतैकत्वे वक्ष्यमाणस्य स्वप्रकृतिप्रयोज्य-विषयता-विशिष्टत्वस्य सत्त्वात्। स्वप्रकृतिप्रयोज्यायां राजनिष्ठावच्छेदकतायां प्रकारता-निरूपितत्वस्येव मुख्यविशेष्यता-निरूपितत्वस्यापि सत्त्वेन स्वाभिन्नमुख्यविशेष्यतावच्छेदकतावत्त्वसम्बन्धेन स्वविशिष्टायां राजत्वनिष्ठ-निरूपकत्व-राजविशिष्ट-स्वत्वविशिष्ट-धनविशिष्ट-कर्मत्वविशिष्ट-ग्रहण-विशेष्यो-त्तरत्वविशिष्ट-जिगमिषाविशिष्ट-दासनिष्ठ-स्वरूपसम्बन्धावच्छिन्न-आधेयत्वसम्बन्धा-वच्छिन्नावच्छेदकतानिरूपित-निरूपितत्वसम्बन्धावच्छिन्न-सम्बन्धित्वसम्बन्धावच्छिन्न-

स्वत्वनिष्ठ-निरूपकत्वाभ्यां निरूपितयोः अधिकरणत्वयोः पर्याप्तं यद्द्वित्वं तदवच्छिन्नवद्वृत्तिभेद-प्रतियोगितानवच्छेदकत्वस्य सत्त्वात्। वैलक्षण्ये च राज-निष्ठावच्छेदकत्वाभिन्नत्वस्य प्रकारतावच्छेदकतायामेव सत्त्वेन तादृशप्रकारता-वच्छेदकतावत्त्व-सम्बन्धेन स्वविशिष्टाभ्यां राजत्वनिष्ठ-निरूपकत्व-दासविशिष्ट-आश्रयत्वविशिष्ट-जिगमिषाविशिष्ट-उत्तरत्वविशिष्ट-गमनविशिष्ट-कर्मत्वविशिष्ट-धनविशिष्ट-स्वत्वनिष्ठ-निरूपकत्वाभ्यां निरूपितयोः अधिकरणत्वयोः पर्याप्तं यद्द्वित्वं तदवच्छिन्नत्वस्य राजान्तरेऽपि सत्त्वेन एकत्वे तद्वृत्तिभेद-प्रतियोगिता-अवच्छेदकत्वस्यैव सत्त्वात् प्रामाण्यं न प्रसज्यते इति। एवञ्च स्वप्रकृतिप्रयोज्य-विषयताविशिष्ट-निरूपकताक-अधिकरणतात्वावच्छिन्न-अनुयोगिताक-पर्याप्तिक-सङ्ख्यावच्छिन्न-वद्वृत्तिभेद-प्रतियोगितानवच्छेदकमेकत्वम् एकवचनार्थः। निरूपक-तायां वैशिष्ट्यञ्च (१)स्वाभिन्न-मुख्यविशेष्यतावत्त्व-(२)स्वाभिन्न-मुख्यप्रकारता-वच्छेदकतावत्त्व(३)स्वाभिन्न-मुख्यप्रकारतावत्त्व-(४)स्वाभिन्नतादृशविशेष्यतावच्छेदक-तावत्त्व-अन्यतमसम्बन्धेन। मुख्यविशेष्यतावत्ता च (१)स्वसाक्षान्निरूपकावच्छेदकता-वत्त्व-(२)स्वनिरूपितमुख्यप्रकारतावत्त्व-अन्यतरसम्बन्धेन। अवच्छेदकतावत्ता च (१)स्वसामानाधिकरण्य-(२)स्वावच्छेदक-सम्बन्धावच्छिन्नत्व-(३)स्वानवच्छेदकानव-च्छिन्नत्व-(४)स्ववृत्तित्व-एतत्-चतुष्टय-सम्बन्धेन। मुख्यप्रकारतावत्ता च (१)स्वा-वच्छेदकतात्वावच्छिन्न-प्रतियोगिताक-पर्याप्त्यनुयोगितावच्छेदकरूप-वृत्तित्व-(२)स्वा-वच्छेदकसम्बन्धावच्छिन्नत्वोभयसम्बन्धेन। स्वाभिन्नमुख्यप्रकारतावच्छेदकतावत्ता च (१)स्वसाक्षान्निरूपकत्व-(२)स्वावच्छेद्य-प्रकारता-निरूपित-विशेष्यत्व-अनवच्छिन्नत्व-उभयसम्बन्धेन। स्वाभिन्नतादृशविशेष्यतावच्छेदकतावत्ता च (१)स्वविशिष्टा-वच्छेदकतावत्त्व-(२)स्वाश्रयत्व-अन्यतरसम्बन्धेन। अवच्छेदकतावत्ता च पूर्वोक्त-चतुष्टयसम्बन्धेन। स्वाश्रयत्वं च (१)स्वावच्छेदक-सम्बन्धावच्छिन्न-सम्बन्धित्व-सम्बन्धावच्छिन्नत्व-(२)स्वावच्छेद्यप्रकारतानिरूपित-विशेष्यत्व-अवच्छेदकावच्छिन्नत्व-(३)स्वविशिष्टविषयतात्वव्यापकत्व-एतत्त्रितयसम्बन्धेन। स्ववैशिष्ट्यञ्च (१)स्वा-वच्छेद्यविषयतानिरूपितविषयत्वानवच्छिन्नत्व-(२)स्वनिरूपितत्व-एतदुभयसम्बन्धेन। व्यापकता च स्वनिरूपितावच्छेदकतावृत्तित्वसम्बन्धेन। वृत्तित्वञ्च (१)स्वावच्छेद-कावच्छिन्नत्व-(२)स्वविशिष्टविशेष्यतानिरूपित-प्रकारतावच्छेदकसम्बन्धावच्छिन्न-सम्बन्धित्व-सम्बन्धावच्छिन्नत्व-उभयसम्बन्धेन। स्ववैशिष्ट्यञ्च (१)स्वतादात्म्य-(२)स्वावच्छेद्यत्व-अन्यतरसम्बन्धेन। (१)स्वाश्रयत्व-(२)स्वानवच्छेदकानवच्छिन्नत्व-(३)स्ववृत्तित्व-एतत्त्रितय-सम्बन्धेन। स्वावच्छेदकावच्छिन्नत्वं च स्वाभाववद्-अवच्छेदकत्वानिरूपितत्वरूपं ग्राह्यम्। अभावप्रतियोगितावच्छेदक-सम्बन्धश्च (१)स्वनिरूपित-अवच्छेदकतावत्त्व-(२)स्वावच्छेद्य-प्रकारता-निरूपित-विशेष्यतावत्त्व-

अन्यतरात्मकः। अवच्छेदकतावत्त्व-विशेष्यतावत्त्वे स्वसामानाधिकरण्यादि-चतुष्टयेषु यस्य यस्य उपादेयत्वं तैः ग्राह्यो। स्वाश्रयत्वनियामक-त्रितयसम्बन्धघटक-विशेष्यतावच्छेदकावच्छिन्नत्वमपि उक्तरूपमेव। स्वाभिन्नमुख्यप्रकारतावत्त्वं च (१)स्वनिरूपितावच्छेदकतावत्त्व-(२)स्वाश्रयत्व-अन्यतरसम्बन्धेन। स्वाश्रयत्वञ्च (१)स्वावच्छेदक-सम्बन्धावच्छिन्न-सम्बन्धित्व-सम्बन्धावच्छिन्नत्व-(२)स्वनिरूपित-विशेष्यतावत्त्व-उभयसम्बन्धेन। अवच्छेदकतावत्त्व-विशेष्यतावत्त्वे च सामानाधिकरण्यादिभिः सम्बन्धैः ग्राह्यो। स्वाभिन्नविशेष्यतावच्छेदकतावत्त्वं च (१)स्व-विशिष्टावच्छेदकतावत्त्व-(२)स्वाश्रयत्वान्यतरसम्बन्धेन। वैशिष्ट्यावच्छेदकतावत्त्वे पूर्वोक्तसम्बन्धैः ग्राह्यो। स्वाश्रयत्वञ्च (१)स्वावच्छेदक-सम्बन्धावच्छिन्न-सम्बन्धित्व-सम्बन्धावच्छिन्नत्व-(२)स्वनिरूपित-स्वावच्छेद्य-प्रकारतानिरूपित-विशेष्यत्वावच्छेद्य-विषयतावच्छेदकावच्छिन्नत्व-(३)स्वनिरूपित-मुख्यप्रकारतावदवच्छेदकताकत्व-(४) स्वविशिष्टविषयतात्वव्यापकत्व-एतच्चतुष्टयसम्बन्धेन। मुख्यप्रकारतावत्त्वं च पूर्वोक्तसम्बन्धैः बोध्यम्।

स्व-वैशिष्ट्यञ्च (१)स्वनिरूपितत्व-(२)स्वावच्छेद्यविशेष्यता-निरूपित-विषयताभिन्नत्व-(३)स्वनिरूपितमुख्यप्रकारतावदन्यत्व-एतत्त्रितय-सम्बन्धेन। प्रकारातवत्ता च (१)स्वतादात्म्य-(२)स्वनिरूपितावच्छेदकता-तादात्म्य-अन्यतर-सम्बन्धेन। व्यापकता च (१)स्ववृत्तित्व-(२)स्वनिरूपितावच्छेदकतावृत्तित्व-अन्यतर-सम्बन्धेन। वृत्तित्वं च पूर्ववदेव ग्राह्यम्। विशेष्यतावच्छेदकावच्छिन्नत्वं स्वाभाववदवच्छेदकत्वानिरूपितत्वरूपं ग्राह्यम्। अभावप्रतियोगिता च (१)स्वनिरूपितावच्छेदकतावत्त्व-(२)स्वावच्छेद्यानिरूपितविषयतावत्त्व-अन्यतरसम्बन्धेन ग्राह्या। अत्र स्वविशिष्टनिरूपकताकाधिकरणतावद्वृत्तित्वविवक्षणे प्रायश एकत्व-मात्रस्य स्वविशिष्ट-प्रकृत्यर्थतावच्छेदक-निष्ठ-निरूपकताक-अधिकरणतावद्-वृत्तिभेदप्रति-योगितावच्छेदकत्वम् एव स्यादिति तादृश-अधिकरणतात्वावच्छिन्न-पर्याप्तिक-सङ्ख्यावच्छिन्नवद्-वृत्तित्व-पर्यन्तानुधावनम्। स्वाभिन्नमुख्यविशेष्यतावत्त्वसम्बन्धश्च मुख्यविशेष्यगत-एकत्वस्य एकवचनार्थतासम्पत्यर्थमुपात्तः। तथा हि यत्र एको विद्वान् परश्च अविद्वान् ब्राह्मणो भुङ्क्ते, क्षत्रियश्च विद्वान् भुङ्क्ते ब्राह्मणश्च विद्वान् अन्यः शेते, तत्र 'अत्र विद्वान् ब्राह्मणो भुङ्क्ते' इति तादृशब्राह्मणगत-एकत्वविवक्षायां प्रयोगो जायते। तत्र मुख्यविशेष्यता-विशिष्ट-निरूपकता-ब्राह्मणत्वनिष्ठ-अविद्यावत्त्वनिष्ठा च तत्तदसाधारणधर्मावच्छिन्ना एतद्देशाधिकरणक-भोजनकर्तृत्वावच्छिन्ना च आद्ययोः स्वसाक्षान्निरूपकावच्छेदकतावत्त्वस्य अन्त्यायां स्वनिरूपितमुख्यप्रकारतावत्त्वस्य च सत्त्वात् इति तन्निरूपिताधिकरणता-कूटवत्त्वम् एकत्वाश्रयीभूत-ब्राह्मण एव शयनकर्तुः विद्यावत्त्व-ब्राह्मणत्वयोः सत्त्वेऽपि तादृश-

भोजनकर्तृत्वविरहात् क्षत्रिये ब्राह्मणत्वस्य, अविदुषि विद्यावत्त्वस्य च विरहात् इति तन्निष्ठभेदप्रतियोगितानवच्छेदकत्वं तदेकत्वेऽस्तीति तस्य एकवचनार्थतासम्पत्तिः। 'अत्र घटो अस्ति' इत्यादौ घटत्वनिष्ठ-निरवच्छिन्नावच्छेदकतावत्त्वस्य पटत्वनिष्ठनिरवच्छिन्न-निरूपकतायाम् अपि सत्त्वे निरुक्ताधिकरणताकूटवत्त्वस्य अप्रसिद्ध्या एकवचनार्थतानुपपत्तिः स्यादिति तद्वारणाय अवच्छेदकतावत्त्वघटक-सम्बन्धेषु स्वसामानाधिकरण्यस्य तद्घटानुयोगिक-समवायावच्छिन्नाया एतद्घटा-नुयोगिकसमवायावच्छिन्नायाश्च घटत्वनिष्ठनिरूपकताया घटत्वनिष्ठावच्छेदकता-विशिष्टत्वे तथैव अनुपपत्तिः स्यादिति।

स्वावच्छेदक-सम्बन्धावच्छिन्नत्वस्य तद्रूप-घटत्व-उभयत्वावच्छिन्नाया एतद्रूप-घटत्व-उभयत्वावच्छिन्नायाश्च निरूपकताया घटत्वनिष्ठावच्छेदकता-विशिष्टत्वे तथैव अनुपपत्तिः स्यादिति स्वानवच्छेदकानवच्छिन्नत्वस्य च उपादानम्। 'ऋद्धस्य ओजस्विनो राज्ञः पुरुषोऽत्र अस्ति वेश्मनि' इत्यादौ ऋद्ध-ओजस्वि-राजस्वत्ववद् एतद्गृहवृत्ति-पुरुषनिष्ठ-भेदप्रतियोगिता-अनवच्छेदकत्वेन एकत्वस्य शाब्दमतौ भासमानत्वेन तादृश-अनवच्छेदकत्वघटक-स्वत्वनिष्ठ-निरूपकतायां ऋद्धत्वौजस्वित्वाभ्याम् एव अवच्छेदकतया तादृशावच्छेदकताक-निरूपकतामात्र-घटित-निरुक्तानवच्छेदकत्ववद् एकत्वे लाघवात् शक्ये एक-वचनस्य शक्तिप्रतिपत्त्यर्थं निरुक्तपरिचायककोटौ स्वानवच्छेदकानवच्छिन्नत्व-सम्बन्धेन स्ववृत्तित्वस्य उपादानम्। न हि तदनुपादाने कापि आपत्तिः अनुपपत्तिः वा। न च कथं न तत्र शक्तिप्रतिपत्तिः इति वाच्यम्। तत्र एकैकधर्मावच्छिन्ना-वच्छेदकताक-निरूपकत्वस्यापि उक्तावच्छेदकताविशिष्टतया तावन्निरूपकत्व-घटितोक्त-अनवच्छेदकत्व-उपरागेण गुरुत्वात्। अशक्य एव एकत्वे शक्तिग्रह-प्रसङ्गात्। तदुपादाने च धर्मत्रयावच्छिन्न-अवच्छेदकताक-निरूपकता-मात्रस्य अवच्छेदकता-विशिष्टत्वेन तन्मात्रघटितानवच्छेदकत्ववद् एकत्व एव शक्तिग्रह-सम्भवात्। स्वानवच्छेदकानवच्छिन्नत्वं च तत्र स्वनिरूपकता-वच्छेदकताविशिष्ट-अन्यावच्छेदकत्व-अनिरूपितत्वं विशिष्टन्यत्वं च सामानाधिकरण्यादिभिः। तेन 'प्रमेयस्य इदम् अस्ति' इत्यादौ स्वानवच्छेदकाप्रसिद्धौ अपि न क्षतिः। न च मुख्यविशेष्यतानिरूपितायाः तादृश-स्वत्व-निष्ठावच्छेदकतायाः तादृशस्वत्वनिष्ठ-निरूपकतानवच्छेदक-पुरुषत्वनिष्ठावच्छेदकतानिरूपितत्वं विशेष्यताद्वारकमस्तीति अनुपपत्तिः इति वाच्यम्। न हि राजत्वनिष्ठावच्छेदकत्वं राजावच्छिन्नत्वेन पुरुषत्वावच्छिन्नत्वेन च व्यवह्रियते इति परम्परया अपि अवच्छिन्नत्वव्यवहारः अवच्छेदककोटि-सन्निविष्टधर्मैरेव वाच्यो, न तु अवच्छेद्यकोटिप्रविष्टैः उदासीनैर्वा। विशेषणं हि विशेष्यस्य परिचायकम्, निरूपकम्। विशेष्यञ्च परिचेयं निरूप्यमिति

उच्यते इति। विशेषणनिष्ठ-अवच्छेदकता-निरूपक एव निरूपक-निष्ठत्वात् विशेष्यनिष्ठा च निरूपित-निरूप्य-निष्ठत्वात् अवच्छिन्नत्वं च अवच्छेदकता-निरूपितत्वमिति राजत्वनिष्ठावच्छेदकताया न राजावच्छिन्नत्वं नापि पुरुषत्वा-वच्छिन्नत्वं साक्षात्परम्परासाधारण-अवच्छेदकता-निरूपितत्वस्यापि उक्तयुक्तेः विलक्षणत्वात् इति वस्तुगतिः। तथा च न उक्तानुपपत्तिः।

अथवा स्वानवच्छेदकानवच्छिन्नत्वं परम्परा-निरूप्य-निरूपक-भावेऽपि स्वनिरूपितावच्छेदकताविशिष्टान्यावच्छेदकतावदन्यत्वं वाच्यम्। अवच्छेदकतावत्ता च स्वावच्छेद्यप्रकारतानिरूपित-विशेष्यत्वावच्छेद्यत्व-सम्बन्धेन। इदं च अवच्छेद्यत्वं साक्षात्परम्परासाधारणम्। परम्परया च तदवच्छेद्य-प्रकारतानिरूपित-विशेष्यत्वा-वच्छेद्य-प्रकारतानिरूपित-विशेष्यत्वावच्छेद्यत्वेनैव स्वीक्रियते इति, पुरुषत्वनिष्ठा-वच्छेदकत्वावच्छेद्य-प्रकारतानिरूपित-विशेष्यत्वावच्छेद्यत्वं स्वत्वनिष्ठावच्छेदकतायां परम्परया अपि नास्ति इति, न कापि क्षतिः। स्वनिरूपित-मुख्यप्रकारतावत्त्व-उपादानञ्च भोजनकर्तृत्वनिष्ठ-निरूपकतासङ्ग्रहाय। तदसङ्ग्रहे शयनकर्तृ-ब्राह्मणेऽपि तादृश-निरूपकताधिकरणताकूटस्य सत्त्वेन तादृशभेदप्रतियोगिता-अनवच्छेदकत्वस्य एकत्वे असम्भवः स्यात्। स्वावच्छेदकसम्बन्धावच्छिन्नत्वं च एकत्वाश्रय-अननुयोगिक-सम्बन्धावच्छिन्न-तादृश-कर्तृत्वनिष्ठ-निरूपकता-वारणाय उपादेयम्। अधिकवारक-पर्याप्तिनिवेशनं द्वित्वाद्यवच्छिन्न-तादृश-कर्तृत्वनिष्ठ-निरूपकतावारणाय। न्यूनवारकं च तदुक्तयुक्त्या शक्तिग्रह-प्रतिपत्त्यर्थम्। 'फलं भुङ्क्ते चैत्रः' इत्यादौ स्वसमानाधिकरणात् न वृत्तित्वसम्बन्धेन फलविशिष्ट-कर्मत्वविशिष्ट-भोजनविशिष्ट-कृतिनिष्ठ-निरूपकत्व-वारणाय स्वनिरूपितावच्छेद-कता-विशिष्टान्यावच्छेदकत्वानिरूपितत्व-रूपमेव तदवच्छेदकावच्छिन्नत्वमुपादेयम्। स्वाभिन्नमुख्य-प्रकारता-निरूपकावच्छेदकतावत्त्वं च प्रकारतावच्छेदक-गतैकत्वस्य एकवचनार्थतासम्पत्त्यर्थम्। तादृशप्रकारताकत्वं च साक्षात्परम्परा-साधारणम्। तेन इदं राज्ञः इत्यादिसाक्षात्प्रकारविशेषणगतैकत्वस्येव 'चैत्रः फलम् अत्र भुङ्क्ते' 'ब्राह्मणो ब्राह्मणाय गां ददाति' इत्यादौ परम्परा-मुख्यप्रकार-विशेषण-फल-ब्राह्मणादिगत-एकत्वस्यापि एकवचनार्थोपपत्तिः। तथा हि स्वप्रकृतिप्रयोज्या-मुख्यप्रकारता-निरूपितावच्छेदकता यथा राजत्वावच्छिन्ननिरूपित्वसम्बन्धावच्छिन्ना तथा आधेयत्व-सम्बन्धावच्छिन्न-फलत्वावच्छिन्ना स्वनिष्ठनिरूपकता-निरूपितत्व-सम्बन्धावच्छिन्न-ब्राह्मणत्वावच्छिन्ना च यथा च राजत्वावच्छिन्नावच्छेदकता-विशिष्टा स्वरूप-सम्बन्धावच्छिन्न-राजत्व-निष्ठा इदमर्थ-विशिष्ट-स्वत्व-निष्ठानिरूपितत्व-सम्बन्धावच्छिन्ना तथा फलत्वावच्छिन्नावच्छेदकताविशिष्टा समवायावच्छिन्ना फलत्व-निष्ठा चैत्रविशिष्ट-कृतिविशिष्ट-एतद्देशाधिकरणक-भोजनविशिष्ट-कर्मत्व-

निष्ठाधेयत्व-सम्बन्धावच्छिन्न-सम्बन्धित्व-सम्बन्धावच्छिन्ना च। एवं ब्राह्मणत्वावच्छिन्नावच्छेदकताविशिष्टा ब्राह्मणत्वनिष्ठा ब्राह्मणविशिष्ट-कृतिविशिष्ट-गोकर्मकदानविशिष्ट-स्वत्वविशिष्ट-निरूपितत्वनिष्ठ-उक्तनिरूपितत्वसम्बन्धावच्छिन्नसम्बन्धित्वावच्छिन्ना च निरूपकता भवतीति तत्तन्निरूपिताधिकरणताकूटवत्त्वं विवक्षित-एकत्वाश्रयेषु राजविशेष-फल-विशेष-ब्राह्मणविशेषेषु एव इति तत्तन्निष्ठ-भेद-प्रतियोगितानवच्छेदकत्वं तत्तदेकत्वे वर्तते इति तत्सङ्ग्रहः। अत्र स्वविशिष्टावच्छेदकतावत्त्वोपादानं राजत्वादिनिष्ठ-निरूपकता-सङ्ग्रहार्थम्। तदसङ्ग्रहे इदमर्थस्य राज-तदन्य-उभय-स्वामिकत्वे इदमर्थविशिष्ट-स्वत्वनिष्ठनिरूपकताकाधिकरणत्वस्य राजभिन्नेऽपि सत्त्वेन एकत्वस्य तादृशभेदप्रतियोगितानवच्छेदकत्वानुपपत्तिः स्यात्। विशेषणनिष्ठावच्छेदकत्वमात्रस्य निरूपकत्वे स्वनिरूपकत्वेनैव अवच्छेदकत्वमुपादेयम्। इतरथा निरुक्तोभयसम्बन्धेन स्वविशिष्टत्वेन, तेन फल-निष्ठावच्छेदकतानिरूपितकर्मत्वनिष्ठावच्छेदकताविशिष्टनिरूपकताकाधिकरणत्वस्य फले विरहेऽपि न क्षतिः।

अवच्छेदकतावत्त्वनियामक-सम्बन्धानाम् उपादाने प्रयोजनं प्राग्वद् एव द्रष्टव्यम्। स्वाश्रयत्वोपादानं च तादृश-स्वत्वादिनिष्ठ-निरूपकता-सङ्ग्रहार्थम्। तदसङ्ग्रहे राजत्वादिनिष्ठ-निरूपकताकाधिकरणत्वस्य विवक्षित-एकत्व-अनाश्रयेषु राजादिषु सत्त्वेन एकत्वस्य तादृशानवच्छेदकत्वानुपपत्तिः स्यात्। स्वाश्रयत्व-नियामक-सम्बन्धेषु प्रथमस्य अनुपादाने आश्रयत्वादिसम्बन्धावच्छिन्न-स्वत्वादिनिष्ठ-निरूपकताया अपि स्वाश्रयत्वेन तन्निरूपित-अधिकरणताघटित-कूटवत्त्वस्यापि एकत्वाश्रयेऽपि असत्त्वं स्यात्। स्वावच्छेदक-सम्बन्धावच्छिन्नत्व-स्वनिरूपित-विषयत्वावच्छेदक सम्बन्धावच्छिन्नत्वाद्युपादानेऽपि तदेव स्यादिति तदुपादेयम्। न च तादृश-स्वत्वस्य निरूपकतया तादृशकर्मत्वस्य आश्रयतया राजफलादौ एकत्व-घटकत्वेन भासमानत्वात् कथं तत्तन्निष्ठ-निरूपकतायाम् उक्तसम्बन्धित्व-सम्बन्धावच्छिन्नत्वमिति वाच्यम्। निरूपितत्व-सम्बन्धावच्छिन्न-सम्बन्धित्वस्य निरूपकतात्मकत्वात् आधेयत्व-सम्बन्धावच्छिन्न-सम्बन्धित्वस्य च आश्रयतारूपत्वात् तादृशसम्बन्धित्वनिष्ठायाः कालिकादि-घटित-अन्यतरत्वाद्यवच्छिन्न-संसर्गताया अवारणीयत्वेन तादृशसम्बन्धित्वत्वावच्छिन्नत्वस्य संसर्गतायाम् अनुपादेयत्वात्। अन्यतरत्वानवच्छिन्न-तादृशसंसर्गताक-निरूपकताया अपि सङ्गृहीतत्वेन तन्निरूपिताधिकरणता-घटितकूटस्य एकत्वानाश्रये विरहात् विरुद्धोभयसम्बन्ध-निष्ठ-उभयत्वावच्छिन्नानिरूपकता-निरूपितसंसर्गता नास्त्येव इति, तद्वारणाय अपि हि तस्य न उपादेयत्वम्। 'पर्वते वह्निं जानाति चैत्रः' इत्यादौ वह्निनिष्ठ-अवच्छेदकता-विशिष्टत्वस्य चैत्रविशिष्टाश्रयत्व-विशिष्टज्ञान-निष्ठावच्छेदकता-

निरूपिताधेयत्व-सम्बन्धावच्छिन्न-सम्बन्धित्वावच्छिन्न-विशेष्यत्व-निष्ठ-निरूपकत्वे वारणाय द्वितीय-सम्बन्धोपादानम्। 'चैत्रः फलं भुङ्क्ते' इत्यादौ मैत्रकर्तृक-भोजन-कर्मत्व-निष्ठ-निरूपकत्वे फलनिष्ठावच्छेदकताविशिष्टत्व-वारणाय तृतीयसम्बन्धोपादानम्। तथा सति स्वविशिष्ट-चैत्रनिष्ठ-विषयत्वे निरुक्तनिरूपकत्वाभावात् व्यापकत्वासम्भवात् न विशिष्टत्वसम्भवः। स्ववैशिष्ट्य-नियामकसम्बन्धेषु प्रथमस्य अनुपादाने चैत्रकर्तृक-भोजनकर्मत्व-निष्ठनिरूपकत्वस्य असङ्ग्रहः स्यात्। कर्मत्वनिष्ठावच्छेदकतात्मक-विषयताया अपि स्वनिरूपितत्वात् तत्र निरुक्त-निरूपकत्वस्य असत्त्वात् तदुपादाने च तस्याः स्वविशिष्टत्वविरहात् न असङ्ग्रहः। द्वितीयस्य अनुपादाने तादृशनिरूपकतामात्रस्य असङ्ग्रहः स्यादिति तदुपादानम्। न च विशेष्यत्व-प्रकारत्वावच्छेदकत्वादि-निरूपितायाः तत्तदवच्छेद्य-विशेष्यता-निरूपित-विषयत्वानवच्छिन्नाया अवच्छेदकताया अपि स्वविशिष्टत्वात् तत्समानाधिकरण-निरूपकतावच्छेदकताया निरुक्तसम्बन्धित्वसम्बन्धानवच्छिन्नतया व्यापकत्वासम्भवात् निरुक्तनिरूपकत्व-असङ्ग्रहः तदवस्थ इति वाच्यम्। निरुक्ता-वच्छेदकताया निरुक्तविषयतानिरूपकत्वस्यैव अनुपदं व्यवस्थापितत्वात्। परम्परा-निरूपितत्वमपि हि निरूपितनिरूपिते एव अभ्युपेयते, न तु निरूपितनिरूपकेऽपि। यदि च परम्परं निरूप्य-निरूपकभावः तदा (१)स्वतादात्म्य-(२)स्वावच्छेद्यत्व-अन्यतर-सम्बन्धेन स्वनिरूपित-विषयताविशिष्ट-विशेष्यत्वावच्छेदकतावदन्यत्व-घटित-त्रितयसम्बन्धेन वैशिष्ट्यम् उपादेयम्। तथा च न उक्तदोषसम्भवः।

यद्वा स्ववृत्तित्वघटित-उभयसम्बन्धेन वैशिष्ट्यं वाच्यम्। वृत्तित्वं च स्वावच्छेद्यत्व-स्वतादात्म्य-अन्यतरसम्बन्धेन। स्वविशिष्ट-विशेष्यतानिरूपित-प्रकारतावच्छेदकतावत्त्वसम्बन्धेन। अवच्छेदकतावत्ता च स्वतादात्म्य-स्वावच्छेद्यत्व-अन्यतरसम्बन्धेन। तथा च चैत्रत्वादिनिष्ठधर्मितावच्छेदकतायाः स्वनिरूपितत्वेऽपि स्वावच्छेद्यविशेष्यत्वाप्रसिद्ध्या निरुक्तसम्बन्धेन तस्य फलनिष्ठावच्छेदकत्वे वृत्तित्वाभावात् 'ब्राह्मणाय गां ददाति' इत्यत्र स्वत्व "एकत्र द्वयम्" रीत्या भासमान-ब्राह्मणनिरूपितत्व-गोवृत्तित्वद्वय-मध्ये ब्राह्मणनिष्ठ-अवच्छेदकत्वस्य स्वपदार्थत्वे गोवृत्तित्वनिष्ठावच्छेदकताया गोनिष्ठावच्छेदकतायाः स्वपदार्थत्वे ब्राह्मणनिरूपितत्वनिष्ठावच्छेदकतायाश्च न स्वविशिष्टत्वसम्भवः। स्वनिष्ठावच्छेद-कताद्वारा स्वनिरूपितत्वसत्त्वेऽपि स्वस्मिन् तादृशावच्छेदकतावत्त्वविरहेण वृत्तित्व-विरहात्। वृत्तित्वनिष्ठ-विशेष्यतानिरूपित-गोनिष्ठप्रकारतानिरूपितत्वस्य परम्परया अपि ब्राह्मणनिष्ठावच्छेदकतायाम् असम्भवात्। स्वनिरूपितविषयत्वतादृशप्रकारता-निरूपित-विषयत्वयोः अवच्छेद्यावच्छेदकभावेन निरूप्यनिरूपकभावाभावात्। चैत्र-निष्ठविशेष्यत्व-कृतिनिष्ठप्रकारत्व-दाननिष्ठावच्छेदकत्वादीनां ब्राह्मण-गवादि-

निष्ठावच्छेदकत्व-निरूपितत्वस्य इव तादृशावच्छेदकत्वयोः तेषामपि वृत्तित्वात्। चैत्रनिष्ठविशेष्यतानिरूपित-प्रकारतानिरूपित-अवच्छेदकतायाः तादात्म्यस्य स्वावच्छेद्यकृत्यादिनिष्ठ-विशेष्यतानिरूपित-प्रकारतानिरूपित-अवच्छेदकताया। अवच्छेद्यत्वस्य च सत्त्वात् कृत्यादौ परम्परया ब्राह्मण-गवादिविशेषितस्य दानादेः प्रकारत्वात्। स्वनिरूपितावच्छेदकता-वृत्तित्वनियामक-सम्बन्धयोः आद्यस्यानुपादाने 'चैत्रोऽत्र फलं भुङ्क्ते', 'मैत्रोऽन्नम्' इत्यत्र फलनिष्ठावच्छेदकता-विशिष्टत्वस्य समवाय-सम्बन्धावच्छिन्न-सम्बन्धित्व-सम्बन्धावच्छिन्न-मैत्रनिष्ठ-अवच्छेदकता-निरूपिकायां मैत्रविशिष्ट-कृतिविशिष्ट-भोजनविशिष्ट-कर्मत्वनिष्ठ-निरूपकतायामपि सत्त्वं स्यादिति स उपादेयः। द्वितीयस्य अनुपादाने स्वसमानाधिकरण-मैत्रवृत्तित्वसम्बन्धावच्छिन्न-चैत्रनिष्ठ-अवच्छेदकताक-तादृशकर्मत्वनिष्ठनिरूपकत्वस्यापि सङ्ग्रहः स्यादिति सोऽपि उपादेयः। तद्घटकस्ववैशिष्ट्यनियामकसम्बन्धेषु प्रथमस्य अनुपादाने मैत्रकृति-प्रकारक-चैत्रविशेष्यक-ज्ञानीय-चैत्रविशेष्यत्वस्यापि विशिष्टत्वं स्यादिति तदुपात्तम्। चैत्रनिष्ठविशेष्यत्वे स्ववैशिष्ट्यसम्पत्तये स्वतादात्म्यस्य कृत्यादिनिष्ठविशेष्यत्वे तत्सम्पत्तये च स्वावच्छेद्यत्वस्य च स्वाश्रयत्वनियामकतया अप्रवेशः। मैत्रकृतीयसम्बन्धविशेषण-कृतिविशिष्ट-चैत्रस्य विशेष्यत्वे कृतिनिष्ठप्रकारतानिरूपित-चैत्रत्वमात्रावच्छिन्नविशेष्यतायाः स्ववैशिष्ट्यवारणाय 'फलं भुञ्जानः चैत्रो मैत्रीयसम्बन्धविशेषेण कृतिमान्' इत्यत्र पारतन्त्रीय-कर्तृनिष्ठ-प्रकारतानिरूपित-फलभोजन-कर्तृचैत्रत्व-उभयधर्मावच्छिन्न-विशेष्यतावारणाय च स्ववृत्तित्व-स्वानवच्छेदकानवच्छिन्नत्वयोः प्रवेशः कार्यः। स्वातन्त्रीय-प्रकारतानिरूपित-विशेष्यताम् आदाय दोषः स्वानवच्छेदकानवच्छिन्नत्व-सम्बन्धानुपादाने मृग्यः। यत्र 'चैत्रः फलमेकमन्नं च भुङ्क्ते' तत्र अन्नकर्मक-भोजनकृतिसम्बन्धित्वविशिष्ट-चैत्रविशिष्ट-कृतिविशिष्ट-भोजनविशिष्ट-कर्मत्वनिष्ठ-निरूपकतायाः चैत्रविशिष्ट-कृतिविशिष्ट-भोजनविशिष्ट-अनुवृत्तित्वविशिष्ट-कर्मत्व-निष्ठ-निरूपकतायाश्च वारणाय अवच्छेदकावच्छिन्नत्वस्य स्वाभाववदवच्छेदकत्व-अनिरूपितत्वरूपता उक्ता। प्रतियोगितावच्छेदकसम्बन्धयोराद्यः चैत्रत्व-कृतित्वादि-निष्ठावच्छेदकता-सङ्ग्रहार्थः। द्वितीयश्च चैत्रकृत्यादिनिष्ठावच्छेदकत्वसङ्ग्रहार्थः। एतेन न यत्र यस्य विशेषणत्वं तत्तन्निष्ठावच्छेदकताक-तत्तन्निष्ठ-निरूपकत्व-अवच्छेदकत्वादेरपि वारणम्।

अत्र च 'वेदाः प्रमाणम्' इत्यत्र प्रमाणत्व एकत्वान्वयेऽपि न क्षतिः। तादृशैकत्वे स्वप्रकृतिप्रयोज्य-प्रमाणत्वनिष्ठ-अवच्छेदकता-विशिष्टत्वस्य सत्त्वात्। पूर्वकल्पे तु प्रकृत्यर्थतावच्छेदके तस्मिन् प्रकृत्यर्थतावच्छेदकत्वविरहात् प्रकृत्यर्थ-तावच्छेदकतात्व-अवच्छेदकसाधारण-प्रकृत्यर्थतावच्छेदकत्व-विवक्षणे प्रकृत्यर्थेऽपि

निरुक्तसाजात्यस्य सत्त्वेन तत्र प्रकृत्यर्थतावच्छेदकगत-एकत्ववद्भेदस्य सत्त्वात्। एवं प्रकृत्यर्थतावच्छेदकेऽपि निरुक्तप्रकृत्यर्थतावच्छेदकवत्त्वस्य समभिव्याहृत-पदार्थसंसर्गित्वस्य च सत्त्वेन तत्र प्रकृत्यर्थगतैकत्ववद्भेदस्य सत्त्वात् तादृशैकत्वे तादृशानवच्छेदकत्वस्य प्रायशो न बहुस्थलेषु सम्भवः। अथ यत्र पदार्थानां "विशेष्ये विशेषणम्" इति रीत्या शाब्दबुद्धौ भानं तत्र का गतिः ? विशिष्टस्य तत्र अभासमानत्वेन तत्तत्पदार्थनिष्ठविषयतानां निरूप्यनिरूपकभावाभावादिति चेत् ? न । विशिष्टस्य अविषयत्वेन विशिष्टसंसर्गिणः सजातीयद्वितीय-राहित्यस्य अविवक्षिततया तत्तत्पदार्थ-निष्ठविषयतानां निरूप्यनिरूपकभावाभावेऽपि क्षति-विरहात्। प्रकृत्यर्थस्य यत्र विशेषणत्वं तन्निष्ठविषयता-प्रकृत्यर्थनिष्ठविषयतयोश्च निरूप्य-निरूपकभावसत्त्वात् तावन्मात्रसंसर्गित्वोपरागेण सजातीयद्वितीय-राहित्या-सम्भवे तादृशस्थले न भवति एव एकत्वस्य विवक्षितत्वमिति तु विभावनीयम्।

भेदप्रतियोगितावच्छेदकता च प्रकारतावच्छेदकसम्बन्धावच्छिन्ना ग्राह्या। न तु पर्याप्तिसम्बन्धावच्छिन्ना। तेन व्रीहित्वगत-एकत्वस्य स्वाश्रयव्रीहित्वसम्बन्धेन व्रीहिपदार्थे अन्वयपक्षेऽपि तस्य न तादृशानवच्छेदकत्वानुपपत्तिः। न च व्रीहौ एव तादृश-निरूपकताक-अधिकरणत्वसत्त्वेन तद्वृत्तिभेदप्रतियोगितानिरूपित-निरुक्त-सम्बन्धावच्छिन्न-अवच्छेदकत्वाप्रसिद्धिरिति वाच्यम्। प्रकारतावच्छेदक-सम्बन्धा-वच्छिन्नावच्छेदकत्वीय-स्वरूपसम्बन्धावच्छिन्न-तादृशावच्छेदकत्वाभावस्य विवक्षित-त्वात्। न च प्रकारतायाः केन रूपेण प्रवेश इति वाच्यम्। स्वप्रकृतिप्रयोज्य-विषयताविशिष्ट-प्रकारतावच्छेदकत्वस्य एकवचनार्थत्वे निरुक्तपर्यनुयोगासम्भवात्। वैशिष्ट्यञ्च प्रागुक्तान्यतम-सम्बन्धेन। स्वविशिष्ट-निरूपकताक-अधिकरणता-पर्याप्ति-सङ्ख्यावच्छिन्नवद्वृत्तिभेद-प्रतियोगिता-निरूपित-अवच्छेदकतावदन्यत्व-सम्बन्धेन। अवच्छेदकतावत्ता च (१)स्वावच्छेदकसम्बन्धावच्छिन्नत्व-(२)स्व-सामा-नाधिकरण्य-उभयसम्बन्धेन। यत्त्व-तत्त्वयोः शब्दानुगमस्थले उपादेयत्वे येन सम्बन्धेन यदेकवचनार्थस्य शाब्दबुद्धौ प्रकारत्वं तत्सम्बन्धावच्छिन्नावच्छेकत्वीय-स्वरूप-सम्बन्धावच्छिन्न-प्रतियोगिताक-निरुक्त-अवच्छेदकत्वाभाववत्त्व-सम्बन्धेन स्वप्रकृति-प्रयोज्य-विषयताविशिष्ट-एकत्वं हि तदेकवचनार्थ इत्यपि वक्तुं शक्यम्। तृतीयसम्बन्धानुपादाने 'पाण्डुदारा माद्री' इत्यत्र माद्रीपदार्थस्य विधेयत्वे तद्गतैकत्वस्य तादृशभेदप्रतियोगितानवच्छेदकत्वं न स्यादिति स उपात्तः। तथा सति पाण्डुदारत्वावच्छिन्न-तादात्म्य-सम्बन्धावच्छिन्न-सम्बन्धित्वसम्बन्धावच्छिन्न-अनिरूपकता माद्रीत्वनिष्ठा च निरूपकता स्वविशिष्टा भवतीति तदुभयनिरूपिता-धिकरणतावत्त्वं मद्रजायां पाण्डुपत्न्याम् एव वर्तते इति तादृशैकत्वस्य तादृशा-नवच्छेदकत्व-सम्पत्तिः। तादृशनिरूपकताद्वयसङ्ग्राहार्थं सम्बन्धद्वयोपादानमिति

द्रष्टव्यम्। चतुर्थस्य च उपादानं 'राज्ञः पुरुषोऽत्र अस्ति' इत्यादौ राजनिष्ठ-एकत्वस्य तादृशानवच्छेदकत्वसम्पत्त्यर्थं सम्बन्धप्रयोजनं प्रागुक्तरीत्या अनुसन्धेयम्। सम्बन्धानाम् अन्यतमत्वेन उपादानमभिधाय स्वतादात्म्यापन्न-मुख्यविशेष्यता-वत्त्वादि-प्रत्येकसम्बन्धेन वैशिष्ट्यम् अविधाय व्युत्पत्तिचतुष्टयं वाच्यमिति वा प्रकार आदरणीयः। अथ 'पशुना रुद्रं यजेत' इत्यत्र का गतिः? इष्टसाधनीभूत-यागकरणत्व-पशुत्वाधिकरणत्वयोः तत्तदेकत्वानाश्रयेषु तत्तत्पशुषु अपि सत्त्वेन पशुनिष्ठैकत्वमात्रस्य तादृशानवच्छेदकत्वासम्भवादिति चेत्? उच्यते। यत्र एकस्मिन् समभिव्याहृतपदार्थे प्रकृत्यर्थयोः सम्बन्धत्यावृत्तये एकत्वं विवक्षितं तत्र स्वाश्रयत्वसम्बन्धघटक-सम्बन्धेषु प्रागुक्तात् किञ्चित् अधिकमुपादेयम्। यथा स्वतादात्म्यापन्न-मुख्यप्रकारतावच्छेदकतावत्त्व-घटक-स्वाश्रयत्वनियामक-सम्बन्धेषु स्वावच्छेद्य-प्रकारता-निरूपित-विशेष्यतावच्छेदकावच्छिन्नत्व-स्थले तादृशविशेष्यता-वत्त्वम्। तन्नियामकसम्बन्धश्च स्वावच्छेदकावच्छिन्नत्व-स्वविशिष्टावच्छेदकताकत्व-द्वयम्। वैशिष्ट्यञ्च स्वावच्छेद्यप्रकारताच्छेदक-सम्बन्धावच्छिन्न-सम्बन्धित्व-सम्बन्धावच्छिन्नत्व-स्वावच्छेद्य-प्रकारता-निरूपित-विशेष्यता-समानाधिकरण-उभया-वृत्ति-धर्मावच्छिन्नत्व-उभय-सम्बन्धेन। स्वविशिष्ट-विषयतात्व-व्यापकत्व-घटक-सम्बन्धतया च स्वावच्छेद्यप्रकारता-निरूपित-विशेष्यत्वावच्छेद्यप्रकारता-निरूपित-विशेष्यत्वानवच्छिन्नत्वमपि उपादेयम्। तथा सति स्वसमानाधिकरण-भेद-प्रतियोगितानवच्छेदकत्व-सम्बन्धेन निरुक्तनिरूपकताक-अधिकरणतात्व-व्याप्य-अनुयोगिताक-पर्याप्तिक-सङ्ख्यावच्छिन्नविशिष्ट-एकत्वस्य एकवचनार्थत्वे भवति एव 'पशुना यजेत' इत्यादिस्थलीय-एकत्वस्य सङ्ग्रहः। तथा हि पशुत्व-अधिकरणत्व-इष्टसाधनीभूत-तद्यागकरणत्वाधिकरणत्व-द्वयत्वावच्छिन्नानुयोगिता निरुक्त-निरूपकताकाधिकरणतात्वव्याप्यतया तन्निरूपकपर्याप्तिप्रतियोगिता-तादृश-अधिकरणतागत-द्वित्वावच्छिन्न-विशिष्टत्वं तत्तदेकत्वे वर्तते। यागस्य पशुद्वय-करणकत्वे च तद्यागकरण-पशुनिष्ठ-एकत्वयोः एकस्यापि न तादृशसङ्ख्या-वच्छिन्नविशिष्टत्वस्य सम्भवः। चालनीन्यायेन तत्तदेकत्ववद्भेदस्य पशुत्व-अधिकरणत्व-तद्यागकरणत्वाधिकरणत्व-द्वयसमानाधिकरणत्वात्। पशुत्वाधिकरण-त्व-तद्यागकरणत्वाधिकरणत्व-तद्व्यक्तित्वाधिकरणत्व-गत-त्रित्वावच्छिन्न-अनुयोगि-तायाश्च तादृशाधिकरणतात्वव्याप्यत्वात्। निरुक्तनिरूपकताकाधिकरणतात्व-अवच्छिन्नत्वप्रवेशे तत्तद्यागकरणत्वाधिकरणत्वघटित-कूटत्वस्यैव तादृशसङ्ख्यात्वेन तदवच्छिन्नवत्त्वस्य एकत्वाश्रये कुत्रापि न सम्भव इति तत्परित्यज्य व्याप्यत्व-उपादानम्। तादृशसङ्ख्यावच्छिन्नसमानाधिकरण-भेदप्रतियोगिता-अनवच्छेदकत्वं च एकत्वे न सम्भवति। तत्तदेकत्वानाश्रयेऽपि तादृशसङ्ख्यावच्छिन्नवत्त्वस्य

सत्त्वात् इति तादृशसङ्ख्यावच्छिन्न-विशिष्टत्वम् उपात्तम्। तत्तद्व्यक्तित्व-अवच्छिन्नावच्छेदकताक-निरूपकत्व-सङ्ग्रहाय तादृशविशेष्यतावच्छेदकावच्छिन्नत्वं विहाय तादृशविशेष्यतावत्त्वम् उपात्तम्। तादृशावच्छेदकतासमानाधिकरणविषयत्वे व्यभिचारवारणाय स्वविशिष्ट-विषयतात्व-व्यापकत्वघटक-वैशिष्ट्य-नियामकतया चतुर्थसम्बन्धस्य निवेशः कृतः। इत्थमेव च अन्यत्रापि ऊहनीयः।

अथ 'घटोऽस्ति' इत्यत्र एतद्देशवृत्तित्वाधिकरणत्व-घटत्वाधिकरणत्व-समुदायत्वावच्छिन्नवद्वृत्तिभेदप्रतियोगितावच्छेदकत्वाभावप्रतियोगितावच्छेदकत्वस्य लाघवेन एतद्देशवृत्ति-घटवृत्ति-भेदप्रतियोगितावच्छेदकतात्व एव कल्पनीयतया निरुक्तावच्छेदकतात्वावच्छिन्न-प्रतियोगिताकाभावाप्रसिद्धिः। निरुक्ताधिकरणत्वस्य उपलक्षणत्वे घटद्वयवत्यपि 'अत्र घटोऽस्ति' इति प्रयोगापत्तिरिति चेत् ? न। निरुक्त-सङ्ख्यावृत्त्युभयावृत्ति-धर्मविशिष्टावच्छिन्नवद्वृत्तिभेद-प्रतियोगितावच्छेदकत्वाभावप्रवेशे दोषाभावात् निरुक्ताधिकरणत्वस्य उपलक्षणत्वेऽपि तादृशावच्छेदकत्वाभावकूटस्य प्रवेश्यत्वेन अदोषाच्च। अथ स्वरूपतो व्रीहित्वजातौ एकत्वान्वयपक्षे कथं निरुक्तव्युत्पत्तिसङ्गतिः ? सम्पत्त्यवच्छिन्न-व्रीहित्वावच्छिन्न-समवाय-सम्बन्धावच्छिन्न-आधेयत्वसम्बन्धावच्छिन्ननिरूपकताकाधिकरणत्वस्यैव तथाविधत्वेन तस्य सत्त्वद्रव्यत्वादावपि सत्त्वात् तत्र व्रीहित्वगतैकत्वस्य अभावात् व्रीहित्व-निष्ठाया निरवच्छिन्नधर्मितावच्छेदकतायाश्च स्वविशिष्टावच्छेदकतावत्त्वसम्बन्धस्य अप्रसिद्धत्वात् इति चेत् ? अत्र केचित्। स्वाश्रयप्रतियोगक-स्वावच्छेदक-सम्बन्धावच्छिन्नसम्बन्धित्वसम्बन्धावच्छिन्नत्वस्य सम्बन्धतया प्रवेश्यत्वात्। स्वाभिन्न-निरवच्छिन्नावच्छेदकतासमानाधिकरणोभय-वृत्तिधर्मावच्छिन्नत्वस्यापि तादात्म्य-सम्बन्धावच्छिन्नत्व-विशेषितस्य सम्बन्धतया वा प्रवेश्यत्वात्। व्रीहित्वप्रतियोगिक-समवायसम्बन्धावच्छिन्न-सम्बन्धित्वसम्बन्धावच्छिन्न निरूपकताकाधिकरणत्वं निरुक्तोभयावृत्तिधर्मावच्छिन्नाधिकरणत्वं वा व्रीहित्व एव हि वर्तते, न सत्त्वादौ इति न दोष इति वदन्ति।

अन्ये तु जात्येकत्वभानोपगमपक्षे यद्येकत्वमात्रम् एकवचनार्थः तदा व्रीहौ एकत्वत्वेन एकत्वभानोपगमात् को विशेषः ? अर्थतो लाभस्य उभयत्रापि तुल्यत्वात्। न च मास्तु विशेषः, तदभावे हि अवसितार्थतात्पर्यक-अशेषपदघटित-प्रयोगप्रामाण्योपपत्तिमात्राय तस्य स्वीकरणीयतया अन्यत्र सजातीयद्वितीयराहित्य-भानेऽपि प्रकृत्यर्थे एव एकत्वसामान्यस्य प्रकृते तदर्थभानप्रसङ्गः, विनिगमका-भावात्। तथा सति **यत्तु** (VV-2.2.12) इत्यादिग्रन्थसन्दर्भविरोधः। यदि च सम्पन्नव्रीहिवृत्ति-व्रीहित्वनिष्ठभेदप्रतियोगितानवच्छेदकं स्वाश्रयव्रीहित्ववत्त्वसम्बन्धेन सम्पन्नव्रीहिनिष्ठभेदप्रतियोगितानवच्छेदकं वा एकत्वं निरुक्तस्थले भासते, तथा च

सामान्यतो गृहीतायाः सजातीयनिष्ठभेदप्रतियोगितानवच्छेदकैकत्वे एकवचनशक्तेः अनुग्रहः, स एव च विनिगमक इत्युच्यते तदापि तद्विवक्षायाः प्रयोजनप्रतिलम्भाभावेन स्ववृत्त्येकत्वत्वावच्छिन्नवत्त्वसम्बन्धेन एकत्वान्वयेऽपि निरुक्तशक्त्यनुग्रहसम्भवेन च विनिगमनाविरहः तदवस्थः। न च लाघवं विनिगमकमिति वाच्यम्। स्वाश्रयशाब्दत्वावच्छिन्नकार्यतानिरूपितकरणत्वसम्बन्धेन एकत्वान्वयापेक्षया निरुक्तसम्बन्धेन एकत्वान्वये एव लाघवसद्भावेन 'प्रमाणम्' इत्यत्र तथापि तादृशान्वयानुपपत्तेः इति जातौ एकत्वभानस्य विजातीये समभिव्याहृतपदार्थसंसर्गव्यावृत्तिबुद्धिः प्रयोजनं वाच्यम्। तथा च 'सम्पन्नो व्रीहिः' इति वाक्यं तत्र प्रामाणिकम् इष्यते यत्र व्रीहित्वरूपैकजात्यवच्छिन्नस्य सम्पत्तिः। यत्र तु नानाजात्यवच्छिन्नस्य एव सा, तत्र 'सम्पन्नं सस्यम्' इत्येव। एवं संयोगेन भूतले बहुघटसत्त्वदशायाम् 'अत्र घटो अस्ति' इति प्रयोगः तत्रैव, न यत्र घटविजातीयपटादीनां सत्त्वम्। पटादिसत्त्वे तादृशप्रयोगः चेत् प्रामाणिकः 'सर्वतीर्थेषु अयं विधिः ग्रहं संमार्ष्टि' इत्यादिवदगत्या अविवक्षितसङ्ख्याकवचनघटित एवाभ्युपेयः। एवञ्च जातावेकत्वभानस्थले प्रकृत्यर्थतावच्छेदकेऽन्वयपक्षे स्वविशिष्टावच्छेदकतावत्त्व सम्बन्धस्थाने स्वाश्रयवद् अन्यत्वनिष्ठत्वसम्बन्धं स्वाश्रयवत्त्वनियामक-सम्बन्धेषु स्वविशिष्टावच्छेदकत्वानिरूपितत्व-सम्बन्धं च निवेश्य व्युत्पत्त्यन्तरं स्वीकरणीयम्। स्वाश्रयवत्ता च स्वभिन्नत्व-स्वसामानाधिकरण्य-उभयसम्बन्धेन। प्रकृत्यर्थे एव अन्वयपक्षे च स्वविशिष्टावच्छेदकतावत्त्व-संसर्गाघटित-व्युत्पत्त्यन्तरं वाच्यम्। व्युत्पत्तिभेदश्च एतादृशस्थले न दोषाय। एकशब्दशक्तिविचारे **शक्तिवादे** भट्टाचार्येण तथोक्तत्वात्। तथा च 'अत्र सम्पन्नो व्रीहिः' इत्यत्र एतद्देशवृत्तिसम्पन्नवृत्ति-व्रीहित्ववदन्यवृत्ति-भेदप्रतियोगितानवच्छेदकैकत्वं व्रीहित्वे एतद्देशवृत्तिसम्पन्नवृत्ति-भेदप्रतियोगितानवच्छेदकैकत्वं वा व्रीहौ भासते। तत्र तादृशानवच्छेदकत्वम् एकत्वस्य तदैव सम्भवति यदि विजातीयस्य न सम्पत्तिः। तथा सति व्रीहित्ववदन्यत्वस्य एतद्देशवृत्तिसम्पन्नवृत्तित्वस्य च व्रीहित्वविरुद्धजातौ अपि सत्त्वेन तत्र व्रीहित्वगतैकत्वस्य विरहात्। एवम् एतद्देशवृत्तिसम्पन्नत्वस्य व्रीहिविजातीयेऽपि सत्त्वेन तत्र स्वाश्रयव्रीहित्ववत्त्व-सम्बन्धेन एकत्वस्य अभावात् यत्र व्रीहीणाम् अन्यजातीयानां च सम्पत्तिः तत्र समुदायत्वविशेषरूप-सम्पत्तेः विभिन्नतया व्रीहिमात्रगतसम्पत्तेः विवक्षितत्वम् अवलम्ब्य तामादाय तादृशानवच्छेदकत्वनिर्वाहो द्रष्टव्यः। यत्र न एकजातीयस्य सम्पत्तिः अपि तु नानाजातीयानां तत्र निरुक्तसम्पत्तेः अभावेन विवक्षितुम् अशक्यतया सजातीयविजातीयगत-सम्पत्तेः एव विवक्षणीयतया न तादृशानवच्छेदकत्वस्य एकत्वे सम्भवः। स्वाश्रयवदन्यत्वप्रवेशश्च सत्ताद्रव्यत्वम् आदाय असम्भववारणाय। एवमेव

'अत्र घटोऽस्ति' इत्यादावपि सङ्गमनीयः। इत्थं चोक्तव्यावृत्तिबुद्धिरूपप्रयोजनस्य निर्वाहः। निरुक्तव्यावृत्तिं विना उक्तानवच्छेदकत्वस्य अनुपपद्यमानत्वात्। न च बहुनीलघट-सत्त्वदशायाम् 'अत्र नीलो घटोऽस्ति' इति। एतद्देशे अघटजातीयघटेषु अपि अनीलजातीयं व्यावर्तयितुं प्रयुज्यते, तस्य कथं निर्वाहः ? एतद्देशे पीतघटसत्त्वेऽपि उक्तानवच्छेदकत्वानुपपत्त्यभावात् स्वाश्रयघटत्ववत्त्वसम्बन्धेन पीतघटेऽपि एकत्वस्य सत्त्वात् इति वाच्यम्। विशिष्टस्य अतिरिक्तत्वे एकत्वस्य नैल्यविशिष्टघटत्वे अन्वयाङ्गीकारे क्षतिविरहात् तादृशैकत्वस्य पीतिमविशिष्ट-घटत्वे असत्त्वात्। अनतिरिक्तत्वे तु अगत्या घटपदस्य नैल्यघटत्व-उभयनिरूपित-अधिकरणतावति लक्षणा अभ्युपगन्तव्या। नीलपदस्य तात्पर्यग्राहकत्वात्। निरुक्ताधिकरणत्वे एव च एकत्वान्वयस्वीकारात्। तादृशस्थले प्रकृत्यर्थे एकत्वान्वयपक्षे चाकाङ्क्षावशात् स्वसमानाधिकरण-नैल्य-घटत्व-उभयत्वावच्छिन्न-निरूपकताधिकरणत्वस्य संसर्गतया भानाभ्युपगमेन उक्तदोषस्य वारणीयत्वादिति प्राहुः।

क्वचित् पुस्तके **समर्थनीय** (VV-2.2.11) इत्यन्तरम्, "न च 'दात्रेण च्छिनत्ति', 'पशुना यजेत' इत्यादौ एकत्वान्वयिनो दात्र-पश्वादेः न प्रकृतच्छिदा-यागादिकरणत्वप्रकारेण भानम् अपि तु छिदा यागादेरेव दात्र-पश्वादि-करणकत्व-प्रकारेण। तथा च एकत्वे प्रकारीभूत-दात्र-पश्वादिप्रकारेण सजातीय-दात्र-पश्वादौ सकलैकत्वविशिष्ट-भेदसत्त्वेन अप्रसिद्धिरेव सजातीयनिष्ठभेदप्रतियोगितानवच्छेद-कत्वस्येति वाच्यम्। एकत्वान्वयिनि दात्रादौ तुल्यवित्तिवेद्यतया प्रकृतछिदा-करणत्वादेः अपि प्रकारत्वात्। यदि शाब्दबोधे तुल्यवित्तिवेद्यतया भानम् अप्रामाणिकं तदा प्रकृतशाब्दसमानाकारकप्रत्यक्षे एकत्वेन भासमाने नियमतः प्रकारीभूतो धर्म एव ग्राह्यः" इत्यस्ति पाठः। न प्रकृतग्रन्थ इव यद्यपि प्रतिभाति, बहुषु पुस्तकेषु अनुपलम्भात्, सन्दर्भस्य अन्यथादर्शनाच्च, तथापि स व्याख्यायते तत्प्रामाणिकत्वम् अभ्युपगच्छतां सन्तोषाय सुधियाम्।

ननु समभिव्याहृत-पदार्थ-संसर्गित्वविशिष्ट-प्रकृत्यर्थतावच्छेदकवत्त्वम् एकत्वान्वयिनि प्रकारतया भासमानाशेषधर्मवत्त्वमेव। अन्यस्य दुर्वचत्वात्। तथा च स्वप्रकृतिप्रयोज्यविषयताविशिष्टमेकत्वम् एकवचनार्थ इति पर्यवस्यति। वैशिष्ट्यं च स्वावच्छेद्यत्व-स्वतादात्म्य-अन्यतरसम्बन्धेन, स्वविशिष्ट-विशेष्यता-निरूपित-प्रकारताविशिष्ट-निरूपकताकाधिकरणता-कूटवद्वृत्तिभेदप्रतियोगिता-अनवच्छेदक-त्वसम्बन्धेन। प्रकारतावैशिष्ट्यं च (१) स्वावच्छेदक-सम्बन्धावच्छिन्नत्व-(२)स्वा-वच्छेदकता-पर्याप्त्यनधिकरणधर्म-पर्याप्तावच्छेदकताकान्यत्व-उभयसम्बन्धेन। एवञ्च 'अत्र नीलो घटः' 'ब्राह्मणोऽत्र भुङ्क्ते' इत्यादौ निरुक्ताधिकरणताकूटस्य

पीतघट-शयनकर्तृब्राह्मणादौ न सम्भव इति। तन्निष्ठ-एकत्वे निरुक्तविषयता-विशिष्टत्वसम्भवात् न तत्र अनुपपत्तिशङ्का इति एतदुक्तनिरुक्ताभिप्रायेण आह - न चेत्यादि। तुल्यवित्तिवेद्यतया इति। प्रकार-विशेष्ययोः भानाभ्युपगमात् इति शेषः। वेद्यत्वं विषयत्वमात्रं न तु ज्ञानविषयत्वं, वित्तिपदादेव ज्ञानलाभात्। तुल्यत्वञ्च वेद्यत्वान्वयि स्ववृत्तिप्रकारतात्व-विशेष्यतात्व-अन्यतरात्मकम्। तृतीया तु अभेदार्थिका। भानं विषयत्वम्। तथा च प्रकारस्य विषयत्वं विशेष्यवृत्तिविषयतया स्ववृत्तिविशेष्यतात्वेन तुल्यं यद्विषयत्वं तदभिन्नं विशेष्यस्य च विषयत्वं प्रकारवृत्तिविषयतया स्ववृत्तिप्रकारतात्वेन तुल्यं यद्विषयत्वं तदभिन्नं तस्य अभ्युपगमात् इत्यर्थः। वस्तुतस्तु विषयताविशिष्टविषयत्वपर्यवसन्नं तुल्यवित्ति-वेद्यत्वम्। वैशिष्ट्यञ्च स्वनिरूपितत्व-स्वविशिष्टविषयत्वावच्छिन्नत्वोभयसम्बन्धेन। स्ववैशिष्ट्यञ्च स्वसाजात्य-स्वावच्छेद्य-विशेष्यत्व-प्रकारत्व-अन्यतर-निरूपितत्व-उभयसम्बन्धेन। साजात्यञ्च स्ववृत्तिप्रकारतात्व-विशेष्यतात्व-अन्यतररूपेण। सम्बन्धघटक-वैशिष्ट्यनियामक-द्वितीयसम्बन्धप्रवेशात् स्वावच्छेद्यस्य अन्यतरत्वेन प्रवेशाच्च कृतिनिष्ठ-विशेष्यता-निरूपित-यागनिष्ठ-प्रकारत्वं तन्निरूपित-पशुनिष्ठ-अवच्छेदकत्वं च आदाय तुल्यवित्तिवेद्यतया भानाभावेऽपि न यागादेः तत्प्रसङ्गः। प्रकारताविशिष्ट-विशेष्यत्वमेव वा तत्। वैशिष्ट्यञ्च स्व-निरूपितत्व-स्वावच्छेद्य-विशेष्यतानिरूपित-प्रकारतात्वावच्छेद्यत्व-उभयसम्बन्धेन। एतच्च 'नीलो घटः' इत्यादौ नैल्यस्य घट इव घटस्य नैल्येऽपि भान एव निर्वहति नान्यथा इति बोध्यम्। अप्रामाणिकमिति। प्रत्यक्षे सामग्र्योः तुल्यकालप्रयोजकसाम्यात् सम्पन्नतया तादृशभानसम्भवेऽपि शाब्दबुद्धौ प्रकारविशेष्याभावस्य 'प्रकृति-प्रत्ययौ सहार्थं ब्रूतः तयोः प्रत्ययार्थस्य प्राधान्यम्', 'उद्देश्यवचनं पूर्वम्' इत्यादि व्युत्पत्तिविशेष-नियन्त्रितत्वे युगपत् सामग्रीद्वयस्य सम्वलनासम्भवात् तादृशभानस्य न सम्भव इति भावः। शाब्दबोधसमानाकारकप्रत्यक्ष इति। समानाकारकज्ञानीयविषयतयोः ऐक्ये नास्ति विषयतावैशिष्ट्यनियामकसम्बन्धे वैलक्षण्यम्। शाब्दबोधीय-दात्रनिष्ठ-प्रकारतातः प्रत्यक्षीयतादृशप्रकारताया एव अभिन्नत्वेन तदवच्छेद्यत्वस्य छिदाकरणत्व-प्रकारतानिरूपित-विशेष्यतायां सत्त्वादन्यत्र असत्त्वाच्च। ऐक्याभावे तु स्वविशिष्टप्रत्यक्षविषयत्वावच्छेद्यविशेष्यत्वं संसर्गघटकं वाच्यम्। वैशिष्ट्यञ्च (१)स्वानवच्छेदकानवच्छिन्नत्व-(२)स्ववृत्तित्व-(३)स्वानवच्छेदकसम्बन्धानवच्छिन्नत्व-(४)स्वनिरूपित-विषयतात्व-व्यापकत्व-एतच्चतुष्टयसम्बन्धेन। व्यापकत्वं च स्वनिरूपित-विषयतात्वसम्बन्धेन। विषयतावत्ता च स्वानवच्छेदकानवच्छिन्नत्वादि-त्रितयसम्बन्धेन बोध्या। इदमत्र चिन्तनीयम्। अलौकिकप्रत्यासत्त्यनङ्गीकारे अलौकिकार्थघटितवाक्यार्थस्थले शाब्दसमानाकारकप्रत्यक्षाप्रसिद्ध्या व्युत्पत्तिग्रहा-सम्भवः निरुक्तप्रत्यक्षानुपस्थितौ व्युत्पत्तिग्रहो दुर्घटश्चेति।

यद्यपि "यद्यपि तत्तद्व्यक्तित्वेन यागादेः इत्यादि विभावनीयम्" इत्यन्त ग्रन्थोऽपि क्वाचित्क एव न च असौ प्रामाणिकतया उपादेयः। शब्दानुगमसम्भवासम्भवावगतिभ्यां व्याघातात्। उक्तरीत्या शब्दानुगम-सम्भवस्य अवगतत्वे यद्यपि इत्यादि-शङ्काया एव अनुन्मेषात्। अनवगतत्वे एकवचनार्थान्वयस्य बहुप्रकारत्वेन एकमात्रस्थले तत्प्रदर्शने कृतेऽपि सर्वत्र शिष्याणां व्युत्पत्तिग्रहासम्भवेन सन्दर्भ-प्रवृत्तिफलानुपपत्तेः। शाब्दबुद्धौ सर्वत्र विशेषस्य एव भासमानतया स्वसजातीय-निष्ठ-(VV-2.2.10)-इत्यादिग्रन्थस्य अविचारित-निर्वाहार्थ-प्रवृत्तिकतया न्यूनता-पाताच्च। तथापि एकविशेषप्रदर्शनेन साधर्म्यविशेषात् विशेषान्तरप्रतिपत्तेः सूक्ष्ममतीनां सम्भवेन तन्मात्रोद्देश्यकप्रवृत्तिकतया कथञ्चित् सङ्गतत्वम् अवलम्ब्य व्याख्येयः तथापि स्वतादात्म्येत्यादिः। इदमत्र बोध्यम्। एषा रीतिः यत्र एकस्मिन् समभिव्याहृतपदार्थेऽनेकेषां संसर्गित्वसम्भवः तत्रैव। न अन्यत्र। अन्यथा यत्र बहूनां भोजनकर्तृत्वं तत्रापि 'अत्र ब्राह्मणो भुङ्क्ते' इति प्रयोगापत्तेः। एकैक-भोजनक्रियायां कर्तृद्वयासम्भवेन तत्तदेकत्वे स्वाश्रय-कर्तृकभोजन-कर्तृनिष्ठ-भेदप्रतियोगितानवच्छेदकत्वसम्भवात्।

**भेदप्रतियोगितेति**। प्रतियोगिता व्यासज्यवृत्तिधर्मानवच्छिन्ना प्रतियोग्य-वृत्तिभेदनिरूपिता वा ग्राह्या। न अत उभयभेदादिकम् आदाय दोषः। ननु कस्यचित्कुठारस्य कुठारान्तरकरणक-च्छेदनक्रियाकरणस्य एकस्यैव यत्र छेदनकरणत्वं तत्र 'कुठारेण च्छिनत्ति' इत्यस्य अनुपपत्तिः। तत्रापि उक्तरीत्या एव एकत्वस्य एकवचनार्थताया वाच्यतया तदसम्भवात्। तत्कुठारनिष्ठैकत्वस्य स्वाश्रयकरणक-च्छेदनकरण-कुठारनिष्ठभेद-प्रतियोगितावच्छेदकत्वात् इत्यतः कल्पान्तरम् आह - **अथवेति**। तथा सति अस्या एव रीतेः 'कुठारेण च्छिनत्ति' इत्यत्रापि अनुसर्तव्यत्वेन नानुपपत्तिः। तत्रत्य च्छेदनस्य स्वानाश्रयकुठार-अकरणकत्वादिति। ननु देवतोद्देशेन द्रव्यत्यागस्य एव यागत्वेन एकयागत्वा-वान्तरधर्माश्रयस्य प्रत्येकेण उभयकरणकत्वेऽपि तत्तद्व्यक्तौ स्वानाश्रयपशु-करणकत्वसत्त्वे बाधकाभाव इति चेत् ? न। स्वानाश्रयपशुकरणकावृत्ति-यागत्वावान्तरधर्मवत्त्वस्यैव संसर्गत्वात्। अनेकपशुकरणके तन्त्रेण अनुष्ठेये याग-विशेषादौ न एकपशुकरणकत्व-प्रसङ्गः। फलविशेषजनकतावच्छेदक-अवान्तर-धर्मस्य तत्तत्त्यागेषु एकत्वादिति। अथ एकत्वस्य पशौ अनन्वये प्रत्ययस्य प्रकृत्यर्थान्वित-स्वार्थान्वित-स्वार्थबोधकताव्युत्पत्तिभङ्गः। न च आधेयतया पशोः एकत्वे तस्य च यागे अन्वय इति न व्युत्पत्तिभङ्गः। एवञ्च एकत्वे विशेषणतया अन्वितस्य करणत्वे विशेषणत्वासम्भवात् अगत्या करणविभक्तेः करणत्वसंसर्ग-तात्पर्यनिर्वाहकत्वेन वाच्यम्। तथा सति पदार्थविधया वक्ष्यमाणरीतेः पशुकरणत्व-

भानस्य आवश्यकतया स्वाश्रयपशुकरणकत्वसंसर्गस्य वैफल्यमिति शङ्कापि निरस्तेति वाच्यम्। सुबर्थसङ्ख्यायाः प्रकृत्यर्थविशेषणत्वनियमस्य तथापि बाधप्रङ्गादिति चेत्? न। अगत्या "पदार्थः पदार्थेन" इत्यादि-नियमसङ्कोचस्य इव उक्तनियमसङ्कोचस्यापि अदोषात्। अथवा उक्तदोषभयेन एव तादृशविधि-जन्यबोधस्य विशिष्टवैशिष्ट्यबोधात्मकतया इत्यादिना कल्पान्तरं वक्ष्यति। तत्र एकत्वस्य पशौ अन्वये विशिष्टवैशिष्ट्यभानमर्यादावशात् व्युत्पत्तिवैचित्र्या-ङ्गीकारेण धर्मिपारतन्त्र्यात् परम्परया यागक्रियायाम् अन्वयस्वीकारात् न हि उक्तव्युत्पत्त्योर्भङ्गः। न च एवं स्वाश्रयपशुकरणकत्वस्य संसर्गत्वोक्तिवैफल्यमिति वाच्यम्। तस्य सम्पातायातत्वात्। स्वाश्रयकरणकत्वमात्रसंसर्गत्वेऽपि दोषाभावेन पशुत्वेन अनाश्रयप्रवेशस्य सम्पातायाततायाः सर्वथैव वक्तव्यतया समस्तस्यापि तथात्वे क्षत्यभावात् स्वानाश्रयपशुकरणकत्वसंसर्गे च पशुत्वस्य अप्रवेशे यागस्य पशुकरणकत्ववन्मन्त्रकरणकत्ववत्तया स्वानाश्रयाकरणकत्वस्य असम्भवः स्यादिति तदुपादेयमेव। इदन्तु चिन्तनीयम्। स्वतादात्म्य-स्वानाश्रय-पश्वकरणकप्रकृतवाक्य-तात्पर्यविषय-यागकरणकत्व-उभयसम्बन्धेन एकत्वविशिष्टैकत्वस्य पशौ अन्वयेऽपि न क्षतिः। एतस्या एव रीतेः 'कुठारेण च्छिनत्ति' इत्यत्रापि अवलम्बनीयतया तात्पर्यविषय-च्छेदनक्रियायाः तत्कुठारनिष्ठ-एकत्व-अनाश्रयकुठाराकरणकत्वात्। कुठारद्वयकरणक-च्छेदनक्रियायाः तात्पर्यविषयत्वे च तस्याः तादृशाकरणकत्वस्य असम्भवात् अनुपपत्तेश्च असम्भवात्। तथा सति सुबर्थसङ्ख्या-धात्वर्थयोः अन्वयावलम्बिपक्षावलम्बनं किमर्थमिति।

**अप्रसिद्धमिति**। न च पश्वकरणकयागादौ तत्प्रसिद्धेः असङ्गतिः इति वाच्यम्। पशुकरणकयाग इत्यस्य पूरणीयत्वात् तथा च अप्रसिद्धमिति अविद्यमानमिति पर्यवसितार्थः। अथ अवच्छिन्नप्रतियोगिताक इत्यत्र अवच्छिन्नत्वं यदि अवच्छेदकतानिरूपितत्वमात्रं तदा एकत्ववद्-घटोभयभेदस्य एकत्वाश्रयेऽपि सत्त्वेन अनुपपत्तिः। यदि स्वभिन्नावच्छेदकत्वानिरूपितत्व-विशेषितं तदा स्वत्त्वप्रवेशे अननुगमः अप्रवेशे च तादृशानिरूपितत्वाप्रसिद्धिः इति चेत् ? विलक्षणम् एव अवच्छिन्नत्वम् अनवस्थाभयेन स्वीकरणीयम्। तदेव च प्रकृते प्रवेश्यमिति न अनुपपत्तिरिति गृहाण। प्रतियोगित्वनिष्ठ-अवच्छेदकता-भिन्न-भेदत्व-निष्ठावच्छेदकताभिन्न-अवच्छेदकत्वानिरूपित-भेदनिष्ठ-अवच्छेदकता-भिन्न-पशुत्वनिष्ठावच्छेदकता-भिन्नावच्छेकत्व-अनिरूपित-पशुत्व-अवच्छिन्न-अवच्छेदकता-भिन्न-करणतात्वनिष्ठ-अवच्छेदकताभिन्न-अवच्छेदकत्व-अनिरूपित-प्रतियोगिताक-अभावत्वेन उक्ताभावः प्रवेश्यः। तेन तत्पशुवृत्तिभेदवत्पश्वकरणकत्वं भेदवत्तत्-पश्वकरणकत्वं तादृशभेदवत्-पशुकरणकत्व-घटोभयाभावं च आदाय न उभयपशु-करणकयाग-सङ्ग्रहप्रसङ्गः।

**अनुभवविरुद्धत्वे** त्विति। अत्र च धात्वर्थीभूतस्य सुबर्थे विशेषणतया हि अन्वयोऽनुभवविरुद्धः। न च सुबर्थघटकीभूतस्य धातुविशेष-समभिव्याहारेण तादृशार्थे पदवृत्तेः सुग्रहतया ततः तथाभाने आकाङ्क्षाविरहस्य अकिञ्चित्करत्वादिति चिन्त्यम्। एवं सुबर्थघटकतया भानाङ्गीकारेऽपि स्वकरण-पशुवृत्तित्व-सम्बन्धप्रवेशफलं चिन्त्यमेव। कश्चित् तु स्वकरण-पशुनिष्ठ-भेद-प्रतियोगितावच्छेदकत्व-सम्बन्धावच्छिन्न-स्वाभाववत्त्वमेव निरुक्तानवच्छेदकत्वम्। अन्यथा स्वत्वप्रवेशे अननुगमः। अप्रवेशे च करणीभूत-पशुनिष्ठ-भेदप्रतियोगिता-नवच्छेदकत्वोपरागेणैव तादृशानवच्छेदकत्वस्य संसर्गतया वाच्यतया तेन रूपेण तस्य एकत्वमात्रवृत्तितया गुणे संयोगस्य द्रव्यसंसर्गतया इव एकत्वे निरुक्तस्य यागसंसर्गताया अपि असम्भवः। एवञ्च पश्वकरणक-याग-वैशिष्ट्यस्य उभयपशुकरणकयागकरणपशुनिष्ठैकत्वे सम्भवः स्यादिति स्वाकरण-पशुवृत्तित्व-संसर्ग उपादेय इत्याह तन्नातिमनोरमम्। संसर्गसंसर्गभानाभावपक्षे उक्तरीतेः सम्भवेऽपि कल्पान्तरे तदसम्भवात्। तथा हि उक्तानवच्छेदकत्वस्यान्यत्र प्रसिद्धस्य यागविशिष्टबुद्धौ रूपविशिष्टबुद्धौ समवायस्य रूपप्रतियोगिकत्वेन यागप्रति-योगिकत्वेन एव संसर्गतया भानमङ्गीकरणीयम्। तथा सति एकत्वे न तस्य असम्भव इति। स्वाभाववत्त्वस्य संसर्गरूपताङ्गीकारस्य निर्बीजत्वात्। कथमन्यथा पशुत्वतत्तद्व्यक्तित्वाद्यवच्छिन्नप्रतियोगिताकभेदस्यापि आश्रयनिष्ठतया तमादायैव आश्रयनिष्ठ-भेदप्रतियोगि-पश्वकरणकत्वस्य यागकरणपशौ अविद्यमानत्वोक्तिसम्भवे विशिष्टभेद-द्वित्ववद्-भेदपर्यन्तानुधावनम्। न च प्रतियोग्यवृत्तित्व-विशेषणेन विशिष्टभेदादिव्यावृत्तिसम्भवे तत्कल्पपरित्यागः अनुचित इति वाच्यम्। प्रतियोग्यवृत्तित्वस्यापि विलक्षणावच्छिन्नत्वमन्तरेण दुर्वचतया तद्घटितकल्पा-नुसरणस्यैव युक्तत्वात्। यत्तु स्वाभाववत्त्वप्रवेशेऽपि स्वत्वप्रवेशाप्रवेशविकल्पेन दोष इति, तन्न। स्ववृत्त्युभयावृत्तिधर्मावच्छिन्न-प्रतियोगिताकाभावस्यैव प्रवेश्यत्वात् तत्र स्वत्वाप्रवेशेऽपि क्षतिविरहादिति।

**अथ वेति**। वा-कारः अनास्थायाम्। आनुभविकस्य एकत्वबोधस्य अपलापप्रसङ्गात् इति। **गत्यन्तरविरहेणेति** (VV-2.2.12)। अविवक्षातिरिक्त-गतिविरहेणेत्यर्थः। विशेष्यतया आख्यातार्थसङ्ख्या-प्रकारकान्वयबोधे प्रथमान्त-पदोपस्थाप्यत्वस्य तन्त्रत्वेन 'चैत्रेण स्थीयते' इत्यादौ चैत्रादेः प्रथमान्तपदो-पस्थाप्यत्वेन तत्र सङ्ख्यान्वयासम्भवात्। सार्थकत्वानुरोधेन व्युत्पत्तिवैचित्र्येणापि अन्वयस्य 'चैत्र-मैत्राभ्यां स्थीयते' इत्यादौ द्वित्वावरुद्धे कर्तर्यसम्भवात्। कर्तृगत-सङ्ख्याभिधाने तृतीयानुपत्तेश्च धात्वर्थबहुत्वेऽपि एकवचनस्यैव दर्शनात्। तत्रापि बाधितत्वेन अन्वयासम्भवात् धात्वर्थे द्वित्व-बहुत्वयोरपि योग्यत्वेन तद्विवक्षायां

द्विवचन-बहुवचनयोरप्यापत्तेः धात्वर्थे सङ्ख्यान्वयेऽऽख्यातस्य निराकाङ्क्षत्वस्यैव अभ्युपेयत्वाच्च न विवक्षासम्भव इति भावः। निरर्थकत्वोपगमादिति। न च ते-प्रभृतेः कर्माख्यातादिस्थले सङ्ख्या-प्रत्ययोत्पादात् तादृशानुपूर्वीप्रकारेण एकत्वादिशक्तेः आवश्यकत्वात् सङ्ख्यार्थकत्वमेव अस्ति भावाख्यातस्यापि इति कथं निरर्थकत्वसम्भवः ? यत्तु भावाख्यातस्थलेऽपि कालस्य प्रतीतेः कथं निरर्थकत्वसम्भव इति ? तन्न। सङ्ख्यारूपार्थराहित्यस्यैव निरर्थकत्व-पदेन प्रकरणमहिम्ना लभ्यत्वादिति वाच्यम्। सङ्ख्यातात्पर्यरहितत्वस्यैव तद्रूपत्वात्। न हि सम्भवति तत्र सङ्ख्यायां व्युत्पन्नस्य वक्तुः तात्पर्यम्। प्रागुक्तयुक्त्या तद्विषयासम्भवस्य निर्णयादिति। तत्र सङ्ख्याविवक्षाविरहोऽभ्युपगन्तुं शक्य इति। **सार्थकत्वसम्भव** इति। सङ्ख्यातात्पर्यविषयत्वसम्भव इत्यर्थः। भावाख्यातस्थल इव अत्र च अविवक्षाकारणाभावात्। द्वयं हि अविवक्षाकारणम्। विवक्षणीयासम्भव-निर्णयः तत्प्रयोजनत्वाप्रतिसन्धानञ्च। तत्र च प्रकृते व्युत्पन्नस्य न सम्भवः। 'स्वायत्ते शब्दप्रयोग' इत्यादिन्यायस्य जागरूकतया उक्तातिप्रतिसन्धानञ्च न कल्पनार्हम् इति अविवक्षितत्वं न अभ्युपेयमिति भावः। अथ सम्पन्नव्रीहिमात्र-बुबोधयिषया प्रयोक्तव्ये वाक्ये न केवलं प्रकृतिरित्यादिन्यायेन अवर्जनीयतया अवश्यप्रयोक्तव्यो विभक्त्यंशः। प्रकृत्यंशश्च तत्र प्रकृतिभागः अर्थविशेषबुबोधयिषा-नुसारात् व्रीह्यादिविशेषपदात्मा विभक्त्यर्थस्य अबुबोधयिषिततया यस्मिन् कस्मिंश्चित्प्रयोक्तव्ये औत्सर्गिकत्वात् प्रथमैकवचनात्मक एव विभक्त्यंशः। एवं हि न तदवलम्बनेन स्वायत्त इत्यादिन्यायः अवतरितुम् इष्टे। तथा सति एकदेशानन्वयव्युत्पत्तिभङ्गोऽपि न मर्षणीय इति भवत्येव एकत्वस्य अविवक्षितत्वं दुर्वारमित्यत आह - **सति तात्पर्य** इति। सत्यं न 'स्वायत्त' इत्यादिन्यायानुरोधात् उक्तप्रयोगादिषु सर्वत्र सङ्ख्याया विवक्षितत्वम्। परन्तु यत्र व्रीहित्वेन एकजातीयेषु सम्पत्तिप्रतिपत्तिः प्रयोजनत्वेन प्रतिपन्ना तत्र भवत्येव तादृशप्रतिपत्तिविषयताव्याप्त-आप्तपरम्परा। वक्तुः प्रकरणादितः तज्ज्ञानाच्च व्युत्पन्नानाम् अप्रतिपत्तिः। अनुव्यवसीयमाना च सा भवति जातौ एकत्वान्वये प्रमाणम्। तस्य च प्रामाणिकत्वे प्रयोगानुसार-लब्धविषयप्रसरोक्तनियमभङ्गोऽपि न दोषः। तन्नियमस्य सङ्कोच्य-त्वादिति भावः।

**VV-G.2.2.13: कार्योत्पादप्रयोजकतावच्छेदक-समुदायत्वावच्छिन्न-परमिति।** ननु हेतुपदस्य निरुक्तधर्मावच्छिन्ने लक्षणानुसरणं व्यर्थम्। शक्त्युपस्थापिते हेतुत्वेऽपि एकत्वान्वयस्य सम्भवात्। न च कथं हेतुत्व एकत्वान्वयस्य सम्भवः तदेकत्वस्य अवच्छेदक-ऐक्य-आयत्तत्वेन अवच्छेदकतया सम्भाव्यमानानां शक्तित्वादीनाम् अनेकत्वादिति वाच्यम्। समुदायत्वेन एकहेतुत्वस्य सम्भवात्। अत

एव समुदिता इति सार्थकम्। समुदायत्वविशिष्टहेतुत्वान्वये समुदायत्वेन हेतुत्वस्य लभ्यत्वात्। इत्थमपि एकैकस्मात् कार्योत्पत्तिव्यतिरेकलाभेन एकत्व-विवक्षाया न आनर्थक्यमिति चेत् ? न। एकस्याः प्रत्यासत्तेः दुर्लभतया समुदायत्वस्य एकविशिष्टापरत्वरूपत्वेन विशेष्य-विशेषणभावे विनिगमनाविरहात् गुरुतर-अनेककारणत्वप्रसङ्गेन च दण्डचक्रादीनां समुदायत्वेन हेतुत्वमनभ्युपेत्य प्रत्येकरूपेण हेतुत्वाना सहकारिवादे अभ्युपगतत्वात् शक्त्यादीनामपि समुदायत्वेन हेतुत्वस्य सहकारिवादे तथैव अनभ्युपेयत्वात्। न च समुदिता इत्यस्य वैयर्थ्यम्। हेतुपदस्य निरुक्तसमुदायत्वावच्छिन्नलक्षणायां तात्पर्यग्राहकत्वात्। कार्योत्पाद-इति पर्यवसितकथनम्। न तु तदन्तर्भावेण हेतुपदार्थता। तदुद्भव इत्यस्य अन्वयात् एव तल्लाभात्। काव्योद्भव-निरूपित-प्रयोजकत्वञ्च काव्योत्पत्ति-समानाधि-करणाभाव-अप्रतियोगित्वम्। तादृश-उत्पत्तिव्यतिरेक-नियतव्यतिरेक-प्रतियोगित्वम् अतिरिक्तपदार्थो वा इत्यन्यदेतत। सर्वथैव शक्त्यादिषु एकैकस्मात् कार्योत्पत्तौ शक्त्यादिसमुदाय-व्यतिरेकस्य कार्योत्पत्ति-सदेशत्वेन निरुक्तसमुदायत्वस्य प्रयोजकतावच्छेदकत्व-असम्भव इति तेषां सहकारित्वमेव अभ्युपेयम् इति एकत्वविवक्षा-प्रयोजन-निर्वाहः।

तृणारणिमणिन्यायेनेति। तृणारणिमणीन् अधिकृत्य प्रवृत्तो न्यायः तृणारणिमणिन्यायः। स च अन्यतमत्वादिना गृहीत-अन्वयव्यतिरेकषु एकैकशो दृष्टव्यभिचारेषु परस्परनैरपेक्ष्येण प्रत्येकधर्मपुरस्कारेण करणत्वसाधिका युक्तिः, तया इत्यर्थः। तृतीयार्थस्य हेतुत्वेऽन्वयः।

**VV-G. 2.2.14:** पदशक्तिरूप-पदार्थत्वस्य एकत्वमिति। न च इच्छारूपायाः शक्तेः एकत्वेन यदि एकपदार्थत्व-व्यवहारः तदा घटपटादीनामपि स्यात्। यदि च इच्छाविषयत्वस्य एकत्वनिबन्धनः तदा जात्याकृत्यादिनिष्ठ-विषयताया नानात्वेन जात्यादिषु अपि एकशक्तेः असम्भव इति वाच्यम्। पदजन्य-बोधविषयत्वनिष्ठ-प्रकारता एव हि शक्तिः। तन्नियामक-सम्बन्धश्च (१)स्वनिरूपितविशेष्यत्व-(२)स्वावच्छेद्यत्वनिष्ठ-विषयता-निरूपित-अवच्छेदकत्व-निष्ठ-विषयतावत्त्व-अन्यतरात्मकः। विषयतावत्त्वञ्च (१)स्वनिरूपित-आधेयत्व-सम्बन्धावच्छिन्नावच्छेदकतावत्त्व-(२)स्वनिरूपित-संसर्गत्वनिष्ठ-विषयतानिरूपित-विषयतावत्त्व-अन्यतरसम्बन्धेन बोध्यमिति न कापि अनुपपत्तिः।

**VV-G. 2.2.15-16:** एकताया बाधितत्वेनेति। न च प्रमाणत्वस्य प्रमा-जनकत्वरूपतया प्रमात्व-एकत्वान्वयसम्भवात् तद्विवक्षया कथं न सार्थकैकवचन-प्रयोगः कृत इति ? प्रमात्वस्य ऐक्याभावात् असम्भवात् न तथा अन्वय इति तु वाच्यम्। प्रमानुगतव्यवहारानुरोधेन कथञ्चिदनुगतप्रमात्वस्य वाच्यत्वादिति

वाच्यम्। प्रमाणत्वस्य प्रमात्वन्यूनवृत्तिधर्मघटित-धर्मावच्छिन्न-जनकत्व-रूपतया प्रथमधर्म एव च एकत्वान्वये प्रमाणपदोत्तर-सु-आदेः साकाङ्क्षत्वात्, तादृश-एकधर्मावच्छिन्नजनकत्वस्य प्रत्यक्षादिचतुष्टये बाधितत्वादिति भावः।

**VV-G. 2.3.1: अनुपगमादिति**। एतद्बीजं तु अग्रे वक्ष्यते।

**VV-G. 2.4.1: प्रथमाविभक्त्यन्तेति**। प्रथमात्वेन विभक्तेः न आकाङ्क्षाशरीरे प्रवेशः। प्रथमात्वाज्ञानेऽपि शाब्दबोधोदयात्। नापि स्वत्वादिना घट इत्यादि-आनुपूर्वीमात्रज्ञानेऽपि शाब्दबोधोदयात् किन्तु घट इत्यादेः आनुपूर्वीप्रकारेणैव आकाङ्क्षाशरीरे प्रवेशः कार्यः। आनुपूर्वीविशेषावच्छिन्नयोः एव समभिव्याहाररूपाया आकाङ्क्षाया ज्ञानं कारणम्। उक्तग्रन्थस्तु शिष्यव्युत्पादनार्थः।

वस्तुतस्तु समभिव्याहाररूप-आकाङ्क्षा न शाब्दबोधोपयोगिनी। अग्रे समभिव्याहाररूप-आकाङ्क्षाज्ञानस्य हेतुताया निराकृतत्वात् इत्यादिना तस्या अतद्रूपत्वोक्तेः। तथा सति यथा अकारणत्वं तथा तत्रैव वक्ष्यामः। न च ह्यो 'बहुगुडः', 'सुन्दरः - पाठकदेशीयः', 'पाठकतरः', 'पाठककल्पः', 'पाठकरूप' इत्यादौ कथम् उक्ताकाङ्क्षा ? विशेष्यवाचक-पाठकपदस्य अप्रथमान्तत्वात् इति वाच्यम्। न च एवमपि 'उपकुम्भम्', 'अर्धपिप्पली' आदि (VV-4.3.1) इत्यादिसन्दर्भेण उत्तरस्य ग्रन्थकृतैव करिष्यमाणप्रायत्वात्।

**समासस्थले चेत्यादि**। अथ समासस्थले नीलपदाव्यवहितोत्तर-घटपदत्वादेः एव आकाङ्क्षात्वे पदार्थोपस्थित्यादिकारणसङ्घाते 'नीलघटः' इत्येतन्मात्रज्ञाने च सति शाब्दबोधापत्तिः इति चेत् ? न। अनुमितौ इव शाब्दबुद्धौ अपि विधेयताया नियमेन समासस्थले नीलमात्रप्रकारकस्य शाब्दबोधस्य असम्भवात्। उपसर्जनीभूत-नीलादिपदप्रयोज्य-विषयताया विधेयत्वा-सम्भवात् विधेयीभवत् एकत्वादिप्रकारक-नीलघटशाब्दबोधादेः एव समासोत्तरं प्रसिद्धतया तत्सामग्र्या विभक्त्यन्त-नीलघटादिपदज्ञानघटितत्वेन निरुक्तस्थले तदभावेन आपत्त्यसम्भवात्। विधेयीभवन्नीलादिप्रकारकस्य च नीलघटशाब्दबोधस्य व्यासस्थले एव प्रसिद्धत्वेन तत्सामग्र्या अपि उक्तस्थले अभावात्। न च नीलत्वावच्छिन्न-प्रकारतानिरूपित-घटत्वावच्छिन्न-विशेष्यताक-शाब्दबुद्धित्वस्य आकाङ्क्षा ज्ञानजन्यतावच्छेदकत्वेन योग्यताज्ञानादिजन्यतावच्छेदकत्वेन च निरुक्तसमासस्थलीय-आकाङ्क्षाज्ञानादिघटितसामग्रीसत्वे कुतो न उक्तापत्तिः ? घटत्वावच्छिन्न-प्रकारतानिरूपित-घटत्वावच्छिन्न-विशेष्यताक-शाब्दत्वस्य जन्यता-अनवच्छेदकत्वेन तदवच्छिन्नापत्तितो वैलक्षण्यादिति वाच्यम्। निर्विशेषस्य सामान्यस्य अभावेन व्याप्यीभूत-यत्किञ्चिद्-धर्मावच्छिन्न-उत्पादकसामग्रीं विना व्यापकधर्मावच्छिन्नोत्पत्त्यसम्भवात्। व्याप्यभूतश्च धर्मः 'नीलघट' इत्यादि-ज्ञान-

अव्यवहितोत्तर-नीलघटादि-विशेष्यक-एकत्वादि-प्रकारक-शाब्दबुद्धित्वादिः। व्यापकञ्च नीलघटपद-ज्ञानाव्यवहितोत्तर-नीलप्रकारक-घटविशेष्यकबुद्धित्वम्। कार्यतावच्छेदकत्वञ्च तस्य यद्विशेषयोः इत्यादिन्यायप्रामाण्यात्। उक्तसामान्य-कार्यकारणभाव-अभावेऽपि च न क्षतिः। कार्यतावच्छेदक-घटकप्रयोजकतायाः कारणतावच्छेदकघटके न्याय्यतया नीलप्रकारतानिरूपित-घटविशेष्यत्व-रूप-कार्यतावच्छेदकघटकं प्रति कारणतावच्छेदकघटक-नीलपदाव्यवहितोत्तर-घट-पदत्वस्यैव प्रयोजकत्वात्। आकाङ्क्षाघटक-तादृशांशस्य आकाङ्क्षात्वोक्तेः असङ्गतत्वविरहात्। यत्तु 'न केवला प्रकृतिः प्रयोक्तव्या नापि च (केवलः) प्रत्यय' इति व्युत्पत्त्यनुसारेण सामान्यतः प्रकृतिजन्यशाब्दबुद्धौ प्रत्ययजन्य-शाब्दबुद्धौ च परस्परसमभिव्याहारज्ञानस्य कारणत्वेन व्यापकधर्मावच्छिन्नसामग्री-विरहादेव न उक्तापत्तिः इति। तन्न निरुक्त-कार्यकारणभावे मानाभावात्। प्रकृतित्वाद्यज्ञानेऽपि शाब्दबोधोदयाच्च उक्तव्युत्पत्तेः विशेषकार्यकारणभावमूलक-तादृशवस्तुप्रतिपत्तिमात्र-फलकत्वात्। केचित् तु स्वाद्यन्त-नीलघटादिपदज्ञानोत्तर-तादृशशाब्दबोधे स्वाद्यन्त-नीलघट-पदत्वादिज्ञानत्वेन कारणत्वमिति न उक्तापत्तिः, नीलपदाव्यवहितोत्तर-घटपदत्वस्य आकाङ्क्षात्वकथनं तु निरुक्ताकाङ्क्षा-शरीरे स्वाद्यन्तत्वप्रवेशस्य निर्विभक्तिकपदप्रयोग-अव्युत्पन्नत्वनिबन्धनत्वेन अभेदान्वय-बोधप्रयोजकत्वस्य निरुक्तपदत्वमात्र-पर्यवसितप्रायत्वात्। व्यासस्थले च निर्विभक्तिकत्वपरिहारस्य पदयोः विजातीय-विभक्त्यवरुद्धत्वेऽपि सम्भवेन सजातीय-विभक्तिगर्भस्य एव अभेदान्वयप्रयोजकत्वस्य अभ्युपेयत्वात्। तत्र च तथा एव उक्तम्। न च एवं 'नीलघटरूपम्' इत्यादिस्थले शाब्दबोधानुपपत्तिः। घटपदस्य स्वाद्यन्तत्वविरहात् स्वादिपूर्ववर्तितामात्रस्य तथात्वे 'नीलघटोऽस्ति चैत्र' इत्यत्रापि तदापत्तेः इति वाच्यम्। स्वपूर्ववर्त्ति-समासाघटकपदपूर्ववर्त्तित्व-सम्बन्धावच्छिन्न-प्रतियोगिताक-स्वाभाववत्त्वविशेषित-स्वपूर्ववर्त्तित्वसम्बन्धेन स्वादि-मत्त्वस्य वाच्यत्वात्। न च नीलघटपदस्य निर्विभक्तिकस्य विभक्त्यन्त-समासघटक-पदपूर्ववर्त्तिनः तादृशपदेन एकवाक्यताविरह-निश्चयेऽपि निरुक्त-स्वादिमत्त्वसम्भवेन शाब्दबोधापत्तिरिति वाच्यम्। स्वप्रयोज्य-विषयतानिरूपित-विषयता-प्रयोजक-पदत्व-सम्बन्धावच्छिन्न-प्रतियोगिताक-स्वाभाववत्-पदानुत्तरत्व-सम्बन्धेन स्ववृत्तित्वस्यैव अभावान्तार्थत्वात्। निरुक्तस्य च संसर्गतया तज्ज्ञानं च न दुरुपपादम्। स्वप्रयोज्यविषयताया अपि स्वप्रयोज्यविषयतानिरूपितत्वं परम्परया अस्ति इति 'नीलघट' इत्यादौ न अनुपपत्तिः। स्वादीनां च सुप्त्वादिनैव प्रवेशः कार्यकारणभावबाहुल्यं च इष्यते एव इत्याहुः। तदसत्। 'नीलघटरूपम्' इत्यादौ रूपपदमात्रेऽपि स्वन्तत्वादिग्रहे शाब्दबोधोदयात् कथमन्यथा अनुपदवक्ष्यमाणायाः

समास-व्यास-साधारणानुगताकाङ्क्षायाः खण्डनं सङ्गच्छेत ? तत्रापि स्वोत्तर-स्वभिन्नपदानुत्तरत्वे सति स्वप्रयोज्यविषयता-निरूपित-विषयताप्रयोजक-पदभिन्न-पदानुत्तर-सु-पूर्वत्वसम्बन्धेन नीलपदवद्-घटपदत्वस्य आकाङ्क्षारूपताया वक्तुं शक्यत्वात्। 'नीलो घटरूपम्' इत्यादौ घटादौ नीलाद्यन्वये निराकाङ्क्षे घटादिविषयताया वस्तुतो नीलादिविषयतानिरूपितत्वविरहेण तत्राप्युक्ताकाङ्क्षाया अप्रसक्तेः। उक्तनिरूपितत्वस्य संसर्गघटकत्वात् चोक्तविषयतयोः अनिरूपितत्वग्रहे आकाङ्क्षाविरहग्रहः, आकाङ्क्षाविरहग्रहे च उक्तविषयतयोः अनिरूपितत्वग्रह इति अन्योन्याश्रयस्य निरुक्ताकाङ्क्षाज्ञान-कारणताग्रहे न प्रसङ्गः। वस्तुनि तथाविध-अन्योन्याश्रय-प्रसङ्गदोषापलापः। सर्वत्र तादृशज्ञानकल्पनं च उभयत्रापि समानम्। 'नीलघटरूपम्' इत्याद्यानुपूर्वीज्ञानानां नीलाभिन्न-घटीयरूप-शाब्दबोधे हेतुत्वस्य क्लृप्ततया तावता एव तत्र नीलाभेदबोधसम्पत्तेः, तदनुरोधेन तत्र समासस्थलीय-आकाङ्क्षानिर्वचनप्रयासो न उपादेय एव इति तु स्यादेव उपादेयः। अत एव समासघटक-पदार्थस्य विधेयत्वाभ्युपगमपक्षेऽपि न क्षतिरिति।

**VV-G. 2.4.2: नोक्ताकाङ्क्षाज्ञानयोरिति।** इदम् उपलक्षणम्। व्यासस्थले समासस्थलेऽपि च पर्यायपदघटितत्वेन आकाङ्क्षाया नानात्वात्। तेषामपि परस्परजन्यबोधे व्यभिचारवारणाय अव्यवहितोत्तरत्वस्य कार्यतावच्छेदकघटकत्वं बोध्यम्।

**कार्यतावच्छेदककोटाविति।** अथ अनेन अव्यवहितोत्तरत्वातिरिक्तस्यापि कार्यतावच्छेदकत्वं ज्ञायते। अन्यथा कार्यतावच्छेदकतया इत्येव उच्येत। तत्किम् इति अभ्युपेयम्, व्यभिचाराद्यभावत्वात् इति चेत् ? न। 'नीलो घटः', 'नीलः पटः' इति ज्ञानं यत्र पटपदे नीलाद्यव्यवहितोत्तरत्वस्य अप्रामाण्यज्ञानास्कन्दितं तत्र नीलघट-शाब्दबोधो जायते न तु नीलपट-शाब्दबोधः। तदनुरोधेन अप्रामाण्यज्ञाना-भावस्य कारणतावच्छेदकघटकत्वं वाच्यम्। एवं सति कार्यतावच्छेदककोटौ विषयताविशेषस्य अप्रवेशे तत्रैव व्यतिरेकव्यभिचारः स्यादिति। विषयताविशेषस्य अप्रामाण्यज्ञानास्कन्दित-आकाङ्क्षाज्ञाने अनुमितिसामग्र्यां च 'नीलघट' इति अनुमितेः उत्पत्तेः तत्र व्यतिरेकव्यभिचारवारणाय शाब्दत्वस्य च प्रवेश्यत्वात्। न च 'नीलो घटः', 'नीलः कलशः' इति द्विविधाकाङ्क्षाज्ञाने कलशपदाद्यंशे प्रामाण्यज्ञानास्कन्दिते सति नीलघटान्वयबुद्धिः उत्पद्यते। तत्र व्यतिरेकव्यभिचारः स्यात्। विषयत्वादीनां कार्यतावच्छेदककोटौ प्रवेशेऽपि इति कार्यतावच्छेदककोटौ अप्रमाण्यज्ञानानास्कन्दितत्वम् अवश्यम् उपादेयम्। तथा च उक्तव्यभिचारयोः अभावात् विषयत्वादिप्रवेशो व्यर्थ इति वाच्यम्। अप्रामाण्यज्ञाने अप्रामाण्यज्ञानस्य तत्रापि अप्रामाण्यज्ञानस्य अभावः प्रवेश्य इति अनवस्थित-अप्रामाण्यज्ञानाभावानां

कार्यतावच्छेदककोटौ प्रवेशापेक्षया तत्तद्व्यक्तित्वेन अप्रामाण्यज्ञानाभावानां कारणतावच्छेदककोटौ प्रवेशस्य युक्तत्वात्। तथा सति पर्यायस्थलीय-अप्रामाण्य-ज्ञानव्यक्तेः अभावस्य अप्रयोजकत्वेन परित्यक्ततया कार्यतावच्छेदककोटौ अप्रामाण्यज्ञानाभावस्य प्रवेश्यत्वात्। इष्टावच्छेदकावच्छिन्नसाधनता-ज्ञानस्य प्रवृत्त्याद्युपयोगित्वेन नीलघटान्वयबुद्धित्वेन प्रयोजनत्वप्रतिसन्धाने तदवच्छिन्न-साधनत्वग्रहस्यैव अपेक्षणीयतया विषयित्वादीनां कार्यतानवच्छेदकत्वे तदसम्भवेन तदर्थं 'नीलो घटः' इत्यादिवाक्यप्रवृत्तिः न स्यात्। नीलघटान्वयबुद्धित्वेन तादृशान्वयबुद्धीनाम् अभावस्य कारणाभावानुमेयत्वमपि न स्यात् इति विषयत्वादेः कार्यतावच्छेदकतया प्रवेशस्य तथापि आवश्यकत्वाच्च इति विभावनीयम्।

अथ आकाङ्क्षाज्ञानाना स्व-स्व-अव्यवहितोत्तरत्वघटितधर्मावच्छिन्नं प्रति जनकत्वे यद्यपि योग्यताज्ञानत्वावच्छिन्न-समवधानप्रयुक्त-फलोपधायकत्वाभाववत्-स्वावच्छिन्नकत्वरूपं योग्यताज्ञानसहकृतत्वम् आकाङ्क्षाज्ञानस्य अस्ति एव। एकस्मादपि आकाङ्क्षाज्ञानात् विना योग्यताज्ञानं फलानुत्पत्तेः इति योग्यताज्ञानविगमदशायाम् आकाङ्क्षाज्ञानात् शाब्दापत्तिः न सम्भवति। तथापि योग्यताज्ञानस्य तत्तदाकाङ्क्षाज्ञान-विरहदशायाम् आकाङ्क्षान्तरज्ञानसद्भावेन फलजनकतया कारणतावच्छेदकीभूत-आकाङ्क्षाज्ञानविशेषत्वावच्छिन्नासमवधान-प्रयुक्तफलोपधायकत्वाभाववत्-स्वावच्छिन्नकत्वरूपाकाङ्क्षाज्ञानसहकृतत्व-विरहात् आकाङ्क्षाज्ञान-विगमस्थले केवलयोग्यताज्ञानात् शाब्दापत्तिः दुर्वारा इति चेत् ? उपस्थितेः शाब्दकारणत्वस्य तत्र तत्र उक्तत्वेन उपस्थितेः आकाङ्क्षाज्ञानादि-सहकृतत्वस्य उक्तरूपस्य असम्भवेन केवलाया उपस्थितेः शाब्दापत्तिम् अतिपत्य को विशेषः प्रसङ्ग इदानीम् ईदृशापत्ति-वाचोयुक्तेः? हन्त ! कोऽयम् उत्तरप्रकारः? न हि एकदा दूषणानभिधानम् अन्यदा उद्भावितदूषणपरिहारभावं वोढुम् इष्टे। अथ अप्रसिद्धोत्तरं दूषणम् उद्भाव्यमानं सदृशोत्तरत्वेन दूषणान्तर-प्रतिकूलमपि अबोधविलसितेन अतथाभूतमित्युच्यते प्रतिविधानम्। तथाहि न हि सहकारिनियमः सामग्रीव्याप्तेः भिद्यते इति सहकारिवादे अभ्युपगम्यते एव सामग्रीव्याप्तिः। तस्याश्च सामग्र्या एकधर्मावच्छिन्न-कार्यतानिरूपित-कारणत्वा-वच्छिन्नानुयोगिक-पर्याप्तिप्रतियोगि-कूटत्वेन न प्रवेशः। तथासति व्याप्यकार्योत्पत्तौ व्यापकधर्मावच्छिन्नसामग्र्या अनपेक्षितत्वप्रसङ्गात् गौरवात्। व्यापकधर्मावच्छिन्न-सामग्रीत्वस्य तद्धर्मावच्छिन्न-नियतपूर्ववर्तित्व-घटितत्वेन तृतीयान्यथासिद्धि-निरूपकत्वाच्च। तादृशसामग्रीत्वस्य कारणतानवच्छेदकत्वात्। किन्तु तत्तद्धर्मा-वच्छिन्नकार्यव्याप्यतायां तद्धर्मव्यापक-अशेषधर्मावच्छिन्न-कारणकूट-विशिष्टत्वे सति स्वावच्छिन्नकारणकूटविशिष्टत्वसम्बन्धेन तद्धर्मव्याप्य-धर्मविशिष्टत्वे च सति

तत्तद्धर्मावच्छिन्नकारणकूटत्वेन। एवञ्च व्यापकसामग्रीविशिष्टाया एव सामग्र्या यथाकालोपधायकत्वेन तद्विरहदशायां न कार्योत्पत्तिः। तथा व्याप्यीभूत-यत्किञ्चित्-धर्मावच्छिन्नसामग्रीविशिष्टाया एव उक्तनियमेन फलोपधायकतया तद्विरहेऽपि न कार्योत्पत्तिरिति। योग्यताज्ञानकार्यतावच्छेदक-व्याप्यीभूत-तत्तदाकाङ्क्षा-ज्ञानाव्यवहितोत्तर-शाब्दत्वावच्छिन्न-कारण-तत्तदाकाङ्क्षाज्ञानघटित-समग्रभावे न आपत्तिसम्भवः। तत्तद्धर्मव्याप्यत्वं च तद्धर्मन्यूनवृत्तित्वम्। सामग्रीव्याप्तौ व्यापकसामग्रीवैशिष्ट्यनिवेशे यथा व्यापकधर्मरहित-व्याप्यासम्भवो मूलं तथा निर्विशेषस्य सामान्यस्य असम्भवो व्याप्यधर्मविशिष्टत्वप्रवेशे मूलम् अवसेयम्। अत एव ज्ञानविशेषप्रत्यक्षादि-सामग्रीविरहकाले त्वङ्मनोयोगमात्रात् ज्ञानस्य सद्विशेषद्रव्यादिसामग्रीविरहकाले द्रव्यमात्रात् जन्यसत्त्वावच्छिन्नस्य न आपत्तिः। न च प्रत्यक्षादिसामग्र्यभावे सम्भाव्यमानं ज्ञानम् अनुभवाद्यनात्मकत्वेन स्वरूपम् अलभमानं न उत्पत्तुम् इष्ट इति वाच्यम्। तदुत्पत्तेः प्रामाणिकत्वे ज्ञानप्रकारान्तरस्य एव अनुसरणीयत्वात् घटानयन-अपसरण-स्थले घटाभावस्य विशिष्टाभावस्य च प्रामाणिकस्य क्लृप्ताभावानन्तर्गतत्वेन तुरीयत्वस्य व्यवस्थापितत्वात् यद्धर्मापेक्षया कार्यतावच्छेदको व्यापकधर्मो नास्ति तद्धर्मावच्छिन्न-व्याप्तौ सामग्र्यां व्यापकधर्मावच्छिन्नसामग्रीवैशिष्ट्यम्, यदपेक्षया व्याप्यीभूतकार्यतावच्छेदकधर्मो नास्ति तदवच्छिन्नव्याप्तौ च सामग्र्यां व्याप्यधर्म-विशिष्टत्वं च नोपादेयम्। अतो न व्याप्याप्रसिद्धिः दोषः। व्याप्यसामग्रीत्वादिना अत्र कारणत्वास्वीकारात् सामग्रीत्वशरीर-निर्वचनोपक्रमेण गौरवान्यथासिद्ध्यादि-उद्भावनम् अपि न दोषभावम् अवलम्बते। एवञ्च योग्यताज्ञानाकाङ्क्षाज्ञानादीनां परस्परसहकारित्वसम्पत्तये एकधर्मावच्छिन्नं प्रति कारणत्वसम्पादनक्लेशः केषाञ्चित् अनादेय एव। एकधर्मावच्छिन्न-कार्यतानिरूपित-कारणत्वस्य असहकारित्वरूपत्वात्। अन्यथा साधारणधर्मवत्ताज्ञानस्य प्रत्येककोटिसाहचर्या-वच्छिन्न-प्रकारताक-ज्ञानत्वेन उपस्थितिद्वारा कारणत्वपक्षे द्वयोः सहकारित्वकथनं ग्रन्थकृतो विरुद्ध्येत। असाधारणधर्मवत्ताज्ञानजन्यसंशये व्यभिचारवारणाय स्वस्वाव्यवहितोत्तर-संशयत्वावच्छिन्नं प्रत्येव कारणत्वस्य उक्तत्वेन द्वयोः एकधर्मा-वच्छिन्नं प्रति अकारणत्वात् व्यापकसामग्र्याः सहकारित्वानुपपत्तेश्च। न च तत्रापि एकज्ञानाव्यवहितोत्तरसंशयं प्रति एव अपरज्ञानस्य अपरज्ञानाव्यवहितोत्तरसंशये च एकज्ञानस्य कारणत्वकल्पने न सहकारित्वहानिः इति निर्मूलः तत्परित्यागो न आदरणीयो ग्रन्थकृताम् इति वाच्यम्। सामग्रीव्याप्त्यभ्युपगमेन सर्वसामञ्जस्ये अनन्तकार्यकारणभावकल्पना-गौरवस्य एव तदुपेक्षाबीजत्वात्। तथाहि 'नीलो घट' इत्यादि-आकाङ्क्षाज्ञान-अव्यवहितोत्तरत्वावच्छिन्नं प्रति एव योग्यताज्ञानस्य

नीलादिपदजन्योपस्थित्यादेश्च कारणत्वे यत्र एकं योग्यताज्ञानस्य एकमुपस्थितेः तत्र तयोः अनन्तं कारणत्वं स्यात्। पर्यायशब्दघटित-आकाङ्क्षाज्ञान-अव्यवहितोत्तरत्व रूपकार्यतावच्छेदकानन्त्येन निरूपकीभूत-कार्यताया आनन्त्यात्। न च सामग्रीव्याप्तौ स्वीकृतायाम् अनर्थकः कार्यकारणभाव इति वाच्यम्। कार्यकारणभावमूलत्वात् सामग्रीव्याप्तेः। अन्यथा व्याप्यतावच्छेदक-समुदायत्वस्य दुरधिगमत्वप्रसङ्गात्। कारण-अकारण-विभागाभावे सति एकशेषस्य कर्तुम् अशक्यत्वात्। पौर्वापर्यनियमात्मक-कार्यकारण-भावस्य अन्वयव्यतिरेकाभ्यां सप्रमाणत्वेन अपह्नोतुम् अशक्यत्वाच्च।

यत्तु आकाङ्क्षाज्ञानाव्यवहितोत्तरत्वावच्छिन्नं प्रति योग्यताज्ञानादि-विशिष्टाकाङ्क्षाज्ञानत्वेन कारणत्वं वाच्यम् इति, न केवलयोग्यताज्ञानात् शाब्दबोध इति तन्न। एककारणपरिशेषापत्त्या सहकारिवादभङ्गप्रसङ्गात्। विशेष्य-विशेषणभावे विनिगमनाविरहेण गुरुधर्मावच्छिन्नानां प्रत्येककारणता-समसङ्ख्याक-कारणतानाम् आपत्तेः ग्राहकेण अन्वयव्यतिरेकेण योग्यताज्ञानस्य गृहीतायाः कारणताया अपह्नोतुम् अशक्यत्वाच्च। अथ अस्तु आकाङ्क्षाज्ञान-निष्ठ-अन्यतमत्वम् अखण्डोपाधिरूपमेव कारणतावच्छेदकम्, लाघवादिति चेत् ? न। कार्यानुपलब्धिलिङ्गक-अनुमानभङ्ग-प्रसङ्गात्। तृणारणिमणीनां फूत्कार-निर्मन्थन-तरणिकिरणसंयोगरूप-नियतसहकारि-सहकृतानामन्यतमत्वेन कारणत्वे सहकारिनियमानुपपत्तेश्च। अन्यतमत्वस्य कारणतावच्छेदकताया दूषितत्वात्, एकत्र निर्णीतशास्त्रार्थस्य अन्यत्रापि प्रसरात्। न च तत्तत्सहकारिविशिष्टस्य अन्यतमत्वेन कारणत्वेन अनुपपत्तिः इति वाच्यम्। तथाविधान्यतमत्वस्य केवलेऽपि सत्त्वेन सहकारिरहितात् अपि कार्यापत्तेः। प्रपञ्चितमेतत् **न्यायकुसुमाञ्जलि-प्रकाश** इत्यलम्।

**VV-G. 2.6.1: विशेष्यवाचकपदोत्तरावृत्ति-विभक्तिविभाजकधर्मवद्-विभक्ति-राहित्यस्य** इति। अथ विशेष्यवाचक-घटादिपदानां तत्तद्-विभक्तित्वेन प्रवेशो घटपदत्वेन वा ? न आद्यः। 'नीलो घटः' इत्यादीनामपि एकाकाङ्क्षा-असम्भवप्रसङ्गात्। एवमाद्यपक्षे तादृशधर्मवद्-यकिञ्चिद्-विभक्तिराहित्यं प्रवेश्यते तादृशधर्मवद्-विभक्तिसामान्यभावो वा ? आद्ये 'नीलस्य घट' इत्यत्रापि आकाङ्क्षापत्तेः। द्वितीये प्रथमाभिन्न-विभक्तित्वस्य अतिप्रसङ्गाद् अनापादकस्य सम्भवेन गुरुधर्मस्य प्रतियोगितानवच्छेदकत्वे अभावाप्रसिद्धेः। तादृशविभक्ति-व्यक्त्यभावकूटस्य प्रवेशे च कूटत्वस्य एकविशिष्ट-अपरत्वरूपतया भावव्यक्तीनाम् आनन्त्येन कारणतावच्छेदकानन्त्यप्रसङ्गात्। न द्वितीयः। तत्र घटपदोत्तरत्ववद्-यत्किञ्चित्-निरूपितवृत्तित्वाभावो निवेश्यते घटपदोत्तरत्ववन्-निरूपितवृत्तित्व-

सामान्याभावो वा ? आद्ये 'नीलो घटः' इत्यत्रापि घटपदत्वादिना घटपदाव्यवहितोत्तर-द्वितीयादिनिरूपितवृत्तित्वाभाववत्त्वस्य प्रथमात्वेऽपि सत्त्वेन आकाङ्क्षा अनापत्तेः। द्वितीये 'नीलस्य घटः' इत्यत्रापि आपत्तेः। ङस्त्वादिषु अपि घटपदाव्यवहितोत्तरनिरूपितवृत्तित्व-सामान्याभावविरहात् ङसादिविभक्तेः अपि घटप्रातिपदिकात् उत्पत्तेः इति चेत् ? उच्यते। 'नीलो घटः', 'नीलघटः', 'नीलं घटं', 'नीलघटम्' इत्यादीनां दिशः समास-व्यास-साधारण पृथगेव। घटपदोत्तर-स्वाद्यवृत्ति-विभक्तिविभाजकधर्मवद्-विभक्ति-राहित्यम् आकाङ्क्षा। एवं सति घटपदत्वेन प्रवेशेऽपि न क्षतिः। घटपदोत्तरस्वाद्यवृत्तित्वस्य द्वितीयात्वादौ सत्त्वात् नीलादिपदोत्तर-स्वाद्यवृत्ति-विभक्तिविभाजकधर्मवद्-विभक्तिराहित्यं तु स्वाद्यन्त-नीलादिपद-समभिव्याहृतत्व-विशेषितम् एव आकाङ्क्षारूपं वाच्यम्। अन्यथा 'नीलस्य घटः' इत्यत्रापि आकाङ्क्षापत्तेः। तच्च न समाससाधारणम्। यत्र समासघटकविशेषणपदस्य विशेषणविभक्त्यन्तत्वं न केनापि प्रतिसन्निहितं, तत्र स्वाद्यन्त-नीलादिपद-समभिव्याहृतत्वविरहात्। प्रतिसन्धानस्थलेऽपि कर्मधारय-विग्रहस्थपदस्य प्रथमान्तताया एव स्वीकृतत्वेन 'नीलघटम्' इत्यत्र असम्भवात्। न च विशेषणपदनिष्ठस्य उक्तरूपस्य आकाङ्क्षात्वेऽपि 'नीलो घटस्य' इत्यादौ अतिप्रसङ्गः स्वाद्यन्तघटादिपद-समभिव्याहृतत्वस्य विशेषणात्। न चैवं 'नीलघट-रूपम्' इत्यत्र समास-असाधारण्यरूप-दोषसम्भवे तदुपेक्षाया निर्बीजत्वमिति वाच्यम्। आकाङ्क्षाज्ञान-अनुपपत्ति-लक्षणदोषस्य सार्वत्रिकत्वेन एतद्दोषापेक्षया प्रबलत्वात्। यत्तु 'नीलघटरूपम्' इत्यत्र प्रथमतो 'नील-सु' 'घट-सु' इत्यनयोः समासोत्तरं 'नीलघट-ङस्' 'रूप-सु' इत्यनयोः समासात् अन्ततः सर्वत्र-ईश्वर-प्रतिसन्धानम् आदाय आकाङ्क्षासम्भवात् तदुपेक्षणीयम्। विभक्तिराहित्यांशे च विभक्त्यव्यवहितपूर्वत्वस्य एव अभावस्य प्रवेशो न। अनुसन्धानस्य समासवदेव 'दधि प्रमेयम्' इत्यादौ अपि आकाङ्क्षासम्भवात्। एवञ्च ईश्वर-प्रतिसन्धानमादाय 'नीलघटम्' इत्यत्र न आकाङ्क्षानुपपत्तिः । 'दधि प्रमेयस्य' इत्यत्र निरुक्ता-काङ्क्षा-सत्त्वेऽपि दध्यादिपदानां विभक्त्यन्तत्व-प्रतिसन्धानस्यैव सर्वत्राभ्युपगततया तज्ज्ञानासम्भवेन शाब्दाद्यापत्तिविरहात् इति, तन्न अतिसमञ्जसम्। शाब्दस्य आपत्तिविरहेऽपि निराकाङ्क्ष-आकाङ्क्षापत्तिदोषस्य सह्यतायां बीजाभावात्। 'दधिप्रमेयस्य' इत्यस्य समासरूपत्वेन कदाचिदिष्टापत्तौ अपि 'प्रमेयस्य दधि' इत्यत्र तदसम्भवात्। यद्वा यत्तु अतत्त्ववत् स्वत्वस्यापि अनुगतत्वे सति अननुगतकार्यकारिताम् अवलम्ब्य नीलादिपदानां स्वसमभिव्याहृत-घटादिपदो-त्तरावृत्ति-विभक्तिविभाजकधर्मवद्-विभक्तिराहित्यस्य आकाङ्क्षात्वं वाच्यम्। तत्र च न कोऽपि दोषः। अतएव सामान्य-विशेषपरयोः **समास-व्यास-साधारणम् इत्यादि**

(VV-2.5.1) 'नीलो घटो' 'नीलघटः' इत्यादि (VV-2.6.4) ग्रन्थयोः न सन्दर्भविरुद्धता। वस्तुतस्तु नीलादिपदानां घटादिपदवत्त्वस्य एव आकाङ्क्षत्वम्। पदवत्ता च स्वाभाववत्त्व-सम्बन्धेन। अभावश्च स्वोत्तरत्ववन्निरूपित-वृत्तित्व-सम्बन्धावच्छिन्नप्रतियोगिताक-स्वाभाववद्-विभक्तिविभाजकधर्मवत्त्वसम्बन्धावच्छिन्न-प्रतियोगिताको बोध्यः। धर्मवत्ता च स्वावच्छिन्नाव्यवहितपूर्वत्वसम्बन्धेन। तथा च न अननुगमः। न चैवं विभक्तित्वादिकम् अजानत (VV-2.6.2) इत्यादिदोषा-सङ्गतिः। अज्ञातस्यापि संसर्गतया भानाभ्युपगमात्। इतरथा अन्वयशक्ति-खण्डनस्य असङ्गत्यापत्तेरिति वाच्यम्। विभक्तित्वादिज्ञानाभावस्य उक्ताकाङ्क्षा-ज्ञानाभावं प्रति हि न कारणाभावत्वेन प्रयोजकत्वम् अभिप्रेतम्। अपि तु विशेषाभावं प्रति सामान्याभावत्वेन। तथाच यत्र घटादिपदे अव्यवहितो-त्तरत्वमात्रेण नीलादिपदवत्त्वं गृहीतं तत्रापि शाब्दबोधस्य आनुभविकत्वेन तदनुपपत्तौ पर्यवसानम्। सर्वत्र निरुक्त-पारिभाषिक-समभिव्याहृतत्व-संसर्गेण नीलादिपदे घटादिज्ञानकल्पना। निरुक्तपरिष्कारस्य निर्दोषतया तदुपेक्षाया निर्बीजत्वापत्तेः वक्तुम् अशक्यैव। निरुक्ता च वाचोभङ्गी। विभक्तित्वादि-ज्ञानविरहनिबन्धन एव निरुक्ताकाङ्क्षाज्ञानाभावो, न तु अव्यवहितोत्तरत्वादि-संसर्गभानविरहनिबन्धन इत्यस्य सिद्धान्तपक्षनिर्दोषता-आपादकस्य सूचनाय इति दिक्।

विशेष्यवाचकपदोत्तरावृत्तित्वेन धर्मस्य प्रवेशे नीलादिपदोत्तरस्वादिनिष्ठ-तद्व्यक्तित्वादिकम् आदाय 'नीलो घटः' इत्यत्रापि आकाङ्क्षानुपपत्तिः स्यात् इति विभक्तिविभाजकत्वेन तत्प्रवेशः। यत्तु विशेष्यवाचकपद-विशिष्ट-श्रावणप्रत्यक्ष-विषयता-अवच्छेदकधर्मवदप्रकृतिकत्वं विवक्षणीयं, वैशिष्ट्यञ्च (१)स्वावृत्तित्व-(२)स्वाव्यवहितोत्तरावृत्तित्व-उभयसम्बन्धेन। एवं च 'नीलघट' इत्यत्र घटपद-वैशिष्ट्यस्य स्वाव्यवहितोत्तरावृत्तित्वविरहात् सुत्वे स्वावृत्तित्वविरहात् घटपदत्वे च श्रावणप्रत्यक्षविषयतावच्छेदके विरहात् तत्सङ्ग्रहः। विभक्तित्वाद्यप्रवेशाच्च तदज्ञानदशायां न शाब्दानुपपत्तिरिति कश्चिदाह। तन्मन्दम्। 'नीलो घट' इत्यत्र सु-पदयोः तारमन्दरूपत्वे श्रावणप्रत्यक्षविषयतावच्छेदक-तारत्वजातिम् आदाय आकाङ्क्षानुपपत्तेः। विभक्तिमात्रवृत्ति-तथाविधधर्मेतरधर्मवारकं हि विभक्ति-विभाजकत्वम् उपादेयम्, अन्यद् वा इति न कश्चिद् विशेषः। ज्ञाततया उपयोगा-भावस्य समानत्वात्। अथ विशेष्यवाचकपदोत्तरावृत्ति-निष्ठा या विभक्ति-विभाजकत्व-समानाधिकरणविषयता तन्निरूपित-विभक्तिनिष्ठ-विषयता-निरूपित-अभावनिष्ठविषयतानिरूपित-विशेषणवाचकपदनिष्ठ-विषयताकज्ञानत्वेन कारणत्वे विभक्तित्वाज्ञानेऽपि न दोष इति चेत् ? न। केवलानुपूर्वी-तदवच्छिन्नज्ञाने

अभावाद्यज्ञानेऽपि शाब्दबोधोदयात्। अत एव विभक्तित्वादिकम् (VV-2.6.2) इत्यत्र आदिपदमुपात्तम्। किञ्च (१)विशेष्यवाचकपदोत्तरावृत्तियत्किञ्चिद्धर्मवद्-विभक्त्यभावः (२)तादृशधर्मसामान्यवद्विभक्त्यभावो वा (३)विशेष्यवाचकपदो-त्तरावृत्ति-विभक्ति-विभाजकधर्मवद्विभक्त्यभावो वा निरुक्तविषयतया कारणता-वच्छेदकत्वेन प्रवेश्यते ? न आद्यः। 'नीलं घटः' इत्यत्रापि टा-त्वादिधर्मवद्विभक्ति-राहित्य-सत्त्वेन आकाङ्क्षापत्तेः। न द्वितीयः। 'नीलो घटः' इत्यत्रापि घटपदोत्तर-स्वाद्यवृत्ति-नीलपद-अव्यवहितोत्तर-सुत्वादिमद्विभक्तिमत्त्वस्यैव सत्त्वेन आकाङ्क्षा-अनापत्तेः। न तृतीयः। विभक्तिविभाजकत्वस्य विशेषणत्व एव तथाविधाभावः कारणतावच्छेदककोटौ निविशते। तथासति विभक्तिविभाजकत्व-विषयतायाः कारणतावच्छेदक-घटकता-ध्रौव्यमिति विभक्तिविभाजकत्वाज्ञाने शाब्दानुपपत्ति-तादवस्थ्यादिति।

**VV-G. 2.6.4: स्वोत्तर-स्वादिभिन्नेत्यादि।** अथ 'घटो नील' इत्यत्र आकाङ्क्षाभावप्रसङ्गभयेन स्वोत्तरत्वविशेषितस्य निरुक्तपदानुत्तरत्वस्य विवक्षितुम् अशक्यतया 'घटस्य नीलः' इत्यत्रापि आकाङ्क्षापत्तिः। नीलपदोत्तर ङस्भिन्न-पदानुत्तरत्वे सति ङस्-अव्यवहितपूर्वत्वस्य घटपदे सत्त्वात्। अथ 'नीलो घट' इत्यादि-व्यासमात्र-साधारणाकाङ्क्षाया एव प्रकृते विवक्षितत्वम् इति चेत् ? तर्हि समास-साधारण्यसम्पादनेन कः पुरुषार्थः ? आकाङ्क्षाधिक्यस्य विद्यमानत्वात्। न च 'घटो नील' इत्यत्रापि 'नीलो घटः' इत्यादि-समभिव्याहारकल्पनया एव शाब्दबोध इति वाच्यम्। नीलादेः विधेयतया बुबोधयिषितत्वे "उद्देश्यवचनं पूर्वम्" इत्यादिन्यायानुसारेण घटादिपदस्य नीलादिपदपूर्ववर्तितया ज्ञानस्यैव शाब्दबोधा-नुगुणत्वात्। अत एव 'पर्वतो वह्निमान्' इत्यादिकमेव प्रतिज्ञावाक्यम् अभियुक्ताः प्रयुञ्जते। किञ्च 'नीलोऽस्ति घटः' इत्यत्र शाब्दबोधानुपपत्तिः। आकाङ्क्षा-विरहात्। नीलादिपदोत्तर-सुभिन्न-अस्ति-आदि-पदाव्यवहितोत्तरत्वस्यैव घटादिपदे सत्त्वात्। नीलादिपदाव्यवहितोत्तर-सुभिन्नपदानुत्तरत्वस्य 'नीलो घट' इत्यादौ अप्रसिद्ध्या विवक्षितुम् अशक्यत्वादिति चेत् ? न। व्यासस्थलेऽपि उक्तदोषभयेन अन्यादृश्या आकाङ्क्षाया उपगन्तव्यतया साधारणाकाङ्क्षानुसरण-अप्रयोजकत्वस्य अपि अत्र दोषतया उपलक्षणीयत्वात्। समाससाधारणीकरणस्य एव पूर्वपक्ष्यभिप्रेतत्वं मनसि निधाय समासस्थले समाससाधारण्यस्य प्रबलदोषत्वम् अभिसन्धाय तावन्मात्रोक्तेः अदुष्टत्वात्। अनुपपत्तिः हि स्वाव्यवहितोत्तर-स्वादिभिन्न-विभक्त्यव्यवहितोत्तरत्व-सम्बन्धावच्छिन्न-**स्व-अभावस्य** संसर्गत्वमभ्युपेत्य वारणीया। वृत्त्यनियामकस्याभावप्रतियोगितानवच्छेदकत्वे निरुक्तसम्बन्धावच्छिन्न-स्वनिष्ठप्रकारता-निरूपित-विशेष्यत्वस्य प्रमीय-विशेष्यता-प्रतियोगिक-स्वरूप-

सम्बन्धावच्छिन्न-प्रतियोगिताक-अभावस्य तत्त्वं विवक्षणीयम्। यत्तु 'नीलोऽस्ति घटः' इत्यत्रापि 'नीलो घटोऽस्ति' इत्यादि-समभिव्याहार-कल्पनया एव शाब्दबोध इति। तन्न। अव्यवधानेन पदार्थोपस्थितेः एव असति रूपताया व्यवस्थापिततया अभ्रान्तस्य अश्रुततादृशसमभिव्याहारस्यापि उक्तवाक्यात् बाधकाभावेन शाब्दानुभावोत्पादस्य अनुभवसिद्धत्वात्। अथवा निरुक्त-अभाववत्त्व-स्वाव्यवहितोत्तर-विभक्त्यवृत्ति-सुत्वाद्यवच्छिन्न-अव्यवहितपूर्वत्व-सम्बन्धावच्छिन्न-स्वाभाववत्त्व-उभय-सम्बन्धेन नीलादिपदवत्त्वे सति स्वन्तघटपदत्वम् आकाङ्क्षारूपतया विवक्षणीयम्। एवञ्च 'घटस्य नील' इत्यादौ नीलपद-अव्यवहितोत्तर-विभक्त्यवृत्ति-ङस्-पदत्वावच्छिन्न-अव्यवहितपूर्वत्वसम्बन्धेन नीलपदवत्त्वस्यैव सत्त्वेन तदभाव-विरहात् स्वत्वघटितनिरुक्तसम्बन्धेन नीलपदाभावेऽपि घटपदे स्वाव्यवहितपूर्वत्व-विरहात् न आपत्तिः। स्वाव्यवहितोत्तरस्य विभक्तित्वेन प्रवेशात् 'नीलघट' इत्यत्र नानुपपत्तिः। स्वाव्यवहितोत्तरविभक्ति-अप्रसिद्ध्या निरुक्तसम्बन्धस्य तन्नीलपद-व्यधिकरणत्वात्, स्वाद्यव्यवहितपूर्वत्वप्रवेशाच्च 'नीलो घटस्य' इत्यादौ न आपत्तिः। न च एवं 'घटो नीलरूपम्' इत्यत्र आकाङ्क्षापत्तिरिति वाच्यम्। 'ऋद्धस्य राजमातङ्गा' इत्यस्य विभक्त्यनुसन्धानपक्षे समास-असाधुत्वेन अप्रयोक्तव्यत्वम् इव उक्तप्रयोगस्यापि तत एव हि अप्रयोक्तव्यत्वम् इति अभ्युपगमात्। यद्वा स्वाव्यवहितोत्तर-घटपदभिन्नपदावृत्ति-सुत्वावच्छिन्न-अव्यवहित-पूर्वत्वसम्बन्धावच्छिन्न-अभावस्य एव प्रवेशः कार्यः। 'नीलघट' इत्यत्र तावतैव आकाङ्क्षासम्पत्तेः। तथा च 'घटो नीलरूपम्' इत्यत्र न आपत्तिः। नीलपदाव्यवहितोत्तर-घटपदभिन्न-अवृत्ति-सुत्वावच्छिन्न-अव्यवहितपूर्वत्वस्यैव घट-पदे सत्त्वात् घटपद-असमस्तत्व-विभक्त्यप्रकृतिकत्व-उभयाभाववत्त्वं वा नीलपदे विशेषणम् इत्यपि कश्चित्। परे तु स्वोत्तरत्व-स्वोत्तर-सुभिन्नपदानुत्तरत्व-उभयसम्बन्धेन नीलपदविशिष्ट-स्वन्त-घटपदवत्त्वमाकाङ्क्षा। तादृश-घटपदवत्त्वं च स्वतादात्म्य-स्वाश्रयत्व-अन्यतरसम्बन्धेन। स्वाश्रयत्वञ्च स्वप्रकृतिकविभक्ति-वृत्ति-आनुपूर्व्यवच्छिन्न-प्रकृति-घटपदत्व-स्वसमभिव्याहृत-नीलपदप्रकृतिक-विभक्ति-वृत्ति-आनुपूर्व्यवच्छिन्नप्रकृति-नीलपदसमभिव्याहृतत्व-उभयसम्बन्धेन। तथा च नीलपदविशिष्ट-स्वन्त-घटपदं 'नीलघट' इत्येतद्-वाक्यीयं 'नीलो घट' इत्येतद्-वाक्यीयञ्च। तत्र समासे प्रथम-घटपद-विशिष्टत्वं, व्यास-मात्रे च द्वितीय-घटपद-विशिष्टत्वम् 'नीलघटः', 'नीलोऽस्ति घटः', 'घटो नीलः' इत्यादौ सर्वत्र। न च तादृशपदवत्त्वम् 'घटस्य नीलः', 'घटो नीलरूपं', 'नीलरूपं घटः' इत्यादौ कुत्रापि इति वदन्ति। तच्चिन्त्यम्। अन्यतरत्वादेः कारणताकुक्षिप्रवेशे समास-व्यास-सामान्यतरत्वेन उक्तधर्मापेक्षया लघुभूतेनैव कारणत्व-प्रसङ्गात्। अत्रापि अन्यतरत्वस्य संसर्गकोटौ प्रवेशयितुं शक्यत्वादिति।

**VV-G. 2.6.5:** नीलघटरूपमित्यादीति। किमत्र 'नीलश्चासौ घटो नीलघटः', 'नीलघटस्य रूपम्' इति विग्रहो अभिप्रेत आहोस्वित् 'घटस्य रूपं घटरूपं', 'नीलं च तद्घटरूपम्' इति वा विग्रहः ? तत्र आद्ये घटशब्दस्य घटीये लक्षणायाम् अवश्याभ्युपेयायाम् एकदेशान्वयभयेन नीलघट एव लक्षणा उपगन्तव्येति न दोषसम्भवः। द्वितीये च विशेष्यवाचक-पदस्य स्वन्तत्वात् सुतरां तथा। यत्तु द्वितीयविग्रहे नील-घटरूपयोः न अभेदान्वयसम्भवः। घटरूपपदस्य समस्ततया वृत्त्यभावेन विशेष्यवाचकत्व-अभावात्। वास्तविकविशेष्यवाचक-रूपपदस्य स्वोत्तर-सुभिन्न-घटपदोत्तरत्वस्य एव सत्त्वादिति, तन्न। 'नीलो घट', 'नीलघटः' इत्यादौ अपि उक्तरीत्या दोषसम्भवेन तेन सह समानपरिहारत्वात्। तथाहि घटपदत्वं यदि घ-कारोत्तर-अ-कारोत्तर-ट-कारोत्तर-अ-त्वरूपं तदा तदाश्रयस्य स्वन्तत्व-सत्त्वेऽपि नीलपदोत्तर-सु-भिन्न-ट-कार-अव्यवहितोत्तरत्वस्यैव सत्त्वेन आकाङ्क्षानुपपत्तिः। यदि अकार-अव्यवहितपूर्ववर्ति-ट-काराव्यवहित-पूर्ववर्ति-अ-काराव्यवहितपूर्ववर्ति-घ-कारत्वरूपं तदा तदाश्रयस्य स्वन्तत्व-विरहात् आकाङ्क्षानुपपत्तिरिति। घटत्वमात्रावच्छिन्न-प्रकृत-विशेष्यता-निरूपित-विलक्षण-प्रयोजकता-पर्याप्त्यनुयोगितावच्छेदकवर्णसमुदायत्वं घटपदत्वं वाच्यम्। विलक्षण-प्रयोजकत्वञ्च स्वप्रयोजकवृत्तिज्ञानीय-विषयतासमानाधिकरण-आकाङ्क्षाज्ञान-विषयत्वाश्रयनिष्ठं प्रयोजकत्वम्। तथा च तत्सामानाधिकरण्येन स्वन्तत्वं स्वोत्तर-सु-भिन्नपदानुत्तरत्वं च विवक्षणीयम्। अतो न आकाङ्क्षानुपपत्तिः। विशेष्यतायां प्रकृतत्वनिवेशात् 'पटं नीलं', 'घटो रक्त' इति पदसमुदाय-धटके 'नीलं घट' इत्यादौ न आकाङ्क्षाप्रसक्तिः। अन्यथा 'पीतो घटः' इत्यादि-स्थलीय-शाब्दबोधीय-विशेष्यताया अपि घटत्वमात्रावच्छिन्नतया तत्प्रयोजकताया अपि निरुक्त-प्रयोजकतात्वेन सङ्गृहीततया तत्पर्याप्त्यनुयोगिता-अवच्छेदक-समुदायत्वस्य निरुक्तघटपद-द्वयवृत्तितया तदाश्रये 'पीतो घटः' इति वाक्यघटक-घ-कारे नीलपदोत्तर-सु-भिन्नपदानुत्तरत्वस्य सत्त्वात् तादृश-समुदायत्वाश्रयरूपाया नीलघट-अभेदान्वयबोध-औपयिकाकाङ्क्षाया 'नीलं घटः' इत्यत्र दुर्वारता स्यात्। निरुक्तवैलक्षण्यप्रवेशाच्च 'शोभनं चैत्रः पश्यति' इत्यादौ शोभन-चैत्र-अभेदान्वय-बोधप्रयोजक-आकाङ्क्षायाः 'शोभनं चैत्र' इति भागे न प्रसङ्गः। अन्यथा चैत्रत्व-मात्रावच्छिन्न-प्रकृतविशेष्यता-प्रयोजकत्वस्य आकाङ्क्षाघटकतया उक्तवाक्य-घटक-सकलपदेषु सत्त्वेन तत्पर्याप्ति-अनुयोगितावच्छेदक-निरुक्त-वाक्यगत-समुदायत्वस्य शोभनपदावच्छेदेन शोभनपदोत्तर-सुभिन्नपदानुत्तरत्व-सामानाधि-करण्यस्य चैत्रपदावच्छेदेन स्वन्तत्वसामानाधिकरण्यस्य च सत्त्वात् उक्ताकाङ्क्षा-प्रसक्तिः स्यात्। शब्दानुगममात्रम् एतत्। वस्तुतस्तु विशेष्यवाचकपदत्वेन

अभिमत-तत्पदघटकवर्णसमुदायत्वं विशेष्योपादाय तत्सामानाधिकरण्येन निरुक्त-अनुत्तरत्व-स्वन्तत्वञ्च आकाङ्क्षाघटकं वाच्यमिति न कश्चिद्दोषः। एवञ्च 'नीलघटरूपम्' इत्यत्रापि उक्तरीत्या घटीयत्व-रूपत्व-उभयधर्ममात्रावच्छिन्न-प्रकृतविशेष्यता-प्रयोजकता-पर्याप्त्यनुयोगितावच्छेदक-घटरूपपदत्वगतसमुदायत्व-सामानाधिकरण्येन नीलपदोत्तर-सुभिन्नपदानुत्तरत्व-स्वन्तत्व-सामानाधिकरण्ययोः सत्त्वेन न आकाङ्क्षानुपपत्तिः। किंवा नीलपदोत्तर-सु-भिन्नपदानुत्तर-घ-कारोत्तर-टकारोत्तर-रू-कारोत्तर-स्वन्त-प-कारत्वम् आकाङ्क्षारूपं वाच्यम्, इति नानुपपत्तिः इति चेत्? उच्यते। "स्तोकनम्रा" (उत्तर-मेघ.१९) इत्यादौ इव अत्रापि एकदेशान्वयग्रस्य प्रामाणिकत्वे निरर्थकत्वप्रायस्य तात्पर्यग्राहकस्य नीलपदे अङ्गीकारो सम्भवत्येव तत्र दोषः। यद्वा घटीय-लाक्षणिक-घटपदेन नीलपदस्य कर्मधारयं कृत्वा तेन सह रूपपदस्य कर्मधारयस्थले एव दोषे ग्रन्थकृतः तात्पर्यम् अवधारणीयम्। अथ स्वन्तत्वं सुभिन्नव्यक्त्यव्यवहितपूर्वत्वाभावरूपं वाच्यम्। तावतैव 'नीलो घटम्' इत्यस्य वारणम्। तथा च 'नीलघटरूपम्' इत्यत्र न अनुपपत्तिरिति चेत् ? न। 'नीलो घटरूपम्' इत्यत्र आकाङ्क्षापत्तेः। 'सुन्दरस्य दधि' इत्यत्र स्वाद्यप्रति-सन्धानदशायाम् आकाङ्क्षापत्तेः ज्ञायमान-अज्ञायमान-कारणता-विकल्पेन पूर्ववद् दोषस्य जागरूकत्वाच्च। अत्र सर्वत्रैव अव्यवहितो-त्तरत्वमात्रसंर्गेण घटपदे नीलपदवत्ताज्ञाने शाब्दबोधस्य आनुभाविकस्य अपलाप-प्रसङ्गरूपं मुख्यं दोषम् उपेक्ष्य सौकर्यात् समास-असाधारण्यदोष उपात्त इति बोध्यम्।

**VV-G.2.7.1:** ननु अनुशासनान्तराभावात् विशेषणपदोत्तरद्वितीयादेः कारक-विभक्तित्वस्यैव वाच्यतया कारकविभक्तेश्च क्रियापदसाकाङ्क्षत्वेन विशेषणपदो-त्तर-विभक्त्यर्थ-कारकशक्तेरपि क्रियया एव अन्वयः। विभक्त्यर्थस्य च प्रधानत्वात् तत्परवशतया एव प्रकृत्यर्थः अवतिष्ठते। भेदभावनन्तु विशेषण-विशेष्ययोः पार्ष्टिकमेवेति मीमांसकमतप्रतिक्षेपाय आशङ्कते - **अथेत्यादि**। **कुत्रान्वय** इति। प्रकृत्यर्थान्वितस्य एव प्रत्ययार्थस्य भानात् केवलकर्मत्वस्य भानासम्भवात् नीलघटयोः अभेदान्वयस्य शाब्दताया अपलपितुम् अशक्यतया प्रकृत्यर्थस्य नीलस्य घटेन अन्वये कर्मत्वेन अन्वय-अयोगात्। सकृदुच्चरितस्य सकृदेव अर्थप्रत्यायकत्वेन नीलस्य कर्मत्वेनापि समम् अन्वय इत्यस्य वक्तुम् अशक्यत्वात्। निरर्थकपदप्रयोगस्य च अन्याय्यतया विभक्तेः कर्मत्वपरताया आवश्यकता नीलपदोत्तर-विभक्त्यर्थीभूतस्य कर्मत्वस्य क्रियायां न अन्वयसम्भवः। सङ्ख्या-तिरिक्त-प्रत्ययार्थस्य प्रकृत्यर्थविशेषणताया अव्युत्पन्नत्वेन नीलेऽपि च न तदन्वय-सम्भव इति **कुत्र अन्वय** इत्यर्थः। तथा च अगत्या भेदान्वयस्य पार्ष्टिकत्वम् एव

अभ्युपेयमिति मीमांसकमतमेव ज्याय इति भावः। पदसाधुत्वार्थकतयापि विभक्तेः सप्रयोजनत्वसम्भवे कर्मत्वपरताया अनावश्यकत्वात् सर्वानुभवसाक्षिकम् अभेदान्वयस्य शाब्दत्वं न अपलपनीयम्। नापि च अनुभवविरुद्धं कर्मत्वद्वयभानम् अङ्गीकरणीयम्। आप्तानुभव-अनुसारित्वात् वस्तुस्थितेः तदनतिक्रमप्रयासस्यैव कर्तव्यत्वात्, कर्मीभवद्घटादिपरिच्छेदतया एव नीलादेः बुबोधयिषितत्वात्। आश्रयांशो हि व्युत्पत्ति-अवर्जनीयतया भासते। न च "न केवल प्रकृतिः" इत्यनुसारात् विभक्तेः तत्र आवश्यकत्वे औत्सर्गिकी प्रथमा एव किमिति न प्रयुज्यते इति वाच्यम्। अन्वयव्यतिरेकाभ्याम् अभेदान्वये समानविभक्तिकपद-ज्ञानस्य कारणत्वे सिद्धे तन्मूलकबुबोधयिषातो वाक्ये प्रयोक्तव्ये •द्वितीयाया अवर्जनीयत्वात्। सैषा च विशेषणविभक्तिर्न श्रुतानुशासनेन सिद्धा, किन्तु कल्पितेनैव। क्रियाविशेषण-द्वितीयादिवद् इति न्यायमतस्यापि सम्भवति निर्वाह इत्याशयेन आह - **न कुत्रापि** इति। पदसाधुत्वार्थकत्वस्यापि निरर्थकप्रायत्वात्।

**VV-G. 3.1.1:** कल्पनान्तरम् आह - **अभेद एवेति**। **विभक्त्यनुसन्धानं विनापि** इति। तथा च अभेदोपस्थापकविभक्तेः प्रतिसन्धानम् एव नास्ति। प्रतिसंहित-प्रातिपदिकात् लक्षणया हि उपस्थितोऽपि अभेदः नामार्थतया नामान्तरार्थे न अन्वययोग्य इति समासस्थले न अभेदप्रकारक-शाब्दबोध-सम्भव इतिभावः।

**VV-G. 3.1.2: भेदत्वावच्छिन्नाभाव** इति। भेदत्वपर्याप्त-अवच्छेदकताक-प्रतियोगिताकाभाव इत्यर्थः। तेन नीलभेदाद्यभावस्य भेदत्वावच्छिन्न-प्रतियोगिता-कस्य प्रसिद्धत्वेऽपि न क्षतिः। **जले द्वित्वादिना** इति। इदं च प्रतियोगिताका-भावस्य विभक्त्यर्थत्वे, भेदत्वनिष्ठ-अवच्छेदकताक-प्रतियोगिताकाभावस्य तथात्वे तु पृथिवीवृत्तित्व-विशिष्टभेदाभावं भेद-जल-उभयाभावं च आदाय दोषो बोध्यः। **नीलपदार्थान्वयप्रसङ्ग** इति। न च शक्त्यानन्त्यप्रसङ्गः। उपलक्षणीभूतेन प्रकृत्यर्थतावच्छेदकत्वेन धर्माननुगमय्य सर्वनामवत् शक्त्यैक्यस्योपपादनीयत्वात्। नीलभेदत्वावच्छिन्न-अभावत्वेन च नीलपदादि-समभिव्याहारात् प्रतीतिः। न च भेदत्वसमानाधिरण-उभयवृत्तित्वेन भेदनिष्ठतद्व्यक्तित्वान्य-अनुगमय्य तत्पर्याप्ता-वच्छेदकताक-प्रतियोगिताक-अभावत्वेन विभक्त्यर्थता अस्तु। तथा सति न अप्रसिद्धिः। न वा नीलत्वावच्छिन्नप्रतियोगिताकभेदवृत्तित्वेन तद्व्यक्तित्वे नीलादि-पदार्थान्वयादनन्वयप्रसङ्गः। न वा 'नीलं जलम्' इत्यादिप्रयोगापत्तिरिति वाच्यम्। नीलत्वावच्छिन्न-प्रतियोगिताक-भेदत्वरूप-अनुयोगित्वातिरिक्तस्य तद्व्यक्तित्वस्य अभावेन अनन्वय-तादवस्थ्यात्। एकदेशान्वयदोषस्यात्र सत्त्वात् च। एतेन अवच्छिन्न-प्रतियोगिताकत्वनिष्ठ-अवच्छेदकताभिन्न-भेदत्वनिष्ठ-अवच्छेदकताभिन्न-

अवच्छेदकत्व-अनिरूपित-प्रतियोगिताक-अभावत्वेन विशेषण-विभक्त्यर्थतायां प्रतियोगित्वांशे धर्मांशे वा नीलस्य स्ववृत्तित्वेन स्ववृत्तिनीलत्व-तादात्म्येन वा अन्वये न अनन्वयप्रसङ्गादिः दोषः इति निरस्तम्। भेदाभावश्च इत्यादिवक्ष्यमाण-कल्पापेक्षया अत्र गौरवस्य दोषत्वाच्च।

**VV-G. 3.1.3:** **भेदप्रतियोगिताकाभाव एवेति।** प्रतियोगितासम्बन्धेन भेद-विशिष्टाभाव एव इत्यर्थः। तेन **भेदरूप-पदार्थतावच्छेदकस्य** इत्यादिग्रन्थस्य न असङ्गतिः। **नीलपदसमभिव्याहारादिति।** नीलपदार्थस्य भेदे नीलत्वावच्छिन्न-प्रतियोगिताकत्व-सम्बन्धेन अन्वये तादृशभेदस्य संसर्गविधया शाब्दे भासमाना सामान्यतः प्रतियोगितात्वेन उपस्थितापि प्रतियोगिता समभिव्याहारमाहात्म्यात् नीलभेदत्वावच्छिन्न-प्रतियोगित्वरूप-विशेषात्मताम् अवलम्बते। तथाच न अनन्वयो न वा 'नीलं जलम्' इत्यादिप्रयोगापत्तिरिति भावः।

**पदार्थद्वयेति।** विभिन्नशक्त्युपस्थापितार्थद्वयेत्यर्थः। अनन्विततया उपस्थितार्थद्वयेति यावत्। अनन्वितयोः अन्वयभाने प्रभवति आकाङ्क्षा। न हि अन्विततया उपस्थितयोः, तत्र पदस्यैव प्रभुत्वात्। तथा च आकाङ्क्षायाः तादृश-पदार्थयोः सामान्यतः संसर्गभान एव असामर्थ्ये किमु वक्तव्यं विशेषात्मतया तद्भासनव्यापृतौ इति। यथोपस्थित्यैव प्रतियोगित्वं शाब्दबुद्धौ अपि भासते। उपस्थितौ च प्रतियोगितात्वेन द्वित्वाद्यवच्छिन्नापि प्रतियोगिता संसर्गतया भासते एव। शक्त्यानन्त्यभयेन नीलभेदत्वावच्छिन्न-प्रतियोगितात्वेन प्रतियोगित्वम् अन्तर्भाव्य शक्तेः वक्तुम् अशक्यत्वादिति, 'नीलं जलम्' इत्यादिप्रयोगस्य न वारणमिति भावः।

**VV-G. 3.1.4:** **भेदोऽभावश्चेति।** तथा च तयोः संसर्गस्य पदानुपस्थितत्वेन आकाङ्क्षाभास्यताया एव वक्तव्यतया नीलत्वावच्छिन्न-प्रतियोगितासम्बन्धेन नील-पदार्थान्वितभेदस्य नीलपदसमभिव्याहारवशात् तादृशभेदत्वावच्छिन्न-प्रतियोगिता-सम्बन्धेनैव अभावे अन्वयस्य वाच्यत्वात् न आपत्तिरिति भावः। अत्र भेदस्य अव्याप्यवृत्तित्वे 'कपिसंयोगवान् वृक्ष' इत्यत्र भेदस्यैव सत्त्वेन अभेदानुपपत्तिरिति तद्वारणाय यत्स्वप्रतियोगित्वसमानाधिकरण-उभयवृत्तिधर्मावच्छिन्न-प्रतियोगिताक-भेदकूटवद्वृत्तित्व-विशिष्ट-भेदत्वेन विशेषणविभक्त्यर्थता वाच्या। तथाच तादृशः कपिसंयोगवद्भेदो न वृक्षादौ इति, न अनुपपत्तिरिति वचनं तद्-अविचार-मूलकमेव। अभेदस्य तत्र तादृशभेदाभावरूपतया तस्यापि अव्याप्यवृत्तित्वेन वृक्षे सत्त्वात् अनुपपत्तेः अभावात्। अथ कालिकादिना घटादौ अपि नीलादिभेदस्य सत्त्वेन विशेषणत्व-सम्बन्धावच्छिन्न-प्रतियोगित्वस्य संसर्गत्वं वाच्यम्। तथा च 'वह्न्यभाववान् पर्वतः' इत्यस्य आपत्तिः। वह्न्यभाववद्भेदस्य वह्निस्वरूपतया

विशेषणतया तस्य असत्त्वेन तदभावस्य पर्वते सत्त्वात् इति चेत् ? न। स्वप्रतियोगिमत्ताग्रह-विरोधिता-घटक-सम्बन्धावच्छिन्न-प्रतियोगित्वस्यैव संसर्गतया विवक्षितत्वात्। तथा च भावविशेषणतास्थले स्वरूपसम्बन्धावच्छिन्न-प्रतियोगित्वस्य अभाव-विशेषणतास्थले संयोगाद्यवच्छिन्नप्रतियोगित्वस्य संसर्गत्वे पर्यवसानम् इति न कश्चिद्दोषः।

**VV-G. 3.2.1:** न च **विशेषणविभक्तेः अभेदार्थकत्व** इति। अनेन अभेदस्य संसर्गतामते न इयमापत्तिरिति सूचितम्। अतो न एतदुक्तेः वैयर्थ्यशङ्कावकाशः। न च अभेदस्य संसर्गतामते 'धान्येन धनवान्' इत्यादौ अपि अभेदसंसर्गकबोधस्यैव अङ्गीकर्तव्यत्वेन संसर्गतामतेऽपि आपत्तेः तुल्यत्वात् विशेषणविभक्तेः अभेदार्थकत्व इत्युक्तिः निरर्थिका एवेति वाच्यम्। विशेषणविभक्तेः अभेदरूपार्थे प्रत्यक्षवचन-अनुशिष्टत्वाभावात्। वचने कल्पनीये अभेदबोधोपयोगि-आकाङ्क्षा-निर्वाहकतया तद्विधायकमेव हि वचनं कल्पनीयम्, शक्यकल्पनालाघवात्। **प्रकृत्यादि**शब्दात् हि तृतीया प्रत्यक्षवचनेन विहिता। प्रत्यक्षं च वचनम् अशब्द-संस्कारकम् अर्थविशेषे सङ्केतं ग्राहयदेव विधायकं दृष्टम्। यथा कर्मत्वादौ सङ्केतं ग्राहयद्द्वितीयादिविधायकं **कर्मणि द्वितीया** (पा.२.३.२) इत्यादि। तथा च **"प्रकृत्यादिभ्य उपसङ्ख्यानम्"** इत्यपि तृतीयाविधायकम्। अर्थान्तर-अयोग्यत्व-गौरवादिज्ञान-साचिव्यात् अभेदे सङ्केतग्राहकम् अङ्गीकरणीयम् इति द्वितीयाद्यर्थकर्मत्वादेरिव तृतीयार्थाभेदस्यापि प्रकारत्वमेव उचितम्, उपस्थितत्वस्य तुल्यत्वात्। न च विभक्त्यर्थ-प्रकारतामते अभेदस्यापि प्रकारत्वम् एव अङ्गीक्रियते इति न भ्रमितव्यम्। तत्तद्ग्रन्थपर्यालोचनया तन्मतेऽपि अभेदस्य संसर्गताभ्युपगमप्रतीतेः इत्यभिप्रायत् **विशेषणविभक्ती**त्यादि-उक्तिसङ्गतिः इति।

**द्वितीयादिने**ति। अथ **आदि**पदात् तृतीया परिगृह्येत चेत् 'धान्येन धनवान्', 'प्रकृत्या चारुः' इत्यादौ अभेदान्वयबोधानुपपत्तिः। न परिगृह्येत 'सुन्दरेण घटः' इत्यादौ अपि अभेदान्वयबोधापत्तिरिति। ननु अभेदे तृतीयायाः **प्रकृत्यादिभ्य** इत्यनेन अनुशिष्टत्वे घटे सुन्दरपदार्थ-अभेदस्य अबाधितत्वे च 'सुन्दरेण घट' इति प्रयोगः कथं न इष्यते ? न च अभेदेऽपि प्रकृत्यादिशब्देभ्य एव तृतीयानुशिष्टेति न सुन्दरादिपदात् तृतीयासम्भव इति वाच्यम्। अभेदेन व्यावर्तकरूपे भेदके विद्यमानात् शब्दात् तृतीयाया व्याकरणान्तरे अनुशिष्टतया तत्संवादात् प्रकृत्यादि-गणपाठ-अभावाच्च **प्रकृत्यादि**-शब्दस्य भेदकाद्युपलक्षकतया एव पर्यवसानेन सुन्दरेणेति तृतीयाया दुर्वारत्वादिति चेत् ? न। **आकृतिगणोऽयम्** इति **मनोरमा**दर्शनात्। सूत्रेण यत्र तृतीया न प्राप्ता, प्रयोगश्च प्रामाणिकः अवधृतः, तत्र कात्यायनेन तृतीयासाधुत्वार्थं वार्तिकस्य उपनिबद्धतया प्रयोग-

प्रामाण्यावधार्य प्रकृत्यादिगणत्वमिति हि विज्ञायते। 'सुन्दरेण घटः' इति न प्रामाणिकः प्रयोग इति तृतीयायाः तत्र असम्भवात्। एवं यथायोगं सर्व-विभक्त्यपवाद इति शब्दरत्नदर्शनात् 'प्रकृत्या चारुः' इत्यत्र षष्ठ्याः, 'समेन एति', 'विषमेण एति', 'सुखेन याति' इत्यादौ द्वितीयाया 'गोत्रेण गार्ग्य' इत्यत्र प्रथमाया बाधिका तृतीया इति ग्रन्थान्तरार्थपर्यालोचनात् 'प्रकृतेः चारुः', 'गोत्रो गार्ग्यः', 'सुखम् एति' इत्यादि प्रयोग-अदर्शनाच्च। प्रकृत्यादिगणशब्दाद् यत्र तृतीया न तत्र विभक्त्यन्तरस्य सम्भव इति अवधार्यते। दृश्यते च 'सुन्दरो घट' इति। सुन्दरशब्दस्य तत्प्रयोगस्थस्य प्रकृत्यादिगणीयत्वाभावः अवसीयत इति। न हि तत्र तृतीयासम्भवः। यत्तु अनेन वार्तिकेण विहितायाः 'प्रकृत्या चारुः', 'नाम्ना सुतीक्ष्णः', 'धान्येन धनवान्', 'गोत्रेण गार्ग्य', 'समेन एति', 'सुखेन याति' इत्यादौ सर्वत्रैव एकदेशान्विताभेदार्थ एव तृतीयाया दर्शनात्, न 'सुन्दरेण घट' इति प्रयोगसम्भव इति। तन्न। 'धान्येन धनम्' इति **मुग्धबोधटीकायां** मुख्यार्थेऽपि अन्वये प्रयोगदर्शनात्। एतावता 'परमेण सुन्दर' इति प्रयोगस्य साधुत्वासाधुत्वयोः एकशेषस्य असम्भवाच्च। व्याकरणान्तरमपि **पाणिनीयसंवादात्** शब्दविशेषात् तृतीयानुशासकमेव अङ्गीकार्यमिति चेत् ? उच्यते। प्रकृत्यादिशब्दोत्तर-तृतीया-अतिरिक्ता तृतीयादिपदात् परिग्राह्या इति न कोऽपि दोष इति।

**VV-G. 3.3.3:** एतेनेति। उक्तवाक्यप्रामाण्यप्रसङ्गेन इत्यर्थः। अथात्र घटपदसमानाधिकरणस्य नीलपदस्य गुणिपरत्वेन नीलरूपात्मकमेव नीलत्वं विशेषणविभक्तेः अर्थः। तच्च घटपटयोः न एकमिति कथमुक्तप्रयोगस्य प्रामाण्या-पत्तिरिति चेत् ? न। नीलत्वजात्यवच्छिन्न-अधिकरणत्वम् एव अनुगतम्। इह हि नीलत्वं तद्विशिष्टपटपरमेव च नीलपदम् इत्युक्तप्रयोग-प्रामाण्यापत्ति-सङ्गतिः इति। न च आधेयतया पटविशिष्टं नीलत्वं न घट इति कथम् आपत्तिसम्भव इति वाच्यम्। 'विशेष्ये विशेषणमिति' रीत्या जायमानायां शाब्दमतौ प्रामाण्यापत्तौ एव तात्पर्यात्। अभेदार्थकत्वोपपत्तिः इति। न च प्रमेयत्वावच्छिन्न-भेदाप्रसिद्ध्या प्रमेयत्वस्य अभेद-अनात्मकतया 'प्रमेयो घटः' इत्यादि-स्थलीय-विशेषणविभक्तेः कथम् अभेदार्थकत्व-उपपत्तिरिति वाच्यम्। क्वचिन्मुख्यार्थे सम्भवति तदसम्भवात् इतरत्र गौणः तदर्थ इति हि वक्तुं शक्यम्। यथा 'ग्रामं गच्छति' इत्यत्र द्वितीयाया मुख्ये कर्मत्वरूपार्थे सति एव 'घटं जानाति' इत्यादौ तदसम्भवात् विषयत्वलक्षण-गौणकर्मत्वार्थकत्वम्। तथा इहापि। 'नीलो घटः' इत्यत्र विशेषणविभक्तेः अभेद-रूप-मुख्यार्थत्व-सम्भवात् 'प्रमेयो घटः' इत्यत्र गौणभेदरूप-प्रमेयत्वाद्यर्थकत्वम् इति आशयात्।

**VV-G. 3.4.2:** **स्वस्मिन्सम्बन्धतोपगमेनेति।** तथा च आधेयत्वं तत्र विशेषणमेव न उपलक्षणमिति भावः।

**VV-G. 3.5.1:** भेदाभावस्य अभेदस्य तत्त्वेनैव रूपेण संसर्गतामाह - **वस्तुतस्तु** इति। **अन्यदेतदिति**। अविचारणीयं भेदप्रतियोगिताकाभावत्वेन तद्व्यक्ति-भेदत्वावच्छिन्न-प्रतियोगिताकाभावत्वेन वा संसर्गत्वमित्यर्थः। पक्षद्वयेऽपि उक्तप्रयोग-प्रामाण्यापत्ति-वारणसम्भवात्। पक्षद्वयान्यतर-सत्त्वासत्त्वफलकविचारस्य प्रकृतानुपयुक्तत्वादिति भावः। न च भेदत्वावच्छिन्न-अभावत्वस्य अप्रसिद्धत्वात् भेदप्रतियोगिताक-अभावत्त्वस्य च तद्व्यक्तिभेद-घट-उभयाभावादि-साधारणतया उक्तरूपेण संसर्गत्वे निरुक्त-उभयाभावस्यापि संयोगेन वह्नेः साध्यतायां संसर्गतावच्छेदकीभूत-संयोगत्वस्य सत्तया घटादिसंयोगानां साध्यतावच्छेदक-संसर्गत्वस्य एव निरुक्तसंसर्गत्वस्य आपत्त्या उक्तप्रयोगप्रामाण्यस्य दुरुद्धरत्वमिति वाच्यम्। प्रकृतसंसर्गता हि विषयतात्मिका। न च प्रतियोगित्वादिनिरूपित-संसर्गतावदतिरिक्ता। विषयतायाश्च अतिप्रसक्तोऽपि भवति अवच्छेदक इति भेदप्रतियोगिताकाभावत्वावच्छिन्नापि संसर्गता तत्तद्व्यक्तिभेदत्वावच्छिन्नाभावनिष्ठैव इति अङ्गीक्रियते इति न प्रामाण्यापत्ति-तादवस्थ्यम् इति अभिप्रायः। ननु प्रकारताविशिष्ट-प्रकारताकत्वमेव प्रामाण्यम्। वैशिष्ट्यञ्च तत्र (१)स्वतादात्म्य-(२)स्वविशिष्ट-निरूपकताक-अधिकरणतावन्निष्ट-विशेष्यताकत्व-उभयसम्बन्धेन। स्ववैशिष्ट्यञ्च स्वानवच्छेदकानवच्छिन्नत्वादि-प्रसिद्ध-चतुष्टय-सम्बन्धेन अन्यत्र प्रपञ्चितमस्ति। एवं सति उक्तस्थले प्रामाण्यं दुर्वारमेव। नीलत्वावच्छिन्न-पटनिष्ठ-प्रकारता-वैशिष्ट्यस्य उक्त उभयाभावनिष्ठया भेदप्रतियोगिताक-अभाववत्त्व-अवच्छिन्न-संसर्गतया निरूपितायां नीलत्वावच्छिन्न-निरूपकतायां सत्त्वेन तन्निरूपिताधिकरणत्वस्य घटे सत्त्वादिति चेत् ? न। स्वनिरूपित-संसर्गता-अवच्छेदकता-पर्याप्त्यधिकरणधर्म-पर्याप्तावच्छेदकताक-संसर्गता-निरूपकत्वं न चतुष्टय-सम्बन्धघटकम्, अपि तु स्वनिरूपित-संसर्गताव्याप्य-संसर्गताकत्वमिति पटनिष्ठ-तद्व्यक्तित्वावच्छिन्न-प्रतियोगिताक-भेदत्वावच्छिन्न-अभावत्वावच्छिन्न-संसर्गतानिरूपित-निरूपकताकाधिकरणत्वमेव वैशिष्ट्यघटकमिति न प्रामाण्य-प्रसङ्गः। अथ नीलपटपर-नीलादिपद-घटितस्य 'नीलो घटः' इति वाक्यस्य अप्रमाणत्वे नञ्घटितस्य तस्य प्रमाणत्वं युक्तम्। न च तत्सम्भवति नीलत्वेन पटभेदस्य सामान्यरूपेण विशेषाभावादि-अनङ्गीकारे अप्रसिद्धेः अङ्गीकारेऽपि वा 'नीलो न घटः' इत्यत्र उक्ताभावप्रत्ययो हि न व्युत्पत्तिसिद्धः। प्रतियोगिविशेष-वाचकपदान्तरघटितस्य 'वह्नित्वेन महानसीय-वह्निः नास्ति' इत्यादि-वाक्यस्यैव तदभिलापकत्व-दर्शनात्। अन्यथा 'पर्वते वह्निर्नास्ति' इत्यादेरपि स्वारसिकः प्रयोगः स्यात्। नीलत्वावच्छिन्न-सामान्यभेदस्य नीलघटे असम्भवात् सामान्य-धर्मावच्छिन्नाया एकविशेषमात्रनिष्ठायाः संसर्गतायाः प्रतियोगित्व-निरूपितायाः

स्वारसिकप्रत्यय-अगोचरत्वेन अप्रामाणिकतया भेदप्रतियोगिताक-अभावत्वावच्छिन्न-पटनिष्ठतद्व्यक्तित्वावच्छिन्न-भेदाभावमात्रनिष्ठसंसर्गताक-प्रतियोगिताकाभावस्यापि अलीकत्वात्। उक्तसंसर्गतायाः प्रामाणिकत्वे कथं न 'संयोगेन पर्वते वह्निर्नास्ति' इत्यादिप्रत्ययः स्वरसतो लोकानामिति चेत् ? स्ववृत्त्युभयावृत्तिधर्मत्वेन। अनुगत-रूपेण अभेदस्य संसर्गत्वपक्षेऽपि उक्तप्रयोगस्य उक्तरीत्या प्रामाण्योपपादनस्य दुःशकतया 'घटत्वेन पटोऽस्ति', 'घटत्वेन पटो नास्ति' इति प्रयोगद्वयवद् उक्तप्रयोगद्वयस्यापि अप्रामाण्यमेव अङ्गीकार्यम्। यथा वा वह्नित्वेन महानसीय-वह्निपर-पदघटितस्य संयोगत्वेन संयोगमात्रसंसर्गक-प्रत्ययोपधायकस्य 'संयोगेन पर्वते वह्निः' इति वाक्यस्य अप्रामाण्ये नञ्-घटितस्य तस्य प्रामाण्यम् उचितमिति वक्तुम् अनर्हम्, कथञ्चिदपि असम्भवात्। तथा इदमपि इति बोध्यम्। 'नीलो न घटः' इति वाक्यप्रामाण्यस्य आनुभविकत्वे सामान्यधर्मावच्छिन्न-विशेषमात्रनिष्ठ-संसर्गत्वस्य अभेदस्थले प्रामाणिकत्वम् अभ्युपेत्य प्रामाण्योपपादनमपि उभयत्र समानम्। न च तत्तद्व्यक्ति-भेदत्वावच्छिन्न-अभावत्वेन संसर्गतामते अनुभव-कदर्थनाभाव एव विशेष इति वाच्यम्। तत्रापि दोषस्य वक्ष्यमाणत्वेन तदुद्धार-प्रयासे अनुभवकदर्थीकरणप्रसङ्गस्य समानत्वात्। अथ तत्तद्व्यक्तिभेदत्वावच्छिन्न-अभावत्वेन संसर्गत्वे संसर्गताभेदात् प्रकारत्व-विशेष्यत्वयोरपि भिन्नत्वात् 'नीला घटा' इत्यस्य एकवाक्यत्वानुपपत्तिः। निरूप्य-निरूपकभावानापन्न-अनेक-विषयताक-बोधजनकत्वात् इति चेत् ? संशयसमुच्चय-वैलक्षण्यानुरोधेन तदीय-विषयत्वयोः अवच्छेद्य-अवच्छेदकभाव इव नीलत्वनिष्ठ-अवच्छेदकत्वाख्य-विषयतायाः सकलतत्प्रकारता-निरूपिताया ऐक्यम् अवच्छेद्य-अवच्छेदकभावो वा अङ्गीक्रियते। तथा च न एकवाक्यताभङ्ग इति। न च एवमपि वक्ष्यमाणरीत्या 'नीला न घटा' इत्यस्य प्रामाण्यप्रसङ्ग इति वाच्यम्। यथा हि समान्याभाव-अनङ्गीकर्तृभिः 'वह्निर्नास्ति' इत्यादिप्रतीतौ विशेषभावकूट-अवगाहित्वम् अङ्गीक्रियते, तथा उक्तस्थलेऽपि नीलभेदकूटावगाहित्वम् एव उररीक्रियते। कूटत्वेनैव तस्य विषयत्वात् न एकवाक्यताभङ्गः। नञ्पदस्य तादृशभेद-कूटत्वावच्छिन्ने लक्षणा। नीलपदं च तात्पर्यग्राहकम्। अथवा एकदेशान्वय-अस्वीकारे धात्वादि-शक्ययोः फल-व्यापारयोः इव लक्ष्यार्थ-शक्यार्थयोः अभाव-कूटत्वयोः अपि अन्वयः अगत्या अङ्गीकरणीयः। नीलान्वितानां सर्वेषाम् एव अभावानां कूटत्वेऽन्वये तादृशाकाङ्क्षायाः प्रयोजकत्वं च अङ्गीकरणीयमिति विभावनीयम्। अग्रिमग्रन्थस्तु कूटत्वस्य तथाविधस्य अनुगतानुयोगितावच्छेदकधर्मं विना दुर्ग्रहत्वात्। तदग्रहेऽपि उक्तप्रयोगात् गतिसम्भवे निरर्थकत्वप्रायस्य तात्पर्यग्राहकत्वस्य वक्तुम् अनुचितत्वात्। एकपदलक्ष्यार्थ-शक्यार्थयोः अन्वयस्यापि

व्युत्पत्तिमार्गापेतत्वात् उक्तरीतिः न साधीयसी इति वस्तुगतिम् अनुरुध्य उक्त इति दिक्।

**VV-G. 3.5.2:** संसर्गतामतेऽनुपपत्त्यभावादिति। अथ अन्विताभिधान-पक्षस्य निराकृतत्वेन पदाद् अन्वयोपस्थितेः अनपेक्षितत्वेऽपि तात्पर्यग्रहार्थम् अवश्यम् अन्वयोपस्थितिः अपेक्षणीया। न च ज्ञानांशे विषयतया विशिष्टवाक्यार्थम् अवगाहमानैव तात्पर्यमतिः शाब्दबोधोपयोगिनी इति। संसर्गस्य विशेष्य-विशेषण-भावादि-विधुर-स्वरूपेण भासमानतया तदुपस्थितेः न अपेक्षा इति वाच्यम्। अपूर्व-वाक्यार्थस्थले शाब्दबोधात्प्राक् तस्य ज्ञातुम् अशक्यत्वेन ज्ञानविशेषणत्वासम्भवात् इति निरूप्य-निरूपक-भावापन्न-तत्तद्विषयताकत्व-विशिष्टज्ञान-विषयकत्वम् एव तात्पर्यबुद्धेः वाच्यमिति। सांसर्गिकविषयत्व-विशेषणघटकतया तद्व्यक्तित्वोपस्थितेः आवश्यकत्वात्। संसर्गतामतेऽपि अनुपपत्ति-तादवस्थ्यम् इति चेत् ? न। स्वनिरूपित-सांसर्गिक-विषयता-निरूपित-घटादि-विषयताकत्व-संसर्गेण नीलादि-विषयता-विशिष्टज्ञानविषयकत्वस्यैव तात्पर्यबुद्धौ स्वीकारात्। सांसर्गिकविषयत्वस्य प्रकारताविरहेण अनुपपत्त्यभावात् इति ध्येयम्।

**VV-G. 3.5.4:** विशिष्ट-वैशिष्ट्य-बुद्धित्वानुपपत्तेरिति। विशिष्ट-वैशिष्ट्या-वगाहिबोधत्वं च विशेषण-विशेषणतावच्छेदक-उभयसम्बन्धावगाहि-बोधत्वम्। तत्र अभावस्थले प्रतियोग्यंशे भासमानस्य विशेषणत्वम्। विशेषणतावच्छेदकस्य च तस्य स्वावच्छिन्नप्रतियोगित्वं संसर्गः। विशेषणस्य च प्रतियोगित्वम् अभावबुद्ध्या नियमेन अवगाह्यत इति च अङ्गीकरणीयम्। अन्यथा स्वसमानाधिकरण-प्रतियोगित्वादेः विशेषणतावच्छेदकसंसर्गत्वे 'पर्वतेऽपि वह्निर्नास्ति' इत्यादि-प्रत्ययापत्तेः। द्वित्वाद्यवच्छिन्नप्रतियोगिता-संसर्गेण वह्निविशिष्टाभावस्य स्वसमाना-धिकरण-तादृशप्रतियोगिता-संसर्गेण वह्निविशिष्टतया तस्य पर्वते सत्त्वात्, प्रतियोग्यंशे भासमानस्य उपलक्षणत्वे च तस्य अभावांशे भनासम्भवात्, उक्तप्रत्ययापत्तेः दुरुद्धरत्वात्। एवञ्च एकाभावस्य उभयविध-प्रतियोगिता-सम्बन्धित्वविरहेण अन्यधर्मावच्छिन्नप्रतियोगित्वस्य प्रतियोगितासंसर्गत्वे विशेषणता-वच्छेदक-सम्बन्धबाधापत्त्या तस्य उपलक्षणता स्यादिति, अगत्या विशेषणता-वच्छेदक-अवच्छिन्नैव प्रतियोगिता प्रतियोगिनः संसर्गत्वेन अङ्गीकरणीया। तथा च निरुक्तस्थले तद्व्यक्तित्वावच्छिन्नप्रतियोगित्वस्य संसर्गत्वे नीलस्य विशेषणत्व-असम्भवेन अभावबुद्धेः उपलक्षित-वैशिष्ट्यावगाहित्वं स्यादिति भावः। अथ उक्तनियमद्वयस्य सार्वत्रिकत्वं न सम्भवति। घटाभावादिपक्षक-वह्न्यादिसाध्यक-अनुमितेः महानसीय-वह्न्यभावादिपक्षक-वह्न्यादिसाध्यकानुमितेश्च तदभिलापक-वाक्यजन्य-शाब्दबुद्धेश्च अभावप्रत्ययात्मकतया विशेषणस्य स्वसामानाधिकरण्य-

स्वनिष्ठप्रतियोगित्वादि-सम्बन्धेन अभावांशे अवगाहितत्वादिति-नञ्पद-घटित-वाक्याभिलाप्य-अभावप्रत्ययस्थले एव उक्तनियमद्वयम् अङ्गीकरणीयम्। तथा च प्रत्ययाद्युपस्थिते विधेयभावानालिङ्गिते भेदादौ तद्व्यक्तित्वावच्छिन्न-प्रतियोगिता-सम्बन्धेन नीलादेः स्वसमानाधिकरण-तादृशप्रतियोगिता-सम्बन्धेन नीलत्वादेश्च अन्वये को दोषः ? तादृशसम्बन्धेन अन्वय एव च तादृशविभक्त्यादि-समभिव्याहारस्य आकाङ्क्षात्वोपगमात्। सम्बन्धान्तरमादाय न अनिष्टप्रयोग-प्रसङ्गस्यापि अवसरः। अथवा यत्र प्रतियोगित्वेन साक्षात्सम्बन्धेन अभावे कस्यचिद् विशेषणत्वं तत्रैव विशेषणतावच्छेदकस्य धर्मिपारतन्त्र्येण स्वावच्छिन्न-प्रतियोगित्वं सम्बन्धः। यत्र च स्वनिष्ठप्रतियोगिताकत्वादि-परम्परासम्बन्धेन तत्र विशेषणतावच्छेदकस्य न निरुक्तप्रतियोगित्वं संसर्गः। अत एव स्वनिष्ठ-प्रतियोगिताकत्व-सम्बन्धेन वह्निविशिष्ट-महानसीय-वह्न्यभावादेः लक्षणया पदात् प्रतीतिः, न च तत्र वह्नित्वस्य स्वावच्छिन्न-प्रतियोगित्व-सम्बन्धेन भानम्। एवञ्च प्रत्ययार्थे भेदे प्रकृत्यर्थस्य स्वनिष्ठतद्व्यक्तित्वावच्छिन्न-प्रतियोगताकत्व-सम्बन्धेनैव अन्वये प्रकृति-प्रत्यय-समभिव्याहारस्य आकाङ्क्षात्वोपगमे न कश्चित् दोष इति चेत् ? सत्यम्। 'घटो नास्ति', 'घटो न' इत्यादि-प्रत्ययवद् 'घटाभाववान्', 'घटभेदवान्' इत्यादयोऽपि प्रत्ययाः प्रतियोगिविधया घटम् अवगाहमानाः स्वरसतः शुद्धप्रतियोगित्वमेव संसर्गतया अवगाहन्ते। अत एव घटवद्भूतल-विशेष्यको 'भूतलं घटाभाववद्' इत्यादि-प्रयोगो न स्वरसतो विशेष-दर्शिनामिति। प्रतियोगिविधया विशेषणस्य अभावसम्बन्धः प्रतीयमानः शुद्ध-प्रतियोगित्वात्मक एव स्वारसिक इति निर्णीयते। तत्परित्यागश्च न बलवत्तर-कारणम् ऋते अर्हति औचित्यम्। एवञ्च 'नीलो घटः' इत्यादिवाक्यस्य अन्यथापि उपपत्तिसम्भवे सर्वलोकस्वरससिद्धां प्रतियोगिभूत-विशेषण-सम्बन्धस्य शुद्ध-प्रतियोगित्वात्मकताम् अतिक्रम्य सम्बन्धान्तरात्मकतया तद्भानोपयोग्याकाङ्क्षात्व-कल्पनं समभिव्याहारविशेषस्य अनुचितमिति। तद्व्यक्तित्वावच्छिन्नप्रतियोगित्वस्य शुद्धप्रतियोगितात्वेन संसर्गत्वे विशेषणतावच्छेदक-नीलत्वादेः उपलक्षणत्वस्य प्रतियोगितानवच्छेदकत्वलक्षणस्य सम्भवः। विशेषणत्वे च शुद्धप्रतियोगितात्व-संसर्गभाने विशेषणतावच्छेदकस्य स्वावच्छिन्न-प्रतियोगितात्व-संसर्गभाननियमेन तद्व्यक्तित्वावच्छिन्नप्रतियोगित्वस्य संसर्गत्वासम्भव इति अभिप्रायः अनुचिन्तनीयो निरुक्तग्रन्थस्येति।

**केवलं विशेष्ये विशेषणमिति रीत्येति**। विशेष्यसम्बन्धिनि तद्द्वारा हि असम्बद्धत्वम् इह कैवल्यम्। अभावप्रत्ययस्थले तन्नास्ति इत्यर्थः। एवञ्च अभावस्थले प्रतियोगिप्रकारस्य उपलक्षणत्वव्यावृत्तिः अनुदर्शिता भवति। तेन हि

'गन्धप्रागभाववान् नास्ति', 'रक्तदण्डो नास्ति' इत्यादौ गन्धप्रागभाव-रक्तत्वादेः प्रतियोगिप्रकारस्यापि उपलक्षणत्वम् उक्तं न विरुद्ध्यते। उपलक्षणस्यापि तस्य स्वावच्छिन्न-प्रतियोगित्व-सम्बन्धेन अभावे अन्वयस्य अभ्युपगतत्वेन कैवल्य-विरहात्। अत एव अभावबोधो हि विशिष्टवैशिष्ट्यावगाही एव भवति इति अनभिधाय, तत्र तत्र अभावबोधो हि विशिष्टवैशिष्ट्यावगाहिमर्यादां न अतिशेते इत्युक्तिः। विशिष्टवैशिष्ट्यावगाहिनो रीतिं विशेषणविशेष्य-उभयसम्बन्धावगाहित्व-लक्षणां न अतिक्रामति इति तु तदर्थः। प्रतियोगिप्रकारस्य विशेषत्वोपलक्षणत्वे प्रत्ययकाल-सत्त्वासत्त्वनिबन्धने, न तु विशेष्यसम्बन्धि-सम्बद्धत्व-असम्बद्धत्व-प्रयुक्ते। ताभ्याम् अवच्छेदकत्ववैलक्षण्यस्य अङ्गीकारात् अभावयोः न अवैलक्षण्यम् इति बोध्यम्।

**VV-G. 3.6.1: तच्च स्वसामानाधिकरण्येत्यादि**। उभयत्र वृत्तित्वं स्वरूपेण बोध्यम्। न चैवं द्रव्यत्वादीनाम् अपि असाधारण्यप्रसङ्ग इति वाच्यम्। स्वरूप-सम्बन्धावच्छिन्न-आधेयत्वस्य एव प्रकृत्यर्थसम्बन्धत्वस्वीकारेण स्वरूपेण द्रव्यत्वस्य असाधारण्येऽपि शाब्दबोधविषयत्वस्य असम्भवात्। स्वरूपेण वृत्तिमान् असाधारणो धर्म एव वा विभक्त्यर्थो वाच्यः। तथापि द्रव्यत्वादिवारणसम्भवात्। स्वनिरूपित-प्रतियोगितावन्निरूपित-वृत्तितानवच्छेदक-अनुयोगिताविशिष्टान्यत्वमेव च प्रकृते विवक्षणीयम्। तेन घटभेदाभावनिष्ठ-तद्व्यक्तित्वस्य घटभेदात्मकघटभेदाभावा-भावनिरूपित-प्रतियोगितावद्वृत्तित्वेऽपि न असाधारण्यहानिः। तत्तद्भेदनिरूपित-प्रतियोगित्ववत्-तत्तद्भेदनिष्ठ-अनुयोगितात्वम् अपि अखण्डोपाधिरूपं भिन्नम् एव। तस्यैव परिग्रहणं न घटभेदाभावाभावत्वरूप-अनुयोगित्वादेः भवतु इति एतदर्थं स्वनिरूपितेत्याद्यनुयोगिता-विशेषणतया उपात्तम्। वैशिष्ट्यञ्च (१)स्वावच्छिन्नवद्-वृत्तित्व-(२)स्वावच्छिन्ननिरूपकतानिरूपितनिरूप्यतावत्प्रतियोगितासामानाधिकरण्य-उभयसम्बन्धेन बोध्यम्। न च स्वनिरूपितप्रतियोगिता-सामानाधिकरण्यमेव कुतो नोक्तमिति वाच्यम्। घटभेदत्वाभावनिष्ठ-तद्व्यक्तित्वे असाधारण्यानुपपत्तेः घट-भेदत्वरूप-अनुयोगित्वात्मक-घटभेदत्वाभावाभाव-निरूपित-प्रतियोगित्वस्य घट-भेदत्वाभावे सत्त्वात्। उक्तरूपेण प्रवेशे च घटभेदत्वेन घटभेदत्वाभावनिष्ठ-प्रतियोगित्वेन निरूप्यनिरूपकभावविरहेण दोषासम्भवात्। यद्वा (१)स्वनिरूपितत्व-(२)स्वनिष्ठ-अनुयोगित्वानिरूपित-उभयसम्बन्धेन स्वविशिष्ट-प्रतियोगिता-सामाना-धिकरण्यं संसर्गः। तथापि न उक्तदोषः। भेदत्वस्य तादात्म्य-सम्बन्धावच्छिन्न-प्रतियोगिताक-अभावत्व-रूपत्वेऽपि न अन्योन्याश्रयः। तद्व्यक्तित्वमपि अखण्डोपाधिरेव। नातो वृत्तितावच्छेदकसम्बन्ध-विकल्पप्रयुक्तदोषस्य अवकाशः। यत्तु नीलादिनिष्ठ-तद्व्यक्तित्वं तत्तन्नीलादिवृत्तित्व-विशिष्ट-नीलत्वादिकमेव, न च

तस्य स्वरूपेण वृत्तित्वं, नापि च विशिष्टस्य अनतिरिक्ततया पटपरस्य 'नीलो घट' इति वाक्यस्य प्रामाण्यवारणम्, अतो भेदत्वविशिष्टान्यरूपावच्छिन्नवत्त्वम् एव असाधारण्यं वाच्यम्। वैशिष्ट्यञ्च (१)स्वावच्छिन्नवद्वृत्तितावच्छेदकतात्वावच्छिन्न-प्रतियोगिताक-पर्याप्त्यनुयोगितावच्छेदकत्व-(२)स्वविशिष्टप्रतियोगितावन्निरूपितवृत्तितावच्छेदकतात्वावच्छिन्न-पर्याप्त्यनुयोगितावच्छेदकत्व-उभयसम्बन्धेन। वृत्तिता च स्वरूप-समवाय-अन्यतरसम्बन्धेन ग्राह्या। तथा च नीलत्वत्वगतैकत्वस्य भेदत्वविशिष्टान्यत्वविरहेण तद्विशिष्ट-नीलत्वत्वेन न असाधारण्यम्, अपि तु तद्व्यक्तिवृत्तित्ववैशिष्ट्य-नीलत्वत्वगतद्वित्वस्य भेदत्वविशिष्टान्यतया तदवच्छिन्नतादृशवृत्तित्व-वैशिष्ट्य-नीलत्वत्व-उभयरूपेणैव। तेन च रूपेण तत्सत्त्वं न तद्व्यक्तिभिन्न इति न कोऽपि दोष इति। तन्न मनोरमम्। तद्व्यक्तित्वं च तादात्म्येन। सा एव व्यक्तिरिति पक्षे, गगन-परमाण्वादिरूप-तद्व्यक्तित्वस्य समवाय-स्वरूपान्यतरेण अवृत्तितया तस्य शाब्दबोधविषयत्वानुपपत्तेः। अवयवद्रव्यवृत्ति-घटाद्यात्मक-तद्व्यक्तित्वस्य समवायेन उभयवृत्तितया तस्य शाब्दबुद्धौ अभानापत्तेः घटाभावाद्यात्मक-तद्व्यक्तित्वस्यापि स्वरूपेण उभयवृत्तितया तस्यापि शाब्दबुद्धौ अभानापत्तेश्च। तादात्म्यसम्बन्धावच्छिन्नत्वं हि अन्योन्याश्रयभयेन अप्रवेश्यम्। तत्तन्नीलादि वृत्तित्व-विशिष्ट-नीलत्वादीनां तद्व्यक्तित्वरूपता-पक्षे नीलत्वादीनां सङ्ग्राहकत्वाच्च। तस्मात् अखण्डोपाधिरूपतामेव तद्व्यक्तित्वस्य अवलम्ब्य पूर्वोक्तरीतिः एव आदर्तव्या। तद्व्यक्तित्वस्य विशिष्टनीलत्वादिरूपत्वपक्षेऽपि भेदत्वादिकम् अखण्डोपाधिरूपमेव अवलम्ब्य असाधारण्यस्य निर्वाच्यतया तद्व्यक्तित्वस्य क्लृप्तपदान्तर्भावाग्रहस्य दुराग्रहत्वाच्च। सामान्यतो असाधारण्यपरिष्कारश्च अस्मत्कृत**सिद्धान्तलक्षणटिप्पण्याम्** आलोचनीयः। अथ आधेयत्वविशिष्टधर्मस्य एव लघुभूतस्य विभक्त्यर्थत्वं वक्तुम् उचितम्। आधेयत्वांशे प्रकृत्यर्थान्वये पटादिनिरूपित-वृत्तित्व-विशिष्टधर्माधिकरणत्वलाभात्। तस्य घटे विरहेण पटादिपरस्य 'नीलो घटः' इति वाक्यस्य प्रामाण्यवारणसम्भवात् इति चेत्? न। एकदेशान्वयभयेन आधेयत्वे धर्मे च खण्डशक्तेः स्वीकरणीयतया 'विशेष्ये विशेषणमिति' रीत्या प्रमाशाब्दबुद्धेः निरुक्तस्थले दुरुद्धरत्वप्रसङ्गादिति।

अथ **एकमात्रवृत्तित्वस्य (VV-3.6.1)** (१)स्वसामानाधिकरण्य-(२)स्वावच्छिन्नभेदसामानाधिकरण्योभयसम्बन्धेन एकत्वविशिष्टान्यत्वं यथाश्रुतार्थपरिष्काररूपं भवति इति तत्कथं परित्यक्तम् ? अनुयोगिता-पर्यन्तनिवेशस्य अनावश्यकतया भेदविशिष्टान्यत्वनिवेशापेक्षया लाघवमपि अस्ति तत्रेति चेत् ? न। सङ्ख्यारूपस्य एकत्वस्य गुणादौ अभावेन तद्गत-तद्व्यक्तित्वस्य इव तद्गतजातेः अपि असाधारण्यप्रसङ्गात्। अपेक्षाबुद्धिविशेष-विषयत्वस्य च

अनुगमकाभावात् तस्य परित्याज्यत्वात्। न च अनुयोगित्वपर्यन्त-अनिवेशात् तत्र लाघवमपि। समनियताभावानाम् ऐक्यपक्षे घटभेदस्य घटभेदाभावनिष्ठैकत्ववद्-भावस्य एकतया घटभेदाभावनिष्ठ-तद्व्यक्तित्व-असङ्ग्रहभयेन स्वावच्छिन्न-प्रतियोगिताविशिष्ट-भेदत्वव्याप्यानुयोगित्वावच्छिन्न-सामानाधिकरण्यस्यैव वाच्यत्वात्, लाघवाभावात्। न च धर्मविशिष्टान्यत्वादिकमेव अस्तु तत्। धर्मत्वेन तदनुगमने क्षत्यभावादिति वाच्यम्। धर्मत्वेन तत्प्रवेशे यथाश्रुतार्थताहानेः दुर्वारत्वादिति।

**VV-G. 3.7.1:** **तुल्ययोगक्षेमाविति।** योगः प्राप्तिः, क्षेमो लब्धपरिरक्षणम्। तुल्यौ योगक्षेमौ यस्येति व्युत्पत्तिः। प्रकृते च येन सम्बन्धेन यद्धर्मावच्छिन्ने यद्धर्मावच्छिन्नान्वयो नञो असमभिव्याहारे प्रतीयते तद्धर्मावच्छिन्ने तत्सम्बन्धावच्छिन्न-तद्धर्मावच्छिन्न-प्रतियोगिताकाभावान्वय एव नञ्समभिव्याहारे प्रतीयते इत्येवार्थः। अस्य प्रकृतोपयोगिपर्यवसितो वेदितव्यः। तथैव ग्रन्थकारेण वक्ष्यमाणत्वात्। शब्दार्थघटना तु एवं कार्या। प्राप्तिः अत्र ज्ञानं, तद्द्वयोः तुल्यम्। तुल्यता च तुल्यसामग्रीप्रभवत्व-तुल्यविषयकत्वाभ्याम्। सामग्र्याः साम्यं नञ्तदर्थविषयकत्व-परिहारेण आकाङ्क्षादेः सर्वस्य सर्वथा एकरूपता। विषयत्वांशेऽपि साम्यं नञर्थतत्संसर्गपरिहारेण सर्वथैकविषयत्वम्। लब्धस्य ज्ञातस्य परिरक्षणम् अवधानम्। तदपि अनाप्तोक्तत्वाद्यज्ञान-प्रत्यक्षबाधाद्यभावेन तुल्यमिति।

**तादृशाननुगतसम्बन्धेति।** अथ नीलत्वादिप्रकारेण यावतां शाब्दबुद्धौ भानं तत्तद्व्यक्तित्वावच्छिन्न-भेदकूटत्वावच्छिन्नाभाव एक एवास्तु संसर्गः। न हि एवम् एकवाक्यतासमर्थन-क्लेश-लेशोऽपि। संसर्गताया एकत्वेन प्रकारत्वादिभेदाप्रसक्तेः। कूटत्वं च अपेक्षाबुद्धिविशेष-विषयत्वात्मकम् एकमेव तत्र तत्र प्रतियोगिकतावच्छेदकमिति संसर्गभेदविरहात्। कूटत्वस्य एकविशिष्ट-अपरत्वरूपत्व-पक्षेऽपि समनियताभावानाम् एकत्वेन एक एव अभावः संसर्गः। न च संसर्गतावच्छेदकतादृशाभावत्वस्य भेदात् संसर्गताभेद इति वाच्यम्। स्वरूपत एव तादृशाभावस्य संसर्गत्वाङ्गीकारात्। सखण्डस्यापि संसर्गविधया स्वरूपतो भानस्य तत्र तत्र स्वीकारात्। अथवा स्ववृत्ति-तद्व्यक्तिरेव अस्तु संसर्गः। तद्व्यक्तिश्च निरुक्ताभावरूपा नीलत्वादिप्रकारेण पटादिभाने पटवृत्तित्व-उपलक्षिताया अपि पटादिगत-तद्व्यक्तित्वावच्छिन्न-भेदकूटाभावात्मकव्यक्तेः न घटे सत्त्वमिति न 'नीलो घटः' इत्यस्य प्रामाण्यप्रसङ्गः। एवञ्च 'घटो न नील' इत्यत्रापि अनुगताभावस्यैव भासमानतया न तस्य प्रामाण्यप्रसङ्ग इति चेत् ? न। षट्सु घटेषु षण्णां नीलानां तादात्म्यावगाहने तत्तद्व्यक्तिभेद-षट्काभावस्य 'नीला घटा' इत्याकाङ्क्षा एव संसर्गतया भानम् अभ्युपेयते। तादृशश्च संसर्गः तादृशाकाङ्क्षया तादृशषट्-घटक-घटत्रयेऽपि स्वानात्मक-नीलत्रय-भाने सति

तात्पर्ये भासेत। तथा सति हि तादृशतात्पर्येण उच्चरितस्यापि 'नीला घटा' इत्यस्य प्रामाण्यं स्यादिति।

**VV-G. 3.7.2:** न तु नीलादिभेद इति। नीलादिभेदत्वेन नीलादिभेद इत्यर्थः। तेन समनियताभावानाम् ऐक्येऽपि न क्षतिः।

**VV-G. 3.7.5:** अभेदस्य संसर्गतोपपादिकां युक्तिम् आह - **इदं तु तत्त्वम्** इत्यादिना। अथ 'नीलो घट' **इत्यादिस्थले** इत्याद्युक्तौ एव सामञ्जस्ये **असमास** इत्युक्तिः कथमिति चेत् ? उच्यते। **"संसर्गतया भानन्तु समासस्थल एव"** (VV-3.1.1) इत्यादिना समासस्थले सर्वथैव अभेदस्य संसर्गतया भानस्य प्रागुक्तत्वेन तत्साधारण्येन अत्र अभेदस्य संसर्गत्वोपपादने सन्दर्भाशुद्धिः स्यात्। समासे विशेषणविभक्तेरभावेन तत्र विशेषणविभक्तेः वृत्तिकल्पनम् अनुचितमिति ग्रन्थ-असङ्गतिश्च स्यादिति। 'नीलो घट' **इत्यादिस्थल** इत्यत्र आदि-पदेन अभेदान्वयबोधकवाक्यत्वरूप-सामान्यधर्मं पुरस्कृत्य समासवाक्यबोधो मा प्रसाङ्क्षीत् इति **असमास** इति विशेषणोपादानम्। किं वा **"समासस्थले एव"** (VV-3.1.1) इत्यादिप्रागुक्तग्रन्थप्रतिपक्षत्वम् एतद्ग्रन्थस्य अभिद्योतयितुम् **असमास** इत्युक्तम्। अपि च तत्र अनुकर्षणीयः। अथवा **असमास** इत्येव विशेष्यम्। तत्र अवच्छेदकावच्छेदेन अन्वयस्य औत्सर्गिकत्वेन विरुद्धविभक्त्य-वरुद्धवाक्ये विशेषणविभक्तिविरहेण तत्र **विशेषणविभक्तेः** इत्यादिसन्दर्भविरोधः स्यादिति 'नीलो घटः' इत्यादिस्थल इति विशेषणोपादानमिति। **अभेदस्य संसर्गतोपगमेऽपीति।** अभेदवृत्तिकल्पनागौरव-अतिरिक्तगौरवविरहो यथा अभेद-प्रकारतापक्षे तथा अभेदस्य संसर्गतापक्षेऽपि इत्ययम् अर्थः अपिना सूचितः। उपयुज्यते चायं वृत्तिकल्पना-अनौचित्यपरिपोषे संसर्गतापक्षे। यदि ततोऽतिरिक्तं गौरवं स्यात् वृत्तिकल्पनाया अनौचित्यं न स्यात्। यथा च संसर्गतापक्षे पराशयस्थस्य गौरवस्य विरहः तथा अनुपदम् एव उपपादयिष्यते। एवञ्च अपि-शब्द-वैयर्थ्यशङ्कायाः प्रकारतामते वृत्तिकल्पनागौरवस्य सद्भावात् असङ्गतेश्च निरासः। अथ प्रागभेदस्य संसर्गत्वम् आश्रित्य 'विशेषणविभक्तेः पदसाधुत्वार्थकत्वम्' (VV-2.7.1) अभिधाय निरर्थकत्वप्रायस्य तस्य दुष्टत्वं मनसि निधाय च 'विशेषणविभक्तेः अभेदार्थकत्वम्' (VV-3.1.1) अभिहितम्, न तु लाघवादित इत्युक्तदूषणपरिहारमनभिधाय अभेदस्य संसर्गत्वोपगमः सन्दर्भ-विरुद्धताम् अवलम्बते इति चेद् ? विकरणादेः सर्वमत एव पदसाधुत्वमात्रा-र्थकत्वस्य क्लृप्ततया विशेषणविभक्तौ तद्दृष्टान्तेन तस्या यत्किञ्चिदर्थोप-स्थापकत्वाभावेऽपि प्रतिपिपित्सितार्थ-प्रतिपत्ति-अनुपपत्तिरहित-वाक्यघटकत्वे सति अवर्जनीयप्रयोगत्वेन हेतुना निर्दुष्टेन साधनीयस्य निरर्थकत्वस्य प्रामाणिकतया न

दोषत्वम् इत्यत्र तात्पर्यात् न सन्दर्भविरोध इति गृहाण। हेतुप्रसिद्धिश्च यथा तथा अनुपदमेव व्यक्तीभविष्यति। न च 'विवादाध्यासिता विशेषणविभक्तिः अर्थवती, विभक्तित्वाद्, इतरविभक्तिवद्' इत्यनेन सत्प्रतिपक्ष इति वाच्यम्। पक्ष एव व्यभिचारसन्देहेन अतुल्यबलत्वात्। न च स्थापनानुमानेऽपि सोऽस्तीति वाच्यम्। वृत्त्यकल्पनालाघवतर्केण प्रतिरोधकशक्तिविगमादिति ध्येयम्।

**गौरवविरहादिति**। इदं च 'भिन्नविषयकप्रत्यक्षं प्रति भिन्नविषयकशाब्द-सामग्री-प्रतिबन्धकतालाघवं' वक्ष्यमाणम् अव्यवहितोत्तरत्वस्य प्रतिबध्यता-वच्छेदककोटौ प्रवेशम् आदृत्य शब्दसामग्रीमदन्यप्रत्यक्षं प्रति शाब्दसामग्र्याः सामान्यतः प्रतिबन्धकताकल्पनेन तिरस्कुर्वतो मतेन उक्तमिति बोध्यम्। अग्रे च अव्यवहितोत्तरत्वस्य प्रतिबन्धकाभावकार्यतावच्छेदककोटौ प्रवेशस्य निर्युक्तिकत्वम् आकलय्य अभेदस्य प्रकारत्वं स्वीकुर्वतो मतेन "**विशेषणविभक्तेः अभेदार्थकत्व-मतेऽपि**" (VV-3.5.2) यद्यपि उक्तरीत्या लाघवं सम्भवति इत्यादि उक्तिरिति वेदितव्यम्। न च अव्यवहितोत्तरत्वस्य कार्यतावच्छेदकाघटकत्वेन (VV-2.4.2) न किमपि मानम्, कार्यतावच्छेदकघटकत्वे तु लाघवमेव तदिति वाच्यम्। सर्वस्य कार्यकारणभावस्य प्रवृत्तिनिवृत्तिफलकत्वेन अव्यवहितोत्तरत्वस्य कार्यतावच्छेदक-घटकत्वस्थले तत्तत्कारणफलविशेषस्य अनिर्णयेन इष्टविशेषसाधनत्वज्ञानस्य असम्भवात् तदधीनप्रवृत्त्यनुपपत्तेः एव तत्र मानत्वात्। अव्यवहितोत्तरत्वस्य कार्यतावच्छेदकघटकत्वं (VV-2.4.2) तु तत्रैव यत्र गत्यन्तरविरहः। अत एव वैजात्येन सम्भवत्कार्यभावस्य वह्नेः न तृणाद्यव्यवहितोत्तरत्वादिना क्लृप्तेन कार्यत्वम्। न च एवम् आकाङ्क्षाज्ञानाद्यव्यवहितोत्तरत्वस्य कार्यतावच्छेदकत्वं न स्यादिति वाच्यम्। तत्र वैजात्येन साङ्कर्यबाधितेन गतेः असम्भवात्। साङ्कर्यं च आकाङ्क्षाद्वयज्ञान-अव्यवहितोत्तर-शाब्दबोधे सामानाधिकरण्यस्य एकैक-आकाङ्क्षाज्ञानोत्तर-शाब्दबोधे परस्परव्यावृत्तत्वस्य सत्त्वेन बोध्यम् इति दिक्।

**VV-G. 3.7.6: द्विविधबोधे हेतुताद्वयं कल्पनीयमिति**। ननु पर्यायघटित-वाक्यजन्यबोधे व्यभिचारवारणाय कारणानन्तर्यस्य कार्यतावच्छेदकत्वम् अवश्यं वाच्यम्। तथाच सति विषयत्वस्य तथात्वे प्रयोजनाभावः। अत एव भेदान्वयबोध-विचारप्रसङ्गे उक्त-अभेदान्वयबोधे तथाविधानुपूर्वीत्यादि-वक्ष्यमाणमपि सङ्गच्छते इति कथं कारणद्वैविध्यमिति ? न च उपस्थिति-विशिष्ट-ज्ञानत्वेन तत्रत्यसकल-आकाङ्क्षाज्ञानानम् एकरूपेणैव कारणत्वं लाघवात् उपेयम्। वैशिष्ट्यञ्च स्वविशिष्ट-स्वत्वावच्छिन्न-विषयतानिरूपित-विषयताकत्व-सम्बन्धेन। वैशिष्ट्यञ्च (१)स्वीय-नीलत्वावच्छिन्न-विषयता-प्रयोजक-वृत्तिनिष्ठ-विषयतानिरूपित-विषयत-अवच्छेदकता-पर्याप्त्यधिकरण-आनुपूर्व्यवच्छिन्न-विषयता-निरूपित-स्वत्वावच्छिन्न-

विषयतानिरूपितत्व-(२)स्व-कालीन-उपस्थितीय-घटत्वावच्छिन्न-विषयताप्रयोजक-वृत्तिनिष्ठविषयतानिरूपित-विषयतावच्छेदकता-पर्याप्त्यधिकरण-आनुपूर्व्यवच्छिन्नत्व-उभयसम्बन्धेन बोध्यम्। तथा सति कारणानन्तर्यस्य कार्यतावच्छेदकत्वाभ्युपगमे प्रयोजनाभावात् कार्यद्वैविध्येन दुर्वारमेव कारणताद्वैविध्यमिति वाच्यम्। तत्तद्वर्णत्वेन पदार्थान्तरावगाहि-वृत्तिज्ञानीय-विषयावच्छेदकत्वस्य भ्रमात्मक-आकाङ्क्षाज्ञान-विषयत्वावच्छेदकत्वस्य च विशिष्टानुपूर्व्याम् अभावात् यत्किञ्चिदेकधर्मावच्छिन्न-विषयताकत्वस्य अकारणज्ञानेऽपि सत्त्वात् साक्षात्परम्परा-साधारण-निरूप्य-निरूपकभावानभ्युपगमे वृत्तिविषयतानिरूपित-वर्णत्वव्याप्यधर्मावच्छिन्न-स्वप्रयोजक-विषयतात्वव्यापक-स्वत्वावच्छिन्नविषयताकत्वादिसंसर्गस्य अपि उक्तेः असम्भवात् स्वावच्छेदकावच्छिन्नत्व-सम्बन्धेन स्वनिरूपितविषयतावत्त्वस्य व्यापकताघटक-संसर्गस्य असम्भवात् 'नीलपटवान् घट' इति समभिव्याहारज्ञानस्य कारणत्ववारणाय सामनैयत्योपादाने च तादृशनिरूप्य-निरूपकभाव-अभ्युपगमेऽपि घटादिपद-घटकवर्णविषयता-अन्तर्भावेण व्यभिचारप्रसङ्गेन संसर्गासम्भवात् कथञ्चिन्निवेशस्य सम्भवेऽपि अप्रामाण्यज्ञानाभाव-निवेशानुरोधेन कारणतावच्छेदक-भेदस्य उपेयत्वात् नीलत्वावच्छिन्न-विषयतानिरूपित-तादात्म्यत्वावच्छिन्न-विषयता-निरूपित-घटत्वावच्छिन्न-विषयताकत्वस्य एकस्य कार्यतावच्छेदकत्वस्यापि च सम्भवात्। न चैवं कालिकेन तादात्म्ये नीलावगाहिशाब्दबोधस्य आपत्तिः। तस्यापि उक्तरूपवत्त्वात् आधेयत्वसम्बन्धावच्छिन्नत्व-उपादाने तादात्म्यसंसर्गकबोधासङ्ग्रहे इति वाच्यम्। तादात्म्यत्वावच्छिन्न-विषयतायाम् आधेयत्व-सम्बन्धातिरिक्त-सम्बन्धानवच्छिन्न-नीलत्वावच्छिन्न-विषयत्व-अनिरूपितत्व-तादात्म्य-सम्बन्धातिरिक्त-सम्बन्धानवच्छिन्न-तादृशविषयत्व-अनिरूपितत्व-उभयाभावस्य विवक्षितत्वात् नीलत्वावच्छिन्न-विषयतायामेव वा आधेयत्व-सम्बन्धातिरिक्त-सम्बन्धावच्छिन्नत्व-तादात्म्यत्वावच्छिन्नसंसर्गत्व-अनिरूपितत्व-उभयाभावस्य विवक्षितत्वात्। स्वरूप-सम्बन्धातिरिक्त-सम्बन्धानवच्छिन्नत्वस्य तादात्म्यविषयतायां निवेशेन च कालिकेन तादात्म्यप्रकारकबोधश्च वारणीयः। यत्तु स्वस्वरूपि-स्वरूपादि-परम्परासम्बन्ध-घटकाद्यस्वरूपसंसर्गतायाः स्वरूपत्वमात्रावच्छिन्नत्वे तत्संसर्गकबोध-सङ्ग्रह-प्रसङ्गः। तादात्म्यत्वावच्छिन्नविषयतानिरूपित-स्वरूपत्वावच्छिन्नविषयता-निरूपित-घटत्वावच्छिन्नविषयत्वोपादाने च तादात्म्यसंसर्गकबोध-असङ्ग्रह इति। तन्न। तादात्म्यविषयतायां घटत्वावच्छिन्न-विषयतानिरूपित-स्वरूपत्वावच्छिन्न-संसर्गत्व-अनिरूपितत्व-तादात्म्यत्वावच्छिन्न-संसर्गताभिन्नत्वोभयाभावस्यापि विशेषणीयत्वात्। परम्परासंसर्गस्थले च एकसंसर्गत्वस्य प्रकारत्व-विशेष्यत्व-उभयानिरूपितत्वादिति चेत् ? न। कारणानन्तर्यमात्रस्य कार्यतावच्छेदकतायाः प्रागेव निराकरणात्

विषयत्वस्य अवच्छेदकत्वे च द्वैविध्यस्य दुष्परिहरत्वात् उक्तप्रकारेण कार्य-कारणयोः अनुगमकधर्मस्य कथञ्चित्सम्भवेऽपि अन्वयव्यतिरेकतानवच्छेदकस्य तस्य अन्यतमत्वादिवत्तादृशधर्मान्तरेण अकार्य-कारणाभिमतानुगमसम्भावना प्रयोजकत्वेन कार्यानुपलब्धिलिङ्गकानुमानभङ्ग-भीत्यन्यथासिद्धि-निरूपकत्वस्य एव स्वीकरणीयत्वात्। यद्वा उक्तक्रमेण द्वैविध्यासम्भवं मनसि निधाय एवम् इत्यादिना दूषणान्तरस्य उपक्रमः। यथा च कारणानन्तर्यमात्र-कार्यतावच्छेदकत्व-पक्षस्य यथाकथञ्चिन्निर्वाहः तथाग्रे वक्ष्यते।

**उक्तस्थलेऽपि तत्संसर्गकबोधस्यैव** उपगमादिति। अथ अभेदस्य बुबोधयिषितस्य प्रकारतया भानप्रयोजकतया क्लृप्तम् अस्ति चेत् साकाङ्क्षपद-वृत्तिज्ञानजन्योपस्थितिविषयत्वं कथं संसर्गतया भानम् अभ्युपेयम् ? तस्य वृत्तिज्ञानस्य हि प्रमात्वं वाचकादपि शक्तिभ्रमात् अर्थप्रत्ययदर्शनात् न अपेक्षणीयं, येन विशेषणविभक्तेः शक्तिज्ञानस्य अप्रमात्वे तत्कृतः कश्चिद्विशेषः स्यात्। न हि कस्यचिदभ्युपगमः कश्चित्सामग्र्यां सत्यां कार्यस्योत्पत्तिं रोद्धुमिष्टे। अत एवोक्तं प्राक् "**सर्वमत एव**" (VV-3.7.6) इत्यादिशङ्का ग्रन्थे। न च वाच्यम् अभेदसंसर्गकशाब्दं प्रति एव उक्तसमभिव्याहारज्ञानस्य कारणत्वम् इति। आकाङ्क्षाज्ञानविरहात्सामग्र्येव नास्ति इति फलस्वरूपानिर्णये प्रागेव द्रागेव तस्य गृहीतुम् अशक्यत्वात्। विपरीते विनिगमकाभावाच्च। संसर्ग-संसर्गाविषयत्व-प्रयुक्तं लाघवमेव फलस्वरूपनिर्णयमुखेन विनिगमकम् इत्यपि न वाच्यम्। तथा सति ततोऽपि लाघवात् समवायेन नीलप्रकारकबोधे वह्निप्रकारकबोधे च 'नीलो घटः' 'संयोगेन वह्निमान् पर्वतः' इत्यादिसमभिव्याहारज्ञानानां कारणत्वप्रसङ्गात् प्रवृत्त्याद्यर्थं बुबोधयिषितस्य घटे नैल्यस्य पर्वते वह्नेश्च तावतैव हि प्रतिपत्तेः निर्वाहः। तादृशकारणविरहादेव च अन्यत्र आपत्तेः अभावात्। नीलपदाश्रयस्य मतुपः संयोगस्य उपस्थितत्वेऽपि तस्य अकिञ्चित्करीकरणात्। न च व्युत्पत्तीनां विरोध इति शङ्क्यम्। लाघवसहकृतग्राहकेण उक्तकार्यकारणभावे सिद्धे तदनुसारेणैव व्युत्पत्तेः निर्वाच्यत्वात्। कथम् अन्यथा न **नामार्थे**त्यादिव्युत्पत्ति-विरोधम् उद्भाव्यैव विभक्त्यर्थसंसर्गत्वखण्डने निर्वृत्तो भवति प्रकारतावादीति। प्रामाणिकम् अर्थम् अन्यथाकर्तुं न शक्नोति व्युत्पत्तिसहस्रमपि इति अभ्युपेयमिति चेत् ? उच्यते। वाक्येन एकेन हि धर्मान्तरसम्बद्धत्वेन व्यावृत्तो धर्मी एको भवति प्रतिपिपादयिषित इति। व्यावर्तकश्च धर्मि-धर्मान्तरसम्बन्धोऽपि तथा। स च यावद्भिरेव पदैः शक्यप्रतिपादनः तावत्स्वेव पदेषु व्यावृतो भवत्येव प्रतिपादयिता। यतो न्यूनमधिकं च प्रतिपादयन् भवति गर्हितः। धर्मान्तरसम्बन्धश्च प्रसिद्ध-अनेकधर्म-धर्मि-तादात्म्यमुखेन कथञ्चिद् अनेकधर्म-प्रतिपत्ति-रूपफल-

प्रतिसन्धानेन स्वरसतो वा क्वचित्प्रतिपिपादयिषितः क्वचिच्च अर्थान्तरद्वारा। यतः सर्पत्वसम्बद्धं पुरोवर्तिनं नैल्यसम्बद्धं घटादिकं वह्निसम्बद्धं पर्वतादिकं च प्रतिपिपादयिषन् व्यावर्तकसर्पत्वादि-सम्बन्ध-प्रतिपत्तिरूप-मुख्यफलायोगं परिहरन् वाक्यं प्रयुङ्क्ते व्युत्पन्नसमाजः 'सर्पोऽयं', 'नीलो घटः', 'वह्निमान् पर्वतः' इति। कदाचित् अस्मिन् सर्पत्वं, घटे नैल्यं, पर्वते वह्निः इत्यादिकं न जात्वपि सर्पत्वमयं, नैल्यं घटो, वह्निः पर्वत, इति। न वा सर्पम् अयं, नीलं घट, इत्यादि नापि च 'सर्पायं', 'घटो नील' इत्यादि न च 'रज्जुरियं, सर्पः स, 'पीतो घटः', 'नीलः पट' इत्यादि। तत्र च कारणगवेषणे क्रियमाणे सर्पत्वादेः आश्रयासंसृष्टस्य सर्पादिशब्देन सम्बन्ध-अग्रहः। साश्रयस्य उपस्थितस्य तस्य आश्रयापेक्षस्य आश्रयातिरिक्तानपेक्षस्य च उपस्थिताश्रय-परित्यागेन आश्रयान्तरेण अन्येन वा सम्बन्धानौचित्यम्। सम्बन्धस्य च कस्यचित् तत्त्वेन अभाने बोधस्य समूहालम्बन-वैलक्षण्यानुपपत्तिः। यावत्पर्यन्तस्य भानाभ्युपगमेन अनुपपत्तिपरिहारो बुभुत्सित-सम्प्रतिपत्तिश्च तदधिकभानाभ्युपगमे गौरवं च कारणम् उन्नीयते। यथा पुरोवर्तिनि सर्पत्वसम्बन्धो बुबोधयिषितः सर्प इति शब्दे प्रयुक्ते। ततश्च उपस्थितस्य साश्रयस्य निराकाङ्क्षतया स्वतस्तत्र समवायेन भानासम्भवात्, आश्रयस्य च लब्ध-धर्मकतया अनाकाङ्क्षित-धर्मयोगस्य तादात्म्येन तत्र भाने बाधकाभावात्। तावन्मात्रभानेनापि जातनिर्वाहो न तादात्म्यप्रतियोगिक-स्वरूपसम्बन्धभानम् अपेक्षते इति तद्भानाभ्युपगमे गौरवम्। एवं सर्पादिशब्दात् स्वतन्त्रोपस्थितस्य सर्पत्वस्य वह्नेश्च यदि पदार्थान्तरभानम् अनपेक्ष्य पुरोवर्त्यादिना स्वतः समवायादिभिः भवेत् संसृष्टतया भानम्। सर्पत्वमयं, वह्निः पर्वत, इत्यादौ अपि स्यात्। सम्बन्धभानस्य उपस्थापकपदानपेक्षस्य एव अभ्युपेयत्वात्। उपस्थितस्य उपस्थितान्तरविशेषकाभावेन सम्बन्धभानप्रसङ्गे तदर्थमपि पदस्य अपेक्षितत्वे अनवस्थापातात्। उपस्थापकापेक्षाया आवश्यकत्वे वा अन्योपस्थापननियोगोर्वरिता प्रथमैव हि स्यात् तथा। न हि किञ्चिद्विशेष उपलभ्यते येन तादात्म्यस्य सा स्यात् तथा न अन्येषां सम्बन्धानाम्। तादात्म्यस्य असंसर्गकत्वपक्ष एव स्यात् विशेषोपलम्भः। तस्य च संसर्गाभावान्योन्याभाव-वैलक्षण्यानुपपत्त्या निरस्तत्वात्। असंसर्गत्वे तस्य तत्त्वेन भानासम्भवेन तत्संसर्गान्तरोपस्थापक-पदापेक्षाप्रसङ्गा-पाताच्च पदार्थान्तरभानापेक्षायां च आधेयत्वरूपस्य आश्रयतादात्म्यरूपस्य वा तस्य उपस्थापकानपेक्षस्य भाने हि उक्तस्थलेऽपि स्यादेव भानम्। अन्यस्य च उपस्थापकविशेषस्य अकल्पने तु उक्तरीत्या प्रथमैव स्यात् तथा इति। 'सर्पत्वम् अयम्', इत्याद्यप्रयोगबीजं दुर्लभं स्यात्। अत उक्ततादात्म्यभान-अन्यथोपपत्ति-बहिष्कृत-तादात्म्यभानाश्रयोपस्थापकतया मतुबाधेयत्व-उपस्थापकतया सप्तम्येव

अवापोद्वापाभ्यां भवति सिद्धा। तथा सति तदभावात् बुभुत्सितार्थप्रतिपत्त्यसम्भवात् उक्तवाक्यानाम् अप्रयोगः। 'पर्वतो वह्निमान्', 'पर्वते वह्निः' इत्यादीनां प्रयोगः तत्सद्भावेन बोधसम्भवात् उपपद्यते इति एतदपि बीजम्। एवं यदि तादात्म्योपस्थापने विनियोगो भवेत् विशेषणविभक्तेः तदा ततः सा एव तत्र विनिवर्तेत न या स्यात् तत्र शक्ता। गृहीतशक्तिश्च स्यात् तेन तेन असाधारणेन सुत्वादिरूपेण प्रथमादिः सर्वा एव विभक्तिः तत्र तत्र इति। 'नीलं घटः' इत्यादि अप्रयोगबीजस्य दुर्लभत्वं स्यात्। द्वितीयया अपि तादात्म्योपस्थापनेन बुभुत्सितप्रतिपत्ति-सम्पादनस्य सम्भवात्। तस्मात् निर्विभक्तिकप्रयोगस्य असाधुत्वात् अर्थविशेषस्य च अनुपस्थापनीयत्वात् प्राप्तासु सर्वासु विभक्तिषु सर्वेषु वचनेषु अर्थविशेष-प्रतिपादनानुबद्ध-प्रयोक्तव्यभावविशेष्यवाचक-पदोत्तरविभक्तिविशेषस्य उपस्थिततया विशेषान्तरस्य च अनुपस्थिततया विशेषणवाचक-पदोत्तरमपि स एव प्रयोक्तव्यतया बुद्धौ विपरिवर्तते इति। विशेष्यपद-विभक्तिपरतन्त्रा विशेषणविभक्तिस्थितिः न अर्थोपस्थापनपरतन्त्रा विकरण-आगमादिवद् इत्यपि च बीजम्। एवं सर्पाद्युप-स्थापकानाम् आवश्यकत्वं रज्ज्वादिपदानां च अनर्थकतामपि। एवञ्च क्वचिद्विकरणादितो जायमानापि उपस्थितिः अन्यथासिद्धतया यथा विज्ञायते तथैव विशेषणविभक्तिजन्यापि क्वाचित्की तादात्म्योपस्थितिः अपि इति समभिव्याहार-बहिर्भूतपदजन्य-उपस्थितिवत्-तदुपस्थितेः अपि न प्रकारतया भान-प्रयोजकत्वम्। अन्यथासिद्धतया गृहीतस्य च उपस्थित्यन्तरस्य च असंसर्गतया भानप्रयोजकत्वमिति न अनियमप्रसङ्गः। उपस्थितस्यापि संसर्गतया भानाभ्युपगम इत्यलम्।

**इति दिगिति।** एतदुक्तेः अभिप्रायस्तु न नो विद्वेष इति पङ्क्तिव्याख्यानावसरे स्फुटीभविष्यति।

**VV-G. 4.1.1: कर्मत्वातिदेशादिति।** धात्वर्थतावच्छेदक फलशालित्व-रूपकत्वस्य बाधितत्वादिति भावः। न च तादात्म्यफलतावच्छेदकान्यतर-सम्बन्धेन धात्वर्थतावच्छेदकफलान्वयित्वम् एव अस्तु कर्मत्वम्। तच्च स्तोकादौ अपि अस्त्येव इति। इत्थमेव द्वितीयां तत्रोपपादयन्ति प्राचीनवैयाकरणा इति वाच्यम्। 'स्तोकं तिष्ठति' इत्यादौ धात्वर्थतावच्छेदकफलस्य एव अभावात् सर्वत्र फलम् अन्तर्भाव्य धात्वर्थनिर्वचने सकर्मकत्व-असकर्मकत्वयोः फलव्यापारयोः अविरोध-सामानाधिकरण्याभ्यां कथञ्चिन्निर्वाच्यत्वसम्भवेऽपि गौरवस्यैव बाधकत्वात्। निरुक्तकर्मत्वस्यैव तत्रापि स्वीकारे स्तोकादेः कारकत्वापत्त्या तत्र लकारापत्तेः 'स्तोकः पच्यते', 'सुखम् आस्यते' इत्यादापि स्यादिति भावः।

**VV-G. 4.1.3:** अर्थबोधस्वरूपयोग्यता-प्रयोजिकाकाङ्क्षाशालित्वेन एवेति। करणाद्यर्थबोधकतया अर्थबोधकपचादिसमभिव्याहृत-घञः घञ्त्वेन अविसम्वादिन्यां भगवदिच्छायां विषयत्वासम्भवेन शक्तिमत्त्वरूपसार्थकत्वस्य तत्रैव अर्थबोधक-अविवक्षास्थलीय-आख्यतस्यापि वर्तमानत्वादिबोधजनकतया आख्यातत्वादिना विसम्वादभयेन भगवदिच्छायाम् अविषयत्वस्य एव वाच्यतया असत्त्वप्रसङ्गात्। भगवदिच्छीयविलक्षणविषयतावच्छेदकत्वं शक्तिमद्वृत्तिप्रत्ययत्वव्याप्यधर्मवत्त्वं वा? यदि सार्थकप्रत्ययत्वम् उच्येत घञोऽपि करणाधिकरणादिषु अनुशिष्टत्वेन सार्थकत्वं स्यादिति उक्ताकाङ्क्षापर्यन्तानुधावनं कृतम्। तथा च "अकर्तरि च कारके संज्ञायाम्" (पा. ३.३.१९) इति। अस्यैव करणादिषु घञोऽनुशासनत्वेन पाकादिशब्दानाम् असंज्ञात्वेन पच-धातुसमभिव्याहृत-घञ्-पदत्वस्य आकाङ्क्षात्व-विरहात् न पच-धातूत्तरसमभिव्याहृत-घञः सार्थकत्वम्। रागादिशब्दानां संज्ञात्वेन धर्मविशेषावच्छिन्न-रञ्जन-करणाद्यर्थप्रत्यायकतया एकत्वाद्यन्वित-तादृशार्थबोध-स्वरूपयोग्यतायां स्वादिपद-घञन्त-समुदायसमभिव्याहारस्यैव आकाङ्क्षात्वेन तत्रापि घञो न सार्थकत्वसम्भवः। यदि तस्य योगरूढत्वं तदा कर्मानुशिष्ट-क्तादिवत्-सार्थकत्वम् इष्टमेव। यत्तु रूढ्यर्थपदार्थान्तरान्वयप्रयोजकाकाङ्क्षया एव योगार्थभानस्यापि स्वीकारे क्षतिविरहेण आकाङ्क्षान्तरकल्पने गौरवात् तत्रापि नास्ति एव सार्थकत्वम्। अतएव 'शोभनं पङ्कजेन' इत्यादयो न प्रयोगा इति। तन्न। 'शोभनं गतेन' इत्यादिवत्तस्यापि अङ्गीकरणीयतयत्वात्। अत्र हि गमन-प्रकारतानिरूपित-कर्मत्वविषयताक-शाब्दबुद्धित्वावच्छिन्नं प्रति गमधातु-क्त-प्रत्यय-समभिव्याहार-ज्ञानत्वेन कारणत्वस्य पदार्थोपस्थिति-तात्पर्यज्ञानादि-कारणकलापे निर्विभक्तिकगतादिपदाद् अव्युत्पन्नानां शाब्दबोधप्रसङ्गभयेन वक्तुम् अशक्यत्वात्। एकत्वाद्यन्वित-गमनकर्मादि-शाब्दबोध-कारणतावच्छेदक-विषयितानिरूपकश्च समभिव्याहारः क्तान्त-समुदाय-स्वाद्योः एव। तस्य च क्त-प्रत्यये विरहात् साधु 'गतो ग्राम' इत्याद्यपि न स्यात्। तस्मात् आकाङ्क्षाज्ञान-जनकतावच्छेदक-विषयितानिरूपकत्वेन अर्थबोधस्वरूपयोग्यता-प्रयोजकत्वम् उक्तग्रन्थतात्पर्यविषयो न अङ्गीकरणीयः। किन्तु तत्तत्पदार्थबोध-स्वरूपयोग्यतायां शक्तिप्रयोजिका। यद्यत्पदार्थयोः परस्परम् अन्वयः अन्वित-तत्तदर्थबोध-स्वरूपयोग्यतायां तत्तत्पद-समभिव्याहारः प्रयोजक इति अनुभवसाक्षिक-प्रयोज्य-प्रयोजक-भावान्तरम् अवलम्ब्यैव **अर्थबोधस्वरूपयोग्यता** इत्यादि-उक्तिरित्येव स्वीकरणीयम्। तथा च पङ्कजादिपदस्थले धात्वर्थ-डप्रत्ययार्थयोः अन्वये तयोः समभिव्याहारस्यापि तादृशस्वरूपयोग्यताप्रयोजकतया उक्तप्रयोगस्य दुर्वारत्वम्। यदि च उक्तप्रयोजकत्वपक्षेऽपि रूढिस्थले अवयवद्वय-समभिव्याहारस्य प्रयोजकत्वं न

आनुभविकं किन्तु केवलयौगिकस्थल एवेति चेदाग्रहः, तदा मास्तु उक्तप्रयोगस्य इष्टता। किञ्च सामान्यतो घञो निरर्थकताग्रहो दुराग्रह एव। "संज्ञायाम्" (पा.३.३.१९) इति प्रायिकम्। तेन 'लाभो लब्ध' (महा.भा.(पा.३.३.१९)) इत्यादिप्रयोगदर्शनाद् इत्यादिग्रन्थपर्यालोचनया केवलयौगिककरणाद्यर्थक-घञन्त-शब्दसाधुत्वावगमात् इति। अत्र च भाव-क्तान्त-गम्यादिधात्वर्थ-विशेषण-स्तोकादि-पदोत्तरं द्वितीया एव। गम्यादिधातु-समभिव्याहृत-क्त-प्रत्ययस्य काल-कर्तृ-कर्मा-द्यर्थकताया दृष्टत्वात्। तत्समभिव्याहारस्य उक्तयोग्यताप्रयोजकत्वात्। अकर्मकधातु-समभिव्याहृत-क्तप्रत्ययस्यापि न भावमात्रविहितत्वम्। अतीतकाला-द्यर्थस्य तत्रापि सत्त्वादिति, तस्यापि अस्त्येव निरुक्तसार्थकत्वं भावविहित-ल्युडादीनामपि करणाद्यर्थक-तत्प्रत्यय-समानानुपूर्वीकत्वात् भवति सार्थकत्वमेव। क्तिन्-प्रभृतेः भावमात्रविहितस्य नास्त्येव कथञ्चिदपि सार्थकत्वमिति बोध्यम्। अथ पाकाद्यन्वित-एकत्वाद्यर्थविषयक-शाब्दबोध-स्वरूपयोग्यतां प्रति घञन्तसमुदाय-निष्ठ-स्वादिसमभिव्याहारस्य प्रयोजकतया तस्य समुदायानतिरिक्ते घञ्प्रत्ययेऽपि सत्त्वेन घञः सार्थकत्वं दुर्वारमेव इति चेत् ? न। यद्रूपावच्छिन्ने यद्रूपावच्छिन्ना-व्यवहितोत्तरत्वमर्थबोधस्वरूपयोग्यताप्रयोजकं तद्रूपावच्छिन्नान्तत्वं तद्रूपावच्छिन्नस्य सार्थकप्रत्ययान्तत्वम् इत्यस्य विवक्षितत्वात्। न च सुत्वावच्छिन्ने पचि-अव्यवहितो-त्तर-घञ्-अव्यवहितोत्तरत्वस्य उक्तस्वरूपयोग्यता-प्रयोजकत्वे तद्घटकतया घञ्प्रत्यये पचि-अव्यवहितोत्तरत्वस्यापि प्रयोजकत्वं दुर्वारमित्युक्तदोषतादवस्थ्यम् इति वाच्यम्। विशिष्टनिष्ठप्रयोजकताया विशेषणे प्रयोजनविरहेण अस्वीकारात्। प्रयोजकत्वान्तरस्य च अकल्पनात् उक्तदोषविरहात्। यत्तु अव्यवहितोत्तरत्व-सम्बन्धावच्छिन्न-यद्रूपावच्छिन्न-विषयतानिरूपित-यद्रूपावच्छिन्नविषयत्वं विशिष्टार्थ-बोध-स्वरूपयोग्यतात्मक-जनकता-अनतिरिक्तवृत्ति तद्रूपावच्छिन्नस्य तद्रूपावच्छि-न्नान्तत्वं सार्थकप्रत्ययान्तत्वम्। तथाच पच्धातुत्वावच्छिन्न-विषयतानिरूपित-घञ्त्वावच्छिन्न-विषयताया एकत्वान्वितपाकार्थबोध-स्वरूपयोग्ये स्वादि-अविषयक-ज्ञानेऽपि सत्त्वात् पाकाद्यर्थबोध-स्वरूपयोग्यतानतिरिक्तवृत्तित्वेऽपि तस्याः पाक-रूपार्थस्य विशिष्टानात्मकत्वात्। वैशिष्ट्यस्य विशिष्टघटकस्य आकाङ्क्षा-प्रयोज्यस्य विवक्षितत्वात् न उक्तदोषसम्भव इति चेत् ? न। गमनान्वितकर्मत्वबोधे गमधातु-क्त-प्रत्ययसमभिव्याहार-ज्ञानत्वेन कारणत्वस्य अनुपद-निराकृततया गतादिशब्दस्य सार्थकप्रत्ययान्तत्वाभावप्रसङ्गात्। यदि च व्यभिचारवारणाय गत-इत्यादि-आनुपूर्वीज्ञानस्य तादृशज्ञानाव्यवहितोत्तरत्वम् एव कार्यतावच्छेदकं, तदा स्वाद्यविषयकगतादिशब्दज्ञात् न उक्तशाब्दबोधापत्तिः। निरुक्त-आनुपूर्व्यादि-ज्ञान-अनुत्तरोक्त-शाब्दबोधस्य अलीकत्वात्। तदुत्तरस्य च तादृश-ज्ञानरूप-

कारणविरहेण आपत्त्यसम्भवात्। न च उक्तानुपूर्वीज्ञानस्य कारणत्वे उक्त-कार्य-कारणभावे मानाभाव इति वाच्यम्। विशेषकार्यकारणभावसत्त्वेऽपि शाब्दत्वावच्छिन्नं प्रति शब्दत्वेन घटशाब्दत्वावच्छिन्नं प्रति घटोपस्थापक-पदत्वादिना सामान्यतः प्रवृत्त्याद्यर्थं कार्यकारणभावो यथाहि उरीक्रियते तथैव उक्तस्यापि अङ्गीकरणीय-त्वाद् इति विभाव्यते, तदा एषा अपि रीतिः सम्भाव्यते एव।

वस्तुतस्तु यद्रूपावच्छिन्न-अव्यवहितोत्तरत्व-सम्बन्धावच्छिन्न-विषयता-निरूपित-यद्रूपावच्छिन्न-विषयत्वे स्वावच्छेदकधर्मावच्छिन्न-निरूपित-वृत्तिज्ञान-जन्योपस्थित्यभावप्रयुक्तफलोपधायकत्वाभाव-समानाधिकरणं तादृशोपस्थितिघटित-सम्बन्धावच्छिन्नं वा यदर्थबोधजनकत्व तदवच्छेदकत्वम् अस्ति तद्रूपावच्छिन्नस्य। तद्रूपावच्छिन्नान्तत्वं सार्थकप्रत्ययान्तत्वम् इत्युक्तौ न कोऽपि दोषः। अत्र च पक्षे न प्रथमपक्षवदनतिप्रामाणिकप्रयोज्य-प्रयोजकभाव-कल्पनाया अपि प्रसङ्ग इति। यत्तु भावाख्यातस्य एव विवक्षास्थले अर्थबोधकत्वम् अविवक्षायां तदभावः, ल्युट्-प्रत्ययादीनां भावविहितानां न कुत्रापि कस्यापि अर्थबोधकत्वं किन्तु करणाद्यनु-शिष्टानाम्। तथाच भावल्युडाद्यन्तस्थस्य भावाख्यातविलक्षणत्वेन तद्वत्तत्र क्रियाविशेषणपदात् द्वितीया न अभ्युपेया इति। तत्रोक्तसार्थकप्रत्ययान्तत्व-प्रसङ्गो दोष एवेति। अतएव **शब्दशक्तिप्रकाशिकायां** सह भावाख्यातेन भावस्थलेऽपि काल-बोधकेन क्त-प्रत्ययेन घटिताः 'साधु गतं / चकितं / हसितम्' इत्यादि प्रयोगा एव उदाहृता इति। तन्न। उक्तदोषस्य द्वितीयान्तविशेषण-घटितप्रयोग-सद्भावे अभ्युपगम-पराहतत्वात्। अनभ्युपगमे तु स्वोत्तरवर्तिप्रत्यय-सजातीय-प्रत्ययप्रयोज्य-विषयता-निरूपित-स्वार्थविषयताक-शाब्दबोधजनकता-अवच्छेदक-आकाङ्क्षाश्रय-प्रत्ययान्तत्वमेव सार्थकप्रत्ययान्तत्वम्। साजात्यं च स्ववृत्ति-आनुपूर्वीविशिष्टं यद्भावविहितत्वं तत्तदभावश्च एतदन्यतररूपेण। तथा च स्वाद्युत्तर-भावाख्यात-सजातीय-विवक्षास्थलीय-भावाख्यातार्थ-वर्तमानत्व-विषयता-निरूपित-स्वार्थविषयताक-बोधजनकतावच्छेदक-आनुपूर्वीमत्प्रत्ययान्तत्वस्य स्था-प्रभृतौ सत्त्वात् द्वितीया-उपपत्तिः। गम्याद्युत्तर-भावल्युडादिसजातीय-भावल्युडादि-प्रयोज्यविषयत्व-अप्रसिद्ध्या न तत्र गमि-प्रभृतेः सार्थकप्रत्ययान्तत्व-सम्भवः। कर्म-कर्त्राद्यर्थक-क्तादिप्रत्ययान्तानाम् अस्त्येव उक्तसार्थकप्रत्ययान्तत्वम् इति तत्र द्वितीयासम्भवः। भावविहितत्वं तु सूत्रविशेषादिबोधित-साधुत्वाश्रयत्वं, न तु धात्वर्थस्वरूप-बोधकत्वम्, इदानीं तदनभ्युपगमात्। अथवा भावविहितत्वेन प्रतिसन्धीयमानवृत्तित्व-विशिष्टार्थबोध-प्रयोजकाकाङ्क्षा-शून्यत्वं किञ्चिदर्थनिष्ठ-विषयत्वाप्रयोजकत्व-उभयाभावस्य सार्थकत्वात्मकत्वं वाच्यम्। भावाख्यातस्थले विवक्षायां सत्याम् उभयोः अभावात् अविवक्षायां तादृशाङ्काक्षाशून्यत्वस्य अभावात्

उभयाभावः भावकृतां ल्युडादीनां भावविहितत्वेन प्रतिसंहितत्वे ततोऽर्थबोधानुपधानात् धातु-ल्युट्समभिव्याहाररूप-आकाङ्क्षया अर्थबोध-अप्रयोजकत्वादिति। भावविहितत्वेन प्रतिसन्धीयमान-वृत्तित्वविशिष्टार्थबोध-प्रयोजिकाकाङ्क्षा-भावविहितत्व ग्रहेऽपि अर्थबोध-प्रयोजके भावाख्यात-क्तप्रभृतौ एव वर्तते, न ल्युडादौ इति, तत्र उभयस्यैव सत्त्वात् न सार्थकत्वम्। कर्मकर्त्राद्यर्थकानां तत्तदर्थविषयत्व-अप्रयोजकत्वविरहात् उभयाभावसत्त्वात् सार्थकत्वसम्भवः इति एषा दिक्।

**VV-G. 4.2.1: अन्यथा सुब्विभक्त्यर्थेति।** तिङर्थ-कर्तृत्वादेरपि प्रथमा-प्रकृत्यर्थ एव अन्वयस्य व्युत्पन्नत्वेन धात्वर्थे पाकादौ तदन्वयोऽपि न भवेत् एव, घञन्तसमुदायशक्त्यस्वीकार इति सुबिति तिङोऽपि उपलक्षकं वाच्यम्। **कर्मत्वादीनामिति पाकादौ** इति च षष्ठी-सप्तम्यौ निरूपितत्वमात्रपरे। न तु अन्यत्रेव प्रतियोगित्वानुयोगित्वबोधके। तेन कर्मत्वप्रतियोगिक-पाकाद्यनुयोगिक-अन्वयस्य शाब्दबोधविषयत्वेऽपि न क्षतिः। **प्रकृत्यर्थान्वितस्वार्थेति।** प्रत्ययानां स्वप्रकृत्यर्थान्वितार्थबोधकत्वम् इत्यर्थः। तेन धातोः घञन्तप्रकृतित्वेऽपि न क्षतिः। अथ किं नाम स्वनिरूपितप्रकृतित्वम्? न तावत् स्वाव्यवहितपूर्वत्वम्। आगम-विकरणादिना प्रत्यय-व्यवहितयोः प्रातिपदिक-धात्वोः सुप्-तिङादिप्रकृतित्वानुपपत्तेः। नापि स्वपूर्वत्वे सति आगमादिभिन्न-स्वपूर्व-पूर्ववर्तित्व-शून्यत्वम्। स्वाव्यवहितोत्तरवर्तिनि प्रत्ययान्तर-प्रकृतौ अतिप्रसङ्गवारणाय सत्यन्तम् इति विभक्ति-प्रकृतित्वस्यैव तादृशस्य निर्वाच्यत्वसम्भवेऽपि निरुक्तव्युत्पत्तेः प्रत्ययमात्र-विषयकत्वेन तस्य तद्ग्रहानुपयुक्तत्वात्। न च उक्तप्रकृतित्वं प्रत्ययसामान्य-निरूपितं सम्भवति। प्रकृति-प्राग्विहित-बहुजादिप्रकृतौ असम्भवात्। नापि स्वाव्यवहितपूर्वत्व-स्वाव्यवहितोत्तरत्व-अन्यतरवत्त्वम्। 'चैत्रः पचति' इत्यादौ पच-धातोरपि स्वादि-प्रकृतित्वापत्तेः इति। यत्तु व्युत्पत्तिद्वयम् अङ्गीकरणीयं प्रकृतिपूर्वत्वेन विहितप्रत्ययनिरूपितं स्वाव्यवहितोत्तरत्वगर्भम् उत्तरतया विहित-प्रत्यय-निरूपितम् अव्यवहित-पूर्वत्वगर्भमिति, तदपि क्विबन्त-प्रातिपदिक-प्रकृति-विभक्ति-प्रकृतित्वस्य धातोत्तरापत्तेः, क्विपोः लुप्तत्वात् न मनोरमम्। न च अव्यवहितपूर्वत्वेन प्रतिसन्धीयमान-अव्यवहितपूर्वत्व-शून्यत्वगर्भस्य उपादाने न उक्तदोष इति वाच्यम्। क्विपः अप्रतिसन्धानदशायां धातौ सुप्प्रकृतित्वापत्तेः इति चेत्? उच्यते। शाब्दबोधानुपधायके व्युत्पत्त्यप्रवृत्तेः। तत्प्रवृत्तिसमये च व्युत्पन्नानाम् उक्तस्थले क्विप्प्रतिसन्धाननियमात्। धातोः सुप्प्रकृतित्वविरहात् न सुपो धात्वर्थान्वित-स्वार्थबोधकत्व-प्रसङ्गः। यद्वा स्व-विधायकशास्त्र-जन्यबोधीय-स्वनिष्ठविषयता-निरूपित-अव्यवहितोत्तरत्व-अव्यवहितपूर्वत्वं-अन्यतरविषयता-निरूपित-विषयताश्रयत्वम् एव स्वप्रकृतित्वम्। प्रातिपदिकादेव च सुपो विधानात्।

प्रातिपदिकत्वस्य उक्तस्थले प्रतिसंहित-क्विबन्त एव सत्त्वात् न निरुक्तविषयता उक्तस्थले धातौ अस्तीति न उक्तदोषः। वस्तुतस्तु स्वनिष्ठ-विधेयता-निरूपित-उद्देश्यत्वमेव स्वप्रकृतित्वम्। विशेष्यविशेषणभाव-वैपरीत्येऽपि अन्तराव्यवहितोत्तरत्वादेः विषयत्वेऽपि च विलक्षणानुभवसाक्षिकस्य उद्देश्यविधेयभावस्य सर्वत्र प्रकृति-प्रत्यययोः एव सत्त्वात् न कोऽपि दोषः। अत एव सर्वनाम-अव्यय-सम्बन्धि-टि-अव्यवहितपूर्व-विहित-अकच्-प्रत्ययनिरूपित-प्रकृतित्वस्य न तयोः अनुपपत्तिः। न चैवम् अपि घटपदोत्तर-विभक्तिप्रकृतित्वं पटपदे दुर्वारम्। स्वनिष्ठ-सुप्त्वावच्छिन्न-विधेयता-निरूपित-प्रातिपदिकत्वावच्छिन्न-उद्देश्यतायाः तत्र सत्त्वात् इति वाच्यम्। स्ववृत्तित्वविशिष्ट-विधेयतात्वावच्छिन्न-निरूपकता-निरूपित-निरूप्यत्व-उपरागेण उद्देश्यत्वस्य तत्तत्प्रत्यय-प्रकृतौ एव सत्त्वोपगमात् तस्यैव च विवक्षितत्वात्। स्वविधायक-शास्त्रजन्य-बोधप्रयोज्य-प्रयोग-प्रयोजक-बोधीय-स्वनिष्ठ-विधेयता-निरूपित-उद्देश्यत्वस्य विवक्षितत्वात् वा। प्रातिपदिकात् "कर्मणि द्वितीया" (पा.२.३.२) इत्यादिशास्त्रजन्य-बोधप्रयोज्यं प्रयोगात् प्राक् घटपदात् "कर्मणि द्वितीया" (पा.२.३.२) इत्यादि-विशेषार्थोपरक्तज्ञानं सर्वत्र अभ्युपेयम् इति, उक्तोद्देश्यत्वस्य पटपदे प्रसक्त्यभावात्। अनुवादस्थले च वक्तृपुरुषीय-तादृशज्ञानम् आदायैव तत्सङ्गमनीयम्। यद्वा अभियुक्तपुरुषीय-प्रकृति-व्यवहारविषयत्वमेव तत्। व्यवहारस्यास्य इयं प्रकृतिः इत्याकारकत्वेनैव प्रवेशः। अतो न अन्योन्याश्रय इति शब्दशक्त्यादि-उक्तप्रकृतित्वस्य तत्तत्प्रत्यय-निरूपितत्वाभावेन प्रकृते न उपयोग इति दिक्।

अथ किं नाम प्रकृत्यर्थत्वम्। यदि प्रकृति-वृत्त्युपस्थाप्यत्वं तदा कर्तृ-कर्माद्यर्थक-कृदन्त-नाम्नां वृत्तिविरहेण तत्र उक्तव्युत्पत्ति-अप्रवृत्तिः स्यात्। न च भाव-कृदन्तानाम् इव समुदायशक्तिः कुतः तेषां न उपेयते इति वाच्यम्। एकैक-कृत्समभिव्याहृत-अनन्तधातुघटित-कृदन्तसमुदाय-आनुपूर्वीणाम् अनन्तत्वेन तदवच्छिन्नानाम् अनन्तशक्तिकल्पने गौरवात्। लाघवेन कृदन्तस्थलेऽपि धात्वर्थ-भाग-भानस्य क्लृप्तशक्तिक-धातुतः एव स्वीकरणीयत्वात्। शक्त्यनुशासक-शास्त्रानतिक्रमेण कर्त्रादौ कृतां शक्तेः अभ्युपगमाच्च। पाचकादिपदात् पाककर्त्राद्यर्थ-बोधनिर्वाहात् समुदायशक्ति-अनभ्युपगमात्। न च एवम् अनुशासनानतिक्रमेण भावविहित-कृतामपि भावरूपोऽर्थः कुतो न अभ्युपेयते, लाघवस्य तुल्यत्वादिति वाच्यम्। भावशब्दो हि धात्वर्थपरिभाषितः। धात्वर्थश्च धातुत एव लभ्यते इति "अनन्यलभ्यो हि शब्दार्थ" इत्यनुसारात् धात्वर्थतावच्छेदकरूपेण उपस्थितयोः विरूपोपस्थितत्वविरहेण अन्वय-असम्भवाच्च। अनुशासनस्य यथाश्रुतार्थताया अतिक्रमणीयत्वात्। अनुगतानतिप्रसक्तस्य स्वतादात्म्य-अतिरिक्तस्य स्वरूपत्वादेः

दुर्वचतया तेन रूपेण भावस्य कृदर्थताया वक्तुम् अशक्यत्वाच्च। 'घटस्वरूपं', 'पटस्वरूपम्' इत्यादिस्वरूपांश-अनुगताकार-प्रत्ययानुरोधात् स्वरूपत्वम् अनुगत-अनतिप्रसक्तम् अखण्डोपाधिरूपम् उररीकृत्य तत्र तत्र ग्रन्थे अन्येषां स्वरूपस्य भावप्रत्ययार्थत्वोक्तेः सङ्गमनीया। यद्वा प्रागुक्तानुगत-तादात्म्य-विशिष्टे प्रमेयत्व-पदार्थत्वादिविशिष्ट एव वा भावकृतामस्ति शक्तिः। पाकादिपदात् पाकस्वरूपत्वेन पाकात्मकपदार्थत्वेन वा भावप्रतीतिः। तथापि कृतां भावार्थकत्व-बोधकानुशासनानां यथाश्रुतार्थेन अप्रामाण्यप्रसक्तिः। कृदन्तसमुदायस्य शक्त्यभ्युपगमम् अस्तु तत्रैव न यत्र रूढ्यर्थे योगसमवाय इति अभिप्रायः। स्वरूपार्थकत्ववादिनां समुदाय-शक्तिमतापेक्षया लाघवस्य अत्र व्यक्तत्वाद् युक्तत्वम् आकलय्य "**वदन्ति**" इत्यत्र उक्तसमुदायशक्तिमते अस्वरस-सूचनाय इत्यवधेयम्। प्रकृतमनुसरामः। यथाकथञ्चित् प्रकृतिप्रयोज्य-शाब्दबोध-विषयत्वं तत्तदाकाङ्क्षा-सम्पादकतया 'पचन्तौ' इत्यादौ शत्रन्त-समुदाय-प्रयोज्यविषयत्वस्य धात्वर्थेऽपि सत्त्वेन, तस्यापि प्रकृत्यर्थत्वापत्तिः इति चेत्? उच्यते। न हि प्रत्ययनिष्ठविधेयता-निरूपित-उद्देश्यतावच्छेदक-व्याप्यधर्मावच्छिन्ननिरूपित-वृत्तिप्रयोज्य-विषयत्वमिह विवक्षितम्। येन तादृशोद्देश्यतावच्छेदक-प्रातिपदिकत्वव्याप्य-पाचकपदाद्यानुपूर्वीविशेषावच्छिन्न-निरूपितवृत्तेः अप्रसिद्ध्या भवेत् उक्तदोषः। किन्तु निरुक्तोद्देश्यता-समानाधिकरण-निरूपकतानिरूपित-निरूप्यतावद्-वृत्तिप्रयोज्य-विषयत्वमेव पाचकादिपदे। तादृशी निरूपकता कृत्त्वव्याप्य-धर्मावच्छिन्ना एव। तन्निरूपित-निरूप्यतावद्-वृत्तिप्रयोज्य-विषयत्वस्य कर्तरि सत्त्वे पाककर्तर्यपि सत्त्वात्, विशिष्टस्य अनतिरेकात् न दोषः। घञन्तादिस्थले च तादृशी निरूपकता घञन्तसमुदायत्वावच्छिन्ना एव इति तत्रापि सङ्गतिः। धातुवृत्ति-निष्ठ-निरूपकता-निरूपित-निरूपकतायाः तादृशोद्देश्यता-सामानाधिकरण्य-विरहात् न अतिप्रसक्तिः इति। **प्रकृत्येकदेशार्थेऽपि** इति। घञन्तसमुदायस्य शक्तिम् अनभ्युपगम्य-उक्त-व्युत्पत्तिघटक-प्रकृत्यर्थत्वं प्रकृति-तदेकदेशार्थ-साधारणं निरुच्य तदाश्रयेण प्रत्ययार्थान्वयाभ्युपगम इत्यर्थः।

**VV-G. 4.2.2: एकत्र विशेषणत्वेनोपस्थितस्येति।** **एकत्रेति** सप्तम्यास्त्रलो वा विशेष्यत्वम् अर्थः। तस्य विशेषणत्वे अन्वयः। तृतीयार्थः तादात्म्यम्। तस्य उपस्थितत्वे अन्वयः। तथाच एकनिष्ठ-विशेष्यता-निरूपित-विशेषणत्वाभिन्न-उपस्थितिविषयतावतो नापरनिष्ठ-विशेष्यतानिरूपित-विशेषणत्वयोगो भवतीत्यर्थः। स च न चारुः। पचमानादिशब्दानां विशिष्टशक्तेः विरहेण पाकादीनाम् अन्यत्र विशेषणत्वेन उपस्थितत्वविरहात्। अपि तु वैशिष्ट्यं तृतीयार्थः। तस्य च उपस्थितपदार्थे अन्वयः। एवञ्च उक्त-विशेषणत्व-उपस्थितिविषयत्वयोः प्रयोज्य-प्रयोजकभाव-लाभेन निरुक्त-विशेषणत्वप्रयोजक-उपस्थितिविषयतावतः अन्यनिष्ठ-

विशेष्यता-निरूपित-विशेषणत्वयोगो न भवति इत्यर्थः। तथा च उक्तव्युत्पत्तेः यथा विशिष्ट-शक्तिस्थले व्यापार-विशेषणत्व-प्रयोजकविशिष्ट-उपस्थिति-विषयत्ववतः फलस्य अन्यत्र विशेषणतया अन्वयविरहेण प्रवृत्तिः, तथा ययोः एकविशेषणतया परस्य अन्वय एव तद्बोधकपदयोः आकाङ्क्षानियमः। तत्तदर्थोपस्थापक-पदद्वय-घटित-कृत्-तद्धितान्त-समासादिस्थलेऽप्यस्ति प्रवृत्तिः। अन्यत्रान्वय आकाङ्क्षा-विरहेण उपस्थिति-विषयताया एकत्र विशेषणत्वमात्र-प्रयोजकत्वादिति। पचमानादि-पदघटक-धात्वर्थस्य न सुबर्थकर्मत्वादौ अन्वय इति न कापि अनुपपत्तिः। अथ विक्लितिं जानानः 'तण्डुलं पचति' इत्यादौ व्यापार-विशेषणतया उपस्थिताया अपि विक्लितेः कर्मत्व-विशेषणत्वात् विक्लितेः एकत्वात् निरुक्त-व्युत्पत्त्यनुपपत्तिः। एवम् एकस्यापि किञ्चिदपेक्षया अपरत्वात् उक्तव्युत्पत्त्य-सम्भवः। न च उपस्थिति-विषयतायां स्वप्रयोज्य-प्रकारतानिरूपित-विशेष्यतावत् अन्यनिष्ठ-विशेष्यतानिरूपित-प्रकारताप्रयोजकत्वाभाव एव उक्तव्युत्पत्ति-तात्पर्यम् इति न उक्तदोषद्वय-सम्भव इति वाच्यम्। नियताकाङ्क्षा-अभिव्यक्त्यर्था हि उक्तव्युत्पत्तिः। सा च नियताकाङ्क्षा-ज्ञानात् उक्त-प्रयोज्य-प्रयोजक-भावनिर्णय एव सुग्रह इत्यन्योन्याश्रयात्। एवम् उक्तव्युत्पत्तिं विना एव आकाङ्क्षाग्रहे तत एव फलादेः व्यापारेण अन्वये नियमिते "सकृदुच्चरित" इत्यादिनियमेन उक्त-व्युत्पत्त्यर्थसिद्धौ तस्य अनिष्प्रयोजनत्वापत्तेश्चेति चेत् ? उच्यते। विषयता-विशिष्टोपस्थिति-विषयतायां स्वविशिष्टान्यविशेष्यतानिरूपित-प्रकारत्वप्रयोजकत्व-अभाव एव उक्तव्युत्पत्ति-तात्पर्यम्। प्राथमिक-वैशिष्ट्यं स्वतादात्म्य-स्वाश्रयत्व-उभयसम्बन्धेन। स्वाश्रयत्वञ्च स्वप्रयोजक-वृत्तिज्ञानीय-विषयता-निरूपित-विषयता-प्रयोज्य-विशेष्यता-निरूपितत्व-स्वप्रयोज्य-प्रकारता-निरूपित-विशेष्यता-प्रयोजकत्व-स्वरूपयोग्य-पदघटित-वृत्तिघटक-पदप्रयोज्यत्व-अन्यतर-सम्बन्धेन। द्वितीयवैशिष्ट्यञ्च स्वप्रयोजकवृत्तिज्ञानीय-विषयता-निरूपितविषयता-प्रयोज्यत्व-स्वप्रयोजकपदघटित-वृत्तिघटकपद-प्रयोज्यत्वान्यतरसम्बन्धेन। द्वितीया च वृत्तिः कृत्-तद्धितान्तादिरूपा। कृदन्तादीनाम् अन्यतमत्वेनैव तत्र प्रवेशः कार्यः। वृत्तित्वस्य अन्यादृशस्य दुर्वचत्वात्। उपस्थितीय-नीलादिविषयतायाः स्वविशिष्टा-न्य-घटविशेष्यतानिरूपित-प्रकारताप्रयोजकत्वस्य एव सत्त्वे नियमासम्भवः स्यादिति। **एकत्र विशेषणत्वेन** इति दलपर्यवसितार्थात्मकं विषयताविशिष्टत्वम् उपात्तम्। इदं च ज्ञानभेदेन विषयताभेदपक्षे एव निर्दुष्टम्। समानाकारक-ज्ञानीय-विषयतयोः ऐक्ये तु पाचकादि-पदघटक-पच्-धातुजन्य-उपस्थितीय-पाक-विषयतायां विषयता-विशिष्टायां स्वविशिष्टान्यकर्मत्वादिनिष्ठ-विशेष्यता-निरूपित-प्रकारता-प्रयोजकस्य 'पाकं पश्य' इत्यादि-स्थलीय-पच्-धातुजन्य-उपस्थिति-

विषयत्वस्य तादात्म्यसत्त्वेन तत्प्रयोजकत्वस्यैव सत्त्वात् नियमभङ्गः स्यादिति। उपस्थितौ एव स्वविशिष्ट-विषयताविशिष्ट-प्रकारताप्रयोजकत्वाभाव-नियमे उक्त-नियमस्य तात्पर्यं वाच्यम्। स्ववैशिष्ट्यञ्च स्वनिरूपितत्व-स्वाश्रयत्व-उभय-सम्बन्धेन। स्वाश्रयत्वञ्च स्वजनक-वृत्तिज्ञानीय-विषयता-प्रयोज्य-विशेष्यता-निरूपितत्व-स्वप्रयोजक-पदघटित-वृत्तिघटक-पदप्रयोज्य-विशेष्यता-निरूपित-प्रकारता-प्रयोजकत्व-अन्यतर-सम्बन्धेन। द्वितीयवैशिष्ट्यं च स्वसामानाधिकरण्य-स्वविशिष्टान्य-विशेष्यता-निरूपितत्व-उभयसम्बन्धेन। विशिष्टान्यत्व-घटक-वैशिष्ट्यञ्च प्राग्वद् बोध्यम्। स्वप्रयोजक-पदघटितत्वं च स्वघटित-वृत्त्यघटितत्वे सति स्वघटितत्वमेव। तेन 'राजपुरुष-धनम्' इत्यादौ राज्ञो धनांशे अन्वयेऽपि नियमभङ्गाभावो दोषो न प्रसज्यते। राजपुरुषात्मक-वृत्तिघटित-वृत्तिघटकत्वात् धन-पदस्य। न च उपस्थितौ तादृशप्रकारता-प्रयोजकत्वं स्वीयविषयता-द्वारकम् एव अस्तीति विषयत्वे तादृशाभावनियम-पक्षोक्तदोषः तदवस्थ इति वाच्यम्। स्वप्रयोजकविषयतानिरूपित-विशेष्यताप्रयोजकोपस्थितित्वे सति तादृश-विशेष्यता-प्रयोजकपद-घटित-वृत्तिघटक-पदजन्योपस्थितित्वे सति वा स्वप्रयोजकविषयता-निरूपितत्वेन नियतं विलक्षणमेव हि विशेष्यतानिरूपितत्व-विशिष्टप्रकारता-प्रयोजकत्वम्। तादृश-निरूपितत्वरूपमेव वा अत्र विवक्षितमिति न कोऽपि दोषः। एवञ्च उक्तव्युत्पत्तौ विशिष्टवृत्तिग्रहस्य एकवृत्तिघटकत्व-ग्रहस्यैव च उपयोगो न नियताकाङ्क्षाग्रहस्य। स्वरूपयोग्यत्वग्रहेऽपि च निराकाङ्क्षत्व-ग्रहविरह एव उपयुज्यते इति न अन्योन्याश्रयः। उक्तव्युत्पत्त्यभावे कृदाद्यर्थविशेष्यतयान्वितस्य पाकादेः कर्मत्वादौ कृदाद्यर्थ-विवक्षायां वा तत्र तस्य अन्वयस्य "सकृदुच्चरित" इत्यादिनियमेन वारणासम्भवेन सार्थक्यञ्च। न च प्रकृत्येकदेशार्थ-साधारण-प्रकृत्यर्थत्व-अघटित-प्रत्ययानाम् इत्यादिनियम-सद्भावे स्वाश्रयत्व-घटक-द्वितीय-सम्बन्ध-वैयर्थ्यं भविष्यति एव इति उक्तव्युत्पत्तेः वस्तुतो विशिष्टशक्तिमात्र-स्थलीयताया एव वक्तव्यतया प्रत्ययानाम् इत्यादि-तथाविध-नियम-असद्भावेऽपि कथंतया कर्मत्वादौ पाकान्वयवारणमिति शङ्क्यम्। 'राजपुरुषोऽयम्' इति वाक्यस्य पुरुषपदार्थ-अविवक्षायां राजात्मक इदमर्थे राजपदार्थान्वय-तात्पर्येण राजपदे कर्मधारय-लुप्त-स्वन्तत्व-प्रतिसन्धाने प्रामाण्यापत्तेः। तथाप्युक्तसम्बन्धस्य अवश्यम् उपादेयत्वात्। न च न सापेक्ष इत्यादि-नियमादेव उक्तदोषवारण-सम्भवात् उक्तसम्बन्धो न उपादेय इति वाच्यम्। सापेक्षत्वस्य तदर्थान्वित-स्वार्थतात्पर्यकत्व-रूपस्य वक्ष्यमाणतया वृत्तिघटक-विशेषण-पदार्थस्य वृत्त्यघटक-पदार्थ-विशेष्यत्व एव उक्तव्युत्पत्त्या अतिप्रवृत्तेः। न च निरुक्तसम्बन्ध-अप्रवेशे लाघवानुरोधेन तदर्थनिरूपितान्वय-निरूपकत्वम् एव अस्तु तत्सापेक्षत्वघटकम्

इति वाच्यम्। प्रधानं हि अप्रधानम् अपेक्षते। प्राधान्यञ्च विशेष्यत्वमेव इति तत्प्रतियोगिक-अनुयोगिकत्वस्यैव सापेक्षत्वघटकत्व-औचित्याद् आजानिकसिद्धायां व्युत्पत्तौ नियोग-पर्यनुयोगस्यापि अनर्हत्वात्। यदि उक्तप्रवेशो न स्यात् तदा उक्तव्युत्पत्तेः विशिष्टशक्तिमात्र-स्थलीयतया उक्तग्रन्थानुपपत्तिः दुष्परिहरा। न च पचमानादि-पदानां विशिष्टशक्ति-अभिप्रायक एव उक्तग्रन्थ इति वाच्यम्। **धातूपरस्थाप्यार्थे**-त्यग्रिमग्रन्थविरोधात्। तस्मादुक्तरीतिः आदर्त्तव्या। विशिष्टशक्ति-कृदादिवृत्ति-स्थलद्वयसाधारण-एकप्रकारनिर्वचनप्रयत्नो वा कर्तव्य इति दिक्।

**धातूपरस्थाप्यार्थे**ति। अथैवं प्रतिबन्धकत्वे कल्पितेऽपि यत्र राजद्वय-सम्बन्धि-एकः पुरुषोऽस्ति तत्र 'राजपुरुषौ पश्य' इति प्रयोगापत्तिः दुर्वारा इति चेत् ? न। तत्तत्पदार्थधर्मिक-सुबर्थान्वयबुद्धौ तत्तत्पदाव्यवहितोत्तरवर्ति-सुब्-भिन्न-पदधर्मिक-किञ्चिदर्थपरत्व-ज्ञानस्य तत्तत्पदाव्यवहितोत्तर-पदधर्मिक-तत्तत्पदार्था-न्वित-अर्थपरत्वज्ञानस्य वा प्रतिबन्धकत्वे तात्पर्यात्, द्वितीयकल्पानुसरणाच्च। द्वन्द्वस्थले सर्वपदार्थे विभक्त्यर्थान्वय-निर्वाहः। न च एवम् अर्धकायादि-पूर्वपदार्थप्रधान-समासस्थले बहुपटु-आदि-तद्धितस्थले च विभक्त्यर्थान्वयानुपपत्तिः इति वाच्यम्। पूर्वपदतात्पर्यग्राहकत्वपक्षे दोषस्यैव अभावात्। **वस्तुतस्तु** (VV-4.3.2) इत्यादि-कल्पान्तरे च उक्तसमासादिस्थल उत्तरपदार्थे विभक्त्याद्य-र्थान्वय-वारणानुरोधेन पूर्वपदार्थधर्मिकार्थपरत्व-ज्ञानस्य प्रतिबन्धकत्वस्य निरुक्त-प्रतिबन्धकतायां पदे निरुक्तसमासादिघटक-भिन्नत्वस्य च निवेशनीयत्वात्। तदर्थान्वयानुयोगित्वस्य वा विवक्षितत्वात्।

**VV-G. 4.2.4: कस्यचित्प्रतिबन्धकतां कल्पयित्वा** इति। द्वितीयान्य-सुबन्तार्थ-अभेदान्वयबुद्धौ धातूत्तरवर्ति-प्रत्ययधर्मिक-किञ्चिदर्थपरत्वज्ञानस्य प्रति-बन्धकतां कल्पयित्वा इत्यर्थः। स्वार्थकप्रत्ययान्त-धातूपरस्थाप्यार्थे द्वितीयान्तार्थ-अभेदभानस्य तैरपि स्वीकारात् **द्वितीयान्ये**ति।

**VV-G. 4.3.1: न च एवम्** इति। घञाद्यन्तसमुदायस्य शक्तिस्वीकारेऽपि इत्यर्थः।

**VV-G. 4.3.2:** प्रकृत्यर्थान्वित-स्वार्थबोधकत्व-व्युत्पत्तेः आकाङ्क्षाविशेष-कार्यकारणभाव-ग्राहकतया पूर्वपदार्थप्रधान-समासस्थले अन्यादृश्या आकाङ्क्षाया एव कल्पनेन न उक्तव्युत्पत्तिविरोध इत्याह - **वस्तुतस्तु** इति।

**VV-G. 4.4.1: नैमित्तिकसंज्ञे**ति। जात्यवच्छिन्नसङ्केतवती संज्ञा इत्यर्थः।

**VV-G. 4.4.2: यत्र धातुमात्रस्यैव पाकादौ तात्पर्यमि**ति। अथ धातोः पाकादौ तात्पर्ये घञन्तसमुदायेन पाकोपस्थितौ उभयोः अनन्वयप्रसङ्गात् समुदायशक्त्युपस्थापित-पाकादेः अविवक्षणीयतया विभक्त्यर्थ-सङ्ख्या-कर्मत्वादेः

कुत्र अन्वय इति चेत् ? न। विभक्त्यर्थ-सङ्ख्या-कर्मत्वादेः यत्र विवक्षितत्वं न हि तत्र धातुमात्रस्य पाकादौ तात्पर्यम्, अपितु धात्वर्थपाकादौ स्तोकादेः एव अन्वयो यत्र विवक्षितः तत्रैव। अतएव 'स्तोकम् ओदनस्य पाकाय यतते / पाकेन भूयते' इत्यादयो न प्रयोगाः। तादर्थ्य-कर्तृत्वाद्यविवक्षायाम् औत्सर्गिकतया प्रथमाया एव प्राप्तेः। अत एव **'स्तोकम् ओदनस्य पाक'** इत्येव उदाहृतं ग्रन्थकृता। **धात्वैकाधिकरण्ये त्विति**। स्तोकपदस्य इति शेषः। धातुप्रतिपाद्य-प्रतिपादकत्वे तु स्तोकपदस्य इत्यर्थः।

**इति वदन्ति** इति। ननु धातुमात्रशक्तेः क्लृप्ततया तत एव विवक्षितत्वा-न्वयबोधोपपत्तौ कृदन्तसमुदायशक्तिकल्पनं गौरवावहम्। न च 'स्तोकः पाकः' इत्यादौ विशेष्यवाचकधातुपदस्य अप्रथमा-प्रकृतित्वात् एवम् अन्वयो न स्यात् तदर्थे। प्रथमान्त-स्तोक-पदार्थस्य प्रकृत्येकदेशसाधारण-विभक्ति-प्रकृतित्वञ्च पचमानौ इत्यादौ पाकादौ द्वित्वान्वयप्रसङ्गेन हि वक्तुम् अशक्यम् इति उक्तमेव। समुदायशक्ति-कल्पनाबीजम् इति प्रामाणिकं गौरवं न दोषाय इति वाच्यम्। **वस्तुतस्तु** इत्यादि-अनुपदोक्त-ग्रन्थोक्तरीत्यवलम्बनेन पाकादौ स्तोकाद्यभेदान्वय-बोधे स्वन्तस्तोकपद-समभिव्याहृत-स्वन्तपाकपदत्वस्य आकाङ्क्षात्वस्य पाकादौ द्वित्वान्वयबोधे 'पचमानौ' इत्याद्यानुपूर्व्या आकाङ्क्षात्वाभावस्य च कल्पनेनैव निर्वाहे गौरवस्य अप्रामाणिकत्वात्। न च **वस्तुतस्तु** इत्यादिसन्दर्भे "धात्वर्थ-पाकादौ प्रत्ययार्थान्वयबोध" इत्यादिना उक्त एवात्र दोष इति वाच्यम्। तत्तद्धातूत्तर-तत्तत्प्रत्ययधर्मिक-किञ्चिदर्थपरत्वज्ञानस्य प्रतिबन्धत्वकल्पनेन तद्दोष-वारणसम्भवात्। अथ प्रतिबन्धकता-कल्पनागौरवम् समुदायशक्ति-अस्वीकारे दोषः। न च समुदायशक्तिवादे कथं निर्वाहः। 'शोभनं पचनम्' इत्यादि-समभिव्याहारस्य आकाङ्क्षात्वस्य ल्युडादेः अधिकरण-परत्वाग्रहे शोभनाभिन्न-पाकाद्यन्वयबोधानुरोधेन वाच्यतया तादृशाकाङ्क्षा-ज्ञानात् अधिकरणपरत्वग्रहे निरुक्त-शाब्दबोधापत्तिवारणस्य विना प्रतिबध्य-प्रतिबन्धकभावम् इति वाच्यम्। उक्तान्वयबोधे जननीये निरुक्ताकाङ्क्षा-ज्ञानस्य समुदायशक्तिज्ञान-जन्यपाकादि-उपस्थितेः एव सहकारित्वकल्पनात्। ल्युडादेः अधिकरण-परत्वग्रहकाले धातुशक्तिग्रहजन्य-पाकोपस्थितेः एव विद्यमानत्वात् उक्तदोषाभावादिति चेत् ? न। यत्र यत्र समुदायशक्त्यभावपक्षे प्रतिबन्धकत्वकल्पनं तत्र तत्र समुदायशक्तिपक्षे तादृशशक्तिज्ञानजन्योपस्थितेः अतिरिक्तकारणताकल्पनमिति साम्यात्। धातुशक्ति-ज्ञानजन्य-पाकादिशाब्दबुद्धौ तादृशशक्तिज्ञानजन्य-उपस्थितेः क्लृप्तकारणभावाया एव व्यापकसामग्रीविधया अप्रवेश्यत्वात् शक्त्यभावपक्षे शक्तिपक्षे च तत्प्रवेशस्य उक्तदोषभयेन कर्तुमशक्यत्वात् उक्तकारणत्वस्य अपि आख्यातादि-स्थलानुरोधेन

वाच्यत्वात्। एवं भानमात्रशक्त-क्तिन्-घञाद्यन्त-गत्यादिपद-घटितायाः 'शोभना गतिः' इत्यादिस्थलीय-आकाङ्क्षायाः 'शोभनाभिन्नगमना'-दि-शाब्दबुद्धौ कारणत्वे नास्ति कस्याश्चित् प्रतिबन्धकतायाः कल्पनमिति क्तिन्-अन्त-अशेषधातु-घटित-समुदायस्य बहुतरशक्तिकल्पनेन तज्ज्ञानजन्य-उपस्थितिकारणत्व-कल्पनेन च अतिगौरवम्। न च क्तिन्प्रत्ययस्य अधिकरणाद्यर्थकत्व-अभावेऽपि दोषात् इतः तत्तदर्थपरत्वग्रहे शाब्दबोधवारणाय तत्रापि प्रतिबन्धकत्वम् आवश्यकम् इति वाच्यम्। अनुशासनाहित-अधिकरणत्वाद्यर्थकत्व-ग्रहजन्य-तत्तदर्थपरत्व-ग्रहस्यैव प्रतिबन्धकत्वस्य अभ्युपेयत्वात्। क्तिन्प्रत्यय-स्थले तादृश-ग्रहस्यैव असम्भवात्। अन्यथा एतद्विचारोपन्यस्तः घञन्तस्थलोपेक्षणस्य दर्शित-**"अधिकरणार्थक-ल्युट्प्रत्यय"**(VV-4.3.3) इत्यत्र अधिकरणार्थकत्वोक्तेश्च निर्बीजत्वापत्तेः। यदि उक्तस्थले सामान्यतः तत्तदर्थपरत्वग्रहस्य प्रतिबन्धकत्वम् आनुभविकं तदा 'शोभनं पचनम्' इत्यादौ तादृशसमभिव्याहारग्रहे समुदायशक्तिजन्य-पाकोपस्थितौ ल्युटो-ऽधिकरणपरत्वग्रहे च शोभनाभिन्नपाकादि-मुख्यविशेष्यक-शाब्दबुद्धेः वारणाय समुदायशक्तिपक्षेऽपि प्रतिबन्धकत्वम् अङ्गीकरणीयम्। न च शाब्दमतेः तत्र इष्टत्वात् न प्रतिबन्धकत्वकल्पनम् इति वाच्यम्। समुदायशक्ति-उपस्थापितार्थस्य शाब्दबोधे भानाभ्युपगमे अधिकरणपरत्वग्रहोपरोधप्रसङ्गात्। समुदायार्थस्य अप्रकृत्यर्थत्वेन तेन समं प्रत्ययार्थाधिकरणस्य अन्वयासम्भवात् 'शोभनाभिन्न-धातूपस्थाप्य-पाकान्विताधिकरण'-शाब्दबोधोपगमेऽपि वाक्यमिदं शोभनाभिन्नपाक-परमिति तात्पर्यग्रहान्तरस्य समुदायशक्त्युपस्थापितार्थ-शाब्दबोधार्थम् अपेक्षमाणस्य अनुपरोधात् च इष्टापत्तेः अयोगात्। अत एव समुदायशक्तिपक्षे उपस्थिति-कारणत्व-कल्पनया अतत्पक्षीयप्रतिबन्धकत्व-कल्पनस्य समानत्वेऽपि भिन्नविषयक-प्रत्यक्षादिकं प्रति शाब्दसामग्र्याः प्रतिबन्धकत्वे प्रतिबन्धकाभावरूपकारणस्य अधिकस्य प्रवेशेन विशेष्यविशेषण-भावे विनिगमनाविरहेण सामग्रीत्वेन प्रतिबन्धकताया अत्याधिक्यप्रसङ्ग इत्यपि निरस्तम्। प्रतिबन्धकत्वस्य उभयत्र समानत्वात्। वस्तुतस्तु क्रियापदस्य सार्थक-प्रत्ययान्त-धातूपस्थाप्य-अर्थपरत्वाद् (VV-4.1.2) इति ग्रन्थे अभिहितं सार्थकत्वं द्वितीयान्तसमभिव्याहार-घटिता-काङ्क्षा न जन्यशाब्दबोधेन स्वरूपसदुपयुक्तम्। ल्युटो निरर्थकत्वग्रहे शोभनपदस्य द्वितीयान्तत्व-ग्रहेऽपि शाब्दप्रसङ्गात्। अर्थरहितस्य क्तिन्-घञादेः सार्थकत्व-ग्रहेऽपि शोभनाद्यन्वित-पाकाद्यन्वयबोधस्य समभिव्याहारं विनापि आपत्तेश्च। तथा च शोभनाभिन्न-पाकाद्यन्वयबोधे द्वितीयान्त-शोभनादिपद-समभिव्याहार-ज्ञानं प्रथमाद्यन्त-शोभनादि-पद-समभिव्याहार-ज्ञानं च कारणम्। तत्र आद्येन धातुजन्य-पाकाद्युपस्थितिः धातूत्तरप्रत्यये किञ्चिदर्थपरत्वरूप-सार्थकत्व-विशेषिते विभक्त्य-

व्यवहित-पूर्ववर्तित्व-विषयकत्वं च सहकारितया अपेक्ष्यते। द्वितीये तु धातुजन्य-पाकाद्युपस्थितिः निरर्थकत्व-विशेषिते धातूत्तरप्रत्यये प्रथमाद्यव्यवहित-पूर्ववर्तित्व-विषयकत्वं चेति। 'शोभनं पचनम्' इत्यादौ ल्युडादेः अधिकरणपरत्व-ग्रहे शोभनपदस्य च प्रथमान्तत्व-ग्रहे च न आपत्तिसम्भवः। निरुक्त-आकाङ्क्षा-ज्ञानस्यैव अभावात् किमर्थं प्रतिबन्धकत्व-कल्पनम्। न च प्रथमात्वादि-घटित-रूपस्य आकाङ्क्षात्वे प्रथमात्वाद्यज्ञाने शाब्दबोधानुपपत्तिरिति। तत्तद्विभक्त्यानुपूर्वी-घटितस्यैव आकाङ्क्षात्वम् उपेयमिति, 'शोभनं पचनम्' इत्यादि आनुपूर्वी-ज्ञानमात्र-काले अधिकरणपरत्वग्रहे सति आपत्तौ तात्पर्यम् इति वाच्यम्। प्रथमा-द्वितीययोः 'शोभनम्' इत्यत्र एकरूपतया ल्युडादेः अधिकरण-परत्व-ग्रहे धातुतः पाकोपस्थितौ द्वितीयान्त-समभिव्याहार-ज्ञानात् समुदायशक्तिवादेऽपि शाब्दबोधस्य इष्टतया प्रथमात्वाद्यग्रह-दशायाम् आपत्तित्वस्यैव दुरवधारणीयत्वात्। द्वितीयात्वादि-ज्ञानस्य अनुपयुक्तत्वे उक्तस्थलानुरोधेन उक्ताकाङ्क्षाज्ञानस्य धातुजन्यपाकोपस्थितेश्च कारणत्वस्य कल्पनीयतया प्रथमान्तत्व-ग्रहकाले निरुक्त-शाब्दबोधस्य समुदायशक्तिमतेऽपि दुरुद्धरत्वात् च। न च प्रतिबन्धकत्वकल्पनया अपि तद्वारणं सम्भवति। एवं सति प्रतिबन्धकत्वस्य एव दुर्वचत्वात्। तथाहि यदि पाकविशेष्यक-स्तोकाभेदबुद्धित्वं प्रतिबध्यतावच्छेदकं, प्रथमान्तत्व-ग्रहत्वञ्च प्रतिबन्धकतावच्छेदकं, तदा ल्युटो निरर्थकत्वग्रहकाले शाब्दबोधानुपपत्तिः। न च निरर्थकत्वग्रह-विरहसहकृतस्य प्रतिबन्धकतावच्छेदकम्। समुदायशक्त्या पाकाद्यु-पस्थितौ निरर्थकत्वग्रह-विरहे प्रथमान्तत्व-ग्रहे च शाब्दबोधानुपपत्तेः। अथ यद्युच्येत धातुप्रयोज्य-उपस्थितीयविषयताप्रयोज्य-पाकविशेष्यताकबोधे प्रथमान्तत्व-ग्रहस्य प्रतिबन्धकत्वं तदा समुदायशक्त्युपस्थितपाकविशेष्यक-शाब्दबोधे पाकपद-धर्मिक-प्रथमान्तत्वग्रह-सहकृतद्वितीयान्तत्व-ग्रहस्यापि प्रतिबन्धकत्वान्तरं वक्तव्यम्। प्रागुक्तं च अधिकरणपरत्व-ग्रहस्य प्रतिबन्धकत्वमिति समुदायशक्तिवादे बहुतर-प्रतिबन्धकत्वम् आपतेत्। यदि अनुभवापह्नवः क्रियेत नैकत्रापि पक्षे तदा प्रतिबन्धकत्वकल्पनम्। तद्वरम् एतावत् प्रतिबन्धकत्व-कल्पनापेक्षया निरुक्त-समभिव्याहार-ज्ञानस्थले सर्वत्र यथायथं सु-अमादि-उपस्थिति-कल्पनम्। सुत्व-अम्त्वादिना एव च निरुक्ताकाङ्क्षाशरीरे प्रथमा-द्वितीयादेः प्रवेशो न तु प्रथमात्वादिना। तथा सति प्रथमात्वाद्यग्रहेऽपि न क्षतिरिति चेत्? एतादृश-अस्वरस-सूचनाय एव **वदन्ति** इत्युक्तमिति गृहाण इति दिक्।

**VV-G. 4.4.3: तदर्थकपदोत्तरविभक्त्येति**। ननु 'नीलो घटः' इत्यत्रापि नीलघटबोधक-नीलपदोत्तरविभक्त्या कथं न सङ्ख्यान्वयबोधः? अभेद-सम्बन्धा-वच्छिन्न-प्रकारत्वान्य-नीलनिष्ठ-घटत्वावच्छिन्न-विशेष्यताक-शाब्द-सामग्र्याः तत्र

सत्त्वात्। एवं 'नीलो घटः' इति वाक्यग्रहे 'नीलस्य इदम्' इति वाक्यग्रह-घटित-सामग्रीसत्त्वे च नीलपदोत्तर-सु-विभक्त्या सङ्ख्यान्वयप्रसङ्गः। नीलार्थ-निष्ठ-अभेदसम्बन्धावच्छिन्न-प्रकारत्वान्य-शाब्दसामग्र्याः विद्यमानत्वात्। किञ्च नीलत्वबोध-नीलपदोत्तर-सु-विभक्त्या नीले सङ्ख्या-बोधप्रसङ्गः। अभेदसम्बन्धावच्छिन्न-प्रकारत्वान्य-नीलत्वनिष्ठविषयताक-शाब्दसामग्र्या विद्यमानत्वात्। तद्धर्मावच्छिन्न-बोधकपदोत्तरविभक्त्या सङ्ख्याबोधने अभेदसम्बन्धावच्छिन्न-प्रकारत्वान्य-तद्धर्मावच्छिन्न-विषयताक-सामग्र्या अपेक्षणीयत्व-विवक्षायाः 'वेदाः प्रमाणम्' इत्यत्र प्रमाणत्वावच्छिन्न-विषयतायाः तादात्म्य-सम्बन्धावच्छिन्नत्वात् प्रमाणत्वे सङ्ख्या-न्वयानुपपत्तेः कर्तुम् अशक्यत्वात्। यत्र सङ्ख्यान्वयः अभिमतः तस्य एव तद्धर्मपदेन ग्राह्यत्वात्। सङ्ख्यान्वयितावच्छेदकग्रहणे व्रीहित्वे सङ्ख्यान्वयस्थले नियमानुपपत्तेः। सङ्ख्यान्वयिनः सङ्ख्यान्वयितावच्छेदकस्यैव वा ग्रहणम् इत्यत्र नियामकालाभाच्चेति चेत्? न। तत्पदोत्तरविभक्तिप्रयोज्य-सङ्ख्यानिष्ठ-प्रकारता-निरूपित-तत्तदर्थनिष्ठ-विशेष्यताक-बोधे अभेदसम्बन्धावच्छिन्न-प्रकारतात्वान्य-तदर्थनिष्ठ-तत्पदप्रयोज्य-विषयताक-शाब्दसामग्र्यपेक्षित इत्यस्य विवक्षितत्वात्। घटनिष्ठ-विषयताया नीलनिष्ठत्वेऽपि नीलपदाप्रयोज्यत्वात् षष्ठ्यन्त-नीलपद-प्रयोज्य-नीलनिष्ठ-विषयतायाः तादात्म्यसम्बन्धानवच्छिन्नत्वेऽपि स्वप्रकृतिनीलपद-अप्रयोज्यत्वात् नीलस्य तत्पदार्थतया विवक्षणे तन्निष्ठ-नीलपदप्रयोज्य-विषयतायाः तादात्म्यसम्बन्धानवच्छिन्नत्वात् प्रमाणत्व-व्रीहित्वादिवन्नीलत्वे तु सति तात्पर्ये सङ्ख्यान्वयस्य इष्टत्वात्। न च प्रमाण एव स्वाश्रय-प्रमाणत्ववत्त्व-सम्बन्धेन एकत्वान्वयपक्षे का गतिः इति वाच्यम्। सङ्ख्या-निष्ठप्रकारतायां पर्याप्ति-सम्बन्धावच्छिन्नत्वस्य विवक्षितत्वादिति।

**एवञ्चेति**। सङ्ख्याबोधे निरुक्त-सामग्र्यपेक्षणे च इत्यर्थः। **असम्भवाद् इति**। सङ्ख्याप्रत्यय-प्रयोजक-निरुक्त-सामग्र्यभावेन सङ्ख्या-प्रत्ययोत्पत्ति-असम्भवात् इत्यर्थः। तथा च इति शेषः। सङ्ख्याप्रत्ययाभावे सङ्ख्या-प्रतिपत्त्यर्थतया प्रयोगासम्भवात् यस्य कस्यचिद्वचनस्य प्रयोगे प्राप्ते प्राथमिकत्वात् एकवचनमेव प्रयोक्तव्यमिति भावः। **औत्सर्गिकमेकवचनमेवेति**। तस्य औत्सर्गिक-क्लीवलिङ्ग-अभिव्यञ्जकत्वमपि बोध्यम्। सामान्ये नपुंसकस्यैव साधुत्वात्। नियतलिङ्गस्य क्रियाविशेषणत्वे लिङ्गत्यागप्रयोजक-अनुशासनाभावात् औत्सर्गिकमिति। तेन इति हेतुः। पचति इत्यादय एव प्रयोगाः। सा च इयं द्वितीया तादात्म्य-फलतावच्छेदक-अन्यतरसम्बन्धेन। धात्वर्थतावच्छेदकफल-शालिनः कर्मसंज्ञकत्वम्। क्रियाविशेषणानां तादात्म्येन फले अन्वयञ्च अभ्युपेत्य "कर्मणि द्वितीया" (पा. २.३.२) इति सूत्रानुशिष्टैव अङ्गीक्रियते जरच्छाब्दिकैः।

न च अकर्मकधातोः व्यापारमात्र-वाचित्वेन तद्विशेषणपदात् द्वितीया कथमिति वाच्यम्। तन्मते फलावच्छिन्नव्यापारस्यैव सर्वत्र धात्वर्थत्वात्। फलव्यापारयोः सामानाधिकरण्य-असामानाधिकरण्याभ्याम् एव सकर्मक-असकर्मक-व्यवस्थाया उक्तत्वात्। न च एतन्मतम् अतिरमणीयम्। क्रियाविशेषणस्य मुख्यकर्मत्वे तत्र लकारापत्त्या 'स्तोकः पच्यते', 'सुखम् आस्यते' इत्यादिप्रयोगापत्तेः। न च तादात्म्यसम्बन्धानवच्छिन्न-धात्वर्थतावच्छेदक-फलाश्रयत्वशालिनि कर्मणि लकारः स्वीक्रियते इति न उक्तप्रयोगापत्तिः इति वाच्यम्। विशेष्य-विशेषण-भाव-व्यत्ययं विना कर्तृ-कर्म-लकारघटित-वाक्ययोः समानविषयकत्वस्य अनुभवसिद्धत्वेन तदनुपपत्तेः। अतादात्म्येन फलाश्रयस्य लकारार्थत्वात् तादात्म्यघटित-अन्यतर-सम्बन्धेन फलाश्रयस्य द्वितीयार्थत्वात् शक्तौ गौरवप्रसङ्गात् शाब्दबोधस्य तादात्म्यसम्बन्धानवच्छिन्नत्वादिघटित-कर्मत्वविषयकत्वेन अतिरिक्त-विषयताकत्व-आपत्त्या प्रतिबध्य-प्रतिबन्धक-भाव-गुरुत्वप्रसक्तेश्च। उत्तरदेश-संयोगानुकूल-व्यापारस्य मन्दद्रुतत्वादिविवक्षया 'मन्दं गच्छति', 'द्रुतं गच्छति' इत्यादिप्रयोगस्य आनुभविकत्वे तदनापत्तेः। मन्दादि-पदानां फले अनन्वयात्। अकर्मक-धातोः फलावच्छिन्न-व्यापार-वाचकत्वस्यापि खण्डितत्वाच्च। अथ अस्तु नव्यवैयाकरण-मतानुसारेण विशेषणान्वय-आकाङ्क्षाभिव्यक्त्यर्था द्वितीया। 'व्रैहेयम् ओदनं पचति' इत्यत्र कर्मीभूत-ओदनान्वय-प्रयोजकाकाङ्क्षा च विशेषणपदस्य द्वितीयान्तत्वे सति एव यथा अभिव्यज्यते तथा धात्वर्थतावच्छेदकीभूत-उत्पत्तिरूप-फलाश्रयत्वेन कर्मीभूत-विक्लित्यन्वय-प्रयोजिकाकाङ्क्षा स्तोकादि-विशेषणपदस्य द्वितीयान्तत्वे सति एव व्यज्यते इति, व्रैहेयादि-पदात् इव स्तोकादि-पदात् अपि आकाङ्क्षा-निर्वाहाय एव द्वितीया। अतएव भावनाकर्म-होमविशेषण-अग्निहोत्रपदात् द्वितीया। भावना-करण-यागविशेषण-वाजपेयादि-पदात् तृतीया इति मीमांसकानाम् उक्तिः सङ्गच्छते। "कर्त्तुरीप्सिततमम्" (पा.१.४.४९) इत्यादिना कर्मसंज्ञा, कर्मणि लकारश्च व्यधिकरण-फलाश्रयीभूते धात्ववाच्ये कर्मण्येव। तेन सुखोत्पत्त्यनुकूल-व्यापारवाचिनो रमतेः 'आत्मानं रमते', 'आत्मा रम्यते' इत्यादयो न प्रयोगाः। फलस्य व्यापार-समानाधिकरणत्वात्। नापि शय्या-अङ्ग-विलक्षण-संयोगानुकूल-व्यापार-वाचिनः स्वपतेः 'अङ्गं स्वपिति', 'अङ्गं सुप्यते' इत्यादयः प्रयोगाः। अङ्गस्य धातुवाच्यकर्मत्वात्। एवञ्च विक्लितेरपि धातुवाच्य-कर्मत्वेन 'स्तोकः पच्यते' इत्यादयो न प्रयोगा इति। तन्न। 'जनित-विभागं गच्छति' इत्यादौ व्यापार-विशेषणताया एव अगत्या वाच्यतया तत्र उक्तगतेः असम्भवात्। विशेषण-सुपाम् अव्यभिचारेण विशेष्याकाङ्क्षाभिव्यक्त्यर्थत्वेन द्वितीयान्त-विशेष्यवाचक-पदार्थ-विशेषणपदस्य द्वितीयान्तत्वसम्भवेऽपि क्रियाविशेषणस्थले 'वाजपेयेन'

इत्यत्र व्यभिचारात्। विशेषणस्य द्वितीयान्तत्वसम्भवात् विना विशेषविधिं प्रातिपदिकार्थमात्रे प्रथमात्यागायोगात् द्वितीयानुपपत्तेश्च। तस्मात्

"उभयसर्वतसोः कार्या धिगुपर्यादिषु त्रिषु।
द्वितीयाऽऽम्रेडितान्तेषु ततः अन्यत्रापि दृश्यते।।"

इत्यंशीभूतेन 'ततोऽन्यत्रापि दृश्यते' इत्यनेन क्रियाविशेषणं कर्मवद्भवति इति अनुशासनं कल्प्यते इति। तेन तत्र अतिदिष्टं कर्मत्वम् अङ्गीक्रियते। अतिदेशफलं च द्वितीयैव, कर्मप्रवचनीयसंज्ञादिवत्। अतिदेशस्थले च सर्वमुख्य-कार्याभावात् न कर्मणि लकार इति अवधेयम्।

**VV-G. 5.1.1: अभेदान्वयबोधश्च विरूपोपस्थितयोरेवेति।** अत्र षष्ठ्या न विषयत्वमर्थः। सरूपोपस्थितार्थद्वयविषयक-समूहालम्बन-अभेदान्वयविषयक-शाब्दबोधस्य प्रसिद्धत्वात्। किन्तु प्रतियोगि-अनुयोगि-निरूपितत्व-साधारण-निरूपितत्वत्वावच्छिन्नम्। तच्च अभेदान्वयान्वयि। तादृशनिरूपितत्वातिरिक्त-व्यवच्छेद एव हि एव-कारार्थः। तस्यापि हि (१)स्वावच्छेदकावच्छिन्न-प्रकारता-निरूपितत्व(२)स्वातिरिक्त-उपस्थितिविषयतावच्छेदकावच्छिन्नविशेष्यतानिरूपितत्व-उभयसम्बन्धेन उपस्थितिविषयता-विशिष्टैव भवति शाब्दबोधीय-अभेदत्वावच्छिन्न-सांसर्गिकविषयता इति पर्यवसितार्थः। तेन विशेष्यत्व-प्रकारत्वावच्छेदकस्य एकत्वेऽपि यत्किञ्चिद्धर्मापेक्षया विरूपत्वसम्भवेन न विवक्षितार्थलाभ इति।

**VV-G. 5.1.2: तत्प्रयोजकेत्यत्र** तत्पदं सामान्यतो अभेदान्वयं परामृशति। न तथाविधान्वयबोधं तत्प्रयोजकस्य। तदप्रसिद्ध्या अक्लृप्तत्वात्।

**VV-G. 5.1.3: यादृशमिति।** यद्धर्मावच्छिन्नमित्यर्थः। तद्व्यक्तेः क्षणविशेषादि-घटितसामग्र्या अन्यत्र असम्भवाद् 'यद्' इति न उक्तम्।

**VV-G. 5.1.4: विधेयकोटौ** इत्यादि। विधेयांश-घटकतया उद्देश्यादि-अघटकं विषयीकुर्वतः इति तु न अर्थः। तथा सति तादृशत्वस्य विधेयांशं सर्वथा अपूर्वम् अवगाहमानेऽपि शाब्दबोधे सत्त्वेन तस्य प्राचीनैः अभ्युपेतत्वात् विशेषोक्तिः असङ्गता स्यात्। एकविशेषोक्तेः विशेषान्तर-व्यवच्छेद-फलकतया स्वरस-सिद्धत्वात्। किन्तु विधेयघटकतया अखिलोद्देश्यघटकावगाहिनः तदघटकम् अवगाहमानस्य इत्यर्थः। अभेदान्वयस्थले विधेयस्य नियमत उद्देश्यघटकत्वात् अखिल-इत्युक्तम्। अत्र उद्देश्यस्य प्राक्प्रयोक्तव्य-उद्देश्यवाचकपदेन प्रथम-अवगन्तव्य-कल्पतया तदंशस्य अबुबोधयिषिततया न विधेयत्वेन भानसम्भवः, किन्तु अधिकांशस्यैव। न च एवं 'नीलो घटः' इत्यादौ नैल्याश्रयस्य विधेयतया भानं न स्यात्। तस्य उद्देश्यात्मकत्वेन बुबोधिषितत्व-असम्भवात् इति वाच्यम्। आश्रय-विनिर्मुक्तस्य नामत उपस्थितस्य नैल्यादेः व्युत्पत्तिविरोधेन भेदेन

अन्वयासम्भवेन अवर्जनीयतया बुबोधिषितत्वसम्भवेन विधेयकोटावगाहनसम्भवात्। 'घटो नीलो घटः' इत्यादौ घटांशभाने तादृशयुक्ति-अभावात् इति प्राचाम् अभिमतम्। इत्थम् आक्षिपन्ति नवीनाः। तथाहि प्रवृत्त्युपयोगि-विशिष्टज्ञानसम्पत्तये संशयनिवृत्तये वा अर्थं प्रतिपिपादयिष्यन्ति वक्तारः। तत्र नीलघटभेदस्य विशेषाभावत्वेन घटत्वस्य तदविरोधितया, 'घटो नीलो घटः न वा' इत्यादि-संशयस्य सम्भवेन तादृशसंशयमेव बोधनीयपुरुषगतम् अनुसन्दधानाः तन्निवृत्तिम् अभिलषन्तो घटे नीलघटमेव विधेयतया प्रतिपादयन्ति। 'घटो नीलः' इत्यादिबुद्धेः असमानप्रकारकत्वेन तादृशसंशय-अविरोधित्वात्। समानविषयकत्वेन प्रतिबन्धकत्वस्य प्राचाम् अभिमतस्य अप्रामाणिकत्वात् इति। अगत्या उक्तसंशयोत्सारण-समर्थो विधेयांशे अधिकावगाही 'नीलघटो घट' इत्यादि-शाब्दबोधः अभ्युपेयः। तदिदम् अनुसन्धाय उक्तम् - **नवीनैः स्वीकारादि**ति। **तर्हि घटाद्यंशे विशेषणता-अवच्छेदकविधेये**त्यादि। ननु घटत्वावच्छिन्न-विशेष्यतानिरूपित-घटत्वावच्छिन्न-प्रकारताक-शाब्दबुद्धित्वावच्छिन्नस्य नीलाद्युपस्थिति-व्यभिचारितया तदुत्पत्तौ तद्विरहस्य अकिञ्चित्करत्वात् न तत्प्रयोजकत्वं तस्य इति चेत् ? अत्र केचित्। निर्विशेषस्य सामान्यस्य अभावेन सामान्यधर्मावच्छिन्नोपपत्तौ विशेषधर्मावच्छिन्न-सामग्र्या अपेक्षितत्वनियमेन सामान्याश्रय-व्यक्त्युत्पत्तौ तद्व्यक्तिनिष्ठ-यावत्-जन्यतानिरूपित-जनकतावच्छेदकावच्छिन्न-सत्त्वनियम-पर्यवसन्नेन नीलाद्युपस्थिति-घटितसामग्र्या अवश्यम् अपेक्षणीयत्वम् अवगम्यते इत्याहुः। वस्तुतस्तु घटत्वा-वच्छिन्नविशेष्यतानिरूपित-घटत्वावच्छिन्न-प्रकारताशालि-शाब्दबुद्धित्वावच्छिन्नं प्रति स्वातन्त्र्येण न कस्यापि कारणत्वम् इति। तद्धर्मावच्छिन्नसत्त्वं 'नीलघटो घटः' इत्यादि-वाक्यनिष्ठ-आकाङ्क्षाज्ञान-जन्यतावच्छेदक-नीलघटत्वावच्छिन्न-विधेयता-निरूपित-घटत्वावच्छिन्न-विशेष्यताशालि-शाब्दबुद्धित्वाद्यवच्छिन्नसामग्री-प्रयोज्यमेव वाच्यम्। सा च सामग्री नीलाद्युपस्थित्यादिघटिता इति तद्विरह-दशायां न उक्तधर्मावच्छिन्नसत्त्वप्रसङ्ग इति आशयः। अत्र वक्ष्यमाणाया द्रव्योपस्थितिं विना द्रव्यत्वे शाब्दबोधापत्तेः असङ्गतिः पूर्वकल्पवत् न प्रसज्यते इति।

**VV-G. 5.2.1: शुद्धघटत्वावच्छिन्नप्रकारके**ति। विधेयांशे अधिकावगाहि-शाब्दस्वीकारपक्षे घटत्वावच्छिन्नप्रकारक-शाब्दबोधस्य घटत्वे इष्टत्वात् आपत्त्य-भावात् **शुद्धघटत्वावच्छिन्न**-इत्युपात्तम्। **आपत्तिसम्भवादि**ति। आपाद्यतावच्छेदक-धर्मस्य प्रसिद्धत्वात् तदवच्छिन्नव्याप्तिज्ञानादिलक्षणापत्ति-सामग्र्याः **सम्भवादिति** भावः। ननु कार्यापत्तिस्थले कार्यव्याप्यतया सामग्र्या एव आपादकत्वम्। न च अस्ति कापि सामग्री शुद्धघटत्वावच्छिन्नप्रकारक-शाब्दत्वावच्छिन्नं प्रति क्लृप्त इति आपादकाभाव इत्याह। - **न च तत्र आपादकाभाव** इति। तदुत्पादनियामक-

सामग्र्या एवेति। न च धर्मितावच्छेदकतया द्रव्यत्वे घटत्वावच्छिन्न-प्रकारताक-शाब्दत्वावच्छिन्न-उत्पाद-नियामिका सामग्रीव्यक्तिः द्रव्यत्वावच्छिन्नविशेष्यक-योग्यता-ज्ञानादि-घटितैव सा च कथमपि घटत्वेन न वर्तते इति वाच्यम्। यादृशी सामग्री द्रव्यत्वे तदुत्पादनियामिका तादृश्याः तात्पर्यज्ञानादि-घटितायाः सामग्र्याः एवेति अर्थकरणात्। तथा च ययोः अर्थयोः अन्वयाभिमतः अभेदसंसर्गेण तेन संसर्गेण तद्विशेष्यक-तत्प्रकारकज्ञानस्य योग्यताज्ञानत्वेन। यथा 'घटो द्रव्यम्' इत्यस्य योग्यताज्ञानत्वं तथा 'घटो घटः' इति ज्ञानस्यापि तत्त्वं यथा तद्बोधकपदयोः समानविभक्तिकयोः समभिव्याहारस्य आकाङ्क्षात्वेन 'घटो द्रव्यम्' इति वाक्य-ज्ञानस्य आकाङ्क्षाज्ञानत्वं तथा 'घटो घटः' इति वाक्यज्ञानस्यापि। यथा च तदर्थान्वित-तदर्थपरत्वस्य तात्पर्यरूपत्वेन 'घटो द्रव्यम्' इति वाक्यं घटान्वित-द्रव्यपरमिति ज्ञानस्य तात्पर्यभानत्वम्। तथा च 'घटो घटः' इदं वाक्यं घटान्वित-घटपरमिति ज्ञानस्यापि तत्त्वं तत्तदर्थोपस्थित्योः एककालीनयोः आसत्तिरूपत्वेन 'घटो द्रव्यम्' इत्युपस्थित्योः यथा आसत्तित्वम् एवं 'घटो घटः' इत्युपस्थित्योः अपि इति। प्रतिनियतेन तेन सम्बन्धेन परिपूर्णा निरुक्तशाब्दसामग्री द्रव्यत्वे विद्यमाना यथा कार्यं घटत्वावच्छिन्नप्रकारक-शाब्दबोधात्मकम् उत्पादयति तथा घटत्वेऽपि विद्यमाना निरुक्ता परिपूर्णा शाब्दसामग्री तत्कार्यम् उत्पादयेत्। आपाद्यापादकयोश्च व्याप्तिः यत्तु अतत्त्वोपरागानुगृहीता सामान्यतः परिच्छिन्ना, विशेषतो गृहीतपक्षधर्मत्वस्य आपादकस्य अनुग्राहिकेति न आपत्त्यसम्भव इति भावः।

**VV-G. 5.2.2:** अथ कारणतावच्छेदकीभूत-धर्मावच्छिन्नघटितसमुदायस्य एव भवति सामग्रीत्वमिति घटत्वावच्छिन्न-विशेष्यक-घटत्वावच्छिन्न-प्रकारक-ज्ञानादेः कारणतावच्छेदक-धर्मविरहेण तदघटित-समुदायस्य न सामग्रीत्वसम्भव इति, न तस्य आपादकत्वम् उपपद्यते इत्याशयेन आह - **न च धर्मितावच्छेदकता-सम्बन्धेनेत्यादि**। द्रव्यत्वादौ इति सप्तम्याः 'कपाले घटः उत्पद्यते' इत्यत्र इव अवच्छेदकत्वमर्थः। अन्वयश्च अस्य उत्पत्तौ कार्यनिष्ठ-आद्यक्षण-सम्बन्धरूपायां प्रत्ययानुरोधात् तस्य सम्बन्धावच्छिन्नत्वमपि स्वीक्रियते। ननु कार्यतावच्छेदक-सम्बन्धेन कार्याधिकरणं कारणतावच्छेदकसम्बन्धेन कारणाधिकरणं वा यो देशः तस्यैव प्रत्ययानुरोधात् अवच्छेदकत्वं कल्प्यते। तदवच्छिन्नायां तद्धर्मावच्छिन्न-कार्योत्पत्तौ एव च तद्धर्मावच्छिन्नकार्यतानिरूपित-कारणतावच्छेदकावच्छिन्नघटित-समुदायात्मक-सामग्र्याः प्रयोजकत्वमङ्गीक्रियते इति। द्रव्यत्वावच्छिन्नविशेष्यकं-घटत्वावच्छिन्न-प्रकारकयोग्यताज्ञानादेः द्रव्यत्वावच्छिन्नविशेष्यता-निरूपित-घटत्वा-वच्छिन्न-प्रकारताक-शाब्दबुद्धित्वावच्छिन्न-कार्यता-निरूपित-कारणतावच्छेदक-

धर्मवत्तया तद्घटित-समुदायस्य सामग्रीत्वसम्भवेऽपि कार्यतावच्छेदकेन कारणतावच्छेदकेन वा समवायेन निरुक्तकार्यस्य कारणस्य वा अधिकरणेन आत्मना अवच्छिन्नायाम्, उक्तकार्यतावच्छेदकावच्छिन्न-उत्पत्तौ एव प्रयोजकत्वम्। न तु द्रव्यत्वावच्छिन्नायाम्। घटत्वावच्छिन्न-प्रकारक-शाब्दत्वावच्छिन्नोत्पत्तौ धर्मितावच्छेदकतायाः कार्यतावच्छेदक-सम्बन्धत्वविरहेण द्रव्यत्वस्य तादृशदेशत्व-विरहात् उक्तशाब्दत्वस्य कार्यतानवच्छेदकत्वाच्च। न च उक्तनियमे मानाभाव इति वाच्यम्। तथा सति 'कपाले घट उत्पद्यते' इतिवत् 'पर्वते घट उत्पद्यते' इति व्यवहारापत्तेः। द्रव्यत्वादौ तादृशान्वयबोधोत्पत्तिप्रयोजिका इत्युक्तिः असङ्गतेति चेत् ? न। उक्तनियमशरीरे हि कार्यतावच्छेदक-सम्बन्धेन कार्याधिकरणम् इत्यत्र धर्मसंसर्गसाधारणमेव अवच्छेदकत्वम्। तद्धर्मावच्छिन्नकार्यता इत्यत्रावच्छेदकत्वम् अपर्याप्त्या च विवक्षितम्। यदि कार्यतावच्छेदकसम्बन्धेनैव कार्याधिकरणे देशे सामग्र्याः कार्योत्पत्तिप्रयोजकत्वं स्यात् धर्मत्वादेः आत्मप्रत्यासत्त्यभावपक्षेऽपि कार्यतानवच्छेदकतया धर्मिण्युत्पत्तिव्यवहारो न स्यात्। उक्तरीत्या तु सोऽपि उपपद्यते। महौषध्यादिकं प्रति तादात्म्येन हिमालयादीनां कारणत्वम् उपपाद्य 'हिमालये महौषधयः समुत्पद्यन्ते', 'कुलालगेहे घट उत्पद्यते' इत्यादयो व्यवहारा उपपादनीयाः। तथा च द्रव्यत्वनिष्ठधर्मितावच्छेदकताया धर्मविधया कार्यतावच्छेदकघटकतया तेन सम्बन्धेन द्रव्यत्वस्य कार्याधिकरणदेशत्वात् उक्तकार्यताया घटत्वावच्छिन्नप्रकारक-शाब्दबुद्धित्व-घटितधर्मावच्छिन्नत्वाच्च। उक्तसामग्र्या द्रव्यत्वे निरुक्त-शाब्दोत्पत्ति-प्रयोजकत्वम् अव्याहतम्। घटत्वनिष्ठ-धर्मितावच्छेदकतायाः घटत्वावच्छिन्नप्रकारक-शब्दत्वघटित-धर्मावच्छिन्न-कार्यतायाम् अनवच्छेदकत्वेन घटत्वे निरुक्तशाब्दोत्पत्तिप्रयोजकत्वं च न कस्याश्चित् अस्ति सामग्र्या इति। धर्मितावच्छेदकत्वादेः कार्यतावच्छेदक-सम्बन्धत्वविरहेऽपि घटत्वावच्छिन्नप्रकारक-शाब्दत्वस्य कार्यतानवच्छेदकत्वेऽपि च द्रव्यत्व उक्तशाब्दोत्पत्तिः उपपादयितुं शक्यते। न च घटत्व आपादयितुम् इति अभिसन्धाय **धर्मितावच्छेदकताया** इत्याद्युक्त-शङ्का-उन्मेष-बीजवाक्यसम्वलितं **द्रव्यात्वनिष्ठाया** इत्यादि-हेतुवाक्य-सहितं द्रव्यत्वे निरुक्तशाब्दबोधोत्पत्ति-प्रयोजकत्वपरं वाक्यम् आह - **द्रव्यादौ धर्मितावच्छेदकता** (~~VV~~-5.2.1) इत्यादि। **सामग्र्येवेति**। एवकारेण धर्मितावच्छेदकतासम्बन्धेन कारणत्वेन अभिमत-योग्यताज्ञानादिघटित-समुदायस्य सामग्रीत्वव्यवच्छेदः।

केचित्तु **द्रव्यत्वादौ** इति सप्तम्या वृत्तित्वम् अर्थः। तच्च शाब्दबोधे अन्वेति। द्रव्यत्वे वृत्तित्वम् उपपादयितुम् आह - **द्रव्यत्वनिष्ठाया** इत्यादि। अयम् आशयः। समवायादिसम्बन्धस्य कार्यतानवच्छेदकत्वे कालिक-प्रत्यासत्त्या काले

प्रत्यासन्नेभ्यः कारणेभ्यः कालसम्बन्धरूपाम् उत्पत्तिम् आसाद्य कार्यं समवायेन अस्मिन्नेव आत्मनि अधुना वर्तते नान्यत्र इति व्यवस्थानुपपत्तेः। यथा समवायादेः कार्यतानवच्छेदकसम्बन्धत्वम् आवश्यकं न तथा धर्मितावच्छेदकत्वादेः। समवायेन स्वोत्पादकसामग्र्या आत्मनि समुत्पद्यमानस्य ज्ञानस्य द्रव्यत्वावच्छिन्न-विशेष्यकत्वादेव धर्मितावच्छेदकता-सम्बन्धेन द्रव्यत्वादिमात्र-वृत्तित्वसिद्धेः इति। धर्मितावच्छेदकता-सम्बन्धेन कार्योत्पादिकाया अतिरिक्तसामग्र्या अनावश्यकतया न तथा अस्ति घटत्वे निरुक्तशाब्दापत्ति-सम्भावनापि इत्याहुः। तत्रेदमवधेयम्। अत्र पक्षे चैत्रे निरुक्तशाब्दबोध उत्पद्यते। द्रव्यत्व उत्पद्यते इत्यादौ चैत्रादिवृत्ति-निरुक्त-शाब्दबोध उत्पत्त्याश्रय इति। अस्यैव विषयत्वम् अङ्गीकार्यम्। तथा सति अस्य प्रामाण्यवत् 'स्थले पद्मम् उत्पद्यते' इत्यादीनाम् अपि प्रामाण्यं स्यात्। उत्पत्तिकाले स्थलस्य विद्यमानतया यथाकथञ्चित्सम्बन्धेन तद्वृत्तित्वविशिष्टपद्म-उत्पत्त्याश्रयत्वस्य अबाधितत्वात् निरुक्तवृत्तित्वादेः क्लृप्ततया कार्यतावच्छेदक-सम्बन्धेन वृत्तित्वमात्र-विषयताकथनस्य राजाज्ञासमशीलत्वात्। धर्मितावच्छेदकस्य वृत्त्यनियामकत्वेन सम्बन्धित्व-विषयताया अपि उभयत्र समानत्वात्। अवच्छेदकत्वावगाहितापक्षे च तस्य कल्प्यतया प्रत्ययानुरोधात् कार्यतावच्छेदक-सम्बन्धेन कार्याधिकरण एव कल्पते इति न उक्तदोषः। किञ्चात्र पक्षे धर्मितावच्छेदकतायाः कार्यतावच्छेदक-सम्बन्धत्व-विरहेऽपि इत्युक्तेः नास्ति प्रयोजनम्। कार्यतावच्छेदकसम्बन्धेन एव वृत्तित्वं यदि स्यात् सम्भावितमपि, स्यादपि शङ्कोत्थापकताया सार्थकत्वम्। नास्ति च तदिति।

**VV-G. 5.2.3:** **तद्भेदेन अनन्तकारणताकल्पनमपेक्ष्य लाघवादिति।** ननु धर्मितावच्छेदक-सम्बन्धेन कार्यकारणभावे पुरुषान्तरीय-द्रव्यत्वाद्यवच्छिन्न-विशेष्यताकयोग्यताज्ञानात् पुरुषान्तरस्य शाब्दबोधापत्तिवारणाय तत्तत्पुरुषीयत्वस्य कार्यतावच्छेदक-कारणतावच्छेदक-कोटौ प्रवेशनीयतया तद्भेदेन तत्पक्षेऽपि कार्य-कारण-भावानन्त्यम्। विषयपुरुषयोः अनन्तत्वेन न्यूनाधिकभावस्य परिच्छेत्तुम् अशक्यत्वादिति चेत् ? न। पुरुषदशकं विषयदशकं च अनुसृत्य न्यूनाधिकभाव-विज्ञाने लाघव-गौरवस्य सुज्ञानत्वात्। तथाहि पुरुषनिष्ठप्रत्यासत्त्या कार्य-कारण-भावेन तत्तत्पुरुषत्वस्यापि धर्मितावच्छेदकत्व-सम्भवेन कार्यकारणभाव-दशकं, विषयनिष्ठतत्तद्धर्मस्य धर्मितावच्छेदकतया तद्भेदेन कार्यकारणभावदशकम् इति विंशति-कार्यकारणभावः। धर्मितावच्छेदकनिष्ठप्रत्यासत्त्या हेतुत्वे तत्तत्पुरुषभेदेन कार्य-कारणभावदशकमेव इति न्यूनाधिकभावः सुज्ञान एव इति। यत्तु पुरुषनिष्ठ-प्रत्यासत्त्या कार्यकारणभावे प्रकारत्व-विशेष्यत्वयोः निरूप्य-निरूपकभावापन्नयोः कार्यकारणभावावच्छेदक-कोटौ प्रवेशनीयत्वेन विशेष्यविशेषणभावे विनिगमना-

अभावात् विषयदशकं पुरुषदशकं च अनुसृत्य विचारे विंशतिकार्यकारणभावः। धर्मितावच्छेदकनिष्ठ-प्रत्यासत्त्या कार्यकारणभावे च तत्तत्पुरुषीयत्वप्रवेशेन तत्तद्दशकम् एवेति व्यक्तो न्यूनाधिकभाव इति। तन्न। यथाहि एकैकप्रकारस्य विशेष्यदशकं तथैकैकविशेष्यस्य प्रकारदशकमपि सम्भवति इति विनिगमकाभावात् प्रकारतावच्छेदकताप्रत्यासत्त्यापि कार्यकारणभावो वक्तव्यः। तथा च धर्मितावच्छेदकताप्रत्यासत्त्या कार्यकारणभावदशकं, प्रकारतावच्छेदकताप्रत्यासत्त्या च कार्यकारणभावदशकम्। तत्रैकैकस्मिन् तत्तत्पुरुषीयत्वप्रवेशे कार्यकारणभावानां द्वे शते। प्रकारत्व-विशेष्यत्वयोः विनिगमनाविरहेण परस्पर-विशेष्यविशेषणभाव-आपन्नयोः कार्यकारणभावघटकत्वेऽपि पुरुषनिष्ठ-प्रत्यासत्त्या हेतु-हेतुमद्भाव-पक्षेऽपि द्वे शते एव। अत्र तु एकस्मिन् विशेष्ये प्रकारदशकमध्यात् त्रयाणां त्रयाणामेव विशेष्यत्रय एव चैकैकस्य प्रकारत्वे सम्भाविते द्वे शते एव कार्यकारणभावानाम्, धर्मितावच्छेदकनिष्ठप्रत्यासत्त्या हेतु-हेतुमद्भावे, पुरुषनिष्ठ-प्रत्यासत्त्या हेतु-हेतुमद्भावे तु त्रयाणां प्रकारत्वसम्भावनायां प्रथमतः त्रिंशद्-विशेष्यविशेषणभावे, विनिगमनाविरहेण च षष्ठिः सम्भाव्यते इति विपरीत एव न्यूनाधिकाभाव इति न दूषणम्। कालादेः अनन्ततया एकपुरुषज्ञानेऽपि एकस्मिन् विशेष्ये सर्वेषां प्रकारत्वसम्भवात्। अन्यथा तत्तत्पुरुषाणां विशेष्यत्वावलम्बनेन उद्भावितस्य आधिकस्यापि अवकाशो न स्यात्। पुरुषत्रयस्यैव विशेष्यत्व-सम्भावनया उक्तरीत्या षष्ठिकार्यकारणभावेन विंशत्यधिकशतकार्यकारणभावस्यैव प्रसक्तेः। अथ यदुक्तम् आत्मनिष्ठप्रत्यासत्त्या कार्यकारणभावे तत्तत्पुरुषस्य विशेष्यत्वेन तदाधिक्यम्, तन्न सङ्गच्छते । तथा हि प्रागुक्तरीत्या प्रकारता-वच्छेदकता-सम्बन्धेन कार्यकारणभावस्यापि स्वीकणीयतया विषयनिष्ठ-प्रत्यासत्त्या हेतु-हेतुमद्भावपक्षे तत्तत्पुरुषत्वावच्छिन्न-विशेष्यताक-शाब्दबुद्धित्वाद्यवच्छिन्न-कार्य-कारण-भावदशकस्य वक्तव्यतया तत्र तत्तत्पुरुषीयत्वप्रवेशे पुरुषनिष्ठ-प्रत्यासत्त्या कार्यकारणपक्षवत्पुरुष-विशेष्यत्व-निबन्धनस्य कार्यकारणभावस्य प्रसङ्ग इति एतद्बोध-विजृम्भितम्। विषयनिष्ठप्रत्यासत्त्या कार्यकारणभावपक्षे धर्मित्वप्रकारत्व-अवच्छेदकत्वाभ्यां द्विविध-कार्यकारणभाव-सद्भावेऽपि विशेष्य-दशकं प्रकारदशकं पुरुषदशकं च अनुसृत्य विचारे सर्वेषां सर्वविशेष्यत्व-प्रकारत्व-सम्भवेन तत्तद्धर्मावच्छिन्नप्रकारत्व-घटित-धर्मावच्छिन्न हेतु-हेतुमद्-भाव-दशकत्रये तत्तद्धर्मावच्छिन्न-विशेष्यत्वघटित-धर्मावच्छिन्न-हेतुहेतुमद्भाव-दशकत्रये च तत्तत्पुरुषीयत्व-प्रवेशे षट्शत्येव कार्यकारणभावानां सम्भवति। पुरुषनिष्ठप्रत्यासत्त्या कार्यकारणभावपक्षे तु त्रिंशताम् एकैकधर्मावच्छिन्न-प्रकारतानिरूपित-स्वातिरिक्त-ऊनत्रिंशद्-धर्मावच्छिन्न-विशेष्यत्वघटित-धर्मावच्छिन्न-

ऊनत्रिंशत्कार्यकारणभावे सप्तत्युत्तराष्टशती कार्यकारणभावानाम्। तत्र च प्रकारत्व-विशेष्यत्वयोः विशेष्यविशेषणभावे विनिगमनाविरहात् वैगुण्यप्रसक्तौ सुतराम् आधिक्यमिति। वस्तुतः परस्पर-विशेष्यविशेषणभावे तत्तत्पुरुषस्य विशेष्यत्वाननुशरणेऽपि पुरुषनिष्ठप्रत्यासत्त्या कार्यकारणभाव एव आधिक्यम्। तथाहि दशकद्वयम् अवलम्ब्य विचारे स्वातिरिक्त-ऊनविंशतितत्तद्धर्मावच्छिन्न-विशेष्यतानिरूपित-तत्तद्धर्मावच्छिन्नप्रकारत्व-घटित-ऊनविंशतिगुणितविंशति-कार्य-कारणभावे प्रकारत्व-विशेष्यत्वयोः परस्परं विशेष्य-विशेषणभावे विनिगमनाविरहात् षष्ठ्यकसप्तशती कार्यकारणभावानाम्। विषयनिष्ठ-प्रत्यासत्त्या कार्यकारणभावे चतुःशत्येव इति। इदम् उपलक्षणम्। तत्तद्धर्मावच्छिन्नविशेष्यत्वस्य कारणतावच्छेदकघटकत्वे अवच्छेदकत्व-विशेषणतया तत्तद्धर्माणां तत्तत्सम्बन्धतया च आधेयत्वस्य कारणतावच्छेदक-घटकत्वात् अपि गौरवं बोध्यम्।

ननु द्रव्यत्वावच्छिन्नविशेष्यक-प्रमेयत्वावच्छिन्नविशेष्यक-ज्ञाने ज्ञानमिदं घटाभाववति प्रमेये घटप्रकारताकम् इति अप्रामाण्यज्ञानास्कन्दिते द्रव्यत्व इव प्रमेयत्वे प्रमेयत्व इव द्रव्यत्वेऽपि अप्रामाण्यज्ञानस्य उत्तेजकत्व-अनुत्तेजकत्वयोः घटत्वावच्छिन्नप्रकारक-शाब्दबोधस्य अनुपपत्तिः आपत्तिश्च इति पुरुषनिष्ठ-प्रत्यासत्त्या हेतु-हेतुमद्भावो अङ्गीकरणीयः। तत्र च प्रमेयत्वावच्छिन्नविशेष्यक-शाब्दबोधे प्रमेयत्वावच्छिन्न-विशेष्यत्वघटित-अप्रामाण्यग्रहस्य एव उत्तेजकत्वं वाच्यमिति न दोषसम्भव इति चेत् ? न। स्वविशिष्टावच्छेदकत्व-संसर्गेण हेतुत्वे दोषाभावात्। वैशिष्ट्यञ्च स्वीय-घटत्वावच्छिन्न-प्रकारतानिरूपितविशेष्यताकत्व-स्वनिष्ठ-विशेष्यतानिरूपित-घटत्वावच्छिन्न-प्रकारताकत्व-निष्ठप्रकारता-निरूपित-घटाभाववन्निष्ठ-विशेष्यत्वनिष्ठ-विषयता-निरूपित-अवच्छिन्नत्व-सम्बन्धावच्छिन्न-अवच्छेदकतावत्त्व-सम्बन्धावच्छिन्न-प्रतियोगिताक-स्वाभाववत्त्व-उभयसम्बन्धेन। अवच्छेदकतावत्ता च (१)स्वसामानाधिकरण्य-(२)स्वानवच्छेदकानवच्छिन्नत्व-(३)स्ववृत्तित्व-(४)स्वावच्छेदक-सम्बन्धावच्छिन्नत्व-एतच्चतुष्टयसम्बन्धेन। न च उक्ताकाराप्रामाण्यज्ञानेन अवच्छिन्नत्वसंसर्गेण विशेष्यत्वे प्रमेयत्वादेः विशेषणत्वम् अनुभूयते। न वा घटाभाववतो विशेष्यत्व-विशेषणतापि इति वाच्यम्। धर्मिपारतन्त्र्येण सप्तमी-अभिलप्यमाने विशेष्यत्वे प्रमेयत्वादेः प्रकारत्वसम्भवात् घटाभाववतोऽपि आधेयतया विशेष्यत्व एव मानाभ्युपगमाच्च। प्रमेये तद्भाने बाधनिश्चयविधया प्रतिबन्धकत्वादेव आपत्त्यसम्भवेन तस्य उत्तेजकत्वानावश्यक-त्वादवच्छिन्नत्व-प्रकारक-ज्ञानसङ्ग्रहाय च विशेष्यत्वनिष्ठ-विषयता-निरूपित-स्वरूपातिरिक्त-सम्बन्धानवच्छिन्न-निरूपितत्वनिष्ठ-विषयतानिरूपित-अवच्छेदकता-त्वावच्छिन्नविषयतावद्-अवच्छेदकतावत्त्वस्य संसर्गघटकता विवक्षिता। नातः

अननुगम इत्येषा दिक्। घटाभाववति घटप्रकारताकम् इदं ज्ञानम् इत्यादि-अप्रामाण्यज्ञानानाम् अभावस्तु योग्यताज्ञान एव विशेषणीय इति।

**योग्यताज्ञानबलादेवेति**। उक्तज्ञानस्य कारणतावच्छेदकवत्त्वे तद्घटित-समुदायस्यापि सामग्रीत्वसम्भवेन कार्यतावच्छेदक-सम्बन्धेन धर्मितावच्छेदकत्वेन कार्यतावच्छेदक-घटत्वावच्छिन्नप्रकारक-शाब्दबुद्धित्वावच्छिन्नापादकत्व-सम्भव इति भावः। ननु योग्यताज्ञानस्य विषयनिष्ठ-प्रत्यासत्त्या लाघवेन हेतुत्वेऽपि उपस्थितेः समवायेन एव हेतुत्वं युक्तम्। न च तत्तद्धर्मावच्छिन्नविषयक-शाब्दबोधे तत्तद्धर्मा-वच्छिन्न-विषयकोपस्थितित्वेन कारणत्वस्य वाच्यतया समवायेन हेतुत्वे अनन्त-कारणत्वापत्त्या गौरवमिति वाच्यम्। स्वत्वस्य अननुगतत्वेन सर्वत्र परम्परायाः संसर्गत्वे मानाभावेन च "स्वजनकज्ञानीय" (VV-5.2.8) इत्यादि-वक्ष्यमाण-प्रकारेण विषयनिष्ठ-प्रत्यासत्त्या हेतुत्वस्य असम्भवात्।

**VV-G. 5.2.4:** विशिष्टशक्तिज्ञान-कारणत्वानुरोधेन वृत्तिशरीरे विषय-प्रवेशस्य आवश्यकत्वेन विषयनिष्ठप्रत्यासत्त्या अहेतुत्वे तत्तत्पुरुषीयत्व-प्रवेशेन विपरीतगौरवाच्चेति आशयवान् आह - **आत्मनिष्ठप्रत्यासत्त्या हेतुभूतामिति**। **उपस्थितिमन्तरेणेति**। ननु कारणतावच्छेदकेन समवायेन कार्याधिकरणे द्रव्यत्वादौ अप्रत्यासन्नत्वात् एव उपस्थितेः सहकारित्वसम्भवे व्यभिचारेण तत्प्रदर्शनम् अफलम्। किञ्च उपस्थितेः व्यतिरेको न कालगतो न वा सम्बन्धमात्रावच्छिन्नप्रतियोगिताको न चापि आत्मनिष्ठः प्रकृतेः विवक्षितः। तत्पुरुषस्य द्रव्यत्वावच्छिन्नोपस्थितिविरहकालेऽपि पुरुषान्तरस्य तत्सद्भावात् पुरुषान्तरीयोपस्थितेः विषयतया द्रव्यत्वे सत्त्वात् आत्मनः कार्यदेशत्व-विरहाच्चेति। कारणतावच्छेदकसम्बन्धावच्छिन्न-प्रतियोगिताकः कार्याधिकरणनिष्ठः सहकारिता-विरहप्रयोजकतया विवक्षणीयः। स च द्रव्यत्वावच्छिन्नोपस्थितेः इव घटत्वावच्छिन्नोपस्थितेः अपि अभावो द्रव्यत्वे विद्यमानः। तस्या इव तस्या अपि असहकारितां व्यवस्थापयति इति, तद्-विरहकालेऽपि आपत्तिः सम्भवति इति तदुपेक्षणं च निर्बीजम् इति चेत् ? न। तत्तद्धर्मावच्छिन्नकार्यस्य तत्तद्धर्मावच्छिन्न-कार्यतावच्छेदक-सम्बन्धेन उत्पत्तिः तत्तद्धर्मव्यापक-अशेष-धर्मावच्छिन्नकारणानां स्वस्वकार्यतावच्छेदकसम्बन्धेन कार्याधिकरणे कारणतावच्छेदकसम्बन्धेन प्रत्यासन्नानां पूर्वकालसत्त्वम् अपेक्षते इति अभिप्रायात्। न च किमर्थम् एतद्-अङ्गीकार्यम् इति वाच्यम्। ज्ञानत्वावच्छिन्नं प्रति त्वङ्-मनोयोगस्य हि लाघवेन आत्मनिष्ठप्रत्यासत्त्यैव हेतुत्वेन विषये तदभावसत्त्वेन तस्य असहकारितया तदभावदशायाम् आपत्तिः इतरथा दुरुद्धरा एव स्यात्। एवञ्च सहकारिता-विरहप्रयोजको न कार्याधिकरणे तदभावः किन्तु कारणतावच्छेदकसम्बन्धेन

स्वाधिकरणावच्छेद्यः पूर्वकालवर्ति-तदभाव एव इति **उपस्थितिमन्तरेण** इत्यादिग्रन्थसङ्गतिः। घटत्वावच्छिन्नोपस्थितिम् अन्तरेण घटत्वावच्छिन्न-प्रकारक-शाब्दबुद्धित्वावच्छिन्नस्य न क्वापि उत्पत्तिसम्भवः। घटत्वावच्छिन्न-विषयक-शाब्दबुद्धित्वस्य तद्व्यापकत्वेन तदवच्छिन्नकारणीभूताया आत्मनि प्रत्यासन्नायाः तदुपस्थितेः पूर्वकालसत्त्वस्य अपेक्षणीयत्वात्। न च योग्यताज्ञान-कार्यतावच्छेदकस्य तत्पुरुषीयत्वघटितत्वेन तदवच्छिन्नस्य तत्पुरुषस्य घटत्वावच्छिन्नोपस्थितिविरहे पुरुषान्तरस्य तदुपस्थितिदशायां च आपत्तिः एवमपि दुर्वारा इति वाच्यम्। स्वस्वकार्यतावच्छेदकसम्बन्धेन तत्तद्धर्मावच्छिन्नकार्याधिकरणे प्रत्यासन्नानाम् इत्यस्य विवक्षणीयत्वात्। तत्पुरुषीय-घटत्वावच्छिन्नप्रकारक-शाब्दबुद्धित्वावच्छिन्नस्य समवायेन अधिकरणे तत्पुरुषे तदानीम् उक्तोपस्थितेः अप्रत्यासन्नत्वात्। न चैवं द्रव्यत्वावच्छिन्नोपस्थितेः किमिति पूर्वकालसत्त्वं न अपेक्ष्यते इति वाच्यम्। द्रव्यत्वावच्छिन्नविषयक-शाब्दत्वस्य उक्तोपस्थितिजन्यता-वच्छेदकस्य घटत्वावच्छिन्नप्रकारक-शाब्दबुद्धित्व-अव्यापकत्वात् इति।

**VV-G. 5.2.5: उपस्थितेः शाब्दबोधे हेतुत्वोपगमादिति।** अथ 'घटो द्रव्यम्' इत्याकारक-आकाङ्क्षाज्ञानम् अन्तरेणापि योग्यताज्ञानात् प्रमेयत्वे शाब्दबोध-उत्पत्त्या निराकाङ्क्षज्ञानस्य तत्सहकारित्वासम्भवेन तद्विरहदशायां द्रव्यत्वे निरुक्तशाब्दबोधापत्तेः एवमपि तदवस्था। यदि च निर्विशेषस्य सामान्यस्य अभावेन तत्तद्धर्मावच्छिन्नकार्योत्पत्तौ तत्तद्धर्मव्याप्य-यत्किञ्चिद्-धर्मावच्छिन्न-कारणानां स्वस्वकार्यतावच्छेदक-सम्बन्धेन तत्तद्धर्मावच्छिन्न-कार्याधिकरणे प्रत्यासन्नानां पूर्वकालसत्त्वम् अपेक्षितं भवतीत्यस्य अभ्युपगमे घटत्वावच्छिन्नप्रकारतानिरूपित-द्रव्यत्वावच्छिन्नविशेष्यताक-शाब्दबुद्धित्वावच्छिन्नं प्रति 'घटो द्रव्यम्' इत्याकारक-आकाङ्क्षाज्ञानस्य कारणत्वेन न उक्त-आपत्तिसम्भव इति उच्यते, तदापि 'घटः प्रमेयः' इति आकाङ्क्षाज्ञानकाले द्रव्यत्वे शाब्दबोधापत्तिः दुर्वारा। घटत्वावच्छिन्न-प्रकारतानिरूपित-प्रमेयत्वाच्छिन्नविशेष्यताक-शाब्दबुद्धित्वस्यापि व्याप्यत्वेन उक्त-आकाङ्क्षाज्ञानस्य तदवच्छिन्नकारणत्वात्। न च द्रव्यत्वे प्रकारतया उपस्थितेः अभावात् न आपत्तिः इति वाच्यम्। आकाङ्क्षाबहिर्भूतपदवृत्तिज्ञानजन्य-द्रव्योपस्थितिकाल एव आपत्तौ तात्पर्यात्। न च उपस्थित-कारणतावच्छेदक-कोटौ पदस्य विशिष्यैव प्रवेशः कार्यः। प्रमेयादिपदजन्योपस्थितिम् अन्तरेण उक्ताकाङ्क्षाज्ञानस्य फलानुपधायकत्वेन तथाविधोपस्थितेरेव सहकारितया न उक्तापत्तिरिति वाच्यम्। घटत्वेऽपि एवम् आपत्त्यसम्भवात्। घटत्वावच्छिन्न-प्रकारतानिरूपित-द्रव्यत्वाद्यवच्छिन्न-विशेष्यताक-शाब्दबुद्धित्वादेः एव निरुक्तधर्म-व्याप्यत्वेन तदवच्छिन्नसामग्र्याः द्रव्यत्वादिपदजन्योपस्थिति-सहकृत-'घटो द्रव्यम्'

इत्यादि-आकाङ्क्षाज्ञानघटितताया 'घटो घटः' इति आकाङ्क्षाज्ञानकाले असत्त्वात् घटपदजन्य-द्रव्यत्वावच्छिन्न-उपस्थिति-सहकृत-'घटो घटः' इति आकाङ्क्षाज्ञान-घटितसमुदायस्य सामग्रीत्वेऽपि तत्सामग्र्या नियमतो घट-पद-लक्षणाज्ञानजन्य-उपस्थिति-घटितत्वेन उपस्थिति-शाब्दबोध-कार्यकारणभाव-अवच्छेदकशरीरे विषयप्रवेशाभावेऽपि तत्तत्सत्त्वस्य तत्र असम्भवात् 'घटो द्रव्यम्' इति आकाङ्क्षाज्ञानस्य द्रव्यपदलक्षणाज्ञानजन्य-उपस्थितिसहकृतस्य प्रमेयत्वे शाब्दोत्पादकतया तद्घटितसामग्रीकाले यद्यपि घटत्वे सम्भवति आपत्तिः, तथापि 'घटो घटः' इत्यादि-उपक्रम-विरोध-प्रसङ्गो दोषः। किञ्च उपस्थितिकारणता-वच्छेदककुक्षौ विशिष्यपदप्रवेशे कार्यतावच्छेदकेऽपि व्यभिचारवारणाय तादृश-उपस्थिति-अव्यवहितोत्तरत्वस्य प्रवेश्यतया तदवच्छिन्नस्य योग्यताज्ञान-कार्यतावच्छेदकावच्छिन्न-व्यापकत्वासम्भवेन **येन सम्बन्धेन यद्धर्मावच्छिन्नं प्रति** (VV-5.2.6) इत्यादि-उक्तेः अपि असङ्गतिः स्यात्। न च द्रव्यत्व-प्रमेयत्वादौ सर्वत्रैव धर्मितावच्छेदके शक्ति-लक्षणा-ज्ञानजन्य-द्रव्यपद-प्रयोज्य-द्रव्यत्व-प्रमेयत्वादि-उपस्थिति-अव्यवहितोत्तर-शाब्दबुद्धेः सत्त्वेन कथं न व्यापकत्वम् इति वाच्यम्। वृत्तित्वस्य अनुगत-अनतिप्रसक्तस्य दुर्वचत्वेन तत्तत्पदशक्तिज्ञानजन्य-उपस्थिति-अव्यवहितोत्तर-शाब्दबुद्धित्व-तत्तत्पदलक्षणाज्ञानजन्योपस्थिति-अव्यवहि-तोत्तर-शाब्दबुद्धित्वाद्यवच्छिन्नं प्रत्येव कारणत्वस्य विशिष्य वक्तव्यतया व्यभिचारस्य स्फुटत्वात्। सति चैवं विशिष्यपदप्रवेशे कृतेऽपि आकाङ्क्षाज्ञान-उपस्थित्योः सहकारित्वस्य न सम्भवः। द्रव्यपदशक्तिज्ञानजन्योपस्थित्यभावे तल्लक्षणा-ज्ञानजन्य-उपस्थितिकाले द्रव्यपदलक्षणाज्ञानजन्योपस्थित्यभावे तत्तत्-शक्ति-जन्योपस्थितिकाले 'घटो द्रव्यम्' इति आकाङ्क्षाज्ञानस्य फलोपधायकत्वात् उक्ताकाङ्क्षाज्ञानाभावे 'पटो द्रव्यम्' इति आकाङ्क्षाज्ञानकाले निरुक्तोपस्थित्योश्च फलोपधायकत्वात्। इत्थं च ग्रन्थानां भूयो यथाश्रुतार्थपरित्यागस्य दृष्टतया उक्तग्रन्थस्यापि विशिष्य-पदप्रवेशेन आकाङ्क्षाबहिर्भूतपदजन्योपस्थितिकाले हि आपत्तिवारणे उक्तरीत्या आपत्तिसङ्गमने च तात्पर्यम् इति उक्तिः अपि ग्रन्थाननु-रोधिनां निरस्ता वेदितव्या। यच्च अत्र आकाङ्क्षाज्ञानस्य स्वीय-स्वाद्यन्त-घटपदत्वावच्छिन्न-प्रकारतानिरूपित-स्वाद्यव्यवहितपूर्व-वर्त्यानुपूर्व्यवच्छिन्नविशेष्यता-विशिष्ट-विषयतानिरूपितवृत्ति-प्रकारता-निरूपितधर्मितावच्छेदकताविशिष्टोपस्थिति-प्रकारत्व-सम्बन्धेन कारणत्वम् उपगम्य-आकाङ्क्षाज्ञान-विरहकाले द्रव्यत्व आपत्तिवारणम्, घटत्वे तत्सम्पादनं च केषाञ्चित् तदपि उपेक्षणीयम्। एवं सति उपस्थितेः समानप्रकारतया कार्यकारणभावस्य अनावश्यकत्वापत्त्या तदवलम्ब्य उक्तग्रन्थस्य आभासत्वप्रसङ्गात् 'घटो द्रव्यम्' इत्याकाङ्क्षाज्ञाने प्रमेयादिपदात्

द्रव्योपस्थितौ च एवमपि हि तदवस्थैव आपत्तिः। कालान्तरीण-वृत्तिज्ञानीयद्रव्य-पदनिष्ठविषयताया निरुक्तविशेष्यताविशिष्टत्वसम्भवेन परम्परया तन्निरूपिताया धर्मितावच्छेदकताया वैशिष्ट्यस्य उक्तोपस्थितीय-प्रकारत्वे सम्भवाद् एकक्षणावच्छिन्न-एकात्मवृत्तित्व-सम्बन्धेन स्वनिरूपक-ज्ञानविशिष्ट-ज्ञानीयत्व-स्वावच्छेदकावच्छिन्नत्व-उभयसम्बन्धेन विशेष्यता-वैशिष्ट्योक्तिरपि समानाकारक-ज्ञानीय-विषयतयोः एकत्वे कालान्तरीणस्य 'घटो द्रव्यम्' इति आकाङ्क्षा-ज्ञानस्यापि स्वनिरूपकतया तद्-विशिष्ट-कालान्तरीण-वृत्तिज्ञान-निरूपितत्वस्य सम्भवात् न आपत्तिवारणाय अलम्। एकक्षणावच्छिन्न-एकात्मकवृत्तित्व-सम्बन्धेन स्व-विशिष्टज्ञानीयत्व-स्वीय-स्वाद्यन्तघटपदत्वावच्छिन्न-प्रकारतानिरूपित-स्वाव्यव-हितपूर्ववर्त्यानुपूर्व्यवच्छिन्न-विषयतावच्छेदकावच्छिन्नत्व-उभयसम्बन्धेन स्वविशिष्ट-त्वस्य विषयतायाम् उपादानम्। यत्र द्रव्यं द्रव्यपदशक्यम् इति अपेक्षा-बुद्ध्यात्मक-वृत्तिज्ञानम्, अनन्तरं द्रव्योपस्थितिः, ततो 'घटो द्रव्यम्' इति आकाङ्क्षाज्ञानं प्रमेयपद-वृत्त्यवगाहि-समूहालम्बनात्मकं, ततश्च द्रव्योपस्थितिः तत्र द्रव्यपदवृत्तिज्ञानस्य उक्ताकाङ्क्षाज्ञानविशिष्टत्वेन तन्निरूपित-द्रव्यपदत्वावच्छिन्न-विषयतानिरूपित-वृत्तिविषयतानिरूपित-धर्मितावच्छेदकता-विशिष्टत्वस्य प्रमेयपदवृत्ति-ज्ञानजन्य-उपस्थितिप्रकारतायां सत्त्वेन तेन सम्बन्धेन तदुपस्थितिकालेऽपि द्रव्यत्वे निरुक्ताकाङ्क्षाज्ञानस्य सत्त्वेन तदुत्तरं शाब्दबोधापत्त्या हेयम्। अत्र उक्तापेक्षाबुद्ध्यात्मक-वृत्तिज्ञानोतर-उपस्थिति-जन्मानुधावनम्। स्वनिरूपकज्ञान-विशिष्टज्ञानीयत्वस्यापि उक्त-धर्मिता-वच्छेदकता-वैशिष्ट्यघटकतया उपादाने दूषणसम्पत्त्यर्थम्। तथा सति प्राथमिकोपस्थितेः स्वनिरूपकज्ञानविशिष्टत्वसम्भवेन तदीयत्वस्य द्वितीयोपस्थिति-प्रकारतायाम् अपि सम्भवात् समानाकारकज्ञानीयविषयत्वयोः ऐक्यात्। यत्तु **येन सम्बन्धेन यद्धर्मावच्छिन्नकार्यं प्रति** इत्याद्युक्तिः उपस्थिति-शाब्दबुद्ध्योः सामान्यकार्यकारणभावाभिप्रायेण आकाङ्क्षाबहिर्भूत-पदवृत्तिज्ञानजन्योपस्थिति-काले, शाब्दापत्तिवारणं तु पदविशेषम् अन्तर्भाव्य शाब्दबुद्ध्युपस्थित्योः विशेषकार्यकारणभावस्वीकारेणेति तदपि मन्दम्। तथा सति स्वजनकवृत्ति-ज्ञानीयेत्यादि-सम्बन्धशरीरानुधावनस्य वैफल्य-प्रसङ्गात्। सम्बन्धान्तर-ज्ञानजन्योपस्थितिकाले च आपत्तेः विशेष-कार्यकारणभावेनैव वारणात्। किञ्च उक्तकार्यकारणभावस्य सामान्यत्वमपि न सम्भवति। स्वजनकवृत्तिज्ञानीयेत्यादि-सम्बन्धशरीरे वृत्तिविषयताया वृत्तित्वावच्छिन्नत्वेन प्रवेशे शक्तित्वादिना सम्बन्धम् अवगाहमानात् ज्ञानादेव जायमानाया उपस्थितेः शाब्दबोधकारणत्वेन शाब्दबोधा-नुकूलपदपदार्थ-सम्बन्धत्वात्मक-वृत्तित्वस्य तत्र विषयतानवच्छेदकत्वात्

अनुपपत्तिः शाब्दस्य स्यात्। वृत्तित्वसमानाधिकरणत्वेन प्रवेशे च सम्बन्धत्वेन शक्त्याद्यवगाहिज्ञानात् उपस्थितेः शाब्दबोधापत्तिरिति शक्तित्वाद्यवच्छिन्न-विषयताया विशिष्य-निवेशनीयतया कारणतावच्छेदकसम्बन्धस्य ऐक्यासम्भवात्। एवं पदधर्मिक-वाचकत्वावगाहि-ज्ञानजन्य-उपस्थितेः अपि शाब्दकारणत्वेन तस्याः स्वजनकज्ञानीय-वृत्तिप्रकारतानिरूपित-धर्मितावच्छेदकता-विशिष्ट-प्रकारत्वस्य अप्रसिद्ध्या तत्र अनुपपत्तिः स्यादिति। वृत्तिप्रकारतानिरूपितपरम्परावच्छेदकता-विशिष्टप्रकारताया अपि संसर्गताया वाच्यत्वात्। अपि च विषयप्रवेशेऽपि आवश्यक एव तत्तद्धर्मविशिष्ट-निरूपितत्वावगाहिज्ञानस्य एव कारणतायाः **शक्तिवादे** व्यवस्थापितत्वादिति चेत् ? अत्र ब्रूमः। भगवदिच्छाविषयताभेदभिन्न-मूर्तिकतया द्विविध-वाच्यवाचकत्वयोः तद्भेदभिन्नस्वरूपाणां क्षणानां ज्ञानेभ्यो जायमानानाम् उपस्थितीनां कारणत्वस्य एकस्य सम्पत्तये स्वजनकज्ञानीय-वाच्यत्वप्रकारतानिरूपित-धर्मितावच्छेदकत्व-वाचकत्व-प्रकारता-परम्परानिरूपिता-वच्छेदकत्ववाच्य-सम्बन्धित्वप्रकारतानिरूपित-धर्मितावच्छेदकत्व-सम्बन्धिवाचकत्व-प्रकारता-परम्परानिरूपित-अवच्छेदकत्व-विशिष्ट-प्रकारतानाम् अन्यतमत्वेन कारणतावच्छेदक-सम्बन्धत्वं वाच्यम्। न च एवम् अन्यतमत्वस्य कारणतावच्छेदक-घटकत्वे अपसिद्धान्तः। आकाङ्क्षाज्ञान-अव्यवहितोत्तरत्वस्य अत्र ग्रन्थे **शक्तिवादे** च उपस्थित्यव्यवहितोत्तरत्वस्य कार्यतावच्छेदकत्व-उक्तविरोधश्च अन्यतमत्वेन कारणतया एव व्यभिचारवारणासम्भवाद् इति वाच्यम्। न हि अन्यतमत्वं नाम किञ्चिदपूर्वं वस्तु कारणतावच्छेदकतया कल्प्यते। क्लृप्तस्य हि तस्य न वाङ्मात्रेण कारणतावच्छेदकत्वं च वारयितुं शक्यते। अपि तु स्वभावानुपलब्धि-लिङ्गकानुमान-भङ्गसहकारिनियम-अनुपपत्ति-गौरवादि-दोषसद्भावात् वह्निगत-वैजात्यादिः अवश्यम् अभ्युपेय इति सिद्धान्तस्य न हानिः। न हि अत्र शक्तिज्ञान-लक्षणाज्ञान-जन्योपस्थितीनां प्रतिनियत-सहकारिभेदः प्रामाणिकमतौ अवभासते, यदनुपपत्त्या आश्रीयेतापि कार्यकारणभावभेदः। न च तत्तत्पदजन्योपस्थितीनां तत्तत्पदघटित-आकाङ्क्षा-ज्ञानं प्रति नियतम् एव अस्ति सहकारि इति वाच्यम्। एतत्प्रत्याशाया अपि तत्तत्पदशक्ति-लक्षणाज्ञान-जन्योपस्थितीनाम् उक्तक्रमेण एकैककारणत्व एव सम्भवाद् विभिन्नकारणत्वे सहकारित्व-असम्भवस्य अनुपदम् उक्तत्वात्। उक्तरीत्या हेतुत्वस्वीकारे च नास्ति एव हि पदविशेषस्य प्रवेश इति कुतः प्रतिनियत-सहकारिप्रत्याशा ? स्वक्रियाव्याघातात् स्वतो वा यत्र शङ्काविरहः तत्र कार्यानुपलब्धि-लिङ्गकानुमानयोः सम्भवेन तद्भङ्गस्य दोषताया एव हि नास्ति सम्भवः। न च एवम् आकाङ्क्षाबहिर्भूतपद-वृत्तिज्ञानजन्य-उपस्थितिकाले

शाब्दापत्तिः दुर्निवारा एव इति वाच्यम्। सहकारिवाद-जीवनभूतायां हि सामग्रीव्याप्तौ सत्यां तथा हि यथा लाघवज्ञानसहकारात् अनुमितिः व्यापकतानवच्छेदकरूपेणापि विधेयं परिच्छिन्नति तथा घटत्वावच्छिन्नप्रकारताक-शाब्दबुद्धित्वाद्यवच्छिन्न-व्याप्यतया व्यापकसामग्री-घटकोपस्थितिवैशिष्ट्योपरागेण 'घटो द्रव्यम्' इत्याद्याकाङ्क्षाज्ञान-घटितां सामग्रीं गृह्णन् ग्राहकः पदान्तर-ज्ञानाद्यकल्पनालाघवज्ञानसाचिव्यवशात् कारणतानवच्छेदकेनापि आकाङ्क्षाघटक-पदघटित-सम्बन्धविशेषेण कार्याधिकरण-प्रत्यासन्नत्वविशिष्टाया एव उपस्थितेः वैशिष्ट्यं परिच्छिन्नत्ति इति उक्तस्थले नास्ति कार्यनियता काचिदपि सामग्रीति न आपत्तिसम्भवः। आत्मनिष्ठप्रत्यासत्त्या कारणत्ववादिनापि उक्ता एव गतिः अङ्गीकरणीया। आकाङ्क्षाज्ञानोपस्थित्योः स्वस्वावयवहितोत्तरत्वावच्छिन्नं प्रति कारणत्वे प्रागुक्तरीत्या सहकारित्वस्य असम्भवात्। तत्र तत्र आकाङ्क्षा-ज्ञानादीनाम् अन्यतमत्वेन कारणत्वानुक्तिश्च आकाङ्क्षाज्ञानगतान्यतमत्वस्य दुर्ज्ञेयत्वात्। अन्यतमत्वस्य भेदकूटावच्छिन्नप्रतियोगिताकभेदरूपत्वेन विशेष्यता-वच्छेदकधर्मं विना खलेकपोतन्यायेन विशेषणत्वस्य अव्यवच्छेदकताया व्यासज्य-वृत्तित्वस्य च अनभ्युपगमात्। तत्र कूटत्वस्य एकविशिष्ट-अपरत्वरूपतया भेदानां विशेष्य-विशेषणभावे विनिगमनाविरहेण अन्यतमत्वस्य अनेकत्वात् अवच्छेदक-भेदस्य सामान्यतः अवच्छेद्यभेदकत्वाभ्युपगमाद् गुरुधर्मावच्छिन्न-कारणतानन्त्य-प्रसङ्गरूपगौरवाच्च। अन्यतमत्वस्य कारणतावच्छेदकत्वासम्भवाद् एकत्र निर्णीत इति न्यायावलम्बनाच्च प्रकृते च अन्यतमत्वस्य सुज्ञेयत्वात्। लाघवानुरोधेन विनापि विशेष्यतावच्छेदकं खलेकपोतन्यायेन भानस्य अवच्छेदकताया व्यासज्यवृत्तित्वस्य च अङ्गीकारात् समनियतधर्माणां भेदस्य अवच्छेद्य-भेदकत्वानङ्गीकारात् च अन्यतमत्वस्य कारणतावच्छेदकघटकत्वम् अभ्युपेत्य सामान्यकार्यकारणभावोक्तिः। उक्तं च **केवलान्वयिग्रन्थे** - कार्यतावच्छेदके अव्यवहितोत्तरत्वम् अनिवेश्य व्यभिचारवारणाय अन्वय-व्यतिरेक-सहचार-विषयताद्वय-अन्यतरवत्त्वेन सहचारज्ञानस्य व्याप्तिग्राहकत्व इत्यादिना। अन्यतरत्वस्य कारणतावच्छेदघटकत्वं स्वयमेव ग्रन्थकृता। स्वजनकज्ञानीय-विशेष्यत्वनिष्ठ-प्रकारतानिरूपिताया पदविषयतानिरूपित-विषयत्वविषयता-निरूपित-जन्यत्वविषयत्व-विषयतानिरूपितबोधविषयत्व-विषयतानिरूपितविषयत्व-प्रकारत्व-निष्ठविषयता-तन्निरूपितावच्छेदकता-निरूपितत्वनिष्ठावच्छेदकता-निरूपित-अवच्छिन्नत्वनिष्ठावच्छेदकतानिरूपित-अवच्छेदकताविशिष्टप्रकारत्वादेः संसर्गत्वस्य विवक्षणात्। विशिष्टनिरूपितशक्तिज्ञानस्य हेतुत्वेऽपि न विषयप्रवेशस्य आवश्यकता। निरुक्तक्रमेण च सामग्रीव्याप्तेः निर्वचने घटत्वावच्छिन्नप्रकारक

शाब्दबोधव्याप्य-सामग्रीकोटौ स्वजनकज्ञानीयेत्यादि-उक्तसम्बन्धेन घटत्वे प्रत्यासन्नाया उपस्थितेः प्रवेश्यत्वात् न घटोपस्थितिविनिगमकाले धर्मितावच्छेदकतासम्बन्धेन द्रव्यत्वे शाब्दबोधापत्तिः। न च यत्र क्वचन स्वजनकज्ञानीयेत्यादिसम्बन्धेन विद्यमानाया व्यापकसामग्र्या अपेक्षितत्वे शाब्दापत्तितादवस्थ्याद् धर्मितावच्छेदकता-सम्बन्धेन कार्याधिकरणे प्रत्यासन्नाया उपस्थितेः व्यापकसामग्रीविधया अपेक्षितत्वस्य **येन सम्बन्धेन** इत्यादि-ग्रन्थस्वरससिद्धताया वाच्यतया निरुक्तसामग्रीव्याप्तौ तत्प्रवेशस्य समूलत्वेन सम्भवेऽपि घटत्वे प्रत्यासन्नाया उपस्थितेः कथं प्रवेशो मूलविरहादिति वाच्यम्। धर्मितावच्छेदकता-सम्बन्धेन द्रव्यत्वादौ घटत्वावच्छिन्न-प्रकारक-शाब्दबुद्धिः उत्पद्यमाना प्रकारतया घटत्वेऽपि उत्पद्यते एव। तत्र च उपस्थिति-विरहेऽपि द्रव्यत्वे धर्मितावच्छेदकतासम्बन्धेन उक्तशाब्दबुद्धिः यदुत्पद्येत शाब्दोपस्थित्योः सामान्य-कार्यकारणभावे व्यभिचारः स्यादिति। तद्वारणस्यैव तत्प्रवेशे मूलत्वात्। न च एवम् एतस्मात् एव मूलाद् धर्मितावच्छेदकता प्रत्यासत्त्योपस्थितेः सामग्रीव्याप्तौ प्रवेशसम्भवे **येन सम्बन्धेन** इत्यादि-उक्तिः निरर्थिका इति वाच्यम्। **येन सम्बन्धेन** इत्यादेः 'येन सम्बन्धेन यद्धर्मावच्छिन्नकार्यं प्रति येन सम्बन्धेन यद्धर्मावच्छिन्नकार्यस्य व्यापकत्वं, तेन सम्बन्धेन तद्धर्मावच्छिन्नकार्योत्पत्तौ तद्धर्माश्रयीभूत-तत्तद्धर्मावच्छिन्न-यत्किञ्चिद्व्यक्तेः तत्तद्धर्मावच्छिन्नकार्यतावच्छेदक-सम्बन्धेन यद्यदधिकरणं तत्र कारणतावच्छेदकसम्बन्धेन प्रत्यासन्नानां तत्तद्धर्मावच्छिन्न-कार्यकारणानां पूर्वसत्त्वम् अपेक्ष्यते' इत्यर्थः। तथा सति घटत्वावच्छिन्नप्रकारक-शाब्दत्वाश्रयीभूतायाः शाब्दत्वावच्छिन्नायाः 'घटो द्रव्यम्' इत्यादि-शाब्दव्यक्तेः प्रकारतासम्बन्धेन अधिकरणेषु यावत्सु घटत्वद्रव्यादिषु स्वजनकज्ञानीय-इत्यादिसम्बन्धेन प्रत्यासन्नानाम् उपस्थितीनाम् अपेक्षितपूर्व-सत्त्वकत्वे अत एव घटाद्युपस्थितेः व्याप्यीभूतसामग्र्यां प्रवेशस्य समूलत्वाद् व्यभिचारवारणस्य च उक्तापेक्षामूलस्यैव मूलत्वात्, उक्तग्रन्थ-असङ्गतिविरहात्। एवं च व्याप्यीभूतायाः सामग्र्याः यथा घटत्वावच्छिन्न-प्रकारकयोग्यताज्ञानेन 'घटो द्रव्यम्' इत्याकाङ्क्षाज्ञानेन स्वजनकज्ञानीय-इत्याद्युक्तसम्बन्धेन प्रत्यासन्नाभ्याम् उपस्थितित्वावच्छिन्नाभ्यां घटपद-द्रव्यपद-जन्योपस्थितिभ्यां च घटितत्वं तथा 'घटो घटः' इत्याद्याकाङ्क्षाज्ञानेन स्वजनकज्ञानीय-इत्याद्युक्तसम्बन्धेन प्रत्यासन्नाभ्यां घटपदजन्योपस्थितिं घटितत्वं लक्षणाज्ञान-स्थलानुरोधेन स्वीकरणीयमिति घटत्वे निरुक्तशाब्दापत्तिः भवति उपपादिता।

अथवा घटत्वावच्छिन्नप्रकारताक-शाब्दबुद्धौ धर्मितावच्छेदकतया द्रव्यत्वादौ समुत्पद्यमानाया प्रकारतावच्छेदकतासंसर्गेण घटत्वेऽपि द्रव्यत्वा-

वच्छिन्न-विशेष्यताक-शाब्दबुद्धिः उत्पद्यते। स्वीक्रियते च विनिगमकाभावात् द्रव्यत्वावच्छिन्नविशेष्यताक-शाब्दबुद्धित्वावच्छिन्नं प्रत्यपि कारणता। तथा सति प्रकारतावच्छेदकता-सम्बन्धेन द्रव्यत्वावच्छिन्न-विशेष्यताक-शाब्दबुद्धित्वावच्छिन्नं प्रति प्रकारतासम्बन्धेन शाब्दबुद्धित्वावच्छिन्नस्य व्यापकत्वेन तदवच्छिन्न-कारणीभूतोपस्थितेः प्रकारतावच्छेदकतासम्बन्धेन कार्याधिकरणे तत्र घटत्वे प्रत्यासन्नायाः पूर्वकालसत्त्वस्य अपेक्षिततया घटत्वावच्छिन्नविषयकोपस्थितिरहितो घटत्वावच्छिन्न-प्रकारक-शाब्द-सामग्री-क्षणः। **येन सम्बन्धेन** इत्याद्युक्त-यथाश्रुतनियम-महिम्नैव दुर्लभ इति आपत्त्यभावात् उक्तार्थो न तस्य विवक्षणीय इति अलम्।

**VV-G. 5.2.6: येन सम्बन्धेन यद्धर्मावच्छिन्नेत्यादि**। यद्धर्मं प्रति यद्धर्मस्य व्यापकत्वं तद्धर्मावच्छिन्न-कार्यतावच्छेदक-सम्बन्धेन तद्धर्मावच्छिन्न-कार्योत्पत्तौ तत्तद्धर्मावच्छिन्न-कार्यकारणतावच्छेदक-सम्बन्धेन तद्धर्मावच्छिन्न-सामग्र्यपेक्षित-इत्युक्तौ अपि सामञ्जस्ये **"येन सम्बन्धेन"** इत्याद्युक्तिः कार्यतावच्छेदक-कारणतावच्छेदक-सम्बन्धलाभायैव इति अवधेयम्। अथ अत्र व्यापकत्वं प्रतियोगि-वैयधिकरण्य-घटितं तदघटितं वा ? न आद्यः। संयोगत्वावच्छिन्नं प्रति विभागत्वावच्छिन्नस्यापि व्यापकत्वापत्त्या संयोगोत्पत्तौ विभागसामग्र्या अपि अपेक्षितत्वापत्तेः। न द्वितीयः। तत्पुरुषीयघटत्वावच्छिन्न-प्रकारताक-शाब्दबुद्धित्वा-वच्छिन्नाधिकरणे द्रव्यत्वे तत्पुरुषीय-शाब्दत्वावच्छिन्न-अभावस्य तादृश-शाब्दा-नधिकरणकालावच्छेदेन विद्यमानतया तस्यापि व्यापकत्वानुपपत्तेः इति चेत् ? न। तद्धर्मावच्छिन्नाधिकरणे तद्धर्मावच्छिन्नोत्पत्तिकालावच्छेदेन वर्तमानो यो अभावः तस्यैव व्यापकताघटकत्वेन विवक्षितत्वात्। न च एवमपि घटीय-पाकजरूपादिकं प्रति घटैकत्वादीनां व्यापकतया पाकजरूपोत्पत्तौ सङ्ख्यासामग्र्या अपेक्षितत्वापत्तिः इति वाच्यम्। तादृशाभावाप्रतियोगित्व-उत्पत्तिकालावच्छेद्य-स्वाधिकरणताकत्वस्य विवक्षितत्वात् इति।

**VV-G. 5.2.8: स्वजनकज्ञानीयेति**। जनकत्वम् अत्र अव्यवहितोत्तरपूर्ववर्तितामात्रम्। अधिकप्रवेशे प्रयोजनविरहात्। **विशेष्यतावच्छेदकताविशिष्टप्रकारतेति**। धर्मितावच्छेदकत्वमात्रस्य संसर्गत्वे द्रव्यत्व-प्रमेयत्वाद्यवच्छिन्न-विशेष्यकवृत्ति-ज्ञानात् द्रव्यत्वावच्छिन्नांशे अप्रामाण्यज्ञानास्कन्दितात् जायमानायाः प्रमेयत्वा-वच्छिन्न-मात्रविषयकोपस्थितेः उक्तधर्मितावच्छेदकता-संसर्गेण द्रव्यत्वेऽपि सत्त्वेन तत्र शाब्दबोधः स्यादिति तद्विशिष्टप्रकारत्वस्य संसर्गत्वानुधावनम्। वैशिष्ट्यञ्च स्वसामानाधिकरण्यादिभिः बोध्यम् इति कश्चित्। तदसत्। लाघवेन स्वप्रयोज्यत्व-मात्रस्य संसर्गत्व औचित्यात्। अनुभवबलात् च उपस्थितीया यादृशसम्बन्धा-वच्छिन्ना यादृशरूपावच्छिन्ना निरवच्छिन्ना वा यन्निष्ठा या विषयता तस्यां

तादृशसम्बन्धावच्छिन्नायाः तादृशरूपावच्छिन्नाया निरवच्छिन्नाया वा तन्निष्ठवृत्ति-ज्ञानधर्मितावच्छेदकताया एव प्रयोजकत्वस्य स्वीकारात्। द्रव्यं द्रव्यपदशक्यं, घटश्च द्रव्यसम्बन्धीति समूहालम्बनोत्तरं जायमानाया बाधकमहिम्ना घटमात्र-विषयकोपस्थितेः घटत्वप्रकारकत्वस्य द्रव्यत्वनिष्ठधर्मितावच्छेदकता-वैशिष्ट्य-वारणस्य सामानाधिकरण्यफलस्य घटत्वावच्छिन्नधर्मिक-वृत्तिज्ञानोत्तरजायमानाया बाधकबलात् उद्बोधकान्तरजन्यायाः प्रमेयत्वावच्छिन्नमात्र-विषयकोपस्थितेः प्रमेयत्वावच्छिन्न-प्रकारत्वस्य घटत्वनिष्ठ-निरवच्छिन्न-धर्मितावच्छेदकता-वैशिष्ट्य-वारणस्य स्वानवच्छेदक-अनवच्छिन्नत्वफलस्य तत्रैव उपस्थिति-वृत्तिज्ञानयोः विपरीतक्रमेण जायमानत्वे घटत्वनिष्ठनिरवच्छिन्न-प्रकारतायां प्रमेयत्वावच्छिन्न-धर्मितावच्छेदकता-वैशिष्ट्यवारणस्य स्ववृत्तित्वफलस्य उद्बोधकान्तरजन्य-उपस्थितीय-समवायावच्छिन्नत्वप्रकारत्वे सम्बन्धान्तरेण वृत्तिज्ञानीय-द्रव्यत्व-निष्ठ-धर्मितावच्छेदकता-वैशिष्ट्यवारणस्य स्वावच्छेदक-सम्बन्धावच्छिन्नत्व-फलस्यापि तावन्मात्रेणैव सम्पन्नत्वात् च। अतएव निरुक्त-चतुष्टयसम्बन्धेन वैशिष्ट्यप्रवेशेऽपि द्रव्यत्वावच्छिन्न-धर्मिकवृत्तिज्ञानात् अप्रामाण्यज्ञानास्कन्दितादुत्तरम् उद्बोधकवशात् द्रव्योपस्थितौ द्रव्यत्वे शाब्दापत्तिः दुर्निवारा एव स्यादिति निरस्तम्।

**VV-G. 5.2.9: न च पदार्थेऽपि प्रकारतासम्बन्धेन शाब्दबोधोत्पत्त्येति।** अथ उक्तधर्मितावच्छेदकता-विशिष्ट-प्रकारतायाः प्रकारतात्वेन प्रवेशे प्रयोजनाभावात्। वैशिष्ट्यस्य स्वप्रयोज्यत्व-स्वनिरूपितधर्मिताप्रयोज्यत्वान्यतर-सम्बन्धेनोक्तौ प्रकारे न व्यभिचारसम्भवः। न च कारणस्य मुख्यविशेष्येऽपि सत्त्वेन तत्र प्रकारतया शाब्दानुत्पत्त्या अन्वयव्यभिचारः। विषयत्वमात्रस्य कार्यतावच्छेदक-संसर्गत्वे संसर्गेऽपि शाब्दोत्पत्तेः तत्र कारणाभावात् व्यतिरेकव्यभिचार इति वाच्यम्। संसर्गत्वान्यविषयत्वस्य कार्यतावच्छेदक-संसर्गत्वोक्तौ दोषाभावादिति चेत् ? न। एवं सति अपूर्वव्यक्तेः शाब्दबोधे भानानुपपत्तेः उक्तप्रकारस्य उपेक्षणीयत्वात् इति। **तदुपस्थितिप्रकारता-विशिष्टप्रकारताया'** इति। स्वत्वस्य अनुगतत्वेऽपि स्वप्रकारताविशिष्ट-प्रकारत्वस्य न कार्यतावच्छेदकसंसर्गत्वम्। वैशिष्ट्यनियामक-संसर्गस्य सामानाधिकरण्यादिरूपत्वे नीलपदवृत्तिज्ञानजन्यनीलोपस्थितौ यथाकथ-ञ्चिन्नीलवतो भाने उक्तदोषतादवस्थ्यात्। प्रयोज्यत्वस्य संसर्गत्वे उपस्थिति-शाब्दबुद्ध्योः उक्तकार्यकारणभावे कार्यतावच्छेदक-कारणतावच्छेदक-विषयत्वयोः प्रयोज्य-प्रयोजकभावः। प्रयोज्य-प्रयोजकभावे च तद्घटित-कार्यकारणभाव इति

---

१. अयं पाठः मुद्रितपुस्तकेषु नोपलभ्यते। "पुस्तकान्तरे पाठोऽयम्" इति वाराणसीतः (१९७६) प्रकाशितपुस्तके पादटिप्पण्याम् उपन्यस्तम्।

अन्योन्याश्रयात्। अपितु स्वजनकज्ञानीय-धर्मितावच्छेदकता-विशिष्ट-प्रकारत्व-सम्बन्धस्य शाब्दबुद्धित्वावच्छिन्नकार्यतावच्छेदकत्वे तात्पर्यम्। स्वम् = उपस्थितिः। शाब्दबोध-प्रकारत्वस्यापि परम्परया अस्त्येव धर्मितावच्छेदकता-प्रयोज्यत्वम्। एवञ्च स्वरूपतो द्रव्यत्व-प्रकारकोपस्थितेः प्रमेयत्वादिना द्रव्यत्वे शाब्दबोधापत्तिः प्रमेयत्वावच्छिन्नद्रव्यत्वप्रकारतायाः स्वरूपतो द्रव्यत्वोपस्थिति-कार्यत्वावच्छेदकत्वा-सम्भवात्। स्वजनकज्ञानीय-धर्मितावच्छेदकता-प्रयोज्यत्वा-भावात् उपस्थिति-कारणतानवच्छेदकीभूत-उक्तविषयत्वप्रयोज्यत्वस्य तथात्वेऽपि अन्योन्याश्रयो यदि आनुभविकः तदा सामानाधिकरण्यादि-चतुष्टयस्यैव तथात्वं बोध्यम्। यद्वा प्रकारताविशिष्ट-प्रकारत्वं संसर्गः कार्यतावच्छेदको वाच्यः। वैशिष्ट्यञ्च स्वतादात्म्य-स्वप्रयोजकवृत्तिज्ञानीयधर्मितावच्छेदकताकत्व-उभय-सम्बन्धेन बोध्यम्। शाब्दबुद्धेः वृत्तिज्ञान-धर्मिनिष्ठ-प्रकारत्वस्य स्वप्रयोजक-वृत्तिज्ञानीय-धर्मितावच्छेदकत्व-अप्रसिद्ध्या प्रकारता-विशिष्टत्वासम्भवात् न प्रकारे व्यभिचारः। अत्र निरुक्तापत्तिवारणाय निरुक्तप्रकारतात्वसम्बन्धेन शाब्दबुद्धौ निरुक्तप्रकारता-प्रयोज्यत्व-संसर्गेण उपस्थितेः कारणत्वम् एव इच्छन्ति केचित्।

अथ 'प्रमेयः सः' इत्यादौ तच्छब्दात् नीलस्य घटस्य च विशृङ्खलतया उपस्थितौ नीलघटत्वावच्छिन्नविशेष्यक-प्रमेयत्वावच्छिन्नप्रकारक-शाब्दबोधापत्तिः। शाब्दबोधप्रकारे नीलत्व-घटत्वादौ प्रकारतया उपस्थितेः सत्त्वात्। न च आकाङ्क्षाज्ञानविरहात् न तथा इति वाच्यम्। नीलत्व-संसर्गस्य वृत्तिभास्यतया आकाङ्क्षाया अप्रयोजकत्वादिति चेत् ? न। यद्विषयतयोः उपस्थितौ न निरूप्य-निरूपकभावः शाब्दबोधे निरूप्य-निरूपकभावापन्नयोः तयोः आकाङ्क्षा-प्रयोज्यत्वस्य एव उपेयत्वात् नीलत्व-प्रकारता-निरूपित-घटत्वावच्छिन्न-विशेष्यत्वस्य उपस्थिति-विषयता-सजातीयता-विरहेण आकाङ्क्षाप्रयोज्यत्वस्यैव अभ्युपगन्तव्यत्वात्। प्रकृते च आकाङ्क्षाभावात् आपत्तिविरहादिति विभावनीयम्।

**VV-G. 5.2.10:** **परामर्शकारणताविचारदर्शितदिशे**त्यादि क्वचित्पाठः। तस्य यथा धर्मितावच्छेदकतासम्बन्धेन तल्लिङ्गकानुमितौ धर्मितावच्छेदकता-सम्बन्धेन तल्लिङ्गकपरामर्शत्वेन कारणतायां यत्र 'भाविज्ञानम् अप्रमा' इति अप्रामाण्यज्ञानम्, अनन्तरं 'वह्निव्याप्यधूमवान् पर्वतः' इति परामर्शः, ततो 'वह्निव्याप्य-आलोकवद्द्रव्यम्' इति परामर्शः ततो 'वह्निमान् पर्वतः' 'वह्निमद्-द्रव्यम्' इति समूहालम्बनानुमितिः, तत्र तस्या धूम-आलोक-उभयलिङ्गिकाया द्रव्यत्व-पर्वतत्वयोः उभयत्र सत्त्वेन तत्तल्लिङ्गकपरामर्शस्य तत्र असत्त्वात् व्यभिचारस्य वारणाय तत्तल्लिङ्गकपरामर्श-धर्मितावच्छेदकता-विशिष्ट-धर्मिता-

वच्छेदकतायाः कार्यतावच्छेदक-सम्बन्धत्वम् उपेयते, तथा अत्रापि। वृत्तिज्ञान-धर्मितावच्छेदकता-विशिष्ट-प्रकारताया एव कार्यतावच्छेदकसम्बन्धत्वं स्वीक्रियते इत्यर्थः।

**VV-G. 5.3.1: अन्यत्र दर्शितरीत्येति।** पर्याप्ति-विवक्षयेत्यर्थः। तथा च निरवच्छिन्न-घटत्वनिष्ठ-अवच्छेदकताभिन्न-अवच्छेदकत्वानिरूपित-प्रकारताक-शाब्दबुद्धित्वावच्छिन्नं प्रति एव घटत्वभेदस्य कारणतया नीलघटत्वावच्छिन्न-प्रकारताक-शाब्दबोधस्य अतादृशत्वात् न अनुपपत्तिः। अत्र च तद्रूपवृत्तिप्रकारता-निरूपितविशेष्यतावच्छेदकतात्वावच्छिन्न-प्रतियोगिताक-पर्याप्त्यनुयोगितावच्छेदक-सम्बन्धेन शाब्दबुद्धौ तद्रूपभेदस्य कारणत्वे तात्पर्य बोध्यम्। नातो नीलत्व-घटत्व-उभयधर्मावच्छिन्न-प्रकारतानिरूपित-विशेष्यतावच्छेदकता-सम्बन्धेन शाब्दबुद्धौ नीलत्वभेद-घटत्वभेदयोः कारणत्वे विधेयांशे अधिकावगाहिनो 'नीलघटो घटः' इत्यस्य अनुपपत्तिः। तदुभयभेदस्य कारणत्वे तस्य केवलान्वयित्वेन 'नीलघटो नीलघटः' इति शाब्दबोधापत्तिः। अथ साक्षात्परम्परा-साधारणावच्छेदकतास्वीकारे विवक्षितस्य निरवच्छिन्नत्वस्य वैयर्थ्यम्। तदस्वीकारे तन्निवेशस्य आवश्यकतया विधेयांशे अधिकावगाहि-शाब्दबोधानुपपत्तेः। तत्र प्रकारताया घटगतैकत्व एव वृत्तित्वात् प्रकारतानिरूपित-निरवच्छिन्ना-वच्छेदकत्वस्य नीले विरहात्। एवम् उद्देश्यांशे अधिकावगाहि-शाब्दबोधापत्तिः दुर्वारा। कैश्चित् अत्र साक्षात्परम्परा-साधारण-निरूपितत्वम् एव स्वीक्रियते। निरवच्छिन्न-प्रकारतावच्छेदकत्व-तदवच्छेदकत्वादि-विवक्षाया यथोक्तपर्याप्तिनिवेश एव तात्पर्यम्। उद्देश्यांशे अधिकावगाहि-शाब्दबोधवारणाय च तद्रूपभेदस्य कारणतां विहाय तद्रूपावच्छिन्नानुयोगिताक-पर्याप्तिकावच्छेदकताक-विषयता-वच्छेदकतात्वावच्छिन्नपर्याप्त्यनुयोगितावच्छेदकरूपभेदस्य तद्रूपव्यापकरूपभेदस्य वा कारणत्वं वाच्यम्। न च घटत्वगतैकत्वावच्छिन्नानुयोगिताक-पर्याप्तिक-अवच्छेदकताकविषयतात्वस्य नीलघटत्वावच्छिन्नविषयत्व इव पीतघटत्वाद्य-वच्छिन्न-विषयत्वेऽपि सत्त्वेन तादृशविषयावच्छेदकतापर्याप्त्यनुयोगिता-अवच्छेदक-समुदायत्वभिन्नत्वस्य नीलत्व-घटत्वादिगत-द्वित्वे घटत्वगतैकत्वे च सत्त्वात् आपत्ति-तादवस्थ्यम् इति वाच्यम्। स्वावच्छेदकतात्वावच्छिन्न-पर्याप्त्यनुयोगिता-वच्छेदकत्व-सम्बन्धेन तादृशविषयता-विशिष्टान्यत्वस्यैव सत्त्वात् इति आहुः। तन्मन्दम्। जातित्वेन घटत्वावगाहिनो 'जातिमान् घटः' इति शाब्दबोधस्य अनुपपत्तेः। घटत्वजातित्वगत-द्वित्वस्य उक्तविषयता-विशिष्टत्वात् घटत्व-गतैकत्व-व्यापकत्वात् चेति चेत् ? अत्र ब्रूमः। घटत्वगतैकत्ववृत्ति-प्रकारता-निरूपित-विशेष्यतावच्छेदकतात्वावच्छिन्न-पर्याप्त्यनुयोगितावच्छेदकत्व-सम्बन्धेन

शाब्दबोधे घटत्वनिष्ठ-निरवच्छिन्नावच्छेदकताक-प्रकारतावदन्यत्वं कारणत्वम्। प्राकारतावत्ता च स्वावच्छेदकतात्वावच्छिन्न-पर्याप्त्यनुयोगितावच्छेदकत्व-सम्बन्धेन। तथा च 'घटो घटः' इत्यस्य च न आपत्तिः। न वा विधेयांशे अधिकावगाहिनो 'घटो नीलघटः' इत्यस्यानुपपत्तिः। एवं जातित्व-घटत्वगत-द्वित्व-वृत्ति-प्रकारतानिरूपित-विशेष्यता-अवच्छेदकत्वावच्छिन्न-पर्याप्त्यनुयोगिता-वच्छेदकत्व-सम्बन्धेन शाब्दबुद्धौ जातित्वावच्छिन्न-घटत्वनिष्ठ-अवच्छेदकताक-प्रकारतावद् अन्यत्वं कारणमिति 'जातिमान् जातिमान्', 'जातिमद्घटो जातिमान्' इत्यस्य न आपत्तिः। न वा 'जातिमान् जातिमद्घट' इत्यस्य अनुपपत्तिः। अत्र स्वरूपत एकं घटत्वम्, एका जातित्वेन जातिः, एकम् च जातित्वम् अवच्छेदकम्, इति अपेक्षाबुद्ध्यनन्तरम् एतानि घटत्वजाति-जातित्वानि त्रीणि निरुक्तविषयतावच्छेदकानीति बुद्धिः जायमाना यदि घटत्व-जाति-जातित्व-गत-त्रित्वे तस्य जातिमद्घटत्वावच्छिन्न-विषयतावच्छेदकता-पर्याप्त्यनुयोगिता-वच्छेदकत्वे च अर्हति प्रामाण्यं, तदा उक्ता एव रीतिः साधीयसी। आश्रयस्य द्वित्वात् उक्तत्रित्वस्य अप्रामाणिकत्वे 'जातिमान् घटः' इत्यस्य प्रथमे कार्य-कारणभावे द्वितीये च 'जातिमान् जातिमद्घट' इत्यस्य अनुपपत्तिः वक्ष्यमाण-प्रकारेणैव वारणीया। एवं नीलत्व-नीलघटत्वगत-त्रित्ववृत्ति-प्रकारता-निरूपित-धर्मितावच्छेदकता-पर्याप्ति-अनुयोगितावच्छेदकता-सम्बन्धेन शाब्दबुद्धौ नीलत्वावच्छिन्न-नीलनिष्ठ-अवच्छेदकतानिरूपित-निरवच्छिन्न-घटत्वनिष्ठावच्छेद-कता-प्रकारतावद्-अन्यत्वं कारणम्। तथा सति 'नीलघटो, नीलघटो द्रव्यं, नीलघटो नीलघट' इत्यस्य न आपत्तिः। न वा 'घटो नीलघट' इत्यस्य अनुपपत्तिः इति एषा दिग्। अन्यत्र तत्स्वयम् ऊह्यम्।

**VV-G. 5.3.2:** अथ कालिकेन घटत्वविशिष्टपरेण तच्छब्देन घटितात् 'सद्य' इति वाक्यात् शाब्दबोधानुपपत्तिः। उद्देश्यतावच्छेदक-विधेयता-वच्छेदकयोः भेदविरहात्। एवं कालिकेन प्रमेयत्वविशिष्टवत्-परेण स्वरूपेण प्रमेयत्व-विशिष्टवत्-परेण च तच्छब्देन घटितात् **'सः स'** इति वाक्यात् शाब्द-बोधानुपपत्तिः। उद्देश्य-विधेयभाव-अवच्छेदकतावच्छेदकगत-रूपस्य तदवच्छिन्नस्य च भेदस्य विरहात् अप्रसिद्धेश्च। न च धर्म-संसर्ग-साधारण-उद्देश्य-विधेयभाव-अवच्छेदकत्व-तदवच्छेदकत्वादीनां पर्याप्तिः विवक्षिता। तथा सति कालिक-घटत्वादिगत-रूपभेदस्य समवाय-घटत्वादिगत-रूपत्वे सम्भवात् न दोष इति वाच्यम्। कालिकेन घटत्वविशिष्टत्वे सति समवायेन द्रव्यत्वविशिष्टपरेण समवायेन घटत्वविशिष्टत्वे सति कालिकेन द्रव्यत्व-विशिष्टपरेण च घटितात् 'सः स' इति वाक्यात् शाब्दबोधानुपपत्तेः, तथापि अवारणात् इति चेत् ? न।

विशेष्यतात्वसम्बन्धेन शाब्दबुद्धौ प्रकारतावदन्यत्वं हि कारणम्। प्रकारतावत्ता च स्वनिरूपितत्व-स्वनिरूपितावच्छेदकतात्व-व्यापकत्व-उभयसम्बन्धेन। व्यापकता च स्वनिरूपितावच्छेदकतावत्त्व-सम्बन्धेन। अवच्छेदकतावत्ता च (१)स्व-सामानाधि-करण्य-(२)स्वावच्छेदक-सम्बन्धावच्छिन्नत्व-(३)स्वानवच्छेदकानवच्छिन्नत्व-तत्सम्बन्धावच्छिन्न-(४)स्ववृत्तित्व-एतच्चतुष्टय-सम्बन्धेन। तथा च न क्वचिदपि उद्देश्य-विधेययोः सर्वथा ऐक्ये, उद्देश्यस्य आधिक्ये च शाब्दबोधप्रसङ्गः। न वा विधेयांशस्य अधिकवस्तुघटितत्वे शाब्दबोधस्य अनुपपत्तिः। अथवा अवच्छेदकता-वत्त्व-नियामक-सम्बन्धघटकावच्छेदकत्वं साक्षात्-परम्परया वा उपादेयम्। नास्ति च उभयथा अपि तन्निर्दोषता। सम्भवरूपवद्वृत्तिद्रव्यत्व-विशिष्टत्वे सति अवायु-स्पर्शवद्वृत्ति-पृथिवीत्व-विशिष्टपरेण अवायुस्पर्शवद्वृत्ति-द्रव्यत्वविशिष्टत्वेन सति रूपवद्वृत्तिपृथिवीत्व-विशिष्टपरेण च तच्छब्देन घटितात् 'सः स' इति वाक्यात् शाब्दबोधानुपपत्तेः। विशेष्यत्व-प्रकारत्व-अवच्छेदकत्वयोः साक्षाद्-अवच्छेदकत्वस्य वृत्तित्वमात्रे सत्त्वादुभयत्रैव अवच्छेदकत्वे रूपवन्निरूपितत्व-स्पर्शवन्निरूपितत्वयोः विशेष्यत्व-प्रकारत्वद्वारेण परम्परावच्छेदकत्वात् चेति चेत् ? न। विशेष्यत्व-प्रकारत्वात् द्वारत्व-सहित-निरूपितत्वस्य एव उत्पादेयत्वात्। इत्थं च अननुगत-कार्यकारणभाव-सरण्यनुसृतिः अनुचिन्तनीया ग्रन्थकर्तुः अनुसरणीया चैवम्। एवं विधैव योग्यताज्ञान-कार्यकारणभावस्यापि रीतिः इति अलम्।

**VV-G. 5.4.1: वस्तुतस्तु तद्धर्मान्यवृत्तिविषयतासम्बन्धेनेत्यादि**। अत्र यद्यपि घटत्वान्यवृत्ति-विषयतासम्बन्धेन ज्ञानत्वावच्छिन्नस्य घटत्वावच्छिन्न-प्रकारता-निरूपित-धर्मितावच्छेदकता-सम्बन्धेन शाब्दबुद्धित्वावच्छिन्नं प्रति नास्ति व्यापकत्वं नापि च अवच्छिन्न-घटत्वनिष्ठ-अवच्छेदकताक-प्रकारता-निरूपित-धर्मिता-निरूपित-अवच्छिन्नावच्छेदकता-सम्बन्धेन शाब्दबुद्धित्वावच्छिन्नं प्रति जातित्व-प्रमेयत्वाभ्यां धर्मित्व-प्रकारत्वावच्छेदकतया घटत्वावगाहिनः शाब्दबोधस्य उत्पत्तेः तथापि निरवच्छिन्न-घटत्वनिष्ठ-अवच्छेदकताक-प्रकारतानिरूपित-विशेष्यता-निरूपित-निरवच्छिन्नावच्छेदकता-सम्बन्धेन शाब्दबुद्धिं प्रति घटत्वान्यवृत्ति-विषयता-सम्बन्धेन ज्ञानत्वावच्छिन्नस्य जातित्वाद्यवच्छिन्नावच्छेदकता-प्रकारता-निरूपित-धर्मितावच्छेदकतावच्छेदकता-सम्बन्धेन शाब्दबुद्धित्वावच्छिन्नं प्रति जातित्वान्यवृत्तिविषयता-सम्बन्धेन ज्ञानत्वावच्छिन्नस्य सम्भवति व्यापकत्वम्। न च समवायसम्बन्धावच्छिन्नजातित्वाद्यवच्छिन्नावच्छेदकताक-प्रकारतानिरूपित-धर्मिता-निरूपित-कालिकसम्बन्धावच्छिन्न-अवच्छेदकतावच्छेदकत्वस्य जातित्वेऽपि सत्त्वेन जातित्वाद्यन्यवृत्तिविषयता-सम्बन्धेन ज्ञानत्वावच्छिन्नस्य न तद्व्यापकत्वसम्भव इति वाच्यम्। अवच्छेकत्वयोः एकसम्बन्धावच्छिन्नत्वस्य व्याप्यशरीरे

प्रवेशनीयत्वात्। अथ विधेयांशे अधिकावगाहिशाब्दबोधस्वीकारे निरवच्छिन्नघटत्व-निष्ठावच्छेदकताक-प्रकारतानिरूपित-निरवच्छिन्नावच्छेदकतासम्बन्धेन शाब्दबुद्धेः 'घटो नीलघटः' इत्यस्य घटत्वेऽपि सत्त्वात्। तत्र घटत्वान्यवृत्तिविषयतासम्बन्धेन ज्ञानत्वावच्छिन्नस्य असत्त्वात् कथं व्यापकत्वम्। न च व्याप्यशरीरे घटत्व-मात्रावच्छिन्नत्वं प्रवेश्यम् इति वाच्यम्। 'नीलघटो नीलघट' इति शाब्दबोधापत्तेः दुर्वारत्वात्। न च घटत्वादिगत-एकत्वान्यवृत्ति-विषयतावच्छेदकतात्वावच्छिन्न-पर्याप्त्यनुयोगिता-वच्छेदकत्व-सम्बन्धेन ज्ञानत्वाद्यवच्छिन्नं प्रति घटत्वादिगत-एकत्वादिभेदस्य कारणत्वं वाच्यम्। तथा सति तादृशज्ञानत्वावच्छिन्नस्य घटत्व-एकत्ववृत्तिप्रकारताक-विशेष्यतावच्छेदकतात्वावच्छिन्न-पर्याप्त्यनुयोगितावच्छेदकत्व-सम्बन्धेन शाब्दबुद्धित्वावच्छिन्न-व्यापकतया न कस्याश्चित् आपत्तेः सम्भवः इति वाच्यम्। एवं सति उद्देश्यांशे अधिकावगाहि-शाब्दबोधापत्तेः दुर्वारत्वप्रसङ्गात्। समवायेन द्रव्यत्वविशिष्टत्वे सति कालिकेन घटत्वविशिष्टस्य विशेष्यत्वं कालिकेन द्रव्यत्वविशिष्टत्वे सति समवायेन घटत्वविशिष्टस्य प्रकारत्वे द्रव्यत्व-घटत्वगत-द्वित्ववृत्ति-प्रकारताक-विशेष्यतावच्छेदकतात्वावच्छिन्न-पर्याप्त्यनुयोगिता-वच्छेदकत्वस्य घटत्व-द्रव्यत्वगत-द्वित्वेऽपि सत्त्वेन तत्र उक्त-द्वित्वान्यवृत्ति-विषयता-अवच्छेदकतात्वावच्छिन्न-पर्याप्त्यनुयोगिता-अवच्छेदकत्व-सम्बन्धेन ज्ञानत्वावच्छिन्नस्य असत्त्वेन अव्यापकत्व-प्रसङ्गात् च इति चेत् ? उच्यते। निरवच्छिन्न-घटत्वमात्रावच्छिन्न-प्रकारता-निरूपित-विशेष्यतावच्छेदकता-सम्बन्धेन शाब्दबोधं प्रति घटत्वान्यवृत्तिविषयता-सम्बन्धेन ज्ञानत्वावच्छिन्नस्य निरवच्छिन्न-घटत्व-निष्ठ-अवच्छेदकता-निरूपित-नीलत्वावच्छिन्न-प्रकारता-निरूपित-नीलत्वा-वच्छिन्न-विशेष्यता-निरूपितानवच्छिन्नावच्छेदकता-सम्बन्धेन शाब्दबुद्धित्वावच्छिन्नं प्रति घटत्वान्यवृत्ति-विषयता-सम्बन्धेन ज्ञानत्वावच्छिन्नस्य निरुक्तप्रकारतानिरूपित-घटत्वनिष्ठनिरवच्छिन्नावच्छेदकतानिरूपित-धर्मितावच्छेदकता-सम्बन्धेन शाब्दबोधं प्रति नीलत्वान्यवृत्ति-विषयता-सम्बन्धेन ज्ञानत्वावच्छिन्नस्य कालिकसम्बन्धा-वच्छिन्न-द्रव्यत्वनिष्ठावच्छेदकता-निरूपित-समवाय-सम्बन्धावच्छिन्न-घटत्व-निष्ठ-अवच्छेदकता-निरूपित-प्रकारता-निरूपित-कालिक-सम्बन्धावच्छिन्न-द्रव्यत्व-निष्ठ-अवच्छेदकताक-विशेष्यता-निरूपित-समवाय-सम्बन्धावच्छिन्नावच्छेदकता-सम्बन्धेन शाब्दबुद्धित्वावच्छिन्नं प्रति घटत्वान्यवृत्तिविषयता-सम्बन्धेन शाब्दत्वावच्छिन्नस्य निरुक्त-प्रकारता-निरूपित-समवाय-सम्बन्धावच्छिन्न-घटत्व-निष्ठ-अवच्छेदकताक-विशेष्यतानिरूपित-कालिक-सम्बन्धावच्छिन्न-अवच्छेदकता-सम्बन्धेन शाब्दबोधं प्रति घटत्वान्यवृत्ति-विषयता-सम्बन्धेन ज्ञानत्वावच्छिन्नस्य च व्यापकत्वसम्भवेन न कोऽपि दोषः पदम् आदधाति। एषा च रीतिः शाब्दबोधं प्रति एव भेदस्य

कारणतापक्षेऽपि सम्भवति। एतदभिप्रायक एव च वस्तुतस्तु इत्यतः प्राचीनो ग्रन्थः। (आत्मनिष्ठप्रत्यासत्त्या विषयनिष्ठप्रत्यासत्त्या च) अत्रापि घटत्वानवच्छिन्न-विशेष्यतात्व-सम्बन्धेन ज्ञानत्वावच्छिन्नं प्रति घटत्वावच्छिन्न-विशेष्यताभेदस्यैव कारणत्वम्। तस्य च घटत्वावच्छिन्न- प्रकारता-निरूपित विशेष्यतात्व-सम्बन्धेन शाब्दबोध-व्यापकतया 'घटो घट' इत्यादि-शाब्दापत्तेः वारणं प्राग्वत् सम्भवति। आत्मनिष्ठप्रत्यासत्त्या विषयनिष्ठ- प्रत्यासत्त्या च कार्यकारणभावस्यैव सम्प्रदाय-सिद्धतया विषयतानिष्ठप्रत्यासत्त्या कार्यकारणभावस्य सम्प्रदाय-विरुद्धत्वात् लघुभूतस्यापि तस्य उपेक्षा एव कृता ग्रन्थकृतेति विभावयन्तु सुधियः।

*।। इति व्युत्पत्तिवादे अभेदान्वयविवरणम् ।।*

॥श्रीः॥

# व्युत्पत्तिवादादर्शः

आद्यं विद्यानिदानं विधिविबुधवरैर्वन्द्यमानाङ्घ्रिपद्मं
धाम्नां धामैन्दवानां दनुजभुजरुजां जन्मनां छद्मजिह्मम्।
प्रज्ञाऽऽलोकार्कमर्तिप्रतिकृतिममतिध्वान्तदन्त्येण शक्रं
वक्रं भक्ताघचक्रे हरिमिह तुरगग्रीवमुग्रं प्रपद्ये ॥
नत्वा श्रीमद्धयग्रीवं विद्याविघ्नविनाशनम्।
स्मृत्वा स्मृत्वा पदाम्भोजं श्रीगङ्गाधरशास्त्रिणाम्॥
करोति बालबोधार्थं मूलार्थप्रतिपादिकाम्।
व्याख्यां व्युत्पत्तिवादस्य ह्याऽऽदर्शाख्यां सुदर्शनः॥

**VV-A 1.1.0(a):** ननु न्यायमते प्रत्यक्षानुमानोपमानशब्दभेदात् प्रमाण–चतुष्टयम्। तत्र घटप्रत्यक्षे जाते घटे यो घटत्वादीनां नीलरूपादीनां च सम्बन्धः स तु संयुक्तविशेषणतासंसर्गेण भासते, चक्षुस्संयुक्तघटे तस्य विशेषणत्वादिति। तादृशसम्बन्धनिष्ठा विषयता संयुक्तविशेषणतासंनिकर्ष प्रयोज्यास्ति। घटस्तु चक्षुस्संनिकृष्ट एव। वैशेषिकमते च समवायस्य अप्रत्यक्षत्वाद् विशिष्टबुद्ध्या समवायानुमानं भवति। तदुक्तं तैः – "इहात्मनि ज्ञानम् इहाकाशे शब्द इति इहबुद्धिरुत्पद्यमाना न विना सम्बन्धम् उत्पत्तुमर्हति। तेन अनुमीयते – अस्ति कश्चित्सम्बन्धः[1]" इति।

**VV-A 1.1.0(b):** अनुमितौ च पर्वतधूमौ चक्षुस्संनिकृष्टौ वह्निनिष्ठा च विषयता व्याप्तिज्ञानप्रयोज्या अस्ति। पर्वतीयवह्निसंयोगनिष्ठा च विषयता पक्षधर्मताज्ञानप्रयोज्या अस्ति। अर्थात् – धूमपर्वतयोः प्रत्यक्षेण ज्ञातत्वाद् वह्नेश्च व्याप्तिज्ञानेन ज्ञातत्वात् पक्षधर्मताज्ञानेन 'वह्निव्याप्यधूमवान् पर्वतः' इत्यनेन वह्निसंयोग एव ज्ञायते। अत एव पक्षधर्मताज्ञानानन्तरं तत्कार्यभूतं 'वह्निमान् पर्वतः' इत्याकारकं ज्ञानं जायते। अत्र वह्नेर्व्याप्तिज्ञानेन ज्ञातत्वात् पारिशेष्याद्वह्निसंयोग एव विषय इति।

[1] Upaskāra on VS.7.2.26.

**VV-A 1.1.0(c):** उपमितौ च गवयनिष्ठा विषयता चक्षुरसंनिकर्ष–प्रयोज्या अस्ति। गवय–गवयपदयोः वाच्यवाचकभावसम्बन्धनिष्ठा च विषयता सादृश्यज्ञान–प्रयोज्या अस्ति। तत्र वाच्यवाचकभावसम्बन्धस्य सादृश्यज्ञानेन ज्ञायमानत्वात् प्रथमं 'गोसदृशो गवयः' इत्यतिदेशवाक्यश्रवणात् तस्य गवयदर्शनकाले स्मरणात्।

**VV-A 1.1.0(d):** इत्येवं प्रत्यक्षानुमानोपमानेति प्रमाणत्रयस्थले तु येन प्रकारेण सम्बन्धज्ञानं जायते सम्बन्धनिष्ठा च विषयता यत्प्रयोज्या भवति तत्सर्वं विज्ञातम्। संप्रति 'राजपुरुषः', 'नीलघटमानय' इत्यादिवाक्यजन्य–शाब्दबोधस्थले स्वत्वाऽभेदादिसम्बन्धानां प्रतीतिः कथं भवति ? तादृश–सम्बन्धनिष्ठा विषयता च किं प्रयोज्या भवतीति न ज्ञातमिति तद्वक्तव्यम् इत्याशङ्क्य श्रीमद्गदाधरभट्टाचार्यो व्युत्पत्तिवादाख्यं ग्रन्थमारभते – **शाब्दबोधे चेति**। 'कुम्भकारः' इतिवत् 'व्युत्पत्तीर्वदतीति व्युत्पत्तिवादः' इति ग्रन्थनामार्थः।

**VV-A 1.1.1:** **शाब्दबोध** इति। अत्र चस्त्वर्थे, **शाब्दबोधे** इति सप्तम्यर्थो निरूपितत्वम्। **एकपदार्थे** इति सप्तम्यर्थोऽनुयोगित्वम्। **अपरपदार्थस्य** इति षष्ठ्यर्थः प्रतियोगित्वम्। **संसर्गः** अभेदादिसम्बन्धः। **संसर्गमर्यादया** आकाङ्क्षया। तृतीयार्थश्च प्रयोज्यत्वम्। भासधात्वर्थो विषयता। आत्मनेपदप्रत्ययार्थ आश्रयता। तथा च 'एकपदार्थानुयोगिकोऽपरपदार्थ– प्रतियोगिकः अभेदादिसम्बन्धः शाब्दबोध–निरूपिताऽऽकाङ्क्षाप्रयोज्यविषयताश्रयः' इति वाक्यार्थः। पदार्थद्वयस्य यः संसर्गः स शाब्दबोधे आकाङ्क्षाबलेन भासते इति यावत्। यथा – 'नीलघटम् आनय' इत्यत्र नीलप्रतियोगिको घटानुयोगिकश्च यो नीलघटयोरभेदसम्बन्धः स केनापि पदेनानुपस्थितत्वाद् आकाङ्क्षाबलेन भासते। यथा च 'राजपुरुषः' इत्यत्र राजप्रतियोगिकः पुरुषानुयोगिकश्च यः स्वत्वसम्बन्धः स आकाङ्क्षाबलेन भासते। 'राजपुरुषः' इत्यादिविशिष्टबुद्धेः सम्बन्धभानं विनोत्पत्तेरसंभवात्। सम्बन्धभासक–पदस्य चाभावात् तादृशस्वत्वादि–सम्बन्धस्य आकाङ्क्षया भानं स्वीक्रियते।

**VV-A 1.1.1(a):** आकाङ्क्षा च 'यत्पदेन विना यस्याऽननुभावकता भवेत्। आकाङ्क्षा' (न्या.सि.मु. ८४) इति विज्ञेया। 'नीलघटम्' इत्यादौ पदनिष्ठा विषयता श्रावणप्रत्यक्षप्रयोज्या। नीलघटादीनां (पदार्थानां) च विषयता नीलादिपद–घटादिपद–प्रयोज्या। नीलघटाद्योः यो अभेदादिसम्बन्धः तन्निष्ठा विषयता आकाङ्क्षाज्ञानप्रयोज्या विज्ञेया। अत एव **शक्तिवादे** अन्विताभिधान–

वाद–खण्डनस्थले ह्यभेदादिसम्बन्धे शक्तिं दूषयित्वा सम्बन्धस्य आकाङ्क्षाभास्यत्वं प्रतिपादितम्।

**VV-A 1.1.1(b):** 'नीलो घटः' इत्यादिव्यासस्थले विशेषणविभक्तेः अभेदार्थकत्वमते त्वभेदादेर्विभक्त्युपस्थापितत्वात् प्रकारत्वमेव भवति न तु संसर्गत्वम्। 'नीलाभेदवान् घटः' इति च तत्र शाब्दबोधः। तस्मात् यत्र यस्य संसर्गत्वं तत्र तस्य आकाङ्क्षाभास्यत्वमेव विज्ञेयम्। व्यासस्थलेऽपि विशेषणविभक्तेर्निरर्थकत्वमते ह्यभेदादेः संसर्गत्वमेव भवतीत्याकाङ्क्षा–भास्यत्वमेव। तत्र विशेषणविभक्तिः साधुत्वार्था विज्ञेया। 'अभेदसम्बन्धेन नीलविशिष्टो घटः', 'स्वत्वसम्बन्धेन राजविशिष्टः पुरुषः' इत्यादिश्च शाब्दबोधाकारो विज्ञेय इत्यलम्।

**VV-A 1.2.1:** सम्बन्धो द्विविधः – अभेदलक्षणो भेदलक्षणश्च । तत्र अभेदलक्षणस्य एकत्वाद् भेदलक्षणस्य चाऽनेकरूपत्वात् प्रथमम् अभेद–सम्बन्धमाह – **स चेति।** सः = संसर्गः। कतिपयभेदसम्बन्धानाह – **क्वचिच्च** इति। **तदतिरिक्तः** = अभेदातिरिक्तः। 'भूतले घटः', 'घटवद् भूतलम्' इत्यादौ आधाराधेयभावः सम्बन्धः। 'भूतले घटो नास्ति' इत्यादौ प्रतियोग्यनुयोगिभावः सम्बन्धः। 'घटे ज्ञानम्', 'मोक्षे इच्छा' इत्यादौ घटादिविषयकज्ञानस्य मोक्षादिविषयकेच्छायाश्च प्रतीयमानत्वाद् विषयविषयिभावः सम्बन्धः। घटादीनां विषयत्वाज्ज्ञानादीनां विषयित्वादित्यर्थः। एतच्च प्राचीनमतेन।

**VV-A 1.2.1(a):** नवीनमतेन त्वनुयोगिवृत्तिधर्मस्यैव सम्बन्धत्वस्वीकारात् क्वचिदाधारतासम्बन्धो यथा 'घटस्य भूतले', क्वचिदाधेयतासम्बन्धो यथा 'भूतलस्य घटे'। एवं क्वचित् प्रतियोगिता क्वचिदनुयोगिता क्वचिद् विषयता क्वचिद्विषयिता सम्बन्ध इति विवेकः।

**VV-A 2.1.1:** उक्तमभेदसम्बन्धं व्युत्पादयति – **अभेदश्चेति।** **प्रातिपदिकार्थे** इति सप्तम्यर्थोऽनुयोगित्वम्। **उपस्थापितस्य** इति षष्ठ्यर्थः प्रतियोगित्वम्। पदार्थस्येतिशेषः। यथा 'नील घटः' इत्यत्र प्रातिपदिकार्थे घटे स्वसमानविभक्तिकेन घटादिलक्षणानुयोगिवाचक–घटपदादि–समानविभक्तिकेन नीलपदेन उपस्थापितस्य नीलपदार्थस्य अभेदः **संसर्गमर्यादया** = आकाङ्क्षया भासते। नीलपदोत्तरविभक्तेः साधुत्वमात्रार्थकत्वात्। 'नीलघटम् आनय' इत्यत्र च स्वसमानविभक्तिकत्वाभावेऽप्यभेदस्य भासमानत्वेन उक्तम् – **स्वाव्यवहितेति।**

तथा चात्र **स्वं** घटपदं तदव्यवहितपूर्ववर्तिना नीलपदेन उपस्थापितस्य नीलपदार्थस्य प्रातिपदिकार्थे घटेऽभेदसम्बन्धः संसर्गमर्यादया भासते – तादृशसम्बन्धोपस्थापकपदाभावात्। एवकारो भिन्नक्रम इति ''स्वसमान–विभक्तिकेनैव स्वाव्यवहितपूर्ववर्तिनैव च'' इत्यन्वयः। एवकार–व्यवच्छेद्यमाह – **न त्विति**। 'नीलस्य घटः' इत्यत्र नीलपदस्य घटपदसमान–विभक्तिकत्वमपि नास्ति षष्ठ्या व्यवधानेन च घटपदाव्यवहितपूर्ववर्तित्वमपि नास्तीति न नीलघटयोरभेदो भासते। नीलपदोत्तरषष्ठ्यां च घटपदाव्यवहित–पूर्ववर्तित्वेऽप्ययोग्यत्वान्न षष्ठ्यर्थसम्बन्धस्य अभेदेन घटेऽन्वयः संभवति। स्वसमानेत्यादिनियमाभावे च 'नीलस्य घटः' इत्यत्रापि नीलघटयोः अभेदान्वयबोधः प्रसज्येत। स तु सर्वविज्ञानुभवविरुद्ध एवेति न **विरुद्ध-विभक्तिमत्पदार्थस्या**भेदो भासते इति मूलार्थः।

**VV-A 2.2.1:** ननु 'वेदाः प्रमाणम्' इत्यादौ वेदादिपद–प्रमाणादि–पदयोः समानविभक्तिकत्वाभावेऽपि वेदप्रमाणादिपदार्थयोरभेदो भासते एव इत्याशङ्क्य **समानविभक्तिकत्वं** निर्वक्ति – **स्वसमाने**ति, **स्वम्** = अनुयोगिवाचकपदम्। **स्वप्रकृतिक** इति = यथा 'वेदाः प्रमाणम्' इत्यत्र स्वपदेन अनुयोगिवाचकं वेदपदं ग्राह्यं तत्प्रकृतिका विभक्तिः जस्–विभक्तिः तत्सजातीयविभक्तिकत्वं प्रमाणपदेऽप्यस्त्येव, तस्य प्रथमान्तत्वाद् इति। नात्राऽभेदान्वयबोधानुपपत्तिरित्यर्थः। ननु वेदपदोत्तरं जस्–विभक्तिः प्रमाण–पदोत्तरं च सु–विभक्तिस्तयोः कथं च किं च साजात्यमित्याशङ्क्य विवक्षित–साजात्यस्य स्वरूपमाह – **साजात्यमि**ति, अत्र आनुपूर्वीलक्षणं साजात्यं न ग्राह्यं, किं तु प्रथमात्वादिधर्मेण। तथा च सु–जसोः उभयोरपि प्रथमात्वेन साजात्यमस्त्येवेति वेदपद–प्रमाणपदयोः समानविभक्तिकत्वं प्राप्तम्। तेन चाभेदान्वयः प्राप्त इत्यर्थः। समानानुपूर्वीकत्वरूपसाजात्यस्वीकारे बाधकमाह – **न त्विति**। यदि समानानुपूर्वीकत्वं साजात्यं स्यात्तदा सु–जसोः समानानुपूर्वीकत्वाभावात् साजात्यं न स्यात्। तथा च वेदपदप्रमाणपदयोः शतपदब्राह्मणपदयोश्च सजातीयविभक्तिप्रकृतित्वाभावात् 'वेदाः प्रमाणम्', 'शतं ब्राह्मणाः' इत्यादौ वेदादेः प्रमाणादेश्चा**न्वयबोधः** = अभेदान्वयबोधो नोपपद्येत इत्यर्थः।

**VV-A 2.2.2:** ननु **''विंशत्याद्याः सदैकत्वे''** **इत्यनुशासनाद्** विंशत्याद्याः संख्यावाचकाः शब्दा यदा संख्येयपरा भवन्ति तदा नियमेन एकवचनान्ता एव भवन्तीति नियमात् 'शतं ब्राह्मणाः' इत्यत्र ब्राह्मणशब्दस्य

बहुवचनान्तत्वेऽपि शतशब्दस्य एकवचनान्तत्वम् उपपद्यते । 'वेदाः प्रमाणम्' इत्यत्र वेदपदस्य बहुवचनान्तत्वेऽपि यत् प्रमाणपदस्य एकवचनान्तत्वेन विशेष्यविशेषणवाचकपदयोः विभिन्नवचनकत्वं तत् कथमुपपद्येत इत्याशङ्कते - **नन्विति**। स्वाभिप्रायं शाब्दबोधव्युत्पत्त्या प्रकटयति – **विशेष्येति**, यथा 'नीलो घटः' इत्यादौ विशेष्यविशेषणवाचकयोः घटपदनीलपदयोः समान– वचनकत्वेन भवितव्यं तद्बाधकस्य विशेषानुशासनस्य अभावादित्यर्थः। विशेष्यविशेषण–वाचकपदयोः समानवचनकत्वनियमानङ्गीकारे बाधकमाह – **अन्यथेति**, **'घटा नीलः'** इत्यादिप्रयोगाणां यद् असाधुत्वं तत् समानवचन– कत्वाभावादेव अस्तीति 'वेदाः प्रमाणम्' इत्यादिप्रयोगाणां समानवचनकत्वाभावे कथं साधुत्वं स्याद् इत्याक्षेपः।

**VV-A 2.2.3:** ननु विशेष्यविशेषणवाचकपदयोर्यत्र समानलिङ्गकत्वं भवति तत्रैव समानवचनकत्वस्य नियमोऽस्ति यथा – 'नीलो घटः' इत्यादौ । 'वेदाः प्रमाणम्' इत्यत्र तु वेदपदप्रमाणपदयोः समानलिङ्गकत्वाभावेन समानवचनकत्वाभावेऽपि न साधुत्वानुपपत्तिः इत्याशङ्क्याह – **समान-लिङ्गकेति**। **तथानियमोपगमेन** समानवचनकत्वनियमोपगमेन। एवमपि **'इति हेतुस्तदुद्भवे''** इत्याकारक–**काव्यप्रकाश**–कारिकाया या **'इति त्रयः समुदिता हेतुः'** इत्याकारकटीकास्ति। तत्र तु त्रिपद–हेतुपदयोर्द्वयोरपि पुँल्लिङ्गत्वेन समानलिङ्गकत्वात् समानवचनकत्वेन भवितव्यमिति कथं त्रिपदहेतुपदयोः विभिन्नवचनकत्वे साधुत्वं स्याद् इत्युक्तसमानवचनकत्व– नियमस्य अव्याप्तिं प्रदर्शयन् आक्षिपति – **इति हेतुरिति**।

**VV-A 2.2.4:** उक्तरीत्या **'इति त्रयः समुदिता हेतुः'** इत्यत्र समान–लिङ्गकस्थलेऽपि समानवचनत्वं नास्ति इत्यव्याप्तिं प्रदर्श्य असमानलिङ्गकस्थले समानवचनत्वस्य अतिव्याप्तिं प्रदर्शयति – **एवमिति**। उक्तार्थानां प्रयोगो न भवतीति विशेष्यवाचकपदोत्तरवर्तिन्या विभक्त्या संख्याया उक्तत्वाद् विशेषणवाचकपदोत्तरं द्विवचनबहुवचनयोः अपेक्षा एव नास्तीति साधुत्वार्थम् औत्सर्गिकम् एकवचनमेव प्राप्नोतीति 'वेदाः प्रमाणम्' इत्यत्र प्रमाणपदोत्तरम् एकवचनम् एव औत्सर्गिकं यदि युक्तम् – समानवचनकत्वनियमस्य समानलिङ्गकस्थले एव स्वीकारात्ए तदा विशेष्यविशेषणवाचकपदयोः **तादृशस्थले** = असमानलिङ्गकस्थले सर्वत्र औत्सर्गिकम् एकवचनम् एव विशेषणवाचकपदोत्तरं प्रयोक्तव्यमिति **''प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानि''** इत्यत्र प्रमाणपदोत्तरं *'पितरो देवताः'*

इत्यत्र च देवतापदोत्तरमेकवचनमेव प्रयोक्तव्यमासीत्, न तु बहुवचनम् विशेष्यविशेषणवाचकपदयोः समानवचनकत्वनियामकस्य समानलिङ्गकत्वस्य अभावादित्यर्थः। तथा च समानलिङ्गकस्थले एव समानवचनकत्वं भवतीति नियमस्याऽसंभवाद् यथा **"प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानि"** इत्यत्र समानलिङ्गकत्वाभावेऽपि समानवचनकत्वं तथा **'वेदाः प्रमाणम्'** इत्यत्रापि समानलिङ्गकत्वाभावेऽपि समानवचनकत्वं युक्तं, तच्च नास्तीति कथं साधुत्वमित्याक्षेपः।

**VV-A 2.2.5:** उक्तरीत्याक्षिप्य परिहरति – **मैवमि**ति। **यत्रे**ति – यथा 'नील घटाः' इत्यत्र विशेष्यवाचकपदं घटपदं, तदुत्तरवर्ति–विभक्तिः जस्–विभक्तिः तत्–तात्पर्यविषयीभूता संख्या बहुत्वसंख्या, तद्विरुद्धसंख्याया अविवक्षितत्वात् नीलपदोत्तरमपि 'जस्' एव युक्तमिति समानवचनकत्वम्। एवं 'प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानि', "पितरो देवताः" इत्यादावपि विशेष्यवाचकं यत् पदं पितृपदं शब्दपदं च, तदुत्तरवर्त्ति–'जस्'–विभक्ति–तात्पर्यविषयीभूत–बहुत्वसंख्यातो विरुद्धसंख्याया अविवक्षितत्वाद् विशेष्य–विशेषण–वाचकपदयोः समानवचनकत्वम् इत्यर्थः। 'पुरूरव–आद्रवसौ विश्वेदेवाः' इत्यत्र द्वित्व–विशिष्टयोरेव पुरूरव–आद्रवसोः विश्वेदेवविशेषणत्वं विवक्षितमिति विशेष्य–वाचक–विश्वेदेव–पदोत्तरवर्ति–'जस्'–विभक्तितात्पर्य–विषयीभूतबहुत्व–संख्यातो विरुद्धाया द्वित्व–संख्याया विवक्षितत्वेन अविवक्षितत्वं नास्तीति न समानवचनकत्वं प्राप्तम्। किं तु द्वित्वसंख्याया विवक्षितत्वेन विशेषणवाचक–पुरूरव–आद्रवः–पदोत्तरं द्वित्वबोधकं द्विवचनमेव प्रयुक्तमित्याह – **अत एवे**ति। **अतएव यत्रे**त्याद्युक्तनियमादेव। **तद्वाचकस्य** विशेषणीभूत–पुरूरव–आद्रवो–वाचकस्य पुरूरव–आद्रवःपदस्य। वस्तुतस्तु पुरूरवपद–माद्रवपदं चाऽकारान्तम् एवेति श्रीगुरुचरणाः।

**VV-A 2.2.6:** एवं 'वेदाः प्रमाणम्' इत्यत्रापि विशेष्यवाचकवेदपदोत्तर–वर्ति–'जस्'–विभक्तितात्पर्यविषयीभूत–बहुत्वसंख्यातो विरुद्धाया एकत्वसंख्याया विवक्षितत्वेन समानवचनकत्वनियामकम् उक्ताऽविवक्षितत्वं नास्तीति न समान–वचनकत्वं तत्प्राप्तिश्च। किं तु एकत्वसंख्याया विवक्षितत्वेन तद्बोधकम् एकवचनमेव प्रमाणपदोत्तरं प्रयुक्तं, तदेव युक्तं चेत्याह – **'वेदाः प्रमाणम्' इत्यत्रे**ति। ननु चत्वारो वेदाः, तेषु कथमेकत्वान्वयः स्याद् इत्याशङ्क्याह – **तच्चे**ति। **तत्** = एकत्वम्। प्रकृतिपदेन च प्रमाणपदं ग्राह्यम्। प्रमितिकरणं च प्रमाणमिति प्रकृत्यर्थतावच्छेदकं प्रमितिकरणत्वम्। तच्च चतुर्ष्वपि वेदेष्वेकमेव

विवक्षितमिति तादृशप्रमितिकरणत्वे एकत्वस्य अत्र अन्वयो भवति न तु प्रमितिकरणभूतेषु वेदेषु इत्यर्थः।

**VV-A 2.2.7:** ननु नानाभूतेषु प्रमितिकरणेषु वेदेषु कथम् एकमेव प्रमितिकरणत्वं स्याद् इत्याशङ्क्याह – **शाब्दे**ति, यथा अनेकेषु घटेष्वेकमेव घटत्वं तथा अनेकेष्वपि प्रमितिकरणेषु वेदेष्वेकमेव प्रमितिकरणत्वं युक्तमिति तत्र एकत्वान्वयस्य न अयोग्यता। **यावच्छब्द**पदेन प्रमाणभूतशब्द एव ग्राह्यः, अनाप्तवाक्येषु प्रमाणत्वास्वीकारात्। "इति त्रयः समुदिता हेतुः" इत्यत्र च शक्तिनिपुणताभ्याससमुदाये एकमेव हेतुत्वं विवक्षितमिति तादृशसमुदायनिष्ठ–हेतुत्वे एकत्वान्वय एकत्वस्य विवक्षितत्वाच्च न समानवचनकत्वं तत्प्राप्तिश्च इत्यर्थः।

ननु 'पदार्थान्तरनिष्ठप्रकारतानिरूपितविशेष्यतासम्बन्धेन शाब्दबुद्धित्वा–वच्छिन्नं प्रत्यन्वयितावच्छेदकरूपेणोपस्थितिः कारणम्' इति नियमेन पदार्थस्य नीलादेः पदार्थेन घटादिनैवान्वयो भवति। घटादेरन्वयितावच्छेदकरूपेण घटत्वेन रूपेण उपस्थितेः न तु घटत्वादिना। घटत्वादेः घटत्वत्वादिरूपेण उपस्थितेरभावात् स्वरूपत एवोपस्थितिस्वीकारात्। उक्तनियमानङ्गीकारे तु लोमलाङ्गूलादीनामपि दीर्घत्वाभिप्रायेण 'दीर्घः पशुः' इति प्रयोगः स्यात्। पश्वेकदेशेन लोमादिना दीर्घत्वान्वये बाधकाभावप्रसङ्गात्। न च लोमादिनात्र दीर्घत्वान्वय इष्ट इति 'पदार्थः पदार्थेनैवान्वेति न तु पदार्थैकदेशेन' इति व्युत्पत्तिः स्वीकार्या। तथा च 'वेदाः प्रमाणम्' इत्यत्रापि एकत्वपदार्थस्य वेदरूपपदार्थेन एवान्वयो युक्तो न तु वेदैकदेशेन प्रमितिकरणत्वेन इति कथमेकत्वस्य प्रमितिकरणत्वेऽन्वय उक्त इत्याशङ्क्याह – **न चे**ति। 'संपन्नो व्रीहिः' इति वाक्यस्य न हि एकव्रीहिकणसंपन्नत्वे तात्पर्यं, किं तु अनेकव्रीहि–संपन्नत्वेऽस्ति। तथापि अत्र एकवचनदर्शनेन एकत्वस्य च अनेकव्रीहिषु बाधेन व्रीहित्वजातौ एवान्वयोऽस्ति इति 'असति बाधके पदार्थः पदार्थेनैवान्वेति सति बाधके तु पदार्थैकदेशेनाप्यन्वेति' इति व्युत्पत्तिसंकोचे कृते 'संपन्नो व्रीहिः' इत्यत्र इव 'वेदाः प्रमाणम्' इत्यत्रापि एकत्वपदार्थस्य पदार्थैकदेशेन प्रमितिकरणत्वेनान्वये न कोऽपि दोषः। वस्तुतस्त्वयं नियमः संख्यातिरिक्तस्थलार्थमस्ति, संख्यायास्तु पदार्थैकदेशेन अपि अन्वयो भवति, 'संपन्नो व्रीहिः' इत्यादिप्रयोगदर्शनात्। तथा च 'वेदाः प्रमाणम्' इत्यत्राप्येकत्वस्य पदार्थैकदेशे प्रमितिकरणत्वेऽन्वये न दोषः।

**VV-A 2.2.8:** ननु गत्यभावे एव नियमसंकोच उचितो न तु सत्यां गतावपीति न व्रीहित्वजातावेकत्वान्वयो युक्तः। व्रीहित्वं हि स्वरूपत एव व्रीहिपदस्य शक्यतावच्छेदकमस्तीति व्रीहिपदेन व्रीहित्वस्य स्वरूपत एवोपस्थितिर्भवति, न त्वन्वयितावच्छेदकेन व्रीहित्वत्वेन रूपेण। पदार्थान्तरान्वयं प्रति चान्वयितावच्छेदकरूपेणोपस्थितिः कारणमस्तीति न व्रीहित्वजातौ अत्र एकत्वान्वय उपपद्यते किं तु स्वाश्रयप्रकृत्यर्थतावच्छेदकवत्त्वसम्बन्धेन प्रकृत्यर्थे व्रीहिषु **एव एकत्वान्वयः** संभवतीति नोक्तनियमसंकोचस्य आवश्यकता इत्याह – **यदी**ति। स्वम् एकत्वं तदाश्रयीभूतं यत्प्रकृत्यर्थतावच्छेदकं व्रीहित्वंए तद्वत्त्वसम्बन्धेन, व्रीहित्ववत्त्वं सम्बन्धरूपं व्रीहिषु अस्त्येव इत्यर्थः। उत्तरमाह – **तदे**ति, यथा 'संपन्नो व्रीहिः' इत्यत्रैकत्वस्य व्रीहिषु एवान्वयः त्वया उपपादितः तथा **प्रकृते**ऽपि – 'वेदाः प्रमाणम्' इत्यत्रापि स्वाश्रयप्रकृत्यर्थतावच्छेदकवत्त्व–सम्बन्धेन एकत्वस्य वेदेषु एव अन्वयो ज्ञेयः। स्वम् = एकत्वं, तदाश्रयीभूतं यत् प्रकृत्यर्थतावच्छेदकं प्रमितिकरणत्वं तद्वत्त्वसम्बन्धेन वेदेषु एव एकत्वस्य अन्वयः। प्रमितिकरणत्ववत्त्वं च अस्त्येव वेदेष्वित्यर्थः।

**VV-A 2.2.9:** ननु 'संपन्नो व्रीहिः' इत्यत्र एकत्वस्य जातौ अन्वयो न भवति, येन 'पदार्थः पदार्थेन' इति नियमसंकोचस्य आवश्यकता स्यात्। न चापि विभक्त्या एकमेव एकत्वम् उपतिष्ठति येन एकस्य एकत्वस्य अनेकव्रीहिषु अन्वयबाधः स्यात्, किं तु एकवचनविभक्त्या **नाना** = अनेकानि एव एकत्वानि उपतिष्ठन्ति। अनेकेषां च एकत्वानामनेकेषु व्रीहिषु अन्वये न कोऽपि बाध इति आशङ्कते – **यत्त्वि**ति।

**VV-A 2.2.10:** परिहरति – **तदसदि**ति। 'संपन्नो व्रीहिः' इति अत्र एकवचनस्य **एकत्वमात्रम्** = संख्यारूपम् एकत्वं न अर्थः। **तस्य** = संख्या–रूपैकत्वस्य **वस्तुमात्रसाधारण्येन** = केवलान्वयित्वेन अर्थत **एव लाभात्** = प्रतीति–संभवात्। **अनुपयोगाच्चे**ति = अत्र एकवचनस्य संख्यारूप–एकत्वार्थकत्व–स्वीकारे उपयोगाभावात्। व्रीहिसजातीय–उप्तान्नान्तर–संपन्नत्व–व्यावृत्तिः या वक्तुः अभीष्टा सा न प्राप्नुयात्। एकत्वसंख्यान्वयिव्रीहीणां संपन्नत्वेऽपि व्रीहिभिन्नान्नसंपन्नत्वे बाधकाभावात्। सजातीयद्वितीयराहित्यरूप–एकत्व स्वीकारे तु तादृशएकत्वान्वयिव्रीहीणां संपन्नत्वे व्रीहिसजातीय–उप्तान्नान्तरसंपन्नत्व–व्यावृत्तिः उपलभ्यते। तस्मादत्र न एकत्वमात्रम् एकवचनार्थः, किं तु स्वसजातीयनिष्ठ–भेदप्रतियोगिता–अनवच्छेदकैकत्वरूपं यत् सजातीय–द्वितीयरहितत्वं तद् एकवचनार्थः। **स्वसजातीये**ति = यत्र अनेके घटा वर्त्तन्ते

तत्र स्वं पीतघटः, तत्र यद् एकत्वं तद् भेदप्रतियोगिता–अवच्छेदकम् एवेति, न तद् एकत्वं सजातीयद्वितीयरहितत्वरूपम्। यदा तु एक एव घटः तदा सजातीयद्वितीय–घटस्य अभावाद् वर्त्तमानघटनिष्ठम् एकत्वं स्वसजातीयनिष्ठ–भेदप्रतियोगिता–अनवच्छेदकम् एव। एतादृशानवच्छेदकत्व–रूपम् एव सजातीय–द्वितीयरहितत्वम् एकवचनार्थः। 'संपन्नो व्रीहिः' इत्यत्र यदि अन्नान्तरं संपन्नं स्यात् तदा संपन्नत्वेन व्रीहिसजातीय–अन्नान्तरस्य सत्त्वात् तत्र वर्त्तमानो यो व्रीहिभेदः तत्प्रतियोगितावच्छेदकं व्रीहिगतैकत्वं स्याद् अपि। यदा च न अन्नान्तरं संपन्नं तदा संपन्नत्वेन रूपेण व्रीहिसजातीयस्य एव अभावात् स्वसजातीसनिष्ठभेद–प्रतियोगिता–अनवच्छेदकम् एव जातं व्रीहिगतैकत्वं, तदेव **सजातीयद्वितीयरहितत्वम्**। प्रकृतोपष्टम्भकमाह – **अत एवेति**, अतएव त्रकवचनार्थैकत्वस्य सजातीयद्वितीयरहितत्वरूपस्य एव विवक्षितत्वाद् एकपशुकरणकयागाद् एव अदृष्टसिद्धिः भवति, न तु अनेकपशुकरणकयागादपि। एकत्वस्य सजातीयद्वितीयराहित्यस्वरूपत्वानङ्गीकारे पश्वन्तरस्य व्यावृत्त्यलाभेन अनेकपशुकरणक–यागाद् अपि अदृष्टसिद्धिः आपतेद्। न चैवं सिद्धान्तः। अत्र च **स्वं** = पशुः, तत्सजातीयो यदि द्वितीयः पशुः यागे स्यात् तदा द्वितीयपशुनिष्ठस्य एतत्पशुभेदस्य एतत्पशुनिष्ठम् एकत्वं भेदप्रतियोगितावच्छेदकं स्यादपि। यागे पश्वन्तरस्य अभावे च एतत्पशुनिष्ठम् एकत्वं सजातीयपश्वन्तरनिष्ठभेदस्य प्रतियोगितानवच्छेदकमेव जातम्। तदेव सजातीयद्वितीयराहित्यम्।

**VV-A 2.2.11:** ननु यज्ञभूमौ कार्यान्तरार्थबद्धपशुसत्त्वे तन्निष्ठो य एतत्पशुभेदः तादृशभेदप्रतियोगितावच्छेदकम् एवैतत्पशुनिष्ठम् एकत्वं स्यात्, तस्यापि पशोः एतत्पशुसजातीयत्वात्। तथा यागसंबद्धघृतादिषु अपि एतत्पशुभेदोऽस्ति। तादृशभेदप्रतियोगिता–अवच्छेदकम् अपि एतत्पशुनिष्ठम् एकत्वं स्यात्। घृतादीनामपि यागसंबन्धित्वेन एतत्पशुसजातीयत्वाद् एव इत्येतत्पशुनिष्ठैकत्वस्य कथं स्वसजातीयनिष्ठ–भेदप्रतियोगितानवच्छेदकत्वं स्याद् इत्याशङ्क्य साजात्यं परिष्करोति – **साजात्यं** चेति। स्वं = यजेतेत्यत्र वर्तमानतिङ्विभक्तिः **तत्समभिव्याहृतः पदार्थः** = यागपदार्थः **तत्संसर्गित्वविशिष्टम्** = यागसंबन्धित्वसमानाधिकरणं यत्प्रकृत्यर्थतावच्छेदकं पशुत्वं तद्वत्त्वरूपेण साजाज्यं ग्राह्यम्। तथा च कार्यान्तरार्थ–उक्तयागभूमिबद्धपशौ पशुत्वसत्त्वेऽपि यागसंसर्गित्वं नास्तीति न स पशुः एतद्यागीयपशुसजातीयः। घृतादौ यागसंसर्गित्वसत्त्वेऽपि

प्रकृत्यर्थतावच्छेदकस्य पशुत्वस्य अभावान्न घृतादीनामपि यागीयपशुसजातीयत्वं, तस्मान्न उक्तदोषः। **अतः** = उक्तरूपेण साजात्यस्य परिष्कारात् 'अत्र घटोऽस्ति' इत्यादौ घटानामनेकत्वेन परस्परं भेदाच्च नीलादिघटेषु पीतादिघटनिष्ठैकत्वस्य अभावाद् अयं घटः तद्घटनिष्ठैकत्ववान् न इति प्रतीत्या च एकत्ववद्घटनिष्ठा या भेदप्रतियोगिता तदवच्छेदकम् एवैकत्ववद्घटनिष्ठम् एकत्वं जातं, न अनवच्छेदकमिति। एवं रीत्या भेदप्रतियोगितानवच्छेदकस्य एकत्वस्य अप्रसिद्धावपि क्षतिः नास्ति। यतः 'अत्र घटोऽस्ति' इत्यत्र अत्रपदेन एतद्देश उपस्थाप्यते। तथा च एतद्देशविद्यमानघटसजातीयो घट एतद्देशविद्यमान एव घटो भविष्यति न तु घटमात्रम्। एतद्देशे च घटान्तरस्य अभावाद् देशान्तरवर्त्तिघटे घटत्वसत्त्वेऽपि एतद्देशवृत्तित्त्वाभावेन साजात्याभावाद् एतद्देशविद्यमानघटे यदेकत्वं तद् एतद्देशविद्यमानघटनिष्ठायाः भेदप्रतियोगितायाः अनवच्छेदकमेव जातम्। एतद्देश–विद्यमानघटे सजातीयनिष्ठभेदप्रतियोगिताया एवाभावात्। एतद्देशविद्यमानत्व–समानाधिकरण–घटत्ववत्त्वेन सजातीयस्य अभावात्। **तत्र** = 'अत्र घटोऽस्ति' इत्यत्र च एतद्देशविद्यमानघटनिष्ठप्रतियोगितानवच्छेदकस्य एव एकत्वस्य बोधात् **तस्य** = एतद्रूपैकत्वस्य च एतद्देशविद्यमानघटे प्रसिद्धत्वात्। ननु बहुघटसत्त्वदशायामपि 'अत्र घटोऽस्ति' इत्येकवचनान्तः प्रयोगो भवति। तस्य का गतिरित्याशङ्क्याह – **बहुघटे**ति, बहुघटसत्त्वदशायाम् 'अत्र घटोऽस्ति' इत्येतादृशवाक्यप्रयोगस्तु जात्येकत्वादेव समर्थनीयः। अर्थात् 'संपन्नो व्रीहिः' इत्यत्रेव घटत्वजातौ एकत्वान्वयः कर्तव्यः ? किं वा स्वाश्रयप्रकृत्यर्थतावच्छेदकवत्त्वसम्बन्धेन घटेषु एवान्वय कर्तव्यः ? **स्वम्** = एकत्वं तदाश्रयीभूतं यत् प्रकृत्यर्थतावच्छेदकं घटत्वं सकलघटेषु अस्त्येव, तेन सम्बन्धेन अनेकघटेषु अपि एकत्वान्वये न कोऽपि दोष इत्यर्थः।

**VV-A 2.2.12:** ननु 'आख्यातार्थसंख्यानिष्ठप्रकारता–निरूपितविशेष्यता–सम्बन्धेन शाब्दबुद्धित्वावच्छिन्नं प्रति प्रथमान्तपदजन्योपस्थितिः कारणम्' इति नियमेन 'देवदत्तः पचति', 'तण्डुलः पच्यते' इत्यादौ देवदत्त–तण्डुलादि–प्रथमान्तपदसत्त्वेन तत्र देवदत्त–तण्डुलादौ आख्यातार्थसंख्याया अन्वयेन सार्थक्येऽपि 'त्वया गम्यते', 'अन्यैर्गम्यते' इत्यादौ भावाख्यातस्थले प्रथमान्तपदाभावेन आख्यातार्थसंख्याया क्वचिद् अप्यन्वयाभावात् सार्थक्यं न

भवति। तत्कस्य हेतोः संख्याया अविवक्षणात्। तथा च यथा भावाख्यातस्थले संख्याया अविवक्षायाम् अप्येकवचनस्य साधुत्वं भवति तथा 'संपन्नो व्रीहिः' इत्यादावपि संख्याया अविवक्षयाम् अप्येकवचनस्य साधुत्वं संभवतीति किमर्थं व्रीहित्वजातावेकत्वान्वयेन गौरवमाश्रीयते इत्याशङ्कते = **यत्त्विति**। परिहरति – **तदपीति**, भावाख्यातस्थले प्रथमान्तपदाभावेन आख्यातार्थसंख्यायाः क्वचिदप्यन्वयासंभवाद् गत्यन्तरविरहेण निरर्थकत्वस्वीकारेऽपि सर्वत्र निरर्थकत्वाश्रयणं तु न युक्तं भवति। तस्मादत्र – **'संपन्नो व्रीहिः'** इत्यादौ च संख्याया जातौ अन्वयेन सार्थकत्वसंभवे **तत्परित्यागस्य** = विभक्त्यर्थसंख्यासार्थकत्व–परित्यागस्य अनुचितत्त्वात्। प्रत्युत 'संपन्नो व्रीहिः' इत्यादौ अत्यावश्यकं संख्यासार्थकत्वम् इत्याह – **सतीति**। **तद्बोधस्य** = संख्याबोधस्य आनुभविकत्वाद् वक्तुः संख्यायां तात्पर्ये सति संख्याबोधोऽपि भवत्येव इति प्रसिद्धमेव। तथा च कथं सर्वत्र संख्याया निरर्थकत्वं स्याद् इत्याक्षेपः।

**VV-A 2.2.13:** 'त्रयः समुदिता हेतुः'' इत्येकवचनस्य गतिमाह – **एवमिति**। **कार्यं** = काव्यम्, **उत्पादः** = उत्पत्तिः, काव्योत्पत्तिप्रयोजकता च शक्तिनिपुणताभ्यासानां त्रयाणां समुदायेऽस्तीति प्रयोजकतावच्छेदकं समुदायत्वम्। तादृशसमुदायत्वावच्छिन्न–समुदायपरं च अत्र हेतुपदमिति तादृशसमुदायत्वे एकत्वान्वयः। **तादृशसमुदायत्वं** = कार्योत्पादप्रयोजकता–वच्छेदकसमुदायत्वम्। एकत्वविशिष्टं यत्कार्योत्पादप्रयोजकतावच्छेदक–समुदायत्वं तद्धर्मवन्तः त्रय इति वाक्यार्थः। **अत एव** = समुदायत्वे एकत्वान्वयस्वीकाराद् एव यथा तृणारणिमणीनां वह्निं प्रति पृथक् पृथगेव हेतुत्वमस्ति। केवलतृणसत्त्वेऽपि वह्न्युत्पत्तिदर्शनात्। न तथा शक्त्यादीनां काव्यं प्रति पृथक् पृथग् हेतुत्वमस्ति। शक्त्यादिषु एकैकसत्त्वेऽपि अपरद्वयाभावे काव्योत्पत्त्यऽदर्शनादिति तृणारणिमणिन्यायेन हेतुत्वशङ्कानिरासः। विपक्षे बाधकमाह – **तथा सतीति**। काव्यं प्रति शक्त्यादीनां तृणारणिमणिन्यायेन हेतुत्वे सति शक्त्यादिषु एकैकमात्रसत्त्वदशायामपि काव्यलक्षणकार्योत्पत्तेः आवश्यकतया शक्त्यादित्रितयपर्याप्तं यत्समुदायत्वं तस्य काव्यलक्षणकार्योत्पत्तिं प्रति प्रयोजकतावच्छेदकत्वं न स्यादिति प्रयोजकता–अनवच्छेदकत्वापत्तौ **तेषाम्** = शक्त्यादीनां त्रयाणां **तथाविधम्** = कार्योत्पादप्रयोजकतावच्छेदकं यदेकं समुदायत्वं तदाश्रयत्वं न स्यादेव। तथा च एकैकसमवधानदशायामपि काव्योत्पत्त्याऽऽपत्तौ तृणारणिमणिन्यायेन एव हेतुत्वं स्यात्। तथा च 'हेतुः' इत्येकवचनम् अनुपपन्नं स्यात्। तस्मात् शक्त्यादीनां त्रयाणामपि

काव्योत्पत्तिप्रयोजकतावच्छेदकसमुदायत्वाश्रयत्वं स्वीकार्यम्। ततश्च तादृश–समुदायत्वे एके एकवचनार्थैकत्वस्य अन्वयः। तथा च न कोऽपि दोष इत्यर्थः।

**VV-A 2.2.14:** "जात्याकृतिव्यक्तयः पदार्थः" इति अत्रत्य विभिन्नवचनकत्वस्य व्यवस्थां व्याकरोति - **एवमिति**। **त्रितयनिष्ठस्य** = जात्याकृतिव्यक्तिनिष्ठस्य पदार्थत्वस्य एकत्वं विवक्षितमस्ति। यतः पदवाच्यत्वं तर्कमते जात्याकृतिव्यक्ति–त्रितयपर्याप्तम् अस्तीति। **विशेष्यपदस्य** = जात्याकृतिव्यक्तिपदस्य बहुवचनान्तत्वेऽपि **विशेषणपदस्य** = पदार्थपदस्य एकवचनान्तत्वं युक्तमेव। पदार्थत्वं पदार्थे भवति, पदशक्तिरपि निरूपकत्वसम्बन्धेन पदार्थे भवतीति पदार्थत्वस्य पदशक्तिरूपत्वम् उक्तम् इत्यवधेयम्।

**VV-A 2.2.15:** प्रत्यक्षेति – **"प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानि"** इत्यत्र प्रमाणानि इति बहुवचनान्तस्य प्रकृत्यर्थतावच्छेदकं यत् प्रमाकरणत्वं तस्य एकस्य प्रत्यक्षादिप्रमाणचतुष्टये असंभवेन बाधितत्वात् प्रमाकरणत्वनिष्ठैकत्वस्य अविवक्षितत्वेन प्रमाणपदस्यात्र बहुवचनान्तत्वम्। प्रत्यक्षादीनाम् इन्द्रियसंयोगादि–लक्षणसामग्रीभेदेन तन्निष्ठप्रमाकरणत्वस्यापि भेदाद् इत्यर्थः।

**VV-A 2.2.16:** **'पितरो देवताः'** इति अत्रत्य समानवचनत्वम् उपपादयति – **एवमिति**। पितृपितामहादिषु एकं देवतात्वं नास्तीति पितृपिता–महादिषु यद् देवतात्वं तत्र एकत्वं नास्तीति एकत्वस्य अविवक्षितत्वाद् बहुत्वस्य च विवक्षितत्वाद् विशेषण– वाचकं देवतापदमपि बहुवचनान्तमेव। पितृपितामहादि–निष्ठदेवतात्वस्य एकत्वाभावम् उपपादयति = **उद्देश्यते**ति, त्यागोद्देश्यत्वमेव हि देवतात्वम्। त्यागोद्देश्यता च पित्रादौ वर्तते। उद्देश्यतावच्छेदकं च पितृत्वपितामहत्वादिकम्। न च पितृत्वपितामहत्वादिकम् एकम् अस्तीति उद्देश्यतावच्छेदकस्य पितृत्वादेः भेदेन उद्देश्यताया अवश्यं भेदात् उद्देश्यतारूप–देवतात्वस्य अपि अर्थाद् भेदात् **तत्र** = देवतात्वे एकत्वस्य बाधितत्वेन अविवक्षया देवतापदस्य बहुवचनान्तता।

**VV-A 2.3.1:** यदुक्तम् **"स्वप्रकृतिकविभक्ति-सजातीयविभक्तिकत्वम्"** **(VV-2.2.1)** इति तत्र वैयाकरणैः स्वप्रकृतिकत्वस्य "स्वनिष्ठोद्देश्यता–निरूपित–विधेयतावत्त्वं स्वप्रकृतिकत्वम्" इति लक्षणमुक्तम्। अत्र **स्वं** = घटादिपदं, तदुद्दिश्य विभक्तेः विधानाद्। विभक्तौ घटादिपदनिष्ठ–उद्देश्यता–

निरूपित–विधेयतावत्त्वम् यद्यपि अस्त्येव तथापि विभक्तिनिष्ठ–एतादृश–स्वप्रकृतिकत्वस्य अवैयाकरणानां ज्ञान–असंभवात्, स्वप्रकृतिकत्वस्य स्वविवक्षित–स्वरूपमाह – **स्वप्रकृतिकेति**। **स्वं** = घटादिपदं, तत्प्रकृतिकत्वं विभक्तौ। **स्वं** = घटादिपदं तदव्यवहितोत्तरत्वेन **प्रतिसन्धीयमानत्वम्** = स्मृतिविषयत्वमेव। तथा च **'दधि सुन्दरम्'** इत्यत्र दधिपदोत्तरं विभक्तेः अभावेऽपि व्यासस्थले लुप्तविभक्तेः स्मरणस्वीकाराद् विभक्तौ दधिपदाव्यवहितोत्तरत्वेन प्रतिसन्धीयमानत्वम् अस्त्येव इत्याह – **तेनेत्यादिना**। **तत्र** = 'दधि सुन्दरम्' इत्यादौ। उत्तरत्वेन इति प्रकारत्वं तृतीयार्थः। तथा च अव्यवहितोत्तरत्व--प्रकारक–स्मृतिविषयत्वं किं वा उत्तरत्वनिष्ठप्रकारतानिरूपित–विशेष्यताश्रयीभूतस्मृतिविषयत्वं स्वप्रकृतिकत्वमिति वाक्यार्थः।

**VV-A 2.3.2:** **स्वप्रकृतिके**त्युक्तवाक्यस्य उत्तरभागं व्याकरोति – **एवमिति**। **तादृशः** = स्वप्रकृतिकः। **तथाविधः** = स्वप्रकृतिकः। विशेषण–वाचकपदे यत्स्वप्रकृतिकविभक्तिसजातीयविभक्तिकत्वम् अस्ति तत् तथाविध–विभक्त्यव्यवहित–पूर्ववर्तितया प्रतिसन्धीयमानत्वमेव। यथा 'नीलो घटः' इत्यत्र घटपदोत्तरवर्तमान–प्रथमाविभक्ति–अव्यवयहित–पूर्ववर्तितया ज्ञानविषयत्वं नीलपदे अस्त्येव, तथा च 'इदं दधि' इत्यत्र दधिपदोत्तरं विभक्तेः अभावेऽपि तस्याः प्रतिसन्धीयमानत्वात् तत्पूर्ववर्तितया प्रतिसन्धीयमानत्वरूपं ज्ञानविषयत्वं दधिपदे अस्त्येव इति न कोऽपि दोष इत्यर्थः।

**VV-A 2.4.1:** ननु सत्यां सामग्र्यां कार्योत्पत्तिः भवत्येव। शाब्दबोधं प्रति च उपस्थित्यादिकमेव कारणम्। तत्र 'नीलस्य घटः' इत्यत्र नीलपदेन नीलत्वावच्छिन्न–विषयाया घटपदेन च घटत्वावच्छिन्नविषयाया उपस्थितिरपि अस्त्येव। नीलघटयोः अभेदस्य योग्यताज्ञानमस्त्येव इति अभेदसम्बन्धावच्छिन्न–नीलत्वावच्छिन्न–प्रकारता–निरूपित–घटत्वावच्छिन्नविशेष्यताकज्ञानं कथं न जायते ? यद्युच्येत समानविभक्तिकत्वस्थल एव अभेदसम्बन्धो भासते इति, 'नीलस्य घटः' इत्यत्रापि अभेदभाने समानविभक्तिकत्वनियमस्य भङ्गो भविष्यतीति, तदा सत्यां सामग्र्यां कार्योत्पत्तौ नियमविशेषभङ्गस्य अकिंचित्करत्वेन प्रतिबन्धकत्वं न संभवतीत्याशङ्कते – **अथेति**। उत्तरमाह – **तथाविधेति**। **तथाविधः** = अभेदसम्बन्ध–प्रकारको यो**ऽन्वयबोधः** = शाब्दबोधः तत्कारणीभूताया आकाङ्क्षाया अभावादेव 'नीलस्य घटः' इत्यत्र नीलघटयोः अभेदो न भासते। आकाङ्क्षां विना शाब्दबोधास्वीकारात्। उक्तमुपपादयति – **तथाहीति**। **तादृशान्वयबोधे** = अभेदसम्बन्धावच्छिन्न–नीलत्वावच्छिन्न–प्रकारता–

निरूपित–घटत्वावच्छिन्नविशेष्यता–शाब्दबुद्धित्वावच्छिन्नं प्रति प्रथमान्तघटपद–समभिव्याहृत–प्रथमान्तनीलपदत्वं व्यासस्थले आकाङ्क्षा। समासस्थले च घटपदाव्यवहितपूर्ववर्तिनीलपदत्वं (नीलघटः) नीलपदाव्यवहितोत्तरवर्त्तिघटपदत्वं वा आकाङ्क्षा। एतादृशाकाङ्क्षायाश्च कारणत्वाद् **उक्तस्थले** = 'नीलस्य घटः' इत्यत्र च उक्तरूपा एकापि आकाङ्क्षा नास्ति इत्यभेदान्वयबोधकारणीभूताया आकाङ्क्षाया अभावेन अभेदसम्बन्धप्रकारकशाब्दबोधरूपकार्यस्य सामग्र्येव नास्तीति कथम् अभेदसम्बन्धप्रकारकः शाब्दबोधः स्यादित्यर्थः। **आपत्तिः** = शाब्दबोधापत्तिः।

**VV-A 2.4.2:** ननु अनेकविधा खल्वाकाङ्क्षा त्वया उक्ता। एकस्मिन् स्थले च एकरूपा एव आकाङ्क्षा संभवतीति आकाङ्क्षाणाम् अपराकाङ्क्षाजन्य–शाब्दबोधे व्यभिचारात् कथं कारणत्वं स्याद् ? अव्यभिचारिण एव कारणत्वस्वीकाराद्, इत्याशङ्क्य आह – **कार्यते**ति। यथा वह्निं प्रति अनेकेषां तृणारण्यादीनां कारणत्वेऽपि तृणोत्तरजायमानवह्नित्वावच्छिन्नं प्रति तृणं कारणम्, अरण्युत्तरत्वविशिष्टवह्निं प्रति अरणिः कारणम् इत्येवं कार्यतावच्छेदककोटौ अव्यवहितोत्तरत्वनिवेशेन न तृणादीनां व्यभिचारशङ्का। तथा अत्रापि समासस्थले घटादिपदाव्यवहितपूर्ववर्तिनीलादिपद– ज्ञानानन्तरत्व–विशिष्टशाब्दबोधं प्रति घटादिपदाव्यवहित–पूर्ववर्तिनीलादिपदत्वम् आकाङ्क्षा। नीलादिपदाव्यवहितोत्तरवर्त्ति–घटादिपदज्ञानानन्तरत्वविशिष्ट–शाब्दबोधं प्रति नीलादिपदाव्यवहितोत्तरवर्तिघटादिपदत्वम् आकाङ्क्षा, इत्येवं **कार्यतावच्छेदक-कोटावव्यवहितोत्तरत्वनिवेशेन** उक्तसमासस्थलीयाकाङ्क्षाज्ञानयोः न अपरापर–जन्य–शाब्दबोधे व्यभिचारः। अपरजन्यशाब्दबोधं प्रत्यपरस्य कारणत्वाभावाद इत्यर्थः।

**VV-A 2.5.1:** समासव्यासयोः आकाङ्क्षाया उक्तरीत्या पृथग् पृथक् स्वरूपस्वीकारापेक्षया लाघवाद् यत्केनापि समासव्यासोभयसाधारणम् एकम् एव आकाङ्क्षास्वरूपं प्रदर्शितं, परिहाराय तदुपस्थापयति – **यत्त्वि**ति। **विशेषणे**ति – यथा 'नीलो घटः' इत्यत्र विशेष्यवाचकघटपदप्रकृतिका विभक्तिः सुविभक्तिः। विशेष्य–वाचकघटपदाप्रकृतिकविभक्तिः अम्–विभक्तिः। तादृश–अम्–विभक्त्य–प्रकृतित्वरूपम् एव विरुद्धविभक्तिराहित्यं, तदेव **तादृशान्वय** = अभेद–सम्बन्धावच्छिन्ननीलत्वावच्छिन्न–प्रकारतानिरूपितघटत्वावच्छिन्नशाब्दबोधं प्रति आकाङ्क्षा अस्तीति एतादृश–विरुद्ध–विभक्तिराहित्यस्य 'नीलो घटः' इत्यत्र नीलपदे सत्त्वाद् अभेदो भासते। विशेष्यवाचकपदोत्तरं या विभक्तिः नास्ति सा

विशेषणवाचकपदोत्तरं न स्याद् इत्यर्थः। 'नीलस्य घटः' इत्यत्र च उक्तविरुद्धविभक्तिराहित्यस्य आकाङ्क्षारूपस्य अभावाद् नीलपदे विरुद्धविभक्तेः एव सत्त्वाद् अभेदो न भासते। ननु विशेष्यवाचकपदनिष्ठं यद् विशेषणवाचकपद–अप्रकृतिकविभक्ति–अप्रकृतित्वं तदेव विरुद्धविभक्तिराहित्यं किं न स्यात् ? यथा – 'नीलो घटः' इत्यत्र विशेषणवाचकनीलपद–प्रकृतिका विभक्तिः सु–विभक्तिः। नीलपद–अप्रकृतिका विभक्तिः अम्–विभक्तिः। तादृश–अम्–विभक्ति–अप्रकृतित्वं विशेष्यवाचकघटपदे अस्त्येव इति लक्षणसमन्वय इत्याशङ्कते – **विशेष्ये**ति। परिहरति – **न तथे**ति, 'नीलघटम् आनय' इत्यत्र अभेदसम्बन्धोदाहरणे समन्वयाऽसंभवाद् इत्यर्थः। तथाहि – अत्र विशेषणवाचक–नीलपदोत्तरं विभक्तिः एव नास्ति, समासस्थले लुप्तविभक्ति–स्मरणस्य च अस्वीकारात् विशेषणवाचकनीलपद–अप्रकृतिका या अम्–विभक्तिः तत्प्रकृतित्वम् एव विशेष्यवाचकघटपदेऽस्ति न तु तदप्रकृतित्वरूपं विरुद्ध–विभक्तिराहित्यम् इत्यव्याप्तिः दोषः। पूर्वोक्त–मदुक्तलक्षणेन तु 'नीलघटमानय' इत्यत्रापि विशेष्यवाचकघटपदाप्रकृतिका या अम्भिन्नस्वादिविभक्तिः तद् अप्रकृतित्वं नीलपदेऽस्त्येव नीलपदोत्तरं कस्या अपि विभक्तेः अभावादिति न कोऽपि दोष इत्यर्थः।

**VV-A 2.5.2:** इत्येवमाशङ्क्य परिहरति – **तदसदि**ति। विशेष्यवाचक–इत्यादिलक्षणस्य हि 'विशेषणवाचकपदोत्तरविभक्तौ विशेष्यवाचकपद–अप्रकृतिकत्वं न स्यात्' इत्ययम् एव अर्थः। तथा च 'नीलो घटः' इत्यत्र नीलपदोत्तरविभक्तौ घटपद– अप्रकृतिकत्वं नास्ति। उभयत्र सुविभक्तेः एव सत्त्वेन घटपदप्रकृतिकत्वस्यैव सत्त्वात्। 'नीलघटम्' इत्यत्र तु नीलपदोत्तरं विभक्तिः एव नास्तीति घटपद–अप्रकृतिकत्वं सुतरां नास्त्येव इति वक्तव्यम्। विशेष्यवाचकपद–अप्रकृतिकत्वं च निषिध्यमानं **तादृशपदानुत्तरत्वम्** = विशेष्यवाचकपदानुत्तरत्वं वा **तदुत्तरत्वेन** = विशेष्यवाचक–पदोत्तरत्वेन अप्रतिसन्धीयमानत्वं वा वक्तव्यम् । तत्र हि "प्रत्युच्चारणं शब्दो भिद्यते" इतिन्यायेन **'नीलो घटः' इत्यादौ** नीलपदोत्तरं सु–विभक्तिः भिन्ना अस्ति घटपदोत्तरं च भिन्ना अस्तीति नीलपदोत्तरं **समभिव्याहृतविभक्तौ** = उच्चारित–सु–विभक्तौ घटपदोत्तरसमभिव्याहृत–सु–विभक्त्यपेक्षया भेदस्य सत्त्वाद् निषिध्यमानं विशेष्य–वाचकपद–अप्रकृतिकत्वम् एव आयातम् इति कथम् अभेदसम्बन्धभानं स्यात् ? विशेष्यवाचकपदप्रकृतिकविभक्तेः विशेष्यवाचकपदोत्तरमेव संभवादिति समासव्यास–साधारणं विरुद्धविभक्तिराहित्यं यदुक्तं तन्न युक्तम् इत्यर्थः।

**VV-A 2.6.1:** ननु विरुद्धविभक्तिराहित्येन हि विशेष्यवाचक–पदोत्तरावृत्ति–विभक्ति–विभाजकधर्मवद्विभक्तिराहित्यं विवक्षितमस्ति। यथा – 'नीलो घटः' इत्यत्र विशेष्यवाचकघटपदोत्तर–अवृत्तिविभक्तिः अमादिविभक्तिः, तद्विभाजको यो धर्मो द्वितीयात्वादिः तद्वद्‌विभक्तिः, तद्राहित्यम् अपेक्षितम्। तच्च विशेषणवाचकनीलपदे अस्त्येव। एवं 'नीलघटम्' इत्यत्र विशेष्यवाचकपदोत्तर–अवृतिविभक्तिविभाजको धर्मः तृतीयात्वादिः, तद्वद्–विभक्तिराहित्यं नीलपदे अस्त्येव। नीलपदोत्तरं कस्या अपि विभक्तेः असत्त्वादिति नोक्तदोष इत्याशङ्कते – **अथेति**।

**VV-A 2.6.2:** परिहरति – **तर्हीति**। विभक्तिविभाजकप्रथमात्वादि धर्माणां वैयाकरणस्यैव ज्ञानं संभवति नान्यस्य इति अवैयाकरणानाम् 'नीलो घटः' इत्यादौ अभेदसम्बन्धप्रकारकः शाब्दबोधो न स्याद्। न चैतदिष्टम्। अयं भावः – उक्तविभक्ति–राहित्यम् एवाकाङ्क्षा। आकाङ्क्षा च न स्वरूपसती शाब्दबोधं प्रति कारणं किं तु ज्ञाता सत्येव। उक्तराहित्यरूपाया विशिष्टाया आकाङ्क्षाया ज्ञानं च तद्विशेषणीभूत–विभक्तिविभाजकधर्मादीनां ज्ञानं विना न संभवतीति **विभक्तित्वादिकमजानतः पुरुषस्य तादृश** = विभक्तिविभाजक–धर्मज्ञानासंभवेन शाब्दबोधानुपपत्तिः इति दोषः।

**VV-A 2.6.3:** ननु यदि शाब्दबोधं प्रत्याकाङ्क्षा ज्ञाता सत्येव कारणं स्यात् तदा उक्तदोषः स्यादपि। न एवमस्ति, किं तु स्वरूपसत्येवाकाङ्क्षा शाब्दबोधं प्रति कारणमस्ति। तथा च आकाङ्क्षाज्ञानापेक्षाभावाद् आकाङ्क्षारूपस्य विशेष्यवाचक–पदोत्तरावृत्तिविभक्तिविभाजकधर्मवद्‌विभक्ति–राहित्यस्य कुक्षिप्रविष्टविभक्तित्वादीनाम् अपि ज्ञानापेक्षाभावाद् विभक्तित्वादिक–मजानतः पुरूषस्य न शाब्दबोधानुपपत्तिः इत्याशङ्क्य आह – **नीलो घट** इति। यद्याकाङ्क्षा स्वरूपसत्येव कारणं स्यात्, तदा 'नीलो घटः' इत्यत्र उक्तविभक्तिराहित्यरूप–आकाङ्क्षायाः सत्त्वात् सु–पदस्य अम्–पदत्वादिभ्रम–दशायाम् अपि अभेदप्रकारकः शाब्दबोधः स्यादेव। न च भवति। तस्माद् आकाङ्क्षाज्ञानस्य एव कारणत्वं वक्तव्यं। तथा चात्र अम्–पदत्वादि–भ्रमदशायाम् उक्तविभक्तिराहित्यरूपाकाङ्क्षाज्ञानाभावात् न शाब्दबोध इत्युपपद्यते। तथा 'नीलस्य घटः' इत्यादावपि यदा षष्ठ्यादौ सुपदत्वादिभ्रमो भवति तदा उक्तविभक्तिराहित्यरूप–आकाङ्क्षायाः ज्ञानसत्त्वाच्छाब्दबोध उपपद्यते जायते च। यद्याकाङ्क्षा स्वरूपसत्येव कारणं स्यात्तदा वस्तुतः 'नीलस्य घटः'

इत्यत्रोक्त–आकाङ्क्षाया असत्त्वात् षष्ठ्यादौ सुपदत्वभ्रमदशायामपि शाब्दबोधो न स्याद्। भवति तु। तस्माद् आकाङ्क्षाज्ञानस्यैव कारणत्वं प्राप्तं। तथा चोक्तो विभक्तित्वादिकम् अजानतः परुषस्य शाब्दबोधानुपपत्तिरूपो दोषः तदवस्थ एवेत्यर्थः।

**VV-A 2.6.4:** ननु निखिलबोधसाधारणाकाङ्क्षानिर्वचनस्य अशक्यत्वेऽपि 'नीलो घटः' 'नीलघट'; 'नीलं घटम्' 'नीलघटम्' इत्यादिद्विविधबोधसाधारणं त्वाकाङ्क्षास्वरूपं निर्वक्तुं शक्यते। तच्च स्वोत्तरसुप्पदेत्यादि ज्ञेयम्। तथा हि **स्वं** = विशेषणवाचक–नीलपदं तदुत्तरवर्ति यत् सुप्पदं विभक्तिपदं, तद्भिन्नं यत् पटादिपदं तद् अनुत्तरत्वविशिष्टं **स्वं** = विशेषणवाचकपदं तद् उत्तरत्वादिरूपं यत् स्वाव्यवहितोत्तरत्वं तेन सम्बन्धेन नीलादिपदवत् यत् सुबन्तघटादिपदं तत्त्वम् एव आकाङ्क्षा। तथा च अत्र घटपदे नीलपदोत्तरवर्तमानविभक्ति–पदोत्तरत्वसत्त्वेऽपि तद्भिन्नपटादिपदानुत्तरत्वमप्यस्त्येव। तथा नीलपदोत्तरत्वम् अप्यस्त्येव इति, अनेन सम्बन्धेन घटपदे नीलपदवत्त्वम् उभयत्र अस्त्येव। तदेवाकाङ्क्षा अस्तु इत्याशङ्कते – **अथेति। तथा** नाम आकाङ्क्षा। 'नीलस्य घटः' इत्यादिप्रयोगवारणाय सुप्पदभिन्नपदेन अत्र विशेष्यवाचकघटादिपदोत्तर–वर्तमान–विभक्तिपदभिन्नपदं ग्राह्यम्। तथा च 'नीलस्य घटः' इत्यत्र विशेष्य–वाचक–घटपदोत्तरवर्तमानं यत् प्रथमाविभक्तिपदं तद् भिन्नं यत् षष्ठीविभक्तिपदं तदुत्तरत्वम् एव घटपदेऽस्ति। तदनुत्तरत्वं नास्तीति न अत्र उक्ता आकाङ्क्षा। तथा च अत्र 'विशेष्यवाचकघटादिपदोत्तरविभक्तिवृत्ति–विभक्तिविभाजक–प्रथमा–त्वादिधर्मावच्छिन्नपदभिन्नपदानुत्तरत्वविशिष्ट–स्वोत्तरत्वादिरूप–स्वाव्यवहितोत्तरत्व – सम्बन्धेन नीलादिपदवत्–सुबन्त–घटादिपदत्वम् आकाङ्क्षा' इत्येवम् आकाङ्क्षास्वरूपं वक्तव्यम्।

**VV-A 2.6.5:** परिहरति – **नेति। 'नीलघटरूपम्'** इत्यत्रापि शाब्दबोध इष्टः। किं तु त्वदुक्त–उक्ताकाङ्क्षास्वरूपं न घटते। यतो 'नीलं च तद् घटरूपम्' इति कर्मधारयेण विशेष्यवाचकरूपपदे विशेषणवाचकनील–पदाव्यवहितोत्तरत्वं नास्ति, मध्ये घटपदेन व्यवधानात्। न च घटरूपम् इत्येकं पदम्। तर्कमते "शक्तं पदम्" इति नियमेन घटपदस्य भिन्नत्वाद् रूपपदस्य च भिन्नत्वात्। तस्मात् 'नीलघटरूपम्' इत्यत्र जायमानशाब्दबोधनिर्वाहार्थम् अन्यादृशम् आकाङ्क्षास्वरूपं वक्तव्यम्। तच्च 'स्वोत्तर–सुप्पदभिन्ननिराकाङ्क्ष–पदानुत्तरत्वविशिष्ट–स्वोत्तरत्वादिरूप–स्वाव्यवहितोत्तरत्व–सम्बन्धेन नीलादि–पदवत्सुबन्त–घटादिपदत्वम्' इति। लक्षणसमन्वयः पूर्ववदेव। 'नीलो घटः'

'नीलघटः' इत्यादौ विशेष्यवाचकघटपदे निराकाङ्क्षपद–अनुत्तरत्वम् अस्त्येव। तथा 'नीलघटरूपम्' इत्यत्र यद्यपि नील–रूपपदयोः मध्ये घटपदव्यवधानेन रूपपदे स्वोत्तरसुप्पदभिन्नपदानुत्तरत्वं नास्ति, तथापि स्वोत्तरसुप्पदभिन्न–निराकाङ्क्षपदानुत्तरत्वं तु अस्त्येव। घटपदस्य रूपपदसाकाङ्क्षत्वेन निराकाङ्क्षत्वाभावाद्, इत्येतादृश्या आकाङ्क्षाया अवश्यम् अभ्युपगन्तव्यत्वे त्वदुक्ताकाङ्क्षाभ्युपगमस्य निरर्थकत्वाद् इत्यर्थः।

**VV-A 2.7.1:** ननु 'नीलं घटमानय' इत्यत्र नीलस्य तु घटे अन्वयो भवतीति प्रसिद्धम्। किं तु नीलपदोत्तरद्वितीयाविभक्त्यर्थस्य कर्मत्वस्य कुत्र अन्वयो भवतीति जिज्ञासार्थं शङ्कते – **अथे**ति। उत्तरगर्भं प्रतिषेधमाह – **न कुत्रापी**ति।

**VV-A 3.1.1:** "संभवत्यर्थसाधुत्वे पदसाधुत्वम् (विभक्तेः पदसाधु–त्वार्थकत्वोपपादनम्) अन्याय्यम्" इत्यभिप्रायेण पक्षान्तरमाह – **अभेदे**ति। 'नीलो घटः', 'नीलं घटम्', 'नीलस्य घटस्य' इत्यादौ सर्वत्र विशेषणविभक्तेः अभेद एवार्थः – 'नीलाभिन्नो घट' इति बोधादित्यर्थः।

ननु ग्रन्थारम्भे एव अभेदस्य संसर्गमर्यादया भासमानत्वम् उक्तम्। संसर्गमर्यादया भानं च पदानुपस्थितस्य एव भवति। यदि विशेषणविभक्तेः एव अभेदः अर्थः तदा अभेदस्य विभक्तिलक्षणपदेन उपस्थितौ संसर्गमर्यादया भासमानत्वं न स्याद् इत्याशङ्क्य आह – **अभेदस्ये**ति। **अभेदस्य संसर्गमर्यादया भानं समासस्थले एव भवति। तत्र** = समासस्थले विशेषणविभक्तेः लोपेन लुप्तविभक्तेः च समासे अनुसंधानास्वीकारेण पदान्तरस्य अभेदानुपस्थापकत्वाद् अगत्या अभेदस्य संसर्गमर्यादया भानं स्वीक्रियते । 'नीलं घटम्' इत्यादौ तु अभेदोपस्थापिकाया विशेषणविभक्तेः सत्त्वेन अभेदस्य न संसर्गमर्यादया भानं, किं तु प्रकारतया इत्यर्थः।

**VV-A 3.1.2:** उक्तविभक्त्यर्थरूप–अभेदस्वरूपं पृच्छन् आशङ्कते – **अथे**ति। **अप्रसिद्धिरिति** = घटादौ पटादीनां भेदस्य सत्त्वादेव भेदत्वावच्छिन्नस्य अभावः अप्रसिद्ध एव। सर्वत्र पदार्थेषु तद्–भिन्नपदार्थभेदस्य सर्वप्रमाणसिद्धत्वाद इत्यर्थः।

ननु न भेदत्वावच्छिन्नाभावो अभेदो येन अप्रसिद्धिः स्यात्। किं तु **भेदप्रतियोगिको** नाम किंचिद्–भेदव्यक्तिप्रतियोगिकोऽभावः अभेद इत्युच्यते। तथा च नीलघटे नीलभेदो नास्तीति नीलभेदप्रतियोगिकाभावरूपः अभेदः सर्वप्रसिद्ध एव इत्याशङ्क्य आह – **यदि चेति**। अत्र दोषमाह – **तदेति**, भेदप्रतियोगिकाभावस्य अभेदत्वे 'नीलं जलम्' इत्यादिवाक्यस्यापि प्रामाण्यम् आपद्येत। तथा हि – जलं नीलं न भवतीति तर्कसिद्धान्तेन जले नीलभेद एव वर्तते इति 'नीलं जलम्' इति प्रयोगो न भवति। भेदप्रतियोगिकाभावस्य अभेदत्वे तु जले नीलभेदाभावस्य असत्त्वेऽपि द्वित्वादिना नाम द्वित्वावच्छिन्न–प्रतियोगिताकस्य अर्थाद् घटत्व–नीलभेद–एतदुभयप्रतियोगिताक–अभावस्य सत्त्वात् 'नीलं जलम्' इत्यादिवाक्यस्यापि प्रामाण्यम् आपद्येत एव। न च एतद् इष्टम् इत्यर्थः।

ननु द्वित्वावच्छिन्नप्रतियोगिताकाभावस्य ग्रहणेन उक्तदोषः प्रदर्शितः। न च द्वित्वावच्छिन्नप्रतियोगिताक–अभावं ग्रहीष्यामः। तथा च जले नीलभेदरूप–प्रतियोगिन एव सत्त्वेन तदभावस्य असत्त्वात् न 'नीलं जलम्' इत्यादिवाक्यस्य प्रामाण्यापत्तिः इत्याशङ्क्य दोषान्तरम् आह – **नीलभेदत्वेति**। 'नीलो घटः' इत्यत्र नीलभेदत्वावच्छिन्नस्य अभावो यदि विभक्त्यर्थः तदा अभावविशेषणीभूतो नीलपदार्थोऽपि विभक्त्यर्थ एव इति प्राप्तम्। तथा च नीलपदेन उपस्थितस्य नीलपदार्थस्य अनन्वयप्रसङ्गः। यतो विभक्त्यर्थभूत–नीलविशिष्टे घटे पुनः नीलपदोपस्थित– नीलपदार्थस्य अन्वयो नैव संभवतीति।

**VV-A 3.1.3:** ननु न नीलभेदत्वावच्छिन्नाभावः अभेदो, येन उक्तदोषः स्यात्। किं तु 'नीलो घटः' इत्यादौ भेदप्रतियोगिताकाभाव एव विभक्त्यर्थः। नीलभेदत्वावच्छिन्नाभावः तु नीलपदसमभिव्याहाराद् एव प्रतीयते। तथा च नीलपदोपस्थित–नीलपदार्थस्य घटे न अनन्वयप्रसङ्ग इति आशङ्क्य आह – **न चेति**। परिहारहेतुम् आह – **पदार्थेति**। 'नीलो घटः' इत्यत्र यो हि नीलभेदत्व–अवच्छिन्नाभावः प्रतीयते तत्र नीलभेदस्य तदभावस्य च यो नीलभेदत्वावच्छिन्न–प्रतियोगिताकत्वरूपः सम्बन्धः तस्य कथं भानं स्यात् ? न च आकाङ्क्षया संभवति, पदार्थद्वयसंसर्गस्य एव आकाङ्क्षाभास्यत्वात्। न चोक्तसम्बन्धे विभक्तेः शक्तिग्रहः अस्ति, येन उक्तसम्बन्धस्य शक्त्या उपस्थितिः स्याद् इति आक्षेपाभिप्रायः। तथा हि – 'नीलघटः' इत्यत्र नीलपदार्थस्य यो घटपदार्थे अभेदसम्बन्धो भासते, स नीलपद–समभिव्याहाररूप–आकाङ्क्षया भासते, तदुपस्थापकपदान्तरस्य अभावात्। 'नीलो घटः' इत्यत्र तु भेदाभावरूपः

अभेदो नीलपदोत्तरवर्तमान–प्रथमाविभक्तेः एव अर्थः। तत्र अभेदे भेदः पदार्थतावच्छेदकः। अभेदश्च पदार्थः। प्रथमाविभक्तिलक्षणपद–जन्यप्रतीति–विशेष्यत्वात् तत्र अभेदरूपभेदाभावे पदार्थतावच्छेदकरूपभेदस्य यो नीलभेदत्वावच्छिन्नप्रतियोगिताकत्वरूपः सम्बन्धः स पदान्तरसमभिव्याहाररूप–आकाङ्क्षालभ्यो न भवति। पदार्थ–द्वयसंसर्गस्य एव आकाङ्क्षालभ्यत्वाद्। अत्र च न भेद–अभेदौ द्वावेव पदार्थौ। अभेदस्य पदार्थत्वेऽपि पदार्थतावच्छेदकत्वेन पदार्थत्व–अभावात्। किं तु यथा 'घटः' इत्यत्र घट–घटत्व–समवायेषु त्रिषु घटपदशक्ति–स्वीकारात् घटे घटत्व–समवायः शक्त्या एव भासते न तु पदान्तरसमभिव्याहाररूप–आकाङ्क्षया, तथा प्रकृतेऽपि प्रथमाविभक्त्यर्थे भेदाभावरूप–अभेदे शक्त्या उपस्थिते पदार्थतावच्छेदकीभूत–भेदस्य नीलभेदत्वावच्छिन्नप्रतियोगिताकत्वरूपः सम्बन्धः शक्त्या एव भासते इति वक्तव्यम्। न च एवमपि संभवति। यतो विभक्तिशक्तिः हि भेदप्रतियोगिकाभाव–रूप–अभेदे एवास्तिए न तु नीलभेदत्वावच्छिन्न–प्रतियोगिताकत्व–सम्बन्धेन भेदविशिष्टे भेदप्रतियोगिकाभावे। अतो न शक्त्या **भेदरूपपदार्थतावच्छेदकस्य अभावे** = विभक्त्यर्थ–अभावपदार्थे **तादृशसम्बन्धेन** = नीलभेदत्वावच्छिन्न–प्रतियोगिताकत्वरूप–सम्बन्धेन **भानं** संभवति। अतो नीलीभेदत्वावच्छिन्न–प्रतियोगिताकत्व–सम्बन्धेन भेदविशिष्टे एव अभावे अर्थात् नीलभेदत्वावच्छिन्न–प्रतियोगिताक–अभावे एव प्रथमाविभक्तेः शक्तिः वक्तव्या। तथा सति उक्तरीत्या स एव नीलस्यापि विभक्त्यर्थत्वेन विभक्त्युपस्थित–नीलविशिष्टे घटे नीलपदोपस्थित–नीलपदार्थस्य अनन्वयप्रसङ्ग इति अवधेयम्।

**VV-A 3.1.4:** परिहरति – **मैवमि**त्यादिना। उक्ता दोषाः स्युः यदि विशेषणविभक्तेः विशिष्टे भेदत्वावच्छिन्नाभावे वा भेदप्रतियोगिकाभावे वा एका शक्तिः स्वीक्रियते। न एवम् अस्ति, किं तु भेदे अभावे च खण्डशः शक्तिः स्वीक्रियते। तत्र भेदोऽपि प्रसिद्ध एव। अभावोऽपि प्रसिद्ध एव पदार्थ इति न उक्ताप्रसिद्ध्यादिदोषप्रसक्तिः। भेदस्य अभावस्य च विशेषणविभक्त्या मुख्यत्वेन पृथक् पृथग् उपस्थितिः भवति। विशिष्टस्य भेदाभावस्य च नीलादिपद–समभिव्याहाररूप–आकाङ्क्षाबलात् प्रतीतिः भवतीति न कोऽपि दोषः। 'नीलं जलम्' इत्यत्र च जले नीलभेदस्य एव सत्त्वेन नीलभेदाभावस्य असत्त्वात् न प्रामाण्यापत्तिः। 'नीलो घटः' इत्यत्र नीलपदार्थस्य स्वनिष्ठप्रतियोगिता–निरूपकत्व–सम्बन्धेन नीलपदोत्तरविभक्त्यर्थभेदे अन्वयो भवति। तस्य भेदस्य च स्वनिष्ठप्रतियोगितानिरूपकत्व–सम्बन्धेन नीलपदोत्तरविभक्त्यर्थ–अभावे अन्वयो भवति। तस्य अभावस्य च विशेष्यतासम्बन्धेन घटे अन्वयो भवतीति सिद्धान्तः।

अत्र विशेषणविभक्तेः यदि विशिष्टे भेदाभावे एका एव शक्तिः स्यात् तदा भेदस्य पदार्थैकदेशत्वेन तत्र उक्तरीत्या नीलपदार्थस्य अन्वयो न स्यात्। ''पदार्थः पदार्थेनान्वेति न तु पदार्थैकदेशेन'' इति नियमाद् इति, यः केनापि दोषः प्रदर्शित इदानीं सोऽपि नास्ति। विशेषणविभक्तेः भेदे अभावे च पृथगेव खण्डशः शक्ति–स्वीकारेण भेदस्य अपि विभक्त्या मुख्यत्वेन उपस्थित्या पदार्थत्वेन तत्र नीलपदार्थस्य अन्वये विरोधाभावाद् इत्याह – **एतेने**ति। एतेन = भेदे अभावे च खण्डशः शक्तिस्वीकारेण।

**VV-A 3.2.1:** ननु खण्डशः शक्तिस्वीकारेऽपि विशेषणविभक्तेः अभेदार्थकत्वम् अस्त्येव। तथा च यथा 'नीलो घटः' इत्यत्र अभेदान्वयबोधो भवति तथा 'नीलं घटः' इत्यत्रापि नीलपदस्य विशेषणवाचकत्वेन तदुत्तरविभक्तेरपि अभेदार्थकत्वप्राप्तौ अभेदान्वयबोधः स्यादेवय नीलस्य भेदेए भेदस्य अभावेए अभावस्य च घटे उक्तरीत्या अन्वयसंभवात्। यदि उच्येत अभेदान्वयबोधे विरुद्धविभक्तिराहित्यं कारणंए तदत्र नास्तीति न अभेदान्वयबोधापत्तिः इति, तदपि न युक्तम्। 'धान्येन धनवान्' इत्यत्र विरुद्धविभक्तिराहित्याभावेऽपि 'धान्याभिन्नधनवान्' इत्येवम् अभेदान्वयबोधो भवत्येव इति अभेदान्वयबोधं प्रति किं वा अभेदस्य संसर्गतया बोधे विरुद्धविभक्ति–राहित्यस्य कारणत्वेऽपि अभेदस्य प्रकारतया बोधं प्रति तु विरुद्धविभक्ति–राहित्यस्य कारणत्वं नास्त्येवय येन 'नीलं घटः' इत्यत्र अभेदान्वयबोधो न स्याद् इत्याशङ्क्य आह – **न चे**ति। परिहरति – **द्वितीयादिने**ति। 'धान्येन धनवान्' इत्यादि–उपपदविभक्तिस्थले तु विरुद्धविभक्तिराहित्याभावेऽपि अभेदान्वयबोध–स्वीकारेऽपि अन्यत्र तु अभेदान्वयबोधं प्रति विरुद्धविभक्तिराहित्यस्य कारणत्वम् अस्त्येव इति न 'नीलं घटः' इत्यत्र अभेदान्वय–बोधप्रसङ्गः विरुद्ध–विभक्तिराहित्यस्य अभावादित्यर्थः।

**VV-A 3.3.1:** दोषान्तरमाह – **अथे**ति। यदि भेदाभाव एव विशेषणविभक्तेः अर्थः तदा सर्वस्यैव पदर्थजातस्य प्रमेयत्वेन प्रमेयत्वावच्छिन्न–भेदस्य एव अप्रसिद्ध्या 'प्रमेयो घटः' इत्यत्र अभेदान्वयबोधो न स्याद् एव इत्येको दोषः। तथा घटे घटत्वम् अप्यस्ति कम्बुग्रीवादिमत्त्वम् अप्यस्तीति तत्र लघुधर्मस्य घटत्वस्य अभावीयप्रति–योगितावच्छेदकत्वसंभवे घटत्वसमनियतस्य = घटत्वसमानाधिकरणस्य गुरुधर्मस्य कम्बुग्रीवादिमत्त्वस्य अभावीय–प्रतियोगितावच्छेदकत्वं न भवतीति 'कम्बुग्रीवादिमान् घटः' इत्यत्रापि अभेदान्वयबोधो न स्यादेव। यतो विशेषणविभक्तेः भेदाभाव एवार्थः। अत्रापि

कम्बुग्रीवादिमत्त्वावच्छिन्नप्रतियोगिताकभेदाभाव एव विशेषणविभक्तेः अर्थो वक्तव्यः। तन्न संभवति। अत्र भेदप्रतियोगितावच्छेदकत्वं कम्बुग्रीवादिमत्त्वस्य प्रप्तम्। तच्च न युक्तम्। घटत्वापेक्षया कम्बुग्रीवादिमत्त्वस्य गुरुधर्मत्वाद् इति द्वितीयो दोष इति विशेषणविभक्तेः अभेदार्थकत्वं नैव संभवतीत्यर्थः।

**VV-A 3.3.2:** दोषान्तरमाह – **एवमि**ति। अयं भावः – यत्र घटे नीलत्वप्रतिपादनाय 'नीलो घटः' इत्युच्यते तत्र तु नीलाभेदप्रकारको बोध इष्ट एव। यत्र च 'नीलः' इति पटतात्पर्येण उच्यते 'घटः' इत्यपि उच्यते तत्र नीलाभेदप्रकारक–घटविशेष्यकबोधो न इष्टः। विशेषणविभक्तेः अभेदार्थकत्वे च नीलयोः घटपटयोः घटत्व–पटत्व–रूपाभ्यां भेदेऽपि नीलत्वेन रूपेण तु भेदो नास्त्येव इति नीलत्वेन पटभेदाभावस्य नीलपदोत्तरविभक्त्यर्थस्य घटे सत्त्वादेव पटतात्पर्येण प्रयुक्त–नीलपदघटितात् 'नीलो घटः' इति वाक्यादपि नीलाभेद–प्रकारक–घटविशेष्यको बोधः स्याद् एव इति नीलपटादिपरनीलादिपदघटितस्य 'नीलो घटः' इत्यादिवाक्यस्य अपि प्रामाण्यापत्तिः।

**VV-A 3.3.3:** केनापि – न भेदाभावो विशेषणविभक्तेः अर्थो, येन उक्तदोषाणां प्रसक्तिः स्यात्। किं तु विशेषणतावच्छेदकीभूतं यद् नीलत्व–प्रमेयत्वादिकं तदेव विशेषणविभक्तेः अर्थःए तस्य च आश्रयतासम्बन्धेन विशेष्ये घटादौ अन्वयो भवतीति 'नीलो घटः' इत्यत्र 'नीलत्वाश्रयो घटः', 'प्रमेयो घटः' इत्यत्र 'प्रमेयत्वाश्रयः (प्रमेयत्ववान्) घट' इतिबोधे न कापि अनुपपत्तिः। जले नीलत्वाभावाच्च 'नीलं जलम्' इति प्रयोगापत्तिरपि नास्ति। विशेषणविभक्तेः अभेदार्थकत्वं यदुच्यते तदपि नीलत्वादेः अतद्व्यावृत्तिरीत्या नीलत्वावच्छिन्न–भेदाभावरूपत्वेन एव इति अभेदार्थकत्वप्रवादस्य अपि अनुपपत्तिः नास्तीति यदुक्तं तत् पराचष्टे – **एतेने**ति। एतेन नाम नीलपदादिपर–नीलादिपदघटितस्य 'नीलो घटः' इत्यादिवाक्यस्यापि प्रामाण्यप्रसङ्गेन। अयं भावः – विशेषणविभक्तेः यदि विशेषणतावच्छेदकीभूतनीलत्वादिकम् एव अर्थः तदा नीलत्वं तु एकमेव सर्वत्र घटपटादिषु अस्तीति पटवृत्तिनीलत्वस्य घटेऽपि सत्त्वात् पूर्ववद् नीलपटादिपरनीलपदघटितात् 'नीलो घटः' इत्यादिवाक्यादपि नीलाभेदप्रकारक–घटविशेष्यको बोधः स्यादेव। न च भवतीति विशेषणविभक्तेः विशेषणता–वच्छेदकीभूतनीलत्वाद्यर्थकत्वमपि न उपपद्यते। विशेषणविभक्तेः विशेषणता–वच्छेदकीभूत–नीलत्वाद्यर्थकत्वे दोषान्तरमाह – **नीलत्वादावि**ति। "प्रकृतिप्रत्ययौ सहार्थं ब्रूतः तयोः प्रत्ययार्थस्य प्राधान्यम्" इतिन्यायेन 'नीलो घटः' इति अत्रत्ये 'नीलः' इति पदार्थेऽपि विभक्त्यर्थस्य नीलत्वस्य एव प्राधान्येन तत्र प्रकृत्यर्थस्य

नीलत्ववतो नीलस्य अन्वयः स्व(नील)–वृत्तित्वसम्बन्धेन कर्तव्यः। स च न संभवति, आकाङ्क्षाविरहात्। **स्वम्** = नीलत्ववान् नीलः तत्र वृत्तित्वं नीलत्वेऽस्त्येव । अत्र **कृष्णंभट्टो** यथा– "आकाङ्क्षाविरहमेवोपपादयति – **यथा** हीत्यादिना। **तद्विशिष्टे** भूतले **अधिकरणतया** तदन्वयः = घटान्वयो विरुद्धोए घटवान् घटवान् इति बोधाभावात्। **तथा तद्धर्मे** घटे **आधेयतया** तद्धर्मवतो घटवतः अन्वयोऽपि न। घटवति घट इति बोधाभावाद् इत्यर्थः। तथा तत्प्रत्ययार्थनीलत्वे आधेयतासम्बन्धेन प्रकृत्यर्थस्य नीलत्वादिमतः अपि अन्वयो न संभवतिए आकाङ्क्षाविरहादिति भावः। **अत एव** – तद्धर्मे तद्धर्मवत आधेयतया–न्वयविरहादेव, कर्मत्वे द्वितीयार्थे कर्मत्ववतः प्रकृत्यर्थस्य कर्मण आधेयतया अन्वये निराकाङ्क्षता इत्यर्थः" इति। यथा घटत्ववति स्वाधिकरणत्वसम्बन्धेन घटत्वान्वयो न भवति, अनुभवविरोधाद्, एकघटस्य घटत्वद्वयवत्त्वप्रसङ्गाच्च। तथा घटत्वेऽपि स्वाधेयत्वसम्बन्धेन घटत्ववदन्वयो न भवति अनुभवविरोधात्। तथैव प्रकृतेऽपि विभक्त्यर्थे नीलत्वे नीलत्ववतो नीलस्य अन्वयोऽनुभवविरुद्ध एव इत्यर्थः। तद्धर्मवदन्वयोऽपि इत्यत्र "अनुभवविरुद्धः" इत्यनुवर्तनीयम्। **कर्मेति** – 'कर्म गच्छति' इत्यत्रापि द्वितीयान्तार्थे कर्मपदार्थे द्वितीयार्थस्य कर्मत्वस्य प्राधान्येन तत्र स्ववृत्तित्वसम्बन्धेन स्वाधेयत्वसम्बन्धेन वा प्रकृत्यर्थस्य कर्मपदार्थस्य अन्वयो वक्तव्यः। सोऽपि न संभवति, अनुभवविरोधात्। तस्मात् विशेषणविभक्तेः विशेषणतावच्छेदकीभूत–नीलत्वादौ अपि शक्तिः न संभवतीत्यर्थः। न च 'ग्रामं गच्छति' इत्यत्र ग्रामवृत्ति–संयोगे आधेयतासम्बन्धेन ग्रामान्वयस्य वक्ष्यमाणत्वाद् विरोध इति वाच्यम्। तत्रापि संयोगे ग्रामस्य ग्रामत्वेन एव अन्वयस्वीकारात्ए संयोगवत्त्वेन अन्वयास्वीकाराच्च। अन्यथा 'संयोगवान् संयोगवान्' इति शाब्दबोधः स्यात्। स च न इष्ट इत्यवधेयम्।

**VV-A 3.4.1:** ननु यथा अभेदस्य प्रकारतास्वीकारे त्वया दोषाः प्रदर्शिताः तथा त एव दोषा अभेदस्य संसर्गतास्वीकारेऽपि प्रसङ्क्ष्यन्ति – अभेदस्य भेदाभावस्वरूपत्वाद् एव इत्याशङ्कते – **न चैवमिति**। अभेदस्य संसर्गतामतेऽपि उक्तस्थले = नीलपटादिपर–नीलादिपदघटिते 'नीलो घटः' इति वाक्ये प्रामाण्यं स्यादेव। अयं भावः – अभेदस्य संसर्गत्वस्वीकारेऽपि नीलत्वेन पटभेदाभावस्य नीलपदोत्तरविभक्त्यर्थस्य नीलघटे सत्त्वादेव पटतात्पर्येण प्रयुक्त–नीलपदघटितात् 'नीलो घटः' इति वाक्यादपि नीलाभेदसंसर्गक–घटविशेष्यको बोधः स्यादेव इत्यस्य वाक्यस्य प्रामाण्यापत्तिः अनिष्टा दुर्वारैव। **स्ववृत्तीति** = विभक्त्यर्थभूतं नीलवृत्तियन्नीलत्वं तस्य प्रकारत्वं वा संसर्गत्वं वा स्वीकार्यं, तत्र संसर्गत्वस्वीकारे इत्यर्थः। परिहरति – **स्ववृत्तीति**। उक्तस्थले नीलत्वस्य

एकत्वादेव दोषः प्राप्तः। तत्र समवायस्य एकत्वेऽपि यथा वायौ स्पर्शसमवायसत्त्वेऽपि रूपसमवायो नास्तीति व्यवहारः तत्कस्य हेतोः ? वायौ रूपाभावाद् रूपसमवायप्रतियोगिकत्ववायु–अनुयोगिकत्वयोः अवच्छेद्यावच्छेदक–भाव–अभावाद् इत्युच्यते। तथा नीलत्वस्य एकत्वेऽपि पटवृत्ति–नीलत्वस्य पटे एव सम्बन्धता न तु घटादाविति पटादिवृत्ति–नीलत्वादेः या पटादिसम्बन्धता तस्या घटादौ विरहेण **तादृशातिप्रसङ्गस्य** = नीलपटादिपरनीलादि–पदघटितस्य 'नीलो घटः' इत्यादिवाक्यस्य प्रामाण्यप्रसङ्गस्य अभावात्।

**VV-A 3.4.2:** **स्ववृत्ति** = नीलपटवृत्ति। **स्वस्मिन्नेव** = पटे एव सम्बन्धताए न घटे। विशेषणविभक्तेः अर्थः अभेदः। स एव सम्बन्धः। स च अभेदो नीलत्वरूप एवेति नीलत्वस्य सम्बन्धता उक्ता इत्यवधेयम्। तदुक्तं **कृष्णंभट्टेन** – "नीलपटपर–नीलपदघटितात् 'नीलो घटः' इतिवाक्याद् घटे नीलत्वविशिष्टबुद्धि–अनुदयेन स्ववृत्ति–(पटवृत्ति)–नीलत्वादेः घटे पटसम्बन्धता न स्वीक्रियते किं तु पटे एव स्वीक्रियते 'नीलपटः' इति विशिष्टबुद्ध्युदयात्" इति।

**VV-A 3.5.1:** वास्तविकपरिहारमाह – **वस्तुतस्त्विति**, विशेषणविभक्तेः भेदाभाव एवार्थः। स च भेदाभावः तत्तद्व्यक्तित्वावच्छिन्नभेदाभाव एव ज्ञेयः। तथा च 'नीलो घटः' इत्यत्र नीलघटव्यक्तिगत–तन्नीलव्यक्तित्वावच्छिन्नभेदस्य अभावो **नीलत्वादिप्रकारेण भासमानानां तत्तद्व्यक्तीनाम्** = नीलरूपाश्रयीभूत–घटादि–व्यक्तीनां **स्वस्मिन्** = तद्घटादिव्यक्तावेव **सम्बन्धतया भासते।** नान्यपटादिव्यक्ति–सम्बन्धतयेति 'नीलो घटः' इत्यत्र नीलत्वावच्छिन्नभेदाभाव–संसर्गक–घटविशेष्यकबोध उपपद्यते। नीलपटादिपरनीलादिपदघटितात् 'नीलो घटः' इतिवाक्यात् नीलत्वावच्छिन्न–भेदाभावसंसर्गक–घटविशेष्यक–बोधस्य च आपत्तिः नास्त्येव। नीलपटपर–नीलपदबोध्य–तन्नील–(पटगतनील)–व्यक्तित्वावच्छिन्न–भेदाभावस्य घटे अभावान्न नीलपटादिपरनीलादिपदघटितस्य 'नीलो घटः' इति वाक्यस्य प्रामाण्यापत्तिः इत्यर्थः। यथा घट इत्यत्र घटत्वप्रकारेण घटस्य भासमानत्वं तथा अत्रापि नीलत्वप्रकारेण नीलघटादिव्यक्तेः एव भासमानत्वं ज्ञेयम्। ननूक्त–भेदाभावस्य सम्बन्धता केन रूपेण ज्ञेया इत्यत्राह – **सम्बन्धते**ति। **तस्य** = विशेषणविभक्त्यर्थभेदाभावस्य। यथा 'पर्वतो वह्निमान्' इत्यत्र पर्वते यो वह्निप्रतियोगिकः संयोगः तस्य संयोगत्वेन वा वह्निप्रतियोगिकसंयोगत्वेन वा उभयथापि सम्बन्धत्वं संभवति, विशिष्टबुद्धि–नियामकत्वाक्षतेः। तथा अत्रापि भेदाभावस्य भेदप्रतियोगिताकाभावत्वेन वा

तद्व्यक्तित्वावच्छिन्नभेदप्रतियोगिताकाभावत्वेन वा उभयथापि सम्बन्धत्वं घटते। 'नीलो घटः' इत्याकारकविशिष्टबुद्धि–नियामकत्वाक्षतेः इत्याशयेनाह – **इत्यन्यदेतदिति**।

**VV-A 3.5.2:** ननु यथा त्वया अभेदस्य संसर्गत्वम् आश्रित्य अभेदस्य तत्तद्व्यक्तित्वावच्छिन्नभेदाभावत्वेन तादृशनीलादितद्व्यक्त्यभेदस्य तत्तद्घट–पटव्यक्तिष्वेव सत्त्वेन अन्यत्र च असत्त्वेन नीलपटादिपरनीलादिपदघटितस्य 'नीलो घटः' इतिवाक्यस्य प्रामाण्यप्रसङ्गो निवारितः तथा मयापि अभेदस्य प्रकारत्वमपि आश्रित्य प्रकारीभूतोऽपि अभेदः तत्तद्व्यक्तित्वावच्छिन्नभेदाभाव एवेति तस्य पटादिगतस्य घटादिषु अभावेन उक्तस्य 'नीलो घटः' इति वाक्यस्य प्रामाण्यप्रसंगो निवारितो भविष्यति इत्याशङ्क्याह – **न चे**ति। अत्र च अभेदस्य विशेषण–विभक्त्यर्थत्वकथनेन प्रकारत्वमेव विज्ञेयम्। प्रकारस्य किंचित्पदार्थत्व–नियमात् शक्त्या उपस्थितिनियमाच्च । संसर्गस्तु न कस्यचित्पदस्य अर्थो भवतिय न वा शक्त्या उपस्थितो भवतीति नियमः। आकाङ्क्षाबलेन तद्भानस्य उक्तत्वाद् इत्यवधेयम्।

परिहारमाह – **तथा सती**ति। तथासति = अभेदस्य प्रकारतामते अभेदस्य तत्तद्व्यक्तित्वावच्छिन्न–प्रतियोगिताक–भेदाभावरूपत्वाश्रयणे सति। प्रकारीभूतपदार्थस्य अन्वयं प्रति तच्छक्तिज्ञानाधीनोपस्थितिः कारणम् अस्ति। तथा च 'नीलो घटो भविष्यति' इत्यत्र भाविनः तद्व्यक्तित्वस्य उपस्थित्यसंभवेन तदवच्छिन्नभेदाभावे च विभक्ति–शक्तिग्रहासंभवाद् विभक्त्या प्रकारीभूताभेदस्य उपस्थित्यसंभवाद् अपूर्वव्यक्तीनां घटादीनाम् अभेदान्वयबोधो न स्यादेवेति दोषः। तदुक्तं **कृष्णंभट्टेन** – "'नीलो घटो भविष्यति' इत्यत्र तत्तद्व्यक्तित्वावच्छिन्न–प्रतियोगिताको यो भेदः तादृशभेदत्वावच्छिन्न–प्रतियोगिताकः अभावो नीलपदोत्तरप्रथमार्थः। तदेकदेशे तद्व्यक्तित्वे प्रकृत्यर्थस्य नीलरूपवतः अन्वयः (कर्तव्यः)। तथा च अपूर्वा भविष्यति या नीलरूपाश्रयव्यक्तिः तन्निष्ठं यद् तद्व्यक्तित्वं तस्य **कथंचिदपि भानासंभवने** = सामान्यलक्षणारूपभासकविरहाद् भानासंभवेन (घटादौ तु घटत्वं सकलवृत्तिः, तस्य सामान्यलक्षणारूपत्वं भवति। तद्व्यक्तित्वं तु तद्व्यक्तिमात्रपर्याप्तमिति न तस्य सामान्यलक्षणारूपत्वम्) तदवच्छिन्नभेदाभावे = अपूर्वव्यक्तित्वावच्छिन्नप्रतियोगिताकभेदस्याभावे शक्तिग्रहा–संभवेन अपूर्वव्यक्तीनाम् अभेदान्वयानुपपत्तेः। अभावज्ञाने हि प्रतियोगिज्ञानं कारणम् इति प्रतियोगि (अपूर्वव्यक्ति) ज्ञानाभावात् शक्तिग्रहासंभवाद् अपूर्वव्यक्तीनाम् अभेदान्वयबोधानुपपत्तिः इत्यर्थः" इति।

ननु अभेदस्य संसर्गतास्वीकारेऽपि 'नीलो घटो भविष्यति' इत्यत्र उक्तदिशा अपूर्वव्यक्तीनाम् अभेदान्वयबोधानुपपत्तिः किं न स्याद् इत्याशङ्क्य समाधत्ते – **संसर्गज्ञानस्येति**। विशिष्टबुद्धौ संसर्गस्य एव कारणत्वम् अस्ति, न तु संसर्गज्ञानस्य इति अनुपस्थितस्यापि अभेदस्य संसर्गतया भानसंभवेन अपूर्वव्यक्तीनाम् अभेदान्वयबोधे अनुपपत्त्यभावात्। उपस्थित्यर्थमेव शक्तिज्ञानस्य अपेक्षणात्। न च अभेदोपस्थित्यपेक्षा संसर्गतामते। अत एव न संसर्गज्ञानस्य विशिष्टबुद्धिहेतुत्वम् इत्यर्थः।

**VV-A 3.5.3:** ननु यदि तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकभेदाभावो विशिष्टो विशेषणविभक्तेः अर्थः स्यात्तदा एतादृशविशिष्टाभेदकुक्षिप्रविष्ट–तद्व्यक्तित्वस्य अपूर्वस्य कथंचिदपि भानासंभवेन तत्र विभक्तिशक्तिग्रहसंभवात् शक्तिग्रहाभावे च अपूर्वतद्व्यक्तित्वस्य उपस्थिति–असंभवेन 'नीलो घटो भविष्यति' इत्यत्र अपूर्वतत्तन्नीलव्यक्तीनाम् अभेदान्वयबोधानुपपत्तिः स्यादपि। न च उक्तविशिष्टाभावस्य विशेषणविभक्त्यर्थत्वं वदामः। किं तु खण्डशो विभक्तिशक्ति–स्वीकारेण विशेषणविभक्तेः भेदः अभावश्च अर्थः। तत्र विभक्त्यर्थे भेदे तत्तन्नीलव्यक्तीनां नीलत्वादिना तत्तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकत्वसम्बन्धेन अन्वयः। तादृशभेदानाम् अपि तत्तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकत्व–सम्बन्धेन अभावे अन्वय इति 'नीलो घटो भविष्यति' इत्यत्र न अपूर्वतत्तन्नीलव्यक्तीनाम् अभेदान्वयबोधानुपपत्तिः। तद्व्यक्तित्वस्य अत्र सम्बन्धकुक्षौ प्रवेशेन विभक्त्यर्थे प्रवेशाभावेन च तत्र विभक्तिशक्तिग्रहस्य अपेक्षा एव नास्ति। उक्तसम्बन्धस्य तद्व्यक्तित्वविशिष्टस्य आकाङ्क्षाबलेन भानसंभवेन सम्बन्धकुक्षिप्रविष्ट–तद्व्यक्तित्वस्य अपि आकाङ्क्षाबलेन भानसंभवादित्यर्थः। **तावतैव** = तत्तद्–व्यक्तित्वावच्छिन्न–प्रतियोगिताक–सम्बन्धेन तत्तन्नीलव्यक्तीनां भेदे, तादृशभेदानां च अभावे अन्वयाङ्गीकारेणैव। सम्बन्धप्रणालिकया हि तद्व्यक्तित्वस्य भेदेन संबद्धत्वात् **तत्तद्व्यक्तित्वावच्छिन्न-अभेदस्य** = तत्तद्व्यक्तित्वावच्छिन्न–प्रतियोगिताकभेदाभावरूपस्य अभेदस्य **लाभः** = भानं संभवति एव इति न 'नीलो घटो भविष्यति' इत्यत्र अपूर्वतत्तन्नीलव्यक्तीनाम् अभेदान्वयबोधानुपपत्तिः। न वा नीलपटादिपर–नीलादिपदघटितस्य 'नीलो घटः' इतिवाक्यस्य प्रामाण्यापत्तिः। तद्व्यक्तित्वस्य निवेशात् पटगत–तन्नीलव्यक्तेः घटादिषु असत्त्वाद् इत्यर्थः। तदाह – **न किंचिदनुपपन्नमिति**। इत्याशङ्क्याह –**न चेति**।

**VV-A 3.5.4:** परिहरति – **विशेषणते**ति, त्वया तद्व्यक्तित्वावच्छिन्न–प्रतियोगिताकत्वसम्बन्धेन भेदे तत्तन्नीलव्यक्तीनाम् अन्वय उपपादितः। प्रतियोगिता च अत्र सम्बन्धे प्रविष्टा अस्ति। तस्याः प्रतियोगितायाः च अभावे प्रतियोगि–विशेषणतावच्छेदकावच्छिन्नाया एव सम्बन्धत्वेन भानं भवति। विशेषणतावच्छेदकं च अत्र नीलत्वमेवए न तु तन्नीलव्यक्तित्वम्। तथा च नीलत्वावच्छिन्न–प्रतियोगितायाः सम्बन्धत्वे नीलत्वस्य सर्वत्र घटपटादिषु एकत्वेन पुनः नीलपटादिपर–नीलादिपदघटितस्य 'नीलो घटः' इति वाक्यस्य प्रामाण्यापत्तिः दोषः प्राप्तः। विपक्षे बाधकमाह – **अन्यथे**ति। यदि प्रतियोगिताया विशेषणता–वच्छेदकावच्छिन्नायाः सम्बन्धत्वं न स्यात् तदा अभावज्ञानस्य **विशिष्ट-वैशिष्ट्यबुद्धित्वं** न स्याद्, नाम – अभावज्ञानेन विशिष्टवैशिष्ट्यस्य अवगाहनं न स्यात्। 'घटो नास्ति' इत्यत्र हि **विशिष्टस्य** = घटत्वविशिष्टस्य एव घटस्य स्वप्रतियोगिताकत्वसम्बन्धेन अभावे वैशिष्ट्यं भासते। (स्वं घटः) अर्थात् – यथा घटस्य स्वप्रतियोगिताकत्वसम्बन्धेन अभावे अन्वयो भवति तथा घटत्वस्यापि स्वावच्छिन्नप्रतियोगिताकत्वसम्बन्धेन अभावे अन्वयो भवत्येव, भासते च। (स्वं घटत्वम् ) तन्न स्याद् यदि विशेषणतावच्छेदकावच्छिन्ना प्रतियोगिता सम्बन्धो न स्यात्। अर्थात् यदि प्रतियोगितावच्छेदकं घटत्वं विशेषणं न स्यात् किंतूपलक्षणं स्यात्ए तदा उपलक्षणीभूत--घटत्वस्य अभावे स्वावच्छिन्नप्रतियोगिताकत्वसम्बन्धेन अन्वयोऽपि न स्यात्। तदा 'विशेषणतावच्छेदकावच्छिन्नाया एव प्रतियोगितायाः सम्बन्धत्वेन अभावे भानं भवति' इति नियमोऽपि न स्यात्। तदा उक्तस्थलेऽपि नीलत्वस्य प्रतियोगितावच्छेदकत्व–अभावेन प्रामाण्यापत्तिः न स्याद् अपि। न च एवम् अस्ति। विशेषणतावच्छदेकावच्छिन्नाया एव प्रतियोगितायाः सम्बन्धत्व–स्वीकाराद् इत्यर्थः।

अभावे विशेषणतावच्छेदकावच्छिन्नाया एव प्रतियोगिताया सम्बन्धत्वं भवतीत्यत्र विनिगमनाम् आह – **प्रतियोगिविशेषिते**ति। प्रतियोगिना विशेषितं प्रतियोगिविशेषितम् अभावज्ञानंए यथा 'घटो नास्ति' इत्यत्र घटप्रवेशात् एतादृशम् अभावज्ञानं **विशिष्टवैशिष्ट्यस्य मर्यादाम्** – अवगाहनं नातिशेते। अर्थात् 'घटो नास्ति' इति अभावज्ञाने अभावे घटत्वविशिष्टस्य एव घटस्य स्वप्रतियोगिताकत्वसम्बन्धेन **वैशिष्ट्यम्** = अन्वयो भासते। तस्माद् घटविशेषणीभूतस्य घटत्वस्य अपि अभावे स्वावच्छिन्नप्रतियोगिताकत्वसम्बन्धेन अन्वयो भवत्येव। भासते च सः। तस्मात् सम्बन्धकोटिप्रविष्टा प्रतियोगिता विशेषणतावच्छेदकीभूतघटत्वादि–अवच्छिन्ना भवत्येव। अभावज्ञाने च अभावस्य एव विशेष्यत्वेन तत्र प्रतियोगिनो घटादेः विशेषणत्वाद् घटत्वादीनां

विशेषणतावच्छेदकत्वं प्राप्तम् इति। ननु 'घटो नास्ति ' इति अभावज्ञाने घटत्वस्य केवलं घटविशेषणत्वम् एव भविष्यति न अभावविशेषणत्वम्। अर्थात् घटत्वस्य स्वावच्छिन्नप्रतियोगिताकत्वसम्बन्धेन अभावे अन्वयं नाङ्गीकरिष्याम इति न उक्तदोषापत्तिः। इत्याशङ्क्याह – **केवलमि**ति। 'घटो नास्ति' इत्यादौ प्रतियोगिविशेषिताभावज्ञाने त्वदुक्तां विशेष्ये विशेषणमितिरीतिं न कश्चित् स्वीकरोति किं तु घटत्वस्य स्वावच्छिन्नप्रतियोगिताकत्वसम्बन्धेन अभावेऽन्वयो भवत्येव भासते च इत्येव सर्वो जनः स्वीकरोतीत्यर्थः। यदि अभावज्ञाने उपलक्षणत्वेन घटत्वभानं स्यात् तदा उपलक्षणत्व–अविशेषाद् द्रव्यत्वादीनामपि भानं स्यात्। न च एवम् अस्ति। तस्माद् द्रव्यत्वाद्यपेक्षया घटत्वे विशेषणत्वम् एव विशेष इति प्राप्तम्। यदि च प्रतियोगिता विशेषणतावच्छेदकेन घटत्वेन अवच्छिन्ना न स्यात् तदा 'घटो नास्ति' इत्यत्र घटत्वावच्छिन्न–प्रतियोगिताकाभावस्य असिद्ध्या किंचिद्–घटव्यक्तिसत्त्वदशायाम् अपि किंचिद्–घटव्यक्त्यभावतात्पर्येण 'घटो नास्ति' इति प्रयोगस्य प्रामाण्यं स्यात्। न च किंचिद् घटव्यक्तिसत्त्वे 'घटो नास्ति' इति प्रयोगो भवति। तस्मात् प्रतियोगिता विशेषणतावच्छदेकघटत्वादिना अवच्छिन्ना भवति। तथा सति च किंचिद्–घटसत्त्वे घटत्वावच्छिन्नप्रतियोगिताकाभावस्य बाधात् 'घटो नास्ति' इति प्रयोगो न भवति। प्रकृते च 'नीलो घटः' इत्यत्र विभक्त्यर्थाभावसम्बन्धभूतायाः प्रतियोगिताया विशेषणतावच्छेदकनीलत्वेन अवच्छिन्नत्वात् नीलत्वस्य च सर्वत्र नीलघट–पटेषु एकत्वेन अभावाभावाद् नीलपटादिपरनीलादिपदघटितस्यापि 'नीलो घटः' इति वाक्यस्य प्रामाण्यं स्याद् इति दोषः।

**VV-A 3.6.1:** इत्येवं प्रकारतावादे प्राप्तं दोषं स्वीकुर्वन् प्रकारतावादी आह – **सत्यमि**ति। विशेषणविभक्त्यर्थभूत–अभेदं निर्वक्ति – **अभेद** इति। तादात्म्यम् एव अभेदः। तथा च 'नीलो घटः' इत्यत्र घटे नीलतादात्म्यं भासते। 'नीलतादात्म्यवान् घट' इति नीलपदोत्तरविभक्तेः तदेवार्थः। तादात्म्यस्वरूपमाह – **स्ववृत्ती**ति। **तत्** = तादात्म्यम्। **स्वं** = घटः। वटवृत्ति यन्नीलतादात्म्यं तद् घटस्य असाधारणो धर्मः। तस्य नीलतादात्म्यस्य तद्घटव्यक्तिमात्रवृत्तित्वात्। असाधारण्यस्वरूपमाह – **असाधारण्यमि**ति। एकव्यक्तिमात्रवृत्तिधर्मः असाधारणो धर्म इति फलितम्। एकमात्रवृत्तित्वस्वरूपमप्याह – **स्वसमाने**ति। **तत्** = एकमात्रवृत्तित्वम्। अत्र **कृष्णंभट्टो** यथा – स्वं नीलघटव्यक्तिभेदः तत्सामानाधिकरण्यं द्रव्यत्वे। अथ च स्वं नीलघट–व्यक्तिभेदः, तत्प्रतियोगिनी नीलघटव्यक्तिः, तद्वृत्तित्वमपि द्रव्यत्वे इति उभयसम्बन्धेन भेदविशिष्टं द्रव्यत्वमेव। तदन्यत्वं तद्व्यक्तित्वे (तन्नीलघटव्यक्तिवृत्ति–तद्व्यक्तित्वे) इत्यर्थः।

स्वप्रतियोगिवृत्तित्वस्य एव सम्बन्धत्वे – स्वं = नीलव्यक्तिभेदः, तत्प्रतियोगिनी नीलघटव्यक्तिः, तद्वृत्तित्वं तद्व्यक्तित्वे इत्यनेन सम्बन्धेन भेदविशिष्टम् एव तत्तद्व्यक्तित्वम्। अतो द्वितीयसम्बन्धनिवेशः। तथा च स्वं = नीलव्यक्तिभेदः, तत्सामानाधिकरण्यं तत्तद्व्यक्तित्वे नास्तिए नीलघटव्यक्तिभेदवति पटे तत्तद्व्यक्तित्वस्य अभावात्। स्वसामानाधिकरण्यस्य एव सम्बन्धत्वे च स्वपदेन पटादिभेदः तत्सामानाधिकरण्यं तत्तद्व्यक्तित्वे इति भेदविशिष्टमेव भवतीति स्वप्रतियोगिवृत्तित्वनिवेशः। तथा च स्वं पटादिभेदः, तत्प्रतियोगी पटादिः तद्वृत्तित्वं तद्व्यक्तित्वे नास्तीत्यर्थः'' इति। एवं च एतदुभयसम्बन्धेन तद्व्यक्तित्वं विना भेदविशिष्टं सर्वं घटत्वादिकं धर्मजातं भविष्यति। तदन्यत्वं तद्व्यक्तित्वे प्राप्तम्। ''प्रकृतिप्रत्ययौ सहार्थे ब्रूतः'' इति न्यायेन विभक्त्यर्थस्य उक्त–एकमात्रवृत्तिधर्मस्य प्राधान्येन तत्र प्रकृत्यर्थस्य नीलस्य अन्वयः केन सम्बन्धेन कर्तव्य इत्यत्राह – **वृत्तिश्चेति**। **तत्र** = विभक्त्यर्थे तादात्म्ये, **प्रकृत्यर्थस्य** = नीलस्य, **वृत्तिः** = अन्वयः संसर्गमर्यादया भासते। स्ववृत्तित्वसम्बन्धेन नीलस्य तादात्म्ये अन्वयः। तादात्म्यस्य च नीलविशिष्टस्य घटे आश्रयत्वसम्बन्धेन विज्ञेयः। स चापि सम्बन्धः संसर्गमर्यादया भासते। नीलघटयोः यः तादात्म्यलक्षणः सम्बन्धः तस्य प्रकारत्वस्वीकारेण विभक्त्यर्थत्वाद् विशेषणविभक्त्या एव उपस्थितिस्वीकाराच्च। **तादृशधर्मः** = एकमात्रवृत्तिधर्मः। 'नीलो घटो भविष्यति' इत्यत्र अभेदान्वयबोधानुपपत्तिपरिहारम् आह – **अपूर्वेति**। **तादृशधर्मस्य** = तद्व्यक्तित्वरूप– धर्मस्य। **विशिष्य** = तद्व्यक्तित्वत्वेन रूपेण ज्ञातुम् अशक्यत्वं हि तस्य भावित्वेन वर्तमानत्वाभावात्। तद्व्यक्तित्वस्य तद्व्यक्तित्वत्वेन रूपेण ज्ञातुम् अशक्यत्वेऽपि एकमात्रवृत्तिधर्मत्वेन रूपेण सामान्यप्रत्यासत्त्या ज्ञातुं शक्यत्वात्। एकमात्रवृत्तित्वधर्मस्य वर्तमान– नीलादि– व्यक्तिस्थस्य ज्ञानसंभवेन तद्रूपेण भाविव्यक्तिस्थस्य अपि ज्ञानसंभवाद् इत्यर्थः।

**VV-A 3.7.1:**

**अभेदस्य एव** = **अभेदस्येति**। अभेदसंसर्गतावादेऽपि **एतादृशानुगत-** रूपधर्मेषु अनुगतस्य एव तादात्म्यलक्षणस्य अभेदस्य **तथात्वम्** = संसर्गत्वम् उचितम्। अननुगताभेदस्य संसर्गत्वे बाधकमाह – **तत्तद्व्यक्तित्वेति**। तत्तद्व्यक्तित्वावच्छिन्न–प्रतियोगिताक–भेदाभावसमूहस्य **विशिष्य** = तद्– व्यक्तित्वावच्छिन्न–प्रतियोगिताक–भेदाभावत्वेन रूपेण **तथात्वे** = संसर्गत्वे 'घटो न नीलः' इति **वाक्यजन्यबोधे तादृशः** = तत्तद्व्यक्तित्वादिरूपो योऽननुगतः सम्बन्धः तदवच्छिन्नप्रतियोगिताकाननुगता एव नीलाभावा भासेरन्। अर्थात् सम्बन्धभूतस्य तद्व्यक्तित्वस्य एकमात्र–नीलव्यक्तिस्थत्वेन प्रतियोगितायाः

तदवच्छिन्नत्वे हि सकलनीलव्यक्तीनाम् एकः अभावः घटे न प्रत्येतुं शक्यते, किंतु प्रतियोगितावच्छेदकस्य तद्व्यक्तित्वस्य अनेकत्वेन अनेके एव नीलाभावा घटे अत्र प्राप्ताः, ते पृथक् पृथगेव भासेरन्। अत्र प्रमाणमाह – **प्रतियोगी**ति। प्रतियोग्यन्वयः तदभावान्वयश्च **तुल्ययोगक्षेमौ** = सम्बन्धादिषु तुल्यसापेक्षौ भवतः। अन्वयः शाब्दबोधः। अर्थात् नञ्–असत्त्वे येन सम्बन्धेन यत्र यस्य येन रूपेण सत्त्वं प्रतीयते नञ्–सत्त्वेऽपि तेनैव सम्बन्धेन तत्रैव तस्यैव तेनैव रूपेण असत्त्वं प्रतीयते। तथा च नञ्–असमभिव्याहारस्थले यत्सम्बन्धाववच्छिन्न–यद्धर्मावच्छिन्न–प्रकारताक– यद्विशेष्यकः शाब्दबोधो भवति नञ्–समभिव्याहार–स्थलेऽपि तत्सम्बन्धावच्छिन्न– तद्धर्मावच्छिन्नप्रतियोगिताक–तदभावविशेष्यकः शाब्दबोधो भवति। यथा – 'भूतले घटोऽस्ति' इत्यत्र संयोगसम्बन्धावच्छिन्न–घटत्वावच्छिन्न–विशेष्यताकः शाब्दबोधो भवतीतिय 'घटो नास्ति' इत्यत्रापि संयोगसम्बन्धावच्छिन्नघटत्वावच्छिन्नप्रतियोगिताक–घटाभावविशेष्यकः शाब्दबोधो भवति। तथा च 'घटो नीलः' इत्यत्र घटे नीलसत्त्वम् अननुगत–तद्व्यक्तित्वावच्छिन्न–प्रतियोगिताकभेदाभावरूप–अभेदसम्बन्धेन प्रतीयते इति, 'घटो न नीलः' इत्यत्रापि घटे नील–असत्त्वं तेन एव अननुगत–तद्–व्यक्तित्वावच्छिन्न–प्रतियोगिताकभेदाभावरूप–अभेदसम्बन्धेन प्रतीयते इति प्राप्तम्। तत्र सम्बन्धभूतस्य अननुगतस्य तद्व्यक्तित्वस्य तत्तन्नीलव्यक्तीनाम् आनन्त्येन आनन्त्यात्, तदवच्छिन्न–प्रतियोगिताकानां नीलाभावानाम् अनन्तानां संग्राहकरूप–अभावेन आनन्त्याद् अनन्ता एव नीलाभावा भासेरन्। न तु **नीलवृत्तिः** = नीलघटवृत्तिः एको नीलाभावः प्रत्येतुं शक्यते इत्यर्थः। उपसंहरति – **तथा सती**ति, यदि 'घटो नीलः' इत्यत्र तन्नीलव्यक्तित्वावच्छिन्न–प्रतियोगिताकभेदत्वावच्छिन्न–प्रतियोगिताकाभावरूप–एकसम्बन्धावच्छिन्न–प्रतियोगिताक एक एव नीलाभावः प्रतीयेत तदा नीले घटे किंचिन्नीलरूप–व्यक्तिसत्त्वेऽपि किंचिन्नीलरूपव्यक्तेः असत्त्वेन तद्–अभावाभिप्रायेण नीलेऽपि घटे 'घटो न नीलः' इति प्रयोगः स्यात्, तस्य च प्रामाण्यमपि स्यात्। न चैवं भवति। तस्मात् 'घटो न नीलः' इत्यत्र उक्तदिशा नीलाभावा अनन्ता एव भासन्ते इति वक्तव्यम्। अनन्ताभावानां च ज्ञानासंभव इति संसर्गतामतेऽपि एकमात्र–वृत्तिधर्मत्वेन रूपेण अनुगतस्यैव तद्व्यक्तित्वस्य उक्ततादात्म्यरूपस्य संसर्गत्वं वक्तव्यमिति प्राप्तमित्यर्थः। एवं च प्रतियोगिताया एकमात्रवृत्तिधर्मत्वेन रूपेण तद्व्यक्तित्वेन अवच्छिन्नत्वेन पटगत–तन्नीलव्यक्तेश्च घटादौ बाधाद् उक्तदिशा नीलपटादिपर–नीलादिपदघटितस्य 'नीलो घटः' इति वाक्यस्यापि प्रामाण्यापत्तिः नास्त्येव।

**VV-A 3.7.2-3:** नञ्–असत्त्वे यस्य प्रतीतिः भवति नञ्सत्त्वे तदभावस्य प्रतीतिः भवतीति नियमोऽस्ति । प्रकृते च यदि 'नीलो घटः' इत्यत्र विशेषणविभक्तेः अभेद एवार्थः तदा 'घटो न नीलः' इत्यत्र नञा नीलाभेदाभावस्य एव प्रतीतिः भविष्यति न तु नीलभेदस्य इत्याह – **इदमि**त्यादिना। व्याख्यातप्रायोऽयं ग्रन्थः। उपसंहरति – **एवं चे**ति। ननु 'अनीलं घटम्' इत्यत्र तु नञो भेदबोधकत्वं भविष्यति इत्याशङ्क्याह – **अनीलमि**ति। अत्रापि नञो भेदवति लक्षणा एव न तु शक्त्या भेदबोधकत्वमित्यर्थः।

**VV-A 3.7.4:** **इदं त्वत्रे**ति = यद्यप्यभेदस्य प्रकारतामते उक्तरीत्या 'घटो न नीलः' इत्यत्र नञो नीलाभेदाभावबोधकत्वमेव तथापि तृतीयाभावस्य प्रतियोगि–स्वरूपत्वाद् यथा घटाभावाभावो घटस्वरूपमेव तथा अत्रापि अभेदो नाम भेदाभाव इति नीलाभेदाभाव इत्यनेन नीलभेदाभावाभाव इति प्राप्तम्। तत्र नीलभेदाभावाभावो हि नीलभेदस्वरूपम् एवेति नञो नीलाभेदाभावबोधकत्वे प्राप्ते नीलभेदबोधकत्वं प्राप्तम् एवेति भेदबोधकत्वं नानुपपन्नम्। किं तु एवं नञो **भेदत्वप्रकारेण** = भेदत्वेन रूपेण भेदबोधकत्वं न संभवतिए किं त्वऽभेदाभावत्वेन एव रूपेण भेदबोधकत्वं संभवति। यथा क्वचिद् घटादिपदानां द्रव्यत्वादिना घटादिबोधकत्वं भवति तथा इत्यर्थः।

**VV-A 3.7.5:** **इदं तु तत्त्वमि**ति। 'नीलघटम्' इत्यादिसमासस्थले तु अभेदोपस्थापिकाया नीलादिविशेषणपदोत्तरं विभक्तेः अभावेन तदनुसंधानस्यापि अनङ्गीकाराच्च विभक्त्या अभेदस्य उपस्थित्यसंभवेन प्रकारत्वं नैव संभवति। केनचित् पदेन वृत्त्या उपस्थितस्यैव प्रकारत्वनियमाद् इत्युक्तसमस्तस्थले त्वभेदस्य संसर्गतयैव भानं भवतीति निर्विवादम्। 'नीलो घटः' इत्यत्र त्वभेदोपस्थापकविशेषणविभक्तेः सत्त्वेन तया वृत्त्या अभेदस्य उपस्थितिः संभवतीति अभेदस्य अत्र यद्यपि प्रकारत्वमपि संभवति तथापि संसर्गतामतेऽपि = अभेदस्य संसर्गत्वस्वीकारेऽपि किमपि गौरवं नास्तीति **तत्र** = अभेदे **विशेषणविभक्तेः वृत्तिकल्पनम्** = शक्तिकल्पनम् अनुचितमेव। प्रत्युत प्रकारतामते एव अभेदे विशेषणविभक्तेः शक्तिकल्पनरूपं गौरवम् अस्ति इत्यर्थः।

**VV-A 3.7.6:** ननु यदि कस्यचित् पुरुषस्य अभेदे एकत्वादि–संख्यावाचिकाया विशेषणविभक्तेः **शक्तिभ्रमो** जातः किं वा विशेषणविभक्तेः एकत्वे शक्तिः अस्तीति अभेदे **स्वारसिकलक्षणाग्रहः** स्यात् तदा तु 'नीलो घटः' इति वाक्येन अभेदप्रकारक एव बोधो भवतीति सर्वसंमतम्। तथा च –

**तादृशसमभिव्याहारज्ञानस्य** = 'नीलो घटः' इत्यादि–प्रथमान्तनीलपद–प्रथमान्तघटपद–समभिव्याहारज्ञानस्य **द्विविधबोधे** = अभेदप्रकारकबोधे अभेद–संसर्गकबोधे च हेतुताद्वयं संसर्गतावादिना कल्पनीयमिति गौरवम्। तथा हि 'नीलो घटः' इति वाक्यस्य स्वसिद्धान्तेन अभेदसंसर्गकबोधे एका हेतुता। विशेषणविभक्तेः अभेदे शक्तिभ्रमे लक्षणाग्रहे च उक्तरीत्या वृत्त्या उपस्थिताभेदस्य प्रकारत्वसंभवेन अभेदप्रकारकबोधे द्वितीया हेतुता इत्यर्थः। प्रकारतामते तु शक्तिभ्रमे लक्षणाग्रहे तथा सिद्धान्ते च अभेदप्रकारक एव बोधो भवतीति न उक्तवाक्यस्य हेतुताद्वयं कल्पनीयमिति न गौरवम्! एवम् यत्र प्रत्यक्षसामग्री शाब्दसामग्री च समानविषया भवति तत्र प्रत्यक्षसामग्र्याः प्राबल्येन शाब्दबोधं प्रति प्रत्यक्षसामग्री प्रतिबन्धिका भवति। यत्र भिन्नविषया भवति तत्र तु शाब्दसामग्र्या एव प्राबल्यं भवतीति **तादृशसमभिव्याहारज्ञानघटितसामग्र्याः** = 'नीलो घटः' इत्यादि–प्रथमान्तनीलपद–प्रथमान्तघटपद–समभिव्याहारज्ञान–घटितसामग्र्या भिन्नयोग्यताज्ञान–घटितत्वेन सिद्धान्ते संसर्गविषयक–योग्यताज्ञानघटितत्वेन तथा अभेदे शक्तिभ्रमे लक्षणाग्रहे वाभेदप्रकारता–विषयकयोग्यताज्ञानघटितत्वेन द्वैविध्यं जातमिति भिन्नविषयकप्रत्यक्षं प्रति तादृशद्विविधशाब्दबोधसामग्र्याः प्रतिबन्धकत्वं कल्पनीयम् इत्यपि संसर्गतामते गौरवम्। प्रकारतामते तु सर्वत्र अभेदप्रकारक एव बोधो भवतीति एकविधयोग्यताज्ञानघटितत्वेन उक्तशाब्दसामग्र्या द्वैविध्यमेव नास्ति येन द्विविधं प्रतिबन्धकत्वं स्यादिति न गौरवमित्याशङ्क्य परिहरति – **न चे**ति। परिहारहेतुमाह – **संसर्गते**ति। **उक्तस्थले** = शक्तिभ्रमस्थले लक्षणाग्रहस्थलेऽपि च उपस्थितस्य अभेदस्य संसर्गतया एव भानं भवतीति स्वीकाराद् हेतुताद्वयस्य प्रतिबन्धकता–द्वयस्य च न कल्पनापत्तिरिति न गौरवम् । अयं भावः – यथा अननुभूतस्य स्मरणं न भवतीति नियमसत्त्वेऽपि अनुभूतस्य स्मरणं भवत्येवेति नियमो नास्ति तथा केनचित् पदेन वृत्त्या अनुपस्थितस्य प्रकारत्वं न भवतीति नियमसत्त्वेऽपि उपस्थितस्य प्रकारत्वं भवत्येवेति नियमो नास्ति। तथा च शक्तिभ्रमे लक्षणाग्रहे च विशेषणविभक्त्या वृत्त्या उपस्थितस्यापि अभेदस्य संसर्गत्वमेव स्वीक्रियते न प्रकारत्वं येन गौरवं स्यात्।

**VV-A 4.1.1:** 'नीलो घटः' इत्यादौ अभेदान्वयबोधौपयिकाकाङ्क्षा–स्वरूपम् उक्त्वा संप्रति 'स्तोकं पचति' इत्यादौ अभेदान्वयबोधौपयिकाकाङ्क्षां निर्वक्ति – **स्तोकमि**त्यादिना। यद्यपि 'नीलो घटः' इत्यादौ सुबन्तप्रयोगे तु विशेष्यविशेषण– वाचकपदयोः विरुद्धविभक्त्यन्तत्वे हि अभेदान्वयबोधो न भवति तथापि 'स्तोकं पचति' इत्यादौ तिङन्तप्रयोगे तु विशेष्यविशेषणवाचकपदयोः

विरुद्धविभक्त्यन्तत्वेऽपि अभेदान्वयबोधो भवतीति पचति–इति तिङ्विभक्त्यपेक्षया विरुद्धविभक्त्या द्वितीयया अवरुद्धेन स्तोकम् इति पदेन उपस्थापितस्यापि स्तोकपदार्थस्य धात्वर्थीभूतपाकादौ अभेदेन अन्वयो भवति – 'स्तोकाभिन्नः पाक' इति। अभेदसम्बन्धावच्छिन्न–स्तोकत्वावच्छिन्न–प्रकारतानिरूपित–पाकत्वावच्छिन्न–विशेष्यताकः शाब्दबोधः। तथा च यथा 'नीलो घटः' इत्यत्र अभेदान्वये प्रथमान्तघटपद–प्रथमान्तनीलपदयोः समभिव्याहारस्य आकाङ्क्षात्वं तथा 'स्तोकं पचति' इत्यत्र द्वितीयान्त–विशेषणवाचक–स्तोकादिपद–धातुपदयोः समभिव्याहारस्य आकाङ्क्षात्वं ज्ञेयम्। ननु क्रियाजन्यफलाश्रयत्वमेव कर्मत्वम्। एतादृशकर्म–वाचकपदादेव द्वितीया भवति। अत्र च स्तोकपदार्थस्य पाकक्रियाजन्यफलाश्रयत्वमेव नास्ति। धात्वर्थपाके अभेदेन अन्वयस्वीकारादिति स्तोकपदाद् द्वितीया कथमत्र प्राप्ता इत्याशङ्क्याह – **क्रियाविशेषणे**ति। **तत्र** = 'स्तोकं पचति' इत्यादिवाक्यघटकस्तोकपदस्यार्थे **कर्मत्वातिदेशात्** कर्मत्वोपचारात्। औपचारिकं यत् कर्मत्वं तदाश्रित्य द्वितीया जायते इत्यर्थः। नन्वेवं "स्तोकः पाकः" इत्यपि स्तोकपदात् द्वितीया स्यात्। स्तोकपदार्थस्य अत्रापि पाकेन धात्वर्थेन अभेदान्वयस्वीकारात्। ननु प्रत्ययार्थस्यात्र प्राधान्येन तत्रैव स्तोकपदार्थान्वयो भविष्यति न धात्वर्थे। क्रियाविशेषणवाचकपदाद् द्वितीया तु तत्र भवति यत्र क्रियाविशेषणस्य धात्वर्थेऽभेदान्वयः स्यादित्याशङ्क्याह – **भावे**ति। भाववाचक–कृदन्तप्रत्ययानां साधुत्वमात्रार्थकत्वेन **तत्र** = 'स्तोकः पाकः' इत्यादावपि धातुनैव पाकाद्यर्थः प्रतिपाद्यते न तु प्रत्ययेन येन प्रत्ययार्थपाकादौ विशेषणस्य अन्वयः स्यात्। अयं भावः – 'पाक' इत्यत्र धातुनापि पाकक्रियैव प्रतिपाद्यते। भावार्थकघञः अपि पाकक्रियैव प्रतिपादनीया। "उक्तार्थानामप्रयोगः" इति न्यायेन एकस्यैव पाकस्य द्विरभिधानं तु न संभवतीति। धातुनैव पाकः प्रतिपाद्यते प्रत्ययस्य साधुत्वार्थकत्वमेव स्वीक्रियते। न च विनिगमनाविरहात् प्रत्ययेनैव पाकः प्रतिपाद्यते न धातुनेति वाच्यम्। अनेकभावार्थकप्रत्ययानां प्रकृतिभूतधात्वर्थक्रियायां शक्तिकल्पने गौरवात्।

**VV-A 4.1.2:**

भावार्थप्रत्ययस्थलेऽपि धातोस्तु अगत्या क्रियायां शक्तिः स्वीकार्या एवेति धातोरेव पाकादिक्रियाबोधकत्वं युक्तं न प्रत्ययस्य इति 'स्तोकः पाकः' इत्यत्रापि स्तोकपदार्थस्य धात्वर्थे एव अभेदान्वयात् स्तोकपदाद् द्वितीया स्याद् एव इत्याशङ्क्याह – **न चैवमि**ति। परिहारहेतुमाह – **क्रियापदस्य** इति। **तत्र** = षक्रियाविशेषणानां क्लीबत्वं कर्मत्वं चष इत्यनुशासने क्रियापदस्य सार्थकप्रत्ययान्त–धातूपस्थाप्यक्रियापरत्वाद् अत्र च घञः साधुत्वमात्रार्थकत्वेन सार्थकत्वाभावात् तदन्तधातूपस्थाप्य–पाकक्रियायां स्तोक–

पदार्थस्य विशेषणत्वेऽपि न स्तोकपदाद् द्वितीया भवति। 'स्तोकं पचति' इत्यादौ तु तिप्प्रत्ययस्य सार्थकत्वेन तदन्त–धातूपस्थाप्यपाकक्रियायां स्तोकपदार्थस्य विशेषणत्वेन स्तोकपदाद् द्वितीया भवतीत्यर्थः। ननु यदि भावार्थकप्रत्ययानां न सार्थकत्वं तदा 'स्तोकं स्थीयते' इत्यत्र आख्यातप्रत्ययस्यापि भावार्थकत्वेन सार्थत्वं न स्यादिति स्तोकपदात् कथं द्वितीया प्राप्ता इत्याशङ्क्याह – **स्तोकमि**ति। 'स्तोकं स्थीयते' इत्यादावपि आख्यातप्रत्ययस्य वर्तमान–कालबोधकत्वेन सार्थकत्वमस्त्येव इति न द्वितीयाऽनुपपत्तिरित्यर्थः।

**VV-A 4.1.3:** ननु यत्र कालविवक्षा न भवति तत्रापि भावाख्यातप्रत्ययो भवतीति वर्तमानकालाविवक्षायां 'स्तोकं स्थीयते' इत्यादौ भावाख्यातस्य सार्थकत्वं न संभवतीति द्वितीयापि न स्यादित्याशङ्क्याह – **न चे**ति। परिहारहेतुमाह – **वर्तमानत्वादी**ति, तिङ्भावाख्यातप्रत्यये वर्तमानत्वबोधनस्य स्वरूपयोग्यता तु अस्त्येव। विवक्षायां सत्यां वर्तमानत्वविषयकबोधोदयादिति तादृशस्वरूपयोग्यताम् आदायैव सार्थकत्वोपपत्तेरित्यर्थः। **तत्** = वर्तमानत्वादि। एवं च 'अर्थबोधानुकूल–आकाङ्क्षापर्याप्त्यधिकरणीभूत–प्रत्ययप्रकृतिभूत–धातुवाच्यक्रियानिष्ठविशेष्यता–निरूपिताभेदसम्बन्धावच्छिन्न–कर्मत्वप्रयोजकपदाद् द्वितीया भवति इति नियमः प्राप्तः। तथा च 'स्तोकं पचति', 'स्तोकं स्थीयते' इत्यादौ तिप्प्रत्ययस्य सार्थकत्वेन अर्थबोधानुकूलाकाङ्क्षापर्याप्त्यधिकरणत्वात् तत्प्रकृतिभूतधातुवाच्य–पाकक्रियानिष्ठ–विशेष्यतानिरूपिताभेद–सम्बन्धावच्छिन्न–कर्मत्वस्य प्रयोजकं स्तोकपदमिति स्तोकपदाद् अत्र द्वितीया प्राप्ता। 'स्तोकः पाकः' इत्यत्र च घञ्–प्रत्ययस्य सार्थकत्वाभावात् न स्तोकपदाद् द्वितीया संभवति।

**VV-A 4.2.1:** भावार्थककृत्प्रत्ययानां यत्प्रयोगसाधुत्वमात्रार्थकत्वमुपगम्य अनर्थकत्वम् उक्तं, तत्र कस्यचित् मुखेन प्रत्यवतिष्ठते – **केचिद्** इत्यादिना **वदन्ति** (VV-4.4.2) इति पर्यन्तम् । यथा धातोः पाकादौ शक्तिः, तथा 'पाकः' इत्यत्र घञन्तस्यापि पाके शक्तिः स्वीकार्या एव। विपक्षे बाधकमाह – **अन्यथे**ति। यदि घञन्तपाकपदस्य पाके शक्तिः न स्यात् तदा **तत्र** – 'पाकः' इति घञन्तप्रयोगे पाकादौ सुब्विभक्त्यर्थभूतसंख्या–कर्मत्वादीनाम् अन्वयो न स्यात्। अत्र हेतुमाह – **प्रकृत्यर्थे**ति। प्रत्ययानां स्वप्रकृत्यर्थविशिष्टस्वार्थवोधकत्वम् अस्ति। 'प्रकृतिप्रत्ययौ सहार्थं ब्रूतः' इति यावद्। यथा 'घटं कुरु' इत्यत्र द्वितीयायाः स्वप्रकृत्यर्थघटविशिष्टकर्मत्वबोधकत्वम् अस्ति न तु घटानन्वित–

कर्मत्वबोधकत्वम् इत्यर्थः। तथा च यदि घञन्तपाकपदस्य पाके शक्तिः न स्यात् किं तु घञः साधुत्वमात्रार्थकत्वं स्यात्, केवलस्य धातोः एव पाके शक्तिः स्यात्, तदा सुब्विभक्त्यर्थसंख्या–कर्मत्वादीनां पाकेन अन्वयो न स्याद्। यतः प्रत्ययानां स्वप्रकृत्यर्थान्वितस्वार्थबोधकत्वनियमः अस्तीति सुप्–प्रत्ययेन अपि स्वप्रकृत्यर्था–न्वितानाम् एव स्वार्थभूतसंख्याकर्मत्वादीनां बोधनं कर्तव्यम्। प्रकृतित्वं च अव्यवधानेन पूर्ववर्तित्वम्। न च पचादिधातूनां सुब्विभक्तिप्रकृतित्वम् अस्ति घञादिना व्यवधानात्। यस्य च घञः सुब्विभक्तिप्रकृतित्वं तस्य अनर्थकत्वाश्रयणादित्यर्थः। ननु प्रत्ययानाम् अनुभवबलात् प्रकृतितदेकदेशार्थ–अन्यतरान्वितस्वार्थबोधकत्वं कल्पयामः। तथा च 'पाकः' इत्यत्र सुब्विभक्ति–प्रकृत्येकदेशार्थभूतेऽपि धात्वर्थे पाके संख्याकर्मत्वादीनाम् अन्वयो भविष्यति इत्याशङ्क्य आह – **प्रकृत्येकदेशार्थेऽपी**ति। एवं हि 'पचन्तं पश्यति' इत्यत्रापि विवक्षासत्त्वे प्रकृत्येकदेशार्थे पाके द्वितीयार्थकर्मत्वस्य अन्वयः स्यात् न तु प्रत्ययार्थे पाककर्तरि इति, पाककर्मकमेव दर्शनं स्यात् न तु पाककर्तृकर्मकम्। न च एतदिष्टमिति न प्रकृत्येकदेशार्थे प्रत्ययार्थान्वयो भवति। तथा च पाक इत्यत्रापि धात्वर्थपाके कर्मत्वाद्यन्वयः अनुपपन्न इति तदन्वयार्थे घञन्तस्य विशिष्टस्य पाके शक्तिः स्वीकार्या। तथा च 'पाकः' इत्यत्र घञन्तपाकपदस्य सुब्विभक्तिप्रकृतित्वेन तदर्थीभूतपाके सुब्विभक्त्यर्थसंख्याकर्मत्वादीनाम् अन्वये न कोऽपि विरोधः।

**VV-A 4.2.2:** ननु 'पचन्तं पश्यति' इत्यादौ शतृप्रत्ययार्थे कर्तरि पाकस्य विशेषणत्वेन अन्वयो जातः अस्ति। एकत्र विशेषणत्वेन उपस्थितस्य च अन्यत्र विशेषणत्वेन अन्वयो नैव भवतीति पाकस्य कथं सुब्विभक्त्यर्थ–कर्मत्वेऽन्वयः स्याद् इत्याशङ्कते – **एकत्रे**ति। **तत्र** = 'पचन्तं पश्यति' इत्यादिसार्थप्रत्ययान्तप्रयोगे। कर्मत्वस्य प्रत्ययार्थत्वेन प्राधान्यात् तत्र प्रकृत्यर्थपाकादीनाम् अन्वयस्य योग्यत्वात् तत्परिहारः कृत इति भावः। उक्तरीत्या पाकादौ कर्मत्वान्वयवारणे कृतेऽपि संख्याद्यन्वयापत्तिं प्रतिपादयति – **तथापी**ति। प्रकृत्येकदेशार्थे प्रत्ययार्थान्वयोपगमे एकदेशार्थे पाकादौ सुबर्थसंख्याया अन्वयो भविष्यत्येव। तथा च यत्र एक एव पाककर्त्ता पाकद्वयं करोति तत्र द्वित्वसंख्यायाः प्रकृत्येकदेशार्थे पाके अन्वयसंभवात् 'पचन्तौ पश्यति' इत्यादिप्रयोगः स्यादेव। न च एवं भवति। किं तु यत्र द्वौ पाककर्तारौ भवतः तत्रैव 'पचन्तौ पश्यति' इति प्रयोगो भवति। तस्मात् प्रकृत्येकदेशार्थे प्रत्ययार्थान्वयो न भवतीति घञन्तस्य विशिष्टस्य पाकादौ शक्तिः उपेया। तथा च घञन्तस्य विभक्तिप्रकृतित्वेन विशिष्टार्थभूते पाके सुब्विभक्त्यर्थ–

संख्याकर्मत्वादीनाम् अन्वयः संभवत्येव। ननु प्रत्ययार्थनिष्ठ–प्रकारता–निरूपित–धात्वर्थनिष्ठविशेष्यतासम्बन्धेन शाब्दबुद्धित्वावच्छिन्नं प्रति तत्तद्धातूत्तर–प्रत्ययधर्मिक–किंचिदर्थपरत्वज्ञानं प्रतिबन्धकम् इत्येवं प्रतिबध्यप्रतिबन्धकभावं कल्पयिष्यामः। तथा च 'पचन्तं पश्यति' 'पचन्तौ पश्यति' इत्यादौ पच्धातूत्तरवर्तमानस्य शतृप्रत्ययस्य कर्तरि शक्तत्वेन तदर्थकतया शतृप्रत्ययस्य कर्तृत्वरूपार्थपरत्वज्ञानम् एव प्रत्ययार्थसंख्यादीनां धात्वर्थपाकादौ विशेषणतया अन्वयबोधे प्रतिबन्धकं भविष्यतीति नात्र प्रकृत्येकदेशार्थपाकादौ प्रत्ययार्थ–संख्यादीनाम् अन्वयापत्तिर्दोषः। 'पाकः' इत्यादिभावार्थक–कृत्प्रत्ययस्थले तु भावार्थककृत्प्रत्ययानां साधुत्वमात्रार्थकत्वेन निरर्थकत्वाश्रयणात् किंचिदर्थपरत्व–ज्ञानमेव न जायते इति प्रतिबन्धकाभावात् प्रत्ययार्थसंख्याकर्मत्वादीनां धात्वर्थपाकादौ विशेषणतया अन्वयबोधे न काचिदनुपपत्तिः इति कृतं घञन्तस्य पाकादौ शक्तिस्वीकारेण इत्याशङ्क्याह – **धातूपरस्थाप्ये**ति। एवं नवीनप्रतिबध्य–प्रतिबन्धकभावकल्पनरूपमेव गौरवं भविष्यति। तस्माद् घञन्तस्य पाकादौ शक्तिः स्वीकार्या। प्रत्ययार्थानां प्रकृत्येकदेशार्थान्वयश्च न स्वीकार्य इत्यर्थः।

**VV-A 4.2.3:** यथा 'पाकः' इत्यत्र घञन्तस्य पाके शक्तिः स्वीकार्या तथा 'पचनम्' इत्यत्रापि ल्युडन्तस्य एव पाके शक्तिः स्वीकार्याए न तु धातुमात्रस्य इत्याह – **एवमि**ति। यदि ल्युडन्तस्य पाके शक्तिः न स्वीक्रियेत किं तु धातुमात्रेण पाकोपस्थितिः स्यात् तदा यथा 'पाकः' इत्यत्र धातुमात्रेण उपस्थितपाके संख्याकर्मत्वाद्यन्वयस्य अनुपपत्तिः अस्ति। तथा अत्रापि धातुमात्रोपस्थितपाके अभेदसम्बन्धेन शोभन–पदार्थान्वयो न स्याद् एव इत्यर्थः। उक्ते हेतुमाह – **विशेषणे**ति। विशेष्यविशेषणयोः अभेदसम्बन्धेन शाब्दबोधं प्रति सजातीयविभक्ति–प्रकृत्युपस्थाप्यत्वं हेतुः अस्ति। तथा च विशेष्यस्य च विशेषणविभक्ति–सजातीयविभक्ति–प्रकृत्युपस्थाप्यत्वम् अपेक्ष्यते। अत्र च पाकपदार्थस्य न विभक्तिप्रकृत्युपस्थाप्यत्वम्। 'पचनम्' इत्यत्र पचन–इति–ल्युडन्तस्य एव विभक्तिप्रकृतित्वेन पाकोपस्थापकस्य धातुमात्रस्य विभक्त्य–प्रकृतित्वात् ल्युटा व्यवधानात् विभक्त्यप्रकृतिभूत–पच्–धातुना पाकस्य उपस्थापितत्वाद् इत्यर्थः।

**VV-A 4.2.4:** ननु प्रत्ययविधौ उद्देश्यत्वं हि प्रकृतित्वम्। तच्च पचनम् इत्यत्र प्रत्ययभागे इव धातुभागेऽपि अस्ति एव इति प्रकृति–तदेकदेशसाधारणं यत् तादृश विशेषणविभक्तिसजातीयविभक्तिप्रकृतित्वं तदेव विशेष्यविशेषणयोः अभेदान्वय–प्रयोजकम्। तथा च अत्र धातुभागेऽपि उक्तप्रकृतित्वस्य सत्त्वेन

प्रकृतिभूतधातूपस्थाप्य पाके शोभनपदार्थाभेदान्वये न काचिदनुपपत्तिः इत्याशङ्क्याह – **प्रकृत्येके**ति। अत्र दोषमाह – **तत्रे**ति। **तत्र** = 'शोभनं पचनम्' इत्यत्र यदि अधिकरणार्थकं ल्युट् स्यात् तदापि **तथाविधान्वयः** = पाकेन शोभनपदार्थाभेदान्वयः स्यात् न त्वधिकरणेन इत्यर्थः। इष्टं च तदा अधिकरणेनैव शोभनपदार्थान्वय इति ल्युडन्तस्य एव पाके शक्तिः स्वीकार्या । तथा च अधिकरणार्थकल्युट्स्थले ल्युडन्तस्य अधिकरणे एव शक्ति–स्वीकाराद् अधिकरणेनैव शोभनपदार्थान्वयो भविष्यति न पाकादौ। नन्वत्रापि पूर्ववत् पदान्तरार्थनिष्ठप्रकारतानिरूपितधात्वर्थनिष्ठविशेष्यतासंबन्धेन शाब्दबुद्धित्वावच्छिन्नं प्रति तत्तद्धातूत्तरप्रत्ययधर्मिककिंचिदर्थपरत्वज्ञानस्य प्रतिबन्धकत्वं कल्पयिष्यामः। तथा च अधिकरण–ल्युट्स्थले ल्युटोऽधिकरणार्थपरत्वज्ञानं शोभनपदार्थस्य धात्वर्थपाकादौ अभेदान्वये प्रतिबन्धकं भविष्यति। भावार्थल्युट्–स्थले तु भावकृतां निरर्थकत्वाश्रयणेन धातूत्तरवर्तिल्युटः अर्थपरत्वज्ञानस्य प्रतिबन्धकस्य अभावात् शोभनपदार्थस्य धात्वर्थपाकेन अभेदान्वये न काचिदनुपपत्तिः इत्याशङ्क्याह – **कस्यचिदि**ति। एवं हि नवीनप्रतिबध्यप्रतिबन्धकभावकल्पनरूपमेव गौरवं प्राप्तम् इत्यर्थः। तथा च पचनमिति ल्युडन्तस्य एव पाके शक्तिः स्वीकार्या।

**VV-A 4.3.1:** ननु **एवम्** – प्रत्ययानां स्वप्रकृत्यर्थविशिष्टस्वार्थबोधकत्व–नियमे तथा स्वाव्यवहितपूर्ववर्त्तित्वमेव प्रकृतित्वमिति स्वीकारे च **'उपकुम्भम्' 'अर्धपिप्पली'** इत्यादि पूर्वपदार्थप्रधानसमासप्रयोगे पूर्वपदार्थेन समीपार्धादिना विभक्त्यर्थकर्मत्वादीनां तथा 'सुन्दरम् उपकुम्भम्' इत्यादौ पूर्वपदार्थेन प्रातिपदिकान्तरार्थस्य सुन्दरादेः अभेदसम्बन्धेन अन्वयो न स्यात् । अत्र हेतुमाह – **पूर्वपदस्ये**ति। **पूर्वपदस्य** = उपपदस्य अर्धपदस्य च समासोत्तर–विभक्तिप्रकृतित्वं नास्तिए कुम्भादिपदेन व्यवधानात्। प्रकृतित्वं च अव्यवहित–पूर्ववर्तिन एव। प्रत्ययेन च स्वार्थकर्मत्वादिनां स्वप्रकृत्यर्थेन एव वैशिष्ट्यं बोधनीयमिति पूर्वपदार्थे प्रत्ययार्थान्वयानुपपत्तिः। ''पदार्थः पदार्थेनान्वेति न तु पदार्थैकदेशेन'' इतिनियमेन च सुन्दरपदार्थस्य पूर्वपदार्थेऽपि अन्वयो न संभवतिए तस्य पदार्थैकदेशत्वादिति। 'उपकुम्भम्' इत्यादौ तु विशिष्टस्यैव समासस्य कुम्भसमीपादौ शक्तिः स्वीकार्या। तथा च कुम्भसमीपस्य पदार्थत्वेन तत्र अभेदेन पदार्थान्तरस्य सुन्दरपदार्थस्य अन्वये नानुपपत्तिः। तथा प्रत्ययार्थान्वयेऽपि नानुपपत्तिः। उपकुम्भपदस्य विशिष्टस्य विभक्तिप्रकृतित्वाद् विशिष्टस्यैव कुम्भसमीपार्थ–उपस्थापकत्वाद् इत्याशङ्क्याह – **न चैवमि**ति। परिहारहेतुमाह – **तदनुरोधेने**ति। उक्तदोष–प्राप्त्यनुरोधेनैव **तत्र** = 'उपकुम्भम्' इत्यादौ कुम्भपदस्य कुम्भसमीपे लक्षणा। उपेतिपूर्वपदं तात्पर्यग्राहकमिति

स्वीक्रियते। तथा चात्र कुम्भपदस्य विभक्ति–प्रकृतित्वम् अस्त्येव अव्यवधानेन पूर्ववर्तित्वात् कुम्भसमीपोऽपि तदर्थ एवेति तत्र प्रत्ययार्थान्वये न काप्यनुपपत्तिरिति कृतं **समासे** = समस्तस्य बिशिष्टस्य शक्तिस्वीकारेण इत्यर्थः। एवम् 'अर्धपिप्पली' इत्यत्रापि। इदानीं कुम्भसमीपार्थस्य पदार्थत्वमेव न तु पदार्थैकदेशत्वमिति। तत्र सुन्दरादिपदार्थान्तरान्वयेऽपि अनुपपत्तिः नास्ति इत्यर्थः।

**VV-A 4.3.2-3:** शाब्दबोधौपयिकाकाङ्क्षासत्त्वे शाब्दबोधानुपपत्तिः न भवतीति 'उपकुम्भम्' इत्यादौ प्रत्ययार्थस्य पदार्थान्तरस्य चान्वयबोध–औपयिकाकाङ्क्षास्वरूपमाह – **वस्तुतस्तु** इत्यादिना। उत्तरपदार्थेन कुम्भादिना विशिष्टो यः पूर्वपदार्थः समीपादिः तत्र प्रत्ययार्थान्वयबोधे **तादृश** = 'उपकुम्भम्' इत्यादि–समस्तपद–प्रत्ययपदयोश्च यः पूर्वापरीभावः स एवाकाङ्क्षा। तस्य चात्र सत्त्वेन पूर्वपदार्थे प्रत्ययार्थान्वये न काप्यनुपपत्तिः। तथा चात्र 'प्रत्ययार्थनिष्ठप्रकारतानिरूपित–पूर्वपदार्थनिष्ठविशेष्यतासम्बन्धेन शाब्दबुद्धित्वावच्छिन्नं प्रति विभक्त्यव्यवहित–पूर्ववर्ति–कुम्भपदाव्यवहितपूर्ववर्ति–उपपदज्ञानं कारणम् (आकाङ्क्षा)' इति वक्तव्यम्। पदार्थान्तरान्वयप्रकारमाह – **एवमिति**। **तत्र** = पूर्वपदार्थे। अत्र च 'अभेदसम्बन्धावच्छिन्न–सुन्दरत्वाद्यवच्छिन्न–प्रकारतानिरूपित–समस्त–उपकुम्भादि–पदार्थनिष्ठविशेष्यतासम्बन्धेन शाब्द–बुद्धित्वावच्छिन्नं प्रति समानविभक्तिकयोः सुन्दरादिपद–उपकुम्भादिपदयोः समभिव्याहार आकाङ्क्षा' इत्येवम् आकाङ्क्षास्वरूपं वक्तव्यम्। **समान-विभक्तिकयोः तादृशसमस्तपद-पदान्तरयोः** = 'सुन्दरम् उपकुम्भम्' इत्यनयोः। **तथा सति** = उक्तस्वरूपाकाङ्क्षयोः नियामकत्वस्वीकारे सति। **अतिप्रसङ्गस्य** = पूर्वपदार्थे प्रत्ययार्थान्वयस्य पदान्तरार्थान्वयस्य अनुपपत्तेः अभावात्। किं वा अतिप्रसङ्गस्य नाम विशिष्टे समासे शक्तिस्वीकाररूप–अतिप्रसङ्गस्य अभावाद् इत्यर्थः।

ननु यथा त्वया 'उपकुम्भम्' इत्यादौ विशिष्टे समासे शक्तिम् अस्वीकृत्य उक्त–आकाङ्क्षास्वरूपं च परिकल्प्य तेन पूर्वपदार्थे प्रत्ययार्थस्य पदान्तरार्थस्य चान्वय उपपादितः। तथा 'पाकः' इत्यादावपि भावार्थकृदन्तस्थले विशिष्टे घञन्ते शक्तिः न स्वीकार्या, किं तु घञो निरर्थकत्वमाश्रित्य धातोरेव पाकादौ शक्तिः स्वीकार्या। तत्र च धात्वर्थपाकादौ प्रत्ययार्थान्वयबोधे ल्युट्–घञाद्यन्तसमुदायस्य 'पाकः, पचनम्' इत्यस्य प्रत्ययस्य च विभक्तेः यः पूर्वापरीभावः स एव आकाङ्क्षा। पदार्थान्तरान्वयबोधे च **समानविभक्तिकयोः तादृशसमुदायपद-**

**पदान्तरयोः** = 'शोभनः पाकः', 'शोभनं पचनम्' इत्याद्योः समभिव्याहर एव आकाङ्क्षा। उक्तप्रयोगेषु च एतादृशाकाङ्क्षयोः सत्त्वेन धात्वर्थपाकादौ प्रत्ययार्थान्वयस्य पदार्थान्तरान्वयस्य च न कापि अनुपपत्तिरिति कृतं घञाद्यन्तस्य पाकादौ शक्तिस्वीकारेण। तथा च – 'प्रत्ययार्थनिष्ठप्रकारता–निरूपितधात्वर्थ–पाकादिनिष्ठविशेष्यतासम्बन्धेन शाब्दबुद्धित्वावच्छिन्नं प्रति ल्युड्–घञाद्यन्त–समुदायस्य विभक्त्यव्यवहितपूर्ववर्तित्वज्ञानम् आकाङ्क्षारूपं कारणम्'। 'अभेदसम्बन्धावच्छिन्न–पदार्थान्तरत्व(सुन्दरत्व)–अवच्छिन्नप्रकारता–निरूपित–धात्वर्थपाकादिनिष्ठविशेष्यतासम्बन्धेन शाब्दबुद्धित्वावच्छिन्नं प्रति ल्युड्–घञाद्यन्त–समुदायस्य पाक इत्यादेः विशेषणवाचकसुन्दरादिपदस्य च समानविभक्तिकत्वज्ञानम् आकाङ्क्षास्वरूपं कारणम्' इति वक्तव्यम् इत्याशङ्क्याह – **धात्वर्थे**ति। उक्ते दोषमाह – **दर्शिते**ति, उक्तस्य पूर्वापरीभावस्य समभिव्याहारस्य च धात्वर्थपाकादौ प्रत्ययार्थान्वयबोधे पदार्थान्तरान्वयबोधे च आकाङ्क्षात्वोपगमे हि यत्र अधिकरणार्थको ल्युट् भवेत् तत्रापि उक्त–आकाङ्क्षास्वरूपसत्त्वेन प्रत्ययार्थस्य पदार्थान्तरस्य च धात्वर्थपाकादौ एव अन्वयापत्तिः स्यात्, न तु प्रत्ययार्थे पाकाधिकरणे। इष्टश्च तत्र पाकाधिकरणे एवान्वय इति **न तत्संभवः**। 'पाकः' इत्यादौ उक्तस्य पूर्वापरीभावस्य समभिव्याहारस्य च आकाङ्क्षात्वसंभवः। तथा च 'पाकः' इत्यादौ तु घञाद्यन्तस्यैव। पाकादौ शक्तिस्वीकारेण अधिकरणार्थकल्युट्स्थले पाकाधिकरणे प्रत्ययार्थादीनाम् अन्वये न कापि अनुपपत्तिः। 'उपकुम्भम्' इत्यत्र च कुम्भपदस्य एव कुम्भसमीपे लक्षणास्वीकारेण तत्र प्रत्ययार्थादीनाम् अन्वये न कापि अनुपपत्तिः इत्यर्थः।

**VV-A 4.4.1:**
**दीधितिग्रन्थ**विरोधं प्रदर्शयति – **अथे**ति। **दीधितिकारे**ण हि घञन्तस्य 'पाकः' इत्यादौ घञन्तस्य एव पाकादौ शक्तिस्वीकारे संयोगपदस्य विभागपदस्य च संयोगत्वविभागत्वविशिष्टवाचकत्वं नास्तीति व्युत्पाद्य संयोगविभागादिपदानां नैमित्तिकसंज्ञात्वं निराकृतम्। डित्थ–डबित्थाद्या संज्ञा यदृच्छासंज्ञा, घटपटाद्या संज्ञा नैमित्तिकसंज्ञा अस्ति, घटत्वपटत्वादिकं प्रवृत्तिनिमित्तं कृत्वा प्रवृत्तत्वात्। एवं यदि घञन्तसंयोगविभागादिपदानाम् अपि संयोगत्व–विभागत्वाद्यवच्छिन्ने शक्तिः स्यात् तदा संयोगत्वविभागत्वादिकं प्रवृत्तिनिमित्तं कृत्वा प्रवृत्तत्वाद् नैमित्तिकसंज्ञात्वं स्यात्। न च संयोगविभागादिपदानां संयोगविभागत्वाद्यवच्छिन्ने शक्तिः अस्ति। अन्यथा 'संयुनक्ति, संयुज्यते, विभजते' इत्यादौ संयोगविभागपदयोः अभावेन संयोगविभागरूपार्थयोः उपस्थितिः न स्यात्। भवति च अत्रापि संयोगविभाग–

रूपार्थोपस्थितिः इति 'संयुनक्ति संयोगः, विभजते विभागः' इत्यादौ सर्वत्रानुगतस्य धातोः एव लाघवात् संयोगविभागादौ शक्तिः स्वीकार्या। न घञन्तसंयोगविभाग–पदयोः इति घञः साधुत्वमात्रार्थकत्वेन निरर्थकत्वम् एवेति **दीधितिकार**स्य एतद्ग्रन्थस्य च अभिप्रायः। तथा च घञन्तस्य पाकादौ शक्तिस्वीकारे उक्ताभिप्रायक**दीधिति**ग्रन्थस्य विरोधः स्यात्। संयोगादिपदानां पाकादिपदतुल्यत्वात् इत्यर्थः। उक्तविरोधे स्वक्षत्यभावम् आह – **के**ति। हेतुम् आह – **न हीति**। **युक्तिबलात्** इति पदस्य **वस्तुसिद्धौ** इति पदेन अन्वयः। मया हि युक्तिबलेन घञन्तसमुदायस्य एव पाकादौ शक्तिः स्वीकार्या इति साधितम् इति। तत्र **दीधितिकार**स्य संयोगादिपदानां नैमित्तिकसंज्ञात्वनिराकरणं बाधकं भवितुं न अर्हति इत्यर्थः। एवं संयोगादिपदेषु अपि घञन्तस्य एव संयोगाद्यर्थे शक्तिः स्वीकार्या। धातोः एव पाकादौ शक्तिः न घञाद्यन्तस्य इति स्वीकारे हि अधिकरणल्युट्–स्थले विशेषणीभूत–शोभनादिपदार्थस्य पाके एव अन्वयः स्यात् न अधिकरणे इति दोषः पूर्वम् उक्तः स्मरणीयः।

**VV-A 4.4.2:** ननु यदि घञन्तसमुदायस्य एव पाकादौ शक्तिः तदा विशेषणवाचक–स्तोकादिपदात् विशेष्यवाचकपदोत्तरविभक्ति–सजातीयविभक्ति–प्राप्तिप्रसङ्गेन द्वितीयानुपपत्त्या 'स्तोकं पाकः' इति नैव स्याद्। भवति च इति आशङ्क्य क्व द्वितीया भवति क्व च न भवति इति निर्वक्ति – **एवं चे**ति। 'स्तोकं पाकः' इत्यत्र धातोः एव पाके **तात्पर्यम्** = पाकोपस्थापकत्वम् इति। **तद्विशेषण- वाचकपदात्** = धात्वर्थविशेषणवाचक–स्तोकपदाद् द्वितीया प्राप्ता इत्यर्थः। यत्र च कृदन्त–समुदायस्य पाक इत्यादिपदस्य पाकोपस्थापकत्वं तत्र **तादृशपदम्** = विशेषणवाचक–स्तोकादिपदं **तथाविध** = पाकाद्यर्थोपस्थापको यः कृदन्तसमुदायः 'पाकः' इति तत्समानविभक्तिकं भवति यथा – 'स्तोकः पाकः' इति। तदा आह – **यत्र तु** इति। अत्र प्रमाणम् आह – **तदुक्तमि**ति। स्तोकपदस्य कृदन्तपाकपदविशेषणत्वात् 'स्तोकः' इति प्रथमान्तप्रयोगो जात इत्यर्थः। **धात्वर्थैकाधिकरण्ये** = धात्वर्थसामानाधिकरण्ये = धात्वर्थीभूत–पाकादिविशेषणत्वे तु (धातुमात्रेण पाकोपस्थितौ तु) द्वितीयापत्त्या 'स्तोकः पाकः' इत्यपि भवति एव इति आह – **धात्वर्थैके**ति।

**VV-A 4.5.1:** **केचित्तु** (VV- 4.2.1) इत्यारभ्य **इति वदन्ति** (VV-4.4.2) इतिपर्यन्तं परमतं प्रदर्श्य यत् विशेषणविभक्तेः साधुत्वमात्रार्थकत्व–(VV-2.7.1)उक्त्या विशेषणवाचकपदोत्तरविभक्त्यर्थसंख्यायाः शाब्दबोधे भानं न

भवतीति व्यञ्जितं तस्य वचनमात्रेण सिद्धि–असंभवात् कार्यकारणभावमाह – **तदर्थके**त्यादिना। यथा – 'घटोऽस्ति' इयत्र **तदर्थकं** = घटार्थकं पदं 'घटः' इति पदंए तज्जन्यशाब्दबोधे घटे या विषयता भासते सा अभेद–सम्बन्धावच्छिन्न–प्रकारताभिन्नैव भासते। नीलादिवद् घटस्य क्वचिदपि अभेदसम्बन्धेन प्रकारत्वाभावादिति घटपदोत्तरविभक्त्यर्थसंख्यायाः शाब्दबोधे भानं भवति – 'एको घटः', 'द्वौ घटौ' इत्यादि । 'नीलो घटः' इत्यत्र च नीले प्रकारता वर्तते। सापि अभेदसम्बन्धावच्छिन्ना एव। नीलस्य अभेदसम्बन्धेन घटे प्रकारत्वादिति। 'नीलो घटः' इति वाक्यजन्यशाब्दबोधे भासमाना नीलविषयता ह्यऽभेदसम्बन्धावच्छिन्नप्रकारताभिन्ना नास्तीति नीलपदोत्तरविभक्त्यर्थसंख्यायाः शाब्दबोधे भानं न भवतीत्यर्थः। तथा च – 'किंचिदर्थनिष्ठविशेष्यता–निरूपिताभेदसम्बन्धावच्छिन्न–प्रकारताश्रयत्वज्ञानं तद्वाचकपदोत्तर–विभक्त्यर्थ–संख्याबोधे प्रतिबन्धकम्' इति वक्तव्यम्। बोधस्वरूपमाह – **तादृश**चेति। **तादृशः** = विभक्त्यर्थसंख्यावगाहन– शीलः। **तदर्थविशेष्यकः** = संख्याबोधक–विभक्तिप्रकृत्यर्थविशेष्यको भवति यथा – 'घटः' इत्यत्र, 'नीलो घटः' इत्यत्र च घटपदजन्यो घटविशेष्यकः। द्वितीयं बोधस्वरूपमाह – **तदर्थनिरूपिते**ति, संख्याबोधकविभक्तिप्रकृत्यर्थनिरूपितो यो भेदः तदन्वयविषयक इत्यर्थः। यथा 'राज्ञः पुरुषः' इत्यत्र यद्यपि पुरुषनिष्ठ–विशेष्यतानिरूपिता प्रकारता एव राज्ञि वर्तते तथापि राजनिष्ठा सा प्रकारता अभेदसम्बन्धावच्छिन्ना नास्ति। भेदसम्बन्धेन एव राज्ञः पुरुषविशेषणत्वादिति राजपदोत्तर–ङस्–विभक्त्यर्थ–एकत्वसंख्यायाः शाब्दबोधे भानं भवत्येव। यथा – 'एकराजनिरूपितस्वत्ववान् पुरुषः' इति । तथा च 'राज्ञः पुरुषः' इति वाक्यजन्यबोधो भेदसम्बन्धविषयक एव राज–पुरुषयोः अभेदभान–अभावात्। प्रत्युदाहरणम् आह – 'नीलौ घटौ' इति। अत्र नीलनिष्ठ–प्रकारताया अभेदसम्बन्धावच्छिन्नत्वात् नीलपदोत्तरविभक्त्या द्वित्वं न प्रत्याय्यते किं तु घटपदोत्तरविभक्त्या एव।

**VV-A 4.5.2:** **एवं चेति** = संख्याबोधने हि अभेदसम्बन्धावच्छिन्न–प्रकारताभिन्नविषयताज्ञानस्य कारणत्वस्वीकारे क्रियाविशेषणानां च स्तोकादीनां क्रियायाम् अभेदसम्बन्धेन एव प्रकारत्वोपगमेन तन्निष्ठप्रकारताया अभेदसम्बन्धा–वच्छिन्नत्वात् क्रियाविशेषणवाचक–स्तोकादिपदोत्तरविभक्त्यर्थसंख्यायाः शाब्दबोधे भानं नैव भवतीति **तादृशपदोत्तरम्** = क्रियाविशेषणवाचक–स्तोकादिपदोत्तरं साधुत्वार्थम् औत्सर्गिकम् एकवचनमेव। 'स्तोकं स्थीयते' इति भावाख्यातस्थलवत् 'स्तोकं पाकः'ए 'स्तोकं पचति' इत्येवं प्रयोक्तव्यम् इत्यर्थः। **अबाधितयोरि**ति – यत्र एक एव कर्त्ता पाकद्वयं पाकत्रयं वा करोति तत्र पाके यद्यपि

द्वित्व–बहुत्वयोः बाधो न भवति तथापि पाकादिक्रियाविशेषणवाचक–स्तोकादि–पदोत्तरद्विवचनादिविभक्त्या केनापि प्रकारेण पाकादिक्रियागत–द्वित्व–बहुत्वयोः प्रत्यायनं न संभवतिए अनुभवविरोधादय इति क्रियाविशेषणवाचकपदोत्तरम् एकवचनमेव साधुत्वार्थं प्रयुज्यते।

**VV-A 5.1.1:** ननु यदि अभेदसम्बन्धेन अन्वये समानविभक्तिकत्वम् एव प्रयोजकं तदा यथा 'नीलो घटः' इति प्रयोगो भवतिए नीलघटयोः च अभेदसम्बन्धेन अन्वयो भवतिए तथा 'घटो घटः' इत्यपि प्रयोगः स्याद्। घटस्य स्वात्मनि अभेदसम्बन्धेन अन्वयः अपि स्यात्। तत्र घटस्य स्वात्मना भेदाभावाद् योग्यतापि अस्त्येव इत्याशङ्क्याह – **अभेदान्वये**ति। **विरूपोपस्थितयोः** = विरुद्धधर्माभ्याम् उपस्थितयोः एव अभेदान्ययो भवतिए यथा – 'नीलो घटः' इत्यत्र नीलत्व–घटत्वाभ्यां विरुद्धधर्माभ्याम् उपस्थितयोः नीलघटयोः। **तत्तद्रूपावच्छिन्नस्य** = घटत्वाद्यवच्छिन्नस्य। **तथाविधान्वयः** = अभेदान्वयः। तथा च – घटत्वावच्छिन्ने घटत्वावच्छिन्नस्य अभेदसम्बन्धेन शाब्दबोधो न भवति इति लब्धम्। एवं दण्डवत्त्वावच्छिन्ने दण्डवत्त्वावच्छिन्नस्य पाकत्वावच्छिन्ने पाकत्वावच्छिन्नस्य च अभेदान्वयबोधाभावो विज्ञेयः। 'पाकं पचति' इत्यत्र पाकपदेन अपि पाकस्य पाकत्वेन एव रूपेण उपस्थितिः भवतिए पचतिपदेन अपि कर्तृविशेषणतया पाकस्य च उपस्थितिः भवति। सा पाकत्वेन एव रूपेण भवति। पाकत्वेन उपस्थितेः च पाकत्वेन उपस्थितस्य अभेदान्वयबोधासंभवात् 'पाकं पचति' इति प्रयोगोऽपि न भवति।

**VV-A 5.1.2:** ननु अभेदान्वयप्रयोजकस्य समानविभक्तिकत्वादेः सत्त्वात् कथं न अभेदान्वयबोधः ? कारणसामग्रीसत्त्वे कार्यावश्यंभावात् इत्याशङ्कते – **अथे**ति। **तत्प्रयोजकः** = अभेदान्वयप्रयोजकः। **तादृशबोधः** = अभेदान्वयबोधः। उत्तरम् आह – **यादृशमि**ति। यथा तन्तुभ्यः पटस्य उत्पत्तिरूपफलं संभवतीति तन्त्वादिपटोत्पादक–सामग्रीबलात् पटरूपं फलं संभवति। यादृशं च शशविषाणादिकं क्वचिदपि न प्रसिद्धं तदापादकस्यापि अप्रसिद्धेःय तस्य शशविषाणादेः आपत्तिः अशक्या। तथा च अभेदसम्बन्धावच्छिन्न–घटत्वावच्छिन्न–प्रकारतानिरूपित–घटत्वावच्छिन्न–विशेष्यताकः शाब्दबोधः कदापि क्वचिदपि न दृष्ट इतिए तदापत्तिः अपि कथं स्यात् इत्यर्थः। अत्र आपत्तिः नाम तदभावप्रयोजकीभूत–अभावप्रतियोगिविषया जिज्ञासा। यथा दण्डाभावे घटाभावो भवतीति घटाभावप्रयोजकीभूतो यो दण्डाभावः तत्प्रतियोगिनो दण्डस्य जिज्ञासा आपत्तिः। एवमत्र घटत्वावच्छिन्न–प्रकारताक–घटत्वावच्छिन्नविशेष्यताक–

शाब्दबोधस्य असंभवाद् यः अभाव उक्तः तत्प्रयोजकीभूताभावस्य यः प्रतियोगी तद्विषया या जिज्ञासा सा एव आपत्तिपदार्थः। 'किमभावप्रयुक्तः उक्तशाब्दबोधाभावः' ? इति पूर्वपक्षिजिज्ञासा। सा च जिज्ञासा न संभवति। उक्तशाब्दबोधस्य सर्वथा अप्रसिद्धत्वेन तत्कारणस्य अपि अप्रसिद्धत्वात्। सद्विषयाया एव जिज्ञासायाः संभवात् इत्यर्थः।

**VV-A 5.1.3:** ननु 'घटो नीलघटः', 'दण्डवान् रक्तदण्डवान्' इत्यादौ घटे नीलघट–अभेदान्वयावगाहनेन दण्डवति रक्तदण्डवदभेदान्वयावगाहनेन नवीनैः विधेयकोटौ = विशेषणकोटौ अधिकावगाहिनः शाब्दबोधस्य स्वीकाराद्। यथा – 'घटो नीलघटः' इत्यत्र अभेदसम्बन्धावच्छिन्न–नीलत्वावच्छिन्न–घटत्वावच्छिन्न–प्रकारता–निरूपित–घटत्वावच्छिन्नविशेष्यताकः शाब्दबोधो भवति। तत्र प्रकारतावच्छेदकं विशेष्यतावच्छेदकं च एकं घटत्वम् एव। तथा 'घटो घटः' इत्यत्रापि घटत्वमेव प्रकारतावच्छेदकं विशेष्यतावच्छेदकं चेति 'घटो घटः' इत्यनेन अपि अभेदसम्बन्धावच्छिन्न–घटत्वावच्छिन्न–प्रकारतानिरूपित–घटत्वावच्छिन्न–विशेष्यताकः शाब्दबोधः कथं न भवति ? यथा च **'दण्डवान् रक्तदण्डवान्'** इत्यत्र अभेदसम्बन्धावच्छिन्न–रक्तत्वावच्छिन्न–दण्डवत्त्वावच्छिन्न–प्रकारतानिरूपित–दण्डवत्त्वावच्छिन्न–विशेष्यताकः शाब्दबोधो भवति। प्रकारता–वच्छेदकं विशेष्यतावच्छेदकं च एकं दण्डवत्त्वम् एव इत्यादौ **तादृशशाब्दबोधस्य** = एकधर्मप्रकारताक–विशेष्यताक–शाब्दबोधस्य (एकधर्मेण उपस्थितयोः अपि अभेदान्वयबोधस्य) प्रसिद्धिः अस्ति एव।

**VV-A 5.1.4:** तथा 'दण्डवान् दण्डवान्' इत्यत्र अपि दण्डवत्त्वम् एव प्रकारतावच्छेदकं विशेष्यतावच्छेदकं च इति 'दण्डवान् दण्डवान्' इत्यनेन अभेद–सम्बन्धावच्छिन्न–दण्डवत्त्वावच्छिन्न–प्रकारतानिरूपितदण्डवत्त्वावच्छिन्न–विशेष्यताकः शाब्दबोधः कथं न भवति इति आशङ्कते – **अथे**ति । उत्तरम् आह – **तर्हि** इति। 'घटो नीलघटः' इत्यत्र न घटे शुद्धघटस्य अभेदान्वयः किं तु नीलघटस्य एव। तथा च घटे विशेषणीभूतो यो घटः तत्र विशेषणीभूतो नीलपदार्थ इति विशेषणतावच्छेदकत्वेन नीलभानं भवति। नीलपदार्थभानस्य नियामकं च नीलपदजन्यनीलोपस्थितिः नीलविषयक–तात्पर्यज्ञानं च। एतादृश–नीलभाननियामकसामग्री सत्त्वे एव घटत्वावच्छिन्ने नीलघटत्वावच्छिन्नस्य अभेदसम्बन्धेन अन्वयो भवति। तस्य मूलं च नीलपदसमभिव्याहार एव। 'घटो घटः' इत्यत्र च नीलपदाभावेन नीलभाननियामक–सामग्री–अभावात् **तादृश** =

अभेदान्वयबोधो न भवति। एवमेव 'दण्डवान् दण्डवान्' इत्यत्रापि रक्तपदाभावेन रक्तभाननियामकसामग्री–अभावाद् अभेदान्वयबोधो न भवतीत्यर्थः।

ननु यदि नीलपदसत्त्वे एव अभेदान्वयबोधो भवति तदा 'घटो रक्तघटः', 'घटः पीतघटः' इत्यादौ अपि अभेदान्वयबोधो न स्यात्ए नीलपदाभावादिति चेत्? तर्हि घटत्वेतरधर्मोपस्थापकसामग्रीसत्त्वे अभेदान्वयो भवति। घटत्वेतर–धर्मोपस्थापक–सामग्र्यभावे च अभेदान्वयबोधो न भवति। तथा च 'घटो नीलघटः' 'घटो रक्तघटः' घटः पीतघटः' इत्यादौ घटत्वेतरस्य नीलत्व–रक्तत्व–पीतत्वादिधर्मस्य उपस्थापकसामग्री नीलादिपदे सत्त्वाद् अभेदान्वयबोधो भवति। 'घटो घटः' इत्यत्र च घटेतर–नीलादिपदाभावेन घटत्वेतर–धर्मोपस्थापकसामग्री–अभावाद् अभेदान्वयबोधो न भवति इत्यवधेयम्।

**VV-A 5.2.1:(A)** उक्तरीत्या 'घटो घटः' इत्यत्र अभेदान्वय–शाब्दबोधापत्तिवारणे कृतेऽपि पूर्वपक्षी 'द्रव्यं घटः' इत्यस्य दृष्टान्तेन 'घटो घटः' इत्यत्र अभेदान्वयबोधापत्तिं प्रदर्शयति **अथे**ति। कार्यतावच्छेदककोटौ धर्मितावच्छेदक–अनिवेशप्रयुक्तलाघवेन विषयनिष्ठप्रत्यासत्त्या शाब्दबोध–तत्कारणयोः कार्यकारण–भावम् आह – **धर्मिते**ति। अयं भावः – शाब्दबोध–तत्कारणयोः द्विधा कार्यकारणभावोऽस्ति – आत्मनिष्ठप्रत्यासत्त्या विषयनिष्ठप्रत्यासत्त्या च। तत्र आत्मनिष्ठप्रत्यासत्त्या नाम शाब्दबोधस्य तत्कारणीभूत–उपस्थितियोग्यताज्ञान–तात्पर्यज्ञानानां च ज्ञानरूपत्वेन समवायसम्बन्धेन आत्मनि स्थितिः भवतीति शाब्दबोधादिप्रतियोगिकेन आत्मनिष्ठेन समवायेन कार्यकारणभावः। प्रत्यासत्तिः = सम्बन्धः। तथा च समवायसम्बन्धेन शाब्दबोधकारणानि आत्मनि भवति इति समवायसम्बन्धेन शाब्दबोधरूपकार्यमपि आत्मनि एव उत्पद्यते। तथा च – समवायसम्बन्धेन शाब्दबुद्धित्वावच्छिन्नं प्रति समवायसम्बन्धेन उपस्थित्यादिकं कारणम् इति वक्तव्यम्। अत्र च समवायेन पटविषयकोपस्थितिसत्त्वेऽपि समवायेन आत्मनि घटत्वावच्छिन्नविषयकशाब्दबोधापत्तिः स्यात्। तद्वारणाय विषयप्रवेशः कर्तव्यः। समवायसम्बन्धेन घटत्वावच्छिन्नविषयक–शाब्दबुद्धित्वा–वच्छिन्नं प्रति समवायसम्बन्धेन घटत्वावच्छिन्नविषयकोपस्थितिः कारणम् इति। अत्र अनन्तधर्मितावच्छेदकानां वा अनन्तविषयाणां वा प्रवेशाद् गौरवम्।

यथा समवायसम्बन्धेन ज्ञानम् आत्मनि तिष्ठति तथा विषयतासम्बन्धेन ज्ञानं विषयेऽपि तिष्ठति इति ज्ञानस्वरूपाणां शाब्दबोधतत्कारणानां विषयतासम्बन्धेन विषयेऽपि संभवाद् विषयनिष्ठप्रत्यासत्त्या = विषयनिष्ठा या

विषयता तल्लक्षण–प्रत्यासत्त्या = सम्बन्धेन शाब्दबोध–तत्कारणयोः कार्य–कारणभावः। एषा च विषयता विविधस्वरूपा भवति। यथा 'नीलो घटः' इत्यत्र घटनिष्ठा विषयता विशेष्यतारूपा धर्मितारूपा वा, घटनिष्ठा च धर्मितावच्छेदकतारूपा, घटघटत्त्वयोः समवायनिष्ठा धर्मितावच्छेदकतावच्छेदक–सम्बन्धरूपा, नीलनिष्ठा प्रकारतारूपा, नीलत्वनिष्ठा प्रकारतावच्छेदकतारूपा, नील–नीलत्वयोः समवायनिष्ठा प्रकारतावच्छेदकतावच्छेदक–सम्बन्धरूपा किं वा प्रकारतावच्छेदकतावच्छेदकतारूपा। समवायसम्बन्धस्य एव अत्र प्रकारतावच्छेदकतावच्छेदकत्वात्, नीलघट–उभयनिष्ठा च अभेदसंसर्गरूपा इति। तत्र 'नीलो घटः' इति शाब्दबोधो धर्मितारूपविषयतासम्बन्धेन घटे जायते, धर्मितावच्छेदकतारूपविषयतासम्बन्धेन घटत्वे जायते, धर्मितावच्छेदकता–वच्छेदकतारूपविषयताक–सम्बन्धेन घट–घटत्वयोः समवाये जायते। प्रकारताख्य–विषयता–सम्बन्धेन नीले जायते, प्रकारतावच्छेदकतारूपविषयता–सम्बन्धेन नीलत्वे जायते, प्रकारतावच्छेदकतावच्छेदकतारूप–विषयतया नील–नीलत्वयोः समवाये जायते। अभेदसंसर्गाख्यविषयतासम्बन्धेन च नीलस्य घटस्य च अभेदसंसर्गे जायते, घट–घटत्व–तत्समवाय–नील–नीलत्व–तत्समवाय–घट–नीलाभेद–संसर्गाणाम् एषां सर्वेषामेव 'नीलो घटः' इति शाब्दबोधविषयत्वात् इति अवधेयम्। एवम् अन्यत्रापि कार्यकारणभावो विज्ञेयः। तथा च विषयतासम्बन्धेन शाब्दबुद्धित्वावच्छिन्नं प्रति विषयतासम्बन्धेन उपस्थित्यादिकं कारणम् इति वक्तव्यम्। अत्र च समवायेन देवदत्तात्मनि उपस्थित्यादिसत्त्वे यज्ञदत्तस्य अपि शाब्दबोधः स्यात् इति तद्वारणाय तत्पुरुषीयत्वनिवेशः कर्तव्यः। यज्ञदत्तीयघटत्वावच्छिन्नविषयक–शाब्दबुद्धित्वावच्छिन्नं प्रति यज्ञदत्तीय–घटत्वावच्छिन्न–विषयकोपस्थित्यादिकं कारणम् इति।

**VV-A 5.2.1(a):** आत्मनिष्ठप्रत्यासत्त्या कार्यकारणभावे हि तत्पुरुषीयत्व–प्रवेशस्य अपेक्षा नास्ति। कार्यकारणयोः सामानाधिकरण्यनियमस्य सर्वप्रसिद्धत्वात् समवायेन आत्मनि एव उपस्थित्यादिकं संभवति इति आत्मनि एव शाब्दबोधस्य संभवात्। आत्मनां च नानात्वेन यदा आत्मनि उपस्थित्यादिकं कारणं तदा आत्मनि एव शाब्दबोधरूपकार्यस्य अपि संभवात् इति विषयनिष्ठप्रत्यासत्ति–अपेक्षया लाघवम्। किं तु समवायेन यज्ञदत्तात्मनि घटत्वावच्छिन्न–विषयकोपस्थितिसत्त्वेऽपि पटत्वावच्छिन्नविषयक–शाब्दबोधापत्तिः अस्तीति तद्वारणाय विषयनिवेशः कर्तव्यः। पटत्वावच्छिन्न–विषयक–शाब्दबुद्धित्वावच्छिन्नं

प्रति पटत्वावच्छिन्नविषयकोपस्थितिः कारणमिति विषयनिष्ठप्रत्यासत्त्यपेक्षया गौरवम्।

**VV-A 5.2.1(b):** विषयनिष्ठप्रत्यासत्त्या कार्यकारणभावे हि विषयप्रवेशस्य अपेक्षा नास्ति। विषयतासम्बन्धेन शाब्दबुद्धित्वावच्छिन्नं प्रति विषयतासम्बन्धेन उपस्थित्यादिकं कारणम् इत्युक्ते विषयस्य घटादेः विषयताख्यसम्बन्धान्तःप्रवेशेन पृथक् निवेशापेक्षाभावात्। कार्यकारणयोः सामानाधिकरण्यनियमेन च यदा कारणीभूतम् उपस्थित्यादिकं विषयतासम्बन्धेन घटे तदा तत्कार्यस्य शाब्दबोधस्यापि विषयतासम्बन्धेन घटे एव संभवात्। विषयभेदेन विषयनिष्ठविषयतानामपि भिन्नत्वाद् यस्मिन् एव घटे विषयतासम्बन्धेन उपस्थित्यादकं तस्मिन् एव घटे तत्कार्यस्य शाब्दबोधस्यापि संभवात् पटादौ च असंभवात् इति विषयनिवेक्षापेशाभाव इति आत्मनिष्ठप्रत्यासत्त्यपेक्षया लाघवम्। किं तु विषयस्य घटादेः एकत्वेन देवदत्तयज्ञदत्तादि–सकलपुरुषसाधारणत्वात् सम्बन्धभूताया विषयताया अपि एकत्वेन सर्वसाधारणत्वाद् य एव घटो देवदत्तज्ञानविषयः स एव यज्ञदत्तज्ञानविषयोऽपि भवितुम् अर्हति एव इति विषयतासम्बन्धेन यज्ञदत्तस्य उपस्थित्यादिसत्त्वे देवदत्तस्यापि शाब्दबोधः स्यात्। कार्यकारणयोः उपस्थिति–शाब्दबोधयोः विषयतासम्बन्धेन घटे एव सत्त्वेन सामानाधिकरण्यस्य अक्षुण्णत्वाद् उपस्थिति–शाब्दबोध–समवायिनोः यज्ञदत्त–देवदत्तयोः भेदस्य अकिंचित्करत्वाद् विषयतासम्बन्धेन तयोः उपस्थिति–शाब्दबोधानधिकरणत्वात् संप्रति विषयनिष्ठप्रत्यासत्त्या कार्यकारणभाव–पक्षस्वीकारेण विषयतासम्बन्धेन घटादेः विषयस्य एव उपस्थिति–शाब्दबोधा–धिकरणत्वात्। तथा च यज्ञदत्तस्य पटत्वावच्छिन्नविषयकोपस्थित्यादिसत्त्वे देवदत्तस्यापि पटत्वावच्छिन्नविषयक–शाब्दबोधः स्यादेव इति तद्वारणाय तत्पुरुषीयत्वनिवेशः कर्तव्यः। विषयतासम्बन्धेन देवदत्तीयपटत्वावच्छिन्नविषयक–शाब्दबुद्धित्वावच्छिन्नं प्रति विषयतासम्बन्धेन देवदत्तीयपटत्वावच्छिन्नविषयक–उपस्थित्यादिकं कारणमिति तत्तत्पुरुषाणां नानात्वेन तेषां निवेशाद् आत्मनिष्ठप्रत्यासत्त्यपेक्षया गौरवम्। तत्र तत्पुरुषीयत्वनिवेशापेक्षाभावात्।

**VV-A 5.2.1(c):** तथा च यत्र विशेषण–विशेष्ययोः समानसंख्याकत्वं भवति यथा – 'नीलो घटः' इत्यत्र एकमेव विशेषणम् एकमेव च विशेष्यम् इति। तत्र आत्मनिष्ठप्रत्यासत्त्या वा विषयनिष्ठप्रत्यासत्त्या वा शाब्दबोधो भवतु, विशेषो नास्ति। यतोऽत्र आत्मनिष्ठप्रत्यासत्त्या शाब्दबोधपक्षे तत्पुरुषीयत्वप्रवेशाभाव–प्रयुक्तलाघवसत्त्वेऽपि विषयप्रवेशेन गौरवमस्ति एव। विषयनिष्ठप्रत्यासत्त्या

शाब्दबोधपक्षे च विषयप्रवेशाभावप्रयुक्तलाघवसत्त्वेऽपि तत्पुरुषीयत्वप्रवेशेन गौरवमस्ति एव इति उभयप्रत्यासत्त्योः तुल्यत्वमेव। किं तु यत्र विशेषणविशेष्ययोः समसंख्याकत्वं न भवति तत्र आत्मनिष्ठप्रत्यासत्त्या शाब्दबोधापेक्षया विषयनिष्ठप्रत्यासत्त्या शाब्दबोधे लाघवं भवति। तथा हि – यथा 'नीलो घटः', 'पीतो घटः', 'सुन्दरो घटः' इत्यत्र विशेषणानि बहूनि विशेष्यं च एकमेव। अत्र आत्मनिष्ठ–प्रत्यासत्त्या शाब्दबोधस्वीकारे समवायेन अभेदसम्बन्धावच्छिन्न–नीलत्वावच्छिन्नप्रकारतानिरूपित–घटत्वावच्छिन्नविशेष्यताक–शाब्दबुद्धित्वावच्छिन्नं प्रति समवायेन अभेदसम्बन्धावच्छिन्न–नीलत्वावच्छिन्न–प्रकारता–निरूपित–घटत्वावच्छिन्न–विशेष्यताकोपस्थित्यादिकं कारणम्। एवमभेदसम्बन्धावच्छिन्न–पीतत्वावच्छिन्न–प्रकारतानिरूपित–घटत्वावच्छिन्न–विशेष्यताकशाब्दबुद्धित्वावच्छिन्नं प्रत्यभेदसम्बन्धावच्छिन्नपीतत्वावच्छिन्न–प्रकारतानिरूपितघटत्वावच्छिन्नविशेष्यताको – पस्थित्यादिकं कारणम् इत्येवं पृथक् पृथक् कार्यकारणभावस्य वक्तव्यत्वेन महद् गौरवं भवति। विषयनिष्ठप्रत्यासत्त्या शाब्दबोधपक्षे च घटत्वावच्छिन्न–विशेष्यता–निरूपिताभेदसम्बन्धावच्छिन्न–प्रकारतावच्छेदकतासम्बन्धेन तत्पुरुषीय–शाब्दबुद्धित्वावच्छिन्नं प्रति घटत्वावच्छिन्नविशेष्यतानिरूपिताभेदसम्बन्धावच्छिन्न–प्रकारतावच्छेदकता–सम्बन्धेन तत्पुरुषीयोपस्थित्यादिकं कारणम् इत्येवम् एकेनैव वाक्येन 'नीलो घटः', 'पीतो घटः' इत्यादीनाम् एकघटविशेष्यक–वाक्यानां सर्वेषामपि शाब्दबोध–तत्कारणयोः कार्यकारणभावस्य अनुगमः संभवति। यतो यत्र यत्र नीलत्व–पीतत्व–सुन्दरत्वादौ प्रकारतावच्छेदकतासम्बन्धेन शाब्दबोध–कारणम् उपस्थित्यादिकं भविष्यति तत्र तत्र एव प्रकारतावच्छेदकतासम्बन्धेन शाब्दबोधोऽपि भविष्यतीति बहूनां विशेषणीभूतानां नीलपीतादीनां नामग्रहणापेक्षा नास्ति। विशेष्यस्य एकत्वात् तस्य एव नामग्रहणं कृतं घटत्वावच्छिन्नेति इति आत्मनिष्ठप्रत्यासत्त्यपेक्षया लाघवम्। तत्र समवायसम्बन्धेन कार्यकारणभाव–नियमाद् विषयतासम्बन्धेन च कार्यकारणभाव–असंभवेन एवंप्रकारेण लाघवासंभवात्।

**VV-A 5.2.1(d):** एवं 'पटो नीलः', 'घटो नीलः', 'मठो नीलः' इत्यत्र विशेष्याणि बहूनि विशेषणं च एकमेव। अत्रापि आत्मनिष्ठप्रत्यासत्त्या शाब्दबोधपक्षे समवायेन अभेदसम्बन्धावच्छिन्ननीलत्वावच्छिन्न–प्रकारतानिरूपित–घटत्वावच्छिन्न–विशेष्यताक–शाब्दबुद्धित्वावच्छिन्नं प्रति समवायेन अभेदसम्बन्धा–वच्छिन्न–नीलत्वावच्छिन्नप्रकारता–निरूपितघटत्वावच्छिन्नविशेष्यताक–उपस्थित्या–दिकं कारणम् अस्ति। एवं पूर्ववत् पृथक् पृथगेव उक्तवाक्यानां शाब्दबोध–तत्कारणयोः कार्यकारणभावो वक्तव्य इति महद् गौरवम्।

विषयनिष्ठप्रत्यासत्त्या शाब्दबोधपक्षे च अभेदसम्बन्धावच्छिन्ननीलत्वावच्छिन्न–प्रकारतानिरूपित–विशेष्यतावच्छेदकता–सम्बन्धेन तत्पुरुषीयशाब्दबुद्धित्वावच्छिन्नं प्रति अभेदसम्बन्धावच्छिन्न–नीलत्वावच्छिन्न–प्रकारता–निरूपित–विषयता–(धर्मितावच्छेदकता)–सम्बन्धेन तत्पुरुषीय–उपस्थित्यादिकं कारणम् इत्येवम् एकेनैव वाक्येन 'पटो नीलः', 'घटो नीलः', 'मठो नीलः' इत्यादीनाम् एकनील–विशेषणकानां सर्वेषामपि वाक्यानां शाब्दबोध–तत्कारणयोः कार्यकारणभावस्य अनुगमः संभवति। यतो यत्र यत्र पटत्व–घटत्व–मठत्वादौ धर्मितावच्छेदकता–सम्बन्धेन शाब्दबोधकारणीभूतम् उपस्थित्यादिकं भविष्यति तत्र तत्रैव धर्मितावच्छेदकतासम्बन्धेन शाब्दबोधोऽपि भविष्यतीति बहूनां विशेष्यभूतानां घटपटमठादीनां नामग्रहणापेक्षा नास्ति। विशेषणस्य एकत्वात् तस्यैव नामग्रहणं कृतम्। **नीलत्वावच्छिन्नेति** – इत्यात्मनिष्ठप्रत्यासत्त्यपेक्षया लाघवम्। तत्र समवायसम्बन्धेन कार्यकारणभावनियमाद् विषयतासम्बन्धेन च कार्यकारण–भावासंभवेन एवं प्रकारेण लाघवासंभवात्।

**VV-A 5.2.1(e):** एवम् अन्यत्रापि विशेषणविशेष्ययोः विषमसंख्याकत्वे ज्ञेयम्। यत्र विशेषणानि बहूनि तत्र प्रकारतावच्छेदकतासम्बन्धेन कार्यकारणभावो वक्तव्यः। बहूनां विशेषणानां नामग्रहणं न कर्तव्यम्। यत्र च विशेष्याणि बहूनि तत्र धर्मितावच्छेदकतासम्बन्धेन कार्यकारणभावो वक्तव्यः। बहूनां विशेष्याणां नामग्रहणं न कर्तव्यमिति लाघवं स्याद् एवेति यावत्।

**VV-A 5.2.1(f):** आत्मनिष्ठप्रत्यासत्त्या कार्यकारणभावे विषयप्रवेशो–ऽप्यस्ति एव। 'कृष्णोऽहं, गौरोऽहम्' इत्यादौ आत्मनो विषयत्वेन आत्मप्रवेशापेक्षा अप्यस्त्येव इति उभयप्रवेशेन गौरवम्। विषयनिष्ठप्रत्यासत्तौ तु उभयप्रवेशापेक्षा नास्ति। केवलम् आत्ममात्रप्रवेशस्य आवश्यकत्वाद् इति लाघवम् इत्यपि केचित्।

**VV-A 5.2.1(g):** प्रकृते च यदि आत्मनिष्ठप्रत्यासत्त्या शाब्दबोध उच्येत तदा विषयप्रवेशस्य अवश्यंभावात् 'द्रव्यं घटः' इत्यत्र द्रव्यपदेन द्रव्यत्वेन घटपदेन च घटत्वेन उपस्थितिः अस्ति। एवम् 'घटो घटः' इत्यत्र तु नास्ति। किं तु उभाभ्यामेव घटपदाभ्यां घटत्वेन एव उपस्थितिः इति दृष्टान्त–दार्ष्टान्तिकयोः वैषम्यात् 'द्रव्यं घटः' इति दृष्टान्तेन 'घटो घटः' इत्यत्र अभेदान्वयबोधापत्तिः न संभवति इति आत्मनिष्ठप्रत्यासत्तिं त्यक्त्वा विषयनिष्ठप्रत्यासत्त्या शाब्दबोधम् आह – **धर्मिते**ति (VV - 5.2.1)। अत्र च दृष्टान्तदार्ष्टान्तिकयोः वैषम्यसत्त्वेऽपि कार्यकारणभावे विषयप्रवेशाभावेन तत्र

प्रतीयते। तथा च यथा 'द्रव्यं घटः' इत्यत्र धर्मितावच्छेदकतासम्बन्धेन द्रव्यत्वे अभेदसम्बन्धेन घटप्रकारको बोधो भवति तथा 'घटो घटः' इत्यत्रापि धर्मितावच्छेदकतासम्बन्धेन घटत्वे घटप्रकारकाभेदान्वयबोधस्य एव मदिष्टत्वात् स कथं न स्यात्। 'द्रव्यं घटः' इत्यत्र या घटप्रकारकबोधसामग्री तस्याः 'घटो घटः' इत्यत्रापि सत्त्वात्। घटस्य स्वात्मना अभेदस्यापि सत्त्वेन योग्यताज्ञानसत्त्वात् 'घटो घटः' इत्यत्र घटत्वावच्छिन्नप्रकारतानिरूपित–घटत्वावच्छिन्नविशेष्यताकशाब्दबोधस्य आपत्तिः अस्ति एवेति पूर्वपक्षाभिप्रायः।

**VV-A 5.2.1(h):** 'द्रव्यं घटः' इत्यत्र द्रव्यं धर्मी, द्रव्यत्वं धर्मितावच्छेदकं द्रव्यत्वनिष्ठा च विषयता धर्मितावच्छेदकतारूपा। सा एव सम्बन्धः। तेन सम्बन्धेन शाब्दबोधो द्रव्यत्वे वर्तते। तथा च 'द्रव्यं घटः' इत्यत्र धर्मिताच्छेदकतासम्बन्धेन द्रव्यत्वे प्रसिद्धो यथा शुद्धघटत्वावच्छिन्न–प्रकारक–अभेदान्वयबोधः तथा 'घटो घटः' इत्यत्रपि घटत्वे धर्मितावच्छेदकतासम्बन्धेन शुद्धघटत्वावच्छिन्नप्रकारताभेदान्वयबोधस्य आपत्तिः संभवतीति आह – **द्रव्यत्वादाविति** (VV - 5.2.1)।

**VV-A 5.2.1:(B)** ननु 'द्रव्यं घटः' इत्यत्र अभेदान्वयविषयकतात्पर्य–ज्ञानादिघटितसामग्र्याः सत्त्वात् तत्कार्यभूतो घटत्वावच्छिन्नप्रकारक–अभेदान्वयबोधो भवति। 'घटो घटः' इत्यत्र वस्तुगत्या अभेदस्य सत्त्वेऽपि तद्बोधानुकूल–सामग्र्यभावात् कथम् अभेदान्वयबोधः स्याद् इत्याशङ्क्याह – **न चेति**। **तत्र** = 'घटो घटः' इत्यत्र **आपादकाभावः** = कारणीभूतसामग्र्यभावः। परिहारहेतुमाह – **तात्पर्यज्ञाने**ति। **धर्मितावच्छेदकतया** = धर्मितावच्छेदकता–सम्बन्धेन द्रव्यत्वे **तदुत्पादनियामकसामग्र्याः** = अभेदान्वयबोधोत्पतेः नियामिकायाः तात्पर्यज्ञान–विशेषादिघटितायाः सामग्र्या एव 'घटो घटः' इत्यत्रापि घटत्वावच्छिन्नप्रकारकाभेदान्वयबोध–आपादकत्वात्। यथा तात्पर्य–ज्ञानादि–घटितसामग्र्या 'द्रव्यं घटः' इत्यत्र घटत्वावच्छिन्न–प्रकारक–अभेदान्वयबोधः तथैव 'घटो घटः' इत्यत्रापि घटत्वावच्छिन्नप्रकारक–अभेदान्वयबोधो भविष्यतीत्यर्थः। तात्पर्यज्ञानं चात्र – 'घटपदं द्रव्यपदार्थान्वित–स्वार्थं बोधयतु' इति। योग्यताज्ञानं च 'द्रव्यपदार्थो घटत्वावच्छिन्नाभेदसंसर्गवान्' इति। द्रव्यत्वे योग्यताज्ञानं तु धर्मितावच्छेदकता–सम्बन्धेन वर्तते। तात्पर्यज्ञानं च 'द्रव्यं घट' इत्येतद्वाक्यजन्य–किंचिद्धर्मावच्छिन्नप्रकारक–किंचिद्धर्मावच्छिन्न–विशेष्यताशालि–शाब्दबोधविषयक–इच्छावान् अयम्' इति। एतादृशज्ञानीया या इच्छानिष्ठाविषयता तन्निरूपिता या बोधनिष्ठा विषयता तन्निरूपिता या

विशेष्यतानिष्ठा विषयता तन्निरूपिता या अवच्छिन्नत्वनिष्ठा विषयता तन्निरूपितविषयतासम्बन्धेन (एषा विषयता विशेष्यतावच्छेदके द्रव्यत्वादौ वर्त्तते) द्रव्यत्वे वर्त्तते।

**VV-A 5.2.2:** ननु 'द्रव्यं घटः' इत्यत्र द्रव्यत्वे **तादृशान्वयबोधोत्पत्ति-प्रयोजिका** = अभेदान्वयबोध–उत्पत्तिप्रयोजिका तु धर्मितावच्छेदकतासम्बन्धेन द्रव्यपदजन्यद्रव्यत्वावच्छिन्नविशेष्यक–उपस्थितिघटिता। तथा **तदवच्छिन्न** = द्रव्यत्वावच्छिन्नविशेष्यक–योग्यताज्ञानादिघटिता एव सामग्री भवतीति वक्तुमारभते – **न चेत्यादिना**। ननु त्वया आत्मनिष्ठप्रत्यासत्तेः एव कार्यतावच्छेदकसम्बन्धत्वम् आश्रित्य 'घटो घटः' इत्यत्र अभेदान्वयबोधः परिह्रियते इति कथमत्र इदानीं वा धर्मितावच्छेदकतासम्बन्धेन द्रव्यत्वे अभेदान्वयबोधप्रयोजकत्वं सामग्र्या उक्तमिति पूर्वपक्षि–आशङ्काम् आलोच्य सिद्धान्ती आह – **धर्मितावच्छेदकताया** इति। **धर्मितावच्छेदकतायाः तत्कार्यतावच्छेदकसम्बन्धताविरहेऽपि** = उक्तसामग्री –जन्यं यत् शाब्दबोधरूपं कार्यं तादृशकार्यतावच्छेदकसम्बन्धता–विरहेऽपि आत्मनिष्ठप्रत्यासत्तेः = समवायस्य एव तादृशकार्यतावच्छेदक–सम्बन्धत्वात् **द्रव्यत्वादिनिष्ठायाः** = तस्याः धर्मितावच्छेदकतायाः **तत्कार्यतावच्छेदकधर्म-घटकत्वात्** = उक्तसामग्रीकार्यतावच्छेदकधर्मघटकत्वात् हेतोः द्रव्यत्वादौ धर्मितावच्छेदकतासम्बन्धेन तादृशान्वयबोध–उत्पत्तिप्रयोजिका द्रव्यपदजन्य–द्रव्यत्वावच्छिन्न–विशेष्यकोपस्थिति–तदवच्छिन्नविशेष्यकयोग्यताज्ञानादि–घटिता सामग्री एव इति अन्वयः।

**VV-A 5.2.2(a):** अयं भावः – यथा वह्न्यवयवेषु वह्निप्रतियोगिक–संयोगविशिष्टवह्नौ जननीये यादृशी इन्धनादिसामग्री प्रयोजिका भवति तादृशी एव सामग्री महानसादौ संयोगेन वह्नौ जननीये प्रयोजिका भवति। किं च अत्र वह्न्यवयवेषु वह्नि–उत्पत्तौ समवाय एव कार्यतावच्छेदकसम्बन्धो भवति न तु संयोग इति, संयोगस्य कार्यतावच्छेदकसम्बन्धत्वाभावेऽपि कार्यतावच्छेदक–धर्मघटकत्वं तु अस्ति एव। वह्निप्रतियोगिविशिष्ट–उत्पाद्यमानवह्नौ वह्नित्वस्य एव वह्निप्रतियोगिक–संयोगवैशिष्ट्यस्य अपि सत्त्वाद् वह्निप्रतियोगिक–संयोगिविशिष्ट–वह्नित्वस्य कार्यतावच्छेदकत्वात् संयोगस्यापि तद्घटकत्वाद्। यदि च अत्र संयोगः कार्यतावच्छेदकधर्मघटको न स्यात् तदा समवायेन वह्न्युत्पत्तिं प्रति यादृशी सामग्री प्रयोजिका भवति तादृशी सामग्री संयोगेन वह्न्युत्पत्तिं प्रति प्रयोजिका न स्यात्, कारणाभावात्। यदा च संयोगः कार्यतावच्छेदकधर्मघटको भवति तदा तु यादृशी सामग्री संयोगविशिष्ट–

वह्निप्रयोजिका भवति तादृशी एव संयोगेन वह्निप्रयोजिका भवति। संयोगस्यापि वह्निना सह कार्यत्वात्। किं च अत्र समवायेन वह्न्युत्पत्तौ संयोगस्य कार्यतावच्छेदकसम्बन्धत्वाभावेऽपि अन्यत्र पर्वतादौ वह्न्युत्पत्तौ तु पर्वतानुयोगिक–वह्निप्रतियोगिक–कार्यतावच्छेदक–सम्बन्धत्वं भवति एव।

**VV-A 5.2.2(b):** तथा प्रकृतेऽपि आत्मनिष्ठप्रत्यासत्त्या 'द्रव्यं घटः' इत्यत्र अभेदान्वयबोधे जननीये समवायस्य एव कार्यतावच्छेदकसम्बन्धत्वेन धर्मितावच्छेदकतायाः कार्यतावच्छेदकसम्बन्धत्वाभावेऽपि द्रव्यत्वनिष्ठाया धर्मिता–वच्छेदकतायाः कार्यतावच्छेदकधर्मघटकत्वं तु अस्त्येव। द्रव्यत्वनिष्ठापि एषा विषयतारूपा धर्मितावच्छेदकता स्वनिरूपितविषयितासम्बन्धेन शाब्दबोधे वर्तते इति शाब्दबोधत्वस्य एव उक्तधर्मितावच्छेदकतावैशिष्ट्यस्यापि शाब्दबोधे सत्त्वाद् अभेदसम्बन्धावच्छिन्न–घटत्वावच्छिन्नप्रकारतानिरूपित–द्रव्यत्वावच्छिन्नविशेष्यताक – शाब्दबोधत्वस्य कार्यतावच्छेदकत्वाद्। उक्तधर्मितावच्छेदकताया अपि तद्घटकत्वात् स्वनिरूपितविषयिता–सम्बन्धेन तत्र वर्तमानत्वात्। तादृश–धर्मितावच्छेदकताविशिष्ट–शाब्दबोधे समवायेन आत्मनि जननीये यादृशी द्रव्यपदजन्य–द्रव्यत्वावच्छिन्न–विशेष्यकोपस्थिति–तदवच्छिन्नविशेष्यक–योग्यता–ज्ञानादिघटित–सामग्री प्रयोजिका भवति तादृशी एव सामग्री धर्मितावच्छेदकता–सम्बन्धेन द्रव्यत्वादौ तादृशशाब्दबोध–प्रयोजिका भवति। यदि च अत्र धर्मितावच्छदेकता कार्यतावच्छेदकधर्मघटिका न स्यात् तदा आत्मनिष्ठप्रत्यासत्त्या = समवायेन आत्मनि उक्तशाब्दबोधे जननीये यादृशी उक्तसामग्री प्रयोजिका भवति तादृशी सामग्री धर्मितावच्छेदकतासम्बन्धेन द्रव्यत्वे उक्तशाब्दबोधे जननीये प्रयोजिका न स्यात् कारणाभावात्। समवायेन आत्मनि उक्तशाब्दबोधे जननीये धर्मितावच्छेदकतायाः कार्यतावच्छेदकधर्मघटकत्वाभावात्। अस्ति च अत्र धर्मितावच्छेदकतायाः कार्यतावच्छेदकधर्मघटकत्वमिति यादृशी उक्तसामग्री आत्मनिष्ठप्रत्यासत्त्या धर्मितावच्छेदकताविशिष्ट–शाब्दबोधप्रयोजिका तादृश्येव उक्तसामग्री धर्मितावच्छदेकतासम्बन्धेन द्रव्यत्वे शाब्दबोधप्रयोजिका भवति। धर्मितावच्छेदकताविशिष्टस्य शाब्दबोधस्य कार्यत्वे तेन सह धर्मितावच्छेदकताया अपि कार्यत्वापत्त्या तया सामग्र्या विना धर्मितावच्छेदकतासम्बन्धेन शाब्दबोधोत्पत्ति–अनुपपत्तेः। द्रव्यत्वनिष्ठाया धर्मितावच्छेदकताया आत्मनिष्ठ–प्रत्यासत्त्या आत्मनि शाब्दबोधोत्पत्तौ कार्यतावच्छेदकसम्बन्धत्वाभावेऽपि उक्तसंयोगस्य इव द्रव्यत्वे उक्तशाब्दबोधे जननीये तु कार्यतावच्छेदकसम्बन्धत्वं भवति एव (न अनुपपन्नम्) कार्यभूतशाब्दबोधाधिकरणद्रव्यत्वनिष्ठत्वादिति। धर्मितावच्छेदकतासम्बन्धेन द्रव्यत्वे तादृशान्वयबोधोत्पत्तिप्रयोजिका द्रव्यपदजन्या

इत्याद्युक्तसामग्र्येव, तादृशसामग्र्याश्च आत्मनिष्ठप्रत्यासत्त्या (समवायेन) द्रव्यत्वाद्यवच्छिन्नविशेष्यक–घटत्वाद्यवच्छिन्नाद्यभेदबुद्धित्वरूप–स्वीयकार्यता–अवच्छेदकावच्छिन्नोत्पत्तेरेव = अभेदसम्बन्धावच्छिन्न–घटत्वावच्छिन्न–प्रकारता–निरूपितद्रव्यत्वावच्छिन्नविशेष्यक–शाब्दबोधत्वावच्छिन्नो–(शाब्दबोधो)–त्पत्तेरेव 'द्रव्यं घटः' इति स्थले व्याप्यतया = प्रयोजकतया घटत्वादौ धर्मितावच्छेदकता–सम्बन्धेन घटत्वावच्छिन्नाभेदबोधापादकत्वं न संभवति। किं वा उक्तसामग्र्या घटत्वे घटत्वावच्छिन्नाभेदबोधापादकत्वं धर्मितावच्छेदकतासम्बन्धेनापि न संभवति, किमुतात्मनिष्ठप्रत्यासत्त्या। आत्मनिष्ठप्रत्यासत्त्या हि बोधापादकत्वं सामग्र्या आत्मन्येव संभवति नान्यत्र। सम्बन्धभूतस्य बोधसमवायस्य आत्ममात्रनिष्ठत्वात्। धर्मितावच्छेदकतापि या अत्र सम्बन्धरूपास्ति तस्या द्रव्यत्वमात्रनिष्ठत्वात् तादृशधर्मितावच्छेदकतासबन्धेन च सामग्र्या द्रव्यत्वे एव शाब्दबोधपादकत्वं संभवति न घटत्वादौ इत्यर्थः। किं च द्रव्यत्वावच्छिन्नविशेष्यकशाब्दबोधं प्रति द्रव्यत्वावच्छिन्न–विशेष्यकयोग्यताज्ञानस्यैव कारणत्वात् तादृशयोग्यताज्ञानस्य च द्रव्यत्वनिष्ठ–धर्मितावच्छेदकतासम्बन्धेन द्रव्यत्वे एव संभवात् घटत्वे च असंभवात् न केवलं घटत्वे शाब्दबोधापत्त्यऽसंभव एवए किं तु तादृश–शाब्दबोधकारणीभूत–योग्यताज्ञानस्याप्यसंभव एव। योग्यताज्ञानस्वरूपेऽपि द्रव्यत्वविशेष्यकत्वप्रवेशात् कारणाभावे कार्यासंभवाच्च इत्यलम्।

**VV-A 5.2.3:** पूर्वपक्षी उक्तं परिहरन् अभेदसम्बन्धावच्छिन्नप्रकारताक–शाब्दबोधकारणीभूत–योग्यताज्ञानमात्रं घटत्वे आपादयति – **योग्यताज्ञानस्य** इति। **धर्मितावच्छेदकं** = द्रव्यत्वं, **निवेश्य** = द्रव्यत्वावच्छिन्नविशेष्यकयोग्यता–ज्ञानस्वीकारे हि **तद्भेदेन** = धर्मितावच्छेदकभेदेन। यथा 'घटः प्रमेयः' इत्यत्र प्रमेयत्वं धर्मितावच्छेदकम्, 'घटो द्रव्यम्' इत्यत्र द्रव्यत्वं धर्मितावच्छेदकमिति तत्तत्स्थलीय–धर्मितावच्छेदकभेदेन तद्घटित–योग्यताज्ञानस्यापि भेदप्राप्त्या तत्तत्स्थलीय–भिन्नभिन्नधर्मितावच्छेदकघटित–भिन्नभिन्नयोग्यताज्ञानानां कारणता–कल्पनेन अनन्तकारणताकल्पनं स्यादिति तदपेक्षया लाघवाद् धर्मितावच्छेदकं द्रव्यत्वम् अनिवेश्य धर्मितावच्छेदकतासम्बन्धेन शाब्दबोधं प्रति तादृशसम्बन्धेन = धर्मितावच्छेदकतासम्बन्धेन तस्य = योग्यताज्ञानस्य (अभेदसम्बन्धावच्छिन्न–घटत्वावच्छिन्न–प्रकारताक–योग्यताज्ञानस्य द्रव्यत्वावच्छिन्न–विशेष्यकत्व–निवेश–रहितस्य च) हेतुताकल्पनं युक्तम्। तथा च घटत्वादिधर्मितावच्छेदक–घटत्वाद्यवच्छिन्न–प्रकारकयोग्यताज्ञानबलादेव = घटत्वं धर्मितावच्छेदकं यस्य तद् घटत्वधर्मितावच्छेदकं घटत्वावच्छिन्नप्रकारकं च यद् योग्यताज्ञानं तस्य धर्मितावच्छेदकतासम्बन्धेन घटत्वे संभवादए घटत्वे **धर्मितावच्छेदकतासम्बन्धेन**

**तदापत्तेः** = अभेदसम्बन्धावच्छिन्न–घटत्वावच्छिन्नप्रकारताक–शाब्दबोधापत्तेः संभवात्। तथा च 'द्रव्यं घटः' इत्यत्र इव 'घटो घटः' इत्यत्रापि अभेदान्वयबोधानुपपत्तिः नास्त्येव इत्यर्थः। अत्र च **''धर्मितावच्छेदकमनिवेश्य''** इत्यनेन योग्यताज्ञाने धर्मितावच्छेदकनिवेशो न कर्तव्य इति यदुक्तं तस्य धर्मितावच्छेदकविशेष्यकत्वस्य उच्चारणमात्रं न कर्तव्यम् इत्येव अर्थः। वस्तुतो योग्यताज्ञाने धर्मितावच्छेदकविशेष्यकत्वस्य सत्त्वादेव तदेव केवलं प्रदर्शितम् – **घटत्वादिधर्मितावच्छेदकेति**। उच्चारणं तु – अभेदसम्बन्धावच्छिन्न–घटत्वावच्छिन्न–प्रकारकयोग्यताज्ञानस्य घटत्वेऽपि सत्त्वाद् इत्येव कर्तव्यम् इत्यवधेयम्। तथेदानीं सम्बन्धत्वमपि शुद्धाया एव धर्मितावच्छेदकताया ज्ञेयं न तु द्रव्यत्वनिष्ठायाः धर्मितावच्छेदकतायाः। द्रव्यत्वमात्रे एव संभवाद् घटत्वे च असंभवात्। द्रव्यत्वनिष्ठत्वनिवेशरहितायाः तु शुद्धाया धर्मितावच्छेदकतायाः सम्बन्धभूताया घटत्वेऽपि अनुपपत्त्यभावाद् इत्यवधेयम्।

**VV-A 5.2.4:** ननु यद्येवं योग्यताज्ञानबलादेव शाब्दबोधः स्यात्तदा **"धर्मितावच्छेदकतासम्बन्धेन द्रव्यत्वादौ तादृशान्वयबोधोत्पत्तिप्रयोजिका द्रव्यपद-जन्य-द्रव्यत्वाद्यवच्छिन्नविशेष्यकोपस्थिति-तदवच्छिन्नविशेष्यक-योग्यताज्ञानादि-घटित-सामग्र्येव"** (VV - 5.2.2:) इत्यनेन यदुपस्थितेः शाब्दबोधकारणत्वमुक्तं, तन्न युक्तम्। योग्यताज्ञानबलादेव शाब्दबोधसंभवात्। उपस्थितेः व्यभिचारित्वात् च इत्यभिप्रायेण आशङ्कते योग्यताज्ञानकारणतावादी – **न चेति**। योग्यताज्ञानस्य **धर्मितावच्छेदकनिष्ठप्रत्यासत्त्या** = धर्मितावच्छेदकतासम्बन्धेन शाब्दबोधं प्रति हेतुत्वस्वीकारे **द्रव्यत्वाद्यवच्छिन्नस्य पदाद् अनुपस्थितत्वेऽपि** = द्रव्यपद–जन्यद्रव्यत्वावच्छिन्न–विषयकोपस्थितेः अभावेऽपि **द्रव्यत्वादौ तादृशप्रत्यासत्त्या** = धर्मितावच्छेदकतासम्बन्धेन **प्रत्यासन्नात्** = संवद्धात् (वर्त्तमानात्) योग्यताज्ञानात् **तत्र** = द्रव्यत्वे **तादृशप्रत्यासत्त्या** = धर्मितावच्छेदकतासम्बन्धेन **शाब्दबोधापत्तिः** संभवतीत्युपस्थित्यभावेऽपि शाब्दबोधसंभवे कथमुपस्थितेः कारणत्वं स्यात्? कार्यकारणभावस्य अन्वयव्यतिरेकाभ्याम् एव अवधार्यत्वात्। किं च – उपस्थितिर्हि प्रकारविशेष्यभूतपदार्थयोः स्वरूपमात्रविषया भवति न तु कमपि पदार्थं धर्मिता–(विशेष्यता)–वच्छेदकत्वेन अवगाहते। यथा – 'द्रव्यं घटः' इत्यत्र घटपदेन घटघटत्वयोः उपस्थितिः भवति। द्रव्यपदेन च द्रव्यद्रव्यत्वयोः उपस्थितिः भवति। स्वरूपेणैव न हि द्रव्यत्वादौ धर्मितावच्छेदकत्वं भासते। तथा च उपस्थितौ धर्मितावच्छेदकत्वेन कस्यापि पदार्थस्य अभानात् कथम् उपस्थितिः क्वचिदपि द्रव्यत्वादौ धर्मितावच्छेदकतासम्बन्धेन वर्तेत? तस्माद् धर्मिता–वच्छेदकतासम्बन्धेन तु उपस्थितेः कारणत्वमेव नास्ति असंभवात्। अद्धा

आत्मानिष्ठप्रत्यासत्त्या उपस्थितिः आत्मनि उत्पद्यते इति आत्मनिष्ठप्रत्यासत्त्या उपस्थितेः कारणत्वे संभवत्यपिए सति द्रव्यपदजन्यद्रव्यत्वावच्छिन्न–विषयकोपस्थितेः तु आत्मनिष्ठप्रत्यासत्त्या अपि अत्र कारणत्वं न संभवति। उक्तव्यभिचारात् इत्याह – **आत्मनिष्ठे**ति । **आत्मनिष्ठप्रत्यासत्त्या** = समवायेन **हेतुभूताम्** = हेतुत्वेन संभाव्यमानां द्रव्यत्वावच्छिन्नोपस्थितिं विनापि **तादृश** = आत्मानिष्ठप्रत्यासत्त्या हेतुभूतप्रमेयत्वावच्छिन्नोपस्थितिदशायाम् (सत्त्वे) प्रमेयत्वे **धर्मितावच्छेदकतासम्बन्धेन ज्ञानस्य** = योग्यताज्ञानस्य फलजनकत्वात् = शाब्दबोधजनकत्वात् (योग्यताज्ञानेन शाब्दबोधे संभवति) **तादृश**–आत्मनिष्ठ–प्रत्यासत्त्या हेतुभूतद्रव्यत्वावच्छिन्नोपस्थितेः अभावस्य **अकिंचित्करत्वात्** शाब्दबोधाप्रतिबन्धकत्वात् न द्रव्यत्वावच्छिन्नोपस्थितेः कारणत्वम्। एवं द्रव्यपद–जन्यद्रव्यत्वावच्छिन्न–विषयकोपस्थितिदशायां प्रमेयत्वे शाब्दबोधो जायते एवेति प्रमेयत्वावच्छिन्न–विषयकोपस्थितेः अपि न कारणत्वं, व्यभिचारात्। चालनीन्यायेन उपस्थितिमात्रस्य व्यभिचारित्वादित्यर्थः। योग्यताज्ञाने तु द्रव्यत्वादीनां धर्मितावच्छेदकविधया भानाद् योग्यताज्ञानं तादृशद्रव्यत्वादिनिष्ठ–धर्मितावच्छेदकताख्यसम्बन्धेन द्रव्यत्वादौ संभवत्येवेति योग्यताज्ञानस्यैव धर्मितावच्छेदकतासम्बन्धेन शाब्दबोधं प्रति कारणत्वं वक्तव्यम्। यदा च उपस्थितेः व्यभिचारित्वात् कारणत्वमेव नास्ति तदा **तादृश** = आत्मनिष्ठप्रत्यासत्त्या हेतुभूताया द्रव्यत्वावच्छिन्नोपस्थितेः अभावस्य **अकिंचित्करत्वम्** = शाब्दबोध–प्रतिबन्धकत्वं न संभवतीति उक्तयोग्यताज्ञान–बलादेव शाब्दबोधो जायते स्वीकर्तव्यश्च इत्यभिप्रायः। अत्र 'घटो घटः' इत्यत्र शब्दबोधापत्तिः अस्ति नास्तीति वा न विचार्यते, किं तूपस्थितेः धर्मितावच्छेदकतासम्बन्धेन तया आत्मनिष्ठप्रत्यासत्त्या कारणत्वं न संभवतीति पूर्वपक्षतात्पर्यम्। अत एव उत्तरपक्षे प्रकारतासम्बन्धेन उपस्थितेः कारणत्वं व्यवस्थाप्यते इत्यवधेयम्।

**VV-A 5.2.5:** परिहारहेतुमाह – **समाने**ति। योग्यताज्ञाने द्रव्यत्वं धर्मितावच्छेदकविधया भासते इति योग्यताज्ञानं शाब्दबोधं प्रति धर्मितावच्छेदकता –सम्बन्धेनैव कारणमिति समानधर्मितावच्छेदकतासम्बन्धेन शाब्दबोध–योग्यता–ज्ञानयोः कार्यकारणभावः। उपस्थितौ च कस्यचिदपि द्रव्यत्वादेः धर्मितावच्छेदकतया भानाभावादुपस्थितेः धर्मितावच्छेदकतासम्बन्धेन कारणत्वा–संभवेऽपि **समानप्रकारता- प्रत्यासत्त्या** = समानप्रकारतासम्बन्धेन कारणत्वं संभवत्येव। अयं भावः – 'द्रव्यं घटः' इति वाक्यजन्योपस्थितौ घटत्वं घटे प्रकारो घटश्च द्रव्ये प्रकारो, द्रव्यत्वं च द्रव्ये प्रकारो, द्रव्यमेकं विशेष्यम्। यद्यप्यत्र उपस्थितौ प्रकारताया विशेष्यतायाश्च निरवच्छिन्नत्वात्

प्रकारतावच्छेदकतया विशेष्यतावच्छेदकतया च कस्यचिदपि भानं न भवति, तथापि द्रव्यत्वस्य प्रकारतया भानं तु भवत्येव, द्रव्यप्रकारतया उपस्थितत्वात्। तच्च द्रव्यत्वं शाब्दबोधेऽपि द्रव्यप्रकारतया 'द्रव्यं घटः' इत्यत्र भासत एवेति द्रव्यत्वनिष्ठा प्रकारता समानप्रकारता प्राप्ता। तादृशसमानप्रकारतासम्बन्धेन उपस्थितेः कारणत्वमस्ति। द्रव्यत्वे प्रकारतासम्बन्धेन उपस्थिति–शाब्दबोधयोः उभयोरपि सत्त्वादेव इति न उपस्थितेः अकारणत्वम् उपस्थितिविरहस्य अकिंचित्करत्वं चेति।

**VV-A 5.2.6:** ननु धर्मितावच्छेदकतासम्बन्धेन शाब्दबोधे जननीये प्रकारतासम्बन्धेन उपस्थितेः द्रव्यत्वादौ संभवेऽपि कथमुपयोगः स्यादित्याशङ्क्य प्रकारतासम्बन्धेन उपस्थितेः धर्मितावछेदकतासम्बन्धावच्छिन्न–शाब्दबोधं प्रति कारणत्वम् उपपादयति – **येनेति**। यथा येन **सम्बन्धेन** = समवायसम्बन्धेन **यद्धर्मावच्छिन्नकार्यं प्रति** = घटत्वावच्छिन्नकार्यं प्रति **येन सम्बन्धेन** = तादात्म्य–सम्बन्धेन **यद्धर्मावच्छिन्नकार्योत्पादकसामग्र्याः** = द्रव्यत्वावच्छिन्नकार्योत्पादक–समवायिकारणादिसमवधानादिरूप–सामग्र्या अपि तेन **सम्बन्धेन** = समवाय–सम्बन्धेन **तद्धर्मावच्छिन्नकार्योत्पत्तौ** = घटत्वावच्छिन्नकार्योत्पत्तौ अपेक्षितत्वं भवति। व्याप्यधर्मावच्छिन्न–कार्योत्पत्तेः व्यापकधर्मावच्छिन्नकार्योत्पादकसामग्री–सापेक्षत्वेन समवायिकारण–निमित्तकारणादि–समवधानादिरूपां द्रव्योत्पादक–सामग्रीं विना द्रव्यव्याप्यस्य घटस्य उत्पत्तेः असंभवात् (समवायसंबन्धेन कार्यत्वावच्छिन्नं प्रति तादात्म्यसम्बन्धेन यद्धर्मावच्छिन्नकार्यस्य ↗ द्रव्यत्वावच्छिन्नकार्यस्य व्यापकता अस्ति इति तेन सम्बन्धेन ↗ तादात्म्यसम्बन्धेन द्रव्यत्वेन द्रव्यं समवायिकारणमिति व्यापककार्यकारणभावः। समवायसम्बन्धेन घटत्वावच्छिन्नकार्यं प्रति तादात्म्यसम्बन्धेन कपालत्वेन कपालः समवायिकारणमिति व्याप्यकार्यकारणभावः)। तथा प्रकृतेऽपि **येन सम्बन्धेन** = धर्मितावच्छेदकतासम्बन्धेन **यद्धर्मावच्छिन्नकार्यं** प्रति = घटत्वाच्छिन्न–प्रकारकाभेदसंसर्गक–शाब्दबोधत्वावच्छिन्नकार्यं प्रति **येन सम्बन्धेन** = प्रकारतासंबन्धेन **यद्धर्मावच्छिन्नकार्यस्य** = शाब्दबोधत्वरूपसामान्यधर्मावच्छिन्न. कार्यस्य **व्यापकता** = अधिकदेशवृत्तित्वं, तेन संबन्धेन प्रकरतासंबन्धेन **तद्धर्मावच्छिन्न-कार्योत्पादकसामग्र्याः** = शाब्दबोधत्वरूपसामान्यधर्मावच्छिन्न–कार्योत्पादकसामग्र्या अपि **तेन सम्बन्धेन** = धर्मितावच्छेदकतासम्बन्धेन **तद्धर्मावच्छिन्नकार्योत्पत्तौ** = घटत्वावच्छिन्नप्रकारताक–अभेदसंसर्गक–शाब्दबोधत्वावच्छिन्न–कार्योत्पत्तौ अपेक्षितत्वं भवतीति प्रकारतासंबन्धेन द्रव्यत्वादौ

द्रव्यपदजन्यपदार्थोपस्थित्यभावे **तत्र** = द्रव्यत्वादौ धर्मितावच्छेदकतासम्बन्धेनापि **शाब्दबोधापत्तेः** = शाब्दबोधोत्पत्तेः असंभवाद् इत्यन्वयः।

**VV-A 6.3.6(a):** अयं भावः – अधिकदेशवृत्तित्वं हि व्यापकत्वम्। 'द्रव्यं घटः' इत्यत्र च विशेष्यता तु केवलं द्रव्ये एव वर्तते प्रकारता च घटघटत्वद्रव्यत्वेषु त्रिषु वर्तते इति प्रकारताया विशदत्वात् प्रकारतासम्बन्धेन शाब्दबोधस्य घटघटत्वद्रव्यत्वेषु संभवाद् अधिकदेशवृत्तित्वम् अस्तीति व्यापकत्वम्। धर्मितावच्छेदकतासम्बन्धेन तु शाब्दबोधो द्रव्यत्वमात्रे एव वर्तते इति तस्य व्याप्यत्वम्। तथा शाब्दबोधत्वरूपसामान्यधर्मावच्छिन्नस्य व्यापकत्वम्, घटत्वावच्छिन्नप्रकारकाभेदसंसर्गकशाब्दबोधत्वावच्छिन्नस्य व्याप्यत्वम्। व्याप्यधर्म–अवच्छिन्ने च कार्ये जननीये व्यापकधर्मावच्छिन्नकार्योत्पादकसामग्री अपेक्ष्यते। यथा – करीषजन्यत्वविशिष्टवह्नित्वरूप–व्याप्यधर्मावच्छिन्नवह्नौ जननीये शुद्धवह्नित्वरूपव्यापकधर्मावच्छिन्न–वह्न्युत्पादकसाामग्री इन्धनादिरूपा अपेक्षिता भवति। तदभावे वह्न्युत्पत्त्यसंभवात्। यथा च घटत्वरूपव्याप्यधर्मावच्छिन्ने घटे जननीये द्रव्यत्वरूपव्यापकधर्मावच्छिन्नकार्योत्पादिका समवायिकारणादि–समवधानादिरूपा सामग्री अपेक्षिता भवति, तथा – प्रकृतेऽपि घटत्वावच्छिन्न–प्रकारक–अभेदसंसर्गक–शाब्दबोधत्वरूप–व्याप्यधर्मावच्छिन्ने शाब्दबोधे जननीये शुद्धशाब्दबोधत्वरूपव्यापक–धर्मावच्छिन्नशाब्दबोधोत्पादिका या प्रकारतासम्बन्धेन उपस्थितिः तस्या अवश्यमपेक्षा भवत्येवेति प्रकारतासम्बन्धेन द्रव्यत्वे द्रव्यपदजन्योपस्थित्यऽसत्त्वे द्रव्यत्वे धर्मितावच्छेदकतासम्बन्धेनापि शाब्दबोधो–त्पत्तिर्न संभवतीति प्रकारतासम्बन्धेन उपस्थितेः शाब्दबोधकारणत्वम् अवश्यम् अभ्युपगन्तव्यम्।

**VV-A 5.2.7:** **न चेति**। यदि समानप्रकारताप्रत्यासत्त्या उपस्थितेः शाब्दबोधं प्रति कारणत्वं स्वीक्रियते तदा यत्र प्रमेयपदेन प्रमेयत्वावच्छिन्न–विषयकोपस्थितिः स्याद् उद्बोधकान्तराच्च द्रव्यत्वावच्छिन्नविषयकोपस्थितिः स्यात्। तत्र तादृशसमूहालम्बनात्मक–प्रमेय–द्रव्ययोः उपस्थितौ प्रमेयपदजन्यत्वेन पदजन्यत्वम् अपि अस्त्येव। तत्र प्रमेयस्य एव विशेष्यत्वेन द्रव्यस्य प्रकारत्वाच्च उद्बोधकान्तराद् उपस्थितद्रव्ये प्रकारतासम्बन्धेन उपस्थितेः सत्त्वाद् द्रव्ये शाब्दबोधोऽपि स्यादेव। कारणसत्त्वे कार्यावश्यंभावात्। न च एवम् उद्बोधकान्तराद् उपस्थितपदार्थे उद्बोधकान्तरजन्य–उपस्थितिसत्त्वेऽपि शाब्दबोध इष्ट इति उक्तस्थले **तद्वारणाय** = शाब्दबोधापत्तिवारणाय यद् तद्धर्मावच्छिन्नविशेष्यकशाब्दबुद्धित्वावच्छिन्नं प्रति तद्धर्मावच्छिन्नविशेष्यकं

'द्रव्यं द्रव्यपदशक्यम्' इत्याकारकं वृत्तिज्ञानं तादृशवृत्तिज्ञानजन्य–तद्धर्मप्रकारक–पदार्थोपस्थितेः हेतुत्वं वक्तव्यम्। तथा च उक्तस्थले द्रव्यस्य या उपस्थितिः जाता सा उद्बोधकान्तरादेव जाताए न तु द्रव्यपदवृत्तिज्ञानजन्या अस्तीति तादृशं–उद्बोधकान्तरजन्योपस्थितेः शाब्दबोधं प्रति कारणत्वमेव नास्ति येन उद्बोधकान्तराद् उपस्थितद्रव्ये शाब्दबोधापत्तिः स्यादित्यर्थः। **तथा चेति** – तथा च 'तद्धर्मावच्छिन्नविशेष्यक–शाब्दबोधं प्रति तद्धर्मावच्छिन्नविशेष्यक–वृत्तिज्ञानजन्य–तद्धर्मप्रकारक–पदार्थोपस्थितेः हेतुत्वम्' इत्येवं कार्यकारणभावे स्वीकृते कार्यकारणभावे प्रकारविशेष्ययोः निवेशस्य आवश्यकत्वे प्राप्ते विषयनिष्ठप्रत्यासत्त्या हेतुताकल्पनम् अयुक्तम् एव इत्यर्थः। अयं भावः – शाब्दबोध–तत्कारणयोः च कार्यकारणभाव आत्मनिष्ठप्रत्यासत्त्यापि भवति विषयनिष्ठप्रत्यासत्त्यापि च भवति। तत्र आत्मनिष्ठप्रत्यासत्त्या यदात्मनि उपस्थित्यादिकं कारणं भवति तदात्मनि एव शाब्दबोधोऽपि अर्थादेव जायते नान्यत्र प्रसङ्ग इति तत्पुरुषीयत्वप्रवेशापेक्षा न भवति। किं तु पटाद्युपस्थित्यादिसत्त्वे घटादिविषयकोऽपि शाब्दबोधः स्यादिति तद्वारणाय विषयनिवेशापेक्षा भवत्येव। यथा घटत्वावच्छिन्नविषयक–शाब्दबोधं प्रति घटत्वावच्छिन्न–विषयकोपस्थितेः कारणत्वमिति। विषयनिष्ठप्रत्यासत्त्या च यस्मिन् विषये उपस्थित्यादिकं भवति तत्रैव शाब्दबोधोऽपि संभवति न अन्यत्र इति विषयनिवेशापेक्षा नास्ति। किं तु तत्पुरुषीयत्व–निवेशापेक्षा भवत्येव। यथा यज्ञदत्तीय–शाब्दबोधं प्रति यज्ञदत्तीय–उपस्थित्यादिकं कारणमिति। अन्यथा देवदत्तस्य उपस्थित्यादिसत्त्वे यज्ञदत्तस्यापि शाब्दबोधः स्याद् इति। एवं स्थिते उक्त–उद्बोधकान्तरजन्य–उपस्थितेः द्रव्यादौ प्रकारतासम्बन्धेन सत्त्वे तत्र द्रव्ये शाब्दबोधोऽपि स्याद् एवेति। तद्वारणाय यदि विषयनिष्ठप्रत्यासत्त्या कार्यकारणभाव–स्वीकारेऽपि प्रकारविशेष्ययोः निवेशस्य उक्तस्य अपेक्षा प्राप्ता तदा विषयनिष्ठ–प्रत्यासत्त्या (प्रकारतासम्बन्धेनापि) उपस्थितेः कारणत्वाश्रयणम् अयुक्तमेव। यतो विषयनिष्ठप्रत्यासत्त्या कारणत्वं हि विषयप्रवेशप्रयुक्त–गौरवपरिहारार्थम् एवाश्रीयते विषयप्रवेशापेक्षा तु उक्तरीत्या प्राप्ता एव। पुरुषान्तरस्य शाब्दबोधवारणाय तत्पुरुषीयत्वनिवेशोऽपि कर्तव्य एवेति विषयनिष्ठप्रत्यासत्त्या हेतुताकल्पनम् अयुक्तम् एव। तथा च आत्मनिष्ठप्रत्यासत्त्या एव उपस्थितेः हेतुत्वं स्वीकार्यम्। आत्मनिष्ठ–प्रत्यासत्त्या हेतुत्वोपगमे विषयप्रवेशापेक्षासत्त्वेऽपि तत्पुरुषीयत्वप्रवेशापेक्षाभावेन लाघवात्। एतदेवाह – **तथा सतीति**। **तथा सति** = विषयनिष्ठप्रत्यासत्त्या हेतुत्वोपगमे सति तत्पुरुषीयत्वप्रवेशापेक्षया देवदत्तादिपुरुषभेदेन अनन्तकार्यकारणभाव–कल्पना–प्रसङ्गः। उक्त–उद्बोधकान्तरजन्योपस्थित्या शाब्दबोधवारणाय विषय–

प्रवेशापेक्षापि अस्त्येव इति महद् गौरवम्। आत्मनिष्ठसमवायप्रत्यासत्त्या च द्रव्यत्वावच्छिन्नधर्मिक–घटत्वावच्छिन्नप्रकारक–अभेदसंसर्गकशाब्दबोधं प्रति क्लृप्ता या द्रव्यत्वावच्छिन्नधर्मिक–योग्यताज्ञानरूपा सामग्री तदभावान्न 'घटो घटः' इत्यत्र शाब्दबोधापत्तिः। अत्र द्रव्यत्वस्य धर्मितावच्छेदकत्व–अभावाद् इति भावः।

**VV-A 5.2.8:** परिहारमाह – **स्वजनकज्ञानीये**ति। यदि उद्बोधकान्तर–जन्योपस्थित्या शाब्दबोधवारणाय विषयनिष्ठप्रत्यासत्त्या कार्यकारणभाव–स्वीकारेऽपि 'तद्धर्मावच्छिन्नविशेष्यक–शाब्दबोधं प्रति तद्धर्मावच्छिन्नविशेष्यक–वृत्तिज्ञानजन्य–तद्धर्मप्रकारक–उपस्थितेः हेतुत्वम्' इत्येवं कार्यकारणभावे विषयप्रवेशापेक्षा स्याद्। विषयप्रवेशेन गौरवापत्त्या विषयनिष्ठप्रत्यासत्त्या कार्यकारणभावः त्यक्तः स्याद् आत्मनिष्ठप्रत्यासत्त्या च स्वीकृतः स्यात्। तदात्मनिष्ठप्रत्यासत्त्या कार्यकारणभावे विषयप्रवेशावश्यंभावेन 'द्रव्यं घटः' इत्यत्र शाब्दबोधकारणं या द्रव्यत्वावच्छिन्न–धर्मिकयोग्यताज्ञानादिरूपा सामग्री तस्याः 'घटो घटः' इत्यत्र द्रव्यत्वस्य धर्मितावच्छेदकत्व–अभावेन अभावात् शाब्दबोधापत्तिः न स्यादपि। न च एवम् अस्ति। यतः स्वजनक–ज्ञानीयवृत्तिनिष्ठप्रकारतानिरूपित–विशेष्यतावच्छेदकताविशिष्ट–प्रकारतासम्बन्धेन उपस्थितेः कारणत्वं स्वीक्रियते (स्वम् उपस्थितिः)। प्रकारता–सम्बन्धश्च विषयनिष्ठप्रत्यासत्तिः एव। तथा च 'द्रव्यं घटः' इत्यत्र स्वं द्रव्यपदजन्य–उपस्थितिस्तज्जनकं यत् 'द्रव्यं द्रव्यपदशक्तिमत्' इति शक्तिरूपवृत्तिज्ञानं तादृशज्ञान–निरूपिता या शक्तिरूपवृत्तिनिष्ठा प्रकारता (उक्तशक्तिज्ञाने शक्तेः एव प्रकारत्वात्) तन्निरूपिता विशेष्यता द्रव्ये वर्तते (उक्तशक्तिज्ञाने द्रव्यस्यैव विशेष्यत्वात्)। विशेष्यतावच्छेदकता च द्रव्यत्वे वर्तते। अथ च तत्र द्रव्यत्वे द्रव्यपदजन्य–द्रव्यपदार्थोपस्थितिनिरूपिता प्रकारतापि वर्तते (उपस्थितौ द्रव्यस्य विशेष्यत्वेन तत्र द्रव्यत्वस्य प्रकारत्वेन भानाद् उपस्थितिनिरूपिता द्रव्यत्वे प्रकारता अस्ति) इति द्रव्यत्वे स्वजनकज्ञानीयवृत्तिनिष्ठप्रकारता–निरूपित–विशेष्यतावच्छेदकताप्यस्ति। उपस्थितीय–प्रकारतापि अस्तीति एषा प्रकारता सामानाधिकरण्य–सम्बन्धेन स्वजनक–ज्ञानीयवृत्तिनिष्ठ–प्रकारता–निरूपित–विशेष्यतावच्छेदकताविशिष्टा जातेति स्वजनकज्ञानीयवृत्ति– निष्ठप्रकारता–निरूपित–विशेष्यतावच्छेदकताविशिष्ट–प्रकारतासम्बन्धेन उपस्थितेः शाब्दबोधं प्रति कारणत्वं स्वीक्रियते। एतादृशप्रकारतासम्बन्धेन च 'द्रव्यं घटः' इत्यत्र द्रव्यत्वे उपस्थितेः सत्त्वेन तत्र द्रव्यत्वे शाब्दबोधोऽपि जायते। उद्बोधकान्तरेण द्रव्योपस्थितिकाले च द्रव्ये न एतादृशप्रकारतासम्बन्धेन उपस्थितिः जायते। तस्या उपस्थितेः वृत्तिज्ञानजन्यत्वाभावाद् उद्बोधकान्तरजन्य–उपस्थिति–

निरूपित–द्रव्यनिष्ठ–प्रकारतायाश्च स्व–(उपस्थिति)–जनक–ज्ञानीयवृत्तिनिष्ठ–प्रकारता–निरूपित–विशेष्यतावच्छेदकताविशिष्ट–तवाभावादिति कारणीभूताया उक्त–प्रकारतासम्बन्धेन उपस्थितेः अभावादेव शाब्दबोधो न संभवतीति। एवंरीत्या **तादृशापत्तेः** = उक्त–उद्बोधकान्तरजन्य–उपस्थित्या शाब्दबोधापत्तेः वारणात्। तथा च उक्त उद्बोधकान्तरजन्य–उपस्थित्या शाब्दबोधापत्तिवारणार्थं विषयप्रवेशापेक्षा नास्तीति विषयनिष्ठप्रत्यासत्त्या कार्यकारणभावे उक्तदोषस्य अभावाद् 'द्रव्यं घटः' इत्यत्र विषयनिष्ठप्रत्यासत्त्या घटत्वावच्छिन्नप्रकारक–अभेदसंसर्गक–योग्यताज्ञानस्य यस्य शाब्दबोधकारणत्वमस्ति तादृशयोग्यज्ञानस्य 'घटो घटः' इत्यत्रापि सत्त्वात् शाब्दबोधापत्तिः अस्त्येव। विषयनिष्ठप्रत्यासत्त्या कारणत्वस्वीकारेण द्रव्यत्वावच्छिन्न–धर्मिकत्वस्य प्रवेशापेक्षाभावाद् इत्यर्थः।

**VV-A 5.2.9:** ननु कार्यकारणभावस्य अन्वयव्यतिरेकाभ्याम् अवधार्यत्वाद् उक्तप्रकारतासम्बन्धेन उपस्थितेः कारणत्वमेव न संभवतिए व्यभिचारात् इत्याशङ्कते – **न चे**ति। 'द्रव्यं घटः' इत्यत्र द्रव्यं विशेष्यं घटश्च प्रकार इति। यथा द्रव्ये विशेष्यतासम्बन्धेन द्रव्यत्वे च विशेष्यतावच्छेदकता–सम्बन्धेन शाब्दबोधो जायते तथा **पदार्थेऽपि** = घटेऽपि प्रकारतासम्बन्धेन शाब्दबोधो जायते एव। **तत्र** = घटे च **तादृशप्रकारतासम्बन्धेन** = उक्तप्रकारतासम्बन्धेन **पदार्थोपस्थितिः** = घटोपस्थितिस्तु नास्ति एव। यतः घटपदजन्यघटोपस्थितौ घटो विशेष्यतया एव भासते न तु प्रकारतया इति घटे घटपदजन्योपस्थितीयप्रकारता एव नास्तीति कथं प्रकारतासम्बन्धेन घटे उपस्थितिः स्यात् इति ? घटे प्रकारतासम्बन्धेन उपस्थिति–अभावेऽपि 'द्रव्यं घटः' इति वाक्यजन्यशाब्दबोधः तु प्रकारतासम्बन्धेन घटे उत्पद्यते एव इति उपस्थितेः तादृशप्रकारतासम्बन्धेन व्यभिचारित्वात् कारणत्वं न संभवति। तथा च आत्मनिष्ठ–प्रत्यासत्त्या योग्यताज्ञानस्य कारणत्वं वक्तव्यम्। आत्मनिष्ठप्रत्यासत्त्या योग्यताज्ञानं च द्रव्यत्वावच्छिन्नधर्मिकम् एव। 'द्रव्यं घटः' इत्यत्र उक्तरीत्या कारणम्। तस्य च 'घटो घटः' इत्यत्र असंभवात् न शाब्दबोधापत्तिः इत्यर्थः। घटपदजन्योपस्थितौ घटस्य विशेष्यत्वेन पदार्थत्वाद्। उक्तं – **पदार्थेऽपी**ति। घटेऽपि 'द्रव्यं घटः' इति वाक्यजन्यशाब्दबोधीया प्रकारता अस्ति एव। घटस्य द्रव्ये विशेषणत्वादिति घटे प्रकारतासम्बन्धेन शाब्दबोधसंभवः। उपस्थितिश्च उपस्थितीयप्रकारता–सम्बन्धेन एव घटादौ शाब्दबोधाधिकरणे अपेक्ष्यते न तु अन्यदीयप्रकारतासम्बन्धेन। घटे उपस्थितीयप्रकारता तु नास्त्येव। उपस्थितौ घटस्य विशेष्यत्वेन उपस्थितीय–विशेष्यताया एव घटे वर्तमानत्वाद् इत्युक्तं **तादृशप्रकारता** इति। द्रव्यत्वं तु द्रव्यप्रकारतया एव द्रव्यपदजन्योपस्थितौ भासते

इति द्रव्यत्वे प्रकारतासम्बन्धेन द्रव्यपदजन्योपस्थितिः अस्ति एव इति द्रव्यत्वे शाब्दबोधोत्पत्तौ न कोऽपि दोष इति अवधेयम्। **प्रकारनिष्ठप्रत्यासत्त्या** = प्रकारनिष्ठा या प्रकारता तल्लक्षणप्रत्यासत्त्या।

**VV-A 5.2.10:** परिहारमाह – **परामर्शे**ति। यथा वह्नि–अनुमितिं प्रति धूमपरामर्शस्य अपि कारणत्वम् अस्ति। आलोकपरामर्शस्य अपि कारणत्वम् अस्ति। तयोश्च परामर्शयोः परस्परजन्यानुमितौ व्यभिचारे प्राप्ते धूमपरामर्शाव्यवहितोत्तरत्व–विशिष्टानुमितिं प्रति एव धूमपरामर्शस्य कारणत्वम्। आलोकपरामर्श–अव्यवहितोत्तरत्व–विशिष्टानुमितिं प्रति एव आलोकपरामर्शस्य कारणत्वम् इत्येवं कार्यतावच्छेदककोटौ कारण–अव्यवहितोत्तरत्वनिवेशेन व्यभिचारो निवारितः। तथा अत्रापि कार्यतावच्छेदककोटौ कारणा–व्यवहितोत्तरत्वनिवेशेन व्यभिचारो निवारणीयः। तथा च स्वजनक–ज्ञानीय–वृत्तिनिष्ठप्रकारता–निरूपित–विशेष्यतावच्छेदकता–विशिष्ट–प्रकारता–सम्बन्धेन उपस्थित्यव्यवहितोत्तरत्वविशिष्ट–शाब्दबोधं प्रति स्वजनकज्ञानीय– वृत्तिनिष्ठ–प्रकारता–निरूपित–विशेष्यतावच्छेदकताविशिष्ट–प्रकारता–सम्बन्धेन उपस्थितेः कारणत्वम्। यथा 'द्रव्यं घटः' इति वाक्यजन्यं द्रव्यत्वे जायमानशाब्दबोधं प्रति। घटे जायमानशाब्दबोधं प्रति तु उक्तप्रकारतासंबधेन उपस्थितेः कारणत्वम् एव नास्ति। येन घटे असत्त्वाद् व्यभिचारित्वं स्यात्। किं तु घटे यादृशप्रकारतासम्बन्धेन उपस्थित्यनन्तरं शाब्दबोधो जायते तादृश–प्रकारतासम्बन्धेन एव उपस्थितेः कारणत्वमिति न व्यभिचारः। तथा च विषयनिष्ठप्रत्यासत्त्या कार्यकारणभावे दोषाभावाद् योग्यताज्ञाने द्रव्यत्वावच्छिन्न–धर्मिकत्वस्य प्रवेशापेक्षाभावेन 'द्रव्यं घटः' इत्यत्र यद् घटत्वावच्छिन्नप्रकारक–अभेदसंसर्गक–योग्यताज्ञानं शाब्दबोधजनकं तस्य 'घटो घटः' इत्यत्रापि सत्त्वाद् घटत्वावच्छिन्नप्रकारकाभेदसंसर्गक–शाब्दबोधः स्यादेव। कारणसत्त्वे कार्यावश्य–भावाद् इत्यर्थः।

**अथ**–(VV- 5.2.1)–इत्यादिना आशङ्कितं सिद्धान्ती परिहरति – **तर्ही**ति। तद्धर्मपदेन प्रकारतावच्छेदकधर्मो घटत्वादिः ग्राह्यः। तद्धर्मावच्छिन्नाभेद–संसर्गावच्छिन्नप्रकारतानिरूपित–विशेष्यतावच्छेदकता–सम्बन्धेन शाब्दबोधोत्पत्तिं प्रति **तद्धर्मभेदस्य** = प्रकारतावच्छदेकधर्मभेदस्य हेतुत्वम्। यत्र विशेष्यता–अवच्छेदक–प्रकारतावच्छेदकधर्मयोः भेदो भवति तत्रैव अभेदान्वयबोधो भवति। यथा 'द्रव्यं घटः' इत्यत्र विशेष्यतावच्छेदकं द्रव्यत्वं प्रकारतावच्छेदकं च तद्भिन्नं घटत्वमिति। 'घटो घटः' इत्यत्र तु घटत्वमेव विशेष्यतावच्छेदकं

प्रकारतावच्छेदक चेति विशेष्यतावच्छेदक–प्रकारतावच्छेदकयोः भेदाभावात् न अभेदान्वयबोधो भवतीत्यर्थः। अत्र "तद्धर्मावच्छिन्नाभेदसंसर्गावच्छिन्ना च या घटनिष्ठा प्रकारता तन्निरूपिता विशेष्यता द्रव्ये तदवच्छेदकता विशेष्यता–अवच्छेदकता सम्बन्धेन 'द्रव्यं घटः' इति शाब्दत्वावच्छिन्नं द्रव्यत्वं जायते। तत्र द्रव्यत्वे तद्धर्मभेदो घटत्वभेदो हेतुः अस्ति। 'घटो घटः' इत्यत्र तु न शाब्दबोधापत्तिः – घटत्वे घटत्वभेदाभावात् इत्यर्थः" इति **कृष्णंभट्टाः**।

किं च 'द्रव्यं घटः' इत्यत्र घटम् उद्दिश्य द्रव्यत्वविधानाद् द्रव्यम् उद्दिश्य घटत्वविधानासंभवात् च घटविशेष्यक एव शाब्दबोधो युक्तो, न तु घटप्रकारको येन 'द्रव्यं घटः' इति दृष्टान्तेन 'घटो घटः' इत्यत्र घटप्रकारकशाब्दबोधापत्तिः स्यात् इत्यपि विज्ञेयम्।

**VV-A 5.3.1:** ननु यदि उक्तरीत्या अभेदसंसर्गकशाब्दबोधं प्रति तद्धर्मभेदस्य नाम विशेष्यतावच्छेदक–प्रकारतावच्छेदकधर्मयोः भेदस्य हेतुत्वं स्वीक्रियते तदा 'स घटः', 'घटः सः' इत्यादौ यः अभेदसंसर्गक–शाब्दबोध इष्टः स नोपपद्येत। विशेष्यतावच्छेदक–प्रकारतावच्छेदक–धर्मयोः भेदाभावात्। यतः – 'यः खल्वत्र जातिमानस्ति स घट आनेतव्यः' इति वाक्यघटके 'स घटः' इति वाक्ये तत्पदेन जातिमान् बोध्यते इति जात्यवच्छिन्नेऽत्र तत्पदस्य शक्तिः। तत्पदवाच्यो जातिमानेव विशेष्यए उद्देश्यत्वात्। घटश्च प्रकारः। घटे प्रकारतावच्छेदकधर्मो घटत्वम्। तत्पदवाच्ये जातिमति विशेष्ये च विशेष्यतावच्छेदकधर्मो जातिरेव। जातौ च घटत्वभेदो नास्त्येव। जातेः घटत्वादिरूपत्वात्। अत्रापि वस्तुतो विशेष्यतावच्छेदकधर्मो घटत्वमेव। तत्पदस्य घटबोधकत्वादेव। किं तु तस्य घटत्वस्य घटत्वत्वेन रूपेण प्रतीतिः न भवति किं तु जातित्वेन प्रतीतिर्भवति। तत्पदस्यात्र जातिमति शक्तत्वात्, जातिमद्रूपेणैव घटबोधकत्वात्, तयोश्च विशेष्यतावच्छेदक–प्रकारतावच्छेदक–धर्मयोः जाति–घटत्वयोः भेदाभावाद् अत्र अभेदसंसर्गक–शाब्दबोधो न स्यादेव। तथा 'घटः सः' इत्यत्रापि तत्पदस्य उक्तरीत्या जातिमति शक्तत्वात् विशेष्यतावच्छेदक–प्रकारतावच्छेदक–धर्मयोः घटत्वजात्योः भेदाभावाद् इष्टः अभेदसंसर्गक–शाब्दबोधो न स्याद् एव इत्याशङ्क्याह – **स घट इत्यादी**ति।

'स घटः', 'घटः सः' इत्यादौ अभेदसंसर्गकविवक्षित–शाब्दबोधस्य उपपत्तये विशेष्यत्व–प्रकारत्वयोः अवच्छेदकत्वे निरवच्छिन्नत्वेन विशेषणीये। अर्थात् – यत्र विशेष्यतावच्छेदकता प्रकारतावच्छेदकता च निरवच्छिन्ना भासते

तादृशशाब्दबोधं प्रत्येव तद्धर्मभेदस्य हेतुत्वमस्ति। तथा च – निरवच्छिन्न–अवच्छेदकताकविशेष्यताकम् (निरवच्छिन्न–विशेष्यतावच्छेदकताकम्) निरवच्छिन्न–अवच्छेदकताकप्रकारताकम् (निरवच्छिन्न–प्रकारतावच्छेदकताकम्) च शाब्दबोधं प्रति तद्धर्मभेदस्य हेतुत्वम्। 'द्रव्यं घटः' इत्यत्र द्रव्यत्वनिष्ठा या विशेष्यतावच्छेदकतास्ति सा निरवच्छिन्नास्ति। द्रव्यत्वस्य स्वरूपेणैव भासमानत्वात्। तथा घटत्वनिष्ठा प्रकारतावच्छेदकतापि निरवच्छिन्नास्ति घटत्वस्य अपि स्वरूपेणैव भासमानत्वादिति। तादृशशाब्दबोधं प्रति तद्धर्मभेदस्य उक्तरीत्या हेतुत्वमस्ति। अस्ति च तत्र द्रव्यत्व–घटत्वयोर्भेदः। अत्र तु 'स घटः' इत्यस्य 'जातिमान् घटः' इत्यर्थः। जातिमानेव च विशेष्यः। विशेष्यतावच्छेदकता जातौ वर्तते। जातेश्च जातित्वेन रूपेण भासमानत्वात् जातिनिष्ठा विशेष्यतावच्छेदकता जातित्वावच्छिन्नास्ति। तथा चात्र शाब्दबोधः सावच्छिन्नविशेष्यतावच्छेदकताको जायते न तु निरवच्छिन्नविशेष्यता–अवच्छेदकताकः। सावच्छिन्नविशेष्यतावच्छेदकताक–शाब्दबोधं प्रति तु तद्धर्मभेदस्य हेतुत्वमेव नास्ति इति। अत्र विशेष्यतावच्छेदक–प्रकारतावच्छेदक–धर्मयोः जातिघटत्वयोः भेदाभावेऽपि न अभेदसंसर्गक–शाब्दबोधस्य अनुपपत्तिः। एवम् – 'घटः सः' इत्यस्य 'घटो जातिमान्' इत्यर्थः। जातिमान् एव च प्रकारः। प्रकारतावच्छेदकता अत्र जातौ वर्तते। जातेश्च जातित्वेन रूपेण भासमानत्वात् जातिनिष्ठा प्रकारतावच्छेदकता (प्रकारता जातिमतीति जातिमद्–विशेषणीभूतजातौ प्रकारतावच्छेदकता) जातित्वावच्छिन्ना अस्ति। तथा च अत्र शाब्दबोधः सावच्छिन्नप्रकारतावच्छेदकताको जायते। न तु निरवच्छिन्नप्रकारतावच्छेदकताकः। सावच्छिन्नप्रकारतावच्छेदकताक–शाब्दबोधं प्रति च तद्धर्मभेदस्य हेतुत्वमेव नास्तीत्यत्र विशेष्यतावच्छेदक–प्रकारतावच्छेदक–धर्मयोः घटत्वजात्योः भेदाभावेऽपि न अभेदसंसर्गक–शाब्दबोधस्य अनुपपत्तिः।

'स घटः' इत्यस्य शाब्दबोध–स्वरूपमाह – **जातित्वादिने**ति। अत्र धर्मितावच्छेदकतया घटत्वमेव जातित्वेन रूपेण भासते इत्युक्तं **जातित्वादिना** इति। जातित्वेन भासमानं घटत्वं धर्मितावच्छेदकं यस्य तस्यए तथा **स्वरूपतः** = स्वरूपेण भासमानं च घटत्वं प्रकारतावच्छेदकं यस्य तस्य (घटे प्रकारतास्ति), एवंभूतस्य शाब्दबोधस्य उपपत्तये। 'घटः सः' इत्यत्र च **स्वरूपतः** = स्वरूपेण भासमानं घटत्वं धर्मितावच्छेदकं यस्य तस्य तथा जातित्वविशिष्टं जातित्वेन भासमानं च यद् घटत्वं तदवच्छिन्ना प्रकारता यस्य (जातित्वावच्छिन्ना घटत्वनिष्ठा प्रकारतावच्छेदकता यस्य) तस्य एवंभूतस्य शाब्दबोधस्य उपपत्तये

इत्यन्वयः। तथा च 'स घटः' इत्यत्र जातित्वावच्छिन्नघटत्वनिष्ठ–अवच्छेदकतानिरूपिता या विशेष्यता तन्निरूपिता या अभेदसम्बन्धावच्छिन्ना घटत्वावच्छिन्ना प्रकारता तादृशप्रकारताशालिशाब्दबोधः। 'घटः सः' इत्यत्र घटत्वनिष्ठनिरवच्छिन्न–अवच्छेदकतानिरूपिता या विशेष्यता तादृश–विशेष्यतानिरूपिता या जातित्वावच्छिन्नघटत्वनिष्ठ–अवच्छेदकतानिरूपिता घटनिष्ठा प्रकारता तादृशप्रकारताशालि–शाब्दबोधः। 'स घटः' इत्यत्र विशेष्यतावच्छेदकता जातिनिष्ठा सावच्छिन्ना जातित्वावच्छिन्नत्वात्। 'घटः सः' इत्यत्र च तथैव प्रकारतावच्छेदकता जातिनिष्ठा सावच्छिन्ना अस्तीति व्यतिरेकः।

**'घटो नीलघटः'** इति। 'घटो नीलघटः' इत्यत्र कस्यचिन्मते घटत्वापेक्षया नीलघटत्वस्य भिन्नत्वेन विशेष्यतावच्छेदक–प्रकारतावच्छेदकयोः घटत्व–नीलघटत्वयोः भेदाद् अभेदसंसर्गक–शाब्दबोधस्य न अनुपपत्तिः। 'द्रव्यं घटः' इत्यनेन तुल्यत्वात्। नवीनमते च अत्र विधेयांशे अधिकावगाहि–शाब्दबोधस्वीकाराद् उद्देश्य–(विशेष्य)–कोटौ केवलं घटस्यैव प्रवेशाद् विधेय–(विशेषण)–कोटौ घटापेक्षया अधिकस्य नीलस्यापि प्रवेशाद् भानाच्च न अभेदान्वयबोधे काचिदनुपपत्तिः। न चैवम् 'घटो घटः' इत्यत्रापि अभेदान्वयापत्तिरिति वाच्यम्। 'घटो घटः' इत्यत्र उद्देश्यकोटौ विधेयकोटौ च केवलं घटस्यैव प्रवेशाद् घटातिरिक्तनीलादेः अप्रवेशेन अधिकावगाहित्वाभावात्। किं वा यत्र विशेष्यतावच्छेदकता–प्रकारतावच्छेदकता च एकधर्मपर्याप्ता स्यात् तत्र अभेदान्वयबोधं प्रति तद्धर्मभेदस्य हेतुत्वमस्ति नान्यत्र। यथा 'द्रव्यं घटः' इत्यत्र विशेष्यतावच्छेदकता केवलं द्रव्यत्वे पर्याप्तास्ति। प्रकारतावच्छेदकता च केवलं घटत्वे पर्याप्तास्तीति तत्र अभेदान्वयबोधं प्रति तद्धर्मभेदस्य हेतुत्वमस्ति। अस्ति च तत्र द्रव्यत्व–घटत्वयोः परस्परं भेद इति न अभेदान्वयबोध–अनुपपत्तिः। 'घटो नीलघटः' इत्यत्र तु प्रकारतावच्छेदकता न एकधर्म–पर्याप्तास्ति। किं तु नीलत्व–घटत्व–एतदुभयधर्मपर्याप्ता अस्तीति। अत्र अभेदान्वयबोधं प्रति तद्धर्मभेदस्य हेतुत्वाभावाद् विशेष्यतावच्छेदकीभूतस्य घटत्वस्य प्रकारतावच्छेदकीभूतस्य च नीलघटत्वस्य भेदाभावेऽपि अभेदान्वयबोधे न काप्यनुपपत्तिः इत्याह – **अन्यत्र दर्शितरीत्ये**ति। किं वा तद्धर्मवृत्तिः या अभेदसम्बन्धावच्छिन्ना प्रकारता तादृशप्रकारतानिरूपित–विशेष्यतावच्छेदकतात्व–अवच्छिन्न–प्रतियोगिताकपर्याप्ति–अनुयोगितावच्छेदकत्व–सम्बन्धेन शाब्दबुद्धित्व–अवच्छिन्नं प्रति तद्धर्मभेदः कारणम्। तद्धर्मवृत्तित्वं च प्रकारतायां स्वनिरूपितावच्छेदकतात्वावच्छिन्न–प्रतियोगिताक–पर्याप्त्यनुयोगितावच्छेदकत्व–सम्बन्धेन। स्वं अभेदसम्बन्धावच्छिन्ना प्रकारता, 'घटो घटः' इत्यत्र तद्धर्मः =

घटत्वगतैकत्वंए तद्वृत्तिर्या स्वरूपसम्बन्धेन घटनिष्ठा अभेद–सम्बन्धावच्छिन्ना प्रकारता (घटे या स्वरूपसम्बन्धेन अभेदसम्बन्धावच्छिन्ना प्रकारता वर्तते) सा उक्तसम्बन्धेन तद्धर्मे घटत्वगत–एकत्वेऽपि वर्तते। तादृशप्रकारतानिरूपिता या घटनिष्ठा विशेष्यता 'घटो घट' इत्यत्र प्रकारत्वं विशेष्यत्वं च घटस्य एव घटप्रकारक–घटविशेष्यक–बोधस्य एव आपाद्यमानत्वात्) तादृशविशेष्यता–अवच्छेदकता घटत्वे, विवक्षितपर्याप्तिसम्बन्धस्य प्रतियोगिता तादृशविशेष्यता–अवच्छेदकतायां वर्तते। तत्र विशेष्यतावच्छेदकतात्वमपि वर्तते इति सा प्रतियोगिता विशेष्यतावच्छेदकतात्वावच्छिन्ना जाता। तथा च उक्तविशेष्यता–अवच्छेदकतात्वावच्छिन्न–प्रतियोगिताकपर्याप्तेः अनुयोगितावच्छेदकं घटत्वगत–एकत्वम् (विशेष्यतावच्छेदकतायाः पर्याप्तिः घटत्वे विवक्षिता घटत्वम् अनुयोगी अनुयोगितावच्छेदकं घटत्वगत–एकत्वं ग्राह्यम्) इति तन्निष्ठानुयोगिता–अवच्छेदकत्व–सम्बन्धेन (**तद्** = घटत्वगत–एकत्वम्) शाब्दबुद्धित्वावच्छिन्नं प्रति तद्धर्मभेदस्य कारणत्वमस्ति। तच्च 'घटो घटः' इत्यत्र नास्त्येव। विशेष्यतावच्छेदकतात्वावच्छिन्न–प्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकम् अपि घटत्वगत–एकत्वमेव प्रकारतावच्छेदकतात्वावच्छिन्न–प्रतियोगिताक–पर्याप्त्य–नुयोगितावच्छेदकमपि घटत्वगत–एकत्वमेवेति न 'घटो घटः' इत्यत्र अभेदान्वयबोधापत्तिः। घटत्वगतैकत्वयोः पर्याप्त्यनुयोगितावच्छेदकयोः परस्परं भेदाभावात्। एकत्वाश्रयीभूतघटत्वस्य भेदाभावात्। 'घटो नीलघटः' इत्यत्र तु विशेष्यतावच्छेदकतात्वावच्छिन्नप्रतियोगिताक–पर्याप्त्यनुयोगितावच्छेदकं घटत्व–गतैकत्वम्, प्रकारतावच्छेदकतात्वावच्छिन्नप्रतियोगिताक–पर्याप्त्यनुयोगितावच्छेदकं च नीलत्व–घटत्व–एतदुभयगतं द्वित्वमिति एकत्वद्वित्वयोश्च परस्परं भेदात्। तद्धर्मभेदस्य सत्त्वाद् अभेदान्वयबोध उपपद्यते इत्याशयेनाह – **अन्यत्रदर्शितरीत्येति**।

**VV-A 5.3.2:** ननु यदि 'स घटः' इत्यादौ अभेदान्वयबोधोपपत्तये 'यत्र विशेष्यतावच्छेदकता प्रकारतावच्छेदकता च निरवच्छिन्ना स्यात् तत्र एव अभेदान्वयबोधं प्रति तद्धर्मभेदस्य कारणत्वम्' इति स्वीक्रियते यथा 'द्रव्यं घटः' इत्यादौ तदा **'स सः'** इत्यत्र तत्पद--(तत्पद)योः जातिमति शक्तत्वाद् विशेष्यतावच्छेदिका प्रकारतावच्छेदिका च जातिरेव । जातिनिष्ठा हि विशेष्यतावच्छेदकता प्रकारतावच्छेदकता च जातित्वावच्छिन्नास्ति न तु निरवच्छिन्ना इत्यत्र अभेदान्वयबोधं प्रति **तद्धर्मभेदस्य** = विशेष्यतावच्छेदक–प्रकारतावच्छेदक–धर्मयोः किं वा विशेष्यतावच्छेदकतावच्छेदक–प्रकारता–अवच्छेदकतावच्छेदक–धर्मयोः भेदस्य हेतुत्वाभावाद् विशेष्यतावच्छेदकीभूतायाः

प्रकारतावच्छेदकीभूतायाश्च जातेः किं वा विशेष्यतावच्छेदकतावच्छेदकस्य प्रकारतावच्छेदकतावच्छेदकस्य जातित्वस्य भेदाभावेऽपि अभेदान्वयबोधः स्यादेव इत्याशङ्क्याह – **स स** इति। स स इति वाक्यान्निवार्यमाणशाब्दबोधस्य स्वरूपमाह – **जातित्वादी**ति। 'स सः' इत्यस्य 'जातिमान् जातिमान्' इत्यर्थः। तत्र जातिमान् धर्मी, धर्मितावच्छेदिका जातिः। सा च जातित्वावच्छिन्ना इति। जातित्वावच्छिन्ना धर्मितावच्छेदकता यस्य स जातित्वाद्यवच्छिन्नधर्मिता–अवच्छेदकताकः। तथा **तद्धर्मावच्छिन्ना** = जातित्वधर्मावच्छिन्ना–प्रकारतावच्छेदकता यस्य तस्य जातित्वाद्यवच्छिन्नधर्मितावच्छेदकताक–तद्धर्मावच्छिन्नप्रकारतावच्छेदकताकस्य अभेदान्वयबोधस्य 'स सः' इति वाक्यात् संभाव्यमानस्य वारणाय। तद्धर्मावच्छिन्नावच्छेदकताक–प्रकारता–निरूपित–धर्मितावच्छेदकतावच्छेदकत्व–प्रत्यासत्त्या शाब्दबोधं प्रत्यपि तद्धर्मभेदस्य कारणत्वं पृथक् कल्पनीयम्। **तद्धर्मावच्छिन्नावच्छेदकतेति।** तद्धर्मः = जातित्वम्। जातित्वावच्छिन्नावच्छेदकता जातौ। **तादृशावच्छेदकताका** = तादृशावच्छेदकतानिरूपिता प्रकारता द्वितीयतत्पदबोध्ये घटे। तादृशप्रकारता–निरूपितधर्मिता प्रथमतत्पदबोध्ये घटे। धर्मितावच्छेदकत्वं घटत्वरूपजातौ। धर्मितावच्छेदकतावच्छेदकत्वं च जातित्वे। तथा च जातित्वे जातित्वनिष्ठं यत् तद्धर्मावच्छिन्नावच्छेदकताक–प्रकारतानिरूपितधर्मितावच्छेदकतावच्छेदकत्वं तेन सम्बन्धेन शाब्दबोधे जननीये **तद्धर्मभेदः** = प्रकारतावच्छेदकतावच्छेदकभेदः कारणमस्ति। तच्च 'स सः' इत्यत्र नास्ति। अत्र विशेष्यतावच्छेदकतावच्छेदकं तथा प्रकारतावच्छेदकतावच्छेदकं एकं जातित्वमेव। तथा विशेष्यतावच्छेदिका प्रकारतावच्छेदिका चैका जातिरिति तद्धर्मभेदस्य कारणीभूतस्य अभावादेव 'स सः' इत्यत्र न अभेदान्वयबोधापत्तिः इत्यर्थः। अपिः भिन्नक्रम इति 'प्रत्यासत्त्या अपि' इत्यन्वयः।

अस्य कार्यकारणभावस्य उदाहरणं तु 'जातिमान् प्रमेयवान्' इति। अत्र विशेष्यतावच्छेदिका जातिः प्रकारतावच्छेदकं प्रमेयम्। प्रमेयवतः प्रकारत्वात् तयोः परस्परं भेदाद् अभेदान्वयबोधो जायत एव। किं वा विशेष्यतावच्छेदकतावच्छेदकं जातित्वं प्रकारतावच्छेदकतावच्छेदकं च प्रमेयत्वम्। तयोः परस्परं भेदाद् अभेदान्वयबोधो जायते इति। वस्तुतस्तु यत्र प्रकारतावच्छेदकता–विशेष्यतावच्छेदकते उभे अपि निरवच्छिन्ने वा स्यातां सावच्छिन्ने वा स्यातां तत्र अभेदान्वयबोधं प्रति तद्धर्मभेदस्य कारणत्वम्। तथा च 'द्रव्यं घटः' इत्यत्र विशेष्यतावच्छेदक–प्रकारतावच्छेदकयोः द्रव्यत्व–घटत्वयोः उभयोः अपि निरवच्छिन्नत्वात् तद्धर्मभेदस्य कारणत्वम् अस्ति। अस्ति च तद्धर्मभेदो

द्रव्यत्व–घटत्वयोः भिन्नत्वाद् इति अभेदान्वयबोधे न कापि अनुपपत्तिः। 'जातिमान् प्रमेयवान्' इत्यत्र च विशेष्यतावच्छेदक–प्रकारतावच्छेदकयोः उभयोरपि जातिप्रमेययोः जातित्वप्रमेयत्वाभ्यां सावच्छिन्नत्वाद् अभेदान्वयबोधं प्रति तद्धर्मभेदस्य कारणत्वमस्ति। अस्ति च उक्तरीत्या तद्धर्मभेद इति न अभेदान्वयबोधानुपपत्तिः। 'स सः' इत्यत्र च विशेष्यतावच्छेदकता–प्रकारतावच्छेदकते जातिनिष्ठे उभे अपि जातित्वेन सावच्छिन्ने स्तः। न चात्र विशेष्यतावच्छेदक–प्रकारतावच्छेदकयोः भेदोऽस्ति। जातेरेव एकाया विशेष्यता–वच्छेदकत्वात् प्रकारतावच्छेदकत्वाच्च इति कारणीभूतस्य तद्धर्मभेदस्य अभावात् न अभेदान्वयबोधापत्तिः। 'स घटः' इत्यत्र च उक्तरीत्या केवलं विशेष्यतावच्छेदकता एव सावच्छिन्नास्ति। 'घटः सः' इत्यत्र च उक्तरीत्या केवलं प्रकारतावच्छेदकता एव सावच्छिन्नास्ति। न तु विशेष्यतावच्छेदकता–प्रकारतावच्छेदकते उभे सावच्छिन्ने स्तः इति। 'स घटः' 'घटः सः' इत्यादौ तद्धर्मभेदाभावेऽपि अभेदान्वयबोधे न काचिदनुपपत्तिः। 'घटो घटः' इत्यत्र विशेष्यतावच्छेदकता–प्रकारतावच्छेदकते घटत्वनिष्ठे उभे अपि निरवच्छिन्ने स्तः। अतः अत्र अभेदान्वयबोधं प्रति तद्धर्मभेदस्य कारणत्वमस्ति। नास्ति चात्र तद्धर्मभेदो घटत्वस्य एकत्वादिति नात्र अभेदान्वयबोधापत्तिः इत्यवधेयम्।

**VV-A 5.3.3:** यथा 'स सः' इत्यत्र अभेदान्वयबोधो न इष्टः तथा 'दण्डवान् दण्डवान्' इत्यत्रापि अभेदान्वयबोधो न इष्ट इति तद्वारण–उपायमाह – **एवमिति**। पूर्वोक्तापेक्षया अत्र एकावच्छेदकताया अधिकायाः प्रवेशाद् बुद्धिवैशद्यार्थं च पृथक् प्रतिपादनम्। 'दण्डवान् दण्डवान्' इत्यस्य मतुपः सबन्धिनि शक्तेः 'दण्डसंयोगवान् दण्डसंयोगवान्' इत्यर्थः। तत्र प्रथमे दण्डसंयोगवान् । तथा 'दण्डवान्' इति पदे दण्डसंयोगवान् पुरुषो विशेष्यः। तत्र दण्डसंयोगः प्रकारः (विशेषणम्)। दण्डसंयोगे दण्डः प्रकारः। दण्डे दण्डत्वं प्रकारः। द्वितीये 'दण्डसंयोगवान्'। तथा 'दण्डवान्' इतिपदे दण्डसंयोगवान् पुरुषः प्रकारः। तत्र दण्डसंयोगः प्रकारः। तत्र दण्डः प्रकारः। तत्र दण्डत्वं प्रकारः। तथा च दण्डत्वावच्छिन्ना या दण्डनिष्ठा अवच्छेदकता (प्रकारतावच्छेदकता) तन्निरूपिता या संयोगत्वावच्छिन्ना संयोगनिष्ठा अवच्छेद्यता तन्निरूपिता या अभेदसम्बन्धावच्छिन्ना पुरुषनिष्ठा प्रकारता तन्निरूपिता या पुरुषनिष्ठा विशेष्यता तन्निरूपिता या संयोगनिष्ठा अवच्छेदकता (विशेष्यतावच्छेदकता) तन्निरूपिता या दण्डनिष्ठाऽवच्छेदकता तन्निरूपिता या दण्डत्वनिष्ठा अवच्छेदकता तादृशावच्छेदकतासम्बन्धेन दण्डत्वे शाब्दबोधे जननीये **तद्धर्मस्य** = प्रकारतावच्छेदकतावच्छेदकस्य (प्रकारता पुरुषे

पुरुषनिष्ठप्रकारतावच्छेदकता दण्डसंयोगे तदवच्छेदकता दण्डे तदवच्छेदकं दण्डत्वमिति) दण्डत्वादेः धर्मस्य भेदः **पृथक्** = पूर्वापेक्षया पृथक् कारणमस्ति। तच्चात्र नास्त्येव। विशेष्यतावच्छेदकतावच्छेदकतावच्छेदकमपि दण्डत्वमेव। तथा प्रकारतावच्छेदकतावच्छेदकतावच्छेदकमपि दण्डत्वमेव। दण्डत्वस्य ऐक्येन परस्परं भेदाभावात्। 'दण्डवान् दण्डवान्' इत्यत्र **दण्डसंयोगत्वाद्यवच्छिन्नवति** = दण्डसंयोगत्वावच्छिन्नो दण्डसंयोगः तद्वति पुरुषे **तदवच्छिन्नवत्** = दण्डसंयोगत्वावच्छिन्नो यो दण्डसंयोगः तद्वतः पुरुषस्य अभेदान्वयबोधस्य आपत्तिः नास्ति। तद्धर्मभेदरूपकारणाभावाद् इत्यर्थः। **दण्डसंयोगत्वाद्यवच्छिन्न-अवच्छेदकताकेति** = दण्डसंयोगत्वावच्छिन्नो दण्डसंयोगः। तन्निष्ठा या अवच्छेदकता **तादृशावच्छेदकताका** = दण्डसंयोगनिष्ठ–अवच्छेदकता–निरूपिता या प्रकारता = पुरुषनिष्ठा प्रकारता, तादृशप्रकारतानिरूपिता विशेष्यता = पुरुषनिष्ठा विशेष्यता, तादृशविशेष्यतानिरूपिता या **संयोगत्वाद्य-वच्छिन्नावच्छेदकता** = दण्डसंयोगनिष्ठावच्छेदकताए तादृशावच्छेदकता–निरूपिता या अवच्छेदकता = दण्डनिष्ठावच्छेदकता तदवच्छेदकत्वं दण्डत्वंए तेन सम्बन्धेन इत्यन्वयः।

'जातिमद्वान् दण्डवान्', 'दण्डवान् जातिमद्वान्' इत्यादौ अभेदान्वयबोधस्य इष्टत्वादाह – **अवच्छेदकतायामि**ति। अवच्छेदकतायाम् = विशेष्यतावच्छेदकतावच्छेदकतावच्छेदकतायां तथा प्रकारतावच्छेदकता–अवच्छेदकतावच्छेदकतायां निरवच्छिन्नत्वनिवेशः कर्तव्यः। तथा च 'दण्डवान् दण्डवान्' इत्यत्र दण्डत्वे या विशेष्यतावच्छेदकतावच्छेदकतावच्छेदकतास्ति तथा या प्रकारतावच्छेदकता–अवच्छेदकता–अवच्छेदकतास्ति सा निरवच्छिन्नास्ति। दण्डत्वस्य स्वरूपेण एव भासमानत्वाद् इति। तत्र विशेष्यतावच्छेदकता–अवच्छेदकतावच्छेदक–प्रकारतावच्छेदकतावच्छेदकता–अवच्छेदकधर्मयोः भेदस्य अभेदान्वयबोधं प्रति कारणत्वमस्ति। न चास्ति तादृशधर्मयोः भेदः। विशेष्यतावच्छेदकतावच्छेदकतावच्छेदकस्य प्रकारतावच्छेदकतावच्छेकदता–अवच्छेदकस्य दण्डत्वस्य अभिन्नत्वादिति न तत्र अभेदान्वयबोधापत्तिः। 'जातिमद्वान् दण्डवान्', इत्यत्र **जातिमद्वान्** = दण्डंसयोगवान् पुरुषो विशेष्यः। तत्र दण्डसंयोगः तत्र दण्डः तत्र जातिः प्रकारः। जातिश्च जातित्वेन रूपेण भासते इति जातित्वावच्छिन्ना अस्ति। तथा चात्र जातिनिष्ठा विशेष्यतावच्छेदकतावच्छेदकतावच्छेदकता सावच्छिन्ना अस्तीति नात्र तद्धर्मभेदस्य कारणत्वमिति जातेः दण्डत्वरूपत्वेन प्रकारतावच्छेदकता–अवच्छेदकतावच्छेदकस्य दण्डत्वस्य विशेष्यतावच्छेकदतावच्छेदकतावच्छेदिकाया

जातेः च परस्परं भेदाभावेऽपि न अभेदान्वयबोधानुपपत्तिः। तथा 'दण्डवान् जातिमद्वान्' इत्यत्र च जातिनिष्ठा प्रकारतावच्छेदकतावच्छेदकतावच्छेदकता जातित्वावच्छिन्ना अस्तीति विशेष्यतावच्छेदकतावच्छेदकतावच्छेदकस्य दण्डत्वस्य प्रकारतावच्छेदकतावच्छेदकतावच्छेदिकाया जातेः च परस्परं भेदाभावेऽपि न अभेदान्वयबोधानुपपत्तिः इत्यर्थः। 'जातिमद्वान्' इत्यत्र जातिः दण्डत्वम्। तद्वान् दण्डः। तद्वान् पुरुषः। मतुपः च संबन्धिनि शक्तेः दण्डवत्पुरुषे दण्डसंयोगः प्रकारः। तत्र दण्डः। तत्र दण्डे दण्डत्वरूपा जातिः, जातौ च जातित्वं प्रकार इति।

**VV-A 5.4.1:** पृथक् पृथक् कार्यकारणभावान् उक्त्वा संप्रति सर्वानुगतं कार्यकारणभावमाह – **वस्तुतस्त्वि**ति। व्याप्यधर्मावच्छिन्ने कार्ये जननीये व्यापकधर्मावच्छिन्नकार्यस्य सामग्री अपेक्षिता भवति इत्याशयेन यत्र यत्र शाब्दबोधः तत्र तत्र ज्ञानं भवत्येव इति ज्ञानस्य शाब्दबोधव्यापकत्वात् ज्ञानस्य एव कार्यकारणभावमाह – **तद्धर्मे**ति। तद्धर्मपदेन विशेषणकोटिप्रविष्टपदार्थगत–धर्मो ग्राह्यः। यथा प्रकारतावच्छेदकः प्रकारतावच्छेदकतावच्छेदकः प्रकारता–अवच्छेदकतावच्छेदकतावच्छेदक इत्यादि। तदन्यपदेन विशेष्यकोटि–प्रविष्टपदार्थगतधर्मो ग्राह्यः। यथा – विशेष्यतावच्छेदकः विशेष्यतावच्छेदकता–अवच्छेदकः विशेष्यतावच्छेदकतावच्छेदकतावच्छेदक इत्यादि। वस्तुतस्तु यस्मिन् धर्मे द्रव्यत्वादौ तद्गतविषयताविशेषसम्बन्धेन शाब्दबोध उत्पादनीयः तदन्यधर्मो घटत्वादिः तद्धर्मपदेन ग्राह्यः। तदन्यच्च शाब्दबोधाधिकरणं द्रव्यत्वादिकम् अन्यपदेन ग्राह्यम्। एवं च प्रकारताख्यविषयतासम्बन्धेन 'द्रव्यं घटः' इत्यत्र घटत्वे शाब्दबोधे जननीये तद्धर्मपदेन घटत्वान्यद् द्रव्यत्वं ग्राह्यम्। अन्यपदेन द्रव्यत्वान्यद् घटत्वं ग्राह्यम्। विषयतापदेन च शाब्दबोधाधिकरणीभूतपदार्थे यादृशी विषयता स्यात् सा ग्राह्या। यथा – विशेष्यतारूपा विशेष्यतावच्छेदकतारूपा विशेष्यतावच्छेकदतावच्छेदकतारूपेत्यादि। तथा प्रकारतारूपा प्रकारतावच्छेदकतारूपा, प्रकारतावच्छेदकतावच्छेदकतारूपा इत्यादि। तथा च 'द्रव्यं घटः' इत्यत्र घटत्वान्यद् यद् द्रव्यत्वं तस्मिन् तन्निष्ठविशेष्यतावच्छेदकताख्यविषयतासम्बन्धेन शाब्दबोधे जननीये तद्धर्मभेदस्य घटत्वभेदस्य हेतुत्वं प्राप्तम्। अस्ति चात्र घटत्व–द्रव्यत्वयोः भेद इति अभेदान्वयबोधे न काप्यनुपपत्तिः। तथा प्रकारतावच्छेदकताख्यविषयतासम्बन्धेन घटत्वेऽपि अभेदान्वयबोधे अनुपपत्तिः नास्ति, द्रव्यत्व–घटत्वयोः भेदात्। 'घटो नीलघटः' इत्यत्रापि घटत्व–नीलघटत्वयोः भेदस्वीकारे तु अभेदान्वयबोधः अनेन नियमेन अपि संभवति। भेद–अस्वीकारे पूर्वं शाब्दबोधप्रकार उपपादित एव।

'घटो घटः' इत्यत्र घटत्वे अभेदान्वयबोधः तु न संभवति। **तद्धर्मभेदाभावात्** = घटत्वस्य एव प्रकारतावच्छेदकत्वाद् विशेष्यता- वच्छेदकत्वाच्चेति सर्वं सुस्थम्।

स्वयमपि 'घटो घटः' इत्यत्र उक्तनियमेन अभेदान्वयबोधापत्ति- अभावम् आह – **एवं चेति**। **एवं च** = "तद्धर्मान्यवृत्तिविषयतासम्बन्धेन" इति नियमे कृते 'घटो घटः' इत्यत्र घटस्य एव प्रकारत्वाद् विशेष्यत्वाच्च घटत्वावच्छिन्ना या घटनिष्ठा प्रकारता तन्निरूपिता या घटनिष्ठा विशेष्यता तदवच्छेदकत्वं घटत्वे इति घटत्वनिष्ठविशेष्यतावच्छेदकतासम्बन्धेन शाब्दबोधे जननीये शाब्दबोध- व्यापकस्य ज्ञानत्वावच्छिन्नज्ञानस्य सामग्री अपेक्षिता भवति। सा च सामग्री तद्धर्मभेद एव। 'घटो घटः' इत्यत्र च तद्धर्मभेदरूपा सामग्री नास्तीति न अभेदान्वयबोधापत्तिः इत्यर्थः। यत्र घटत्वे विशेष्यतावच्छेदकतासंबन्धेन शाब्दबोध आपादनीयः तत्र घटत्वे घटत्वान्यत्वमेव नास्ति येन तद्धर्मान्यवृत्तिविषयतायाः सम्बन्धत्वं तादृशसबन्धेन शाब्दबोधश्च स्यादिति भावः। **तादृशविषयतासम्बन्धेन** = घटत्वान्यवृत्तिविषयतासम्बन्धेन। **ज्ञानत्वावच्छिन्नोत्पादकसामग्री** = तद्धर्मभेदः, ज्ञानाधिकरणीभूतपदार्थे तदन्यत्वं चेति। **तत्र** = 'घटो घटः' इत्यत्र। **तादृशविशेष्यतावच्छेदकतासम्बन्धेन** = घटत्वनिष्ठविशेष्यतावच्छेदकता- सम्बन्धेन।

'तद्धर्मान्यवृत्तिविषयतासम्बन्धेन शाब्दबोधं प्रति तद्धर्मभेदस्य कारणत्वम्' इत्युक्ते 'घटो घटः' इत्यत्र तद्धर्मान्यवृत्तिविषयतासम्बन्धेन शाब्दबोधस्य इष्टत्वाभावात् तद्धर्मभेदाभावेऽपि पुनरपि अभेदान्वयबोधापत्तिः स्याद् एवेति शाब्दबोधव्यापकीभूतज्ञानं प्रति तद्धर्मभेदस्य हेतुत्वम् उक्तम्। तथा च व्याप्यकार्यं प्रति व्यापककार्यसामग्र्या अपेक्षानियमात् 'घटो घटः' इत्यत्र अभेदान्वयबोधे जननीये तद्धर्मान्यवृत्तिविषयतासम्बन्धेन व्यापकीभूतज्ञानस्य सामग्र्या अपेक्षा प्राप्ता। सा च सामग्री अत्र नास्ति एवेति न अभेदान्वयबोधापत्तिः। तद्धर्मान्यवृत्तिविषयता-सम्बन्धेन ज्ञानसामग्री च न केवलं तद्धर्मभेद एव किं तु सम्बन्धभूतविषयतायाः तद्धर्मान्यवृत्तित्वम् अपीति ज्ञेयम्। अयं भावः – यत्र तद्धर्मान्यवृत्तिविषयतासम्बन्धेन ज्ञानं प्रति केवलतद्धर्मभेदस्य सामग्रीत्वस्वीकारे तद्धर्मान्यवृत्तिविषयतासम्बन्धेन ज्ञानम् आपादनीयं भविष्यति, तत्रैव तु तद्धर्मभेदस्य हेतुत्वं भविष्यतिए यथा – 'द्रव्यं घटः' इत्यादौ। 'घटो घटः' इत्यत्र तद्धर्मान्यवृत्तिविषयता-सम्बन्धेन ज्ञानम् आपादनीयम् एव नास्तिए येन अभेदान्वयबोधानुपपत्तिः स्यात्। किं तु तद्धर्मवृत्तिविषयतासम्बन्धेनैव ज्ञानमापादनीयम् अस्तीति 'घटो घटः' इत्यत्र अभेदान्वयबोधं प्रति तद्धर्मभेदस्य

अपेक्षाभावात्। तद्धर्मभेदाभावेऽपि अभेदान्वयबोधः स्याद् एवेति तदापत्तिपरिहाराय ज्ञानसम्बन्धभूताया विषयतायाः तद्धर्मान्यवृत्तित्वमपि सामग्रीकुक्षौ निवेशनीयम्। तथा च 'घटो घटः' इत्यत्र घटत्वे एव ज्ञानमापादनीयम्। घटत्वनिष्ठायाश्च विशेष्यतावच्छेदकताख्यविषयतायाः ज्ञानसम्बन्धभूतायाः तद्धर्मान्यवृत्तित्वं हेतुभूतं नास्त्येव। प्रकारतावच्छेदकघटत्ववृत्तित्वेन तदन्यवृत्तित्वाभावाद् इति न अत्र ज्ञानस्य तद्व्याप्याभेदान्वयबोधस्य च आपत्तिः।

**VV-A 5.4.2:** उक्तनियमेन लाघवान्तरमाह – **एवं चे**ति। एवं च = तद्धर्मान्यवृत्ति–विषयतासम्बन्धेन ज्ञानं प्रति तद्धर्मभेदत्वेन हेतुत्वाङ्गीकारे च **'घटवान् घटवान्'** इत्यत्र अभेदान्वयबोधवारणाय अभेदान्वयबोधं प्रति तद्धर्मभेदस्य पृथग् हेतुत्वकल्पनापेक्षा नास्ति। अत्र हि घटवानेव विशेष्यः प्रकारश्च। तत्र घटवान् धर्मी। धर्मितावच्छेदको घटः। धर्मितावच्छेदकतावच्छेदकं घटत्वमिति धर्मितावच्छेदकतावच्छेदकं यद् घटत्वं तन्निष्ठा या धर्मिता–अवच्छेदकतावच्छेदकतारूपा **प्रत्यासतिः** = सम्बन्धः, तेन घटत्वे शाब्दबोधे जननीये तद्धर्मभेदस्य हेतुत्वमस्ति। नास्ति चात्र तद्धर्मभेद एकस्य घटत्वस्य एव विशेष्यता(धर्मिता)–अवच्छेदकतावच्छेदकत्वात् प्रकारतावच्छेदकतावच्छेदकत्वात् चेत्यर्थः। एवम् 'दण्डवान् दण्डवान्' इत्यत्रापि दण्डत्वे विशेष्यतावच्छेदकता–अवच्छेदकतावच्छेदकत्व–प्रत्यासत्त्या शाब्दबोधे जननीये तद्धर्मभेदस्य हेतुत्वम् अस्ति। नास्ति चात्र तद्धर्मभेदः। एकस्य दण्डत्वस्य एव विशेष्यता–अवच्छेदकता–अवच्छेदकतावच्छेदकत्वात् प्रकारतावच्छेदकतावच्छेदकता–अवच्छेदकत्वात् च इत्यर्थः।

**VV-A 5.4.3:** **एवमि**ति। 'एकः' इत्यत्र एकपदवाच्या एकत्वेन घटादिव्यक्तिः एव। एकपदोत्तर–वर्तमानविभक्तेः अप्येकत्वमर्थ इति विभक्तेः सार्थकत्वे 'एकः' इत्यस्य 'एकत्ववान् एकत्ववान्' इत्यर्थः स्यात्। (प्रथम एकत्ववानिति प्रकृतेः अर्थो, द्वितीय एकत्ववान् इति विभक्तेः अर्थः)। तत्र एकत्ववती घटव्यक्तिम् उद्दिश्य एकत्वविधानाद् उद्देश्या एकव्यक्तिः। उद्देश्यतावच्छेदकम् एकत्वम्। विधेयम् अपि एकत्वमेव स्यात्। तथा च अत्र उद्देश्यतावच्छेदकस्य विधेयस्य च ऐक्यं प्राप्तम्। उद्देश्यभूतव्यक्तौ एकत्वादिसंख्याया अन्वयश्च समवायसम्बन्धेन भवति। समवायश्च भेदसम्बन्ध एव। एवं च 'एकः' इति वाक्यात् प्रकृतिभूत–एकपदवाच्ये एकत्वावच्छिन्ने एकव्यक्तीभूतघटादौ एकपदोत्तरप्रथमार्थ–एकत्वरूपसंख्यायाः भेदान्वयः स्याद इति अत्र उद्देश्यतावच्छेदक–विधेययोः ऐक्येन एकत्वावच्छिन्ने एकत्वस्य यो

भेदान्वयबोधः प्राप्तः तस्य अनुदयात् = तादृशभेदान्वयबोधोत्पत्तेः अनिष्टत्वात् तद्वारणाय इदानीं एकत्वत्वनिष्ठेन एकत्वत्वावच्छिन्न–समवायसम्बन्धावच्छिन्न–प्रकारता–निरूपित–विशेष्यतानिरूपित–समवायसम्बन्धावच्छिन्न–अवच्छेदकता–अवच्छेदकत्व–लक्षणसम्बन्धेन शाब्दबोधं प्रति एकत्वत्वभेदस्य पृथग् हेतुत्वकल्पनापेक्षा नास्ति। उक्तनियमेन एव उक्तशाब्दबोध–वारणसंभवात्। एकत्वत्वस्य परस्परं भेदाभावात्। वस्तुतस्तु शाब्दबोधसम्बन्धस्य एव एकत्वत्वान्यवृत्तित्वं नास्ति, एकत्वत्ववृत्तित्वाद् एवेति नात्र एकत्वावच्छिन्नव्यक्तौ प्रथमार्थ–एकत्वस्य समवायेन अन्वयबोधापत्तिः। भवति च 'एकः' इति प्रयोग इति संख्यावाचक–एकादिपदोत्तर–वर्तमानविभक्तेः निरर्थकत्वम् एव। (इदं चाग्रे संख्यान्वयविचारस्थले द्रष्टव्यम्)। तथा च प्रकृतिभूत–एकपदेन एव एकत्वेन रूपेण घटादिव्यक्तेः उपस्थितिः भवतीति विज्ञेयम्। एवं 'द्वौ' इत्यत्रापि उद्देश्यतावच्छेदकं द्वित्वं विधेयमपि द्वित्वं विभक्त्यर्थः। 'द्वित्ववान् द्वित्ववान्' इत्यर्थः। तत्र उद्देश्यतावच्छेदकविधेययोः ऐक्येन द्वित्वावच्छिन्ने व्यक्तिद्वये द्विवचनार्थद्वित्वसंख्याया यो भेदान्वयबोधः प्राप्तः तस्य अनुदयात् = तादृशभेदान्वयबोधोत्पत्तेः अनिष्टत्वात् तद्वारणाय द्वित्वत्वनिष्ठेन द्वित्वत्वावच्छिन्न–समवायसम्बन्धावच्छिन्न–प्रकारतानिरूपित–विशेष्यता–निरूपित–समवाय–सम्बन्धावच्छिन्न–अवच्छेदकतावच्छेदकत्व–लक्षणसम्बन्धेन शाब्दबोधं प्रति द्वित्वत्वभेदस्य पृथग् हेतुत्वकल्पनापेक्षा नास्ति। उक्तनियमेन एव उक्तशाब्दबोध–वारणसंभवात्। द्वित्वत्वस्य परस्परं भेदाभावाद् एकत्वादिति नात्र द्वित्वावच्छिन्नव्यक्तौ द्विवचनार्थद्वित्वस्य समवायेन अन्वयबोधापत्तिः। भवति च 'द्वौ' इति प्रयोग इति द्विवचनं निरर्थकमेव। तथा च प्रकृतिभूतद्विपदेन एव द्वित्वेन रूपेण द्वित्वविशिष्टरूपेण वा घटादिव्यक्तेः उपस्थितिः भवति। **एकत्वत्वेति** = एकत्वत्वावच्छिन्ना तथा समवायसम्बन्धावच्छिन्ना या विभक्त्यर्थ–एकत्वनिष्ठा प्रकारता तादृशप्रकारतानिरूपिता या एकपदवाच्यव्यक्तिनिष्ठा विशेष्यता तादृशविशेष्यता–निरूपिता, तथा समवायसम्बन्धावच्छिन्ना या एकत्वनिष्ठा अवच्छेदकता (उक्त–विशेष्यतावच्छेदकता) तदवच्छेदकत्वम् एकत्वत्वे इति एकत्वत्वनिष्ठं यद् विशेष्यतावच्छेदकतावच्छेदकत्वं तेन सम्बन्धेन इत्यन्वयः। एवं 'द्वौ' इत्यत्र एकपदस्थाने द्विपदं निवेश्य अन्वयो विज्ञेयः। **''एकत्वत्व-द्वित्वत्वादिभेदस्य''** इत्यस्य **''हेतुत्वान्तरकल्पनम् अनादेयमेव''** (VV-5.4.4) इति अग्रिमवाक्येन सहान्वयः।

**VV-A 5.4.4:** 'ग्रामं गच्छति' इत्यत्र शाब्दबोध इष्टः। तत्र ग्राम आधेयतासम्बन्धेन द्वितीयार्थकर्मतायां प्रकारः। प्रकारतावच्छेदकं ग्रामत्वम्। कर्मता

विशेष्यम्। विशेष्यतावच्छेदकं कर्मतात्वम्। ग्रामस्य कर्मपदार्थत्वेन कर्मपदवाच्यत्वे अपि 'कर्म गच्छति' इति प्रयोगः तु न इष्ट इत्याशयेनाह – **एवमिति**। 'कर्म गच्छति' इत्यत्र प्रकृतिभूतकर्मपदस्य कर्मत्वावच्छिन्ने शक्तिः। कर्मपदोत्तर–लुप्तद्वितीयायाः कर्मत्वत्वावच्छिन्ने कर्मत्वे शक्तिः। तथा च प्रत्ययार्थस्य प्राधान्यात् कर्मत्वत्वावच्छिन्ने द्वितीयार्थकर्मत्वे आधेयतासम्बन्धेन (कर्मत्वे आधेयत्वम् अस्ति)। **तद्वतः** = कर्मत्ववतः = कर्मत्वाच्छिन्नकर्मपदवाच्य–कर्मपदार्थस्य भेदान्वयबोध–वारणाय कर्मत्वत्वाच्छिन्न–अवच्छेदकताक–आधेयतासम्बन्धावच्छिन्न–प्रकारता–निरूपित–धर्मितावच्छेदकतालक्षण–सम्बन्धेन कर्मत्वत्वनिष्ठेन शाब्दबोधं प्रति कर्मत्वत्वभेदस्य पृथग् हेतुत्वकल्पनापेक्षा नास्ति। उक्तनियमेन एव उक्तशाब्दबोधवारणसंभवात्, शाब्दबोधाश्रयत्वेन अभिमतधर्मितावच्छेदकस्य कर्मत्वत्वस्य प्रकारतावच्छेदकतावच्छेदकस्य च कर्मत्वत्वस्य ऐक्येन भेदाभावात्। यथा 'एकः' इत्यत्र उद्देश्यतावच्छेदकस्य विधेयस्य च एकत्वस्य ऐक्यात् न उक्तशाब्दबोध इष्टः। तथा अत्र विशेष्यतावच्छेदकस्य प्रकारता–अवच्छेदकतावच्छेदकस्य कर्मत्वत्वस्य ऐक्येन भेदाभावाद् उक्तशाब्दबोधा–पत्तिवारणं कृतम्। **कर्मत्वत्वेति** = कर्मत्वत्वावच्छिन्ना या कर्मत्वनिष्ठा अवच्छेदकता तादृशावच्छेदकेन अवच्छिन्ना या आधेयत्वसम्बन्धावच्छिन्ना कर्मनिष्ठा प्रकारता तादृश–प्रकारतानिरूपिता या कर्मतानिष्ठा धर्मिता, तादृश–धर्मितानिरूपिता या कर्मतात्वनिष्ठा अवच्छेदकता, तादृशावच्छेदकता–सम्बन्धेन (कर्मतात्वे शाब्दबोधे जननीये) इत्यन्वयः। "कर्मत्वत्वादिभेदस्य" इत्यस्यापि "हेतुत्वान्तरकल्पनमनादेयम्" (VV-5.4.4) इत्यग्रिमवाक्येन सहान्वयः।

'घटो न घटः' इत्यत्र धर्मी घटः। तत्र प्रकारो घटभेदः। प्रकारतावच्छेदको घटः। प्रकारतावच्छेदकतावच्छेदकं घटत्वम्। धर्मितावच्छेदकम् अपि घटत्वमेव। घटे समवायेन घटत्वं प्रकारः। घटभेदे घटत्व–अवच्छिन्नप्रतियोगिताकत्व–सम्बन्धेन घटः प्रकारः। स च भेदः स्वरूपसम्बन्धेन घटे विशेष्ये प्रकार इति पदार्थनिर्देशः। घटे च घटभेदो न भवति इत्यत्र शाब्दबोधस्य अनुमितेश्च घटे घटभेदानुमितेः वारणाय घटत्वनिष्ठेन घटत्वावच्छिन्न–भेदनिष्ठ–प्रकारता–निरूपित–धर्मितावच्छेदकतालक्षण–सम्बन्धेन शाब्दबोधं प्रति घटत्वभेदस्य पृथग् हेतुत्वकल्पनापेक्षा नास्ति। उक्तनियमेन एव वारणसंभवाद् धर्मितावच्छेदकं प्रकारतावच्छेदकतावच्छेदकं च एकं घटत्वमेव। घटत्वे च घटत्वभेदाभावात् तद्धर्मान्यवृत्तिविषयतासम्बन्धेन ज्ञानसामान्यं प्रति तद्धर्मभेदस्य हेतुत्वाद् अनुमितेः अपि वारणं जातम् इत्यर्थः। **घटत्वावच्छिन्नेति**।

**घटत्वावच्छिन्नभेदः** = घटत्वावच्छिन्नप्रतियोगिताकभेदः तन्निष्ठा या प्रकारता तादृशप्रकारतानिरूपिता या घटनिष्ठा धर्मिता तादृशधर्मितावच्छेदकं घटत्वम्‌ए घटत्वनिष्ठा या एषा धर्मितावच्छेदकता तादृशसम्बन्धेन इत्यन्वयः। **हेतुत्वान्तरकल्पनम् अनादेयम्** = पृथक् हेतुत्वकल्पनापेक्षा नास्ति। अत्र हेतुमाह – **तद्धर्मभेदस्य** इति। तद्धर्मभेदनिष्ठया **एककारणतयैव** – "तद्धर्मान्यवृत्तिविषयतासम्बन्धेन ज्ञानं प्रति तद्धर्मभेदस्य हेतुत्वात्" (VV-5.4.1) इत्युक्तेन एकेन एव कार्यकारणभावेन **सकलातिप्रसङ्गानान्** = 'घटो घटः' 'दण्डवान् दण्डवान्' इत्यादौ शाब्दबोधापत्तीनां वारणसंभवाद् इत्यर्थः।

।। इत्यभेदान्वयव्युत्पत्तिवादादर्शः समाप्तः ।।

श्रीगणेशाय नमः

# व्युत्पत्तिवादः

# जयाव्याख्या

गदाधरं श्रीगिरिजां गणेशं प्रणम्य विश्वेश्वरपादपद्मम्।
शिष्यप्रियश्रीजयदेवमिश्रो व्युत्पत्तिवादस्य तनोति टीकाम्।।१।।
सन्त्यस्य टीका विविधास्तथाऽपि परिश्रमो निष्फलतां न यायात्।
द्राक्षाफले सत्यपि किं रसज्ञैर्नास्वाद्यते हृद्यरसो रसालः।।२।।

**VV-J 1.1.1:** घटादिपदात् पटादिविषयक-शाब्दबोधवारणाय तत्पदजन्य-तद्विषयक शाब्दबोधं प्रति तत्पदजन्य-तद्विषयक-उपस्थितिः कारणं वाच्यम्। घटपदात् पटोपस्थितेरभावात् न तद्विषयकशाब्दबोधः। घटपदादेः समवाय-सम्बन्धेन सम्बन्धि आकाशविषयक-उपस्थितिबलात् आकाश-विषयक-शाब्दबोध-वारणाय तत्पदजन्य-शाब्दबोधे तत्पदनिष्ठवृत्तिज्ञानाधीन-तद्विषयक-उपस्थितिः कारणम्। आकाश-उपस्थितेः वृत्तिज्ञानजन्यत्व-अभावात् न शाब्दबोध-जनकत्वम्। 'नीलो घट' इत्यादौ अभेदादेः घटादिपदनिष्ठ-वृत्तिज्ञानाधीन-उपस्थिति-अभावेन शाब्दबोधस्य च सत्त्वेन व्यभिचारः स्यात् इति अभेदादौ अपि घटादिपदस्य शक्तिरूपेयते अन्विताभिधानवादिभिः। तथा च अभेदादेः पदार्थद्वयसंसर्गस्यापि वृत्तिज्ञानाधीन-उपस्थितेः सत्त्वात् न व्यभिचारः। परन्तु एतादृश-कार्यकारणभावेऽपि घटादिपदात् घटविशेष्यक घटत्वप्रकारकस्य इव घटप्रकार-घटत्वविशेष्यक-शाब्दबोधस्यापि बाधकाभावात् आपत्त्या तत्पदजन्य-तत्प्रकारक-तद्विशेष्यक-शाब्दबोधं प्रति तत्पदनिष्ठ-वृत्तिज्ञानाधीन-तत्प्रकारक-तद्विशेष्यक-उपस्थितिः कारणं वाच्यम्। तथा च घटादिपदात् घटप्रकारक-घटत्वविशेष्यक-उपस्थितेः अभावात् न तादृश-शाब्दबोधापत्तिः। इत्थञ्च पदार्थद्वयसंसर्गनिष्ठ-शाब्दबोधीय-विषयतायाः किञ्चिन्निष्ठ-प्रकारता-निरूपित-विशेष्यतानात्मकतया तादृशसंसर्गस्य वृत्तिज्ञाना-धीन-उपस्थिति-अभावेऽपि व्यभिचाराप्रसक्त्या तत्र पदानां वृत्ति-कल्पनम् अयुक्तम् एवेति नैयायिकाः। परन्तु एतेषां मते पदार्थद्वय-संसर्गभान-नियामकाभावेन सर्वत्र अबाधितसकलसंसर्गभान-सम्भवेन 'नीलो घट' इत्यादौ अभेदादेः इव स्वस्वामिभावादेः अपि भानापत्तिः इति शङ्कानिरासाय स्वमते नियामकम् उच्यते - **शाब्दबोधे चैत्यादिना**। **च-शब्दः** तु-अर्थे। संसर्गपदानन्तरं स बोध्यः। **एकपदार्थ**

इत्यत्र अनुयोगिता सप्तम्यर्थः। तत्र वृत्तित्वसम्बन्धेन प्रकृत्यर्थस्य अन्वयः। तस्याः च निरूपकत्वसम्बन्धेन संसर्गपदार्थेऽन्वयः। **अपरपदार्थस्य** वृत्तित्वसम्बन्धेन षष्ठ्यर्थप्रतियोगित्वे तस्य च निरूपकत्वसम्बन्धेन संसर्गपदार्थे अन्वयः। **शाब्दबोध** इत्यत्र निरूपितत्वं सप्तम्यर्थः। तेनैव सम्बन्धेन शाब्दबोधस्य भासधात्वर्थ-विषयतायाम् अन्वयः। तस्याम् एव निरूपितत्वसम्बन्धेन **संसर्गमर्यादा**-पदार्था-ऽऽकाङ्क्षान्वयि-तृतीयार्थप्रयोज्यत्वस्य स्वरूपसम्बन्धेन अन्वयः। तस्याः च आख्यातार्थ-आश्रयत्वे निरूपितत्वेन तस्य च **संसर्ग**पदार्थे स्वरूपेण अन्वयः। तथा च एकपदार्थनिष्ठानुयोगितानिरूपकः अपरपदार्थ-निष्ठप्रतियोगिता-निरूपकः संसर्गः शाब्दबोध-निरूपिता आकाङ्क्षा-निरूपितप्रयोज्यत्व-विशिष्टा या विषयता तन्निरूपित-आश्रयत्वविशिष्ट इति संसर्गमुख्यविशेष्यको बोधः। शाब्दबोधे एक-पदार्थानुयोगिक-अपरपदार्थप्रतियोगिक-संसर्गभासिका समभिव्याहाररूपा-ऽऽकाङ्क्षा एव न तु प्रकारविशेष्ययोः इव शक्तिः इति पर्यवसितोऽर्थः। उद्देश्यतावच्छेदक-व्यापकत्वं नियमेन विधेये भासते। तेन एकपदार्थानुयोगिक-अपरपदार्थ-प्रतियोगिक-संसर्गत्वव्यापकत्वम् आकाङ्क्षाप्रयोज्य-शाब्दबोधीय-विषयताश्रयत्वे लभ्यते। तेन आकाङ्क्षाम् अन्तरा कुत्रापि शाब्दबोधे एकपदार्थेऽपरपदार्थस्य संसर्गो न भासते। पश्वादिपदजन्य-शाब्दबोधे लाङ्गूलानुयोगिक-लोमप्रतियोगिक-संसर्गस्य शक्तिभास्य-आकाङ्क्षाप्रयोज्य शाब्दबोधीय-विषयता-श्रयत्वाभावेन निरुक्तव्यापकत्वानुपपत्तिः स्यात्। अत **एकपदार्थेऽपरपदार्थस्य** इति अनयोः संसर्गविशेषणत्वम्। न च अनुमितौ प्रत्यक्षे च 'भूतलं घटवद्' इत्यादौ भूतलानुयोगिक-घटप्रतियोगिक-संयोगादौ तादृशसंसर्गत्वरूप-उद्देश्यतावच्छेदकस्य सत्त्वेऽपि विधेयभूतस्य निरुक्तविषयताश्रयत्वस्य अभावेन व्यापकत्वानुपपत्तिः तदवस्था एव इति वाच्यम्। एकपदार्थानुयोगिकापरपदार्थ-प्रतियोगिक-संसर्गवृत्ति-संसर्गताख्य-शाब्दबोधीय-विषयताम् उद्दिश्य आकाङ्क्षाप्रयोज्यत्वस्य एव विधानेन अनुपपत्ति-अभावात्। न च निरुक्तविषयतायाः तेन रूपेण अभानात् कथं तेन रूपेण उद्देश्यता इति चेत् ? न। उद्देश्यता-विधेयतयोः विशेष्यता-प्रकारतानात्मकतया उद्देश्यत्वे उद्देश्यतावच्छेदकरूपेण भासमानत्वस्य अतन्त्रत्वात्।

अथ **एकपदार्थ** इति अत्रत्य एकत्वस्य **अपरपदार्थ** इति अत्रत्य अपरपदार्थस्य च कुत्र अन्वयः? पदे पदार्थे वा? न आद्यः। तथा सति एकं यत्पदं तदर्थ-अनुयोगिकः अपरं यत्पदं तदर्थप्रतियोगिकः संसर्ग इति बोधः। तत्र अपरत्वं भेदः। स च यदि एकपदत्वावच्छिन्न-प्रतियोगिताकः तदा अप्रसिद्धिः। एकपदत्वस्य पदमात्रवृत्तित्वात्। यदि एकपदनिष्ठ-प्रतियोगिताकः तर्हि अव्यावर्त्तकत्वं द्वित्वादिना एकपदनिष्ठप्रतियोगिताक-भेदस्य स्वस्मिन् अपि सत्त्वात्। न च पदविशिष्टः संसर्ग

आकाङ्क्षाभास्यः। वैशिष्ट्यं (१)स्वार्थानुयोगिकत्वं(२)स्वनिष्ठप्रतियोगिताक-भेदवत् यत्पदं तदर्थप्रतियोगिकत्वम् इति उभयसम्बन्धेन। तत्र भेदः तद्व्यक्तित्वावच्छिन्न-प्रतियोगिताक इति ग्रन्थकृतः तात्पर्यम् इति वाच्यम्। घटपद-पशुपदादि-स्थले घटत्वादि-संसर्गस्य व्यवच्छेदेऽपि एव-पदस्थले दोषात्। तत्र हि न अन्ययोगव्यवच्छेदत्वावच्छिन्न-निरूपिता शक्तिः, अन्ययोग-व्यवच्छेदाप्रसिद्धेः। किन्तु अन्ययोगे व्यवच्छेदे च खण्डशः शक्तिः। व्यवच्छेदे अन्ययोगस्य स्वनिष्ठप्रतियोगिताकत्वरूपः संसर्ग आकाङ्क्षाभास्यः। तत्र पदान्तरस्य अभावेन तत्संसर्गस्य असंग्रहापत्तिः। न अन्त्यः। तत्पक्षे यद्यपि आद्यपक्ष-उक्तदोषद्वयवारणाय पदार्थविशिष्टः संसर्ग इत्यत्र एव तात्पर्य वक्तुं शक्यते। वैशिष्ट्यञ्च स्वानुयोगिकत्व-स्वेतरार्थप्रतियोगिकत्व-उभयसम्बन्धेन। एव-स्थले पदार्थयोः अन्ययोगव्यवच्छेदयोः भेदेन दोषाभावः। तथापि अभेदान्वयस्थले 'नीलो घट' इत्यादौ प्रतियोगिन एवानुयोगित्वेन दोषात् इति चेत् ? अत्र उच्यते। धर्मविशिष्टः संसर्गः संसर्गमर्यादया भासते। वैशिष्ट्यं (१)स्वावच्छिन्नानुयोगिता-निरूपकत्व-(२)स्वेतरधर्मावच्छिन्न-प्रतियोगितानिरूपकत्व-उभयसम्बन्धेन। एव-शब्दस्थले च व्यवच्छेदत्वधर्म-अन्ययोगत्वधर्मौ आदाय समन्वयः। ननु एवम् अपि पशुपदे लाङ्गूलत्वम् आदाय लोमप्रतियोगिक-संसर्गे अपि शक्तिभास्ये धर्मविशिष्टसंसर्गत्वरूप-उद्देश्यतावच्छेदकस्य सत्त्वेऽपि आकाङ्क्षाभास्यत्वरूप-विधेयस्य अभावेन उद्देश्यतावच्छेदकव्यापकत्वस्य आकाङ्क्षाभास्यत्वरूपे भङ्गापत्तिः। 'राज्ञो राजा राजराज' इत्यादौ वाक्ये समासे स्वस्वामिभावरूप-संसर्गस्य राजत्वे राजत्वभेदाभावेन आकाङ्क्षाभास्यत्व-अनापत्तिश्च। 'समवायेन अभावो नास्ति' इत्यादौ नञर्थाभावे अभावपदार्थप्रतियोगिकस्य स्वनिष्ठप्रति-योगिताकत्वस्य अभावत्वप्रतियोगिकस्य स्वावच्छिन्नप्रतियोगिताकत्वस्य च संसर्गस्य आकाङ्क्षाभास्यत्वानापत्तिश्च। प्रतियोगितावच्छेदकस्य अभावत्वस्य अनुयोगितावच्छेदकाभावत्व-भिन्नत्वाभावात्। अभावत्वनिष्ठप्रतियोगितायाश्च निरवच्छिन्नत्वात् इति चेत् ? न। उपस्थितीयविशेष्यताविशिष्टः संसर्ग इति अर्थेन अदोषात्। वैशिष्ट्यञ्च (१)स्वप्रयोज्यविशेष्यतानिरूपकत्व-(२)स्वनिरूपित-त्वाभाववद्-उपस्थितीयविषयता-प्रयोज्यप्रकारता-निरूपकत्व-उभयसम्बन्धेन। घट-पश्वादिस्थले च समवायसम्बन्धीयप्रकारता-विशेष्यता-प्रयोजकयोः उपस्थितीय-घटत्व-घटनिष्ठयोः प्रकारता-विशेष्यतयोः लाङ्गूल-निष्ठविशेष्यता-लोमनिष्ठ-प्रकारता-प्रयोजकयोः उपस्थितीयलाङ्गूल-लोमनिष्ठ-विशेष्यतयोश्च निरूप्य-निरूपकभावात्। 'राज्ञो राजे'त्यादौ 'समवायेन अभावो नास्ति' इत्यादौ अपि प्रतियोगि - अनुयोगिवाचक - विभिन्नराजपदजन्य-उपस्थितीय-राजनिष्ठविषयतयोः अभाव-नञ्पदजन्योपस्थितीय-अभावनिष्ठ-विषयतयोश्च शाब्दबोधीय-प्रकारता-

विशेष्यता-प्रयोजकयोः अभिन्नतया निरूप्य-निरूपक-भावविरहात्। न च अभावत्व-प्रतियोगिक-स्वावच्छिन्नप्रतियोगिताकत्व-संसर्गस्य असंग्रह एव। अभावपद-जन्योपस्थितीय-अभावत्वनिष्ठविषयताया नञ्पदजन्योपस्थितीय-अभावनिष्ठविषयता-निरूपित-अभावत्वनिष्ठ-विषयताभेदे मानाभावेन अभावनिष्ठविषयतानिरूपितत्वात् इति वाच्यम्। अभावस्य एव स्ववृत्ति-अभावत्वावच्छिन्न-प्रतियोगिताकत्वसम्बन्धेन नञर्थ-अभावे अन्वयात्। स्वप्रयोजकवृत्तिज्ञानीय-विषयत्वानिरूपित-वृत्तिज्ञानीयविषयता-प्रयोज्योपस्थितीय-विषयताप्रयोज्य-प्रकारतानिरूपकत्व-सम्बन्धस्य द्वितीयसम्बन्धस्थाने निवेशनीयत्वाच्च। अभावपदनिष्ठवृत्तिज्ञानीयविषयताया नञ्पदनिष्ठवृत्तिज्ञानीय-विषयतया निरूप्यनिरूपकभावविरहेण असङ्ग्रह-असम्भवात्। न च समवायस्य एकत्वेन घट इत्यादौ विभक्त्यर्थ-एकत्वप्रतियोगिक-आकाङ्क्षाभास्य-समवायात् अभिन्नस्य घटत्वप्रतियोगिक-समवायस्य वृत्तिभास्यस्य संग्रहापत्तिः। एकत्वप्रतियोगिक-समवायस्य उपस्थितीयविषयता-विशिष्टत्वे घटत्वप्रतियोगिकस्य तस्य न तत्त्वम् इत्यस्य वक्तुम् अशक्यत्वात् इति वाच्यम्। समवायस्य एकत्वे एकत्वप्रतियोगिकसमवाय आकाङ्क्षाभास्यो घटत्वप्रतियोगिकः समवायो न आकाङ्क्षाभास्य इत्यस्यापि वक्तुम् अशक्यतया इष्टत्वस्य एव अङ्गीकरणीयत्वात्। न च घटत्वनिष्ठप्रकारतानिरूपिता समवायनिष्ठा संसर्गता आकाङ्क्षाप्रयोज्या इति व्यवहारापत्तिः। तस्या घटपदनिष्ठ-वृत्तिप्रयोज्यत्वस्य एव सत्त्वेन इष्टापत्तेः अयोगात्। निरुक्त-उपस्थितीयविषयताविशिष्टसंसर्गनिष्ठसंसर्गताया एव आकाङ्क्षा-प्रयोज्यत्वात् इति वाच्यम्। उपस्थितीयविषयताविशिष्टा संसर्गता आकाङ्क्षा प्रयोज्या इत्यत्र एव तात्पर्यात्। वैशिष्ट्यं स्वप्रयोज्यविशेष्यता-निरूपितत्व-स्वप्रयोजकवृत्तिज्ञानीय-विषयत्वानिरूपित-वृत्तिज्ञानीयविषयता-प्रयोज्य-उपस्थितीय-विषयताप्रयोज्य-प्रकारतानिरूपितत्व-उभयसम्बन्धेन। समवाय-एकत्वेऽपि संसर्गतयोः भेदेन आकाङ्क्षाप्रयोज्यत्व- अप्रयोज्यत्वयो उपपत्तेः इति दिक्।

'वृत्तिज्ञानीयविषयत्वाप्रयोज्या संसर्गता आकाङ्क्षाप्रयोज्या'। 'उपस्थितीय-विषयत्वाप्रयोज्या शाब्दबोधीया संसर्गता आकाङ्क्षाप्रयोज्या' इत्याद्यपि वक्तुं शक्यते इति केचित्। तन्न। 'नीलो घट' इत्यादि-वाक्यजन्यज्ञानविषयः अभेदो वृत्तिभास्य आकाङ्क्षाभास्यो वा इति संशये नैयायिकेन आकाङ्क्षाभास्य इति उच्यते। मीमांसकेन वृत्तिभास्य इति उच्यते। तस्मिन् समये वृत्तिभास्यत्वस्य वृत्ति-अभास्यत्वस्य वा निश्चयाभावेन वृत्ति-अभास्यत्वादेः आकाङ्क्षाभास्यत्व-उद्देश्यतावच्छेदके प्रवेशा-नर्हत्वात्। 'घटो नास्तीति न' इत्यत्र घटसत्ताभावाभावः प्रतीयते। नञ्द्वयनिष्ठ-वृत्तिज्ञानयोः समान-आकारकतया तदीयविषयतयोः अभावद्वय-उपस्थितिद्वय-विषयताप्रयोजकतया नञर्थाभावत्वनिष्ठप्रकारता प्रयोजक-उपस्थितीय-विषयता-

प्रयोजक-वृत्तिज्ञानीयविषयताया अपरनञर्थाभावनिष्ठ-विशेष्यताप्रयोजक-उपस्थिति-विषयताप्रयोजक-वृत्तिज्ञानीयविषयता-निरूपितत्वा-भावविरहेण स्वावच्छिन्न-प्रतियोगिताकत्वसंसर्गस्य असंग्रहस्तु न आपाद्यः। तत्र घटसत्ताभावत्वस्य एव अवच्छिन्नप्रतियोगितया अन्वयेन तन्निष्ठप्रकारता-प्रयोजकत्वस्य परम्परया घटनिष्ठवृत्तिज्ञानीयविषयताया अपि सत्त्वेन तस्याश्च अभावनिष्ठविशेष्यता-प्रयोजकवृत्तिज्ञानीयविषयता-निरूपितत्वविरहेण आपत्ति-अभावात् इति दिक्।

**VV-J.1.2.1:** स च संसर्गः क इति जिज्ञासायाम् आह - **क्वचिदभेद** इत्यादि। आधाराधेय-इत्यादेः प्रत्येकं भाव-इत्यत्र अन्वयेन आधाराधेयभावः प्रतियोग्यनुयोगिभावो विषयविषयिभाव इत्यर्थः। यद्यपि न्यायसिद्धान्ते आधाराधेयभाव इत्यादेः समुदितस्य न सम्बन्धता क्वचिदस्ति तथापि वैयाकरणमतेन अस्य ग्रन्थस्य सत्त्वात् न असंगतिः। तन्मते 'सम्बन्धो हि सम्बन्धिभ्यां भिन्नः, द्विष्ठ' इत्यादिभाष्यात् प्रतियोग्यनुयोगिनिष्ठस्य एव आधारतानिरूपित-आधेयता इत्यादिभाष्यात् प्रतियोग्यनुयोगिनिष्ठस्य एव आधारतानिरूपित-आधेयता-इत्यादिक्रमेण समुदायस्य सम्बन्धत्वात्। 'भूतले घटः', 'घटो नास्ति', 'घटज्ञानम्' इत्यादौ क्रमेण तेषां सम्बन्धानां प्रतीतिः। न च न्यायमतेन एव आधारत्वम् आधेयत्वं प्रतियोगित्वम् अनुयोगित्वं विषयत्वं विषयित्वं सम्बन्ध इत्यर्थसम्भवेन अयं ग्रन्थोऽस्तु स्वरूपसम्बन्धेन आधारे निरूपकत्वसंबन्धेन आधेये सत्त्वेन आधारत्वादेः अपि द्विष्ठत्वस्य उपपादनसम्भवात् इति वाच्यम्। अनुयोगिनिष्ठस्य एव सम्बन्धत्वेन आधेयत्व-अनुयोगित्व-विषयित्वानां सम्बन्धत्वे अपि आधारत्व-प्रतियोगित्व-विषयत्वानां संसर्गतया क्वचिदपि अभानात्। यद्यपि द्विष्ठत्वाभावेन अभेदस्य वैयाकरणमते सम्बन्धत्वाभावः तथापि विशिष्ट-बुद्धित्वहेतुक-अनुमितिसिद्धस्य 'नीलो घट' इत्यादौ नीलविशिष्टघटबुद्धौ सम्बन्धा-वगाहित्वस्य अन्यथा अनुपपत्त्या तस्य सम्बन्धत्वं कल्प्यते नैयायिकैः इति भावः।

**VV-J. 2.1.1:** दुरधिगमेऽस्मिन् शास्त्रे शिष्यस्य झटिति प्रवेशाय अभेदस्य सूचीकटाहन्यायेन उद्देशक्रमेण च संसर्गतया भानस्थलं तावदाह - **प्रातिपदिकार्थे** इत्यादि। अनुयोगित्वं सप्तम्यर्थः। तत्र प्रकृत्यर्थस्य वृत्तित्वसम्बन्धेन, तस्य च अभेदे निरूपकत्वसम्बन्धेन अन्वयः। उपस्थापितस्य इत्यत्र वृत्तित्वसम्बन्धेन प्रकृत्यर्थान्वितषष्ठ्यर्थ-प्रतियोगित्वस्य च निरूपकत्वसम्बन्धेन तत्रैव अभेदे अन्वयः। तथा च प्रातिपदिकार्थनिष्ठानुयोगितानिरूपकः स्वसमानविभक्तिक-स्वाव्यवहितपूर्व-अन्यतर-पदोपस्थाप्य-अर्थनिष्ठ-प्रतियोगितानिरूपकाभेद आकाङ्क्षा-प्रयोज्य-संसर्गताश्रय इत्यर्थः। अननुगमवारणाय प्रातिपदिकविशिष्टः अभेद आकाङ्क्षा-प्रयोज्यसंसर्गताश्रय इत्यर्थ इति वक्तव्यम्। वैशिष्ट्यञ्च (१)स्वप्रयोज्यविशेष्यता-

निरूपकत्व-(२)स्वविशिष्टपदप्रयोज्यप्रकारता-निरूपकत्व-उभयसम्बन्धेन। तत्र वैशिष्ट्यं (१)स्वप्रकृतिकविभक्ति-सजातीयविभक्ति-प्रकृतित्व-(२)स्वाव्यवहित-पूर्ववृत्तित्व-अन्यतरसम्बन्धेन। 'नीलो घट' इत्यादौ घटरूपप्रातिपदिकविशिष्टो भेदः। तत्र घटरूप-प्रातिपदिकस्य नीले अन्यतरघटक आद्यः सम्बन्धः। 'नीलघट' इत्यादौ समासे च घटस्य नीले द्वितीयः सः। अत्र न अभेदत्वावच्छेदेन प्रातिपदिक-विशिष्ट-आकाङ्क्षाप्रयोज्यसंसर्गतावत्त्वं विधीयते। अत्र प्रातिपदिक-वैशिष्ट्यं पूर्वोक्तसम्बन्धेन एव संसर्गतायां बोध्यम्। तथा सति अभेदत्व-व्यापकत्वं तादृशसंसर्गतारूपविधेये प्रतीयेत। तच्च न सम्भवति। 'स्तोकं पचति' इत्यादि-क्रियाविशेषणस्थले व्यभिचारात्। किन्तु प्रातिपदिकप्रयोज्य-विशेष्यतानिरूपित-अभेदनिष्ठ-संसर्गतात्वावच्छेदेन प्रातिपदिकविशिष्टपद-प्रयोज्यप्रकारतानिरूपितत्व-विशिष्टम् आकाङ्क्षाप्रयोज्यत्वं विधीयते। प्रातिपदिकवैशिष्ट्यं पूर्ववत्। निरूपितत्ववैशिष्ट्यं सामानाधिकरण्येन। न च क्रियाविशेषणस्थलीय-अभेदसंसर्गताया असंग्रह इति वाच्यम्। इष्टापत्तेः। तत्र नियामकान्तरस्य एव वक्ष्यमाणत्वात्। न च 'अर्द्धपिप्पली' इत्यादिपूर्व-पदार्थप्रधानसमासे व्यभिचारः। तत्र एकदेशिसमासस्य प्रत्याख्यानेन पूर्वपदार्थ-अर्द्ध-अनुयोगिक-पिप्पलीरूप-उत्तरपदार्थप्रतियोगिक-अभेदस्य संसर्गमर्यादया भासमानत्वादिति वाच्यम्। अन्यतरसम्बन्धस्थाने स्वाव्यवहितोत्तरत्वस्य पूर्वोक्तसम्बन्ध-द्वयसहितस्य अन्यतमत्वेन प्रवेशनीयत्वात्। पिप्पल्यादिपदस्य एव पिप्पल्यर्द्धादौ लक्षणा। पूर्वपदञ्च तत्रैव तात्पर्यग्राहकम् इत्यस्य वक्ष्यमाणत्वेन अभेदस्य आकाङ्क्षाभास्यत्व-अभावात् च।

न तु **विरुद्धविभक्तिमदिति**। विरुद्धत्वञ्च स्वप्रकृतिकविभक्ति-अपेक्षया बोध्यम्। तत्त्वञ्च - तादृशविभक्तिनिष्ठो यः प्रथमात्वादि-अन्यतमः तदभाववत्त्वम्। यथा 'नीलस्य घट' इत्यादौ घटप्रकृतिक-सु-विभक्तिनिष्ठ-प्रथमात्वादि-अन्यतमः प्रथमात्वं तदभाववत्त्वं नीलप्रकृतिक-ङस्-विभक्तौ।

तत्र हेतुमाह - **'नीलस्य घट' इत्यादौ नीलघट-अभेदान्वयबोधस्य सर्वानुभवविरुद्धत्वादिति**। प्रयोज्यत्वं सप्तम्यर्थः। तस्य स्वप्रकारकत्व-सम्बन्धेन अनुभवे अन्वयः। अनुभवविरुद्धत्वञ्च अनुभवविषयत्वाभावरूपम्। तथा च नीलघटाभेदान्वयबोधस्य 'नीलस्य घट' इत्यादिवाक्यप्रयोज्यत्व-प्रकारको यः सर्वानुभवः तद्विषयत्वाभावात् इत्यर्थः। नीलघटाभेदान्वयबोधो 'नीलस्य घट' इत्यादिवाक्यप्रयोज्य इत्याकारक-अनुभवाभावात् इति भावः।

**VV-J. 2.2.1:** प्रातिपदिकवैशिष्ट्य-नियामकसम्बन्धघटक-स्वसमान-विभक्तिकत्वं किम् इति आशङ्कायाम् आह - **स्वसमानविभक्तिकत्वञ्चेति**।

**विभक्तिविभाजकेति**। स्वनिष्ठो यो विभक्तिविभाजकः प्रथमात्वादि-अन्यतमो धर्मः तद्वत्त्वम् इत्यर्थः। ननु किमिदं विभक्तिविभाजकत्वम् ? न तावद्विभक्तित्वविशिष्टत्वं स्वव्याप्यत्व-स्वव्याप्याव्याप्यत्व-उभयसम्बन्धेन। विभक्तित्वव्याप्य-सुप्त्व-व्याप्यत्वेन प्रथमात्वादेः विभक्तिविभाजकत्व-अनापत्तेः। न च विभक्तित्वव्याप्यत्वम् एव विभक्तिविभाजकत्वमिति प्रथमात्वादौ नं अव्याप्तिः इति वाच्यम्। सुत्वादीनामपि विभक्तित्वव्याप्यत्वेन तत्त्वापत्तेः। न च इष्टापत्तिः। आकाशत्वादौ अपि तथा सति पदार्थविभाजकत्वस्य एष्टव्यतया 'आकाशत्वञ्च न पदार्थविभाजकोपाधिः' इति **मुक्तावली**-प्रत्यक्षखण्डोक्तग्रन्थस्य असङ्गत्या आपत्तेः। ननु अत्र विभक्तिपदं सुप्-परम्। तथा च सुब्-विभाजकधर्मेण इत्यर्थः। सुब्-विभाजकत्वञ्च सुप्त्वव्याप्यत्वे सति सुप्त्वव्याप्यत्वम् इति न प्रथमात्वादौ अव्याप्तिः इति चेत् ? न। सुप्त्वव्याप्य-सर्वनामस्थानत्व-व्याप्यत्वेन तस्या दुर्वारत्वात्। न च नपुंसक-प्रकृतिक-सु-आदौ सर्वनामस्थानत्व-अभाववति प्रथमात्वस्य सत्त्वेन तदव्याप्यत्वात् अदोष इति वाच्यम्। टा-आदि-सुप्-पर्यन्तस्थितेन सुप्त्व-व्याप्येना आप्त्वेन व्याप्यत्वात् तृतीयात्वादौ अव्याप्तेः दुर्वारत्वात्।

अत्र उच्यते - सुप्त्वविशिष्टत्वं सुप्-विभाजकत्वम्। वैशिष्ट्यञ्च स्वव्याप्यत्व-स्वव्याप्याव्याप्यत्व-उभयसम्बन्धेन। द्वितीयसम्बन्धघटके स्वव्याप्ये स्वव्याप्यविशिष्टभिन्नत्वमपि देयम्। तत्र वैशिष्ट्यं स्वसामानाधिकरण्य-स्वाभाव-सामानाधिकरण्य-उभयसम्बन्धेन। प्रथमात्वादौ सुप्त्वस्य स्वव्याप्यत्वं स्वव्याप्यविशिष्टभिन्नं यत्स्वव्याप्यं तद्-अव्याप्यत्वम् अपि अस्तीति लक्षण-समन्वयः। आप्त्वं तु तृतीयात्वविशिष्टम् एव। उदासीने घटत्वादौ अतिव्याप्तिवारणाय प्रथमः सम्बन्धः। न च स्वस्यापि स्वव्याप्यत्वेन सुप्त्वे अतिव्याप्तिः। आद्यसम्बन्धस्थाने स्वभिन्नत्व-स्वव्याप्यत्व-उभयसम्बन्धेन स्वविशिष्टत्वनिवेशनात्। सुत्वादौ अतिव्याप्ति-वारणाय द्वितीयः सम्बन्धः। सुप्त्वव्याप्यं यदाप्त्वं तद्व्याप्यत्वेन तृतीयात्वादौ अव्याप्त्यापत्त्या द्वितीयसम्बन्ध-घटके स्वव्याप्ये स्वव्याप्य-विशिष्टभिन्नत्वं निवेशितम्। आप्त्वे सुप्त्वव्याप्य-तृतीयात्वादि-विशिष्टत्वमेव न तु तद्विशिष्टभिन्नत्वम्। यत आप्त्वस्य तृतीयात्वसामानाधिकरण्यं टादिकम् आदाय तदभावसामानाधिकरण्यं ङे-प्रभृतिम् आदाय। तेन आप्त्वव्याप्यत्वेऽपि निरुक्त-अव्याप्यत्वेन तृतीयात्वादौ अव्याप्त्यभावः। न च सुत्वादौ सुप्त्वव्याप्यप्रथमात्वादि-व्याप्यत्वात् एव अतिव्याप्तिभङ्गो वाच्यः। स च न सम्भवति। प्रथमात्वादेः हि 'सु', 'औ' एतदन्यतरत्वादिकं सुप्त्वव्याप्यं तद्विशिष्टत्वमेव। न तु तद्भिन्नत्वमिति वाच्यम्। स्वव्याप्यविशिष्टभिन्नत्वस्थाने स्वविशिष्टविशिष्टभिन्नत्वस्य निवेशनात्। तत्र चरमवैशिष्ट्यं पूर्वोक्तम् एव। आद्यञ्च

स्वव्याप्यत्व-स्वव्याप्याघटितत्व-उभयसम्बन्धेन। तथा च निरुक्त-अन्यतरत्वम् आदाय न उक्तदोषः। तस्य सुप्त्वव्याप्यत्वेऽपि सुप्त्वव्याप्येन सुत्वेन घटितत्वात्। न च एवमपि सु-अम्-एतदन्यतरत्वे अतिव्याप्तिः। तत्र सुप्त्वव्याप्यत्व-सुप्त्वव्याप्या-व्याप्यत्वयोः सत्त्वात् इति वाच्यम्। स्वव्याप्याघटितत्वस्य अपि तृतीयस्य सुप्त्ववैशिष्ट्यघटकस्य स्वीकारेण तादृश-अन्यतरत्वादेः सुप्त्वव्याप्य-सुत्वादिघटितत्वेन अतिव्याप्ति-अभावात्। तथा च सुप्त्वविशिष्टो धर्मः सुब्विभाजकः। वैशिष्ट्यञ्च स्वविशिष्टत्व-स्वविशिष्टाव्याप्यत्व-स्वव्याप्या-घटितत्व-एतत्-त्रितयसम्बन्धेन। आद्ये स्वव्याप्यत्व-स्वभिन्नत्व-उभयसम्बन्धेन वैशिष्ट्यम्। द्वितीये स्वव्याप्यत्व-स्वविशिष्ट-विशिष्टभिन्नत्व-उभयसम्बन्धेन वैशिष्ट्यम्। तत्र आद्यवैशिष्ट्यं स्वव्याप्यत्व-स्वव्याप्याघटितत्व-उभय-सम्बन्धेन। द्वितीय-वैशिष्ट्यं स्वसामानाधिकरण्य-स्वाभावसामानाधिकरण्य-उभयसम्बन्धेन। सर्वेषां विशेषणानां फलानि पूर्वम् उक्तानि।

ननु एवं सति विभक्तिविभाजकः प्रथमात्वादिक एव। तथा च प्रथमात्वादिकथनं व्यर्थमेव इति चेत् ? न। पर्यवसितस्य एव स्पष्टतया कथनात् स्ववृत्तिः यः प्रथमात्वाद्यन्यतमो धर्मः तद्वत्त्वम्, स्ववृत्तिर्यः सुप्विभाजकः तद्वत्त्वं वा साजात्यमिति कथनेऽपि क्षत्यभावः। सुप्त्वविशिष्टसंख्यावत्त्वं सुब्विभाजकत्वम्। संख्यायां सुप्त्ववैशिष्ट्यं (१)स्वव्यापक-(२)स्वव्याप्यवृत्तित्व-(३)स्वाव्याप्यावृत्तित्व-(४)स्वव्याप्यविशिष्टभिन्नत्व-एतच्चतुष्टयसम्बन्धेन। व्याप्यतावच्छेदकः स्वरूप-सम्बन्धो व्यापकतावच्छेदकश्च स्वाश्रयाश्रयत्वसम्बन्धः। सा च सङ्ख्या प्रथमात्वादिषु सप्तसु वर्त्तमाना सप्तत्वसंख्या, तद्वत्त्वं प्रथमात्वादिषु सप्तसु। यत्र यत्र स्वरूपसम्बन्धेन सुप्त्वं तत्र तत्र स्वाश्रयाश्रयत्वसम्बन्धेन प्रथमात्वादिनिष्ठं सप्तत्वमिति व्याप्तिः। तस्याञ्च सङ्ख्यायां सुप्त्वस्य व्यापकत्वं, तस्य व्याप्यं प्रथमात्वादि, तद्-वृत्तित्वं तस्य अव्याप्यं घटत्वादि, तदवृत्तित्वं तस्य व्याप्यं प्रथमात्वादि, तद्वैशिष्ट्यं नास्ति। यतो वैशिष्ट्यं स्ववृत्तित्वस्वेतर-स्वसमानाधिकरणवृत्तित्व-उभयसम्बन्धेन। तत्र आद्यसम्बन्धसत्त्वेऽपि द्वितीयो नास्तीति तद्विशिष्टभिन्नत्वं सङ्ख्यायाम् इति लक्षणसमन्वयः। प्रथमात्वादिगतषट्त्व-निरासाय स्वव्यापकत्वम्। सुत्वसहित-प्रथमात्वादिगत-अष्टत्ववारणाय स्वव्याप्यविशिष्ट-भिन्नत्वं बोध्यम् इत्यपि केचित्।

न तु **समानानुपूर्वीकत्वम्** इति। तथा सति हि स्वप्रकृतिकविभक्ति-समानानुपूर्वीकविभक्तिकेन इत्यर्थः स्यात्। तथा च 'वेदाः प्रमाणम्' इत्यादौ दोषः। स्वसमान-आनुपूर्वीकत्वञ्च स्वघटकावृत्तिश्रावण-प्रत्यक्ष-विषयतावच्छेदक-धर्मावच्छिन्नाघटितत्व-स्वघटकावृत्तिश्रावणप्रत्यक्ष-विषयतावच्छेदक-धर्मावच्छिन्ना-

घटितत्व-सम्बन्धावच्छिन्नस्वनिरूपितवृत्तितावत्त्व-उभयसम्बन्धेन। स्वविशिष्टत्वं यथा घट-समानानुपूर्वीको 'घटः', तत्र 'स्वं घटः' तद्घटको घ-शब्दः घ-कारोऽकारः, ट-शब्दः ट-कारः अ-कारश्च। तदवृत्तिः श्रावणप्रत्यक्षविषयतावच्छेदको धर्मः पत्वादिः, तदवच्छिन्न-पकाराद्यघटितत्वं घटशब्दे। स्वस्मिन् घटशब्दे द्वितीयो घटशब्दः पूर्वोक्तसम्बन्धेन वर्त्तते इति तत्सम्बन्धावच्छिन्न-स्वनिरूपित-वृत्तितावत्त्वम् अपि अस्तीति लक्षणसमन्वयः। घटशब्दे नीलघटसमुदायसमानानुपूर्वीकत्व-वारणाय द्वितीयः सम्बन्धः। तत्र समुदाये हि तेन सम्बन्धेन घटशब्दस्य अवर्त्तनात् तत्समुदायनिरूपित-तत्सम्बन्धावच्छिन्न-वृत्तितावत्त्वस्य घटशब्दे अभावः। 'ताल-लता' 'सर-रस'-इत्यादीनां च न समानानुपूर्वीकत्वम्। तालशब्दघटकावृत्ति-श्रावणप्रत्यक्षविषयतावच्छेदको धर्मो ल-शब्दोत्तर-त-कारत्वं तदवच्छिन्नलत-शब्दघटितत्वस्य एव लताशब्दे सरशब्द-घटकावृत्तिः तादृशो धर्मो र-शब्दोत्तर-स-कारत्वं तदवच्छिन्न-रस-शब्दघटितत्वस्य एव रसशब्दे सत्त्वादिति दिक्। **बोधानुपपत्तेरिति**। तृतीयान्त-'सुन्दराभ्यां' समभिव्याहृतचतुर्थ्यन्त-'घटाभ्याम्' इत्यतोऽपि समानानुपूर्वीकत्वसत्त्वात् अभेदान्वय-बोधापत्तेश्च इत्यपि बोध्यम्। सिद्धान्ते तु प्रथमात्वादिना साजात्यविरहात् न दोषः।

**VV-J. 2.2.2:** ननु 'नीलो घटा' इत्यादौ अभेदान्वयवारणाय तत्र समानवचनत्वस्य प्रयोजकतया 'वेदाः प्रमाणम्' इत्यतो बोधस्य एव अभाव इति तदनुरोधः असङ्गत इति आह - **नन्विति**। **सदैकत्व** इति। सदैकवचनान्ता इत्यर्थः। **असति बाधक** इति। नियतवचनत्वानुशिष्टभिन्न-विशेष्यविशेषण-वाचकपदयोः समानवचनत्वम् अभेदान्वयप्रयोजकम् इत्यर्थः। समानलिङ्गकत्वञ्च स्ववृत्ति-पुंल्लिङ्गत्व-स्त्रीलिङ्गत्व-नपुंसकलिङ्गत्व-अन्यतमधर्मवत्त्वम्। पुंलिङ्ग-त्वादिकञ्च पुंस्त्व-स्त्रीत्व-नपुंसकत्व-बोधकत्वम् एव। पुंस्त्वादिकञ्च प्राणी-अप्राणिसाधारणं सत्त्वादिगुणानाम् उपचय-अपचय-साम्यरूपम्, प्राणिवृत्ति च लिङ्गयोनितदभावरूपम्। तत्र गुणदोषौ अप्रकृतत्वात् विस्तरभयाच्च न विचार्यते।

**VV-J. 2.2.3-4: इति हेतुस्तदुद्भव** इति।

'शक्तिर्निपुणता लोककाव्यशास्त्राद्यवेक्षणात्।
काव्यज्ञशिक्षयाऽभ्यास इति हेतुस्तदुद्भवे'।।

इति कारिका। शक्तिः संस्कारविशेषः, लोककाव्यशास्त्राद्यवेक्षणजन्या निपुणता व्युत्पत्तिविशेषः, यः काव्यं करोति जानाति च तदुपदेशेन काव्यकरणयोजनादौ पौनःपुन्येन प्रवृत्तिः अभ्यासः, इति त्रयः समुदिता हेतुः इति तस्या अर्थः।

**VV-J. 2.2.5: यत्र विशेष्यवाचकेत्यादि**। **यत्रेति** वाक्य इति शेषः। घटकत्वं सप्तम्यर्थः पदे अन्वेति। **वाचकेति** बोधकेत्यर्थः। तेन लाक्षणिकविशेष्यपदस्य न

असङ्ग्रहः। उत्तरत्वं च उत्तरत्वेन अनुसन्धीय-मानत्वम्। तेन दध्यादिविशेष्यबोधक-पदोत्तरविभक्तेः असत्त्वेऽपि न दोषः, तदनुसन्धानस्य सत्त्वात्। विभक्तिपद-अनुपादाने विशेष्यवाचकपदोत्तर-यत्किञ्चित्पदतात्पर्येत्येव कथने 'सुन्दरं दधि' 'बहवो गुणा' इत्यादौ सौन्दर्य एकत्वविवक्षायां विशेष्यवाचक-दधिपदोत्तर-बहुपदतात्पर्यविषय-बहुत्वविरुद्ध-एकत्वस्य विवक्षिततया समानवचनत्वानुपपत्तिः। विभक्तिनिवेशे तत्तात्पर्यविषय-एकत्वसंख्याविरुद्धत्व-असम्भवात् न दोष इति तु न युक्तम्। उक्तग्रन्थेन तादृशाविवक्षितत्वे समानवचनत्वव्याप्यत्वस्य एव लाभेन व्याप्यविरहस्य व्यापकाभाव-आपादकत्वासम्भवात्। अयोगोलके धूमाभावेऽपि वह्न्य-भावादर्शनात्। किन्तु विभक्तिपदं स्पष्टार्थमेव। 'प्रमाणं वेदशाखा', 'एकत्वं प्रमेयम्' इत्यादौ विशेष्यवाचकपदाव्यवहितोत्तरत्वनिवेशेन एव अन्यत्रावश्यकेन निर्वाहात् विभक्तितात्पर्यविषय इत्यस्य विभक्तिजन्य-बोधविषयत्वेन इच्छाविषयेत्यर्थः। यथाश्रुते तु 'वेदाः प्रमाणम्' इत्यादौ अपि प्रमाणपदोत्तरविभक्तिजन्यबोधविषयत्वेन इच्छाविषयीभूत-एकत्वे वेदपदोत्तर-जस्-पदजन्यबोधविषयो बहुत्वं घटादिपदोत्तर-सु-पदजन्यबोधविषय एकत्वञ्च भवतु इति समूहालम्बनात्मकतात्पर्यस्यापि विशेष्यवाचकपदोत्तर-विभक्तितात्पर्य्यत्वात् तद्विषय-एकत्वसंख्याविरुद्धत्व-अभावेन विशेष्यवाचक-पदोत्तरविभक्तितात्पर्य-विषयसंख्या-विरुद्धसंख्याविवक्षितत्व-अभावसत्त्वेन समानवचनत्वापत्तिः। इदानीन्तु एकत्वस्य वेदपदोत्तर-जस्-पदजन्यबोध-विषयत्वेन इच्छाविषयत्वाभावात् न दोषः। संख्याविरुद्धत्वञ्च संख्या-असामानाधिकरण्यं तादृशतात्पर्यविषयतावच्छेदकसंख्यात्वव्याप्य-धर्मावच्छिन्नभिन्नत्वं वा। **अविवक्षितत्वमिति**। विशेषणवाचकपदोत्तरविभक्त्या अविवक्षितत्वम् इत्यर्थः। **तत्र** इत्यस्य तद्वाक्ये इत्यर्थः। सप्तम्यर्थ-घटकत्वस्य विशेष्यविशेषणपदयोः अन्वयः। तथा च यद्वाक्यघटक-विशेष्यबोधकपदोत्तर-विभक्तिजन्यबोधविषयत्वेन इच्छीय-विशेष्यतावच्छेदकसंख्यात्वव्याप्यजात्यवच्छिन्न-भिन्नसंख्याया विशेषण-बोधक-पदोत्तरविभक्त्या अविवक्षितत्वं तद्वाक्यघटक-विशेष्यविशेषणपदयोः समान-वचनत्वम् इत्यर्थः। समानवचनत्वञ्च स्वोत्तरविभक्तिवृत्ति-एकवचनत्व-द्विवचनत्व-बहुवचनत्व-अन्यतमधर्मवद्विभक्तिकत्वम्। न च एवं 'सुन्दरो घटम्' इत्यादौ अपि समानवचनत्वसत्त्वात् अभेदान्वयापत्तिः इति वाच्यम्। समानविभक्तिकत्वस्य अपि प्रयोजकत्वात्। समानानुपूर्वीकत्वस्य एव वा समानवचनत्वरूपत्वात्। 'घटो द्रव्यम्' इत्यादौ च स्थानि-वृत्ति-आनुपूर्वीम् आदाय समानवचनत्वोपपादनसम्भवात्। तात्पर्यानिवेशे विभक्त्यर्थसंख्या-विरुद्धेत्याद्यर्थे कुत्रचित् जस्-विभक्तेः अपि एकत्वादौ लक्षणया एकत्वमपि वेदपदोत्तर-

जस्विभक्त्यर्थः। तद्विरुद्धायाः प्रमाणपदोत्तर-विभक्त्यर्थसंख्यायाः अभावेन विशिष्टाभावस्य सत्त्वेन समानवचनत्वापत्तिः।

ननु विशेषणवाचकपदोत्तरविभक्त्या यत्र संख्यायाः अविवक्षा तत्र समानवचनत्वम् इति एतावता एव निर्वाहे विरुद्धान्तनिवेशस्य किं प्रयोजनम् इति चेत् ? अत्र उच्यते - यत् वेदत्वे एकत्वविवक्षया एक-वचनान्तविशेष्यवाचक-वेदघटितं प्रमाणत्वे एकत्व-विवक्षया एकवचनान्त-विशेषण-वाचकप्रमाणपदघटितं 'वेदः प्रमाणम्' इति वाक्यं तत्र समानवचनत्व-अनुपपत्तिः। विशेषणवाचक-पदोत्तरविभक्त्या संख्यायाः विवक्षितत्वात्। विरुद्धान्तनिवेशे विशिष्टाभावस्य सत्त्वेन अनुपपत्त्यभावः।

ननु यत्र विशेष्यवाचकेत्यादिग्रन्थेन अविवक्षितत्वस्य समान-वचनत्वव्याप्यतायाः एव लाभेन विवक्षास्थले समानवचनत्वसत्त्वे क्षत्यभाव इति चेत्? इदमत्र बोध्यम्। 'नीलो घटः' इत्यतोऽभेदान्वयवारणाय भेदान्वये विशेष्यवाचकपदसमानवचनत्वं विशेषणवाचकपदवृत्तिप्रयोजकम्। विशेषणपदोत्तर-विभक्त्यर्थसंख्याविवक्षास्थले 'वेदाः प्रमाणम्' इत्यादौ व्यभिचारवारणाय अविवक्षास्थलीयाभेदान्वये समानवचनत्वं प्रयोजकम् इति वक्तव्यम्। तथा च प्रमाणत्वगत-एकत्वतात्पर्यक-सु-अन्तप्रमाणपदघटितात् 'प्रमाणं वेद' इति वाक्यात् अभेदान्वयवारणाय संख्याविवक्षा-स्थलीयाभेदान्वये विशेष्यवाचकपदोत्तरवचन-भिन्नवचनकविशेषणवाचक-पदत्वं प्रयोजकम् इत्यपि वक्तव्यम्। ततः च उक्ते 'वेदः प्रमाणम्' इति स्थले व्यभिचारवारणाय संख्यायां विरुद्धान्तं निवेशनीयम्। एवं विभज्य कथने ग्रन्थविस्तरः स्यात्। अतो विशेष्यवाचकपदोत्तरविभक्तितात्पर्यविषय-संख्या-विरुद्धसंख्यायाः विशेषणवाचकपदोत्तरविभक्त्या अविवक्षा यत्र तत्र समानवचनत्वम् इत्येव उक्तमिति।

केचित्तु 'स्तोकं पचत' इत्यादौ विशेषणवाचक-स्तोक-पदोत्तरविभक्त्या संख्यायाः अविवक्षितत्वात् समानवचनत्वापत्तिः। विरुद्धान्त-निवेशे तु विशेष्यवाचकपच्-धातुपद-अव्यवहितोत्तर-विभक्ति-अभावेन तादृशविभक्तितात्पर्य-संख्याविरुद्धादि-विवक्षापर्यन्त-अप्रसिद्ध्या तदभावस्य अपि अप्रसिद्धत्वेन समानवचनत्व-अभाव इति विरुद्धान्त-निवेशस्य फलमिति आहुः। तन्न। 'स्तोकम् अत्त' इत्यादौ विशेष्यवाचकात् धातोः अव्यवहितोत्तरविभक्तेः सत्त्वेन विवक्षितत्व-अभावपर्यन्तस्य प्रसिद्ध्या समानवचनत्वापत्तेः विरुद्धान्तनिवेशेऽपि सत्त्वेन तदर्थं प्रातिपदिकपद-प्रयोज्यविशेष्यतानिरूपित-प्रकारताप्रयोजक-पदोत्तरविभक्त्या यत्र संख्यायाः अविवक्षा तत्र समानवचनत्वम् इत्यस्यैव वाच्यतया विरुद्धान्तनिवेशस्य फल-अभावात्। न च मास्तु विरुद्धान्तनिवेशस्य इदं फलं,

तथापि पचति-इति पक्, कर्त्तरि क्विप्। ततो द्विवचने 'स्तोकं पचौ' इत्यादौ प्रातिपदिकपदप्रयोज्यविशेष्यतायाः सत्त्वेन समानवचनत्वापत्तिः दुर्वारा। विरुद्धान्त-निवेशेऽपि इयम् आपत्तिः अस्ति एव। न च विरुद्धान्तनिवेशे विशेष्यविशिष्टाया विभक्तेः निवेशः। वैशिष्ट्यञ्च स्वनिष्ठसंख्या-बोधकत्व-स्वबोधकपदाव्यवहितोत्तरत्व-उभयसम्बन्धेन। 'स्तोकं पचौ' इत्यादौ क्विबर्थनिष्ठसंख्या-बोधकत्वेन स्तोकविशेष्य-पाकनिष्ठ-संख्या-बोधकत्वाभावेन विशेष्यविशिष्टविभक्तेः अप्रसिद्ध्या अविवक्षितत्व-पर्यन्तस्य अपि अप्रसिद्ध्या समानवचनत्व-अनापत्तिः इति वाच्यम्। भावक्विबन्ते स्तोकं सम्पदावित्यादौ विशेष्यभूतसम्पत्तिविशिष्टत्वस्य एव विभक्तेः सत्त्वेन आपत्तेः दुर्वारत्वादिति वाच्यम्। क्विपः अनुसन्धानं विना शाब्दबोध-अनुदयेन तत्प्रकृतिभूत-धातुप्रयोज्या एव विशेष्यता न क्विबन्तरूपप्रातिपदिकपदप्रयोज्या, न वा विशेष्यभूत-क्रियाविशिष्टत्वं विभक्तेः विशेष्यबोधकधातु-अव्यवहितोत्तरत्वस्य अनुसन्धीयमान-क्विपा व्यवहितत्वेन विभक्तेः बाधात्। अव्यवहितोत्तरत्वं हि स्वोत्तरत्वेन अनुसन्धीयमान उत्तरत्वेन अननुसन्धीयमानत्व-स्वोत्तरत्वेन अनुसन्धीयमानत्वोभय-सम्बन्धेन स्वविशिष्टत्वम् एवेति पक्षद्वयेऽपि दोषाभावात्।

अत्र उच्यते। दार-विशेषणवाचकं सुन्दरादिपदमपि बहुवचनान्तम् एव साधु 'सुन्दरा दारा' इति। न तु 'सुन्दरो दारा' इति। तत्र दारपदोत्तरविभक्त्या संख्याया अविवक्षितत्वेन विशेष्यवाचकपद-अव्यवहितोत्तरविभक्ति-तात्पर्यविषयीभूत-संख्या-इत्यादि-**अविवक्षितत्व**पर्यन्तस्य अप्रसिद्ध्या समानवचनत्वनियम-अनापत्त्या 'सुन्दरो दारा' इत्यस्यापि साधुतापत्तिः इति ? मैवम्। स्वाव्यवहितोत्तर-विभक्तितात्पर्यविषय-संख्या-विरुद्धसंख्या-विषयक-बोधजनकत्वेन तात्पर्यविषय-विभक्तिप्रकृतित्व-सम्बन्धावच्छिन्न-प्रतियोगिताक-स्वाभाववत्त्वसम्बन्धेन स्वविशिष्टं विशेषण-वाचकं पदं स्वसमानवचनम् इति नियमस्वीकारेण दोषाभावात्। उक्त-सम्बन्धस्य अन्यत्र प्रसिद्ध्या तत्सम्बन्धावच्छिन्न-प्रतियोगिताक-अभाववत्त्वरूप-सम्बन्धस्य विशेष्यवाचक-दारपदप्रतियोगिकस्य विशेषण-वाचक-सुन्दरपदे सत्त्वेन समानवचनत्वनियमात्। न च भेदान्वयस्थले विशेषणवाचक-राजादिपदोत्तरविभक्त्या संख्याया अविवक्षणे 'राज्ञः पुरुषा' इत्यादौ समानवचनत्वनियमापत्तिः इति वाच्यम्। स्वप्रयोज्यविशेष्यता-निरूपित-अभेदसम्बन्धावच्छिन्न-प्रकारताप्रयोजकत्वरूप-द्वितीय-सम्बन्धस्यापि वैशिष्ट्यनियामकतया प्रवेशनीयत्वेन अदोषात्। राजपदस्य अभेद-सम्बन्धावच्छिन्न-प्रकारता-प्रयोजकत्व-अभावात्। न च एवमपि 'स्तोकं पचौ' इत्यादौ धातोः वैशिष्ट्यं स्तोकपदेऽस्ति। क्विपः अनुसन्धानेन प्रतियोगितावच्छेदकसम्बन्धस्य अभावात् ततश्च समानवचनत्वापत्तिः तदवस्थेति वाच्यम्। स्वाव्यवहितोत्तरविभक्तिवृत्तिधर्मवद्-विभक्तिकत्वरूप-तृतीयसम्बन्धस्य अपि

वैशिष्ट्यघटकत्वेन प्रवेशात्। प्रकृते क्विपः अनुसन्धानेन तद्व्यवधानात् तृतीयसम्बन्धस्य अभावेन अदोषात्।

ननु एवं 'मैथिली दारा' इत्यादौ दारपदोत्तरविभक्त्यर्थसंख्याया अविवक्षया प्रतियोगितावच्छेदकसम्बन्धाभावेन अभावरूपसम्बन्धसहित-सम्बन्धत्रयस्य सत्त्वेन मैथिलीपदस्य दारपदविशिष्टत्वात् समानवचनत्व-नियमापत्तिः इति चेत् ? न। मैथिलीपदोत्तरविभक्ति-एकत्वस्य विवक्षितत्वेन स्वोत्तरविभक्तितात्पर्यविषयसंख्याविरुद्धत्व-सम्बन्धावच्छिन्न-प्रतियोगिताक-स्वाभाववत्संख्याविवक्षाविषय-विभक्तिप्रकृतित्व-सम्बन्धावच्छिन्न-प्रतियोगिताक-स्वाभावस्य निवेशेन अदोषात्। न च दारपदस्य विशेषणवाचकत्वे समान-वचनत्वापत्तिः, तदुत्तरविभक्त्या संख्याया अविवक्षितत्वात् इति वाच्यम्। उक्तसम्बन्धत्रयेण विशेष्यवाचकपदविशिष्टं नियतवचन-अतिरिक्तं पदं विशेष्य-बोधकपदसमानवचनम् इति स्वीकारात्। नियतवचनत्वञ्च एकवचनत्व-द्विवचनत्व-बहुवचनत्व-अन्यतमधर्मव्याप्य-विषयताप्रयोजकत्वम्। व्याप्यतावच्छेदक-सम्बन्धश्च प्रयोजकत्वरूपः। व्यापकतावच्छेकश्च स्वाश्रयाव्यवहितपूर्वत्वसम्बन्धः। प्रकृते दारत्वरूपानुपूर्वी-अवच्छिन्नप्रयोजकतानिरूपितप्रयोज्यतावती स्त्रीत्वावच्छिन्ना विषयता बहुवचनत्व-रूपधर्मव्याप्या। यत्र यत्र प्रयोजकत्वसम्बन्धेन स्त्रीत्वावच्छिन्ना दारत्व-रूपा-आनुपूर्वी-अवच्छिन्न-प्रयोजकतानिरूपितप्रयोज्यतावती विषयता तत्र तत्र स्वाश्रय-अव्यवहित-पूर्वत्वसम्बन्धेन बहुवचनत्वमिति व्याप्तेः सत्त्वात्। तत्प्रयोजकत्वञ्च दारपदे इति तस्य नियतवचनत्वात् न समानवचनत्वम्।

ननु एवम् एकत्वबोधकत्वेन अविवक्षिता जात्येकत्वबोधकत्वेन विवक्षिता वा या विभक्तिः तदन्तविशेष्यवाचकपदघटितस्य 'द्वौ पुरुषः' 'त्रयः पुरुषः' इति वाक्यस्यापि साधुत्वापत्तिः। द्विशब्द-त्रिशब्दयोः नियतवचनत्वेन समान-वचनत्वनियम-अप्रसक्तेः इति चेत् ? अत्र उच्यते। स्वविशिष्टं पदं स्वसमान-वचनम्। वैशिष्ट्यञ्च (१)स्वप्रयोज्य-विशेष्यतानिरूपित-अभेदसम्बन्धावच्छिन्न-प्रकारताप्रयोजकत्व-स्वाव्यवहितोत्तर-विभक्तिवृत्तिप्रत्ययत्ववद्-विभक्तिप्रकृतित्व- (२) स्वाव्यवहितोत्तर-विभक्तितात्पर्यविषयसंख्या-विरुद्धसंख्या-बोधकत्व-तात्पर्य-विषयविभक्ति-प्रकृतित्वसम्बन्धावच्छिन्न-प्रतियोगिताक-स्वाभाववत्त्व-(३)स्वोत्तर-विभक्तिवाच्य-संख्यावच्छिन्न-अनुयोगिताक-पर्याप्तिप्रतियोगिधर्मावच्छिन्न-बोधकत्व-तात्पर्यविषयत्व-(४)स्वोत्तरविभक्ति-समान-आनुपूर्वीक-विभक्तिप्रकृतित्वप्रकारक-सम्भावनाप्रयोज्य-साधुत्वप्रकारक-सम्भावनाविषयत्वाभाववत्त्व-उभयसम्बन्धावच्छिन्न-प्रतियोगिताक-स्वाभाववत्त्व-एतत्-चतुष्टय-सम्बन्धेन। 'मैथिली दारा' इत्यादौ दारपदं प्रकारताप्रयोजकम्। तत्र विशेष्यवाचक-मैथिलीपदविशिष्टत्वं नास्ति। यत

आद्यसम्बन्धत्रयसत्वेऽपि चतुर्थसम्बन्धो नास्ति। यतः अभावप्रतियोगितावच्छेदक-सम्बन्धद्वयम् एव अस्ति। तथा हि विशेष्यवाचकमैथिलीपदोत्तरविभक्तिः सुः, तद्वाच्य एकत्वसंख्यावच्छिन्न-अनुयोगिता-निरूपक-पर्याप्तिप्रतियोगिभूतो धर्मो दारत्वं, तस्य प्रत्येकपर्याप्तत्वात् तदवच्छिन्नबोधकत्वेन तात्पर्यविषयत्वं दारपदे। एवं स्वोत्तरा विभक्तिः सुः, तत्समान-आनुपूर्वीक-सु-विभक्तिप्रकृतित्वप्रकारक-सम्भावनाप्रयोज्या यद्ययं दारशब्दः सु-विभक्तिप्रकृतिः स्यात् तदा साधुः स्यात् इति सम्भावना। सा च नास्ति इति तादृशसम्भावना-विषयत्व-अभाववत्त्वसम्बन्धश्च दारपदे अस्ति इति न समानवचनत्व-आपत्तिः। 'द्वौ पुरुषः' 'त्रयः पुरुष' इत्यादयश्च न प्रयोगाः। तत्र उक्तचतुष्टयसम्बन्धेन विशेषणवाचक-द्वि-आदिपदे पुरुषपद-वैशिष्ट्यसत्त्वेन समानवचनत्वनियमाक्रान्तत्वात् चतुर्थसम्बन्धघटकीभूतप्रतियोगितावच्छेदक-प्रथमसम्बन्धस्य तत्र अभावेन चतुर्थसम्बन्धस्य अपि सत्त्वात्। तथा हि पुरुषपदोत्तर-सु-विभक्तिवाच्य-एकत्वावच्छिन्न-अनुयोगिताक-पर्याप्ति-प्रतियोगित्वस्य द्वित्वादौ बाधेन तद्घटितः सम्बन्धो नास्तीति सर्वम् उपपन्नम्। न च 'पुष्पवन्तौ देव' इत्यस्य अनिस्तारः। पुष्पवन्त-पदवाच्यतावच्छेदकस्य सूर्यत्वादेः एकत्वावच्छिन्न-अनुयोगिताक-पर्याप्तिप्रतियोगित्वेन दारपद-समानत्वात् इतिवाच्यम्। तादृशपर्याप्तिप्रतियोगि-धर्मविशिष्टत्वस्य निवेशनीयत्वात्। वैशिष्ट्यं स्वावच्छिन्न-बोधकत्वेन तात्पर्य्यविषयत्व-स्वपर्याप्तावच्छेदकता-निरूपितावच्छेद्यतावती या शक्यता तन्निरूपित-शक्ततावत्व-उभयसम्बन्धेन पुष्पवन्त-पदशक्यतायाश्च सूर्यत्व-चन्द्रत्व-उभय-पर्याप्तत्वात्। स्वप्रयोज्य-इत्यादिनिवेशात् 'स्तोकं सुन्दरौ पचौ' इत्यादौ न दोषः। द्वितीयसम्बन्धनिवेशात् 'स्तोकं पचौ' इत्यादौ न दोषः। तृतीयस्य निवेशेन 'सुन्दरा दारा' इत्यादौ दोषाभावः। चतुर्थस्य निवेशेन 'मैथिली दारा' इत्यादौ अदोषः। तत्रापि प्रथमस्य प्रतियोगितावच्छेदकस्य निवेशेन 'द्वौ पुरुष' इत्यादौ न दोषः। द्वितीयस्य प्रतियोगितावच्छेदकस्य निवेशेन 'नीलौ घट' इति प्रयोगाभावः।

ननु 'शतं ब्राह्मणा' इत्यादौ समानवचनत्वापत्तिः। उक्तचतुष्टयसम्बन्धेन शतपदस्य विशेष्यवाचक-ब्राह्मणपदविशिष्टत्वात्। न च विशेषणवाचक-शतपदोत्तरविभक्त्या एकत्वस्य विवक्षितत्वात् न दोष इति वाच्यम्। एकत्व-अविवक्षायां 'शतानि ब्राह्मणा' इति प्रयोगापत्तेः दुर्वारत्वात्। न च एकत्व-अविवक्षायां तादृशप्रयोगस्य इष्टत्वम् एव इति वाच्यम्। 'विंशत्याद्याः सदैकत्व' इत्यादि-अनुशासनेन एकवचनान्तानाम् एव विंशत्यादिशब्दानां साधुत्वबोधनात् इति चेत् ? अत्र उच्यते। विंशत्यादिपदोत्तरविभक्त्या प्रकृत्यर्थतावच्छेदकगतैव संख्या प्रतीयते। तथा च विंशतित्वादीनाम् एकत्वात्

एकवचनान्ता एव विंशत्यादिशब्दाः साधवः। अत्र एव 'विंशत्याद्या' इति अनुशासन-तात्पर्यम्। अत एव विंशतित्व-शतत्वादौ द्वित्वादिसत्त्वे 'द्वे विंशती' 'त्रीणि शतानि' इत्यादयः प्रयोगा उपपन्नाः। तदनुशासनेन विंशत्यादिशब्दानाम् एकवचनान्तानाम् एव साधुत्वबोधने तु तेषाम् असाधुत्वापत्तेः। तस्मात् एकत्व-अविवक्षायाम् एकशतेऽपि 'शतानि ब्राह्मणा' इत्याद्या इष्यन्त एवेति तत्त्वम्। विशेषणवाचकपदे विंशत्यादिसंख्यावाचक-अतिरिक्तत्वस्य निवेशो वा बोध्यः।

ननु एवं 'मैथिली तस्य दारा' इतिवत् साधुत्वेन प्रतीतस्य 'रुक्मिणी-सत्यभामे कृष्णस्य दारा' इत्यस्य साधुत्व-अनापत्तेः। विशेष्यवाचक-रुक्मिणी-सत्यभामा-पदोत्तर-विभक्तिवाच्य-द्वित्वसंख्यायाः दारत्वप्रतियोगिक-पर्याप्त्यनुयोगिता-अनवच्छेदकत्वात्। 'त्रयः पुरुष' इत्यादेः इव तस्य समानवचनत्व-नियम-आक्रान्तत्वात् इति चेत् ? अत्र उच्यते। वाच्यत्वघटितसम्बन्धस्थाने स्वोत्तरविभक्तिवाच्य-संख्याविशिष्ट-धर्मावच्छिन्न-बोधकत्वस्य निवेशः। वैशिष्ट्यञ्च (१)स्वावच्छिन्न-अनुयोगिताक-पर्याप्तिप्रतियोगित्व-(२)स्वन्यूनसंख्यावच्छिन्न-अनुयोगिताकपर्याप्तिप्रतियोगित्व-अन्यतरसम्बन्धेन। तथा च न आपत्तिः। दारत्वस्य द्वित्वन्यूनसंख्यावच्छिन्न-अनुयोगिताक-पर्याप्तिप्रतियोगित्वात् इति दिक्। **द्वित्व-विशिष्टयोः पुरूरवोमाद्रवः प्रभृत्योरिति**। पुरूरवः-पदं पुरूरवो-घटितसमुदायपरम्। माद्रवः-पदं तद्घटित-समुदायपरम्। विशेषणवाचक-पदोत्तरविभक्त्या द्वित्वं विवक्षितमिति समानवचनत्व-अभावः।

**VV-J. 2.2.6:** 'वेदाः प्रमाणम्' इत्यादौ समानवचनत्व-अभावम् उपपादयति - **'वेदाः प्रमाणम्' इत्यत्र च** इति। **एकत्वं विवक्षितमिति**। ननु एकत्वं प्रकृत्यर्थे प्रमाणे बाधितं तस्य बहुत्वात् इत्यत आह - **तच्चेति**। एकत्वञ्च इत्यर्थः। **शब्दत्वावच्छिन्नेति**। अवच्छेदकस्य शब्दत्वस्य एकत्वात् तदवच्छिन्नस्य करणत्वस्य अपि एकत्वेन तत्र तस्य अबाधात्।

**VV-J. 2.2.7:** ननु शाब्दप्रमाकरणत्वम् इत्यस्य शाब्दत्वविशिष्ट-प्रमात्वावच्छिन्न-कार्यतानिरूपित-कारणत्वम् इत्यर्थो न सम्भवति। शब्दत्वावच्छिन्न-कारणतानिरूपित-कार्यताया भ्रमात्मक-शाब्दबोध-साधारणतया तदपेक्षया शाब्द-प्रमात्वस्य न्यूनवृत्तित्वेन तादृशकार्यतावच्छेदकत्व-असम्भवात्। प्रमात्वस्य च वस्तुसद्भाव-अधीनतया शब्दजन्यतावच्छेदकत्वे मानाभावाच्च स्वजन्यकार्ये स्वप्रयोज्यस्य एव स्वजन्यतावच्छेदकत्व-औचित्यात्। नापि शाब्दप्रमानिष्ठ-कार्यतानिरूपित-इत्याद्यर्थः। सा च कार्यता शाब्दत्वावच्छिन्ना एव स्यात्। तस्या भ्रमप्रमासाधारण्येन 'वह्निना सिञ्चति' इति वाक्यजन्यभ्रमात्मकज्ञानेऽपि सत्त्वेन तन्निरूपितकारणतावति 'वह्निना सिञ्चति' इति वाक्येऽपि प्रमाणमिति व्यवहारापत्तेः

इति चेत् ? अत्र उच्यते। शाब्दत्वावच्छिन्न-कार्यतायाः शब्दत्वावच्छिन्न-कारणतानिरूपिताया भ्रमप्रमासाधारण्येऽपि प्रमावृत्तित्वविशिष्टायाः तस्याः प्रमायामेव स्थितिः इतिवत् तन्निरूपितकारणताया अपि प्रमाजनकवाक्ये एव स्थितिः इति मन्यते। तथा च शाब्दप्रमाकरणत्वम् इत्यस्य शाब्दत्वावच्छिन्न-प्रमावृत्तित्वविशिष्ट-कार्यतानिरूपित-कारणत्वम् इत्यर्थः। तथा च न भ्रमजनके 'वह्निना सिञ्चति' इति वाक्ये प्रमाणत्वव्यवहार इति दिक्।

**न च पदार्थः पदार्थेनेति**। "पदार्थः पदार्थेनान्वेति न पदार्थैकदेशेन" इति व्युत्पत्तेः स्वरूपम्। प्रकृते प्रमितिकरणत्वस्य प्रमाणपदार्थ-एकदेशतया तत्र एकत्वान्वय-असम्भवो, व्युत्पत्तिविरोधात् इति भावः। एतस्या व्युत्पत्तेः अङ्गीकारात् एव घटत्वे अभेदेन नित्यान्वयतात्पर्यकस्य 'नित्यो घट' इति वाक्यस्य न आपत्तिः। घटत्वस्य पदार्थ-एकदेशत्वेन तत्र नित्य-अन्वयस्य प्रकृतव्युत्पत्तिविरुद्धत्वात्। ननु अन्वयितावच्छेदकरूपेण उपस्थितपदार्थे एव पदार्थान्वयात्। स्वरूपत एव घटपदोपस्थिते घटत्वादौ अन्वय-असम्भवेन न आपत्तिः इति चेत् ? न। जातित्वविशिष्टजातिमत्-तात्पर्यक-तत्-शब्दघटितस्य जातित्वावच्छिन्ने अभेदेन नित्य-अन्वयबोधकस्य 'नित्यः स' इति वाक्यस्य प्रामाण्यापत्तेः। अथ एतद्व्युत्पत्तिमूलभूतः कार्यकारणभावोऽपि विचार्यते। किञ्चिन्निष्ठप्रकारता-निरूपित-विशेष्यतासम्बन्धेन शाब्दबुद्धित्वावच्छिन्नं प्रति विशेष्यता-सम्बन्धेन पदजन्योपस्थितिः कारणम्। घटत्वादौ विशेष्यतासम्बन्धेन घटपदजन्योपस्थितेः अभावेन तत्र पदार्थान्तरान्वय-अभावः। न च 'नित्यः स' इत्यादौ जातौ उपस्थितीयविशेष्यतायाः सत्त्वेन नित्यान्वयो दुर्वार इति वाच्यम्। मुख्यविशेष्यताया एव कारणतावच्छेदकत्व-अभ्युपगमात्। तस्यां च जातित्वनिष्ठ-प्रकारतानिरूपितायाम् आश्रयनिष्ठ-विशेष्यतानिरूपित-प्रकारता-सामानाधिकरण्येन प्रकारत्व-असमानाधिकरण-विशेष्यतात्वरूप-मुख्यत्व-असम्भवात्। न च घटादौ अपि घटवदर्थकतत्पदजन्य-उपस्थितीय-प्रकारतायाः सत्त्वेन मुख्यविशेष्यतया उपस्थिति-अभावेन नीलादेः अन्वय-अनापत्त्या 'नीलो घट' इत्यस्य अपि अप्रमाणत्वापत्तिः इति वाच्यम्। (१)स्वनिरूपितत्व-(२)स्वनिरूपित-प्रकारत्व-असामानाधिकरण्य-उभयसम्बन्धेन स्वविशिष्टविशेष्यतासम्बन्धेन उपस्थितिः कारणम् इति अभ्युपगमेन पदान्तरजन्योपस्थिति-अन्तरीयप्रकारतायाः सत्त्वेऽपि आपत्ति-विरहात् सु-अम्-उपस्थितिः। अथ एवमपि घटवान्। तत्पदशक्यो घटो घटपदशक्य इति ज्ञानद्वयाधीन-समूहालम्बन-उपस्थितिजन्यो 'नीलो घट' इति बोधो न स्यात्। घटनिष्ठयोः तदीयप्रकारताविशेष्यतयोः सत्त्वेन मुख्यविशेष्यतया उपस्थितेः घटे असत्त्वात्। अत्र उच्यते। स्वप्रयोज्यविशेष्यता-सम्बन्धेन

शाब्दबुद्धित्वावच्छिन्नं प्रति स्वजन्योपस्थितिः स्वविशिष्टविशेष्यतासम्बन्धेन कारणम्। विशेष्यतायां वैशिष्ट्यं स्वजन्यतावच्छेदकत्व-स्वजन्यतावच्छेदक-प्रकारत्वासामानाधिकरण्य-उभयसम्बन्धेन इति न दोषः। न च लाङ्गूले पशुपदप्रयोज्या या तत्पद-प्रयोज्यलोमनिष्ठप्रकारतानिरूपितविशेष्यता तद्रूपसम्बन्धेन शाब्दबोधो न स्यात्। पशुपदजन्योपस्थितेः उक्तसम्बन्धेन अभावादिति वाच्यम्। कार्यता-वच्छेदकीभूतविशेष्यतायां स्व-इतरपद-प्रयोज्यप्रकारता निरूपितत्वस्यापि निवेशेन अदोषात्। तस्याः च पशुपद-प्रयोज्यैव लोमनिष्ठप्रकारताया निरूपितत्वात्। ननु एवं 'देवदत्तस्य गुरुः' इत्यादौ गुरुत्वे गुरुपदप्रयोज्योपस्थितीया गुरुत्वत्वनिष्ठप्रकारतानिरूपिता-विशेष्यता यद्यपि अस्ति परन्तु तस्यां गुरुनिष्ठविशेष्यतानिरूपितप्रकारता-सामानाधिकरण्यस्य एव सत्त्वेन गुरुत्वे निरूपितत्वसम्बन्धेन इष्टस्य देवदत्तान्वयस्य अनापत्तिः इति चेत् ? न। कारणतावच्छेदकीभूत-विशेष्यतायां नित्यसाकाङ्क्षा वृत्तित्वस्य निवेशनीयत्वात्। गुरुत्वादिकञ्च नित्यसाकाङ्क्षम्। तत्त्वञ्च स्वनिरूपक-आकाङ्क्षाव्याप्यज्ञानविषयत्वम्। स्वञ्च गुरुत्वादिकम्। ततः च प्रकृतशाब्दबोधीयविशेष्यताया गुरुत्वनिष्ठायाः प्रकृतकार्यता-अनवच्छेदकत्वात् न आपत्तिः। ननु एवमपि अगुरुपदार्थस्य अभेदेन गुरुत्वपदार्थे अन्वयतात्पर्येण गुरुः अगुरुः इति आपद्येत। नित्यसाकाङ्क्षतया गुरुत्वनिष्ठाया आपाद्यमान-शाब्दबोधीय-विषयतायाः कार्यतावच्छेदक-संसर्गत्वाभावात् इति चेत् ? न। प्रकारतानिरूपितत्वस्थाने प्रकारता-विशिष्टत्वस्य निवेशनीयत्वात्। वैशिष्ट्यञ्च स्वनिरूपितत्व-स्वाश्रय-निरूपितत्व-अभाववद्वृत्तित्व-उभयसम्बन्धेन। 'देवदत्तस्य गुरुः' इत्यादौ देवदत्त-निष्ठप्रकारतायाः स्वनिरूपितत्वेऽपि स्वाश्रयदेवदत्त-निरूपित-गुरुत्ववृत्तित्वस्य एव विशेष्यतायां सत्त्वेन वैशिष्ट्याभावेन अगुरुपदार्थ-निष्ठप्रकारतायाः स्वाश्रयगुरुनिरूपितत्वाभाववद्गुरुत्ववृत्तित्व-स्वनिरूपितत्वोभय-सम्बन्धेन गुरुत्वनिष्ठविशेष्यतायां वैशिष्ट्यस्य सत्त्वेन च न उभयत्र दोषः। 'प्रकृत्या चारुः' इत्यादौ चारुत्वे चारुपदार्थविशेषणीभूते प्रकृतेः अभेदेन संसर्गेण अन्वयः कथम् ? तत्र निरुक्तसम्बन्धेन उपस्थितेः अभावात् इति चेत् ? अत्र उच्यते। प्रकृत्यादिगणनिष्पन्नतृतीयार्थभेदस्य प्रकारतया एव भानम्। ततश्च संसर्गघटकप्रकारतायां विभक्त्यप्रयोज्यत्वं निवेश्यते। प्रकृते अभेदनिष्ठप्रकारतायां विभक्तिप्रयोज्यत्वस्य एव सत्त्वेन कार्यतावच्छेदक-संसर्गाभावात् अदोषः। अत एव 'सम्पन्नो व्रीहिः' इत्यादौ व्रीहौ बहुत्वरूप-सम्पत्तिविशिष्टे एकत्वान्वयस्य बाधेन व्रीहित्वे विभक्त्यर्थ-एकत्वस्य अन्वयेऽपि व्यभिचाराभावः। एकत्वनिष्ठप्रकारताया विभक्तिप्रयोज्यत्वात् । एवञ्च 'वेदाः प्रमाणम्' इत्यादौ प्रमाकरणत्वे एकत्वान्वयोऽपि उपपद्यते।

**VV-J. 2.2.8-9:** समानधर्मावच्छिन्न-विशेष्यताकनिश्चयस्य एव विरोधि-ज्ञानप्रतिबन्धकतया तस्य एव प्रवृत्तिनिवृत्तिप्रयोजकतया निरवच्छिन्न-विशेष्यताक-इतरपदार्थप्रकारक-शाब्दबोधस्य अनुपयोगेन अनभ्युपगमात् स्वरूपत उपस्थिते व्रीहित्वे एकत्वान्वयो न सम्भवति इत्यत आह - **यदि चेत्यादि**। **स्वाश्रयप्रकृत्यर्थतावच्छेदकवत्त्वेति**। स्वम् एकत्वं तदाश्रयः प्रकृत्यर्थतावच्छेदकं व्रीहित्वं तद्वत्त्वं व्रीहौ सम्बन्धः। **अन्वयिता-वच्छेदकरूपेणेति**। ननु प्रकृतान्वयिता एकत्वनिष्ठप्रकारता-निरूपित-विशेष्यतैव। तदवच्छेदकञ्च न किमपि। व्रीहित्वत्वस्य अनुपस्थितत्वात् अन्यस्य कस्य चिदसम्भवात्। प्रकृतान्वयिता-वच्छेदकरूपम् अप्रसिद्धम् इति चेत् ? अन्वयितावच्छेदकतया सम्भावितं यद्रूपं व्रीहित्वत्वं तद्रूपेण इत्यर्थेन अप्रसिद्ध्यभावात्। **प्रकृतेऽपीति**। 'वेदाः प्रमाणम्' इत्यत्रापि इत्यर्थः। **ईदृश्येवेति**। स्वाश्रयप्रमितिकरणत्ववत्त्वसम्बन्धेन प्रमाण एव एकत्वान्वय इत्यर्थः। तथा च न तदर्थ व्युत्पत्तिसंकोच इति भावः।

**VV-J. 2.2.10:** **स्वसजातीयनिष्ठेत्यादि**। यत्र एकत्वान्वयो विवक्षितः तत्र स्वसजातीयरहितत्वम् एव एकत्वं विभक्तिप्रतिपाद्यम्। स्वम् अत्र घटादिः। ननु यत्र सजातीयो द्वितीयो अस्ति तत्रापि अपरस्मिन् घटादौ तद्द्वितीयाभावरूपं रहितत्वं वर्त्तते एव, अन्यस्य रहितत्वस्य वर्णयितुम् अशक्यत्वात् इत्यतः स्वयमेव परिष्करोति - **स्वसजातीयनिष्ठेत्यादिना**। स्वसजातीयत्वं स्ववृत्तिधर्मवत्त्वम्।

**VV-J. 2.2.11-12:** तत्र स्वं घटादिः, तद्-वृत्तिः धर्मः कः ? इति जिज्ञासायाम् आह - **साजात्यञ्चेति**। **स्वसमभिव्याहृतपदार्थेत्यादि**। स्वं यदर्थ एकत्वं वर्ण्यते तदेकवचनं स्वादिः। तत्समभिव्याहृतं तद्घटितवाक्यघटकं पदम् 'अत्र घटोऽस्ति' इत्यादौ - **अत्रेत्यादि**। तदर्थः एतद्देशविद्यमानत्वादिः तत्संसर्गः स्वरूपादिः। प्रकृत्यर्थतावच्छेदकञ्च घटत्वादिः। तथा च 'अत्र घटोऽस्ति' इत्यादौ स्वार्थैकत्वं घटे प्रतीयते। तच्च एकत्वं घटे किम् ? इति आकाङ्क्षायां घटवृत्तयो ये धर्माः; सु-प्रकृत्यर्थतावच्छेदकं घटत्वं, सु-समभिव्याहृतपदार्थ-एतद्देश-विद्यमानत्वादि-स्वरूपादिसंसर्गाश्च तद्वत्त्वम्। यदि तस्मिन् देशे द्वितीयो घटोऽस्ति तदा तत्र तन्निष्ठो भेद एतद्घटगतैकत्ववान् इत्याकारकः। तत्प्रतियोगितावच्छेदकम् एव तदेकत्वम्। यदि तत्र द्वितीयो नास्ति, तदा स्वयमेव स्वसजातीयः, तन्निष्ठः तद्गत-एकत्ववान् न इत्याकारको भेदो नास्ति। किन्तु देशान्तरीयघटादिनिष्ठ-एकत्ववान् न इत्याकारक एव तत्-प्रतियोगिता-अनवच्छेदकम् एतद्देशस्थघटगतम् एकत्वमिति तदेकवचनप्रतिपाद्यमिति निष्कर्षः।

ननु यदा एतद्देशे 'एको घटो ब्राह्मणस्य अपरश्च शूद्रस्य' तदा अत्र ब्राह्मणस्य घटोऽस्तीति प्रयोगो न स्यात्। एतद्घटवृत्तिः यः प्रकृत्यर्थ-तावच्छेदकघटत्वं सु-समभिव्याहृतपदार्थ-एतद्देशविद्यमानत्व-संसर्गश्च तद्वत्त्वम् अपरस्मिन् शूद्रघटे तन्निष्ठभेदप्रतियोगितावच्छेदकत्वम् एव ब्राह्मणघटगत-एकत्व इति एकवचनप्रयोगः असंगत इति चेत् ? न। यावत्स्वसमभिव्याहृत-पदार्थसंसर्गस्य विवक्षितत्वात्। प्रकृते ब्राह्मणस्य घटे ब्राह्मणसंसर्गोऽस्ति, स शूद्रघटे नास्ति इति अदोषः। न च स्वस्वामिभावस्य असत्त्वेऽपि कालिकादिसंसर्गः अस्ति एवेति वाच्यम्। शाब्दबोधविषय-संसर्गस्यैव विवक्षितत्वेन कालिकादि-सम्बन्धसत्ताया अकिञ्चित्करत्वात्। न च कस्मिंश्चित् शाब्दबोधे कालिकादेः अपि विषयत्वसम्भवात् तस्य च प्रकृते सत्त्वात् दोष एवेति वाच्यम्। प्रकृतशाब्दबोध-विषयताया एव अपेक्षितत्वात्। कालिकसम्बन्धेन 'देवदत्तविशिष्टो यज्ञदत्तः', 'अत्र घटोऽस्ति' इतिवाक्यद्वयजन्य-समूहालम्बनबोधमादाय तस्या अपि तत्र सम्भवात् इति चेत् ? स्ववृत्तयो यावन्तः सु-समभिव्याहृतपदार्थसंसर्गाः तेषां सर्वेषां सत्ताया अपेक्षितत्वात्। प्रकृते कालिकादेः ब्राह्मणसंसर्गस्य शूद्रघटे सत्त्वेऽपि स्वस्वामिभावरूपस्य एतद्घटे वर्तमानस्य ब्राह्मणसंबन्धस्य शूद्रघटे असत्त्वेन यावत्संसर्गाभावेन अदोषः। 'पशुना यजेत' इत्यनेन एकत्वविशिष्टपशुकरणके यागे इष्टजनकत्वं बोध्यते। तत्र पशुसजातीयो द्वितीयो नास्ति, किन्तु स्वयमेव स्वसजातीयः। तन्निष्ठभेद-प्रतियोगिता-अनवच्छेदकत्वं तद्गत-एकत्वे अस्तीति समन्वयः। पशुद्वयकरणक-यागे च न अनया श्रुत्या अदृष्टजनकत्वं बोध्यते। तत्र एकत्वविशिष्टपशु-करणकयागत्वरूप-उद्देश्यतावच्छेदक-अनाक्रान्तत्वात्। तद्यागीय-द्वितीय-पशोः अपरपशुसजातीयस्य सत्त्वेन एकत्वविशिष्टपशोः अभावात्। ननु सर्वस्य एकत्वविशिष्टपशुकरणकयागस्य अनया अदृष्टजनकत्वबोधनाय सर्वः तादृशो याग एतद्-यज्-धातुरूपपदार्थः। तत्संसर्गस्य पशुत्वरूप-प्रकृत्यर्थ-तावच्छेदकस्य च यागान्तरीयपशौ सत्त्वात्, स एव एतद्यागीयपशु-सजातीयः, तद्रहितत्वम् एतत्पशौ नास्तीति कथम् एकत्वविशिष्ट-पशुकरणको यागः प्रसिद्ध इति चेत् ? न। एतत्पशुवृत्तिः एतद्यागव्यक्तिसंसर्गस्य च यागान्तरीय-संसर्गवति पशौ नास्तीति तस्य एतत्सजातीयत्व-अभावात्। एवं 'नरेण नरो यजेत' इत्यादौ अपि करणभूतनरसजातीयत्वं कर्तृभूतनरे तत्सजातीयत्वं तस्मिन् वा नरे नास्ति। करणभूतनरे यागस्य करणत्वं, संसर्गस्य च कर्त्तरि नरे नास्ति । तस्मिन् नरे यागस्य कर्त्तृत्वं संसर्गस्य च करणभूते तस्मिन् नास्ति इति। अतः स्ववृत्तिसंसर्गवत्त्वस्य अन्यत्र अभावात् किन्तु स्वयमेव स्वसजातीयम्। तन्निष्ठभेद-प्रतियोगिता-अनवच्छेदकत्वस्य तद्गत-एकत्वे सत्त्वेन उभयत्र एकवचनोपपत्तिः। न

च बहुब्राह्मणकर्त्तृक-शयनाधिकरण-स्थानतात्पर्येण 'अत्र ब्राह्मणः शेते' इति आपद्येत। कर्त्तृभेदेन शयनक्रियाया भेदात् एकब्राह्मणवृत्तिः यः शयनक्रिया-व्यक्तिसम्बन्धः, स ब्राह्मणान्तरे नास्तीति स्वसजातीयत्वं स्वस्मिन्नेव। तन्निष्ठभेद-प्रतियोगिता-अनवच्छेदकत्वस्य तदेकत्वे सत्त्वादिति वाच्यम्। पदार्थसंसर्गित्वम् इति अत्रत्य-पदार्थपदेन पदार्थतावच्छेदकस्य ग्रहणेन अदोषात्। तथा च ब्राह्मणे यः शयनत्वरूपपदार्थतावच्छेदकस्य सम्बन्धः स्वावच्छिन्ननिरूपित-कर्त्तृत्वरूपः, तस्यैव ब्राह्मणान्तरे सत्त्वेन एतद्ब्राह्मणसजातीयो द्वितीयो ब्राह्मणः। तद्रहितत्व-अभावेन एकवचन-उपपत्ति-अभावात्।

अथ एवं सति 'पशुना यजेत' इत्यत्र दोष एव। तत्रापि एतत्पशुनिष्ठो यो यागत्वरूपपदार्थतावच्छेदकसम्बन्धः स्वावच्छिन्ननिरूपित-करणत्वरूपः तस्यैव यागान्तरीयपशौ अपि सत्त्वेन, तस्य अपि एतत्पशुसजातीयत्वेन तद्रहितत्व-अभावात् इति चेत् ? सत्यम्। अत्र यज्धातोः यागत्व-उपलक्षित-तत्-तद्व्यक्तित्वावच्छिन्ने लक्षणा। ततश्च एतद्यागीयपशौ यो यज्-पदार्थतावच्छेदक-तद्व्यक्तित्वसम्बन्धः तस्य यागान्तरीयपशौ अभावात्। तत्र हि भिन्न-तद्-व्यक्तित्वस्य स्वावच्छिन्न-करणत्वसम्बन्ध इति यागान्तरीयपशोः एतत्पशुसाजात्य-अभावेन दोष-अनवकाशात्।

केचित् तु पदार्थपदं पदजन्योपस्थितिमुख्यविशेष्यपरमेव। यज्धातुः यागत्वावच्छिन्नपर एव। बहुब्राह्मणकर्त्तृकशयनस्थले 'अत्र ब्राह्मणः शेते' इतीष्यते एव। न च एवं सति बहुघटसत्त्वदशायाम् 'अत्र घटोऽस्ति' इति वाक्यं तु जात्येकत्वादेव समर्थनीयमिति ग्रन्थासङ्गतिः। बहुब्राह्मण-कर्त्तृकशयनदशायाम् 'अत्र ब्राह्मणः शेते' इत्यस्य इव अस्यापि व्यक्त्यैकत्वपरतया अपि साधुत्वोपपादनसम्भवादिति वाच्यम्। 'अत्र घटोऽस्ति' इत्यादौ घटत्वावच्छिन्न-आधेयताया एव अस्-धात्वर्थ-सत्ता-रूपतया तस्या एकत्वेन 'अत्र ब्राह्मणः शेते' इत्यतो वैलक्षण्यसम्भवात् इत्याहुः। स्वविशिष्टम् एकत्वम् एकवचनार्थः। वैशिष्ट्यञ्च स्वाभाववत्त्वसम्बन्धेन। प्रतियोगितावच्छेदकसम्बन्धश्च स्वविशिष्ट-अवच्छेदकतावत्त्वरूपः। तत्र वैशिष्ट्यं (१)स्वप्रयोज्यप्रकारता-वच्छेदकतया विवक्षितसंसर्गावच्छिन्नत्व-(२)स्वविशिष्टनिष्ठ-भेदप्रतियोगिता-निरूपितत्व-उभयसम्बन्धेन। तत्र वैशिष्ट्यं (१) स्वप्रकृत्यर्थतावच्छेदकधर्मवत्त्व-(२)-स्वविशिष्टसमुदायत्वावच्छिन्न-आधेयतानिरूपित-अधिकरणतावत्त्व-उभयसम्बन्धेन। समुदायत्वे वैशिष्ट्यं (१)स्वप्रकृत्यर्थ-निष्ठाधिकरणतानिरूपित-आधेयतावच्छेदकत्व-(२)स्वसमभिव्याहृतपदार्थ-संसर्गवृत्तित्व-(३)स्वसमभि-व्याहृतपदार्थसंसर्गेतरावृत्तित्व-(४)स्वसमभिव्याहृत-पदार्थसंसर्गवृत्त्यभावाप्रतियोगित्व-एतच्चतुष्टयसम्बन्धेनेति

तत्त्वम्। संसर्गश्च स्वप्रयोज्यशाब्दबोधीय-विषयतया साक्षात्परम्परया निरूपितविषयताश्रयो ग्राह्यः। तेन प्रकृतशाब्दबोधाविषय-संसर्गम् आदाय न अतिप्रसङ्गः। बहुविशेषणानां फलानि उक्तानि एव। अवशिष्टम् उच्यते। 'सम्पन्नो व्रीहिः' इत्यादौ व्रीहित्वगतैकत्वे सजातीय व्रीहिनिष्ठो यो वीहित्वगतैकत्ववान् न इत्याकारको भेदः तत्प्रतियोगितावच्छेदकत्वस्य एव सत्त्वेन कथं तदेकवचनार्थ इति शङ्कावारणाय अवच्छेदकतायां स्वप्रयोज्य-प्रकारतावच्छेदकेत्यादिनिवेशितम्। प्रकृतभेदीयप्रतियोगिता-अवच्छेदकतायाः समवायसम्बन्धावच्छिन्नत्वेन स्वप्रयोज्य-प्रकारतावच्छेदकः स्वाश्रयाश्रयत्वरूपः, तदवच्छिन्नत्वाभावात्। तत्र हि स्वार्थैकत्वस्य स्वाश्रयाश्रयत्वसम्बन्धेन एव व्रीहौ अन्वयेन आपत्त्यभावः। स्वाश्रयाश्रयत्वसम्बन्धेन व्रीहित्वगतैकत्वविशिष्टभेदस्य च व्रीहौ अभावादिति दिक्।

**स्वसमभिव्याहृत** इत्यत्र स्वम् एकवचनम्। साजात्यनियामकतया प्रकृत्यर्थतावच्छेदकधर्ममात्रस्य ग्रहणे दोषम् आह - **अतोऽत्र घटोऽस्तीत्यादा**विति। अतः स्वसमभिव्याहृत-पदार्थसंसर्गित्व-निवेशात् इत्यर्थः। अन्यथा घटमात्रस्य सजातीयत्वादिति भावः। समभिव्याहृत-इत्यादि-निवेशलभ्यमाह - **एतद्देश-विद्यमानेत्यादि तादृशवाक्ये** ति। 'अत्र घटोऽस्ति' इतिवाक्य इत्यर्थः।

**VV-J. 2.2.13:** एवं **'त्रयः समुदिता हेतु'**रित्यत्र हेतुपदमित्यादि। हेतुपदस्य प्रयोजकतावच्छेदकसमुदायत्वावच्छिन्ने लक्षणा। **कार्योत्पत्तिः** इति तु पर्यवसितार्थकथनम्। न तु लक्ष्यतावच्छेदककुक्षौ तस्य प्रवेशः। **तदुद्भव** इत्यनेन एव कार्योत्पत्तीत्यस्य लाभात्। प्रयोजकता च शक्तिनिपुणता अभ्यासात्मके समुदाये काव्योत्पत्तिसमानाधिकरणाभाव-अप्रतियोगित्वरूपा। **अत एव शक्त्यादीनामि**ति। शक्ति-निपुणता-अभ्यासा इति-पदोपस्थिताः। हेतुपदात् च प्रयोजकतावच्छेदक-समुदायत्वावच्छिन्न उपस्थितः। तस्य अभेदसम्बन्धेन इत्यर्थ-शक्त्यादौ अन्वयः। तदर्थ-एकदेशे समुदायत्वे स्वर्थैकत्वस्य अन्वयः। तदुद्भवे इत्यस्य काव्योत्पत्तीत्यर्थः। तस्याश्च प्रयोजकतायां सप्तम्यर्थनिरूपितत्व-सम्बन्धेन अन्वयः। तथाच काव्योत्पत्तिनिरूपित-प्रयोजकतावच्छेदक-एकत्वविशिष्ट-समुदायत्वावच्छिन्न-अभिन्नाः शक्तिनिपुणताभ्यास इति 'इतिहेतुस्तदुद्भव' इति वाक्यात् 'त्रयः समुदिता हेतुः' इति वाक्याच्च बोधः। समुदिता इति विवरणवाक्यघटकपदं हेतुपदस्य उक्तार्थलाक्षणिकत्वं बोधयति। एवं च यथा दाहं प्रति तृणस्य अरणेश्च मणेश्च स्वातन्त्र्येण कारणत्वं, न एकसहायेन अपरस्य; तथैव काव्योत्पत्तौ शक्त्यादीनां प्रत्येकं कारणत्वम् इत्येव कुतो न काव्यप्रकाशतात्पर्यम् ? इति शङ्काया अनवकाशः। उक्तवाक्यार्थविरोधात्। प्रत्येकम् अन्यासहायेन कारणत्वे एकस्य अपि शक्त्यादेः सत्त्वे कार्योत्पत्तेः आवश्यकतया प्रत्येकं प्रयोजकतापर्याप्तिः वक्तव्या।

तथा च त्रितयपर्याप्तसमुदायत्वस्य अतिप्रसक्तत्वेन तदनवच्छेदकतया तदवच्छेदक-समुदायत्वघटित-उक्तवाक्यार्थविरोधः स्पष्ट एव।

ननु हेतुपदं शक्यार्थपरमेव कुतो न ग्रन्थकृत्तात्पर्यविषयीभूतम् ? तथासति तृण-अरणि-मणि-न्यायेन हेतुताप्रसज्येतेति तु न आशङ्कनीयम्। दण्डादीनां घटं प्रति इव अन्वयव्यतिरेकाभ्यामेव निर्णयसम्भवात् इति चेत् ? न। हेतोः नानात्वात्। शक्तित्वाद्यवच्छेदकभेदेन हेतुताया अपि नानात्वात् च। स्वार्थैकत्वस्य अन्वय-असम्भवेन अविवक्षाया एव वक्तव्यतया 'त्रयः समुदिता हेतुः' इत्यत्र असमानवचनत्व-अनुपपत्तेः इति दिक्।

**VV-J. 2.2.14:** **त्रितयनिष्ठस्येत्यादि।** घटादिपदनिरूपिता शक्तिः घटत्वादिजातिसमवायादिसम्बन्धघटादि-व्यक्तिनिष्ठा एकैवेति। तत्रैव एकत्वान्वय इति। पदार्थे जात्यादौ एव एकत्वबाधेऽपि न क्षतिः। न च घटादिपदशक्तिः का या जातिसम्बन्धव्यक्तिषु एका स्यात् ? किञ्च पदशक्तिः इत्यस्य कोऽर्थः ? पदनिरूपिता पदनिष्ठा वा शक्तिः। शक्तेः ईश्वरेच्छारूपत्वे ईश्वरनिष्ठायां तस्यां पदनिरूपितत्व-निष्ठत्वयोः बाधात्, जात्यादिनिष्ठत्वस्य बाधात् चेति वाच्यम्। पदजन्यबोधविषयता शक्तिः। पदशक्तिः इत्यस्य पदसम्बन्धिनी शक्तिः इत्यर्थः। सम्बन्धश्च स्वजन्यबोधनिरूपितत्वरूपः। सा च निरुक्तविषयतारूपा शक्तिः स्वनिष्ठ-आश्रयत्वसम्बन्धावच्छिन्न-प्रकारतानिरूपित-ईश्वरीय-इच्छीय-विशेष्यतावत्त्व-सम्बन्धेन व्यक्तौ वर्त्तते। स्वनिष्ठविशेष्यतानिरूपितावच्छिन्नत्व-सम्बन्धावच्छिन्न-प्रकारतावत्त्वसम्बन्धेन जातौ वर्तते। स्वनिष्ठविशेष्यता-निरूपित-प्रकारतावच्छेदक-संसर्गघटकावच्छेदकतावच्छेदकत्वसम्बन्धेन समवायादौ वर्तते इति त्रितयनिष्ठत्वम् अपि तस्या उपपद्यते। एतेन ईश्वरेच्छायाः शक्तित्वे ईश्वरेच्छायाः समूहालम्बनात्मिकाया एकस्या एव सत्त्वेन शक्त-शक्यतावच्छेदकभेदेन अपि शक्तिभेदानापत्तेः। तद्विषयतायाः तत्त्वे बोधादेः अपि घटादिपदशक्यत्वापत्तेः। तस्यापि तदिच्छाविषयत्वात् तादृशविषयतानाम् एकत्वाभावात् शक्तौ अपि एकत्वाभाव इत्यादिवदन्तः अपास्ताः।

**VV-J. 2.2.15: प्रमाकरणत्वरूप-प्रकृत्यर्थतावच्छेदकस्येत्यादि।** प्रत्यक्षप्रमा-अनुमानप्रमादीनां भिन्नत्वात्। तत्तत्करणतानाञ्च प्रत्यक्षा-दिनिष्ठानां प्रत्यक्षत्वानुमानत्वाद्यवच्छेदकभेदेन भिन्नत्वादिति भावः।

**VV-J. 2.2.16:** ननु प्रमा-इत्यनुगतप्रतीति-अनुरोधेन प्रमात्वस्य एकस्य अवश्याभ्युपगन्तव्यत्वेन तत्र एव एकत्वान्वयाय विभक्त्यर्थ-एकत्वविवक्षा अस्तु इति चेत् ? न। प्रवृत्तिनिमित्त-तदाश्रय-अन्यतरान्वित-एकत्वबोधं प्रति एव प्रकृतिप्रत्ययानुपूर्वीरूपस्य आकाङ्क्षात्व-अभ्युपगमेन प्रमात्वान्वित-एकत्वबोधं प्रति प्रमाणम् इत्यस्य निराकाङ्क्षत्वेन तादृशबोधसम्भवेन एकत्वस्य अविवक्षितत्वात्।

'पितरो देवता' इत्यत्र त्यागोद्देश्यत्वमेव। देवतात्वञ्च पितृत्व-पितामहत्वाद्यवच्छेदकभेदाद् भिन्नम् इति न कुत्रापि एकत्वान्वययोग्यता इत्येकत्वस्य अविवक्षया समानवचनत्वम्। 'पितृभ्यः स्वधा' इतिव्यवहारस्तु न प्रामाणिक इति भावः।

**VV-J. 2.3.1-2:** ननु विंशत्याद्या(VV-2.2.2)इत्यादि तु प्रसङ्गात् आगतम्। प्रकृतं तु स्वप्रकृतिकविभक्ति- सजातीय(VV-2.2.1) इत्यादौ स्वप्रकृतिकत्वं तदा आह - **स्वप्रकृतिकत्वञ्चेति**। **प्रतिसन्धीयमानत्वं** = ज्ञायमानत्वम् इत्यर्थः। **तादृशेति**। स्वप्रकृतिक इत्यर्थः। **तथाविधेति**। स्वप्रकृतिकविभक्तिसजातीय इत्यर्थः।

**VV-J. 2.4.1:** **उक्तनियमभङ्गेति** - समानविभक्तिकपद-उपस्थापितयोः एव अभेदान्वय इति नियम इत्यर्थः। **तथाविधेति**। अभेदान्वय इत्यर्थः। **बोधौपयिकेति**। बोधजनक इत्यर्थः। सा च आकाङ्क्षा कीदृशी इति आकाङ्क्षायाम् आह -**तथा हीति**। **तादृशान्वयबोध इति**। अभेदसम्बन्धावच्छिन्न-नीलत्वाद्यवच्छिन्न-प्रकारतानिरूपित-घटत्वाद्यवच्छिन्न-विशेष्यताकशाब्दबोध इत्यर्थः। **प्रथमा विभक्त्यन्तेत्यादि**। इदं तु वस्तुस्थितिमात्रं न तु प्रथमात्वविभक्तित्वादिभिः विभक्तेः आकाङ्क्षाशरीरे प्रवेशः। उक्तधर्मज्ञानेऽपि घट इत्यादेः आनुपूर्वीप्रकारेण एव आकाङ्क्षायां प्रवेशः। तथा च 'नीलो घटो' 'घटो नील' इत्यादि आनुपूर्वी-अवच्छिन्न-विषयतानिरूपकज्ञानस्य एव शाब्दबोधजनकत्वम्। यत्रापि 'नीलः चैत्रस्य घट' इत्यादिवाक्यं प्रयुज्यते, तत्रापि तथा आनुपूर्वीमद्वाक्यं कल्पयित्वा एव शाब्दबोधः करणीयः। अत एव आसत्तिः अपि उपपद्यते। अन्यथा नीलोपस्थिति-घटोपस्थित्योः चैत्रोपस्थित्या व्यवधानात् अव्यवधानघटितायाः तस्या अभावेन शाब्दबोधानापत्तिः। 'नीलघट' इत्यादिसमासस्थले 'नीलो घट' इति समुदायगतानुपूर्व्या अभावेन व्यासस्थलीयाकाङ्क्षाया अभावेन शाब्दबोधानापत्त्या तत्स्थलीयानुपूर्वीज्ञानस्य अपि पृथक् कारणत्वं वाच्यम्। एवमेव 'नीलौ घटौ', 'नीला घटा', 'नीलं घटं', 'नीलान् घटान्' इत्यादिसमुदायगत-आनुपूर्वी-ज्ञानानाम् अपि तत्तत्-आनुपूर्वीप्रकारकत्वेन एव कारणत्वं वक्तव्यम् एकरूपेण कारणताया वक्तुम् अशक्यत्वात्।

ननु 'नीलघटः', 'नीलघटौ', 'नीलघटा' इत्यादिविभक्त्यन्त-समुदायपर्याप्त-आनुपूर्वीणां कारणतावच्छेदकत्वे समसस्थलेऽपि विभक्तीनां सप्तत्वेन तदन्तनिष्ठ-आनुपूर्वीणाम् अपि सप्तानां कारणतावच्छेदकत्व-अपेक्षया नीलघटत्वरूप-आनुपूर्वीप्रकारकज्ञानत्वेन एव सप्तानां कारणत्वे लाघवात् तथैव वक्तुं युक्तम्। अत एव मूलेऽपि नीलपदाव्यवहितोत्तरघटपदत्वं, घटपदाव्यवहित-पूर्वनीलपदत्वम्, इत्येव आकाङ्क्षा। सप्तविभक्त्यन्त-नीलघट-समासस्थले

उक्तमिति चेत् ? सत्यम्। तस्यापि विभक्त्यन्त-आनुपूर्वीणां प्रवेश एव तात्पर्यम्। कथम् अन्यथा निर्विभक्तिक-नीलघटेति समुदायात् शाब्दबोधाभावः। यथाश्रुत-ग्रन्थरीत्या नीलपदाव्यवहितोत्तरघटपदत्वादेः तत्र सत्त्वेन शाब्दबोधापत्तेः दुर्वारत्वात्।

ननु कीदृशः तत्र शाब्दबोध आपाद्यते ? न तावन्नीलत्वावच्छिन्न-प्रकारता-निरूपितघटत्वावच्छिन्न-विशेष्यताक इति वक्तुं शक्यते। तादृश-शाब्दबोधस्य अप्रसिद्धेः तत्कारणरूप-आपादकस्य अपि अप्रसिद्धेः। न च 'नीलो घट' इत्यादौ 'नीलघट' इत्यादौ च तादृशशाब्दबोधप्रसिद्धिः इति वाच्यम्। तत्र एकत्वस्यापि विशेषणतया भानेन तन्नियामकविभक्तिपदजन्य-एकत्व-उपस्थिति-घटपदाव्यवहितोत्तर-सु-पदत्वरूप-आनुपूर्वीज्ञानादेः अपि कारणत्वेन, तदभावेन आपत्त्यभावात् इति चेत् ? अत्र उच्यते। 'नीलो घटो' 'नीलघट' इत्यादौ एव एकत्वत्वावच्छिन्न-विषयताघटित-शाब्दबोधत्वावच्छिन्न-कार्यतानिरूपित-कारणताया एव एकत्वोपस्थित्यादेः सत्त्वेन एकत्वत्वावच्छिन्नविषयताघटित-नीलत्वावच्छिन्न-प्रकारतानिरूपित-घटत्वावच्छिन्नविशेष्यताकशाब्दत्वावच्छिन्न-कार्यापादने एकत्व-उपस्थितेः अनपेक्षणेन आपत्तिसम्भवः। न च आपाद्यतावच्छेदकधर्मस्य निरुक्त-शाब्दबोधे अधिकं प्रविष्टम्, न तु तद्धानिरितिरीत्या सत्त्वेऽपि तद्धर्मावच्छिन्न-कार्यतानिरूपित-कारणतायाः कुत्रापि अभावेन आपादकासम्भव एवेति वाच्यम्। नीलपदाव्यवहितोत्तर-घटपदत्वरूप-मूलोक्त-आकाङ्क्षाया एव तत्कारणीभूतायाः तत्रापादकत्वसम्भवादिति वाच्यम्। आपाद्यतावच्छेदकधर्मं प्रति एकत्वादि-विषयताघटित-नीलत्वावच्छिन्न-प्रकारतानिरूपित-घटत्वावच्छिन्न-विशेष्यताक-शाब्दबुद्धित्वादेः व्याप्यतया व्यापकधर्मावच्छिन्ने कार्ये जननीये व्याप्यधर्मावच्छिन्न-कार्योत्पादकसामग्र्याः अपेक्षिततया तस्याः च घटपदाव्यवहितोत्तर-सु-पदत्व-रूपानुपूर्वीरूपाकाङ्क्षाज्ञानादिघटिततया निर्विभक्तिक-'नीलघटे'ति समुदायादौ तदभावेन आपत्त्यभाव इति दिक्। एवञ्च यादृश-यादृशानुपूर्वी-अवच्छिन्ने यादृश-यादृश-आनुपूर्वी-अवच्छिन्न-समभिव्याहृतत्वज्ञानाद् यादृशः शाब्दबोधो जायते तादृश-तादृशानुपूर्वी-अवच्छिन्नविषयतानिरूपित-तादृशानुपूर्वी-अवच्छिन्न-समभिव्याहृतत्व-विषयतानिरूपकज्ञानं तादृश-शाब्दबोधे कारणमिति निष्कर्षः।

**उक्तस्थले चेति**। 'नीलस्य घट' इत्यादिस्थले च इत्यर्थः। **तादृश्याः** प्रथमान्त-नीलपदसमभिव्याहृत-प्रथमान्तघटपदत्वादिरूपायाः इत्यर्थः।

**VV-J. 2.4.2:** ननु प्रथमान्तनीलपदसमभिव्याहृत-प्रथमान्त-घटपदत्व-रूप-आकाङ्क्षाज्ञानात् 'नीलो घट' इति वाक्यात् जायमान-अभेदान्वयबोधे द्वितीयान्तनीलपदसमभिव्याहृत-द्वितीयान्तघटपदत्वादिरूप आकाङ्क्षाया अभावात्

तादृश-आकाङ्क्षाज्ञानात् 'नीलं घटम्' इत्यादिवाक्यात् जायमाने अभेदान्वयबोधे च प्रथमान्तनील-इत्यादिरूप आकाङ्क्षाया अभावात् 'तत्सत्त्वे तत्सत्ता तदभावे तदभाव' इत्यन्वय-व्यतिरेकनिबन्धन-कार्यकारणभावासम्भव इत्यत आह - **कार्यतावच्छेदककोटौ** इत्यादि। तथा च प्रथमान्तनीलपदसमभिव्याहृत-प्रथमान्त-घटपदत्वरूप-आकाङ्क्षा ज्ञान-अव्यवहितोत्तर-जायमान-अभेदसम्बन्धावच्छिन्न-नील-त्वावच्छिन्न प्रकारतानिरूपित-घटत्वावच्छिन्न-विशेष्यताक-शाब्दबुद्धित्वावच्छिन्नं प्रति प्रथमान्तनीलपदसमभिव्याहृत-प्रथमान्तघटत्वरूप-आकाङ्क्षाज्ञानं कारणम्। द्वितीयान्तनीलपदसमभिव्याहृत-द्वितीयान्तघटपदत्वरूप-आकाङ्क्षाज्ञान-अव्यवहित-उत्तरजायमान-अभेदसम्बन्धावच्छिन्न-नीलत्वावच्छिन्न-प्रकारतानिरूपितघटत्वावच्छन्न-विशेष्यताकशाब्दबुद्धित्वावच्छिन्नं प्रति द्वितीयान्त-नीलपदसमभिव्याहृत-द्वितीयान्त-घटपदत्वरूप-आकाङ्क्षाज्ञानं कारणम् इत्यादिक्रमेण यावदाकाङ्क्षाज्ञानं कार्यकारणभावः। तथा च व्यभिचाराभावः। एकस्मिन्नेव हि कार्ये नानाकारण-सद्भावे तद्-उदय इति भावः।

ननु यत्र देवदत्तस्य प्रथमान्तनीलपदसमभिव्याहृत-इत्याद्याकाङ्क्षाज्ञानं जातं तदव्यवहितोत्तरक्षणे एव यज्ञदत्तस्य पूर्वक्षणोत्पन्न-द्वितीयान्त-नीलपद-समभिव्याहृत-इत्याद्याकाङ्क्षाज्ञानात् तादृश-अभेदान्वयबोधः तत्र तादृशबोधे प्रथमान्तनील-इत्याद्याकाङ्क्षा-ज्ञानकार्यतावच्छेदकाक्रान्तिसत्त्वेन तादृश-बोधाधिकरणे यज्ञदत्ते तदाकाङ्क्षाज्ञानाभावेन व्यभिचारोऽस्ति एवेति चेत्? मैवम्। अव्यवहितोत्तरत्वं विहाय स्वाव्यवहितोत्तरत्व-स्वाधिकरणदेशवृत्तित्व-उभयसम्बन्धेन ज्ञानस्य वैशिष्ट्यं बोधे निवेश्य तादृशबोधे द्वितीयसम्बन्धविरहेण तत्कार्यता-वच्छेदक-अनाक्रान्ततया आपत्तेः वारण-सम्भवात्। न च उक्त-उभयसम्बन्धेन स्वविशिष्टत्वमेव कार्यतावच्छेदकम् अस्तु। तथा सति कार्यतावच्छेदककोटौ इत्युक्ति-सूचितस्य अभेद-सम्बन्धावच्छिन्न-नीलत्वावच्छिन्न-प्रकारतानिरूपित-घटत्वावच्छिन्न-विशेष्यताक-शाब्दबुद्धित्वे कार्यतावच्छेदकत्वस्य वैयर्थ्यम् इति वाच्यम्। चैत्रे प्रथमक्षणे प्रथमान्त-इत्यादि-किमपि आकाङ्क्षाज्ञानं जातम्। तदुत्तरक्षणे चैत्र-मैत्र-उभयत्र-यज्ञदत्तीय-अपेक्षाबुद्ध्या द्वित्वसंख्या-उत्पन्ना। तत्र संख्यायां निरुक्ताकाङ्क्षाज्ञानवैशिष्ट्यरूप- कार्यतावच्छेदक-आक्रान्ति-सत्त्वेन तस्याः च तादृशाङ्क्षाज्ञानशून्ये मैत्रेऽपि उत्पत्त्या व्यभिचारप्रसक्तेः वारणाय अभेदसम्बन्धावच्छिन्न इत्यादिप्रवेश-आवश्यकत्वात्। न च तावताऽपि स्वविशिष्ट-शाब्दबुद्धित्वमेव कार्यतावच्छेदकम् अस्तु। विषयताविशेषनिवेशो व्यर्थ एव। तत्-आकाङ्क्षाज्ञानोत्तरे अन्यादृशेऽपि जायमाने शाब्दबोधे तत्-आकाङ्क्षाज्ञानस्य कारणत्वे इष्टापत्तेः इति वाच्यम्। यत्र 'नीलो घटः' 'घटवद्भूतलम्' इति

समूहालम्बनम् आकाङ्क्षाज्ञानं 'नीलो घट' इत्यंशे अप्रामाण्यज्ञानास्कन्दितं तत्र 'घटवद्भूतलम्' इति बोधो जायते न तु नीलाभिन्नो घट इति बोधः। तत्र प्रथमान्त-नीलपदोत्तर-प्रथमान्तघटपदत्वरूप-आकाङ्क्षाज्ञानोत्तरत्वविशिष्ट-शाब्द-बोधरूपं कार्यं घटवत् इति बोधः। कारणं च अप्रामाण्यज्ञान-अनास्कन्दित-प्रथमान्तनीलपदसमभिव्याहृत-प्रथमान्तघटपदरूप-आकाङ्क्षाज्ञानं नास्तीति व्यभिचारप्रसक्त्या तद्वारणाय अभेदसम्बन्धावच्छिन्न-नीलत्वावच्छिन्न-प्रकारतानिरूपित-घटत्वावच्छिन्न-विशेष्यताकत्वं शाब्दबोधे विशेषणं देयम्। तथा च तत्र कार्यकारणयोः द्वयोः अपि अभावात् न दोषः। न च कारणतावच्छेदक-कोटौ अप्रामाण्यज्ञान-अनास्कन्दितत्वनिवेश-अभावमात्रेण व्यभिचारवारणसम्भवात् न विषयप्रवेशो युक्त इति वाच्यम्। अप्रामाण्यज्ञानास्कन्दितात् 'नीलो घट' इति आकाङ्क्षाज्ञानात् अभेदान्वयवारणाय कारणकोटौ अप्रामाण्यज्ञान-अनास्कन्दितत्वनिवेशस्य आवश्यकत्वात्।

ननु क्व एतस्य उपयोगः। न तावत् प्रथमक्षणे 'नीलो घट' इति आकाङ्क्षाज्ञानं तत इदं ज्ञानम् अप्रमाणम् इतिज्ञानं ततः शाब्दबोधो मा अभूत् इत्यर्थम्, अन्यथा आकाङ्क्षाज्ञानस्य सत्त्वात् शाब्दबोधापत्तिः इति युक्तम्। तत्र बोधस्य अभावे स्वविशिष्टशाब्दबुद्धित्वावच्छिन्नरूपकार्यस्य अपि अभावेन अदोषात्। तत्र बोधस्य सत्त्वे तु कारणस्य अपि सत्त्वेन अदोषात् इति चेत् ? न। यत्र प्रथमक्षणे भाविज्ञानम् अप्रमा इति ज्ञानं, द्वितीयक्षणे 'नीलो घट' इति आकाङ्क्षाज्ञानं, तृतीयक्षणे आद्यस्य भाविज्ञानम् अप्रमा इति अप्रामाण्यज्ञानस्य नाशेन अप्रामाण्यज्ञान-अनास्कन्दितस्य 'नीलो घट' इति आकाङ्क्षाज्ञानस्य सद्भावात्, चतुर्थक्षणे 'नीलो घट' इति बोधो भवति। कार्योत्पत्तिप्राक्क्षणे कारणस्य सत्त्वात् तृतीयक्षणे च बोधो न भवति। तत्प्राक्द्वितीयक्षणे अप्रामाण्यज्ञानास्कन्दितस्य एव आकाङ्क्षाज्ञानस्य सत्त्वेन तत्-अनास्कन्दितस्य तस्य असत्त्वात्। अप्रामाण्यज्ञान-अनास्कन्दितत्व-निवेश-अभावे द्वितीयक्षणे आकाङ्क्षाज्ञानस्य सत्त्वात् स्वविशिष्टः शाब्दबोधः। स एव चतुर्थक्षणस्थः तस्य तृतीयक्षणे आपत्तिप्रसङ्गात् अप्रामाण्यज्ञान-अनास्कन्दितत्वनिवेश इति बोध्यम्। न च बोधे शाब्दत्वविशेषणं व्यर्थम् इति वाच्यम्। 'नीलो घट' इति आकाङ्क्षाज्ञाने अप्रामाण्यज्ञान-आस्कन्दिते अनुमितिसामग्र्यां च सत्यां 'नीलो घट' इति अनुमितिः जायते। तत्र अप्रामाण्यज्ञान-अनास्कन्दित-आकाङ्क्षाज्ञान-रूपकारणाभावे प्रथमान्तनीलपदसमभिव्याहृत-प्रथमान्तघटपदत्वरूप-आकाङ्क्षा-ज्ञान-अव्यवहितोत्तर-अभेदसम्बन्धावच्छिन्न-प्रकारतानिरूपित-घटत्वावच्छिन्न-विशेष्यताकबोधस्य सत्त्वे न व्यभिचारापत्तेः। शाब्दत्वनिवेशे च शाब्दबोध-अभावेन

अदोषात्। न च कार्यदलेऽपि आकाङ्क्षाज्ञाने अप्रामाण्यज्ञान-अनास्कन्दितत्वनिवेशेन एव उक्तस्थलद्वये व्यभिचार-अप्रसक्त्या विषयताविशेषस्य शाब्दबोधस्य च निवेशो व्यर्थ एव। किं च विषयत्वादिनिवेशेऽपि अप्रामाण्यज्ञान-अनास्कन्दितत्वनिवेशः कार्यदले आवश्यकः। अन्यथा 'नीलो घटः' 'श्यामो घटः' इति समूहालम्बनात्मक-आकाङ्क्षाज्ञानं 'नीलो घट' इत्यंशे अप्रामाण्यज्ञान-आस्कन्दितं यत्र तत्र बोधो भवति कार्यतावच्छेदक-आक्रान्तः अप्रामाण्यज्ञान-अनास्कन्दितं 'नीलो घट' इति आकाङ्क्षाज्ञानं च नास्ति इति व्यभिचारः स्यात्। अप्रामाण्यज्ञान-अनास्कन्दितत्वनिवेशे च कार्यकारणयोः अभावेन अदोष इति वाच्यम्। अप्रामाण्यज्ञानेऽपि अप्रामाण्यज्ञान-अनास्कन्दितत्वं निवेश्यं तत्रापि अप्रामाण्यज्ञान-अनास्कन्दितत्वं निवेश्यम्। एवं तत्र तत्र इति अविश्रामः। एवं नीलपद-असमभिव्याहृते घटे नीलपदसमभिव्यहृतत्वज्ञानरूप-अप्रामाण्यज्ञानं नीलत्व-अभाववति नीलत्वज्ञानरूपम् अप्रामाण्यज्ञानम् इत्यादि-सर्वेषां ज्ञानानाम् अनास्कन्दितत्वनिवेश-अपेक्षया विषयत्वात् अनिवेशे एव लाघवम्। एवम् अप्रामाण्यज्ञानानां तत्-तत्-रूपेण एव निवेशनीयतया-उक्तसमूहालम्बन-स्थलीय-अप्रामाण्यज्ञानव्यक्तेः अनास्कन्दितत्वस्य कारणतावच्छेदके अनिवेशेन एव दोषवारणसम्भवात्। किञ्च प्रवृत्तिं प्रति इष्टसाधनत्वज्ञानं कारणम्। इष्टञ्च अभेदसम्बन्धावच्छिन्न-नीलत्वावच्छिन्न-प्रकारतानिरूपित-घटत्वावच्छिन्न-विशेष्यतानिरूपक-शाब्दबुद्धित्वावच्छिन्नं तदवच्छिन्नसाधनत्वस्य 'नीलो घट' इति वाक्येऽग्रहे 'नीलो घट' इति वाक्ये प्रवृत्तिः न स्यात् अतो विषयतादेः साध्यतावच्छेदके प्रवेश आवश्यक इत्यपि बोध्यम्।

ननु कार्यतावच्छेदककोटौ कारणाव्यवहितोत्तरत्वनिवेशेन नानाकार्यकारणभावकल्पनापेक्षया अन्यतमत्वेन एव आकाङ्क्षाज्ञानानां कारणत्वं परिकल्प्य एक एव कार्यकारणभावः अस्ति इति चेत्? अत्र उच्यते। अन्यतमत्वं प्रकृते प्रथमान्तनीलपदसमभिव्याहृत-प्रथमान्तघट-पदत्वरूप-आकाङ्क्षाज्ञान-प्रतियोगिक-भेदविशिष्ट-द्वितीयान्तनीलपदसमभिव्याहृत-द्वितीयान्तघटपदत्वरूप-आकाङ्क्षाज्ञानप्रतियोगिकभेदः इति एवं क्रमेण सकल-आकाङ्क्षाज्ञानभेदं निवेश्य तद्वद्-भिन्नत्वम् एव। तत्र विनिगमनाविरहेण एतद्-आकाङ्क्षाज्ञान-भेदविशिष्टत्वेन अपर-आकाङ्क्षा-ज्ञानभेदस्य अपर-आकाङ्क्षाज्ञानभेदविशिष्टत्वेन एतद्-आकाङ्क्षाज्ञान-भेदस्य इत्येवंक्रमेण प्रवेशे कारणताबाहुल्यम्। गुरुधर्मस्य कारणतावच्छेदकता चेति मूलोक्तप्रकारत्यागे बीजभावः। एवं भेदविशिष्टस्य जगतो भेदप्रतियोगितया प्रवेशेन अतितरां गौरवम्। न च भेदविशिष्टस्य जगतो भेदविशिष्टत्वेन एकरूपेण एव प्रवेशो, न तु तत्-तत्-रूपेण इति न गौरवं

जगत्प्रवेशप्रयुक्तमिति वाच्यम्। जगति सर्वत्र भेदविशिष्टत्वावच्छिन्नायाः कारणतावच्छेदकतायाः सम्बन्धकल्पनेन गौरवस्य स्पष्टत्वात् न अन्यतमत्वेन कारणत्वम्। न च तत्-तत्-आकाङ्क्षाज्ञानानां यावन्तो भेदाः तद्गत-समुदायत्वावच्छिन्न-प्रतियोगिताक-अभावस्य एव अन्यतमत्वरूपतया वैशिष्ट्यस्य अप्रवेशेन न कारणतावच्छेदकस्य नानात्वं विनिगमना-विरहप्रयुक्तम्। न वा जगत्प्रवेशप्रयुक्तं गौरवं जगतोऽप्रवेशात् इति वाच्यम्। यतो भेदगत-समुदायत्वस्य अपेक्षाबुद्धिविशेषविषयत्वरूपतया अपेक्षाबुद्धीनाञ्च नानात्वेन विनिगमनाविरहेण सर्वबुद्धिविषयत्वरूपाणां समुदायत्वानां प्रवेशेन कारणताबाहुल्यम्। अवच्छेदक-गौरवञ्च तदवस्थमेव। न च तावद्-आकाङ्क्षाज्ञाननिष्ठम् एकम् अखण्डोपाधिरूपं जातिरूपं वा अन्यतमत्वं मत्वा तदवच्छेदेन कारणत्वकल्पने एकमेव कारणत्वं लघुधर्मावच्छिन्नं च इति वाच्यम्। यतः समानविषयकशाब्दबोधं प्रति प्रत्यक्षसामग्र्याः प्रतिबन्धकतया तदभावः अपि आकाङ्क्षाज्ञानजन्यशाब्दबोधे सहकारि इति तादृश-प्रत्यक्षसामग्र्यां सत्याम् आकाङ्क्षाज्ञानादि-कारण-कलापात् न शाब्दबोधः। तत्रैव शाब्दबोधो जायतामिति इच्छायां सत्याम् इष्टस्य शाब्दबोधस्य उपपत्तये प्रत्यक्षसामग्र्यां शाब्देच्छाविरहविशिष्टत्वमपि देयम्। तथा च शाब्देच्छाविरहविशिष्टा प्रत्यक्षसामग्री नास्ति। विशेषणाभाव-प्रत्युक्तस्य विशिष्टाभावस्य सत्त्वात् उपपन्नः शाब्दबोधः। तथा यत्र 'नीलो घट' इति आकाङ्क्षाज्ञानं समानविषयकप्रत्यक्षसामग्री द्वितीयान्तनीलपदसमभिव्याहृत-द्वितीयान्तघटपदत्वरूप-आकाङ्क्षाज्ञानजन्यः शाब्द-बोधो जायताम् इति इच्छा तत्र शाब्दबोधो न जायते। शाब्दबोधेन उत्पन्नेन यस्या इच्छाया विषयसिद्धिः तस्या एव हि उत्तेजकत्वात्। तत्र तत्-तत्-रूपेण आकाङ्क्षाज्ञानस्य कारणत्वे प्रथमान्त-नीलपदसमभिव्याहृत-प्रथमान्तघटपदत्वरूप-आकाङ्क्षाज्ञान-अव्यवहितोत्तर-जायमाना-भेदसम्बन्धावच्छिन्न-नीलत्वावच्छिन्न-प्रकारतानिरूपित-घटत्वावच्छिन्न-विशेष्यताकशाब्दबुद्धित्वावच्छिन्नं प्रति प्रथमान्त-नीलपद-समभिव्याहृतप्रथमान्त-घटपदत्वरूप-आकाङ्क्षाज्ञानजन्य-शाब्देच्छाविरह-विशिष्ट-अभेदसम्बन्धावच्छिन्न-नीलत्वावच्छिन्न-प्रकारतानिरूपित-घटत्वावच्छिन्न-विशेष्यताक-प्रत्यक्षसामग्री-विरहविशिष्टं प्रथमान्तनीलपदसमभिव्याहृत-प्रथमान्त-घटपदत्वरूप-आकाङ्क्षाज्ञानं कारणमिति कार्यकारणभावशरीरे निष्पन्ने अन्यादृश-आकाङ्क्षाज्ञाने अन्यादृश-आकाङ्क्षाज्ञानाधीनशाब्देच्छायाः सत्त्वेऽपि प्रतिबन्धिकायां समानविषयकप्रत्यक्षसामग्र्यां सत्यां न बोधः। अन्यतमत्वेन प्रवेशे तु अन्यतम-आकाङ्क्षाज्ञानम् अन्यतम-आकाङ्क्षाज्ञानाधीन-शाब्देच्छाविरह-विशिष्टसमान-विषयक-प्रत्यक्षसामग्रीविरहविशिष्टम् अभेदसम्बन्धावच्छिन्न-नीलत्वावच्छिन्न-प्रकारतानिरूपित-घटत्वावच्छिन्न-विशेष्यताकशाब्दबोधं प्रति कारणमिति

कार्यकारणशरीरे सत्यां समानविषयकप्रत्यक्षसामग्र्यां कस्माच्चिदन्यतम-आकाङ्क्षाज्ञानात् कस्यामपि अन्यतम-आकाङ्क्षाज्ञानाधीनशाब्देच्छायां शाब्दापत्तिरतो न अन्यतमत्वे कारणत्वसम्भवः। अथ अव्यवहितोत्तरत्वनिवेशे 'नीलस्य घट' इत्यादौ शाब्दापत्तिः दुर्वारा एव। स्वोत्तरजायमान-अभेद-सम्बन्धावच्छिन्न-प्रकारताकशाब्दबोधं प्रति एव प्रथमान्त-नीलपदसमभिव्याहृत-प्रथमान्तघटपदत्वादिरूप आकाङ्क्षाज्ञानस्य कारणत्वेन आपाद्यमान-शाब्दबोधस्य तत्तदाकाङ्क्षाज्ञान-अनुत्तरत्वेन तत्तकार्य्यता-अवच्छेदकैः अनाक्रान्तत्वेन तत्तत्कारणविरहस्य अकिञ्चित्करत्वात्। न च अभेदसम्बन्धावच्छिन्न-नीलत्वावच्छिन्न-प्रकारता-निरूपित-घटत्वावच्छिन्न-विशेष्यताक-शाब्दबोधस्य अप्रसिद्धत्वादेव नापत्तिः। नीलो घट इत्यादौ तत्तदाकाङ्क्षाज्ञान-उत्तरत्वविशिष्ट-अभेदबोधस्य सत्त्वेऽपि शुद्धनीलत्वावच्छिन्न-अभेदबुद्धेः तत्र अभावेन न तत्र प्रसिद्धिरिति वाच्यम्। सामान्यस्य विशेषे एव सत्त्वेन आपद्यमानता-अवच्छेदकधर्मस्य अभेदसम्बन्धावच्छिन्न-नीलत्वावच्छिन्नप्रकारता-निरूपित-घटत्वावच्छिन्न-विशेष्यताक-शाब्दबुद्धित्वस्य तत्रैव प्रसिद्धेः। न च तर्हि तच्छाब्दबोधकारणीभूत-आकाङ्क्षाज्ञान-अभावादेव नापत्तिरिति वाच्यम्। आपाद्यमानतावच्छेदकधर्मस्य तत्तदाकाङ्क्षाज्ञानकार्यता-अनवच्छेदकत्वम् इत्यस्य उक्तत्वात्।

अत्र उच्यते - सामन्यधर्मावच्छिन्ने कार्ये जननीये विशेषधर्मावच्छिन्नकार्य-उत्पादकसामग्र्या अपेक्षा। यथा शुक्लपटत्वावच्छिन्नं प्रति शुक्लतन्तोः, कृष्णपटत्वावच्छिन्नं प्रति कृष्णतन्तोः कारणत्वे निर्णीते पटत्वावच्छिन्नकार्यस्य तत्-तत्-शुक्ल-कृष्णतन्तूनाम् एव अपेक्षा न तु कारणान्तरस्य। एवं सति सामान्यनीलत्वावच्छिन्न-अभेदसम्बन्धावच्छिन्न-प्रकारतानिरूपित-घटत्वावच्छिन्न-विशेष्यताक-शाब्दबुद्धित्वावच्छिन्ने विशेषत-तत्-तत्-आकाङ्क्षाज्ञान-अव्यवहितोत्तरत्व-विशिष्ट-तादृशधर्मावच्छिन्नकार्योत्पादकसामग्र्याः तत्-तत्-आकाङ्क्षाज्ञानादिघटिताया अपेक्षणात्। प्रकृते 'नीलस्य घट' इत्यादौ तासां तत्-तत्-आकाङ्क्षाज्ञानघटितानां सामग्रीणां कस्या अपि अभावेन न आपत्तिः।

ननु कारणकूट एव सामग्री। तथा च सामान्यधर्मावच्छिन्ने कार्ये जननीये विशेषधर्मावच्छिन्नस्य कार्यस्य कारणसमुदाय अपेक्ष्यते इत्येव फलति। तच्च न युक्तम्। 'नीलो घट' इत्यादौ सामान्यधर्मावच्छिन्नकार्यस्य सत्त्वेऽपि विशेष-तत्-तत्-आकाङ्क्षाज्ञान-अव्यवहितोत्तर-विशिष्ट-तादृश-धर्मावच्छिन्नकारण-कूटस्य सकल-तत्-तत् आकाङ्क्षाज्ञानघटितस्य अभावेन कुत्रापि अभेदबोध-अनापत्तेः इति चेत् ? न। विशेषधर्मावच्छिन्नकार्योत्पत्ति-प्रयोजकतावच्छेदक-

समुदायत्वावच्छिन्नस्य अपेक्षेति कथनेन अदोषात्। एकैक-आकाङ्क्षाज्ञानघटित-समुदायत्वस्यैव तथात्वेन तदवच्छिन्नस्य 'नीलो घट' इत्यादौ सर्वत्र सत्त्वात् अपेक्षाबुद्धिविशेषविषयत्वरूपसमुदायत्वस्य अननुगतत्वेऽपि कार्योत्पत्ति-प्रयोजकतावच्छेदकत्वेन अनुगमसम्भवात्। अभेदसम्बन्धेन नीलविशिष्ट-घटत्वावच्छिन्न-शाब्दबोधं प्रति तादृश-शाब्दबुद्धित्वव्याप्यधर्मावच्छिन्न-कार्यता-निरूपितकारणतावद्-आकाङ्क्षाज्ञानं कारणमिति प्रकृत-आपत्तिवारणाय अङ्गीक्रियते इति न आपत्तिः इति परे।

अत्र केचित् विशेष्यवाचकपदे प्रथमान्तत्वादिकम् अनिवेश्य एव प्रथमान्तनीलपदसमभिव्याहृतघटपदत्व-रूपाकाङ्क्षाज्ञान-अव्यवहितोत्तर-तादृश-शाब्दबुद्धित्वावच्छिन्नं प्रति प्रथमान्तनीलपदसमभिव्याहृत-प्रथमान्त-घटपदत्वरूप-आकाङ्क्षाज्ञानं कारणम्। एवं द्वितीयान्तनीलपद-समभिव्याहृत-घटपदत्व-रूपाकाङ्क्षाज्ञान-अव्यवहितोत्तरतादृशशाब्दबोधं प्रति द्वितीयान्तनीलपद-समभिव्याहृतद्वितीयान्तघटपदत्वरूपाकाङ्क्षाज्ञानं कारणम् इत्येवं क्रमेण कार्यकारणभावे 'नीलस्य घट' इत्यादौ आपाद्यमानशब्दस्य षष्ठ्यन्तनीलपद-समभिव्याहृत-षष्ठ्यन्तघटपदत्वरूप-आकाङ्क्षाज्ञानस्य कार्यतावच्छेदक-षष्ठ्यन्तनीलपदसमभिव्याहृतघटपद-व्यवहितोत्तर-तादृशशाब्दबुद्धित्व-आक्रान्ततया तादृशाकाङ्क्षाज्ञानाभावेन न आपत्तिः इति आहुः।

तत् न। 'नीलस्य घटः' 'नीलो घट' इति समूहालम्बनात्मक-आकाङ्क्षाज्ञान-आदिष्टस्य नीलघट-अभेदान्वयस्य अनापत्तेः तस्य स्वकीय-कार्यतावच्छेदक-आक्रान्तत्वेन षष्ठ्यन्तनीलपदसमभिव्याहृत-षष्ठ्यन्तघटपदत्व-रूप-आकाङ्क्षाज्ञानस्य अभावात्।

परे तु अव्यवहितोत्तरत्वादिघटितान् प्रथमान्तत्वादिघटितान् कार्यकारणभावान् षट्संख्यकान् विधाय तत्-तत्-आकाङ्क्षाज्ञान-अनुत्तर-तादृश-शाब्दबुद्धित्वावच्छिन्नं प्रति सप्तम्यन्तनीलपदसमभिव्याहृत-सप्तम्यन्तघटपदत्व-रूप-आकाङ्क्षाज्ञानस्य कारणत्वम् इति अभ्युपगमेन 'नीलस्य घट' इत्यादौ आपाद्यमानस्य अनुत्तरत्वादिघटित-कार्यतावच्छेदक-आक्रान्तत्वेन तत्कारण-अभावेन आपत्ति-अभावाद् इत्याहुः।

तदपि न। 'नीलो घटाः', 'नीलस्य घट' इति समूहालम्बनात्मक-आङ्क्षाज्ञानात् 'नीलो घट' इत्यंशे अप्रामाण्यज्ञान-आस्कन्दितात् नीलघट-अभेदान्वयबोधापत्तेः तादृश-आपाद्यमानस्य, तत्-तत्-आकाङ्क्षाज्ञान-अनुत्तरत्वादिघटित-कार्यतावच्छेदकधर्म-अनाक्रान्ततया सप्तम्यन्तत्व-घटित-कारण-विरहस्य अकिञ्चित्करत्वात् इति दिक्।

**VV-J. 2.5.1-2:** नाना-आकाङ्क्षाज्ञानानां कारणत्व-अपेक्षया लाघवात् एकस्य एव आकाङ्क्षाज्ञानस्य कारणत्वम् अस्तु इति न अनेककार्यकारणभावो नापि अव्यवहितोत्तरत्वादिनिवेश इत्याह - **यत्त्वित्यादिना**।

ननु विशेष्यवाचकपद-अप्रकृतिकविभक्ति-अप्रकृतित्वं विशेषण-वाचकपदे विशेषणवाचकपद-अप्रकृतिकविभक्ति-अप्रकृतित्वं विशेष्यवाचक-पदे। अनयोः एव विनिगमनाविरहेण कारणत्व-आपत्तौ अनेककारणत्वं कारण-अव्यवहितोत्तरत्व-निवेशोऽपि आवश्यक एव इत्यत आह - **विशेष्यवाचक** इत्यादि। **सत्त्वादिति**। प्रति उच्चारणं शब्दस्य भेदेन नीलपदोत्तरत्वादिविशिष्टविभक्तेः घटपदत्तोर-स्वादिविभक्तिभिन्नत्वम् इति भावः।

**VV-J. 2.6.1:** विभक्तीनां भेदेऽपि तन्निष्ठप्रथमात्वादीनाम् अभेदात् तद्घिटतस्य एव आकाङ्क्षात्वम् उच्यते - **अथेत्यादिना**। **विशेष्यवाचक-पदोत्तर-अवृत्तिविभक्तिविभाजकेत्यादि**। 'नीलो घटः' 'नीलघट' इत्यादौ विशेष्यवाचकं पदं घटपदं, तदुत्तरा सु-विभक्तिः, तद्-अवृत्तिः विभक्तिविभाजको द्वितीयात्वादिधर्मः, तद्-वत्यो द्वितीयादिविभक्तयः, तद्-राहित्यस्य उभयत्र नीलादौ सत्त्वेन साकाङ्क्षत्वम् उपपन्नम्। अथ विशेष्यवाचकं घटपदं तद्-उत्तरत्वं सर्वासां विभक्तीनां घटं, घटेन, घटाय इत्यादौ तन्निरूपितवृत्तित्वस्य एव सर्वेषां विभाजकद्वितीयात्वादीनां सत्त्वेन विशेष्यवाचकपदोत्तर-अवृत्तिविभक्ति-विभाजक-धर्म-अप्रसिद्धिः। विशेष्यवाचक-पदोत्तर-यत्किञ्चिद्-विभक्ति-अवृत्तित्वनिवेशे 'नीलो घट' इत्यादौ अपि न आकाङ्क्षा स्यात्। प्रथमात्वस्य अपि 'नीलं घटम्' इत्यादौ विशेष्यवाचकघटपदोत्तर-द्वितीयाविभक्ति-अवृत्तित्वेन तद्-वत्-सु-विभक्ति-प्रकृतित्वस्य एव नीलपदे सत्त्वात्। विशेष्यवाचकपदस्य घटपदत्वादिना प्रवेशेऽपि उक्तदोषद्वयस्य अनिस्तार एव। तद्व्यक्तित्वादिना प्रवेशे तु उक्तदोषद्वयनिस्तारेऽपि 'नीलो घट' इत्यादि-आनुपूर्वीमद्-वाक्येऽपि प्रति उच्चारणं घटशब्दस्य भेदेन तत्-तत्-व्यक्तिप्रवेशेन आकाङ्क्षाया अपि आनन्त्यापत्त्या 'वृश्चिकभिया पलायमानस्य तरक्षुमुखे निपात एव' इति चेत् ? न। उक्तस्थले नीलपदे घटपदत्वम् एव आकाङ्क्षा इति स्वीकारात्। घटपदवत्ता च स्वाभाववत्त्वसम्बन्धेन। अभावश्च स्वोत्तर-अवृत्तिविभक्तिविभाजकधर्मवद्-विभक्तिप्रकृतित्व-सम्बन्धावच्छिन्न-प्रतियोगिताकः। तथा च न अप्रसिद्धिः न वा अननुगमः। यद्घटपदवत्त्वं विवक्षितं तद्घटपदव्यक्ति-उत्तरविभक्तेः एव सम्बन्धघटकतया प्रवेशेन व्यक्त्यन्तरघटपदम् आदाय दोषदानस्य असम्भवात्।

**VV-J. 2.6.2:** **विभक्तित्वादिकमजानत** इति। येन विभक्तित्वं न ज्ञायते तस्यापि 'नीलो घट' इत्यादितः शाब्दबोधो भवति। विभक्तित्वघटिताया

आकाङ्क्षायाः स्वीकारे विभक्तित्वज्ञान-अभावेन तद्घटित-आकाङ्क्षाया अपि ज्ञानाभावेन तस्य तद्वाक्यात् शाब्दबोधो न स्यात् इत्यर्थः। न च स्वोत्तर-अवृत्तिधर्मवद्-इत्याद्येव उच्यतां विभक्तिविभाजकत्वं न निवेश्यतां तथा च विभक्तित्वज्ञानम् अन्तराऽपि शाब्दबोधः स्यादिति वाच्यम् । 'नीलो घट' इत्यादौ नीलपदोत्तरविभक्तिगत-तद्व्यक्तित्वस्य घटपदोत्तर-विभक्ति-अवृत्तित्वेन आकाङ्क्षा अनापत्तेः।

ननु विशेष्यवाचकपदोत्तर-अवृत्ति-श्रावणप्रत्यक्षविषयतावच्छेदक-धर्म-इत्याद्येव अस्तु तद्व्यक्तित्वस्य श्रावणप्रत्यक्षविषयता-अनवच्छेदकत्वात् न उक्तदोषः। स्वप्रतियोगिवृत्तित्व-स्वसामानाधिकरण्य-उभय-सम्बन्धेन भेदविशिष्ट एव धर्मो निवेश्यतां वा। तद्व्यक्तित्वञ्च भेदविशिष्टभिन्नम् एवेति चेत् ? उच्यते। 'नीलो घटः' 'नीलघट' इति वाक्यगतश्रावणप्रत्यक्षविषयतावच्छेदकधर्म-अतिरिक्तस्य तद्वाक्यगत-धर्मस्य शाब्दबोधात् प्राक् अज्ञानेऽपि शाब्दबोधस्य इष्टस्य अनापत्तेः। 'नीलो घट' इत्यत्र घटपद-उत्तरविसर्ग-अवृत्तेः ओत्वस्य नीलपदोत्तर-विभक्तिवृत्तित्वेन निराकाङ्क्षत्वापत्तेश्च। एतदर्थमेव विभक्तित्वादिक-इत्यत्र आदिपदोपादानम् इति दिक्।

**VV-J. 2.6.3:** ननु आकाङ्क्षा एव कारणं न तज्ज्ञानम् इति विभक्तित्वादिधर्म-अज्ञानेऽपि तस्या वस्तुतः सत्त्वेन अनुपपत्ति-अभाव इत्यत आह - **घट इत्यादावपि** इत्यादि। **स्वरूपत** इति वस्तुसत इत्यर्थः। अज्ञातस्य अपि इति यावत्। **विरुद्धविभक्तिराहित्यस्य** इति। निरुक्त-आकाङ्क्षाया इत्यर्थः।

**VV-J. 2.6.4:** **स्वोत्तर-सु-पदभिन्नपदानुत्तरत्व**-इत्यादि। अयं भावः। 'नीलो घटः', 'नीलघट' उभयत्र स्वोत्तरत्व-स्वोत्तरसुपदभिन्नपद-अनुत्तरत्व-उभय-सम्बन्धेन नीलपदविशिष्टस्वन्तघटपदत्वम् एव आकाङ्क्षा अस्तु। स्वन्तनीलपद-समभिव्याहृत-स्वन्तघटपदत्वं नीलपदाव्यवहितोत्तर-घट-पदत्वम् इति आकाङ्क्षाद्वय-उपगमो निरर्थक इति।

**VV-J. 2.6.5:** **नीलघटरूपमिति**। अत्र कर्मधारयपूर्वपदक-षष्ठीतत्पुरुषः। षष्ठीतत्पुरुष-उत्तरपदककर्मधारयो वा। आद्ये नीलस्य घटान्वयित्वे एकदेशान्वयापत्तिः। समासे वृत्ति-अभावेन घटस्य घटीये लक्षणां विधाय रूपे अभेदान्वयस्य एव वक्तव्यत्वात्। द्वितीये रूपस्य एव विशेष्यवाचकपदत्वं न घटरूपसमुदायस्य तत्र वृत्ति-अभावात्। तथा च नीलोत्तर-सु-भिन्नपदं घटपदं तदुत्तरत्वस्य एव रूपपदे सत्त्वेन आनाकाङ्क्षत्वापत्तेः तदर्थम् अन्यादृश्या अपि आकाङ्क्षाया वक्तव्यत्वेन कार्यकारणभावबाहुल्यात् उक्तस्थलद्वये एक-आकाङ्क्षायाः सद्भावस्य अकिञ्चित्करत्वात्। इदम् उपलक्षणम्। 'नीलौ घटौ'

'नीला घटाः' इत्यादि सर्वविभक्त्यन्तवाक्यानां 'नीलघटौ' 'नीलघटा' इत्यादि-समासानां च एकविध-आकाङ्क्षाया वक्तुम् अशक्यत्वात्। सर्वत्र दोषस्य सत्त्वात् स्वोत्तरसुप्पदभिन्नपद-अनुत्तरत्व-स्वोत्तरत्व-उभयसम्बन्धेन नीलपद-विशिष्ट-सुबन्तघटपदत्वरूप-आकाङ्क्षायां तात्पर्यकल्पने उक्तस्थलेषु दोष-अभावेऽपि 'नीलस्य घटः' 'नीलौ घट' इत्यादीनामपि साकाङ्क्षत्वापत्तेः तस्मात् स्वोत्तरसुपः सुत्वादिना एव प्रवेश्य स्वोत्तरसुपदभिन्नपद-अनुत्तरत्व-स्वोत्तरत्व-उभयसम्बन्धेन नीलपद-विशिष्टस्वन्त-घटपदत्वम् इतिरीत्या नानाविधाया एव तस्या वक्तव्यत्वात्। 'घटो नीलः' 'नीलोऽस्ति घट' इत्यादौ अपि भिन्ना एव आकाङ्क्षा।

**VV-J. 2.7.1:** 'नीलं घटम् आनय' इत्यत्र नीलघटयोः अभेदान्वयबोधे शाब्दत्वस्य सर्वानुभवसिद्धतया न नीलान्वितकर्मत्वस्य आनयनक्रियायाम् अन्वयः। घटे अन्वितस्य नीलस्य कर्मत्वेऽपि अन्वये द्विधा भानप्रसङ्गात् प्रकृत्यर्थ-अन्वितस्य एव प्रत्ययार्थस्य भाननियमात्। नील-अनन्वित-कर्मत्वस्य क्रियायाम् अन्वय-असम्भवात्। नाऽपि नीले कर्मत्वस्य अन्वयः, कारकाणं क्रियायाम् अन्वयनियमात्। प्रकृत्यर्थं प्रति प्रत्ययार्थस्य विशेष्यत्वनियमाच्च। नीलान्वितकर्मत्वस्य च क्रियायाम् अन्वयः नीलघटयोः अभेदभानं मानसं नीलनिष्ठकर्मतानिरूपकम् आनयनं घटश्च नीलाभिन्न इत्यपि न। अभेदांशे अनुभवसिद्धस्य शाब्दत्वस्य अपलपितुम् अशक्यत्वात्। इत्थञ्च कर्मत्वस्य कुत्र अन्वय इति प्रश्नः। न कुत्रापीति। कर्मत्वस्य न भानम्।

**VV-J. 3.1.1:** अभेदान्वयबोधप्रयोजक-समानविभक्तिकत्व-रूप-आकाङ्क्षा-सम्पादकतयां एव साधुत्वार्थत्वम्। तदर्थस्य अभाने निरर्थकत्वम् एव इत्यत आह- **अभेद एवेति**। ननु तर्हि अभेदस्य प्रातिपदिकार्थे संसर्गतया भानमिति पूर्वग्रन्थविरोधः अत आह - **समासस्थल** इति। ननु समासेऽपि विभक्तेः अनुसन्धानेन तदर्थ एव अभेद इत्यत आह - **तत्र लुप्तविभक्तीत्यादि**। अभेदस्य च भेदाभावोऽर्थः तदर्थ-एकदेशभेदे नीलस्य स्वनिष्ठ-प्रतियोगिताकत्वसम्बन्धेन अन्वयः अभावस्य च स्वरूपसम्बन्धेन घटे अन्वयः। तथा च नीलनिष्ठ-प्रतियोगितानिरूपकभेदप्रतियोगिक-अभावविशिष्टो घट इत्यर्थः।

**VV-J. 3.1.2(a): एतन्मत** इति। अभेदस्य विभक्त्यर्थत्वमत इत्यर्थः। **तदा अप्रसिद्धिरिति** । यस्य कस्यचिद्भेदस्य सर्वत्रैव सत्त्वात् अभावस्य प्रतियोगितावच्छेदकावच्छिन्नेन सह विरोधात् भेदत्वावच्छिन्नप्रतियोगिताक-अभाव-अप्रसिद्धिः इत्यर्थः।

ननु तादृश-अभावस्य अप्रसिद्धत्वे तत्प्रसिद्धेः अपि अप्रसिद्धत्वे तत्प्रसिद्धि-अभावोऽपि अप्रसिद्ध इति तदा अप्रसिद्धिः इत्यस्य कोऽर्थः ? अत्र

उच्यते। स्यात् अयं दोषो यदि अप्रसिद्धि-एकदेशप्रसिद्धौ भेदत्वावच्छिन्न-अभावान्वयः स्यात्। स एव न किन्तु घटादौ भेदस्य भेदे भेदत्वावच्छिन्न-प्रतियोगिताकत्वस्य प्रसिद्धस्य अत्यन्ताभावे अप्रसिद्धिः इत्यर्थः। भेदनिष्ठप्रकारतादौ प्रसिद्धस्य भेदत्वावच्छिन्नत्वस्य अत्यन्ताभावीय-प्रतियोगितायाम् अप्रसिद्धिः इत्यर्थो वा इति बोद्ध्यम्।

ननु भेदत्वेन घटाभावस्य संयोगेन भेदाभावस्य भेदघट-उभयाभावस्य च भेदत्वावच्छिन्नप्रतियोगिताकतया तेषां च प्रसिद्धतया कथं भेदत्वावच्छिन्न-प्रतियोगिताकोऽभाव अप्रसिद्ध इति चेत् ? न। भेदनिष्ठ-स्वरूपसम्बन्धावच्छिन्न-भेदत्वपर्याप्तावच्छेदकतानिरूपित-अवच्छेद्यतावत्-प्रतियोगिताकोऽभावो अप्रसिद्ध इति तात्पर्यात्। आद्ये प्रतियोगितायां भेदनिष्ठत्व-अभावात्, द्वितीये तस्यां स्वरूपसम्बन्धावच्छिन्नत्व-अभावात्, तृतीये तस्यां भेदत्वपर्याप्तावच्छेदकता-निरूपितावच्छेद्यताया अभावात्, तेषाम् अभावानां प्रकृताभावपदेन अग्रहणात्। ननु 'भेदत्वेन भेदघटौ न स्त' इति प्रतीतिविषयीभूतोऽभावः तादृशः प्रतियोगिताया भेदवृत्तित्वात्। एवं स्वरूपसंयोग-उभयसम्बन्धेन भेदत्वेन भेदाभावोऽपि तथा प्रतियोगितायाः स्वरूपसम्बन्धावच्छिन्नत्वात् किञ्च भेदघट-उभयाभावीय-प्रतियोगितावच्छेदकतापि प्रत्येकघटत्वादिपर्याप्तैव न तु भेदत्वघटत्वादि-त्रितयपर्याप्ता मानाभावात्। घटो नास्ति भेदो नास्तीति प्रतीतिविषयीभूत-प्रतियोगितावच्छेदकतायाः घटत्वादिप्रत्येकपर्याप्ताया एव उभयाभावीयप्रतियोगिता-निरूपितत्वेनापि भानसम्भात् तस्य च प्रसिद्धत्वात् इति चेत् ? न। उभयादिपर्याप्ताया एकस्या अभावे घटसत्त्वे घटो नास्ति भेदो नास्ति इति समूहालम्बनप्रतीतिः न भवति। 'घटभेदौ न स्त' इति प्रतीतिश्च भवति। अतो निरुक्तसमूहालम्बनप्रतीतिविषयाभाव-विलक्षणीयम् उभयाभावः। वैलक्षण्यञ्च एतदेव यद्-उभयाभावीय-प्रतियोगितावच्छेदकतायाः घटत्वादि-उभयपर्याप्तत्वम् इति अदोषात्। भेदत्वविशिष्टाभावस्य एव विवक्षितत्वात्। वैशिष्ट्यञ्च स्वपर्याप्तावच्छेदकता-निरूपितावच्छेद्यतावत्-स्वरूपसम्बन्ध-पर्याप्तावच्छेदकता-निरूपितावच्छेद्यतावत्-प्रतियोगिताकत्व-स्वपर्याप्तावच्छेदकता-निरूपितावच्छेद्य-तावन्निरूपकतानिरूपित-निरूप्यतावत्त्व-उभयसम्बन्धेन। भेदत्वेन भेदघट-उभयाभावीयप्रतियोगितावच्छेदकताया भेदत्वपर्याप्तत्वेऽपि तदभावीय-निरूपकतावच्छेदकताया भेदत्वापर्याप्तत्वात्। द्वितीयेऽभावे च संसर्गतात्मक-प्रतियोगितावच्छेदकतायाः स्वरूप-संयोग-उभयपर्याप्तत्वेन स्वरूप-सम्बन्धापर्याप्तत्वात्।

ननु घटत्व-भेदत्व-उभयत्व-त्रितयपर्याप्तापि अवच्छेदकता भेदत्वेऽपि पर्याप्ता एव, "न हि अवयव-अपर्याप्तस्य समुदाये पर्याप्तिः अस्ति" इत्युक्तेः। तथा

च उभयाभावीयापि प्रतियोगिता भेदत्वपर्याप्तावच्छेदकतानिरूपकतावच्छेदकता अपि उक्तरीत्या भेदत्वपर्याप्ता इति कथम् उभयाभावस्य अग्रहणम् इति चेत् ? न। त्रितयपर्याप्तायाः तस्याः प्रत्येकपर्याप्तत्वेऽपि पर्याप्तिः एका एव। तदनुयोगितावच्छेदकं त्रितयगतं त्रित्वमेव समनियतत्वात्। न तु भेदत्वगतम् एकत्वं तस्य अनुयोगितापेक्षया अन्यूनवृत्तित्वात्। तथा च भेदत्वगत-एकत्व-विशिष्टोऽभाव एव अप्रसिद्धत्वेन विवक्षित इति अदोषात्। वैशिष्ट्यञ्च (१)स्वावच्छिन्नानुयोगिताक-पर्याप्ति-प्रतियोग्यवच्छेदकतानिरूपितावच्छेद्यतावन्निरूपकताकत्व-(२)स्वावच्छिन्न-अनुयोगिताक-पर्याप्तिप्रतियोग्यवच्छेदकतानिरूपितावच्छेद्यतावती या स्वरूपसम्बन्ध-त्वगतैकत्वावच्छिन्नानुयोगिताक-पर्याप्तिप्रतियोग्यवच्छेदकतानिरूपितावच्छेद्यता-वती प्रतियोगिता तन्निरूपकत्व-उभयसम्बन्धेन। उभयाभावीयप्रतियोगिता च न भेदत्वगतैकत्वावच्छिन्नानुयोगितानिरूपक-पर्याप्तिप्रतियोगिभूतावच्छेदकताका। अपि तु त्रित्वावच्छिन्नानुयोगितानिरूपक-पर्याप्तिप्रतियोगिभूतावच्छेदकताका इति। तस्य प्रसिद्धत्वेऽपि विवक्षिताभावस्य अप्रसिद्धत्वात्।

ननु द्वित्वादिकं यथा द्वित्वत्वादिना एव व्यासज्यवृत्तिः, न तु वस्तुत्वादिना अपि, तथा उभयाभावस्य प्रतियोगितावच्छेदकता निरूपकतावच्छेदकता प्रतियोगितानिरूपितसंसर्गतात्मकावच्छेदकता च अवच्छेदकतात्वेन एव व्यासज्यवृत्तिः न तु वस्तुत्वादिनाऽपि। तथा च वस्तुत्वावच्छिन्न-प्रकृतावच्छेदकतानिष्ठ-प्रतियोगितानिरूपक-पर्याप्त्यनुयोगितावच्छेकं भेदत्वगत-एकत्वम् एव। वस्तुत्वावच्छिन्ना या निरूपकतावच्छेदकता-निष्ठप्रतियोगिता तन्निरूपक-पर्याप्त्यनुयोगितावच्छेदकमपि भेदत्व-गतमेकत्वम्। तथा वस्तुत्वावच्छिन्ना या प्रतियोगितानिरूपित-संसर्गतात्मकावच्छेदकता-निष्ठाप्रतियोगिता तन्निरूपकपर्याप्त्यनुयोगितावच्छेदकमपि स्वरूप-सम्बन्धत्वगतम् एकत्वम्। तथा च भेदत्वगत-एकत्वविशिष्ट-अभावोऽपि स एव उभयाभावो वस्तुत्वावच्छिन्नप्रतियोगिताम् आदाय इति स एव दोष इति चेत्? न। (१)स्वनिरूपितप्रतियोगितावच्छेदकतात्वावच्छिन्नप्रतियोगिता-निरूपक-पर्याप्त्यनु-योगितावच्छेदकत्व-(२)स्वनिरूपकतावच्छेदकतात्वावच्छिन्न-प्रतियोगिताक-पर्याप्त्यनुयोगितावच्छेदकत्व-उभयसम्बन्धेन भेदत्वगत-एकत्व-वृत्तिः यः अभावः तस्यैव अभिप्रेतत्वेन अदोषात्। वस्तुत्वावच्छिन्न-प्रतियोगितायाः संसर्गघटकत्वात्। संसर्गघटकाभावीयप्रतियोगिता च स्वनिरूपितसंसर्गतात्मक-अवच्छेदकतात्वा-वच्छिन्नप्रतियोगितानिरूपक-पर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन स्वरूप-सम्बन्धत्वगत-एकत्ववृत्तिः एवेति न स्वरूप-संयोग-उभयसम्बन्धेन भेदाभावम् आदाय अपि दोषः।

ननु भेदत्व-घटत्व-उभयत्व-एतत्-त्रितयगतापि अवच्छेदकताभेदत्व-वृत्तित्व-विशिष्टावच्छेदकतात्वेन भेदत्व एव। सकलब्राह्मणवृत्त्यपि ब्राह्मणत्वं चैत्रवृत्तित्वेन चैत्र एव इतिवत्। तथा च अवच्छेदकतात्वावच्छिन्न-प्रतियोगिताक-पर्याप्त्यनुयोगितावच्छेदकमपि भेदत्वगत-एकत्वम् एवेति स दोषः तदवस्थ एव। यद्यपि भेदत्ववृत्तित्वावच्छेदकतात्वोभयधर्मावच्छिन्ना पर्याप्तीया प्रतियोगिता न अवच्छेदकतात्वावच्छिन्ना तथापि पूर्वोक्तरीत्या उभयपर्याप्ताया अपि प्रतियोगितावच्छेदकतायाः अवच्छेदकतात्वपर्याप्तत्वम् अक्षतम् एवेति अवच्छेदकतात्वपर्याप्तावच्छेदकतानिरूपितावच्छेद्यतावत्वेन प्रतियोगितायाः प्रवेशेऽपि दोषानुद्धार एव। न च स्वनिरूपितावच्छेदकतात्वावच्छिन्न-प्रतियोगिताक-पर्याप्त्यनुयोगितावच्छेदकत्व-संबन्धेन अवच्छेदकतात्व-गतैकत्व-वृत्तिप्रतियोगितानिरूपकपर्याप्तेरेव प्रवेशात् न दोष इति वाच्यम्। उक्तरीत्या उभयवृत्ति अपि अवच्छेदकताऽवच्छेदकतात्ववृत्तित्वेन अवच्छेदकतात्व एव। तत्रापि किञ्चिन्निवेशे पुनरपि पूर्वोक्तरीत्या दोष इति अनवस्थापात इति चेत् ? अत्र उच्यते। भेदत्ववृत्तित्वविशिष्टावच्छेदक-तावद्-भेदत्वमिति प्रतीतौ अवच्छेदकता-निष्ठाधेयता भेदत्ववृत्तित्वावच्छिन्ना एव न अवच्छेदकतात्वावच्छिन्ना, नापि भेदत्व-वृत्तित्वावच्छेदकतात्व-उभयधर्मावच्छिन्ना, मानाभावात्। तथा च स्वनिरूपिता-वच्छेदकतात्वावच्छिन्न-पर्याप्तिसम्बन्धावच्छिन्न-आधेयतानिरूपित-अधिकरणता-वच्छेदकत्वसम्बन्धेन भेदत्ववृत्तिप्रतियोगिता-निरूपकाभाव एव अप्रसिद्धत्वेन विवक्षितः। प्रकृत-आधेयताया भेदत्ववृत्तित्वावच्छिन्नत्वेन अवच्छेदकता-त्वावच्छिन्नत्वाभावात् न दोषः। न च भेदत्ववृत्तिमत् भेदत्वं, भेदत्ववृत्त्यवच्छेदकतावत् भेदत्वम् अनयोः प्रतीत्योः भेदत्ववृत्तित्वावच्छिन्नाया एव आधेयताया विषयत्वे वैलक्षण्यानुपपत्तिः इति वाच्यम्। एकत्रावच्छेदकतात्वस्य प्रकारत्वम् अपरत्र न इति एतद्वैलक्षण्यस्य एव सत्त्वात्। विस्तरस्तु अस्मद्विरचितायां **"शास्त्रार्थरत्नावल्यां"** **"विजयायां"** च द्रष्टव्यः।

**VV-J. 3.1.2(b):** **यदि च भेदप्रतियोगिकोऽभाव** इति। तथा च यस्य कस्यचिद्भेदस्य सत्त्वेऽपि यस्य कस्यचिद्भेदस्य तद्व्यक्तित्वेन अभावसद्भावात् न अप्रसिद्धिः इति भावः। 'नीलो घट' इत्यादौ नीलस्य स्वनिष्ठप्रतियोगिताकत्व-सम्बन्धेन विभक्त्यर्थभेदाभावैकदेशे भेदे अन्वयः, अभावस्य च स्वरूपसम्बन्धेन घटे अन्वयः। तथा च 'नीलनिष्ठप्रतियोगिता-निरूपक-भेदनिष्ठ-प्रतियोगितानिरूपक-अभावविशिष्टो घट' इति बोधः।

**VV-J. 3.1.2(c):** ननु नीलप्रतियोगिकभेदस्य एव जले सत्त्वेन तस्य तद्व्यक्तित्वेन अपि अभावो जले नास्तीति कथं 'नीलं जलम्' इत्यस्य प्रामाण्यम्?

इत्यत आह - द्वित्वादिनेति। 'भेदघटोभयं नास्ति', 'पृथिवीवृत्तित्वविशिष्टभेदो नास्ती'ति प्रतीतिविषयीभूतस्य द्वित्वावच्छिन्न-प्रतियोगिताकस्य पृथिवीवृत्तित्व-भेदत्व-उभयधर्मावच्छिन्नप्रतियोगिताकस्य च नीलभेदप्रतियोगिकस्य अभावस्य जले सत्त्वेन प्रामाण्यं स्यात् इत्यर्थः। यदि च भेदत्वनिष्ठप्रतियोगितावच्छेदकताकोऽभावः तथापि स एव दोषः। उक्त-अभावस्य अपि भेदत्वनिष्ठप्रतियोगितावच्छेदकताकत्वात्। यदि च भेदत्वपर्याप्ति-प्रतियोगितावच्छेदकताकोऽभावो विवक्षितः प्रकृत-अभावीय-प्रतियोगितावच्छेदकतापर्याप्तिश्च न भेदत्वे तदा अप्रसिद्ध एव इत्युक्तम्।

ननु प्रतियोगिव्यधिकरणोऽभावो गृह्यते। निरुक्ताभावौ च प्रतियोगिभूत-भेदसमानाधिकरणम् एवेति न दोष इति चेत् ? न। सर्वस्यैव पदार्थस्य प्रतियोगितया प्रतियोगिव्यधिकरणाभावस्य अप्रसिद्धेः। स्वप्रतियोगिव्यधिकरण इत्युक्तौ अननुगमः।

ननु व्यासज्यवृत्तिधर्मानवच्छिन्न-भेदनिष्ठप्रतियोगिता-निरूपकः अभावो गृह्यते। निरुक्त-अभावस्य व्यासज्यवृत्ति-द्वित्वावच्छिन्नप्रतियोगिताकत्वात् इति चेत्? न। तथापि पृथिवीवृत्तित्वविशिष्ट-नीलभेदाभावं, घटत्वेन नीलभेदाभावं, संयोगेन नीलभेदाभावं च आदाय 'नीलं जलम्' इत्यस्य प्रामाण्यापत्तेः अवारणात्। यदि च (१)स्वप्रतियोगि-सामानाधिकरण्य- (२)स्वतादात्म्य-एतद्-उभयसम्बन्धेन अभावविशिष्टभिन्नोऽभावः स्वनिरूपकत्व-स्वाश्रयसामानाधिकरण्य-उभयसम्बन्धेन प्रतियोगिताविशिष्टान्यो वा अभावो गृह्यते। उक्त-अभावाश्च न एतादृशा इति न दोषो, नापि अननुगमो न वा अप्रसिद्ध इत्युच्यते। तदा पुनरपि अभावविशिष्ट-घटोभयभेदं प्रतियोगिताविशिष्ट-घटोभयभेदं च आदाय निरुक्ताभावानाम् अपि ग्रहणसम्भवेन दोष एव इति चेत् ? अत्र उच्यते। अभावविशिष्टत्व - प्रतियोगिताविशिष्टत्व - पर्याप्तप्रतियोगितावच्छेदकताकभेदस्य ग्रहणेन उभय-भेदस्य निरसनेन न दोष इति चेत् ? इदमत्रावधेयम्। नीलभेदः स्व-अभाववत्त्वसम्बन्धेन नीलत्वसमनियत्वात् नीलत्वरूपः। तथा च नीलभेदाभावस्य नीलभेद इव नीलत्वमपि प्रतियोगि तत्समानाधिकरण एव नीलभेदाभाव इति प्रतियोगिताविशिष्टान्यो नीलभेदाभावः अप्रसिद्ध एव। किञ्च अनीलघटभेदो नीलगुणस्वरूपः। नीलगुणस्य च नानात्वात् यत्किञ्चित् नीलगुणवति अपि घटे यत्किञ्चिन्नीलगुणात्मकस्य अनील-घटभेदस्य योऽभावः तस्य सत्त्वेन 'नीलो घटोऽनील' इति आपद्येत इति।

ननु 'नीलो घट' इत्यादौ नीलभेदत्वावच्छिन्नप्रतियोगिताकाभाव एव विभक्त्यर्थः अस्तु। नीलभेदत्वपर्याप्तावच्छेदकतायाः प्रवेशेन न उभयाभावम्

आदाय 'नीलं जलम्' इत्यस्य प्रामाण्यम्। नीलस्य प्रतियोगितावच्छेदके प्रवेशेन न अप्रसिद्धिरपि। न च 'पीतो घट' इत्यादौ पीतभेदत्वावच्छिन्नप्रतियोगिताक-अभावस्यैव विभक्त्यर्थत्वं वक्तव्यम्। तथा च शक्यतावच्छेदक-आनन्त्येन शक्त्यनन्तताप्रसङ्ग इति वाच्यम्। स्वप्रकृत्यर्थतावच्छेदकत्वोपलक्षित-धर्मावच्छिन्नप्रतियोगिताक-भेदत्वावच्छिन्न-प्रतियोगिताकाभावत्वस्य एकस्यैव शक्यतावच्छेदकत्वेन आनन्त्य-अप्रसङ्गात् नीलादिपदसमभिव्याहाराच्च। नीलत्वाद्यवच्छिन्नप्रतियोगिताक-भेदत्वावच्छिन्नप्रतियोगिताक-अभावो विभक्त्यर्थो लभ्यते। 'पीतो घट' इत्यादौ च पीतपदसमभिव्याहारात्। पीतत्वावच्छिन्न-प्रतियोगिताक-भेदत्वावच्छिन्नप्रतियोगिताक-अभावो विभक्त्यर्थ इति आह - **नीलभेदत्वावच्छिन्नप्रतियोगिताकाभावस्य** इत्यादि।

**नीलादिपदार्थानन्वय** इति। नीलरूपप्रकृत्यर्थस्य विभक्त्यर्थैकदेशे नीले अभेदेन नान्वयः। प्रकारतावच्छेदकभेदस्य विशेष्यतावच्छेदकेऽभावात्। नापि नीलभेदे स्वप्रतियोगिकत्वसम्बन्धेन अन्वयः। उद्देश्यतावच्छेदके नीले विधेयभूतनीलभेदाभावात्। तयोर्भेदस्य शाब्दबोधे हेतुत्वात्। अन्यथा घटो घटत्ववानिति प्रतीत्यापत्तेः। अत एव नीलभेदत्वावच्छिन्नाभावेऽपि वृत्तित्व-सम्बन्धेन अन्वयोऽपि न।

**VV-J. 3.1.3:** न च **भेदप्रतियोगिकाभाव एव विभक्तर्थः**। भेदे च नीलस्य स्वनिष्ठप्रतियोगिताकत्व-सम्बन्धेनान्वयः। नीलपदसमभिव्याहाररूपाकाङ्क्षा-बलाच्च भेदस्य पदार्थैकदेशस्य स्वनिष्ठनीलभेदत्वावच्छिन्नप्रतियोगिताकत्व-सम्बन्धेन अभावे अन्वयः। तथा च नीलभेदत्वावच्छिन्नाभावस्य न अप्रसिद्धिः। अवच्छेदकप्रवेशाच्च न उभयाभावमादाय 'नीलं जलम्' इत्यस्य प्रामाण्यं, 'पीतो घट' इत्यादौ च पीतपदसमभिव्याहारात् पीतभेदत्वावच्छिन्नप्रतियोगिताकत्व-सम्बन्धेन अन्वय इति सर्वम् उपपन्नम्।

**पदार्थद्वयसंसर्गभानस्यैवेत्यादि**। एकपदार्थेऽपरपदार्थस्यैव संसर्गस्य आकाङ्क्षाभास्यत्वनियमात् भेदरूपपदार्थैकदेशस्य अभावरूप-पदार्थैकदेशे नीलभेदत्वावच्छिन्नप्रतियोगिताकत्वसंसर्गस्य नीलपदसमभिव्याहाररूपाकाङ्क्षा-भास्यत्वासम्भवात्, नीलभेदत्वावच्छिन्नप्रतियोगिताकत्वस्य भानाय विभक्त्यर्थता-वच्छेदककोटौ एव प्रवेशः कर्त्तव्यः। तथा च पूर्वोक्तोऽनन्वय एवेति भावः।

**VV-J. 3.1.4:** **मैवमिति**। भेदप्रतियोगिकाभावरूपविशिष्टस्य विभक्त्यर्थत्वे एव भेदादेः पदार्थैकदेशत्वं स्यात्, तदेव नेत्याह - **भेदोऽभावश्चेति**। तथा च उभयोः पदार्थत्वात्। प्रकृत्यर्थस्य नीलादेः भेदपदार्थे नीलत्वावच्छिन्न-प्रतियोगिताकत्व-सम्बनेधेन अन्वयः। भेदस्य च अभावपदार्थे स्वनिष्ठनीलभेदत्वावच्छिन्न-

प्रतियोगिताकत्वसम्बन्धेन अन्वयः। नीलपदसमभिव्याहाररूपाकाङ्क्षाबलादित्याह - **विशिष्टलाभस्त्विति**। नीलभेदत्वावच्छिन्नप्रतियोगिताकाभावलाभस्त्वित्यर्थः। **इत्यपि निरस्तमिति**। भेदस्य विभक्तिजन्योपस्थितीयमुख्यविशेष्यताश्रयत्वरूपपदार्थतया पदार्थैक-देशत्वाभावान्नैकदेशान्वय इति भावः।

**VV-J. 3.2.1:** **विशेषणविभक्तेरभेदार्थकत्वमते** इति। अनेन ग्रन्थेन अभेदसंसर्गकबोधाभ्युपगमे नायं दोष इति लभ्यते। अन्यथा विशेषणविभक्तेः अभेदार्थकत्वेतिविशेषोक्तेः असङ्गत्यापत्तेः तन्न उपपद्यते। संसर्गतामते 'धान्येन धनवान्' इत्यादावपि अभेदसंसर्गकबोध एव वक्तव्यः। तथा च संसर्गतया भाने समानविभक्तिकत्वस्य अनियामकत्वात् तन्मतेऽपि 'नीलं घट' इत्यादौ आपत्तिसम्भवाद् **विशेषणविभक्तेरभेदार्थकत्व** इत्यसङ्गतम् एवेति चेत् ? न। संसर्गतया भाने 'स्तोकं पचति' इत्यादेरिव 'धान्येन धनवान्' इत्याकाङ्क्षाया नियामकत्वेऽपि 'नीलं घट' इत्याकाङ्क्षाया अनियामकत्वेन दोषाभावात्। प्रकारतामते एव दोषस्य सत्त्वेन विशेषोक्तेः आवश्यकत्वात्। **'नीलं घट' इत्यादावपि अभेदान्वयबोधापत्तिरिति**। नीलप्रतियोगिकभेदाभावविशिष्टो घट इति बोधापत्तिरित्यर्थः। नन्वभेद-प्रकारकबोधेऽपि समानविभक्तिकत्वरूपविरुद्धविभक्ति-राहित्यस्य अपेक्षणात् न आपत्तिरित्यत आह - **धान्येनेत्यादि**। **द्वितीयादिनेति**। प्रथमार्थाभेद-प्रकारकबोधे प्रथमान्तविशेष्यवाचकपदसमभिव्याहारः कारणम् इत्यादिरीत्या कार्यकारणभाव इति भावः।

नन्वादिपदेन सर्वासां विभक्तीनां ग्रहणे 'धान्येन धनवान्' इत्यादौ अभेदान्वयबोधानापत्तिः। तृतीयातिरिक्तानां तासां ग्रहणे तृतीयार्थभेद-प्रकारकबोधे तृतीयान्तविशेष्यवाचकपदसमभिहारस्य अनपेक्षणात्। 'नीलेन घट' इत्यत्रापि अभेदबोधापत्तिः। न च 'धान्येन धनवान्' इतिवत् 'नीलेन घट' इत्यपि ईष्यते एवेति वाच्यम्। "प्रकृत्यादिभ्य उपसंख्यानम्" इति वार्त्तिकेतरस्य अभेदे तृतीयाविधायक-शास्त्रस्य अभावात्। तच्च वार्त्तिकं सर्वविभक्त्यपवादभूतम्। अत एव प्रकृत्या चारुः, गोत्रेण गार्ग्यः, समेनैति, विषमेनैति इत्यादौ प्रकृतेश्चारुः, प्रकृतिश्चारुः, गोत्रो गार्ग्यः, सममेति, विषममेति इत्यादयो न प्रयोगाः। तथा च यत्र तृतीयातिरिक्ता विभक्तिर्न प्रामाणिकी तत्रैव "प्रकृत्यादिभ्य" इति वार्त्तिकं प्रवर्त्तते इति निश्चीयते। अत्र च 'नीलो घट' इति प्रयोगे प्रथमायाः प्रामाणिकत्वं सर्वैरवगम्यते। तस्मान्न प्रकृत्यादिपदेन नीलादीनां ग्रहणमिति 'नीलेन घट' इति प्रयोगो न प्रमाणिकः। इदानीं 'नीलेन घट' इत्यस्यापि बोधजनकत्वेन प्रामाणिकत्वापत्तिरिति चेत्? न। "प्रकृत्यादिभ्य उपसंख्यानम्" इति वार्त्तिकविहित-तृतीयातिरिक्त-तृतीयार्थ-अभेदप्रकारक-बोधे तृतीयान्तविशेष्यवाचक-पदसमभिहारः कारणमिति कार्यकारणभावकल्पनेन 'नीलेन घट' इत्यादावापत्त्यभावात्।

**VV-J. 3.3.1:** **अथ प्रमेयो घट** इति। विभक्त्यर्थे भेदे प्रकृत्यर्थस्य प्रमेयत्वावच्छिन्नप्रतियोगिताकत्व-सम्बन्धेन, भेदस्य च प्रमेयत्वावच्छिन्न-प्रतियोगिताक-भेदत्वावच्छिन्नप्रतियोगिताकत्व-सम्बन्धेनाभावेऽन्वयः कार्यः। स च न सम्भवति। भेदस्य हि प्रतियोगितावच्छेदकेन सह विरोधात्। सर्वत्र प्रमेयत्वस्य सत्त्वेन प्रमेयत्वावच्छिन्नप्रतियोगिताकभेदाप्रसिद्धिरित्याह - **प्रमेयत्वावच्छिन्न-प्रतियोगिताक-भेदाप्रसिद्ध्येति**। कम्बुग्रीवादिमति कम्बुग्रीवादिमत्त्वं घटत्वञ्च वर्त्तते। कम्बुग्रीवादिमति या भेदीया प्रतियोगिता तदवच्छेदकं लाघवात् घटत्वमेव। इत्येवंरीत्या लघुधर्मसमनियतगुरुधर्मस्य प्रतियोगितानवच्छेदकत्वम्। तथा च कम्बुग्रीवादिमत्वावच्छिन्नप्रतियोगिताक-भेदाप्रसिद्ध्या 'कम्बुग्रीवादिमान् घट' इत्यादि बोधानुपपत्तिरित्याह - **लघुधर्मसमनियतेत्यादि**।

**VV-J. 3.3.2:** **प्रामाण्यापत्तिरिति**। नीलपटगतनीलत्वं नीलगुण एव। स च नीलघटगतनीलगुणाद् भिन्न एव। तथा च नीलत्वावच्छिन्ननीलपटनिष्ठ-प्रतियोगिताकभेदाभावो नीलपटनिष्ठनीलगुणस्वरूपः। तस्य घटेऽसत्त्वेन कथं नीलपटपर-नीलपदघटित-'नीलो घट' इति वाक्यस्य प्रामाण्यापत्तिरिति न वाच्यम्। पटरूप-द्रव्यपर-द्रव्यपदघटितस्य 'द्रव्यं घट' इति वाक्यस्य उपलक्षणीयत्वात्। नीलत्वावच्छिन्नाधेयतानिरूपिताधिकरणत्वस्यैव नीलत्व-पदेन ग्रहणाद्वा। तस्य अधिकरणत्वस्य चैक्यात्।

**VV-J. 3.3.3:** **एतेनेति**। तृतीयदोषस्य सत्त्वेनेत्यर्थः। **नीलत्वादौ नीलत्वादिमत** इति। अत एव नीलस्य, नीलत्वम्, इत्यादावन्वयबोधो न। **तद्विशिष्टे अधिकरण** इति। 'नीलो नीलत्ववान्' इत्यादाविति बोध्यम्। **अत एवेति**। 'कर्म गच्छति' इत्यादिवाक्यात् कर्मत्वविशिष्टस्य प्रकृत्यर्थस्य वृत्तित्वसम्बन्धेन द्वितीयार्थकर्मत्वे अन्वयबोधाभावादिति भावः।

**VV-J. 3.4.1:** **न चैवं संसर्गतामतेऽप्यनिस्तार** इति। तन्मतेऽपि प्रामाण्यापत्तिरूपदोषानुद्धार एवेत्यर्थः। तदेवोपपादयति - **'नीलो घट'** इत्यादिना। **उक्तस्थले** इति। नीलपटपर-नीलपदघटित-'नीलो घट' इत्यादौ इत्यर्थः। ससंर्गतामतेऽपि नीलभेदाभावरूप-नीलत्वस्यैव संसर्गता, नीलत्वस्य च नीलपट इव नीलघटेऽपि सत्त्वाद् उक्तदोषस्तदवस्थ एवेति भावः।

**VV-J. 3.4.2:** **स्ववृत्तिनीलत्वादेः स्वस्मिन्नेव सम्बन्धतोपगमेनेति**। उक्तस्थले च पटवृत्तित्वविशिष्ट-नीलत्वमेव संसर्गः। तच्च पटे एव न घटे इति नोक्तदोष इति भावः।

**VV-J. 3.5.1:** **तत्तद्व्यक्तित्वावच्छिन्नभेदाभाव एवेति**। तथा च नीलपट-पर-नीलपदघटितस्य 'नीलो घट' इति वाक्यस्य न प्रामाण्यापत्तिः। पटगत-

तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकभेदस्यैव घटे सत्त्वेन तदभावरूपसम्बन्धस्य तत्राभावात्। **भेदप्रतियोगिकाभावत्वेनेति**। ननु भेदत्वावच्छिन्नप्रतियोगिताका-भावत्वेन न संसर्गता। तद्धर्मस्य अप्रसिद्धत्वात्। भेदनिष्ठप्रतियोगिताका- भावत्वस्य प्रसिद्धत्वेऽपि तस्य तद्व्यक्तिभेद-घटोभयाभावेऽपि सत्त्वेन तस्यापि संसर्गत्वापत्तौ तस्य चोभयाभावस्य घटेऽपि सत्त्वेन उक्तवाक्यस्य प्रामाण्यं दुर्वारमेवेति। तद्व्यक्तिभेदत्वावच्छिन्नप्रतियोगिताकत्वेनैव संसर्गताया वक्तव्यतया कथम् अत्रांशे औदासिन्यमिति चेत्? न। भेदप्रतियोगिका-भावत्वेन सामान्यरूपेणापि तद्व्यक्तित्व-अवच्छिन्नप्रतियोगिताक-भेदत्वावच्छिन्न-प्रतियोगिताकाभावस्य एव उभयाभाव-भिन्नस्य संसर्गत्वोपगमात्। अतिप्रसक्त-धर्मस्यापि विषयतात्मकसंसर्गताया अवच्छेदकत्वात्। **अन्यदेतदिति**। अतिप्रसक्तेन भेदप्रतियोगिकाभावत्वेन अनति-प्रसक्तेन तद्व्यक्तित्वावच्छिन्न-प्रतियोगिकाभावत्वेन वा अस्तु संसर्गता। परन्तु सा प्रदर्शितविशेषाभाव-निष्ठैवेति कस्मिन्नपि पक्षे दोषाभावेन यथेच्छसि तथास्त्विति भावः।

**VV-J. 3.5.2: तथा सतीति**। तस्य विभक्त्यर्थत्वे सतीत्यर्थः। **अपूर्वव्यक्तिनिष्ठेति**। तद्व्यक्तित्वभेदेन तद्घटितस्य धर्मस्यापि भिन्नत्वेन तत्तत्सकलधर्मावच्छिन्ने विभक्तेः शक्तिस्वीकारे 'श्यामः पुत्रो भविता' इत्यादौ भाविपुत्रगत-तद्व्यक्तित्वघटितधर्मे विभक्तेर्व्यवहाराभावेन तद्धर्मानवच्छिन्ने विभक्तिशक्तेर्ग्रहाभावेन बोध-अनापत्तेरिति भावः। न च संसर्गतया अपि अनुपस्थितस्य तस्य कथं भानम्? अत एव संसर्गेऽपि मीमांसकैः शक्तिः स्वीक्रियते इति वाच्यम्। मीमांसकमतं निराकृत्य अनुपस्थितस्यापि पदार्थद्वयसंसर्गस्य संसर्गमर्यादया भानस्य नैयायिकैर्व्यवस्थापितत्वात्।

**संसर्गतामते अनुपपत्त्यभावादिति**। न च शाब्दबोधे संसर्गमर्यादया अनुपस्थितस्य तस्य भानेऽपि 'नीलो घट' इति वाक्यं तद्व्यक्तित्वावच्छिन्न-प्रतियोगिताक-भेदाभावसम्बन्धावच्छिन्ननीलनिष्ठप्रकारताक-बोधेच्छयोच्चरितम् इत्याकारक-तात्पर्यज्ञानस्य 'नीलो घट' इति वाक्यजन्यशाब्दबोधे कारणत्वं वक्तव्यम्। तात्पर्यज्ञाने च अवच्छिन्नत्वांशे प्रकारतयैव तस्य भानेन तद्घटित-तात्पर्यज्ञाने तज्ज्ञानस्य हेतुत्वेन तस्यानुपस्थितौ तात्पर्यज्ञानासम्भवेन शाब्दबोधानुपपत्तिरेवेति वाच्यम्। न च 'नीलो घट' इति बोधनेच्छया उच्चरितमिदं वाक्यम् इत्याकारकस्य तात्पर्यज्ञानस्य संसर्गतयैव संसर्गावगाहिनः कारणत्वमस्तु। तथा च अनुपस्थितस्यापि तद्व्यक्तित्वस्य संसर्गघटकतया भाने न बाधकमिति वाच्यम्। अपूर्ववाक्यार्थस्थले शाब्दबोधात् प्राक् तादृशवाक्यार्थाप्रसिद्धेः, तात्पर्यग्रहे ज्ञानविशेषणतया वाक्यार्थस्य भानासम्भवादिति वाच्यम्। स्वनिरूपित-

सांसर्गिकविषयतानिरूपित-घटादिनिष्ठ-विषयताकत्व-सम्बन्धेन नीलनिष्ठप्रकारता-विशिष्टज्ञानजनकत्वेन उच्चरितम् इत्याकारकतात्पर्य्यज्ञानस्य कारणत्वेन अपूर्ववाक्यार्थस्थलेऽपि तादृशज्ञान-सम्भवेन तद्व्यक्तित्वोपस्थितेः अनपेक्षणादिति ध्येयम्।

**VV-J. 3.5.3:** **न च विभक्त्यर्थेऽपि भेद** इति। अयं भावः -- अभेदस्य विभक्त्यर्थत्वेऽपि दोषाभावः। तथा हि भेदोऽभावश्च विशकलित एव विभक्त्यर्थोऽस्तु। नीलादेश्च तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकत्वसम्बन्धेन भेदेऽन्वयः। भेदस्य च तद्व्यक्तिभेदत्वावच्छिन्नप्रतियोगिताकत्वसम्बन्धेन अभावेऽन्वयः। तथा च तद्व्यक्तित्वावच्छिन्न-प्रतियोगिताक-भेदत्वाच्छिन्न-प्रतियोगिताकाभावो लभ्यते इति न पूर्वोक्तदोषावसरः। तद्व्यक्तित्वस्य संसर्गघटकतयैव भानेन अनुपस्थितत्वेऽपि क्षत्यभावात्।

**VV-J. 3.5.4:** **विशेषणतावच्छेकावच्छिन्नाया** इति। प्रतियोगिविशेषणतया भासमानधर्मावच्छिन्नप्रतियोगिताया एव प्रतियोगिनोऽभावे संसर्गतया भानं भवतीत्यर्थः। तथा च नीलत्वेन भासमान-नीलादेर्भेदे नीलत्वावच्छिन्न-प्रतियोगिताया एव संसर्गत्वं, न तु तद्व्यक्तित्वावच्छिन्नप्रतियोगिताया इत्यर्थः।

**विशिष्टवैशिष्ट्यबुद्धित्वानुपपत्तिरिति**। विशेषण-विशेषणतावच्छेदक-उभयप्रतियोगिक-सम्बन्धद्वयावगाहिबुद्धित्वं विशिष्ट-वैशिष्ट्यबुद्धित्वम्। तथा च 'नीलो घट' इत्यादौ विभक्त्यर्थभेदे नीलस्य स्वप्रतियोगिकत्वं नीलत्वस्य च स्वावच्छिन्नप्रतियोगिताकत्वं संसर्ग एव स्यादित्यर्थः। अन्यथा घटसत्त्वेऽपि घटाभाववत्ताबुद्धिप्रसङ्गात्। द्वित्वावच्छिन्नप्रतियोगिताकस्य अन्यतद्व्यक्ति-त्वावच्छिन्नप्रतियोगिताकस्य च घटाभावस्य घटसत्त्वेऽपि सत्त्वात्। **प्रतियोगिविशेषिताभावेति**। प्रतियोगिना विशेषितो योऽभावः तज्ज्ञानं घटाभावः, 'घटो नास्ति' इत्याकारकज्ञानमित्यर्थः। **न अतिशेते इतीति**। निरुक्तविशिष्ट-वैशिष्ट्यबुद्धित्वं न जहातीत्यर्थः। **केवलं विशेष्ये विशेषणमितीति**। अभावे विशेष्ये प्रतियोगितया घटो विशेषणं, घटे च समवायेन घटत्वं विशेषणम् इति रीत्येत्यर्थः। प्रतियोगितायां प्रतियोगि-विशेषणधर्मावच्छिन्नत्वं विहायेति यावत्।

**VV-J. 3.6.1:** **एकमात्रवृत्तित्वमिति**। तच्चैकवृत्तित्वे सति एकेतरावृत्तित्व-रूपमिति। यथाश्रुतन्तु न युक्तम्। एकत्वस्य केवलान्वयित्वेन एकेतरत्वस्य अप्रसिद्ध्या तस्य अप्रसिद्धत्वात्। **स्वसामानाधिकरण्येति**। स्वं भेदः, यथा घटे योऽन्यघटव्यक्तेर्भेदः स स्वं, तत्सामानाधिकरण्यं तत्प्रतियोगिवृत्तित्वञ्च घटत्वे इति भेदविशिष्टमेव घटत्वमेव उभयवृत्तिः सर्वोऽपि घर्मो भेदविशिष्टः तदन्यत्वं तद्व्यक्तित्वे एव। यथा प्रतियोगिभूत-घटव्यक्तिगत-तद्व्यक्तित्वे तादृशभेदप्रतियोगि-

वृत्तित्वेऽपि तद्भेदसामानाधिकरण्यं नास्ति। अनुयोगि-घटगत-तद्व्यक्तित्वे च तद्भेदसामानाधिकरण्येऽपि प्रतियोगिवृत्तित्वं नास्ति इति भेदविशिष्टभिन्नत्वं बोध्यम्। अथ प्रतियोगिभूतघटगत-तद्व्यक्तित्वस्यापि अनुयोगिनि कालिकसम्बन्धेन सत्त्वात्। अनुयोगिघटगत-तद्व्यक्तित्वस्य तेन सम्बन्धेन प्रतियोगिनि सत्त्वात् तद्व्यक्तित्वमपि भेदविशिष्टमेव। स्वरूप-सम्बन्धावच्छिन्नवृत्तिताया निवेशे समवायेन वृत्तित्ववतां घटत्वादीनामपि भेदविशिष्टान्यत्वापत्त्या भिन्ननीलघटपर-नीलपदघटितस्य 'नीलो घट' इत्यादेरपि प्रामाण्यापत्तेः। कालिकान्य-सम्बन्धावच्छिन्नवृत्तिताया निवेशे घटगत-तद्व्यक्तित्वविषयकज्ञानप्रतियोगिको यो घटे भेदः, तद्विशिष्टत्वमेव घटगत-तद्व्यक्तित्वे, तस्य स्वरूपसम्बन्धेन अनुयोगिनि घटे, विषयिता-सम्बन्धेन प्रतियोगिनि ज्ञानेऽपि सत्त्वात्। न च तस्य सम्बन्धस्य वृत्तित्वानियामकत्वं 'ज्ञाने घट' इति प्रतीतेरिति भेदविशिष्टान्यत्वाप्रसिद्धिरिति चेत्? अत्रोच्यते। भेदविशिष्टान्यघटक-वृत्तित्वस्य स्वरूपसम्बन्धावच्छिन्नस्यैव ग्रहणमिति कालिकसम्बन्धमादाय नाप्रसिद्धिः। नापि घटत्वादेरपि भेद-विशिष्टान्यत्वेन विभिन्नघटपरस्य 'नीलो घट' इति वाक्यस्य प्रामाण्यापत्तिः। भेदविशिष्टान्ये विभक्त्यर्थे स्वरूपसम्बन्धावच्छिन्नाधेयत्वस्यैव प्रकृत्यर्थ-संसर्गतया भानोपगमात्, घटत्वादिरूप-भेदविशिष्टान्यस्य विभक्त्यर्थत्वेऽपि निरुक्ताधेयत्व-सम्बन्धेन प्रकृत्यर्थान्वयस्य तत्र बाधेन तदादाय आपत्त्य-सम्भवात्। न च घटे यः पटत्वाभावः, तत्र यो घटभेदः, स अभावात्मक एव। अभावाधिकरणक-अभावस्य अधिकरणात्मकत्वाभ्युपगमात्। तथा च घटगत-तद्व्यक्तित्वे घटभेदप्रतियोगि-वृत्तित्वस्य तद्भेदात्मकाधिकरणीभूत-अभावसामानाधिकरण्यस्य च सत्त्वेन तद्-व्यक्तित्वस्यापि भेदविशिष्टत्वमेव। एवं स्वस्मिन्नपि पूर्वक्षणवृत्तित्व-विशिष्टस्वभेदस्य सत्त्वेन तद्भेदविशिष्टत्वमपि तद्व्यक्तित्वे इति भेदविशिष्टान्यत्वम् अप्रसिद्धमेवेति वाच्यम्। स्वात्मकत्व-स्वपर्याप्तावच्छेदकताक-प्रतियोगितानिरूपकतावच्छेदक-भेदत्वावच्छिन्नाधेयतानिरूपिताधिकरणताश्रयवृत्तित्वा भेदसंबन्धेन धर्मविशिष्टान्यत्वस्यैव विवक्षितत्वात्। अभावाधिकरणकभेदस्य अभावात्मकत्वेऽपि तन्निष्ठाभावत्वावच्छिन्न-आधेयतानिरूपितैव अधिकरणता घटे। न तु घटगत-तद्व्यक्तित्वावच्छिन्न-प्रतियोगितानिरूपकतावच्छेदकीभूत-भेदत्वावच्छिन्न-आधेयता-निरूपिता-अधिकरणता इति न आद्यरीत्या दोषः। नापि अन्तरीत्या दोषः। तत्र पूर्वक्षणवृत्तित्वविशिष्ट-तद्व्यक्तित्वावच्छिन्न-प्रतियोगिताकभेदमादायैव दोषो वाच्यः। स न सम्भवति। पूर्वक्षणादेरपि प्रतियोगितावच्छेदककुक्षौ प्रवेशेन तद्व्यक्तित्वपर्याप्तावच्छेदकताया अभावात्। नापि तद्व्यक्ति-पट-उभयं न। सा व्यक्तिरित्युभयभेदमादायापि दोषः। तत्र प्रतियोगितावच्छेदकतायाः तद्व्यक्तित्व-पर्याप्तत्वाभावात्। अत्र पर्याप्तिनिवेशप्रकारः सर्वोऽपि अनुसन्धेयः।

न च भेदः तादात्म्यसम्बन्धावच्छिन्नप्रतियोगिताकाभावः। तादात्म्यञ्च भेदविशिष्टान्यत्वम् इत्यन्योन्याश्रय इति वाच्यम्। स्वप्रतियोगिसामानाधिकरण्य-स्वसामानाधिकरण्योभयसम्बन्धेन अभावविशिष्टान्यत्वस्य विवक्षितत्वात्। तद्व्यक्तित्वाभावम् आदाय लक्षणसमन्वयः। न चाभावत्वमपि द्रव्यादि-षट्कान्योन्याभाववत्वमेव। अन्योन्याभावश्च तादात्म्यसम्बन्धावच्छिन्न-प्रतियोगिताकाभाव इति तदवस्थ एवान्योन्याश्रय इति वाच्यम्। अभावत्वस्य अखण्डोपाधिरूपत्वात्। नाप्यन्यत्वमादाय अन्योन्याश्रयः भेदत्वस्यापि अखण्डोपाधित्वादिति दिक्।

**तादृशधर्मस्तत्तद्-व्यक्तित्वादिरूप एवेति**। तादृशो भेदविशिष्टान्यः 'नीलो घट' इत्यादौ तद्व्यक्तित्वं विभक्त्यर्थः। तस्मिन् स्वरूपसम्बन्धावच्छिन्ना-धेयतासम्बन्धेन नीलरूपप्रकृत्यर्थस्य अन्वयः। तस्य च स्वरूप-सम्बन्धेन घटेऽन्वयः। तथा च नीलवृत्ति-तद्व्यक्तित्ववान् घट इत्यन्वयबोधः। 'सुन्दरः पुत्रो भविष्यति' इत्यत्र पुत्रगत-तद्व्यक्तित्वे व्यवहारस्य अदर्शनेन तत्र विभक्तेः शक्तिग्रहाभावेन कथं तस्य शाब्दबोधविषयता इत्यत आह - **अपूर्वव्यक्तिनिष्ठेत्यादि**। **विशिष्येति**। स्वरूपतस्तादृशतद्व्यक्तित्वस्य इत्यर्थः। **एकमात्रवृत्तिधर्मत्वादिना** इति। भेदविशिष्टान्यत्वधर्मेण इत्यर्थः। **सामान्य-प्रत्यासत्तीति**। सामान्यधर्मरूपा चक्षुषोऽपूर्वतद्व्यक्तित्वे प्रत्यासत्तिः सन्निकर्ष इत्यर्थः। चक्षुस्सन्निकृष्टे तद्व्यक्तित्वे यदिदं भेदविशिष्टान्यदिति ज्ञानं, तत्प्रकारीभूतभेदविशिष्टान्यत्वम्। सकलतद्व्यक्तित्वे इति चक्षुषः स्वजन्यज्ञान-प्रकारीभूत-भेदविशिष्टान्यत्वरूपधर्मवत्वस्य अपूर्वतद्व्यक्तित्वे सन्निकर्षात्। भेदविशिष्टान्यत्वेन ज्ञायमाने सकलतद्व्यक्तित्वे विभक्तेः शक्तिग्रहात् अपूर्वस्यापि शाब्दबोधविषयतापत्तिरिति बोध्यम्।

**VV-J. 3.7.1: एतादृशानुगताभेदस्य एवेति**। भेदविशिष्टान्यस्यैवेत्यर्थः। **तथात्वं** संसर्गतात्वमित्यर्थः। **विशिष्य तथात्वे** इति। तद्व्यक्तित्वावच्छिन्न-प्रतियोगिताकभेदाभावत्वेन संसर्गत्वे इत्यर्थः। **घटो न नील इत्यादीति**। अयं भावः। 'नीलो घट' इत्यत्र यदि तद्व्यक्तित्वावच्छिन्नप्रतियोगिताक-भेदाभाव एव नीलस्य घटे संसर्गः, तर्हि 'नीलो न घट' इत्यत्रापि तद्व्यक्तित्वावच्छिन्न-प्रतियोगिताक-भेदाभाव-सम्बन्धावच्छिन्नप्रतियोगिताक-नीलाभाव एव घटे नञा बोध्येत। न तु तत्र तादात्म्यं विभक्त्यर्थः। नीलस्य वृत्तित्वसम्बन्धेन तादात्म्ये अन्वयं कृत्वा नीलवृत्तितादात्म्याभाववान् घट इत्याकारको बोधः। 'नञोऽसत्त्वे येन सम्बन्धेन येन रूपेण यद्वत्ता यत्र यादृशसमभिव्याहारात् प्रतीयते तादृशसमभिव्याहारेण नञ्घटितेन तत्सम्बन्धावच्छिन्न-तद्धर्मावच्छिन्नप्रतियोगिताक-

अभाव एव तत्र प्रतीयते' इत्यर्थके "प्रतियोग्यभावान्वयौ तुल्ययोगक्षेमौ" इत्यभियुक्तवचनात्। तथा च तद्व्यक्तित्वभेदेन तद्व्यक्तित्वघटितसम्बन्धस्य अपि भेदात्। तत्तत्सम्बन्धावच्छिन्न-प्रतियोगिताकाभावस्यापि भेदेन नीलेऽपि घटे स्वेतरनीलगत-तद्व्यक्तित्वघटित-उक्तसम्बन्धस्य अभावेन तत्सम्बन्धावच्छिन्न-प्रतियोगिताक-तदभावस्य तत्सम्बन्धस्य व्यधिकरणतया तत्सम्बन्धावच्छिन्न-प्रतियोगिताक-स्वात्मक-नीलाभावस्य च सत्त्वेन '(घटो) न नील' इति प्रयोगापत्तिः। तादात्म्यत्वेन संसर्गत्वे स्वकीयसंयोगेन वह्निमति अन्यदीयसंयोगस्य अभावेऽपि 'संयोगेन वह्निर्नास्ती'ति यथा न भवति तथा तादात्म्येन 'नीलो ने'ति न प्रयोग इति। न च तत्तद्व्यक्तित्वावच्छिन्न-प्रतियोगिताक-भेदकूटत्वावच्छिन्नप्रतियोगिताकस्यैकस्यैवाभावस्य संसर्गत्वेन संसर्गभेदात् तत्सम्बन्धावच्छिन्न-प्रतियोगिताकाभावभेद इति न 'नीलेऽपि न नील' इति प्रयोगापत्तिः। न च कूटत्वम् अपेक्षाबुद्धिविषयत्वमेव। तच्च अपेक्षाबुद्धिभेदेन भिन्नम्। तदवच्छिन्नप्रतियोगिकाभावोऽपि भिन्न एवेति न संसर्गस्यैक्यमिति वाच्यम्। तत्तत्कूटत्वावच्छिन्नाभावस्य समनियतत्वेन समनियताभावस्य चैक्येन संसर्गभेदाभावात्। संसर्गतावच्छेदकीभूत-तादृश-अभावत्वस्य तद्व्यक्तित्व-भेदभिन्नतया तदवच्छिन्नसंसर्गताभिन्नैव स्यादिति न स्वरूपत एव तादृशाभावस्य संसर्गत्वोपगमात्। संसर्गघटकतद्व्यक्तित्वादेः अनुपस्थितत्वे-ऽपि न क्षतिः। अनुपस्थितस्यापि संसर्गतया भानस्वीकारादिति वाच्यम्। बहुषु घटेषु बहुनीलतादात्म्यसत्त्वे बहुघट-घटक-द्वित्रघटेषु स्वानात्मक-बहुनीलान्तर्गत-द्वित्रनीलतात्पर्येण 'नीला घटा' इत्यापत्तेः इति अलम्।

**VV-J. 3.7.2:** **इदन्तु बोध्यमित्यादेर**यमाशयः। यदि 'नीलो घट' इत्यादौ विशेषणविभक्तेः तादात्म्यम् अर्थः, तर्हि स्वरूपसम्बन्धावच्छिन्न-प्रतियोगिताकतादात्म्याभाव एव ' घटो न नील' इत्यादौ नञा बोद्ध्येत, "प्रतियोग्यभावान्वयौ तुल्ययोगक्षेमौ" इति व्युत्पत्तेः। तथा च तादात्म्य-सम्बन्धावच्छिन्नप्रतियोगिताकाभावरूपभेदबोधकत्वं नञः सकललोकप्रसिद्धम् उच्छिन्नं स्यादिति बोध्यम् । तद्भेद-तत्तादात्म्याभावयोरैक्येऽपि भेदत्वेन भेदबोधकत्वं न स्यादिति तात्पर्यम्।

**VV-J. 3.7.3:** न च अनीलं घटमानयेत्यादौ तादात्म्यार्थकविभक्त्यभावेन नञो नीलभेदबोधकत्वमेवेति भेदबोधकत्वन्नोच्छिन्नमित्यत आह - **अनीलं घटमानयेत्यादि**। घटेन सह सामानाधिकरण्यान्वयानुरोधेन अनीलपदस्य नीलभिन्नार्थकत्वं वक्तव्यम्। तदर्थञ्च नञो भेदवति लक्षणा वक्तव्या। ततश्च भेदमुख्यविशेषकोपस्थितिजनकत्वम् उच्छिन्नमेवेति बोध्यम्।

**VV-J. 3.7.5:** अभेदस्य प्रकारत्वे सम्भवत्यपि संसर्गतयैव भानमुचितमित्याह- **इदन्तु तत्त्वमित्यादिना। विशेषणविभक्तेः वृत्तिकल्पनम्** इति। संसर्गताभिन्न-तन्निष्ठविषयताक-शाब्दबोधे वृत्तिज्ञानाधीन-तद्विषयक-उपस्थितेः हेतुतया अभेदस्य प्रकारतया भानोपगमे विशेषणविभक्तेरत्तत्र वृत्तिकल्पनमावश्यकम्। तदेव गौरवम्। संसर्गतया तु आकाङ्क्षयैव भानोपपत्तौ संसर्गतामते तत्र वृत्तिकल्पनं नास्तीति लाघवमिति बोध्यम्। न च संसर्गतामते अभेदसंसर्गक-शाब्दबोधस्य 'नीलस्य घट' इत्यादिवाक्याद् अभावाय अभेदसंसर्गक-शाब्दबोधे प्रथमान्तनीलपदसमभिव्याहृत-प्रथमान्त-घटपदत्वरूप-आकाङ्क्षाज्ञानस्य कारणत्वं वाच्यम्। प्रकारतामते च तादृशकार्यकारणभाव अनभ्युपगमेन संसर्गतामते तादृशाकार्यकारणभावो मन्मते वृत्तिकल्पनम् इत्युभयोः साम्येन कथं वृत्तिकल्पनमनुचितमिति वाच्यम्। विरुद्धविभक्त्यन्तघटितात् 'नीलस्य घट' इत्यादिवाक्याद् अभेद-प्रकारकबोधवारणाय अभेदप्रकारकबोधवादिनाऽपि तादृशाकाङ्क्षाज्ञानस्य कारणत्वाभ्युपगमेन तदंशे साम्यात् वृत्तिकल्पनस्य गौरवेणानुचितत्वध्रौव्यात्।

**VV-J. 3.7.6:** न च संसर्गतावादिनामपि यत्राभेदे विभक्तेरशक्तिभ्रमो लक्षणाग्रहो वा तत्राभेदप्रकारक एव बोधः तैरभ्युपेयः। तथा च अन्यत्र अभेदसंसर्गकः अत्र अभेदप्रकारको द्विविधो बोध इष्टस्तेषाम्। तादृशोभय-बोधस्य 'नीलस्य घट' इत्यादिवाक्याद् वारणाय तत्तद्बोधे आकाङ्क्षाज्ञानस्य कारणत्वे कार्यकारणभावद्वयम्। प्रकारतावादे चाभेदसंसर्गकबोधस्य अभावेन अभेदप्रकारक एक एव बोध इति आकाङ्क्षाज्ञानस्य अभेदप्रकारक-बोधस्य च एक एव कार्यकारणभाव इति तदंशे लाघवेन वृत्तिकल्पनम् अनाधिक्येन नानुचितम्। किञ्च संसर्गतावादिमते उक्तयोः द्विविधबोधयोः योग्यताज्ञानमपि भिन्नम्। भिन्नम् अभेदसंसर्गकबोधे, अभेदसंसर्गक-नीलप्रकारकम्। अभेदप्रकारकबोधे अभेदनिष्ठ-स्वरूपसम्बन्धावच्छिन्न-प्रकारताकम्। तथा च तद्घटितसामग्र्यपि भिन्ना। तयोश्च भिन्नविषयक-प्रत्यक्षं प्रति प्रतिबन्धकताद्वयम्। प्रकारतामते च एक एवाभेदप्रकारको बोधः। योग्यताज्ञानमप्येकमेव अभेदप्रकारकम्। तद्घटिता एकैव सामग्री। तस्या भिन्नविषयकप्रत्यक्षं प्रति एकैव प्रतिबन्धकतेति प्रतिबध्य-प्रतिबन्धक-भावेऽपि लाघवाद् वृत्तिकल्पनं नानुचितमित्याह - **न च यत्रेत्यादिना वाच्यमित्यन्तेन**। यदि च 'नीलो घटः', 'श्यामो घट' इति वाक्यद्वय-जन्यैकाकारकबोधोदयेन आकाङ्क्षाज्ञानस्य द्वैविध्येन च परस्परजन्यबोधे व्यभिचारवारणाय कार्यतावच्छेदक-कोटौ कारणानन्तर्यनिवेशस्यावश्यकत्वेन तदेव जन्यतावच्छेदकमस्तु। विषयता-निवेशश्च मास्तु। स्वोत्तरशाब्दबोधे 'नीलो घट' इत्याकाङ्क्षाज्ञानं कारणम्, स्वत्तरशाब्दबोधे श्यामो घट इत्याकाङ्क्षाज्ञानं कारणम्

इतिरीत्यैव कार्यकारणभावो वक्तव्य इति बोधस्य द्वैविध्येऽपि एक एव कार्यकारणभावः संसर्गतामतेऽपि। अत एव भेदान्वयप्रकरणे पर्यायस्थले व्यभिचारवारणायानयैव रीत्या विषयताम् अनिवेश्य एक एव कार्यकारणभावः स्वीकृत इति मन्यसे, तथापि प्रतिबन्धकताद्वयं संसर्गतावादिमतेऽवश्यमित्याह - **एवमिति**। वस्तुतस्तु विषयविशेषविषयकशाब्दबोधे आकाङ्क्षाज्ञानस्य कारणत्वाभावे विषयविशेष-विषयकशाब्दबोधार्थिनो वाक्यविशेषोच्चारणे एव प्रवृत्तिरिति नियमानुपपत्त्या कार्यतावच्छेदककोटौ विषयतानिवेश आवश्यक एवेति बोध्यम्। **उक्तस्थलेऽपीति**। शक्तिभ्रम- लक्षणाग्रहस्थलेऽपीत्यर्थः। **तत्संसर्गकेति** = अभेदसंसर्गकेत्यर्थः। तथा च न कार्यकारणभावद्वयमिति बोध्यम्। न च विभक्तिनिष्ठवृत्तिज्ञानाधीन-उपस्थितीयसंसर्गताभिन्नविषयतायाः शाब्दबोधीय-प्रकारता-विशेष्यता-अन्यतर-विषयताप्रयोजिकायाः सत्त्वे कस्यचिदिच्छामात्रेण विभक्त्यर्थस्य संसर्गतया भानं नोचितमिति वाच्यम्। शाब्दबोधे तात्पर्यज्ञानस्याऽपि कारणतया तत्संसर्गकबोधस्यैव अनादितात्पर्यकल्पनात्। वस्तुतस्तु अभेदप्रकारकबोधस्यैव भेदान्वयप्रकरणे सिद्धान्तयिष्यमाणत्वेन प्रकृतग्रन्थस्य धूलीप्रक्षेपमात्रत्वात्।

**VV-J. 4.1.1:** **द्वितीयान्तपद-धातुपदयोरिति**। अभेदान्वयबोधे द्वितीयान्त-स्तोकादिपद-समभिव्याहृत-पचत्यादिपदत्वरूपाकाङ्क्षाज्ञानं कारणम्। एवं रीत्या कार्यकारणभावो वक्तव्यः। इदमुपलक्षणम्। यादृशयादृश-समभिव्याहाराद् अभेदान्वय इष्यते तादृशतादृश-समभिव्याहारस्य कारणत्वं वक्तव्यम्। यथा 'वेदाः प्रमाणम्', 'सोमेन यजेद्' इत्यादौ। **क्रिया-विशेषणानाम्** इति। न च 'स्तोकं पचति' इत्यादौ धात्वर्थफलस्य व्यपदेशिवद्भावेन फलाश्रयत्वात्। तादात्म्य-फलतावच्छेदकसम्बन्धान्यतरसम्बन्धेन फलाश्रयस्य **कर्त्तुर्**(पा.१.४.४९)इत्यनेन कर्मत्वमिति स्वीकारेणैव उपपत्तौ अपूर्वस्य अतिदेशवचनस्य स्वीकारो व्यर्थः। 'स्तोकं तिष्ठति' इत्यादौ फलस्यापि धात्वर्थत्वोपगमेन न दोषः। न च तर्हि सकर्मकत्वापत्तिः। स्वार्थफलजनक-व्यापारवाचकत्वस्यैव सकर्मकत्वादिति वाच्यम्। स्वार्थफल-व्यधिकरण-व्यापारवाचकत्वं तत्। स्था-धात्वर्थयोः फल-व्यापारयोः सामानाधिकरण्यादिति वाच्यम्। गौरवात् 'स्तोकः पच्यते' इति स्तोकरूपे कर्मणि लकारापत्तेश्च। वस्तुतस्तु वचनकल्पनगौरवापेक्षया निरुक्तगौरवस्य अल्पत्वम्। **लः कर्मणि**(पा.३.४.६९)इत्यत्र कर्त्तृसाहचर्येण धात्वर्थे भेदान्वयिनि कर्मण्येव लकारो विधीयत इति। स्तोकादिकर्मणि लकारापत्तिरपि न। कर्मत्वातिदेशेऽपि लकारापत्ति-वारणस्य प्रकारान्तरेण अशक्यत्वाच्चेति वैयाकरणमतमेव युक्तम्।

**VV-J. 4.1.2:** **क्रियापदस्येत्यादि।** पाक इत्यत्र भावानुशिष्ट-घञो निरर्थकत्वेन पाकक्रियायाः सार्थकप्रत्ययान्तधातूपरथाप्यत्वाभावान्न 'स्तोकः पाक' इत्यादौ स्तोकस्य कर्मत्वम्। ननु शक्तिमत्वञ्चेत्सार्थकत्वं तर्हि करणाधिकरणयोः रागो रङ्ग इत्यादौ घञा बोधेन घञ्त्वेन करणाधिकरणनिरूपितशक्तताया आवश्यकत्वेन घञ्मात्रस्य शक्तिमत्वे न निरर्थकघञोऽप्रसिद्धिः। न च **"अकर्तरि च कारके संज्ञायाम्"** (पा.३.३.१९) इत्यनुशासने संज्ञायामित्युक्त्या संज्ञार्थघञ एव शक्तिमत्वम्, न असंज्ञास्थस्य 'पाक' इत्यादाविति वाच्यम्। **"भावे** (घञ्)" (पा.३.३.१८) इत्यनुशासनेन घञ्मात्रस्य भावनिरूपितशक्तिमत्वस्य बोधनात्। **'संज्ञायाम्'** इत्यस्य 'को लाभो लब्ध' इत्याद्यनुरोधेन प्रायिकत्वाच्च। न च अबोधकस्य पाकशब्दघटक-घञो बोधकत्वेन भगवदिच्छाविषयत्वे भगवदिच्छाया अविसंवादित्वानापत्त्या . घञ्मात्रस्य भावबोधकत्वबोधस्य **"भावे** (घञ्)" (पा.३.३.१८) इत्यस्याप्रामाण्यापत्त्या च अबोधकपाकशब्दघटकघञ्भिन्नस्यैव घञो भगवदिच्छायां **"भावे** (घञ्)" (पा.३.३.१८) इति सूत्रे च प्रवेशान्न तत्रत्यघञः शक्तिमत्वरूपसार्थकत्वमिति वाच्यम्। तथा सति 'स्तोकं स्थीयते' इत्यादौ वर्त्तमानत्वाविवक्षास्थले य आख्यातः तस्यापि विसवांदित्वभयेन वर्तमानबोधकत्वेन आख्यातविषयकभगवदिच्छायां लटो वर्तमानबोधकत्वबोधके **"वर्तमाने लट्"** (पा.३.२.१२३) इति सुत्रे च अप्रामाण्यभयेन अप्रवेशस्य आवश्यकत्वेन शक्तिमत्वरूपसार्थकत्वस्याभावेन क्रियाविशेषणे कर्मत्वानापत्तिः इति चेत्? मैवम्। एतदभिप्रायेणैव अर्थबोध-स्वरूपयोग्यताप्रयोजक-आकाङ्क्षाशालित्वरूप-सार्थकत्वस्य वक्ष्यमाणत्वात्। बोधस्वरूपयोग्यतारूपार्थबोधकताया आकाङ्क्षा-विवक्षाद्यभावस्थलेऽपि सत्त्वेन भगवदिच्छायाः सूत्रस्य च विसंवादित्व-अप्रामाण्ययोरप्रसक्तेः। वर्तमानत्व-प्रकारकस्थितिविशेष्यकबोधं प्रति स्थाधातूत्तरवर्त्याख्याततत्वरूपाकाङ्क्षाज्ञानं कारणम्। तादृश्याश्चाकाङ्क्षाया वर्तमानत्वविवक्षास्थल इव अविवक्षास्थलेऽपि सत्त्वे नोभयत्र आख्यातस्य सार्थकत्वात् क्रियाविशेषणस्य कर्मत्वोपपत्तिः। 'पाक' इत्यादौ च घञर्थनिष्ठ-विषयतानिरूपित-धात्वर्थनिष्ठ-विषयताक-बोधस्य अभावेन तादृशबोधप्रयोजक-आकाङ्क्षाया अपि अभावेन अर्थवत्वविरहान्न तत्र कर्म्मत्वम्। न च तादृशार्थबोधप्रयोजक-आकाङ्क्षाया अभावेऽपि एकत्वनिष्ठ-विषयतानिरूपित-पाकत्वावच्छिन्न-विषयतानिरूपक-बोधप्रयोजिका पच्पदोत्तर-घञ्पदोत्तर-सु-पदत्वरूप-आकाङ्क्षा तच्छालित्व-रूपसार्थकत्वं घञो वर्तेत एवेति वाच्यम्। स्वार्थनिष्ठविषयतानिरूपित-प्रकृत्यर्थनिष्ठविषयता-प्रयोजक-आकाङ्क्षाशालित्वमेव प्रत्यये सार्थकत्वम् इत्यस्य स्वीकारात्। स्वं सार्थकत्वेन विवक्षितः प्रत्ययः, प्रकृते घञर्थ-विषयकबोधस्यैव पाकपदादभावेन निरुक्तसार्थकत्वस्याभावादिति दिक्।

ननु 'स्तोकं रथीयते' इत्यादिभावाख्यातस्थलेऽपि कर्तृकर्मभाव-अबोधकत्वेन आख्यातस्य सार्थकत्व-अभावात्। कथं स्तोकस्य कर्मत्वमित्यत आह- **वर्तमानार्थकतये**त्यादि। कर्त्राद्यबोधकत्वेऽपि वर्तमानकालबोधकत्वेन एव सार्थकत्वोपपत्तिरिति भावः।

**VV-J. 4.1.3:** ननु वर्तमानकालस्यापि अविवक्षास्थले अबोधात् कथं तत्र कर्मत्वमित्यत आह - **वर्तमानत्वादिविवक्षास्थल इवे**त्यादि। विवक्षाया अभावेन बोधाभावेऽपि बोधप्रयोजकाकाङ्क्षाशालित्वेन सार्थकत्वोपपत्तिरिति भावः।

**VV-J. 4.2.1: अन्यथे**ति। घञन्तपाकादिशब्दे शक्त्यभाव इत्यर्थः। **कर्मत्वादीनाम्** इत्यत्र षष्ठ्याः **पाकादा**वित्यत्र सप्तम्याश्च विषयतैव अर्थः तथा संख्या कर्मत्वनिष्ठविषयता-निरूपितपाकनिष्ठविषयतानिरूपक-बोधानुपपत्तिः इत्यर्थः। न तु प्रतियोगित्वं षष्ठ्यर्थोऽनुयोगित्वं सप्तम्यर्थः। 'पाकं पश्य' इत्यादौ कर्म्मत्वप्रतियोगिकानुयोगिकशाब्दबोधस्यानुदयात्। **धातूनाञ्च सुब्विभक्त्य-प्रकृतित्वादि**ति। 'पाक' इत्यत्र घञन्तस्यैव सुब्विभक्तिप्रकृतित्वाद् इति भावः। सुप्पदं 'पाकोऽस्ति' इत्यत्रत्य तिङोऽप्युपलक्षणम्। तदर्थस्यापि प्रथमाविभक्ति-प्रकृत्यर्थे एवान्वयात्। तत्प्रकृतित्वञ्च तन्निष्ठविधेयतानिरूपित-उद्देश्यताश्रयत्वम्। प्रकृत्यर्थत्वञ्च न प्रकृतिनिष्ठवृत्तिनिरूपकत्वम्। कृदन्त-पाचकपाठकादिरूपा या सुब्विभक्तिप्रकृतिस्तत्र वृत्तिविरहेण प्रकृत्यर्थाप्रसिद्धेः तद्घटकप्रत्ययनिष्ठवृत्तिमादाय समन्वये तु धातुनिष्ठवृत्तिनिरूपकधात्वर्थेऽपि प्रकृत्यर्थत्वापत्तेश्च। किन्तु प्रकृतिविशिष्टवृत्तिनिरूपकत्वमेव तत्। वैशिष्ट्यं च स्वपर्याप्तत्व-स्वचरमावयवपर्याप्तत्व-अन्यतरसम्बन्धेन। पाचकादिघटक-धातुनिष्ठवृत्तौ वैशिष्ट्य-विरहान्न दोषः। क्विबन्तस्थले प्रातिपदिकसंज्ञासमये क्विपोऽप्यनुसन्धानेन क्विबन्ते एवोद्देश्यतायास्सत्त्वेन तस्यैव प्रकृतित्वेन धातुनिष्ठवृत्तेस्तत्पर्याप्तत्वाभावेन न धात्वर्थस्य सुप्प्रकृत्यर्थत्वम्। न च घञन्त-पाकादि-शब्द इव कृदन्त-पाचकादि-शब्देऽपि वृत्तिः किन्नोपेयते। **"कर्तरि कृद्"** (पा.३.४.६७) इति शास्त्रातिक्रमस्तु **"भावे** (घञ्)" (पा.३.३.१८) इति शास्त्रातिक्रमेण तुल्य इति वाच्यम्। पचतीत्याद्यर्थे पचादिधातौ शक्तेः क्लृप्ततया पाचक इत्यत्र ण्वुल्मात्रे एव शक्तिकल्पनया उपपत्तौ अन्-अन्त-पाचक-पाठकादिवृत्ति-आनुपूर्व्यवच्छिन्ने शक्तिकल्पनायां गौरवात्। **"कर्तरि कृद्"** (पा.३.४.६७) इत्यनुशासनविरोधाच्च। घञन्त-पाकादिशब्दे च भावे धात्वर्थे एव घञो विधानेन भावस्य च धातुत एव लाभाद् अनन्यलभ्यस्यैव शब्दार्थत्वमिति न्यायविरोधात्, धात्वर्थातिरिक्त-शाब्दानुभवविरोधाच्च। शास्त्रस्यापूर्वशक्तिग्रहे तात्पर्याभावात्। घञि शक्त्यभावेऽपि शास्त्रविरोधाभावात्। ननु प्रकृत्यर्थान्वितस्वार्थबोधकत्वं प्रत्ययानामिति नियमेन

प्रकृत्यर्थपदेन प्रकृत्येकदेशार्थोऽपि गृह्यते इति 'पाक' इत्यादौ धात्वर्थेऽपि अन्वयेन नियमानुपपत्तिरित्याह - **प्रकृत्येकदेशार्थेऽपि** इत्यादि। सिद्धान्ते धात्वर्थस्य सुप्प्रकृत्यर्थत्वाभावेन दोषाभावात्।

**VV-J. 4.2.2:** **एकत्र विशेषणतयोपस्थितस्येत्यादि**। 'पचन्तं पश्यति', 'पचमानं पश्यति' इत्यादौ लडर्थविशेषणतया उपस्थितस्य पाकस्य अन्यत्र विभक्त्यर्थकर्मत्वादौ विशेषतयान्वयो न स्यादिति न प्रकृत्येकदेशार्थान्वये दोष इति भावः। यथा 'घटो जातिः' इत्यादौ घटविशेषणतयोपस्थितस्य घटत्वस्य जातावभेदेन नान्वयः। नन्विदं न युक्तम्। पचतृ-पचमानेति कृदन्ते शक्तिविरहेण न शत्राद्यर्थ-कर्तृविशेषणतया प्रकृत्यर्थपाकस्योपस्थितिः। किन्तु विशेष्यतयैव पाकस्योपस्थितिरिति न तस्य कर्मत्वादावन्वये व्युत्पत्तिविरोधः। 'घटो जातिः' इत्यादौ तु घटत्वविशिष्टे घटे शक्तिसद्भावाद् युक्तमेव घटत्व-विशेषणतयोपस्थितिरिति चेत्? न। **विशेषणतयेत्यत्र** विशेषणता = शाब्दबोधीय-प्रकारता, तृतीयार्थः प्रयोजकत्वम्। तस्योपस्थितस्य इत्यस्यार्थे उपस्थितिविषयत्वे अन्वयः। तथा च एकनिष्ठविशेष्यतानिरूपित-प्रकारता-प्रयोजक-उपस्थिति-विषयत्ववतो अन्यनिष्ठविशेष्यतानिरूपितप्रकारताश्रयत्वं न इत्यर्थः। तथा च शत्राद्यर्थनिष्ठविशेष्यतानिरूपित-प्रकारताप्रयोजक-उपस्थितिविषयत्ववतः पाकस्य विभक्त्यर्थकर्मत्वनिष्ठविशेष्यतानिरूपित-शाब्दबोधीयप्रकारताश्रयत्वं न स्यादिति तात्पर्यम्। सकृदुच्चरितस्सकृदेवार्थं बोधयतीति न्यायादिति भावः। उभयत्रान्वयबोधे आकाङ्क्षाविरहाच्च। धर्मिपारतन्त्र्येण परं 'घटो नास्ति' इत्यादावभावे तथाविधस्य घटत्वस्य अन्वयः। तत्र तादृशान्वयबोधप्रयोजक-आकाङ्क्षायाः कल्पनात्। **तथाऽपीति**। विशेषणतयान्यत्र अन्वयस्य अव्युत्पन्नतया दोषाभावेऽपीत्यर्थः।

तत्र अन्यस्यान्वये बाधकाभावाद्दोषमाह - **पाकादिविशेषणतया** इत्यादि। **धातूपस्थाप्येत्यादि**। राजद्वयसम्बन्ध्येकपुरुषतात्पर्येण राजपदार्थे द्वित्वान्वये राजपुरुषाविति प्रयोगापत्तिस्तु न। तत्पदार्थधर्मिकसुबर्थान्वये तत्पदार्थान्विता-र्थबोधक-तदव्यवहितोत्तर-सुप्भिन्न-पदधर्मिकार्थपरत्व-ज्ञानं प्रतिबन्धकमित्यस्य कल्पनात्। 'घटपटौ' इत्यादिद्वन्द्वस्थले द्वन्द्वघटक-सर्वपदार्थे संख्यान्वयसिद्धये तत्पदार्थान्वितार्थबोधकत्वं पदे विशेषणम्। 'अर्द्धपिप्पल्यौ' इत्यादौ पूर्वपदार्थप्रधानसमासे पूर्वपदार्थे संख्यान्वयानुपपत्तिः तु न। तत्रोत्तरपदस्यैव विशिष्टार्थे लक्षणायाः पूर्वपदस्य तात्पर्यग्राहकत्वस्य च कल्पनात्। **वस्तुतस्त्वित्यादिकल्पे** पूर्वपदार्थप्रधानसमासघटकभिन्नत्वस्य अपि पदे निवेशनीयत्वाच्च।

**VV-J. 4.2.3:** एवमित्यस्य भावानुशिष्टल्युडन्तसमुदाये शक्त्यकल्पन इत्यर्थः। **कस्यचित्प्रतिबन्धकतां कल्पयित्वेति** - धात्वर्थे शोभनाद्यभेदान्वय-बोधे धातूत्तरवर्त्ति-प्रत्ययधर्मिकार्थपरत्वज्ञानस्य प्रतिबन्धकत्वम् इत्यर्थः। न चैवं 'शोभनम् पचति' इत्यादौ पाके शोभनान्वयानापत्तिरिति वाच्यम्। द्वितीयान्तभिन्नपदप्रतिपाद्य-शोभनेत्यादिनिवेशात्।

**VV-J. 4.3.1:** न **चैवमिति**। प्रकृत्येकदेशार्थे विभक्त्यर्थानन्वये शोभना-द्यभेदान्वये चेत्यर्थः।

**VV-J. 4.4.1:** **नैमित्तिकसंज्ञात्वनिराकरणमिति**। जात्यवच्छिन्ननिरूपित-शक्तिमती संज्ञा नैमित्तिकसंज्ञेति तद्भावः। **विरुद्धमिति**। तत्र शक्तेः स्वीकारादिति भावः।

**VV-J. 4.4.2:** **एवञ्चेति**। घञन्तपाकादिशब्दस्यापि पूर्वोक्तयुक्त्या पाकादौ शक्तेरसिद्धौ इत्यर्थः। **यत्र धातुमात्रस्य एव पाकादौ** इत्यादि। न च धातुमात्रस्य पाकादौ तात्पर्ये सुबर्थसंख्याकर्मत्वादेरन्वयापत्तिः। पाकस्य प्रकृत्यर्थत्त्वाभावात्। घञन्तस्य पाकादौ तात्पर्ये विभक्त्यर्थान्वयोपपत्तौ अपि द्वितीयान्तत्वानुपपत्तिः। उभयोः तत्र तात्पर्ये अन्वयबोधानुपपत्तिरिति वाच्यम्। यत्र धातुमात्रस्यैव पाकादौ तात्पर्य तत्र विभक्त्यर्थस्य अविवक्षैव। अत एव द्वितीयान्तपदसमभिव्याहारे प्रथमान्त एव पाकशब्दः। यत्र विभक्त्यर्थस्य विवक्षा तत्र घञन्तस्यैव पाकादौ तात्पर्यम्। तत्र घञन्तसमानविभक्तिकमेव स्तोकादिपदमिति व्यवस्था। **धात्वर्थैकाधिकरण्ये त्विति**। धातुजन्यबोध-विषयत्वेन तात्पर्यविषयीभूत-क्रियाविशेषणानां कर्मत्वं घञन्तसमुदायजन्य-बोधविषयत्वेन तात्पर्यविषयीभूत-क्रियाविशेषणवाचकपदानां घञन्तसमान-वचनत्वम् इति सिद्धान्तः।

**VV-J. 4.4.3:** **तदर्थकपदोत्तरविभक्त्येति**। 'नीलौ घटौ' इत्यादौ नील-पदोत्तरविभक्त्या न द्वित्वं नीले प्रतीयते। नीलेऽभेदसंम्बन्धावच्छिन्नप्रकारता-भिन्नविषयताया असत्त्वात्। घटपदोत्तरविभक्त्या तु घटे द्वित्वं प्रतीयते एव, घटे अभेदसम्बन्धावच्छिन्नप्रकारता-भिन्नायाः घटत्वावच्छिन्न-विशेष्यतायाः सत्त्वात्। 'राज्ञः पुरुषः', 'नीलस्येदम्' इत्यादौ राज्ञि नीले च राजपदोत्तर-विभक्त्या नीलपदोत्तरविभक्त्या च संख्या प्रतीयते। तत्तत्प्रकारताया अभेदसम्बन्धा-वच्छिन्नत्वाभावात्। ननु 'नीलो घट' इत्यादौ नीलघटयोरभेदात् अभेदसम्बन्धा-वच्छिन्नप्रकारताभिन्न-घटत्वावच्छिन्नविशेष्यताया नीलनिष्ठत्वात्। किञ्च नीलत्वनिष्ठप्रकारतानिरूपितायास्तादृश्या अपि नीले सत्त्वात् कथं न नीले नीलपदोत्तरसंख्या प्रतीयते? किञ्च 'नीलो घटः', 'नीलस्य रूपम्' इति वाक्यद्वयजन्य-समूहालम्बनबोधे नीलपदोत्तर-सु-विभक्त्या नीले संख्या-प्रत्ययः

स्यात्। तत्र भेदसम्बन्धावच्छिन्नप्रकारताया अपि सत्त्वादिति चेत् ? अत्रोच्यते। तद्धर्मावच्छिन्नबोधक-तत्पदोत्तरविभक्तिप्रयोज्य-संख्यानिष्ठ-प्रकारतानिरूपित-तद्धर्मावच्छिन्न-तन्निष्ठविशेष्यताक-शाब्दबोधे तद्धर्मावच्छिन्न-बोधक-तत्पदप्रयोज्य-अभेदसम्बन्धावच्छिन्न-प्रकारताभिन्न-विषयतानिरूपक-शाब्दसामग्रीप्रयोजिका इत्युच्यते। नीलनिष्ठाया अपि घटत्वावच्छिन्न-विशेष्यताया नीलत्वावच्छिन्नत्वविरहात्। नीलत्वनिष्ठप्रकारतानिरूपिताया अपि तन्निष्ठविशेष्यताया निलत्वावच्छिन्नत्वविरहात्। समूहालम्बनस्थले षष्ठ्यन्तपदप्रयोज्यायाः तस्याः प्रथमान्तनीलपदप्रयोज्यत्वाभावात् न उक्त-स्थलद्वये दोषः। 'वेदाः प्रमाणम्', 'सम्पन्नो व्रीहिः' इत्यादौ प्रमाणत्वे व्रीहित्वे च विशेषणवाचकपदोत्तरविभक्त्या जायमाने संख्याबोधे निरुक्तकार्यतावच्छेदक-अनाक्रान्ततया निरुक्तकारणविरहेऽपि न क्षतिः। यदि च स्वाश्रयाश्रयत्वसम्बन्धेन प्रमाणत्वावच्छिन्ने व्रीहित्वावच्छिन्ने एव संख्यान्वयः सिद्धान्तः तर्हि कार्यतावच्छेदककोटौ प्रकारतायाम् पर्याप्तिसम्बन्धावच्छिन्नत्वं तत्र व्यभिचारवारणाय निवेश्यम्। **तादृशश्चेति**। अभेदसंम्बन्धावच्छिन्नप्रकारताभिन्न-तन्निष्ठविषयतानिरूपकः पूर्वोक्त इति बोध्यम्।

**द्वित्वादिकम् प्रत्याय्यत** इति। तद्बोधप्रयोजकनिरुक्त-कारण-सत्त्वात्। न तु विशेषणवाचकपदोत्तरं विभक्त्या तद्बोधप्रयोजकनिरुक्त-कारणाभावात्। **एवञ्चेति**। निरुक्तकार्यकारणभावस्य आवश्यकत्वे चेति अर्थः। **प्रत्यायनासम्भवादिति** निरुक्तकारणविरहादिति भावः। **औत्सर्गिकम् एकवचनमिति**। संख्याबोधासम्भवेन प्रयोगसाधुत्वस्य तेनाप्युपपत्तेरिति भावः। **भावाख्यातस्थलवदिति**। तत्र यथा साधुत्वमात्रार्थमेव आख्यातैकवचनप्रयोगः तद्वत्क्रियाविशेषणवाचकपदोत्तरमपीत्यर्थः।

वैयाकरणास्तु '**फलव्यापारयोर्द्धातुरि**'ति **भूषणोक्त**दिशा धातुमात्रस्य फलविशिष्टव्यापारे शक्तिः। न च सर्वेषां धातूनां तर्हि फलवाचकत्वेन सकर्मकत्वापत्तिरिति वाच्यम्। फलव्यधिकरणव्यापार-वाचकत्वं सकर्मकत्वं, फलसमानाधिकरण-व्यापारवाचकत्वमकर्मकत्वमिति स्वीकारेण अदोषात्। तादात्म्यफलतावच्छेदकान्यतरसम्बन्धेन फलाश्रयस्य **कर्तुः** (पा.१.४.४९) इत्यनेन कर्मत्वम्। तथा च 'स्तोकं पचति' इत्यादौ विक्लित्यादेस्तादात्म्येन फलाश्रयत्वेन कर्मत्वात् तत्र अभेदेन विशेषण-वाचक-स्तोकादिपदाद् द्वितीया। तत्फलितमेव क्रियाविशेषणानां कर्मत्वम्। तत्र क्रियापदं क्रियते इति व्युत्पत्त्या फलपरम्। न च कर्तुः इति कर्मत्वे तद्रूपे कर्मणि लकारापत्त्या 'स्तोकः पच्यते' इत्यापत्तिः इति वाच्यम्। कर्तृ-साहचर्यात् कर्मणो भेदेन धात्वर्थान्वितस्यैव लकारादिप्रत्ययविधायकशास्त्रे ग्रहणेन अदोषात्। अत एव 'स्तोकं पाक' इत्यादौ षष्ठ्यपि न। न

च 'मन्दम् वहति पवन' इत्यादौ व्यापारे अभेदान्वयिमन्दस्य कर्मत्वानापत्त्या अपूर्वमेव कर्मत्वबोधकं वचनम्। क्रियापदञ्च धात्वर्थमात्रपरमिति वाच्यम्। व्यापारे मन्दतायां तज्जन्यफलस्यापि मन्दत्वसत्त्वात् तत्रापि फले एव मन्दान्वयात्। न च कर्मपदस्य अन्यतरसम्बन्धघटितोक्तार्थकत्वे **"कर्मणि द्वितीया"** (पा. २.३.२) इत्यस्य गुर्वर्थबोधकत्वापत्तिः। विभक्तिशक्यतावच्छेदके(कत्वे) गौरवापत्तिश्चेति वाच्यम्। कर्मत्वशक्तिमत्त्वेनैव कर्मपद-शक्यत्वादिति वदन्ति।

**VV-J. 5.1.1:** पूर्वमभेदान्वये प्रातिपदिकार्थे **स्वसमानविभक्तिकेन** (VV-2.1.1.) इत्यादिनियमम् उक्त्वा तत्प्रयोजिकां **प्रथमान्तनीलादिपद-समभिव्याहृत-प्रथमान्तघटपदत्वादिरूपाम्** (VV-2.4.1) आकाङ्क्षां च उक्त्वा इदानीम् अपरः तत्र नियम उच्यते - **अभेदान्वयबोधश्चे**त्यादिना। **विरूपोपस्थितयोः** एवेति। ननु एकव्यक्तेरेवाभेदान्वयात् द्विवचनम् अनुपपन्नमिति चेत् ? न। विरूपाभ्यां विभिन्नरूपाभ्यामुपस्थितो याभ्यां तौ विरूपोपस्थितौ तयोर्विरूपोपस्थितयोरित्यर्थः। इदञ्चाध्याहृतस्य पदयोः इत्यस्य विशेषणम्। तत्रत्यषष्ठ्यर्थजन्यत्वस्य बोधेऽन्वयः। तथा च भिन्नरूपेण उपस्थापकपदजन्य एव अभेदान्वयबोध इति नियमाकार इति पदे द्वित्वान्वयेनानुपपत्त्यभावात्। न चैवं 'नीलो घटः', 'घटो घट' इति वाक्यद्वयजन्योऽपि घटत्वावच्छिन्न-प्रकारता-विशेष्यता-निरूपित-अभेदनिष्ठ-संसर्गता-निरूपकः समूहालम्बनात्मको बोधो नियमाक्रान्तत्वेन साधुः स्यादिति वाच्यम्। 'भावे क्तः' विरूपे विभिन्नप्रकारके ये उपस्थिते उपस्थिती इत्यर्थः तत्प्रयोज्या या प्रकारताविशेष्यतारूपा विषयता, तन्निरूपक एव यः अभेदः तद्विषयकबोध इत्यर्थः। उपस्थितेः प्रयोज्यत्वसम्बन्धेन षष्ठ्यर्थविषयतायाम् अन्वयः। तस्य निरूपकत्वसम्बन्धेन अभेदेऽन्वयः। उपस्थितिविषयताविशिष्टैव अभेदनिष्ठा शाब्दबोधीया संसर्गता। वैशिष्ट्यञ्च स्वावच्छेदकधर्मेतरधर्मावच्छिन्न-विषयताप्रयोज्य-विशेष्यतानिरूपितत्व-स्वप्रयोज्य-प्रकारता-निरूपितत्व-उभयसम्बन्धेन। निरुक्तसमूहालम्बनीय-अभेद-निष्ठाया निरुक्त-संसर्गताभिन्नत्वेन तद्बोधस्य नियमाक्रान्तत्वेन असाधुत्वात्।

**VV-J. 5.1.2:** **तत्प्रयोजके**ति = अभेदान्वयबोधप्रयोजकेत्यर्थो। न तु समानधर्मावच्छिन्न-प्रकारताविशेष्यताक-अभेदान्वयप्रयोजकेत्यर्थः। तादृश-बोधस्य अप्रसिद्धत्वेन तत्प्रयोजकस्यापि अप्रसिद्धेः। **यादृशं फलमि**ति। यद्धर्म्मावच्छिन्नं फलमित्यर्थः। **तादृशस्यैवे**ति = तद्धर्मावच्छिन्नस्यैव इत्यर्थः। **क्वचिदप्यनुदयादि**ति। तथा च तद्धर्मावच्छिन्नकार्यतानिरूपित-कारणताश्रयस्य अप्रसिद्ध्या न आपत्तिसम्भवः। कतिपयकारणाधिकरणे कार्याभाव-प्रयोजकजिज्ञासाया एव आपत्तिपदार्थत्वात्।

**VV-J. 5.1.3:** **घटो नीलघट** इत्यादि। अत्र नीलत्वादेः अधिकस्य भानेऽपि घटत्वावच्छिन्न-प्रकारतानिरूपित-घटत्वावच्छिन्न-विशेष्यतानिरूपक-शाब्दबुद्धित्वस्य सत्त्वात् तदवच्छिन्न-कार्यकारणस्य घटत्वावच्छिन्नोपस्थितेः प्रथमान्तघटपद-समभिव्याहृत-प्रथमान्तघटपदत्वरूप-आकाङ्क्षायाः तात्पर्यस्य च 'घटो घट' इत्यत्रापि सत्त्वादिति भावः।

**VV-J. 5.1.4:** **विधेयकोटावधिकावगाहिन** इति। विधेयघटकतया अखिलोद्देश्यं तदितरञ्च अवगाहिन इत्यर्थः। उद्देश्यस्य प्रथमावगतत्वेन तस्य अपूर्वबोध्यत्वरूपविधेयत्वासम्भवेन विधेयतया उद्देश्यावगाही शाब्दबोधो न सम्भवतीति प्राचाम् अभिमतम्।

घटत्वेन अवगतेऽपि 'घटो नीलघटो न वा' इति सन्देहस्य सर्वानुभवसिद्धतया नीलघटार्थिनः तत्र प्रवृत्तिः न स्यादिति। तादृशप्रवृत्ति-सिद्ध्यर्थं प्रकृतसन्देहोच्छेदाय 'घटो नीलघट' इति बोधः अवश्यम् अभ्युपेयः। तथा च अगत्या कस्यचिदंशस्य अपूर्वत्वे तद्विशिष्टः पूर्वम् अवगतोऽपि अपूर्व एवेति वक्तव्य एव इति। उद्देश्यस्य अपूर्वधर्मविशिष्टस्य विधेयतया अवगाही बोधे स्वीकरणीय एवेति नवीनाभिप्रायः। तथा च 'नीलघटो घट' इत्यादौ घटत्वावच्छिन्नप्रकारतानिरूपित-घटत्वावच्छिन्न-विशेष्यताकः शाब्दबोधः प्रसिद्धः। तस्य घटत्वाद्युपस्थित्यादिकारणमपि प्रसिद्धम्। तस्य 'घटो घट' इत्यादौ अपि सत्त्वेन तादृशो बोधः स्याद् इति भावः। **विशेषणतावच्छेदकविधये**त्यादि। अयम्भावः - तस्य बोधस्य यथा घटत्वोपस्थित्यादिः कारणं, तथा नीलाद्युपस्थितिः अपि कारणम्। कारण-कूटस्यैव च कार्योत्पादकत्वेन घटोपस्थितेः सत्त्वेऽपि नीलोपस्थित्यादेः असत्त्वात् न आपत्तिः इति दिक्।

ननु इदं न युक्तम्। प्रसिद्धव्यक्तेरस्तु न आपत्तिः सम्भवति। तस्या अन्यत्रोत्पत्ति-असम्भवात्। अपि तु प्रसिद्धो यो धर्मः तदवच्छिन्नकार्यता-निरूपितकारणताश्रयबलात् तद्धर्मावच्छिन्नकार्यस्य आपत्तिः भवति। तथा च घटत्वावच्छिन्न-प्रकारतानिरूपित-घटत्वावच्छिन्न-विशेष्यताशालि-शाब्दबुद्धित्व-अवच्छिन्नं प्रति कारणता नीलोपस्थित्यादेः व्यभिचारेण न सम्भवति। अपि तु प्रथमान्तघटपदसमभिव्याहृत-प्रथमान्तघटपदत्वादिरूप-आकाङ्क्षाज्ञानादेः एव। तद्बलात् 'घटो घट' इत्यादौ तादृशधर्मावच्छिन्न-कार्यापादने अकारणीभूताया नीलाद्युपस्थितेः विरहस्य अकिञ्चित्करत्वाद् इति चेति? अत्र उच्यते। सामान्यस्य निर्विशेषस्य अभावेन सामान्यधर्मावच्छिन्ने कार्ये जननीये विशेषधर्मावच्छिन्न-कार्योत्पादकसामग्र्या अपेक्षितत्वम् इत्यस्य वक्तव्यतया घटत्वावच्छिन्नप्रकारता-निरूपितघटत्वावच्छिन्नविशेष्यता-निरूपक-शाब्दबुद्धित्वरूप-सामान्यधर्मावच्छिन्न-

कार्योत्पत्तौ नीलघटत्वावच्छिन्नप्रकारतानिरूपित-घटत्वावच्छिन्नविशेष्यताशालि-शाब्दबुद्धित्वरूप-विशेषधर्मावच्छिन्न-कार्योत्पादिकाया नीलादि-उपस्थितिघटित-सामग्र्या अपेक्षितत्वेन नीलाद्युपस्थितेः अवश्य-अपेक्षणीयत्वात् न अनुपपत्तिः। किञ्च शुद्धघटत्वावच्छिन्न-प्रकारतानिरूपित-घटत्वावच्छिन्नविशेष्यताक-शाब्दबोधस्य अभाव एव। अपि तु नीलघटत्वाद्यवच्छिन्न-प्रकारतानिरूपित-घटत्वावच्छिन्न-विशेष्यताक एवेति न शुद्धघटत्वावच्छिन्नप्रकारता-निरुक्तशाब्दबुद्धित्वावच्छिन्नं प्रति कस्यापि कारणता, किन्तु नीलघटत्वाद्यवच्छिन्न-प्रकारता-निरुक्तधर्मावच्छिन्नं प्रत्येव। तथा च घटत्वावच्छिन्नप्रकारताघटितो-क्तधर्मावच्छिन्नसत्त्वं नीलघटत्वावच्छिन्नप्रकारताकनिरुक्तकार्यं प्रति या नीलाद्युपस्थितिघटिता सामाग्री तत्प्रयोज्यमेव वक्तव्यम्। तर्हि नीलाद्युप-स्थित्यभावे तत्सत्त्वस्य न प्रसङ्गः।

**VV-J. 5.2.1-2:** द्रव्यत्वादावित्यादि। अयं भावः - 'द्रव्यं घट' इत्यादौ यो द्रव्यत्वावच्छिन्नविशेष्यतानिरूपित-घटत्वावच्छिन्नप्रकारताकः शाब्दबोधः सः अभेदसम्बन्धावच्छिन्न-घटत्वावच्छिन्नप्रकारताकः धर्मितावच्छेदकता-सम्बन्धेन द्रव्यत्वे प्रसिद्धश्च। तादृशस्य अभेदसम्बन्धावच्छिन्नप्रकारताक-शाब्दबोधस्य धर्मितावच्छेदतासम्बन्धेन 'घटो घट' इत्यादौ घटत्वे आपत्तिः सम्भवति। आपादकोऽपि 'द्रव्यं घट' इत्यादौ द्रव्यत्वे धर्मितावच्छेदकता-सम्बन्धेन शाब्दबोधोत्पादकं यदभेदसम्बन्धावच्छिन्नघटत्वावच्छिन्नप्रकारताकं योग्यताज्ञानं घटत्वावच्छिन्नप्रकारताक-बोधजननेच्छया उच्चरितत्व-रूप-तात्पर्यज्ञानं घटत्वा-वच्छिन्नोपस्थितिः इति एतत्समुदायो यो धर्मितावच्छेदकतासम्बन्धेन द्रव्यत्वे अभेदसम्बन्धावच्छिन्न-घटत्वावच्छिन्नप्रकारताक-शाब्दबोधोत्पादकः स एव इति।

अत्र शङ्कते। द्रव्यत्वे निरुक्तसम्बन्धेन निरुक्तशाब्दबोधोत्पादिता द्रव्यत्वावच्छिन्नविशेष्यताक-अभेदसम्बन्धावच्छिन्न-घटत्वावच्छिन्न-प्रकारताक-योग्य-ताज्ञानं द्रव्यपदजन्य-द्रव्यत्वावच्छिन्न-विशेष्यताकोपस्थित्यादिघटिता एव सामग्री। अन्यथा अन्यधर्मावच्छिन्नविशेष्यताक-योग्यताज्ञानादिना अन्यधर्मावच्छिन्नविशेष्यक-शाब्दबोधापत्तेः। तथा च तदभावात् न 'घटो घट' इत्यादौ घटत्वे तादृशो बोध इति आशयः। ननु द्रव्यत्वावच्छिन्नविशेष्यक-निरुक्तयोग्यताज्ञानादिघटिता सामग्री आत्मनिष्ठ-प्रत्यासत्त्या कारणीभूता। तस्याः कार्यतावच्छेदकः समवाय एव, न तु धर्मितावच्छेदकः, तर्हि तेन सम्बन्धेन तस्याः कथं द्रव्यत्वे कार्योत्पादकत्वम् इति चेत् ? अत्र उच्यते। आत्मनिष्ठप्रत्यासत्त्या कारणीभूताया द्रव्यत्वा-वच्छिन्न-विशेष्यताकोपस्थिति-तदवच्छिन्नविशेष्यक-घटत्वावच्छिन्नप्रकारताक-योग्य-ताज्ञानादिघटितायाः सामग्र्याः कार्यतावच्छेदकं घटत्वावच्छिन्न-प्रकारतानिरूपित-

द्रव्यत्वावच्छिन्नविशेष्यक-शाब्दबुद्धित्वम्। तद्घटकत्वञ्च द्रव्यत्ववृत्ति-धर्मितावच्छेदकतायाः। तथा च धर्मितावच्छेदकतासम्बन्धेन द्रव्यत्वे जायमानाभेद-सम्बन्धावच्छिन्न-घटत्वावच्छिन्न-प्रकारताकशाब्दबुद्धित्वं निरुक्तकार्यतावच्छेदक-समनियतम्। समनियतधर्मावच्छिन्ने कार्ये जननीये समनियतधर्मावच्छिन्न-कार्योत्पादकसामग्र्या अपेक्षा। अत एव कालादौ कालिकादिसम्बन्धेन जायमानशाब्दबोधं प्रति कालिकादिसम्बन्धेन काले जायमानशाब्दबुद्धित्वस्य समनियतम्। समवायेन आत्मनि जायमानशाब्दबुद्धित्वं तद्धर्मावच्छिन्नस्य कारणीभूता या आत्मनिष्ठोपस्थित्यादिघटिता सामग्री सा एव अपेक्ष्यते न तु काले सामग्र्यन्तरापेक्षा। अतो धर्मितावच्छेदकताया कार्यतावच्छेदकसम्बन्धता-विरहेऽपि तेन सम्बन्धेन कार्योत्पत्तौ उपस्थित्यादिघटिताया अपेक्षेति युक्तमेव।

ननु यथा आत्मनि विद्यमाना द्रव्यत्वावच्छिन्नोपस्थित्यादिघटिता सामग्री स्वकार्यतावच्छेदकेनापि धर्मितावच्छेदकतासम्बन्धेन द्रव्यत्वे शाब्दबोधं जनयति तथैव घटत्वेऽपि तेन सम्बन्धेन अभेदसम्बन्धावच्छिन्न-घटत्वावच्छिन्न-प्रकारताकशाब्दबोधं कथं न उत्पादयति इति चेत् ? न। द्रव्यत्वे विद्यमानधर्मितावच्छेदकताया एव तदीयकार्यतावच्छेदकधर्मघटकत्वं न तु घटत्वे विद्यमानायाः तस्या इति घटत्वे तेन सम्बन्धेन जायमानघट-प्रकारक-अभेदबुद्धित्वस्य तदीयकार्यतावच्छेदक-द्रव्यत्वावच्छिन्न-विशेष्यताक-शाब्दबुद्धित्व-समनियतत्वाभावात्।

ननु घटत्वावच्छिन्नविशेष्यताक-शाब्दबुद्धित्वमेव द्रव्यत्वावच्छिन्नो-पस्थित्यादिघटितसामग्र्याः कार्यतावच्छेदकं कुतो न? तथा सति घटत्व-निष्ठाया अपि धर्मितावच्छेदकतायाः स्वीकार्यतावच्छेदक-धर्मघटकत्वं भविष्यतीति चेत् ? न। यद्धर्मावच्छिन्नं प्रति यस्याः सामग्र्या व्याप्यत्वं, स एव धर्मः तत्सामग्र्याः कार्यतावच्छेदकमिति नियमात्। द्रव्यत्वावच्छिन्न-विशेष्यताक-शाब्दबुद्धित्वावच्छिन्नं प्रति एव द्रव्यत्वावच्छिन्नोपस्थित्यादि-घटितायाः सामाग्र्याः व्याप्यत्वं, न तु घटत्वावच्छिन्नविशेष्यताक-शाब्दबुद्धित्वावच्छिन्नं प्रति इति। तादृशशाब्दबुद्धित्वस्य तादृशसामग्री कार्यतावच्छेदकत्वासम्भवात्। तथा च घटत्वे आपादकाभावात् न आपत्तिः इति स्थितम्।

**VV-J. 5.2.3:** इदानीं गौरवेण आत्मनिष्ठप्रत्यासत्त्या कार्यकारणभावं विहाय लाघवाद् धर्मितावच्छेदकम् अनिवेश्य विषयनिष्ठप्रत्यासत्त्या कार्यकारणभावम् अङ्गीकृत्य आपत्तिं स्थापयति - **योग्यताज्ञानस्य धर्मितावच्छेदकं निवेश्येत्यादिना**। समवायसम्बन्धेन घटत्वावच्छिन्न-अभेदसम्बन्धावच्छिन्न-प्रकारता-निरूपितद्रव्यत्वावच्छिन्न-विशेष्यताक-शाब्दबुद्धित्वावच्छिन्नं प्रति समवायसम्बन्धेन

घटत्वावच्छिन्न-अभेदसम्बन्धावच्छिन्न-प्रकारतानिरूपित-द्रव्यत्वावच्छिन्नविशेष्यताक-योग्यताज्ञानं कारणम् इति आत्मनिष्ठप्रत्यासत्त्या कार्यकारणभावे धर्मितावच्छेदक-भेदेन केवलघटत्वावच्छिन्न-प्रकारताक-शाब्दबोधे कार्यकारणभाव-आनन्त्यम् इति गौरवम्। धर्मितावच्छेदकता-सम्बन्धेन अभेदसम्बन्धावच्छिन्नघटत्वावच्छिन्न-प्रकारताक-शाब्दबुद्धित्वावच्छिन्नं प्रति धर्मितावच्छेदकतासम्बन्धेन अभेद-सम्बन्धावच्छिन्न-घटत्वावच्छिन्न-प्रकारताक-योग्यताज्ञानं कारणमिति। धर्मिता-वच्छेदकनिष्ठ-प्रत्यासत्त्या कार्यकारणभावे अभेदसम्बन्धावच्छिन्न-घटत्वावच्छिन्न-प्रकारताक-शाब्दबोध-मात्रस्य निरुक्तकार्यतावच्छेदक-आक्रान्ततया अभेद-सम्बन्धावच्छिन्न-घटत्वावच्छिन्न-प्रकारताकयोग्यताज्ञानमात्रस्य निरुक्तकारणता-वच्छेदक-आक्रान्ततया च निरुक्ते न एकविधकार्यकारणभावेन एव निर्वाह इति लाघवम्। ततश्च घटत्वे धर्मितावच्छेदकतासम्बन्धेन अभेदसम्बन्धावच्छिन्न-घटत्वावच्छिन्न-प्रकारताक-योग्यताज्ञानबलाद् द्रव्यत्व इव अभेदसम्बन्धावच्छिन्न-घटत्वावच्छिन्नप्रकारताक-शाब्दबोधापत्तिः।

**VV-J. 5.2.4:** अथ प्रमेयपदजन्यप्रमेत्वावच्छिन्नोपस्थितिदशायां द्रव्यत्वा-वच्छिन्नोपस्थितिमन्तरेणापि धर्मितावच्छेदकतासम्बन्धप्रमेयत्वे घटत्वावच्छिन्न-अभेदसम्बन्धावच्छिन्न-प्रकारताक-योग्यताज्ञानबलात् धर्मितावच्छेदकता-सम्बन्धेन अभेदसम्बन्धावच्छिन्न-घटत्वावच्छिन्न-प्रकारताक-शाब्दबोधो 'घटः प्रमेय' इत्यादौ यथा भवति तथा द्रव्यपदात् द्रव्यत्वावच्छिन्नोपस्थित्यभावे उक्तसम्बन्धेन उक्तयोग्यताज्ञानबलात् 'घटो द्रव्यम्' इति शाब्दबोधापत्तिः इत्याह - **न च योग्यताज्ञानस्येत्यादिना**। तथा च विषयनिष्ठप्रत्यासत्त्या कार्यकारणभावो न वक्तव्य इति भावः।

**VV-J. 5.2.5:** विषयनिष्ठप्रत्यासत्त्या कार्यकारणभाववादी समाधत्ते - **समानप्रकारतेत्यादिना**। प्रकारतासम्बन्धेन शाब्दबोधं प्रति प्रकारतासम्बन्धेन उपस्थतिः कारणमिति कार्यकारणभावः।

**VV-J. 5.2.6:** न च धर्मितावच्छेदकतायाः प्रकारतायाः प्रकारतानात्मकतया तेन सम्बन्धेन शाब्दबोधे तावतापि किमायातम् इत्याह - **येन सम्बन्धेन यद्धर्मावच्छिन्नकार्यं प्रतीत्यादि**। तथा च धर्मितावच्छेदकता-सम्बन्धेन शाब्दबोधं प्रति प्रकारतासम्बन्धेन शाब्दबोधस्य व्यापकत्वात्। तत्सामग्र्याः प्रकारतासम्बन्धेन उपस्थितिघटितायाः धर्मितावच्छेदकता-सम्बन्धेन शाब्दबोधे अपेक्षणात् तदभावेन न अनुपस्थितिदशायां धर्मितावच्छेदकतासम्बन्धेन शाब्दबोधः। न च 'सुन्दरो घटो नील' इत्यादौ सुन्दररूपपदार्थे प्रकारतासम्बन्धेन उपस्थित्यभावात् कथं धर्मितावच्छेदकता-सम्बन्धेन शाब्दबोध इति वाच्यम्। निरवच्छिन्न-

धर्मितावच्छेदकतासम्बन्धेन शाब्दबोधे एव तत्सामग्र्या अपेक्षणात्। प्रकृते च सुन्दरत्वावच्छिन्नायाः तस्य सत्वात्।

अत्रेदं विचार्यते - धर्मितावच्छेदकतासम्बन्धेनाभेदसम्बन्धावच्छिन्न-घटत्वावच्छिन्नप्रकारताक-शाब्दबुद्धित्वावच्छिन्नं धर्मितावच्छेदकतासम्बन्धेन अभेदसम्बन्धावच्छिन्नप्रकारताक-योग्यताज्ञानं कारणमिति। विषयनिष्ठ-प्रत्यासत्त्या कार्यकारणभावे अन्यसमवेत-योग्यताज्ञानात् अन्यसमवेत-शाब्दबोधापत्तिवारणाय तत्पुरुषीय-निरुक्तशाब्दबोधे तत्पुरुषीयनिरुक्त-योग्यताज्ञानं कारणम् इत्यस्य वक्तव्यतया पुरुषभेदेन कार्यकारणभाव-आनन्त्यम्। विषयनिष्ठप्रत्यासत्त्या कार्यकारणभावेऽपि तुल्यम् इति आत्मनिष्ठप्रत्यासत्त्या कार्यकारणभाव-उपेक्षायां न मानमिति चेत् ? न। 'सुन्दरो घटः', 'सुन्दरः पुरुष' इत्यादिशाब्दबोधं प्रति घटत्वाद्यचेतन-धर्माणाम् अनन्तानां पुरुषत्वादिचेतधर्माणाम् अनन्तानानां निवेशेन कारणत्वे यावान् कार्यकारणभावः ततः अर्ध एव पुरुषभेदभिन्नः कार्यकारणभावो विषयनिष्ठप्रत्यासत्त्येति लाघवात्। न च द्रव्यत्वे धर्मितावच्छेदकतासम्बन्धेन योग्यताज्ञानस्य प्रकारतासम्बन्धेन द्रव्यपदजन्योपस्थितेश्च सत्त्वात्। 'घटस्य द्रव्यम्' इत्यादौ अपि द्रव्यत्वे धर्मितावच्छेदकतासम्बन्धेन घटाभेदान्वयापत्तिः। न च प्रथमान्तघटपदसमभिव्याहृत-प्रथमान्तद्रव्यपदत्वादिरूप-आकाङ्क्षाज्ञानविरहात् न आपत्तिः इति वाच्यम्। 'घटः प्रमेय' इत्यादौ तादृशाकाङ्क्षाज्ञानाभावेऽपि धर्मितावच्छेदकता-प्रकारता-सम्बन्धाभ्यां प्रमेयत्वे योग्यताज्ञानोपस्थितिभ्यां धर्मितावच्छेदकतासम्बन्धेन घटाभेदान्वयोत्पत्त्या तादृशाकाङ्क्षाज्ञानविरहस्य धर्मितावच्छेदकतासम्बन्धेन शाब्दबोधोत्पत्तौ अकिञ्चित्करत्वादिति वाच्यम्। आकाङ्क्षाज्ञानीयम् आत्मनिष्ठप्रत्यासत्त्या कार्यतावच्छेदकं यत् द्रव्यत्वावच्छिन्न-विशेष्यताकशाब्दबुद्धित्वं तद्घटकत्वस्य द्रव्यत्वनिष्ठाया धर्मितावच्छेदकतायाः सत्त्वेन द्रव्यत्ववृत्ति-धर्मितावच्छेदकता सम्बन्धेन जायमानशाब्दबुद्धित्वं द्रव्यत्वावच्छिन्नविशेष्यताक-शाब्दबुद्धित्व-समनियतम्। ततश्च समनियतधर्मावच्छिन्ने कार्ये जननीये समनियत-धर्मावच्छिन्न-कार्योत्पादकसामाग्र्याः पूर्वोक्तरीत्या अपेक्षिततया द्रव्यत्वे धर्मितावच्छेदकतासम्बन्धेन शाब्दबोधे द्रव्यत्वावच्छिन्न-विशेष्यताक-शाब्दबोध-कारणीभूत-निरुक्तताकाङ्क्षाज्ञानस्य अपेक्षिततया तदभावेन आपत्त्यभावात्। न च एवं रीत्या आपत्तिवारणे अनुपस्थितिदशायामपि अनया एव रीत्या वारणसम्भवात्। समानप्रकारताप्रत्यासत्त्योपस्थितेः कारणत्वाश्रयणं (VV-5.2.5) ग्रन्थकृताम् असङ्गतमिति वाच्यम्। आत्मनिष्ठप्रत्यासत्त्या पदार्थोपस्थितेः कारणत्वापेक्षया विषयनिष्ठप्रत्यासत्त्या कारणत्वे लाघवात्। लघुभूतोपायेन आपत्तिवारणसम्भवे गुरुभूतमार्गानुसरणस्य अयुक्तत्वात्।

विषयनिष्ठप्रत्यासत्त्या आकाङ्क्षाज्ञानस्य कारणत्वं न सम्भवति इति आत्मनिष्ठप्रत्यासत्त्या कार्यकारणभावः उपस्थितेश्च सम्भवतीति।

**VV-J. 5.2.7:** तथैव आश्रितः प्रकारतासम्बन्धेन उपस्थितेः कारणत्वे दोषम् आह - **न च यत्र प्रमेयत्वाद्यवच्छिन्नविशेष्यक-वृत्तिज्ञानेत्यादिना।** उद्‌बोधकान्तरात् द्रव्ये चक्षुःसन्निकर्षादेः इत्यर्थः। **हेतुताकल्पनमयुक्तमिति।** अनन्तप्रकारीभूत-द्रव्यत्वादीनां कार्यतावच्छेदके कारणतावच्छेदके च प्रवेशेन यद्यपि आत्मनिष्ठप्रत्यासत्त्या कार्यकारणभावे साम्यम् एव तथापि तत्पुरुषीयत्वनिवेशेन गौरवात् इत्यर्थः।

**VV-J. 5.2.8:** दोषवारणोपायम् आह - **स्वजनकज्ञानीयेत्यादिना।** स्वम् = उपस्थितिः, तज्जनकं ज्ञानं, प्रमेयः प्रमेयपदजन्यबोधविषयत्व-निष्ठप्रकारता-निरूपित-इच्छीयविशेष्यतावान् इत्याकारकम्। तदीया वृत्तिनिष्ठा प्रकारता विशेष्यतानिष्ठा। तन्निरूपिता विशेष्यता प्रमेये। तदवच्छेदकता प्रमेयत्वे सामानाधिकरण्येन। तद्-वैशिष्ट्यं प्रमेयत्वनिष्ठायाम् एव उपस्थितीय-प्रकारतायाम्। न तु उद्‌बोधकान्तराद् भासमानद्रव्यत्व-निष्ठायां तस्यामिति। न तदानीं द्रव्यत्वे शाब्दबोधः प्रकारतासम्बन्धेन। तत्र निरुक्तप्रकारता-सम्बन्धेन उपस्थितेः अभावादिति भावः। न च प्रमेयत्वादि-प्रकारकोपस्थितिजनकानि वृत्तिज्ञानानि प्रमेयः प्रमेयपदजन्यबोधविषयत्व-निष्ठ-प्रकारता-निरूपित-इच्छीयविशेष्यतावान्। स्वजन्यबोधविषयत्वनिष्ठ-प्रकारतानिरूपित-इच्छीयविशेष्यतासम्बन्धेन प्रमेयः प्रमेयपदवान्। प्रमेयपदं प्रमेयत्वावच्छिन्न-विषयताक-बोधजनकत्वनिष्ठ-प्रकारतानिरूपित-इच्छीय-विशेष्यतावत्। स्वविषयक-बोधजनकत्वनिष्ठप्रकारतानिरूपित-इच्छीय-विशेष्यतासम्बन्धेन प्रमेयपदं प्रमेयविशिष्टम् इत्याकारकम्। एवं वृत्तित्वस्य अनुगतानतिप्रसक्तस्य दुर्वचतया शक्तित्वेन लक्षणात्वेन शक्तिलक्षणयोः पृथक् प्रवेश आवश्यकः। तथा च प्रमेयः पटपदशक्यसम्बन्धीत्याकारकं स्वशक्त्यसम्बन्धित्व-सम्बन्धेन 'प्रमेयः पटपदवान्' इत्याकारकम्। प्रमेय-सम्बन्धिशक्तं घटपदं स्वसम्बन्धिशक्तत्वसम्बन्धेन पटपदं प्रमेयविशिष्टम् इत्याकारकञ्च। तेषु आद्यज्ञानजन्योपस्थितीयप्रकारता या प्रमेयत्वनिष्ठा तत्र तदुपस्थिति-जनकज्ञानीय-निरुक्तविशेष्यतारूप-वृत्तिनिष्ठप्रकारतानिरूपित-प्रमेयनिष्ठा विशेष्यतावच्छेदकता वैशिष्ट्यसत्त्वेऽपि ज्ञानान्तरजन्योपस्थितीय-प्रमेयत्व-निष्ठप्रकारतायां निरुक्तावच्छेदकता-सामानाधिकरण्यविरहात् तत्तज्ज्ञान-जन्योपस्थितिदशायां शाब्दबोधानापत्तिः। तथा च प्रकारता-सम्बन्धेन शाब्दबोधं प्रति स्वजनकज्ञानीय-शक्तिनिष्ठप्रकारतानिरूपित-विशेष्यतावच्छेदकता स्वजनकज्ञानीय-शक्तिसम्बन्धावच्छिन्न-पदनिष्ठ-प्रकारता-

निरूपक-विशेष्यतावच्छेदकता स्वजनकज्ञानीय-पदनिष्ठ-विशेष्यता-निरूपित-जनकत्वनिष्ठ - इच्छीयप्रकारतानिरूपित - बोधनिष्ठावच्छेदकता-निरूपित-विषयत्व-निष्ठावच्छेदकत्वनिरूपित-अवच्छेदकतावच्छेदकता स्वजनकज्ञानीयशक्ति-सम्बन्धावच्छिन्नपदनिष्ठ-विशेष्यतानिरूपित-प्रकारता-वच्छेदकता स्वजनकज्ञानीय-लक्षणानिष्ठप्रकारतानिरूपित-विशेष्यतावच्छेदकता-स्वजनकज्ञानीय-लक्षणासम्बन्धा-वच्छिन्न-पदप्रकारतानिरूपित-विशेष्यतावच्छेदकता स्वजनक-ज्ञानीलक्षणा-सम्बन्धावच्छिन्न-पदनिष्ठविशेष्यता-निरूपिता या प्रकारता तदवच्छेदकता स्वजनकज्ञानीय-पदनिष्ठविशेष्यता-निरूपित-शक्तत्वनिष्ठ-प्रकारतानिरूपक-सम्बन्धि-निष्ठावच्छेदकतानिरूपित-अवच्छेदकतावच्छेदकतानां सामानाधिकरण्यं प्रकारतायां पृथक् पृथक् निवेश्य उपस्थितीनां कारणत्वं पृथगेव वक्तव्यम्। तथा च परस्परजन्यबोधे व्यभिचारवारणाय कार्यतावच्छेदककोटौ तत्तदुपस्थित्यानन्तर्यं निवेशनीयम्। तथा च कस्यापि कार्यतावच्छेदकस्य धर्मितावच्छेदकतासम्बन्धेन घटत्वावच्छिन्न-अभेदसम्बन्धावच्छिन्न-प्रकारताकशाब्दबुद्धित्वं प्रति व्यापकताया अभावेन धर्मितावच्छेदकता-सम्बन्धेन तद्धर्मावच्छिन्नकार्ये तत्तद्धर्मावच्छिन्न-कार्योत्पादक-सामाग्र्या अनपेक्षणाद् अनुपस्थितिदशायां द्रव्यत्वे निरुक्त-सम्बन्धेन निरुक्तशाब्दबोधापत्ति तादवस्थ्यम् एवेति चेत् ? अत्र उच्यते। प्रकारतासम्बन्धेन शाब्दबुद्धित्वं प्रति तत्तदानन्तर्यघटित-तत्तद्धर्मस्य व्याप्यतया व्यापकधर्मावच्छिन्ने कार्ये जननीये व्याप्यधर्मावच्छिन्नकार्योत्पादक-सामग्र्या अपेक्षणात्। प्रकारता-सम्बन्धेन शाब्दबोधे तादृशोपस्थितीनामपेक्षा। धर्मितावच्छेदकतासम्बन्धेन शाब्दबोधे च व्यापकसामग्रीविधया तादृशोपस्थितीनाम् अपेक्षेति न अनुपस्थितिदशायां धर्मितावच्छेदकतासम्बन्धेन शाब्दबोधोपपत्तिः इति दिक्।

न च विशेष्यतावच्छेदकतामात्रस्य उपस्थितिनिष्ठ-कारणता-वच्छेदक-संसर्गता-उपगमेऽपि उद्बोधकान्तरात् उपस्थितद्रव्यत्वे शाब्दापत्ति-वारणसम्भवे प्रकारतापर्यन्तानुधावनं व्यर्थमिति वाच्यम्। द्रव्यं द्रव्यपदशक्यं, प्रमेयः प्रमेयपदशक्य इति समूहालम्बनवृत्तिज्ञानात् प्रमेयत्वावच्छिन्न-मात्रोपस्थितौ द्रव्यत्वेऽपि विशेष्यतावच्छेदकता-सम्बन्धेन उपस्थितेः सत्त्वात् शाब्दापत्तेः वारणाय प्रकारतापर्यन्तं स्याद्। आरादुद्बोधकान्तराद् उपस्थित-द्रव्यत्वनिष्ठप्रकारतायां कालिकसम्बन्धेन प्रमेयत्वनिष्ठ-निरुक्तविशेष्यतावच्छेदकता-वैशिष्ट्यम् आदाय उक्तदोष-तादवस्थ्यमिति सामानाधिकरण्य-सम्बन्धेन वैशिष्ट्यं बोध्यम्। 'घटो घटपदशक्य' इति वृत्तिज्ञानात् घटत्वावच्छिन्नोपस्थितौ उद्बोधकान्तरात् प्रमेयत्वावच्छिन्नस्य भाने प्रमेयत्वावच्छिन्न-प्रकारतायां निरुक्तविशेष्यतावच्छेदकता-वैशिष्ट्यसत्त्वात् प्रमेयत्वावच्छिन्नप्रकारताकशाब्दबोधवारणाय स्वानवच्छेदक-

धर्मानवच्छिन्नत्वस्य अपि वैशिष्ट्यघटकत्वं बोध्यम्। प्रकृते च अवच्छेदकतानच्छेदक-प्रमेयत्वावच्छिन्नत्वस्यैव प्रमेयत्वावच्छिन्नप्रकारतायां सत्त्वेन अदोषः। 'प्रमेयवान् प्रमेयपदशक्य' इति वृत्तिज्ञानात् प्रमेयत्वावच्छिन्न-प्रकारताकोपस्थितौ उद्‌बोधकान्तराद्-घटत्वावच्छिन्नस्य भाने निरवच्छिन्नघटत्वनिष्ठ-प्रकारतायां वृत्तिज्ञानीयधर्मितानिरूपित-प्रमेयत्वावच्छिन्न-अवच्छेदकता-वैशिष्ट्यसत्त्वात् निरवच्छिन्नघटत्वनिष्ठ-प्रकारताक-शाब्दबोधापत्त्या स्वानवच्छेदकधर्म-अनवच्छिन्नत्व-सम्बन्धावच्छिन्न-स्वनिरूपितवृत्तित्ववत्त्वमपि वैशिष्ट्ये निवेश्यम्। प्रकृते घटत्वनिष्ठनिरवच्छिन्नप्रकारतायां स्वानवच्छेदकधर्म-अनवच्छिन्नत्व-सम्बन्धावच्छिन्ना प्रमेयत्वावच्छिन्नवृत्तिज्ञानीय-धर्मितावच्छेदकतानिरूपिता या वृत्तिता तस्या असत्त्वात् अदोषः। कालिकसम्बन्धेन द्रव्यत्वविशिष्टो द्रव्यपदशक्य इति वृत्तिज्ञानजन्य-कालिकसम्बन्धावच्छिन्न-द्रव्यत्वनिष्ठ-प्रकारताक-उपस्थितौ समवाय-सम्बन्धेन घटत्वविशिष्टघटस्य उद्‌बोधकान्तराद् भाने घटत्वनिष्ठसमवाय-सम्बन्धावच्छिन्न-प्रकारतायां धर्मितावच्छेदकता-वैशिष्ट्यस्य उक्तसम्बन्धत्रयेण सत्त्वात् समवायसम्बन्धावच्छिन्न-घटत्व-प्रकारक-शाब्दबोधवारणाय स्वावच्छेदक-सम्बन्धावच्छिन्नत्वस्यापि चतुर्थ-सम्बन्धस्य वैशिष्ट्ये प्रवेशः।

वस्तुतस्तु उद्‌बोधकवशात् उपस्थितीयप्रकारतासु उक्तासु उक्त-वृत्तिज्ञानीय-धर्मितावच्छेदकताप्रयोज्यत्वविरहात् स्वप्रयोज्यत्वमात्रं वैशिष्ट्य-नियामकं वक्तव्यम्। तेनैव उक्तदोषाणां निरासः। किञ्च द्रव्यं द्रव्यपदशक्यं, घटो घटपदशक्य इति समूहालम्बनं वृत्तिज्ञानं द्रव्यपदशक्यम् इत्यंशे अप्रामाण्यज्ञानास्कन्दितम्। ततो घटत्वावच्छिन्नोपस्थितौ उद्‌बोधकान्तरात् द्रव्यत्वावच्छिन्नस्य भाने द्रव्यत्वनिष्ठ-समवायसम्बन्धावच्छिन्न-निरवच्छिन्न-प्रकारतायाम् उक्त-चतुष्टयसम्बन्धेन उपस्थितिजनक-समूहालम्बनात्मक-वृत्तिज्ञानीयधर्मितावच्छेदकताया वैशिष्ट्यसत्त्वेन द्रव्यत्वप्रकारक-शाब्दबोधवारणं प्रयोज्यत्वनिवेशाधीनम् एवेति दिक्।

ननु घटत्वादिप्रकारक-उपस्थितिजनक-शक्तिज्ञानानि नानाविधानि। तथा हि 'घटो घटपदशक्यत्ववान्', 'शक्तिसम्बन्धेन घटो घटपदविशिष्टः' इत्याकारकौ। शक्तिनिष्ठप्रकारताक-शक्तिनिष्ठसंसर्गताकौ घटत्वनिष्ठ-विशेष्यतावच्छेदकताकौ। घटशक्तं घटपदं शक्तिसम्बन्धेन घटविशिष्टं घटपदम् इत्याकारकौ। शक्तिनिष्ठप्रकारताक-शक्तिसंसर्गक-घटत्वरूप-आनुपूर्व्यवच्छिन्न-विशेष्यताकौ च। तत्र आद्यज्ञानजन्योपस्थितीय-घटत्व-निष्ठप्रकारता तु उपस्थिति-जनक-ज्ञानीयवृत्तिनिष्ठ-प्रकारतानिरूपित-विशेष्यतानिरूपितघटत्वनिष्ठावच्छेदकता - विशिष्टा अस्ति। इतरेषु ज्ञानेषु आद्यज्ञानीया वृत्तिनिष्ठा संसर्गता अस्ति। न तु

प्रकारता अग्रीमज्ञानीय-विशेष्यतावच्छेदकता-घटत्वरूपा-आनुपूर्वीनिष्ठा। तद्वैशिष्ट्यम् उपरथतीय-घटत्वनिष्ठप्रकारतायां नास्तीति। अन्तिमज्ञानत्रय-जन्योपस्थितयः स्वजनक-ज्ञानीयवृत्तिनिष्ठ-प्रकारतानिरूपित-विशेष्यतावच्छेदकता-विशिष्ट-प्रकारतासम्बन्धेन घटत्वे न सन्तीति। तत्र प्रकारतासम्बन्धेन शाब्दबोध-अनापत्तिः। निरुक्तावच्छेदकतानां घटत्वनिष्ठानां स्वजनकज्ञानीयवृत्तिनिष्ठविषयतया परम्परया निरूपितत्वेन अनुगमय्य तद्विशिष्टप्रकारताया उपस्थितिकारणता-वच्छेदकसम्बन्धत्वे 'घटो घटपदशक्य' इति वृत्तिज्ञानजन्यघटत्व-प्रकारको-पस्थितौ उद्बोधकान्तराद् घटत्वरूपानुपूर्व्यवच्छिन्नादेः भाने आनुपूर्वीनिष्ठ-प्रकारताया अपि निरुक्तविषयतया विशिष्टत्वेन तादृशप्रकारतासम्बन्धेन घटत्वरूपानुपूर्व्यां तादृशसमूहालम्बनोपस्थितेः सत्त्वेन तत्र शाब्दबोधापत्तिः। अतो घटत्वनिष्ठावच्छेदकतानां विशिष्य स्वजनकज्ञानीयवृत्तिनिष्ठ-प्रकारता-निरूपित-विशेष्यतावच्छेदकतात्वेन स्वजनक-ज्ञानीयवृत्तिनिष्ठ-संसर्गता-निरूपित-प्रकारतानिरूपकविशेष्यतावच्छेदकतात्वेन स्वजनक-ज्ञानीयशक्तत्व-निष्ठ-प्रकारतानिरूपित-अवच्छेदकतावच्छेदतात्वेन स्वजनकज्ञानीय-शक्तत्व-संसर्ग-निष्ठसंसर्गतानिरूपित-प्रकारतावच्छेदकतात्वेन प्रवेश्य तत्तदवच्छेदकताविशिष्ट-प्रकारतात्मकेन असम्बन्धेन उपस्थितीनां पृथक् पृथक् कारणत्वे परस्पर-जन्यबोधे परस्परव्यभिचारवारणाय स्वजनक-ज्ञानीयवृत्तिनिष्ठ-प्रकारता-निरूपित-विशेष्यता-वच्छेदकताविशिष्टप्रकारता-सम्बन्धेनोपस्थित्यव्यवहितोत्तरं प्रकारतासम्बन्धेन शाब्दबोधं प्रति स्वजनकज्ञानीयवृत्तिनिष्ठप्रकारता-निरूपितविशेष्यतावच्छेदकता-विशिष्टप्रकारतासम्बन्धेन उपस्थितिः कारणम्। एवं क्रमेण चत्वारः कार्यकारणभावाः स्युः। एवं वृत्तित्वस्य अनुगत-अनति-प्रसक्तस्य दुर्वचतया समानविषयकशाब्दबोधं प्रति प्रत्यक्षसामग्र्याः प्रतिबन्धकतया समानविषयकप्रत्यक्षसामग्र्यभावोऽपि शाब्दसामग्र्यां प्रवेश्यः। शाब्देच्छायां समानविषयक-प्रत्यक्षसामग्री सत्त्वेऽपि शाब्दबोधोत्पत्त्या शाब्देच्छाविरहविशिष्टप्रत्यक्षसामग्र्यभावः शाब्दसामग्र्यां प्रवेशनीयः। तथा च 'शक्तिज्ञानाधीनः शाब्दबोधो जायताम्' इति इच्छासत्त्वे प्रत्यक्षसामग्रीसत्त्वे लक्षणा-ज्ञानाधीनोपस्थितिघटित-शाब्दसामग्रीसत्त्वे शाब्दबोध-वारणाय शक्ति-ज्ञानाधीनोपस्थितिजन्य-शाब्देच्छाविरहविशिष्ट-प्रत्यक्षसामग्र्यभाव-विशिष्टा शक्ति-ज्ञानाधीनोपस्थितिः कारणम्। लक्षणाज्ञानाधीनोपस्थितिजन्य-शाब्देच्छाविरह-विशिष्टप्रत्यक्षसामग्र्यभाव-विशिष्टा लक्षणाज्ञानाधीनोपस्थितिः कारणमित्येव शक्तित्वेन लक्षणात्वेन शक्तिलक्षणे प्रवेश्य कार्यकारणभावो वक्तव्य इति। शक्तिलक्षणान्यतरत्वेन अपि तयोः अनुगमासम्भवेन घटः पटपद-शक्यसम्बन्धी। घटः स्वशक्यसम्बन्धित्वरूप-लक्षणात्मक-सम्बन्धेन पटपदविशिष्टः। घटसम्बन्धिशक्तं

पटपदम्। स्वसम्बन्धिशक्तत्व-सम्बन्धेन घटविशिष्टं पटपदमिति चतुर्विधलक्षणाज्ञानाधीनोपस्थितीनामपि एकरूपेण कारणत्वासम्भवात् पृथक् पृथक् कारणत्वम् उक्त्वा परस्परजन्यबोधे व्यभिचारवारणाय अव्यवहितोत्तरत्वं कार्यतावच्छेदककोटौ निवेश्य चत्वारः कार्यकारणभावाः स्युः। एवञ्च एकस्यापि कार्यस्य धर्मितावच्छेदकता-सम्बन्धेन शाब्दबोधं प्रति व्यापकताया अभावेन धर्मितावच्छेदकता-सम्बन्धेन शाब्दबोधोत्पत्तौ तत्कारणीभूतोपस्थित्यनपेक्षणात् अनुपस्थितदशायां द्रव्यत्वादौ धर्मितावच्छेदकता-सम्बन्धेन योग्यताज्ञानबलात् धर्मितावच्छेदकता-सम्बन्धेन शाब्दबोधो दुर्वार एव इति चेत्? अत्र उच्यते। निरुक्तकार्यतावच्छेदकधर्माणां प्रकारतासम्बन्धेन जायमानशाब्दबोधत्वव्याप्यतया व्याप्यधर्मावच्छिन्ने कार्ये जननीये व्यापक-धर्मावच्छिन्नसामग्र्या अपेक्षणात्। अव्यवहितोत्तरत्वनिवेशे निरुक्तसम्बन्धेन उपस्थित्यनुत्तरं शुद्धप्रकारता-सम्बन्धेन उद्बोधकवशात् उपस्थितद्रव्यत्वे शाब्दबोधापत्तिवारणाय व्यापक-धर्मावच्छिन्ने कार्ये व्याप्यधर्मावच्छिन्नकार्यसामग्र्या अपेक्षा वक्तव्या। तथा च तदन्तर्गता या विशिष्टप्रकारतासम्बन्धेन उपस्थितिः तस्या अभावात् न आपत्तिः। धर्मितावच्छेदकतासम्बन्धेन शाब्दबोधं प्रति प्रकारतासम्बन्धेन शाब्दबोधस्य व्यापकतया "येन सम्बन्धेन यद्धर्मावच्छिन्नकार्यं प्रति येन सम्बन्धेन यद्धर्मावच्छिन्नकार्यस्य व्यापकता" (VV-5.2.6) इत्यादिमूलोक्त-रीत्या धर्मितावच्छेदकतासम्बन्धेन शाब्दबोधं प्रति व्यापकसामग्र्यन्तर्गताया विशिष्टप्रकारतासम्बन्धेन उपस्थितेः अपेक्षणात् न अनुपस्थितिदशायां धर्मितावच्छेदकतासम्बन्धेन शाब्दबोधापत्तिः इति।

**VV-J. 5.2.9:** 'नीलो घट' इत्यादौ नीले प्रकारतासम्बन्धेन शाब्दबोधो भवति। प्रकारतासम्बन्धेन उपस्थितिः नास्तीति व्यभिचार इत्याह - **न च पदार्थेऽपी**त्यादि। **प्रकारनिष्ठप्रत्यासत्त्ये**ति। प्रकारतासम्बन्धेन इत्यर्थः। न च निरुक्तधर्मितावच्छेदकताविशिष्टविषयता एव उपस्थितिनिष्ठकारणता-वच्छेदकसम्बन्धः अस्तु। वैशिष्ट्यञ्च स्वप्रयोज्यत्व-स्वनिरूपितधर्मिता-प्रयोज्यत्व-एतदन्यतरसम्बन्धेन। ततश्च न व्यभिचार इति वाच्यम्। 'नीलो घट' इत्यादौ मुख्यविशेष्ये घटेऽपि तादृशसम्बन्धेन उपस्थितेः सत्त्वेन प्रकारतासम्बन्धेन शाब्दबोधाभावे न अन्वयव्यभिचारस्य तावता अपि सत्त्वात्। विषयतामात्रस्य कार्यतावच्छेदकत्वे तत्र विषयतासम्बन्धेन शाब्दबोधस्यापि सत्त्वात् न व्यभिचार इति तु न। संसर्गे व्यतिरेक-व्यभिचारापत्तेः। संसर्गताभिन्नविषयतायाः प्रवेशे सामान्यलक्षणानभ्युपगन्तृमते शक्तिग्रहाविषयस्य अपूर्वव्यक्तेः अपि योग्यताबलेन शाब्दबोधोत्पत्त्या तत्र व्यभिचारापत्तेः।

**VV-J. 5.2.10: परामर्शकारणताविचारदर्शितेत्यादि।** समवायसम्बन्धेन धूमहेतुकानुमितौ समवायसम्बन्धेन धूमहेतुकपरामर्शज्ञानस्य आत्मनिष्ठ-प्रत्यासत्त्या कारणत्वोपगमे पक्षतावच्छेदक-आनन्त्यात् कार्यकारणभाव-आनन्त्यापत्त्या धर्मितावच्छेदकतासम्बन्धेन धूमहेतुवह्नित्वावच्छिन्न-प्रकारताकानुमितौ धर्मितावच्छेदकतासम्बन्धेन वह्निव्याप्यधूमत्वावच्छिन्न-प्रकारताक-परामर्शज्ञानस्य लाघवात् धर्मितावच्छेदकनिष्ठप्रत्यासत्त्या कारणत्वे स्वीकृते 'भाविज्ञानम् अप्रमा' इति अप्रामाण्यज्ञानानन्तरं 'वह्निव्याप्यधूमवान् पर्वत' इति परामर्शः, ततो 'वह्निव्याप्यालोकवद्द्रव्यम्' इति परामर्शः। तस्मिन् क्षणे अप्रामाण्यज्ञानस्य नाशात् अप्रामाण्यज्ञानानास्कन्दितस्य परामर्शद्वयस्य सत्त्वेन तदनन्तरं समूहालम्बनात्मकं 'पर्वतो वह्निमान्' 'द्रव्यं वह्निमद्' इत्याकारकम् उभयलिङ्गकानुमित्यात्मकं ज्ञानं जायते। तत्र कारणीभूतस्य वह्निव्याप्य-धूमत्वावच्छिन्न-प्रकारताकपरामशस्य धर्मितावच्छेदकतासम्बन्धेन द्रव्यत्वे विरहात् धूमलिङ्गकानुमितेश्च सत्त्वात्। एवं कारणीभूतस्य वह्निव्याप्यालोकत्वावच्छिन्न प्रकारकपरामर्शज्ञानस्य धर्मितावच्छेदकतासम्बन्धेन पर्वतत्वे विरहात् धर्मितावच्छेदकतासम्बन्धेन आलोकहेतुकानुमितेश्च सत्त्वात् प्राप्तव्यभिचारवारणाय धर्मितावच्छेदकता-सम्बन्धेन वह्निव्याप्यधूमत्वावच्छिन्नप्रकारताक-परामर्शज्ञानं स्वीयधर्मितावच्छेदकताविशिष्ट-धर्मितावच्छेदकतासम्बन्धेन धूमहेतुक-वह्नित्वावच्छिन्न-प्रकारताकानुमितिं प्रति कारणम् इति। एत्वं रीत्या कार्यकारणभावः कारणतावच्छेदकसम्बन्धस्य वैशिष्ट्यं कार्यतावच्छदेकसम्बन्धे निवेश्य स्वीकृतोऽस्ति। प्रकृते द्रव्यत्ववृत्त्यनुमितीय-धर्मितावच्छेदकतायां धूमहेतुक-परामर्शीय-धर्मितावच्छेदकतावैशिष्ट्यविरहात् पर्वतत्ववृत्त्यालोकहेतुकानुमितीय-धर्मितावच्छेदकतायाम् आलोकलिङ्गकपरामर्शीयधर्मितावच्छेदकता-वैशिष्ट्यविरहात् न व्यभिचारः। तथैव प्रकृतेऽपि स्वजनकज्ञानीयवृत्तिनिष्ठ-प्रकारतानिरूपित-विशेष्यतावच्छेदकताविशिष्ट-प्रकारतासम्बन्धेन उपस्थितिः स्वजनकज्ञानीयवृत्तिनिष्ठ-प्रकारतानिरूपित-विशेष्यतावच्छेदकताविशिष्ट-स्वीय-प्रकारताविशिष्टप्रकारतासम्बन्धेन शाब्दबोधं प्रति कारणम् इति। एवं कारणतावच्छेदकसम्बन्धवैशिष्ट्यं कार्यतावच्छेदकसम्बन्धे निवेश्य कार्य-कारणभावः स्वीक्रियते। 'नीलो घट' इत्यादौ प्रकारे नीले या शाब्दबोधीया प्रकारता तत्र स्वजनकेत्यादि-प्रकारतान्तकारणतावच्छेदक-सम्बन्धवैशिष्ट्यविरहेण न व्यभिचार इति आशयः। अक्षरार्थस्तु परामर्शकारणताया यो विचारः तत्र दर्शिता या दिक् तया तद्रीत्या व्यभिचारो वारणीय इति।

एतत्पर्यन्तग्रन्थेन आपत्तिं दृढीकृत्य समाधत्ते - **तद्धर्मावच्छिन्नाभेद-संसर्गावच्छिन्नेत्यादिना**। प्रकारतावच्छेदकभेदो विशेष्यतावच्छेदके अभेदान्वये अपेक्ष्यते इति भावः। न **शाब्दबोधापत्तिः** इति। घटत्वे घटत्वभेदाभावादिति भावः।

**VV-J. 5.3.1:** जातित्वादिनेति। 'स घट' इत्यत्र जातिमान् तत्पदार्थः, तत्र जातिः घटत्वं विशेष्यतावच्छेदकम्, अवच्छेदकता जातित्वावच्छिन्ना इति, 'घटो घट' इत्यतो विशेषः। 'घटः स' इत्यत्र जातिमान् तत्पदार्थः, तत्र प्रकारतावच्छेदकं घटत्वं जातिः, प्रकारतावच्छेदकता च जातित्वावच्छिन्ना इति पूर्वस्मात् विशेषः। उभयत्र शाब्दबोध इष्यते। स इदानीं न स्यात् प्रकारतावच्छेदक-विशेष्यतावच्छेदकयोः ऐक्यात् इति भावः। **विशेष्यत्व-प्रकारत्वयोरवच्छेदकत्व** इति। विशेष्यतावच्छेदकता-प्रकारतावच्छेदकता-निरवच्छिन्ना कार्यतावच्छेदके प्रवेश्या इति भावः। तथा च तद्धर्मनिष्ठ-निरविच्छिन्नावच्छेदकताक-अभेदसम्बन्धावच्छिन्न-प्रकारता-निरूपित-विशेष्यता-निरूपित-निरवच्छिन्नावच्छेदकतासम्बन्धेन शाब्दबोधं प्रति तद्धर्मभेदः कारणमिति पर्यवसितम्। निरुक्तप्रयोगद्वये जायमानशाब्दबोधौ च न निरवच्छिन्नप्रकारतादि-विशिष्ट-विशेष्यतावच्छेदकताकौ इति न तत्र प्रकारतावच्छेदक-विशेष्यतावच्छेदकयोः भेदापेक्षेति प्रकारतावच्छेदक-विशेष्यतावच्छेदकयोः अभेदेऽपि शाब्दबोधोपपत्तिः।

**'घटो नीलघट' इत्याद्यन्वयबोधस्य प्रामाणिकत्वे अन्यत्रेति**। तत्र हि घटत्वावच्छिन्नाभेद-सम्बन्धावच्छिन्न-प्रकारतानिरूपित-विशेष्यतावच्छेदकता-सम्बन्धेन घटत्वे शाब्दबोधः। तत्र च घटत्वभेदाभावात् व्यभिचारः प्राप्तः। तद्वारणार्थम् अन्यत्र दर्शिता पर्याप्तिनिवेशरूपा दिक् आश्रयितव्या इत्यर्थः। तथा च तद्धर्मपर्याप्तावच्छेदकताक-अभेदसम्बन्धावच्छिन्न-प्रकारतानिरूपिते-त्यादिरूपः कार्यतावच्छेदक-सम्बन्धः। प्रकृते च नीलघटत्वोभयपर्याप्ता अवच्छेदकता न घटत्वपर्याप्तेति। घटत्वभेदाभावेऽपि न दोषः।

ननु नीलघटत्वावच्छिन्न-अभेदसम्बन्धावच्छिन्न-प्रकारतानिरूपित-विशेष्यतावच्छेदकता-सम्बन्धेन शाब्दबोधे यदि नीलभेद-घटत्वभेदयोः कारणत्वं तर्हि विधेयकोटौ अधिकावगाहिनोऽपि 'घटो नीलघट' इति बोधस्य अनापत्तिः। घटत्वे उक्तभेदद्वयस्य असत्त्वात्। यदि नीलघटत्वोभयभेदस्य तत्त्वं घटत्वे, तस्य सत्त्वेन न दोषः तर्हि तस्य केवलान्वयित्वेन समान-उद्देश्यविधेयकस्य 'नीलघटो नीलघट' इत्याकारकस्यापि शाब्दस्य आपत्तिः। घटत्वे नीले वा विशेष्यतावच्छेदके नीलघटत्वोभयभेदस्य सत्त्वात् इति चेत् ? न। तद्रूपावच्छिन्नानुयोगिताक-पर्याप्तिप्रतियोग्यवच्छेदकता-निरूपितावच्छेद्यतावद्-अभेदसम्बन्धावच्छिन्न-

प्रकारतानिरूपित-विशेष्यतावच्छेदकतात्वावच्छिन्नप्रतियोगिताक-पर्याप्त्यनुयोगिता-वच्छेदकत्वसम्बन्धेन शाब्दबोधं प्रति तद्भेदस्य कारणत्वाङ्गीकारात् 'घटो नीलघट' इत्यादौ विधेयांशे अधिकावगाहिनः शाब्दबोधस्य घटत्व-नीलोभयगत-द्वित्वरूपावच्छिन्न-अनुयोगिताक-पर्याप्तिप्रतियोग्यवच्छेदकता-निरूपित-अभेद-सम्बन्धावच्छिन्न-प्रकारतानिरूपित-विशेष्यतावच्छेदकतात्वावच्छिन्न-प्रतियोगिताक-पर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन घटत्वगतैकत्वे सत्त्वेन तत्र घटत्वनीलोभयगत-द्वित्वभेदस्य अपि सत्त्वेन अदोषात्। न च उभयपर्याप्ताया अपि प्रकारतावच्छेदकताया वस्तुत्वेन घटत्वे एव पर्याप्तिः। तदनुयोगितावच्छेदकं च घटत्वगतैकत्वमेव। तथा च तदवच्छिन्नानुयोगिताक-पर्याप्तिप्रतियोग्यवच्छेदकता-निरूपितावच्छेद्यतावद् अभेदसम्बन्धावच्छिन्नप्रकारतानिरूपित-विशेष्यता-वच्छेदकतात्वावच्छिन्नप्रतियोगिताक-पर्याप्त्यनुयोगितावच्छेदकत्व-सम्बन्धेन घटत्व-गत-एकत्वे शाब्दबोधः। तत्र घटत्वगत-एकत्वभेदाभावाद् व्यभिचार एवेति वाच्यम्। स्वनिरूपितावच्छेदकतात्वावच्छिन्नप्रतोयगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन तद्रूपवृत्त्यभेदसम्बन्धावच्छिन्न-प्रकारता-घटितसम्बन्धस्य विवक्षणात्। तेन सम्बन्धेन उक्तप्रकारताया द्वित्व एव वृत्तेः।

ननु जातित्वावच्छिन्नघटत्वनिष्ठ-प्रकारतावच्छेदकताको यो 'घटः स' इत्यत्र अभेदान्वयबोधः तदीयप्रकारतावच्छेदकतात्वावच्छिन्न-प्रतियोगिताक-पर्याप्त्यनुयोगितावच्छेदकं घटत्वगतम् एकत्वमेव। तद्भेदस्य घटत्वगतैकत्वे अभावाद् व्यभिचारः। न च अवच्छेदकताया निरवच्छिन्नाया एव निवेशेन प्रकृते घटत्वगतावच्छेदकताया जातित्वावच्छिन्नत्वात् न दोष इति वाच्यम्। तर्हि नीलघटत्वावच्छिन्नप्रकारताया अपि निरवच्छिन्नावच्छेदकताया घटत्वे एव सत्त्वे न नीले ततश्च स्वनिरूपितनिरवच्छिन्नावच्छेदकतात्वावच्छिन्नप्रतियोगिताक-पर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन घटत्वनीलोभयावच्छिन्नप्रकारताया अपि घटत्वगत-एकत्ववृत्तित्वात् तद्भेदस्य घटत्वगत-एकत्वे अभावात् 'घटो नीलघट' इति विधेयांशे अधिकावगाहि-शाब्दबोधो न स्यादिति चेत् ? अत्र उच्यते। स्वनिरूपितनिरवच्छिन्ना-वच्छेदकतात्वावच्छिन्नप्रतियोगिताक-पर्याप्त्यनुयोगिता-वच्छेदकत्व-सम्बन्धेन स्वविशिष्टधर्मावच्छिन्नानुयोगिताक-पर्याप्तिप्रतियोगि-भूतावच्छेदकता-निरूपितावच्छेदकतावच्छेद्यतावद् अभेदसम्बन्धावच्छिन्न-प्रकारता-निरूपित-विशेष्यतावच्छेदकतात्वावच्छिन्न-प्रतियोगिताक-पर्याप्त्यनुयोगिता-वच्छेदकत्व-सम्बन्धेन शाब्दबोधं प्रति स्वनिरूपितावच्छेदकतावच्छिन्न-प्रतियोगिताक-पर्याप्त्यनु-योगितावच्छेदकरूपभेदः कारणम्। ततश्च विधेयांशे अधिकावगाहिनो 'घटो नीलघट' इति बोधस्य घटत्वगतैकत्वे नीलघटत्वोभय-

गतद्वित्वभेदस्य सत्त्वात् न अनुपपत्तिः। न वा 'नीलघटो नीलघट' इति बोधस्य आपत्तिः। नीलघटत्वोभयगतद्वित्वे नीलघटत्वोभयगतद्वित्वभेदाभावात्।

ननु उद्देश्यांशे अधिकावगाहिनो 'नीलघटो घट' इति बोधस्य आपत्तिः। तत्र विशेष्यतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदके नीलघटत्वोभयगतद्वित्वे प्रकारतावच्छेदकतात्वावच्छिन्न-प्रतियोगिताक-पर्याप्त्यनु-योगितावच्छेदक-घटत्वगतैकत्वभेदस्य सत्त्वात् इति चेत्? मैवम्। स्वनिरूपिताभेद-सम्बन्धावच्छिन्नविशेष्यतावच्छेदकतासम्बन्धेन शाब्दबोधं प्रति स्वविशिष्टो भेदः कारणम्। वैशिष्ट्यं स्वावच्छेदकतात्वावच्छिन्नप्रतियोगिताक-पर्याप्त्यनुयोगिता-वच्छेदकधर्मावच्छिन्नप्रतियोगिताकत्व-स्वनिरूपितविशेष्यतावच्छेदकतात्वावच्छिन्नप्रति योगिताक-पर्याप्त्यनुयोगितावच्छेदकरूपावच्छिन्नानुयोगिताकत्व-उभयसम्बन्धेन। ततश्च घटत्वगतैकत्वावच्छेदेन नीलघटत्वोभयगत-द्वित्वावच्छिन्नप्रतियोगिताक-भेदस्य सत्त्वात्। नील-घटत्वोभयगत-द्वित्वावच्छेदेन नीलघटत्वोभयगत-द्वित्वावच्छिन्न-प्रतियोगिताक-भेदस्य घटत्वगतैकत्वावच्छिन्नप्रतियोगिताकभेदस्य च असत्त्वात्। विधेयांशे अधिकावगाहिनः शाब्दबोधस्य उपपत्तिः उभयांशे समानावगाहिनः उद्देश्यांशे अधिकावगाहिनश्च 'नीलघटो घट' इत्यस्य 'नीलघटो नीलघट' इत्यस्य च अनापत्तिः।

वस्तुतस्तु 'स घटः', 'घटः स' इत्यनयोः पूर्वोक्तयोः जातित्वाव-च्छिन्नावच्छेदकताक-प्रकारताविशेष्यताक-बोधयोः अनुपपत्तिः। तत्र एकत्वा-वच्छेदेन एकत्वावच्छिन्नप्रतियोगिताक-घटत्वभेदाभावात्। तदर्थं निरवच्छिन्ना-वच्छेदकतायाः प्रवेशे विधेयांशे अधिकावगाहिनोऽपि अनुपपत्तिः। तत्र निरव-च्छिन्नावच्छेदकतात्वावच्छिन्नप्रतियोगिताक-पर्याप्त्यनुयोगितावच्छेदकत्वस्य घटत्व-गतैकत्वे एवं सत्त्वात्।

इदमत्रावधेयम्। स्वनिरूपित-निरवच्छिन्नावच्छेदकतात्वावच्छिन्न-प्रतियोगिताक-पर्याप्त्यनुयोगितावच्छेदकत्व-सम्बन्धेन किञ्चिन्निष्ठ-अभेद-सम्बन्धावच्छिन्न-प्रकारतानिरूपित-उक्तनिरवच्छिन्न-अवच्छेदकताघटित-सम्बन्धेन किञ्चिन्निष्ठविशेष्यता तदवच्छेदकतासम्बन्धः कार्यतावच्छेदको वक्तव्यः। कारणञ्च पूर्वोक्त एव। ततश्च न दोष इति। यदि च प्रकारदलम् एव उद्देश्यं विशेष्यदलं च विधेयं विधेयता-उद्देश्यतयोः प्रकारता-विशेष्यत्व-नियतत्वासिद्धेः तर्हि अधिकावगाहिविशेष्यकस्यापि शाब्दबोधस्य इष्टव्यतया कार्यकारणभावे प्रकारताविशेष्यतास्थाने विधेयता-उद्देश्यते निवेशनीये। विधेयतावच्छेदकता-उद्देश्यतावच्छेदकते समानसम्बन्धावच्छिन्ने ग्राह्ये। तेन कालिकसम्बन्धेन घटत्वविशिष्टपर-तच्छब्दघटितात् 'स घट' इति वाक्यात् न शाब्दबोधापत्तिः इति दिक्।

**VV-J.5.3.2:** निरवच्छिन्न-घटत्वादिनिष्ठ-अवच्छेदकताक-अभेदसम्बन्धावच्छिन्न-प्रकारताक-विशेष्यतानिरूपित-निरवच्छिन्नावच्छेदकता-सम्बन्धेन शाब्दबोधं प्रत्येव घटत्वादिभेदस्य कारणत्वोक्तेः जातित्वावच्छिन्न-घटत्व- निष्ठावच्छेदकताक-अभेदसम्बन्धावच्छिन्न-प्रकारतानिरूपित-विशेष्यता-निरूपित-जातित्वावच्छिन्न-घटत्व-निष्ठावच्छेदकताक-शाब्दबोधस्य प्राप्ताम् आपत्तिं परिहर्त्तुम् आह - **'स स' इत्यादिवाक्यादिति**। निरवच्छिन्नप्रकारतावच्छेदकत्व-विशेष्यतावच्छेदकत्वक-अभेदान्वबोधे यथा प्रकारतावच्छेदक-विशेष्यतावच्छेदकयोः भेदापेक्षा, तथा अवच्छिन्नतादृशावच्छेदकताकाभेदान्वये प्रकारतावच्छेदकतावच्छेदक-विशेष्यतावच्छेदकतावच्छेदकयोः भेदस्य कारणत्वमिति भावः।

**VV-J. 5.3.3:** एवमपि प्रकारतानिरूपित-संयोगनिष्ठावच्छेदकतावच्छेदक-दण्डस्य विशेष्यतावच्छेदकतावच्छेदक-दण्डाद् भेदस्य सत्त्वेन 'दण्डवान् दण्डवान्' इति वाक्यात् प्राप्तां शाब्दापत्तिं परिहर्त्तुम् आह - **दण्डवान् दण्डवानित्यादि**। प्रकारतावच्छेदकतावच्छेदकतावच्छेदके विशेष्यतावच्छेदकतावच्छेदकतावच्छेदके भेदस्यापि हेतुत्वं बोध्यम्। प्रमेयत्वेन दण्डत्वस्य यत्र प्रकारतावच्छेदकतावच्छेदकतावच्छेदकत्वं तादृशः दण्डत्वनिष्ठनिरवच्छिन्नस्य विशेष्यतानिरूपित-संयोगत्वावच्छिन्नावच्छेदकता-निरूपित-दण्डनिष्ठावच्छेदकता-निरूपित-दण्डत्वनिष्ठस्य अवच्छेदकत्वस्य निरूपकः शाब्दबोधः 'प्रमेयवद्वान् दण्डवान्' इति वाक्यात् न स्यात्। दण्डत्वे दण्डत्वभेदाभावात्। अत आह - **अवच्छेदकतायां निरवच्छिन्नत्वम्** इत्यादि। प्रथमावच्छेदकतायां चरमावच्छेदकतायाञ्च इत्यर्थः।

**VV-J. 5.4.1-4:** अनेककार्यकारणभावकल्पनायां गौरवात् आह - **वस्तुतस्त्विति**। घटत्वभिन्नवृत्तिविषयतासम्बन्धेन ज्ञानं घटत्वभिन्ने एव भवति। तत्र घटत्वभेदोऽपि अस्तीति घटत्वभेदस्य तादृशसम्बन्धेन ज्ञानं प्रति कारणत्वं न अनुपपन्नम्। एवं पटत्वान्यवृत्ति-विषयतासम्बन्धेन ज्ञानं प्रति पटत्वभेदः कारणम्। तच्च ज्ञानं घटत्वावच्छिन्न-अभेदसम्बन्धावच्छिन्न-प्रकारता-निरूपित-विशेष्यतावच्छेदकतासम्बन्धेन शाब्दबोधं प्रति व्यापकम्। यतो 'घटो द्रव्यम्' इत्यादिवाक्यात् द्रव्यत्वादौ घटत्वभिन्ने एव स बोधो भवति। तत्र घटत्वान्यवृत्तिविषयतासम्बन्धेन ज्ञानं वर्त्तते एव। ततश्च व्याप्यकार्ये व्यापकस्य कारणम् अपेक्ष्यते इति नियमात् तादृशशाब्दबोधे घटत्वभेदस्य अपेक्षणात् न 'घटो घट' इति वाक्याद् घटत्वे स बोधः। न च 'जातिमान् घटः' इति वाक्यात् घटत्वेऽपि जातित्वेन घटत्वनिष्ठावच्छेदकताक-अभेदसम्बन्धावच्छिन्न-प्रकारतानिरूपित-विशेष्यतावच्छेदकता-सम्बन्धेन शाब्दबोधोत्पत्तेः न

घटत्वावच्छिन्न-प्रकारताक-उक्तशाब्दबोधो घटत्वान्यवृत्ति-विषयता-सम्बन्धेन ज्ञानव्याप्यमिति वाच्यम्। व्याप्यशरीरे निरवच्छिन्नावच्छेदकतायाः प्रवेशे न अदोषात्। एवं व्याप्यशरीरे घटत्वेतरधर्मानवच्छिन्नत्वमपि प्रकारतायां देयम्। तेन 'नीलघटो घट' इति वाक्यात् घटत्वे जायमानशाब्दबोधीय-घटत्वनिष्ठावच्छेदकतायां निरवच्छिन्नत्वेऽपि न क्षतिः। प्रकारतायां घटत्वेतर नीलत्वेन अवच्छेदात्। एवमेव जातित्वावच्छिन्नावच्छेदकताक-प्रकारतानिरूपितविशेष्यतावच्छेदकतावच्छेदकतासम्बन्धेन शाब्दबोधः जातित्वाभिन्ने एव भवति। एवं दण्डत्वावच्छिन्न-दण्डनिष्ठावच्छेदकतानिरूपित-संयोगनिष्ठावच्छेदकतानिरूपित-अभेदसम्बन्धावच्छिन्न-प्रकारतानिरूपित-विशेष्यता-वच्छेदकतावच्छेदकतावच्छेदकतासम्बन्धेन दण्डत्वभिन्ने एव शाब्दबोधो भवतीति। तयोरपि व्यापके जातित्वान्यवृत्ति-विषयतासम्बन्धेन दण्डत्वान्यवृत्तिविषयता-सम्बन्धेन वर्त्तमाने ज्ञाने इति तयोः अपि शाब्दबोधयोः जातित्वभेद-दण्डत्वभेदयोः कारणत्वात् जातित्वे दण्डत्वे च न तौ शाब्दबोधौ 'जातिमान् जातिमान्', 'दण्डवान् दण्डवान्' इति वाक्याभ्यामिति बोध्यम्। एवमेव 'एकः', 'द्वौ', 'घटो न घटः' इत्यतोऽपि एकत्वावच्छिन्ने एकत्वस्य, द्वित्वावच्छिन्ने द्वित्वस्य, घटत्वावच्छिन्ने घटभेदस्य च अन्वयविषयकौ अनुमिति-शाब्दबोधौ न। यतः एकत्वत्वावच्छिन्न-प्रकारता-निरूपित-विशेष्यतावच्छेदकतावच्छेदकतासम्बन्धेन एवं द्वित्वत्वावच्छिन्न-प्रकारताघटितोक्तसम्बन्धेन घटत्वावच्छिन्नप्रतियोगिताक-भेदत्वावच्छिन्न-प्रति-योगिताक-अभावानुयोगितावच्छेदकता-सम्बन्धेन शाब्दबोधः अनुमितिः वा एकत्वत्व-द्वित्वत्वघटितेभ्यो भिन्नेषु एव भवति। तयोरपि एकत्वत्वाद्यन्य-वृत्ति-विषतासम्बन्धेन ज्ञानं व्यापकमिति। तत्कारणस्य एकत्वत्वादिभेदस्य तत्र अपेक्षित्वेन तदभावादेव एकत्वत्वादिषु तयोरभावोपपत्तौ एकत्वत्वादि- भेदस्य पृथक् कारणत्वाकल्पनेन लाघवम्। न च नञोऽभावे येन सम्बन्धेन यद्धर्मावच्छेदेन यद्वत्ता यद्वाक्येन प्रतीयते नञ्घटितेन तेन वाक्येन तत्सम्बन्धावच्छिन्न-तन्निष्ठप्रतियोगिताकाभावः तद्धर्मावच्छेदेन प्रत्याय्यते इति नियमात् 'घटो घटः' इति वाक्यात् स्वरूपसम्बन्धेन घटाभेदवत्ताया घटत्वावच्छेदन अप्रतीतेः तदवच्छेदेन घटाभेदाभावप्रतीत्यप्रसक्तेः कथं तत्कारणकल्पनं लाघवमिति वाच्यम्। येन सम्बन्धेन यद्धर्मावच्छेदेन यद्वत्ता प्रतीतौ साकाङ्क्षं यद्वाक्यं तेन वाक्येन नञ्घटितेन तेन सम्बन्धेन तदवच्छेदेन तदभावः प्रत्याय्यत इत्येव नियमेन 'घटो घटः' इति वाक्यस्य तादृशबोधाजनकत्वेऽपि तादृशबोधे साकाङ्क्षत्वेन अदोषात्। नीलघटत्वावच्छिन्न-अभेदसम्बन्धावच्छिन्नप्रकारतानिरूपित-विशेष्यतावच्छेदकता-सम्बन्धेन शाब्दबोधस्य जातित्वावच्छिन्न-घटत्वनिष्ठावच्छेदकताक-अभेदसम्बन्धा-

वच्छिन्नप्रकारतानिरूपित-विशेष्यतावच्छेदकता-सम्बन्धेन शाब्दबोधस्य च 'नीलघटो घटः', 'स घटः' इत्यादिवाक्यात् घटत्वेऽपि उदयेन घटत्वान्य-वृत्तिविषयता-सम्बन्धेन ज्ञानं प्रति अव्याप्यत्वेन तत्र घटत्वभेद-अनपेक्षणात् तयोः तत्र उत्पत्तौ न बाधकमिति दिक्।

न च उक्तबोधौ यदि न व्याप्यौ तर्हि 'नीलघटो नीलघटः', 'स स' इति वाक्याभ्यां घटत्वे तयोः आपत्तिः। तत्र घटत्वभेदानपेक्षणादिति वाच्यम्। नीलत्वानवच्छिन्नविशेष्यतानिरूपित-जातित्वावच्छिन्नावच्छेदकता-सम्बन्धेन नील-घटत्वावच्छिन्न-प्रकारताकस्य जातित्वावच्छिन्न-घटत्वनिष्ठावच्छेदकताक-शाब्दबोधस्य च तत्र असम्भवात् विशेष्यदले नीलत्वस्य जातित्वस्य च उपस्थित्या भानस्य आवश्यकत्वात्। कथञ्चित् तयोः अभाने शाब्दबोधस्य इष्टत्वात्। न च 'नीलघटो', 'नीलं द्रव्यम्'' इत्यादौ द्रव्यत्वे प्रसिद्धस्य नीलघटत्वावच्छिन्न-प्रकारतानिरूपित-नीलत्वावच्छिन्न-विशेष्यतानिरूपितानवच्छिन्नावच्छेदकता-सम्बन्धेन शाब्दबोधस्य घटत्वत्वेन, घटत्वोपस्थापकेन जातित्वेन, घटत्वोपस्थापकेन च तत्पदेन घटिते 'स स' इत्यादौ च प्रसिद्धस्य शाब्दबोधस्य घटत्वे जातित्वे च 'नीलघटो नीलघटः', 'स स' इत्यादौ शाब्दबोधापत्तिरिति वाच्यम्। तयोरपि उक्तज्ञानव्याप्यत्वेन तादृशभेदापेक्षणात्। न च कालिकसम्बन्धेन घटत्वविशिष्टे समवायसम्बन्धेन घटत्वविशिष्टस्याभेदान्वयः अनुभवसिद्धः। तत्र घटत्वनिष्ठ-निरवच्छिन्नावच्छेदकताक-अभेदसम्बन्धावच्छिन्न-प्रकारता-निरूपित-विशेष्यता-वच्छेदकता-सम्बन्धेन शाब्दबोधस्य घटत्वेऽपि सत्त्वात् न घटत्वान्यवृत्तिविषयतासम्बन्धेन ज्ञानव्यापकः स बोध इति वाच्यम्। घटत्व-निष्ठ-निरवच्छिन्नावच्छेदकताविशिष्ट-अवच्छेदकता-सम्बन्धेन शाब्दबोधस्य व्याप्यत्वात्। वैशिष्ट्यं स्वनिरूपित-अवच्छेद्यतावद्-अभेदसम्बन्धावच्छिन्न-प्रकारतानिरूपित-विशेष्यतानिरूपितत्व-स्वावच्छेदक-सम्बन्धावच्छिन्नत्व-उभय-सम्बन्धेन। उद्देश्यस्य यत्र प्रकारता विधेयस्य विशेष्यता तत्र विशेष्यांशे अधिकावगाहि-शाब्दबोधस्य इष्टतया तत्र दोषवारणाय व्याप्यदले प्रकारता-विशेष्यतयोः स्थाने विधेयता-उद्देश्यतयोः प्रवेशः कार्यः।

*।। इति व्युत्पत्तिवादजयायाम् अभेदान्वयविवरणम् ।।*

श्रीः

# दीपिका

### श्रीगणेशाय नमः

निधाय हृदि विश्वेशं विधाय गुरुवन्दनम्।
तत्त्वालोकप्रकाशाय दीपिकेयं प्रकाश्यते।।

**VV-D. 1.1.1:** शाब्दबोधाकाङ्क्षाज्ञानयोः कार्यकारणभावज्ञानं व्युत्पत्तिः, तदनुकूलव्यापारो वादपदार्थः। यद्यपि ज्ञानानुकूलव्यापारो वादपदार्थः; 'तत्त्वबुभुत्सोः कथाया वाद'-पदार्थत्वात्, तथापि विशिष्टवाचक-पदानाम् इति न्यायेन अनुकूलव्यापार एव तदर्थ इति।

ननु ग्रन्थनामनिर्दिशेन **व्युत्पत्तिवादो** मया निरूप्यते इति प्रतिज्ञा लभ्यते। व्युत्पत्तिवादपदार्थश्च उक्तव्यापारः। तादृशव्यापारश्च **अभेदश्च प्रातिपदिकार्थे** (VV-2.1.1.) इत्यादि ग्रन्थेनैव। तदुपयोगितयैव **"स च क्वचिदभेदः क्वचिच्च तदतिरिक्त एव** (VV-1.2.1) इत्यादिग्रन्थ-सन्दर्भेण सम्बन्धद्वैविध्यमपि वक्तुम् उचितम्। परन्तु **शाब्दबोधे च** इत्यादिग्रन्थस्तु अर्थान्तरग्रस्त एव, अप्रतिज्ञातत्वादिति चेत्? न। अवान्तर-धर्मप्रकारक- जिज्ञासां प्रति सामान्यधर्म-प्रकारकज्ञानस्य कारणत्वात्। तदर्थं **शाब्दबोधे च** इत्यादिग्रन्थः। सामान्यधर्मश्च एकपदार्थानुयोगिक-अपरपदार्थप्रतियोगिक-आकाङ्क्षा-प्रयोज्यत्वरूपः।

वस्तुतस्तु 'वृत्त्युपस्थिता एव पदार्थाः शाब्दबोधे भासन्ते' इति नियमेन सम्बन्धांशेऽपि शक्तिस्वीकर्तृणाम् अन्विताभिधानवादिनां भट्टानां मतं दूषितं भट्टाचार्येण। तत्रेदम् आशङ्कितम्। ननु वृत्त्यनुपस्थापितस्यापि पदार्थद्वय-संसर्गस्य शाब्दबोध-विषयत्वोपगमे 'द्रव्यं घट' इत्यादौ द्रव्यघटाद्यो-रभेद-बोधस्येव संयोग-समवाय-कालिकानाम् अबाधित-यावत् संसर्गाणां भाना-पत्तिः। एवं 'चैत्रः पचति' इत्यादौ कालिकादेरपि भानसम्भवेन पाकानुकूल-कृत्यादि-शून्येऽपि चैत्रादौ तादृशप्रयोगापत्तिः इत्याशङ्का समाधानपरोऽयं ग्रन्थः **शाब्दबोधे चेति**। **चस्त्वर्थे**, संसर्गपदोत्तरं योजनीयः। तथा च एकपदार्थे अपरपदार्थस्य संसर्गस्तु इत्यर्थः। न च शाब्दबोधे च ससंर्गः संसर्गमर्यादया भासते इत्येव कथं नोक्तम् इति वाच्यम्। वृत्त्युपस्थाप्य समवायादिसंसर्गस्यापि

सङ्ग्रहापत्तेः। तथा सति तदन्वयबुद्धेः आकाङ्क्षाज्ञान-व्यभिचारितया आकाङ्क्षाज्ञान-विशेष-कार्यकारणभाव-बोधकस्य अभेदान्वयबोधश्च इत्यादेः असङ्गतिः स्यात्। अतो वृत्तिविषयक-सकल-संसर्गासङ्ग्राहकम् आकाङ्क्षा-भास्य-सकलसंसर्ग-सङ्ग्राहकं परिचायकमाह **शाब्दबोधे** चेत्यादिना। शाब्दबोधे इत्यत्र निरूपितत्वं सप्तम्यर्थः। तस्य भासधात्वर्थ-विषयतायाम् अन्वयः। **शाब्दबोधत्वं** च एकपदार्थेऽपरपदार्थ-संसर्गावगाहिबुद्धित्वम्। **एकपदार्थे** इत्यत्र सप्तम्यर्थोऽनुयोगित्वम्, तत्र प्रकृत्यर्थस्य आधेयतयाऽन्वयः। अनुयोगित्वस्य च प्रथमान्तार्थे संसर्गे निरूपकतया अन्वयः। एवम् **अपरपदार्थस्य** इति षष्ठ्यर्थः प्रतियोगित्वम्। अन्वयः पूर्ववत्। **संसर्गमर्यादा** नाम आकाङ्क्षा। संसर्गस्य मर्यादा 'भानं' यत इति व्युत्पत्तेः। प्रयोज्यत्वं तृतीयार्थः। तस्य भासधात्वर्थ-विषयतायाम् अन्वयः। तस्याश्च आख्यातार्थाश्रयत्वे। तस्य प्रथमान्तार्थे संसर्गेऽन्वयः।

तथा च एकपदार्थ-निष्ठानुयोगिता-निरूपकः अपरपदार्थ-निष्ठ-प्रतियोगिता-निरूपकः संसर्गः आकाङ्क्षाप्रयोज्य-संसर्गत्वाभिन्न-शाब्दबोध-निरूपित-विषयतावानिति बोधः। एवं च एकपदार्थानुयोगिक-अपरपदार्थ-प्रतियोगिक-संसर्गत्व-व्यापकत्वम् 'असतिबाधके' इति न्यायेन। यथा आकाङ्क्षा-प्रयोज्य-सांसर्गिक-विषयतायां लभ्यते तथा विनिगमनाविरहेण एकपदार्थानु-योगिक-अपरपदार्थप्रतियोगिक-संसर्गत्वे। आकाङ्क्षाप्रयोज्य-सांसर्गिक-विषयता व्याप्यत्वलाभात् एकपदार्थानुयोगिक-अपरपदार्थ-प्रतियोगिक-संसर्गो न वृत्तिभास्य इति फलितम्।

अत्रेदं बोध्यम्। यत्र एकत्व-अविवक्षायां 'घटः' इति प्रथमान्त-घटपदाद् घटोपस्थितिः, प्रमाणान्तराद् अस्तित्वोपस्थितिः, विनैव आकाङ्क्षा-ज्ञानम् 'अस्तितावान् घट' इति शाब्दबोधो भट्टसम्मतः।

पश्यतः श्वेतिमारूपं ह्रेषाशब्दं च शृण्वतः।<br>
खुरविक्षेपशब्दं च श्वेतोऽश्वो धावतीति धीः।

इति भट्टोक्तेः। श्वैत्यादिज्ञानस्य प्रत्यक्षजन्यत्वेऽपि विशिष्टज्ञानस्य शाब्दबोधे अन्तर्भावनीयतया आकाङ्क्षाज्ञानस्य व्यतिरेक-व्यभिचारात् तत्र कारणमिति मीमांसकमत-समाधानाय शाब्दबोधत्वावच्छेदेन एकपदार्थानुयोगिक-अपर-पदार्थ-प्रतियोगिक-संसर्गस्य आकाङ्क्षाप्रयोज्य-विषयत्वबोधनाय **शाब्दबोधे** चेत्यादि-ग्रन्थः। उक्तज्ञानद्वये च अलौकिकप्रत्यक्षत्व-स्वीकारात् न व्यभिचारः। एतेन प्रत्यक्षविषयीभूत-संसर्गस्यापि उद्देश्यतावच्छेदकाक्रान्ततया तत्र विधेयाभावेन व्याप्य-व्यापक-भाव-विरहेऽपि न क्षतिः। उक्तग्रन्थस्य मीमांसकमत-निरास-प्रयोजकत्वात्।

अथ वा सप्तम्यन्तार्थ-शाब्दबोध-निरूपितत्वस्य उद्देश्यतावच्छेदकीभूत-तादृशसंसर्गत्वे अन्वयः। तथा च शाब्दबोध-निरूपिता या एकपदार्थानुयोगिक-अपरपदार्थ-प्रतियोगिक-संसर्गनिष्ठ-संसर्गता तदाश्रयः तादृशविषयतावानित्यर्थे तात्पर्यात् न व्यापकत्व-हानिरिति ध्येयम्।

शक्तिभास्य-संसर्गासंग्रहार्थं **एकत्वमपरत्वं** चेत्युक्तम्। तथा च शक्ति-भास्य-संसर्गस्य न संग्रहः। एकपदार्थ-प्रतियोगिकत्व-एकभिन्न-पदार्थानुयोगिक-त्वयोः अभावात्।

अथैकत्वापरत्वयोः यदि पदेऽन्वयः तदा एकं यत्पदं तदर्थानुयोगिकः, एकभिन्नं यत्पदं तदर्थप्रतियोगिक इत्यर्थः। न च एकत्वस्य केवलान्वयितया एकभेदाप्रसिद्धिः। द्वित्वादिना तद्भेदस्य प्रसिद्धावपि स्वस्मिन्नपि तद्भेदसत्वेन शक्तिभास्य-संसर्ग-संग्रहापत्तिः। प्रातिस्विकरूपेण निवेशे तु अननुगम इति वाच्यम्। पदविशिष्ट-संसर्गतानिवेशे दोषाभावात्। वैशिष्ट्यं च स्वप्रयोज्य-विशेष्यताकत्व-स्वभिन्नपदप्रयोज्य-प्रकारताकत्व-उभयसम्बन्धेन। संसर्गतायां पद-वैशिष्ट्य-निवेशेन एकस्यैव समवायस्य शक्तिभास्यतया आकाङ्क्षाभास्यतया च न वृत्तिभास्ये आकाङ्क्षा-प्रयोज्यत्वापत्तिः। एकत्वप्रकारता-निरूपित-घटविशेष्यताक-समवायनिष्ठ-संसर्गतायाः पदविशिष्टत्वेऽपि घटत्वप्रकारता-निरूपित-घट-विशेष्यताक-समवायनिष्ठ-संसर्गतायाः स्वभिन्नपदप्रयोज्य-प्रकारताकत्वाभावेन पदविशिष्टत्वाभावाद् इति चेत् ? न। आख्यातार्थकालकृत्योः आकाङ्क्षाभास्यस्य अवच्छिन्नत्व-संसर्गस्य संग्रहो न स्याद्, आख्यातस्य ऐक्यात्। न च आख्यातेन कालकृत्युभयबोधने 'सकृदुच्चरित' इति व्युत्पत्तिविरोध इति वाच्यम्। सकृदु-च्चरित-पदस्य अनेकशक्ति-विषयार्थाबोधकत्वे तात्पर्यात्। वस्तुतः तादृश-व्युत्पत्तौ मानाभावः। सकृदुच्चरितादपि उभयबोधस्य **मणिकारादि**सम्मतत्वात्। अत एव तात्पर्यसत्वे सकृदुच्चरितादपि शब्दादुभयबोधस्य इष्टत्वादिति **मणिकारेण** उक्तम् इत्यन्यत्र विस्तरः।

न च एकत्वापरत्वयोः पदार्थ एवान्वयोऽस्तु। तथा च एकपदार्था-नुयोगिकः एकभिन्नो यः पदार्थः, तत्प्रतियोगिक इत्यर्थः। पदार्थविशिष्टः संसर्गः इत्यनुगमः। वैशिष्ट्यं च स्वनिष्ठविशेष्यताकत्व-स्वभिन्नपदार्थनिष्ठ-प्रकारताकत्व-उभयसम्बन्धेन। आख्यातस्थले च पदार्थद्वैविध्यात् तत्संसर्गस्य न असंग्रह इति वाच्यम्। 'नीलो घटः' इत्यादौ आकाङ्क्षाभास्यस्य तादात्म्यस्य असंग्रहप्रसंगात्। तत्र पदार्थयोरैक्येन संसर्गानुयोगि-प्रतियोगिनोः अभेदात्।

न च एकत्वापरत्वयोः पदार्थतावच्छेदके एव अन्वयोऽस्तु। तथा सति एकं यत्पदार्थतावच्छेदकं तदवच्छिन्नानुयोगिकः, एकभिन्नं यत्पदार्थतावच्छेदकं

तदवच्छिन्नप्रतियोगिक इत्यर्थः। उक्तस्थले च घटत्व-नीलत्वयोः भेदेन तादात्म्यस्य संग्रहः। **अनुगमस्तु** पदार्थतावच्छेदकविशिष्टः संसर्ग इति। वैशिष्ट्यं च (१)स्वावच्छिन्न-विशेष्यताकत्व-(२)स्वभिन्न-धर्मावच्छिन्न-प्रकारताकत्व-उभय-संबन्धेन इति वाच्यम्। एवमपि 'संपन्नो व्रीहिः' इत्यादौ व्रीहित्वानुयोगिक-एकत्वप्रतियोगिक-संसर्गस्य स्वरूपसम्बन्ध-विशेषस्य संग्रहो न स्यात्। व्रीहित्वस्य स्वरूपतो भानेन पदार्थतावच्छेदकानवच्छिन्नत्वात्। न च व्रीहित्वे अन्वयपक्षो न सिद्धान्तः। **अन्वयितावच्छेदकरूपेण** अन्वयिनो 'व्रीहित्वस्य' **अनुपस्थितेः** (VV-2.2.8) इत्यग्रे व्यक्तीभविष्यति इति वाच्यम्। 'चैत्रस्य गुरुकुलम्' इत्यत्र पदार्थतावच्छेदके गुरुत्वे षष्ठ्यर्थनिरूपितत्वस्य अन्वयः सर्वसम्मतः। तस्य असंग्रहप्रसंगात्। चैत्रनिरूपित-गुरुत्ववत्कुलमिति बोधे गुरुत्वस्य गुरुत्वत्वेन भानेऽपि गुरुत्वत्वं न पदार्थतावच्छेदकम्। अपि तु पदार्थतावच्छेदकतावच्छेदकमिति गुरुत्वत्वावच्छिन्न-विशेष्यतायाः पदार्थतावच्छेदकानवच्छिन्नत्वाद् इति। न च साक्षात्-परम्परा-साधारण-अवच्छेदकता-निवेशे न उक्तदोषः। तथा च धर्मविशिष्ट-संसर्ग इत्यर्थे तात्पर्यम् इति वाच्यम्। तथापि लोमत्व-लाङ्गूलत्वयोरपि पशुपदार्थतावच्छेदकतया तदवच्छिन्नयोः संसर्गस्य संयोगस्य वृत्तिभास्यस्य संग्रहप्रसंगात्।

**अयं भावः**। 'चैत्रस्य गुरुकुलम्' इत्यत्र निरूपितत्वं षष्ठ्यर्थः। तस्य आश्रयता-सम्बन्धेन गुरुत्वेऽन्वयः। 'पदार्थः पदार्थेनान्वेतीति' व्युत्पत्ति-विरोधस्तु 'संपन्नो व्रीहिः' इत्यादाविव यत्पदार्थस्य पदार्थतावच्छेदकेन सहान्वयः प्रामाणिकः तत्पदार्थभिन्नत्वं निवेश्य परिहरणीयः। यदि च षष्ठ्यर्थ-निरूपितत्वस्य स्वाश्रय-गुरुत्व-सम्बन्धेन गुरौ एव अन्वयः स्वीक्रियते तदा 'घटो नास्ति' इत्यादौ स्वरूपतो भासमानघटत्वस्य अवच्छिन्न-प्रतियोगिताकत्व-सम्बन्धेन अभावे अन्वयाभ्युपगमात् तत्संसर्गताया असंग्रहापत्तेः। उपस्थितीय-विशेष्यता-विशिष्टः संसर्ग इत्यर्थे तात्पर्यात्। वैशिष्ट्यं च (१)स्वप्रयोज्य-विशेष्यता-निरूपकत्व-(२)स्वनिरूपितत्वा-भाववदुपस्थितीयविशेष्यता-प्रयोज्यप्रकारतानिरूपकत्व-उभयसम्बन्धेन। यथा 'नीलो घट' इत्यादौ उपस्थितीय-घटनिष्ठविशेष्यता-प्रयोज्या या शाब्दबोधीय-घटनिष्ठ-विशेष्यता तन्निरूपकत्वस्य स्वपदग्राह्य-उपस्थितीय-घटविशेष्यता-निरूपितत्व-अभाववती या उपस्थितीय-नीलनिष्ठ-विशेष्यता तत्प्रयोज्य-शाब्दबोधीय-नीलनिष्ठ-प्रकारता-निरूपकत्वस्य च तादात्म्यनिष्ठ-संसर्गतायां सत्त्वात् तादात्म्य-संग्रहः। वृत्तिभास्य-संसर्गस्य च न संग्रहः। उपस्थितीय-घटनिष्ठ-विशेष्यता-प्रयोज्य-शाब्दबोधीय-घटनिष्ठ-विशेष्यता-निरूपकत्वस्य समवायनिष्ठ-संसर्गतायां सत्वेऽपि उपस्थितीयघटत्वनिष्ठ-प्रकारतायां उपस्थितीय-घटनिष्ठ-विशेष्यता-निरूपितत्व-अभावविरहेण द्वितीय-सम्बन्धाभावात्।

ननु 'संयोगेन अभावो नास्ति' इति वाक्यजन्यबोधे नञर्थाभावे अभावत्वप्रतियोगिकस्य अवच्छिन्नप्रतियोगिताकत्व-संसर्गस्य आकाङ्क्षाभास्यस्य संग्रहानुपपत्तिः। उपस्थितीय-नञर्थ-अभावनिष्ठ-विशेष्यता-प्रयोज्य-शाब्दबोधीय-अभावनिष्ठ-विशेष्यता-निरूपकत्वस्य उक्तसंसर्गतायां सत्त्वेऽपि अभावपदजन्योपस्थितीया अभावत्वनिष्ठ-प्रकारतायां स्वपदग्राह्य-उपस्थितीय-अभावनिष्ठ-विशेष्यता-निरूपितत्व-अभावविरहात्। नञ्पद-अभावपदजन्योपस्थित्योः समानाकारत्वेन तदीयविषयतयोः निरूप्यनिरूपकभावादिति चेत्? न। स्वप्रयोजकवृत्तिज्ञानीय-विषयत्वानिरूपित-वृत्तिज्ञानीयविषयता-प्रयोज्योपस्थितीयविषयताप्रयोज्य-प्रकारतानिरूपकत्वस्य द्वितीयसम्बन्धत्वात्। अभावपदवृत्तिज्ञानं च अभावपद-जन्य-बोधविषयत्व-प्रकारतानिरूपित-विशेष्यतावान् अभाव इत्याकारकम्। तथा च नञ्पद-अभावपद-वृत्तिज्ञानयोः असमानाकारत्वात् तदीयविषयतयोः न निरूप्य-निरूपक-भावः। एवं च 'संयोगेन अभावो नास्ति' इत्यादौ अवच्छिन्न-प्रतियोगिताकत्व-संसर्गे स्वपदग्राह्य-उपस्थितीय-विशेष्यता-प्रयोज्य-विशेष्यता-निरूपकत्वस्य स्वपदग्राह्य-उपस्थितीय-विशेष्यता-प्रयोजक-नञ्पदवृत्तिज्ञानीय-विषयतानिरूपितत्वाभाववती अभावपदवृत्तिज्ञानीय-विषयता। 'तस्याः शाब्दबोधीयाभावत्व-निष्ठप्रकारता-प्रयोजकत्वात्' तत्प्रयोज्य-उपस्थितीय-विषयता-प्रयोज्य-प्रकारता-निरूपकत्वस्य च सत्त्वात् तत्संग्रहः। परन्तु अभावद्वयगर्भ-वाक्यस्थले 'संयोगेन अभावाभाव' इत्यादौ वृत्तिज्ञानयोः समानाकारकत्वात् तद्विषयतयोः निरूप्यनिरूपकभावाद् अवच्छिन्नप्रतियोगिताकत्व-संसर्गस्य असंग्रहाद् उक्तानुगम उपेक्षणीयः। एवं वृत्तिज्ञानीयविषयत्वानिरूपित-विषयताप्रयोज्यस्य संसर्गत्वे लाघवाद् वृत्तिविषयः संसर्ग आकाङ्क्षाभास्य इत्येव वक्तुम् उचितम्।

अत्रोच्यते। पदार्थान्तरत्वव्यवहारो हि पदभेदप्रयुक्तः वृत्तिभेदप्रयुक्तश्च। तदुभयसाधारणमेव अपरपदार्थत्वम् इह विवक्षितम्। एवं च संसर्गताविशिष्ट-संसर्गत्वम् अर्थः। वैशिष्ट्यं च (१)स्वतादात्म्य-(२)स्वनिरूपितप्रकारताविशिष्ट-विशेष्यताकत्वोभयसम्बन्धेन। विशेष्यतायां प्रकारतावैशिष्ट्यं च (१)स्वप्रयोजक-पद-भिन्नपदप्रयोज्यत्व-(२)स्वप्रयोजक-वृत्तिज्ञानीयविषयता-निरूपित-विषयत्वा-प्रयोज्यत्व-अन्यतरसम्बन्धेन। निरूप्यनिरूपकभावस्तु प्रकारताप्रयोजकपद-विषयत्वाव्यवहितोत्तरत्वावच्छिन्नविषयत्व-विशेष्यताप्रयोजक-पदविषयत्वानामेव। अस्ति-पदविषयत्वस्य तत्त्वेऽपि तत्प्रयोज्यत्वस्य घटनिष्ठविशेष्यतायाम् असत्त्वात् न संग्रहः।

नन्वेवमपि 'घटोऽस्ति' इत्यादौ घट-घटत्वयोः समवायस्य संग्रहापत्तिः। घटपदाव्यवहितोत्तर-अस्तित्वज्ञानमिव, अस्तिपदाव्यवहित-पूर्ववर्त्ति-

घटपदत्व-ज्ञानस्य कारणतया साक्षात्परम्परासाधारण-कारणतावच्छेदकत्वस्य वा अस्ति-विषयतायां सत्त्वात्। घटप्रकारताप्रयोजिका या आकाङ्क्षाज्ञानीय-अस्ति-विषयता, तन्निरूपिताव्यवहितपूर्वत्व-सांसर्गिकविषयता-निरूपिता घटपद-विषयताप्रयोज्यकत्वस्य घटविशेष्यतायां सत्त्वादिति चेत्? न। स्वप्रयोजक-विषयत्वे स्वप्रयोजकवृत्तिज्ञानीयविषयता-सामानाधिकरण्य-निवेशेन उक्तदोषा-भावात्। तथाहि उक्त-आकाङ्क्षाज्ञानीय-अस्ति 'तिबन्त-अस्-धातु'-विषयतायाः कारणतावच्छेदकतायां घटत्वप्रकारता-प्रयोजकत्वेऽपि घटत्वप्रकारता-प्रयोजकी-भूत-वृत्तिज्ञानीय-घटविषयता-सामानाधिकरण्य-विरहादिति ध्येयम्। न च एवम् अपि घटत्वप्रकारता-प्रयोजिका या आकाङ्क्षाज्ञानीया घटपदविषयता तन्निरूपित-'अव्यवहितोत्तरत्व'-सांसर्गिक-विषयता-निरूपित-अस्ति-विषयता-प्रयोज्यत्वस्य घटविशेष्यतायां सत्त्वात् समवाय-संग्रहापत्तिरिति वाच्यम्। स्वप्रयोज्यत्व-पदेन स्वसमानाधिकरण-वृत्तिज्ञानीय-विषयता-प्रयोज्यत्वस्य विवक्षणात्। अस्ति-विषयता-प्रयोज्यत्वस्य घटविशेष्यतायां सत्त्वेऽपि अस्तिपद-विषयता-समानाधिकरण-वृत्तिज्ञानीय-विषयता-प्रयोज्यत्वाभावात्।

तथा च स्वविशिष्टा या आकाङ्क्षाज्ञानीय-पदनिष्ठविषयता तन्निरूपितसांसर्गिक-विषयतानिरूपित-पदनिष्ठ-विषयता-समानाधिकरणवृत्ति-ज्ञानीय-विषयता-प्रयोज्यत्वं फलितम्। स्ववैशिष्ट्यं च (१)स्वप्रयोजकत्व-(२)स्वप्रयोजकवृत्तिज्ञानीयविषयता-सामानाधिकरण्य-उभयसम्बन्धेन।

**VV-D. 1.2.1: स च** = आकाङ्क्षाभास्य-सम्बन्धश्च। **क्वचित्** 'नीलो घटः' इत्यादौ। **अभेदः** = तादात्म्यम्। **यत्तु** अभेदो न संसर्गः, संसर्गो द्विष्ठ इत्यभियुक्तोक्तेः। **तदसत्**। संसर्गे द्विष्ठत्वं न पदार्थद्वयवृत्तित्वम्, किन्तु द्वित्वविशिष्टत्वम्। वैशिष्ट्यं च स्वसामानाधिकरण्य-स्वाश्रयसामानाधिकरण्य-अन्यतर-सम्बन्धेन। एवं विशिष्टबुद्धित्वहेतुक-अनुमानेनापि अभेदस्य संसर्गत्वं साधनीयम्। **क्वचिच्च**। 'घटम्' इत्यादौ। **तदतरिक्त एव**। अभेदातिरिक्त एव। **आधेयत्वादिः**। शाब्दबोधो हि द्विविधः - अभेदविषयको भेदविषयकश्च। भेदशब्दश्च अभेदान्यसम्बन्धेषु पारिभाषिकः। भेदसम्बन्धविशेषान् आह - **आधाराधेये**त्यादि। अत्र आधारश्च आधेयश्च प्रतियोगी च अनुयोगी च विषयश्च विषयी चेति द्वन्द्वः। तेषां भाव इति षष्ठीतत्पुरुषः। आदिपदात् जन्यजनकभाव-स्वरूप-समवाय-संयोगादिपरिग्रहः। तथा च आधारता आधेयता इत्यादीनां प्रत्येकस्य संसर्गत्वम्। ननु आधेयत्वादौ द्विष्ठत्वम् अनुपपन्नम्। निरूपकत्वस्य वृत्त्यनियामकत्वात्, संयोग-समवायादिकं विहाय आधारतात्वेन संसर्गस्य अदृष्टचरत्वात् चेति चेत्? सत्यम्। नवीनमते अनुयोगिनिष्ठ-धर्मस्यैव सम्बन्धत्वात्। प्राचीनमते आधारतानिरूपिताधेयत्वादिः संसर्गः। तन्मते

आधाराधेयभावः प्रतियोग्यनुयोगिभावः विषयविषयिभाव इत्यर्थः। तत्र वह्नित्वावच्छिन्न-प्रतियोगित्वस्य संसर्गत्वे वह्नित्वावच्छिन्नत्व-प्रतियोगित्वानां संसर्गत्वमिव आधारत्व-आधेयत्वयोः संसर्गत्वोपपत्तिरिति ध्येयम्।

**VV-D. 2.1.1:** कुत्राभेदः संसर्गमर्यादया भासते इति सामान्यतो नियमं दर्शयति **अभेद**श्चेति। अत्र प्रातिपदिकार्थे स्वसमानविभक्तिकेन स्वाव्यवहित-पूर्ववर्त्तिना च पदेनोपस्थापितस्यैव अभेदः संसर्गमर्यादया भासते इति योजना। **प्रातिपदिकार्थे** इत्यत्र सप्तम्यर्थो अनुयोगित्वम्। तत्र प्रकृत्यर्थस्य आधेयतया, तस्य च निरूपकत्वसम्बन्धेन अभेदे अन्वयः। **उपस्थापितस्ये**त्यत्र षष्ठ्यर्थः प्रतियोगित्वम्। तत्र प्रकृत्यर्थस्य आधेयतया, तस्य च निरूपकत्वसम्बन्धेन अभेदे अन्वयः। तथाच प्रातिपदिकविशिष्टोऽभेदः आकाङ्क्षाप्रयोज्यसांसर्गिकविषयतावान् इति बोधः। वैशिष्ट्यं च (१)स्वप्रयोज्य-विशेष्यताकत्व-(२)स्वविशिष्टपद-प्रयोज्य-प्रकारताकत्व-उभयसम्बन्धेन। पदे स्ववैशिष्ट्यं (१)स्वप्रकृतिकविभक्ति-सजातीय-विभक्तिकत्व-(२)स्वाव्यवहितपूर्ववर्त्तित्व-अन्यतरसंबन्धेन। प्रातिपदिकपदेन स्व-पञ्चकेन च विशेष्यवाचकपदग्रहणम्। उदाहरति - **यथे**ति। 'नीलो घटः' इत्यत्र घटे घटसमानविभक्तिक-नीलपदोपस्थापितस्य नीलस्य, 'नीलघटम्' इत्यत्र घटपदाव्यवहितपूर्ववर्त्ति-नीलपदोपस्थापितस्य नीलस्य च अभेदः संसर्गो भासते इत्यर्थः। **उपस्थापितस्यैवे**ति एवकारो भिन्नक्रमः। स्वसमान-विभक्तिकेन एव इत्यन्वयः। एवकारव्यवच्छेद्यं दर्शयति **नत्विति**। **विरुद्ध-विभक्तिमत्पदार्थस्ये**ति। विरुद्धविभक्तिकेन पदेन उपस्थापिस्य इत्यर्थः। अभेदः संसर्गतया भासते इति पूर्वेण अन्वयः। ननु विरोधः असामानाधिकरण्यम्। तच्च प्रकृते अव्यवहितपूर्वत्व-सम्बन्धेन विभक्तिमति अव्यवहित-पूर्वत्व-सम्बन्धेन अवृत्तित्वम्। न तु समवाय-घटितम्। शब्दात्मकविभक्तीनाम् असामानाधिकरण्यस्य असम्भवात्। एवं च 'नीलो घट' इत्यादौ विभक्त्योः भिन्नतया असामानाधिकरण्याद् अभेदान्वय-बोधानुपपत्तिरिति चेत् ? न। वि-शब्दो विरुद्धवचनः। विरुद्धेन रुद्ध इत्यर्थाद् विरुद्धधर्मवान् इत्यर्थः। विरोधप्रतियोगिधर्मश्च प्रथमात्वादिः। तथा च विशेष्य-वाचकपदोत्तरविभक्तिवृत्ति-प्रथमात्वादिधर्मविरुद्धधर्मवद्-विभक्तिमत्पदार्थस्य अभेदो न आकाङ्क्षाभास्य इति भावः।

ननु 'नीलस्य घट' इत्यादौ प्रयोज्यत्वं सप्तम्यर्थः। तस्य बोधेऽन्वयो न संभवति। 'नीलस्य घट' इत्यादिवाक्यजन्य-नीलघटाभेदान्वयबोध-अप्रसिद्धेरिति चेत्? न। तस्य अनुभवेऽन्वयात्। तथा च नीलघटाभेदान्वयबोधस्य 'नीलस्य घट' इत्यादिवाक्यप्रयोज्यत्व-प्रकारक-सर्वानुभव-विशेष्यत्वाभावादित्यर्थः। अनुभवश्च नीलघटाभेदबोधः। 'नीलस्य घट' इति वाक्यप्रयोज्य इत्याकारकः। तथा च न अप्रसिद्धिः।

**VV-D. 2.2.1: स्वसमानविभक्तिकेने**त्यत्र, स्वं = विशेष्यवाचकपदं, तेन समाना विभक्तिर्यस्येति विग्रहः। तेन विशेषणवाचकपदोत्तरविभक्ति-तुल्य-विभक्तिकत्वं विशेषणवाचकपदे लभ्यते। तच्च न सम्भवति। विभक्त्योर-तुल्यत्वाद्, आह - **स्वसमानविभक्तिकत्वं** चेति। **स्वप्रकृतिकविभक्ति-सजातीये**ति। स्वोत्तरविभक्तिवृत्ति-जातिमद्विभक्तिप्रकृतित्वम् इत्यर्थः। स्वं = विशेष्यवाचकपदम्। सुप्त्वादिजातिमादाय 'नीलस्य घट' इत्यादावभेदान्वय-आपत्तिवारणाय आह - **साजात्यं चेति।** तथा च स्वोत्तरविभक्तिवृत्तिः यो विभक्तिविभाजकः प्रथमात्वाद्यन्यतमो धर्मः तद्विभक्तिप्रकृतित्वमिति समुदितार्थे सुप्त्व-तिङ्त्वयोः विभक्तिविभाजकत्वात् सुप्त्वेन साजात्यमादाय 'नीलस्य घट' इत्यादौ अभेदबोध-तादवस्थ्यात्। किं च विभक्तित्वव्याप्यत्वे सति विभक्तित्व-व्याप्या-व्याप्यत्वरूपस्य विभक्तिविभाजकत्वस्य प्रथमात्वे असम्भवात् तस्य विभक्तित्व-व्याप्य-सुप्त्व-व्याप्यत्वात्। प्रथमात्वादिना इत्यस्य असंगत्यापत्तेश्च। अतो विभक्तिपद-सुप्-परम्। न च सुब्विभाजकधर्म-इत्येव कथं नोक्तम् इति वाच्यम्। कोऽसौ सुब्विभाजको धर्मः? इत्याकाङ्क्षानिवृत्तये **प्रथमात्वादिने**ति। प्रथमात्वा-दिना इत्येतावन्मात्रोक्तौ प्रथमोपस्थिततत्वेन साजात्यापत्तौ 'नीलस्य घट' इत्यादा-वपि अभेदबोधापत्तिः। अतो **विभक्ति-विभाजके**ति। वस्तुतः प्रथमात्वाद्यन्यतमधर्मेण साजात्योक्तौ न कोऽपि दोषः इति विभावनीयम्। सुब्विभाजकत्वं च सुप्त्वव्याप्यत्वे सति सुप्त्वव्याप्याव्याप्यत्वम्। विभक्तित्वस्य व्याप्यत्ववारणाय सत्यन्तम्। तच्च स्वसमानाधिकरणत्वे सति स्वसमानाधिकरणभेदप्रतियोगितावच्छेदकत्वम्। स्व-द्वयं सुप्त्वपरम्। विशेष्यदलोपादानात् सुप्त्वस्य न विभाजकत्वप्रसक्तिः। सत्यन्तो-पादानात् तिङ्त्वादिवारणम्। सुप्त्वादीनां विभाजकत्ववारणाय स्वव्याप्याव्याप्यत्व-दलम्। सुप्त्वव्याप्य-सुप्त्वाव्याप्यत्वस्यैव प्रथमात्वादौ सत्त्वात् स्वव्याप्याव्याप्यत्व-घटकप्राथमिकं व्याप्यत्वं न्यूनवृत्तित्वरूपं बोध्यम्। तच्च सामानाधिकरण्याविशेषितं ग्राह्यम्। एवं सुप्त्वव्याप्यप्रथमात्वादि-व्याप्यत्वस्यैव प्रथमात्वादौ सत्त्वात् तद्-वारणाय द्वितीय-'अव्याप्यत्वघटकं' व्याप्यत्वमपि न्यूनवृत्तित्वरूपं बोध्यम्। स्वव्याप्ये प्रथमात्वादिविशिष्टान्यत्वं विशेषणीयम्। वैशिष्ट्यं च स्वाश्रयवृत्तित्व-स्वानाश्रयवृत्तित्व-उभयसम्बन्धेन। तेन सुप्त्वव्याप्य-सु-अम्-आद्यन्यतरत्व-सुप्त्व-व्याप्यत्वस्य प्रथमात्वादौ सत्त्वेऽपि न क्षतिः।

तथा च स्वसमानाधिकरणत्वे सति स्वसमानाधिकरणभेद-प्रतियोगिता-वच्छेदकत्वे सति स्वन्यूनवृत्तिधर्मः। तदन्यूनवृत्तित्वम् = सुब्विभाजकत्वम्। स्वं = सुप्त्वम्। स्वन्यूनवृत्तिधर्मे प्रथमात्वादिविशिष्टान्यत्वं विशेषणीयम्। वैशिष्ट्यं च स्वाश्रयवृत्तित्व-स्वानाश्रयवृत्तित्व-उभयसम्बन्धेन।

सुप्त्वविशिष्टधर्मः सुब्विभाजकः। वैशिष्ट्यं च स्वविशिष्टत्व-स्वविशिष्टाव्याप्यत्व-स्वव्याप्याघटितत्व-एतत्-त्रितयसम्बन्धेन। प्रथम-स्ववैशिष्ट्यं च स्वव्याप्यत्व-स्वभिन्नत्व-उभयसम्बन्धेन। उदासीने घटत्वादौ सुब्विभाजकत्व-वारणाय स्वव्याप्यत्वनिवेशः। सुप्त्वस्यापि सुप्त्वव्याप्यत्वात् तद्दोषवारणाय स्वभिन्नत्वनिवेशः। सुत्वादौ विभाजकत्ववारणाय द्वितीय-सम्बन्धः। द्वितीय-स्ववैशिष्ट्यं च स्वव्याप्यत्व-स्वविशिष्टविशिष्टभिन्नत्व-उभयसंबन्धेन। स्ववैशिष्ट्यं च स्वव्याप्यत्व-स्वव्याप्याधिटतत्व-उभयसंबन्धेन। अन्यथा स्वव्याप्याव्याप्यत्व-निवेशे सुप्त्वव्याप्यं यत् सु-अम्-एतदन्यतरत्वादिकं प्रथमात्वादेः तद्व्याप्यत्वाद् विभाजकत्वानुपपत्तिः। एवं च तादृशान्यतरत्वव्याप्य-सुत्व-घटितत्वादन्यतरत्वादेः वारणम्। स्वविशिष्ट-वैशिष्ट्यं च स्वसामानाधिकरण्य-स्वाभावसामानाधिकरण्य-उभयसम्बन्धेन। तेन सुप्त्व-व्याप्य-सुट्त्व-आप्त्व-व्याप्यत्वेऽपि प्रथमात्वादेः विभाजकत्वानुपपत्तिः। सुप्त्वव्याप्य-तृतीयात्व-विशिष्टमेव आप्त्वं, न तु तद्भिन्नम् इति नानुपपत्तिरिति **जया**याम्। तद्गौरवभीरुभिः उपेक्षणीयम्।

**समानानुपूर्वीकत्वमिति। समाना** = एका **आनुपूर्वी** ययोः ते समानानु-पूर्वीके, तत्त्वम्। स्ववृत्ति-आनुपूर्वी-समानानुपूर्वीमत्त्वम्। स्वं = विशेष्यवाचक-पदोत्तर-विभक्तिः। विशेष्यवाचक-पदोत्तरविभक्तिवृत्ति-आनुपूर्वीमत्त्वं विशेषण-वाचक-पदोत्तरविभक्तिनिष्ठमिति यावत्। आनुपूर्वी च न तत्तद्-वर्णोतर-तत्तद्-वर्णत्वरूपा। तस्याः वर्णभेदेन भिन्नतया घटपदोत्तर-सु-विभक्तिवृत्ति-सकारोत्तर-उत्वरूपानुपूर्व्याः नीलपदोत्तर-सु-विभक्तौ असत्त्वात्। किन्तु आनुपूर्वीपदेन स्वाश्रयाव्यवहितोत्तरवृत्तित्वसम्बन्धेन सुत्वविशिष्टत्वमेव ग्राह्यम्। तच्च न भिन्नम्। न च तादृशानुपूर्वी परमवर्णे एव अस्तीति न तत्र विशेष्यवाचकपदप्रकृतिकत्वम्। न वा तदानुपूर्व्याश्रयविभक्तिप्रकृतित्वं विशेषणवाचकपदे इति वाच्यम्। विनि-गमना-विरहोत्तर-वर्णविशिष्टपूर्ववर्णत्वरूपानुपूर्व्याश्रयत्वेन पूर्ववर्णस्य ग्रहणात्। वैशिष्ट्यं च अव्यवहितपूर्वत्व-सम्बन्धेन।

ननु स-कारो विभक्तिरिति व्यवहारविरहेण प्रत्येकवर्णे विभक्तित्व-विरहाद् विशेष्यवाचकपदप्रकृतिक-विभक्तित्वेन तस्य ग्रहण-असम्भवः। न च विशेष्यवाचकपदोत्तर-विभक्ति-घटकमात्र-वृत्तयो यावदानुपूर्व्यः तावदानुपूर्वीमद्-वर्णसमुदायघटितत्वं विशेषणवाचकपदोत्तर-विभक्तिनिष्ठम् इत्यर्थे न दोष इति वाच्यम्। घटपद-नीलघटपदयोः लता-ताल-पदयोः समानानुपूर्वीकत्व-प्रसंगादिति चेत्? न। पदविशिष्टपदत्वं समानानुपूर्वीकत्वम्। वैशिष्ट्यं च स्वघटकावृत्ति-श्रावणविषयतावच्छेदक-धर्मावच्छिन्न-अघटितत्व-स्ववृत्तित्व-उभय-सम्बन्धेन। स्ववृत्तित्वं च स्वघटकावृत्ति-श्रावणविषयतावच्छेदक-धर्मावच्छिन्न-अघटितत्व-

सम्बन्धेन। घटपदसमानानुपूर्वीकत्वस्य नीलघटपदे वारणाय आद्यसम्बन्धः। नीलघट-पदसमानानुपूर्वीकत्वस्य घटपदे वारणाय द्वितीय-सम्बन्धः। विशेषतश्च घटपदसमानानुपूर्वीकत्वं स्वनिष्ठ-घत्वावच्छिन्न-विषयता-निरूपित-अत्वावच्छिन्न-विषयतानिरूपित-टत्वावच्छिन्नविषयता-निरूपित-अत्वावच्छिन्न-विषयत्वावच्छिन्न-प्रतियोगिताक-भेदप्रतियोगितावच्छेदक-विषयतात्व-समनियत-ज्ञानीय-विषयता-पर्याप्त्यवच्छेदक-धर्मवत्वम्। ज्ञाने विषयतात्वसमनैयत्यं च स्वनिरूपितविषयतावत्व-सम्बन्धेन। स्वं = ज्ञानं, विषयतावत्त्वं च स्वावच्छेदकसम्बन्धावच्छिन्नत्व-स्वसामानाधिकरण्य-उभयसम्बन्धेन।

**अन्वयबोधानुपपत्तेरिति**। वेदपदोत्तर-जस्-विभक्तिवृत्ति-आनुपूर्वीमत्वस्य प्रमाणपदोत्तर-सु-विभक्तौ अभावाद् अभेदान्वयबोधानुपपत्तेरिति भावः। इदम् उपलक्षणम्। 'सुन्दराभ्यां घटाभ्याम्' इत्यादौ एकविभक्तौ तृतीयात्वग्रहे अपरत्र च चतुर्थीत्वग्रहे विभक्त्योः समानानुपूर्वीकत्वात् ततः अभेदान्वयापत्तिः बोध्या। इदन्तु बोध्यम्। 'सुन्दराभ्याम्' इत्यत्र चतुर्थीत्व-विरुद्ध-तृतीयात्वग्रहः करणत्वग्रहे सति भविष्यति, नान्यथा, करणत्वे तृतीयाविधानात्। तृतीयायाः करणत्वपरत्वे अभेदान्वयबोधो दुर्घटः। करणत्वविशेषणत्वेन उपस्थितस्य 'सुन्दरस्य' अन्यत्र अन्वयायोगात्। एकत्र विशेषणस्य अन्यत्र विशेषणत्वेन अन्वयायोगाद् इति समानानुपूर्वीकत्वेन साजात्यपक्षेऽपि नात्र आपत्त्यवकाश इति ध्येयम्।

**VV-D. 2.2.2:** 'वेदाः प्रमाणम्' इति प्रयोगस्य असाधुत्वात्, तदनुरोधः असंगत इत्याशङ्कते **नन्विति**। 'विंशत्याद्याः सदैकत्वे सर्वाः संख्येय-संख्ययोः' संख्यायां द्वित्वबहुत्वे स्तः। अस्यार्थः विंशत्याद्याः शब्दाः संख्याप्रकारक-संख्येय-विशेष्यक-बोधेच्छया उच्चरिताः एकवचनान्ता भवन्ति। संख्यापराश्च द्विवचन-बहुवचनान्ता भवन्तीति। तथा च विंशत्याद्या इत्यनुशासनात् 'शतं ब्राह्मणाः' इति प्रयोगस्य साधुत्वे **'स्वप्रकृतिक-विभक्ति-सजातीय-विभक्तिकत्वम्'** (VV-2.2.1) इत्युक्त-नियमशरीरे 'असति बाधके' इत्युक्तौ नानुपपत्तिः। 'वेदाः प्रमाणम्' इत्यस्य च साधुतैव नास्ति। क्व तत्र अनुपपत्तिरिति? समानानु-पूर्वीकत्वेन साजात्योक्तौ न दोषः। प्रत्युत विभक्ति-विभाजक-प्रथमात्वादिना साजात्योक्तौ 'नीला घटः' इत्यादि-प्रयोगापत्तिः इत्याशयेन आह **कथं प्रयोगा** इति। साधव इति शेषः।

या विशेष्येषु दृश्यन्ते लिङ्गसंख्याविभक्तयः।<br>
प्रायस्ता एव कर्तव्याः समानार्थे विशेषणे।।

इत्युत्सर्ग इति भावः। प्रमाणपदं विशेष्यवाचक-वेदपद-समानवचनकं, विशेषानुशासनवचनकभिन्नत्वे सति विशेषणपरत्वात्। यद्वद्-विशेषानुशासन-

बोधितवचनकभिन्नं विशेषणवाचकपदं तत्तद्-विशेष्यवाचकपदसमानवचनकम् इति व्याप्तिं दर्शयति। **विशेष्यविशेषणवाचकपदयोरिति। असति विशेषानुशासने।** असति बाधके। तथा च नियतवचनकत्वानुशिष्ट-भेदकूटवत् प्रातिपदिकविशिष्ट-प्रातिपदिकत्वं यत्र तत्र तत्तद्-विशेष्यवाचकपद-प्रकृतिक-विभक्तिवृत्त्यानुपूर्वीमद्-विभक्तिप्रकृतित्वम् इति फलितार्थः। प्रातिपदिक-वैशिष्ट्यं च स्वप्रयोज्यविशेष्यता-निरूपित-तादात्म्य-सम्बन्धावच्छिन्न-प्रकारता-प्रयोजकत्व-नियतवचनकत्वानुशिष्ट-भेदकूटवत्त्व-उभयसम्बन्धेन।

**VV-D. 2.2.3:** **तथेति।** समानवचनकत्वेत्यर्थः। **साधुत्वोपपादनेऽपीति** असमानलिङ्गकत्वेन समानवचनकत्वाभावाद् इति भावः। **कारिकाया** इति।

शक्तिर्निपुणता लोककाव्यशास्त्राद्यवेक्षणात्।
काव्यज्ञशिक्षयाभ्यास इति हेतुस्तदुद्भवे।।

इति कारिकाया इत्यर्थः। अस्या अर्थः। **शक्तिः** = कवित्वबीजभूतः संस्कारविशेषः प्रतिभा अपरपर्यायः। लोककाव्यशास्त्राद्यवेक्षणप्रयुक्तनिपुणता व्युत्पत्तिविशेषः। काव्यज्ञशिक्षाप्रयुक्तः अभ्यासः काव्यकरणे योजने च पुनः पुनः प्रवृत्तिः। **इति हेतुः तदुद्भवे** इत्यस्य व्याख्या **इति त्रयः समुदिता हेतु**रिति। अत्र इति शब्देन शक्ति-निपुणताभ्यासानां परामर्शः। कवित्वोद्भवे त्रयः समुदिता हेतुरित्यर्थः। **असंगतिः दुर्वारैवति।** समुदिता हेतुरित्यनयोः समानलिङ्गकत्वेन समानवचनकत्वविरहाद् इति भावः।

**समानलिङ्गकत्वं** च स्ववृत्ति-पुंलिङ्गत्वाद्यन्यतमत्वम्। पुंलिङ्गत्वादिकं च पुंस्त्वादिप्रकारक-बोधजनकतावच्छेदकानुपूर्वीमत्त्वम्। लिङ्गरोमवत्वं पुंस्त्वम्। **अनुगमस्तु** प्रातिपदिकवृत्ति-आनुपूर्वीविशिष्ट-स्वानुपूर्वीकत्वम् पुंलिङ्गत्वम्। स्वानुपूर्व्याम् आनुपूर्वी-वैशिष्ट्यं च स्वविशिष्टविषयतात्व-व्यापकत्वसम्बन्धेन। विषयतायां स्व-वैशिष्ट्यं च (१)स्वघटकवर्णावृत्तित्व-(२)स्वावच्छिन्नविषयता-प्रयोज्य-विशेष्यता-निरूपित-पुंस्त्वप्रकारता-प्रयोजकत्व-उभयसम्बन्धेन। व्यापकता च स्वावच्छिन्नविषयता-प्रयोज्य-विशेष्यता-निरूपित-संख्यानिष्ठप्रकारता-प्रयोजक-विषयतावच्छेदकावच्छिन्नत्व-सम्बन्धेन। 'तट' इत्यादौ प्रातिपदिकपदेन न तटस्य ग्रहणम्। तत्र तादृश-पुंस्त्वविरहात्। किन्तु ब्राह्मणस्य ग्रहणम्। तद्वृत्ति-आनुपूर्वी-वैशिष्ट्यस्य स्वपदग्राह्य-तटवृत्त्यानुपूर्व्या सत्त्वात् पुंल्लिङ्गत्वोपपत्तिः। ब्राह्मण-वृत्ति-आनुपूर्वीविशिष्टा या सुत्वरूपा आनुपूर्व्यवच्छिन्न-विषयता तादृशविषयतात्व-व्यापकत्वस्य स्वपदग्राह्यतटवृत्त्यानुपूर्व्यवच्छिन्नविषयतायां सत्त्वात्। व्यापकता-घटक-स्वपदं तटपदपरम्। 'ब्राह्मण' इत्यादौ यादृशानुपूर्व्यवच्छिन्न-सु-पदनिष्ठ-विषयता पुंस्त्वप्रकारक-बोधजनिका 'नदी' इत्यादौ तादृशानुपूर्व्यवच्छिन्नविषयता

न संख्याबोधजनकतावच्छेदिका। 'विभक्तिवृत्ति-आनुपूर्वीभेदात्' इति न 'नदी'-पदे पुंस्त्वापत्तिः। इदं च "स्तनकेशवती स्त्री स्याल्लोमशः पुरुषः स्मृतः" इति वाक्यानुरोधेन। अन्यथा तु प्राण्यप्राणिसाधारणं पदसंस्कारप्रयोजकं पुंल्लिंगत्वादिना परिभाषितत्वं तद्बोध्यम्। तदुक्तम् -

> स्त्रीलिङ्गमपि पुंल्लिङ्ग-क्लिवलिङ्गमिति त्रिधा।
> शब्दसंस्कारसिद्ध्यर्थं भाषया नाम भिद्यते।।

स्त्रीलिङ्गं पुंल्लिङ्गं नपुंसकलिङ्गमिति त्रिधा नाम भिद्यते। तत्र स्त्रीलिङ्गत्वादिकं स्त्रीलिङ्गत्वादिना परिभाषितत्वम्। न तु स्त्रीत्वादिवाचकत्वम्। तटः, तटी, तटम् इत्यादौ तटादेः योन्यादिमत्त्वरूप-स्त्रीत्वाभावाद् अयोग्यतापत्तेः। परिभाषायाः प्रयोजनं चेह पदसंस्कारः (आकाङ्क्षा)। यथा तट इत्यादौ पुंस्त्वेन सुबादि-सद्भावः। तटी इत्यादौ स्त्रीत्वेन ङीबादि-सद्भावः। तटम् इत्यादौ क्लीबत्वेन सुबादेः लुगादिः। यद्यपि सम्पदादिशब्दे नास्ति संस्कारस्य विशेषः, तथापि तत्रापि अभेदेन तद्विशेषणवाचक-शोभनादिपदे अस्ति संस्कारस्य विशेषः। असति बाधके विशेषणपदस्य विशेष्यपद-समानलिङ्गकत्व-नियमात्। केचित्तु शक्त्या तटत्वावच्छिन्नस्य लक्षणया च स्त्रीत्वस्य बोधकं तटादिपदम्। प्रत्ययास्तु तत्तदर्थे तात्पर्यग्राहका इत्याहुः।

**VV-D. 2.2.4: एवं** समानलिङ्गकस्थले एव समानवचनकत्व-नियमे। **असमानलिङ्गकस्थले** 'वेदाः प्रमाणम्' इत्यादौ। **तादृशस्थले** असमानलिङ्गकस्थले। **औत्सर्गिकं** 'अपदं न प्रयुञ्जीत' इति न्यायाद् इति भावः। अनेन नित्यद्विवचन-बहुवचन-साकाङ्क्ष-विशेषणवाचकपदानाम् असमान-लिङ्गकस्थले नैकवचनान्तत्वम् इति सूचितम्। **अनुपपत्तिरि**ति। असमानलिङ्गकत्वेन समानवचनकत्वानुपपत्तिरिति भावः।

'विशेष्य-विशेषण-वाचकपदयोः असति विशेषानुशासने समान-वचनकत्वम्' इति नियमसंकोचेन समाधत्ते। **यत्रेति।** 'प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानि' इत्यत्र 'पितरो देवताः' इत्यादौ चेत्यर्थः। विशेष्यवाचक-प्रत्यक्षानुमानोपमानशब्द-पितृपदोत्तर-जस्-विभक्तितात्पर्यविषयीभूत-बहुत्व-संख्या-विरुद्ध-संख्यायाः विशेषणवाचक-प्रमाणपदेन देवतापदेन च अविवक्षिततया तत्रैव समानवचनकत्वनियमः। 'वेदाः प्रमाणम्' इत्यादौ तु न समानवचनकत्वनियमः। विशेष्यवाचक-वेदपदोत्तर-जस्-विभक्ति-तात्पर्यविषयीभूत-बहुत्वसंख्या-विरुद्ध-एकत्व-संख्यायाः विशेषणवाचक-प्रमाणपदोत्तर-सु-विभक्त्या विवक्षितत्वात्। तथा च समानानुपूर्वीकत्वरूपं साजात्यं न विवक्षणीयमिति भावः।

**VV-D. 2.2.5:** **यत्रेति**। त्रल्-प्रत्ययस्य घटकत्वमर्थः। तस्य विशेष्यवाचकपदे अन्वयः। विशेष्यवाचक इत्यस्य विशेष्यबोधक इत्यर्थः। तेन लाक्षणिकविशेष्यपदस्थले 'कुमतिः पशुः' इत्यादौ न व्याप्यत्वहानिः। विशेष्यवाचकपदोत्तरत्वेन अनुसन्धीयमान इत्यर्थः। तेन 'सुन्दरं दधि' इत्यत्र विशेष्यवाचकदधिपदाव्यवहितोत्तर-विभक्तेः अप्रसिद्धावपि न क्षतिः। तथा च यद्वाक्यघटकविशेष्यबोधकपदाव्यवहितोत्तरत्वेन अनुसन्धीयमान इत्यर्थः।

अथ विभक्तित्वेन उपादानं किमर्थम्? विशेष्यवाचकपदोत्तरत्वेन उपादानस्य सम्यक्त्वात्। न च तदनुपादाने 'सुन्दरं दधि', 'बहवो गुणा' इत्यत्र एकत्वविवक्षायां 'सुन्दरं दधि' इति समानवचनकत्वस्य इष्टतया विशेष्यवाचकदधिपदाव्यवहितोत्तरबहुपदार्थ-बहुसंख्याविरुद्ध-एकत्वस्य विवक्षिततया प्रयोजकाभावात् समानवचनकत्वानुपपत्तिरिति वाच्यम्। व्याप्यविरहस्य व्यापकविरहअप्रयोजकतया उक्तस्थले उक्त-अविवक्षितत्व-विरहेऽपि क्षत्यभावात्। तादृशस्थले विशेष्यवाचकपद-अव्यवहितोत्तर-विभक्तेः अप्रसिद्धतया अव्यवहितोत्तरत्वेन अनुसन्धीयमानत्वस्य विवक्षणीयतया तथाविध-विभक्ति-तात्पर्यविषय-एकत्वविरुद्धत्वस्य एकत्वेऽसम्भवाच्च। तदा विभक्तिपदं स्पष्टार्थम्।

परे तु 'स्तोकम् अत्त' इत्यादौ समानवचनकत्व-प्रसंगवारणाय विशेष्यवाचकपदे प्रातिपदिकत्व-प्रवेशापेक्षया विशेष्यवाचकपदाव्यवहितोत्तरपदे सुप्त्व-प्रवेशे लाघवात् तत्सूचनाय विभक्तित्वेन उपादानमिति प्राहुः।

अथ विशेष्यवाचकपदोत्तर-विभक्त्यर्थ-संख्याविरुद्ध-इत्यादिकम् एव उच्यतां, किं तात्पर्यानुसरणेन इति चेत् ? न। 'वेदाः प्रमाणम्' इत्यादौ यदा जसि सुत्व-भ्रमात्-एकत्व-शक्तताभ्रमाद् वा एकत्वविषयक-शाब्दबोधः, तदा एकत्वस्य विभक्त्यर्थतया तद्-विरुद्धसंख्याया अविवक्षितत्वात् समानवचनकत्वापत्तिः। अतः **तात्पर्यविषये**ति। न च विभक्तिशक्यत्वप्रवेशे न दोष इति वाच्यम्। लाघवाभावादिति ध्येयम्। तथाच विशेष्यवचाकपदोत्तरत्वेन अनुसन्धीयमान-विभक्तिजन्य-बोधविषयत्व-प्रकारता-निरूपित-ईश्वरेच्छीय-विशेष्यतावती संख्या इत्यर्थः। यथाश्रुते तु 'वेदाः प्रमाणम्' इत्यादावपि 'जस्-पदं बहुत्वं बोधयतु', 'सु-पदं च एकत्वं बोधयतु' इति समूहालम्बन-तात्पर्यस्यापि विशेष्यवाचकपदोत्तर-विभक्तितात्पर्यत्वात् तद्विषय-एकत्व-संख्याविरुद्धत्वाभावेन विरुद्धसंख्याविवक्षितत्वाभावसत्त्वेन समानवचनकत्वापत्तिः। विभक्तिजन्य-बोधविषयत्वेन निवेशे तु एकत्वस्य वेदपदोत्तर-जस्-पदजन्य-बोधविषयत्वेन इच्छाविषयत्वाभावात् न दोषः।

तात्पर्यविषयसंख्यायाः संख्यात्वेन प्रवेशात् 'प्रमाणं वेदेषु', 'द्वित्वान्य-प्रमेयम्' इत्यादौ वेदनिरूपित-तादृश-प्रमेयत्वावच्छिन्न-आधेयत्वस्य आधेयरूपत्वे 'तात्पर्यविषयीभूत-द्वित्वान्यप्रमेयरूप-तादृशविषयत्वावच्छिन्न-भेदस्य' एकत्वे विरहेऽपि न समानवचनकत्वापत्तिः। तात्पर्यविषयतावच्छेदकसंख्यात्व-व्याप्य-बहुत्वभेदस्य एकत्वे सत्त्वात्। वस्तुतो विशेष्यवाचकपदोत्तर-विभक्त्यर्थसंख्या-विरुद्धसंख्याया अप्रसिद्ध्या तदनुपपत्तिः। अतः तात्पर्यविषयेति अपेक्षाबुद्धिविशेष-विषयत्वस्यापि उपलक्षकम्। अन्यथा 'नीला वर्णाः' इत्यादौ निरुक्ततात्पर्य-विषय-संख्याया अप्रसिद्धत्वेन समानवचनकत्वानुपपत्तिरिति नियमशरीरे संख्यायाः विशेष्यवाचकपदोत्तरविभक्ति-तात्पर्यविषयत्वेन एव प्रवेश इति ध्येयम्।

तादात्म्यस्य विशेषणविभक्त्यर्थतापक्षे विशेषणवाचकपदोत्तर-विभक्त्या तादात्म्यस्य सर्वत्र विवक्षिततया विशेषणवाचकपदोत्तरविभक्तिमात्रे अविवक्षितत्व-विरहेण समानवचनकत्वानुपपत्तिः। अतो विशेष्यवाचक-पदोत्तरविभक्ति-तात्पर्य-विषयसंख्याविरुद्धस्य संख्यात्वेन प्रवेशः। ननु संख्याविरुद्धत्वं न संख्या-असामाना-धिकरण्यम्। बहुत्वाधिकरणेऽपि वेदे स्वाश्रयप्रकृत्यर्थतावच्छेदकवत्त्व-सम्बन्धेन एकत्वस्य वर्तमानत्वादिति चेत् ? न। संख्याविरुद्धत्वम् अत्र संख्याभिन्नत्वम् इति ध्येयम्।

**अविवक्षितत्वमिति**। विशेषणवाचकपदोत्तर-विभक्त्या इत्यादिः। तथा च विशेषणवाचकपदोत्तरत्वेन अनुसन्धीयमान विभक्तिजन्यबोध-विषयत्वेन इच्छाविषय-भिन्नत्वं तदर्थः। **तत्रेति**। घटकत्वं सप्तम्यर्थः। तस्य विशेष्यविशेषणवाचकपदयोः अन्वयः। तथा च यद्वाक्यघटक-विशेष्यवाचक-पदोत्तरत्वेन अनुसन्धीयमान-विभक्ति-जन्यबोध-विषयत्व-प्रकारता-निरूपित-इच्छीय-विशेष्यतावती संख्या विशेषणवाचक-पदोत्तरत्वेन अनुसन्धीयमान-विभक्तिजन्य-बोधविषयत्व-प्रकारता-निरूपित-इच्छीय-विशेष्यतावद्भिन्ना न, तद्वाक्यघटक-विशेष्यविशेषण-वाचकपदयोः समानवचनकत्व-नियम इति फलितम्।

**अत एवेति**। ईदृशनियमाङ्गीकारादेव इत्यर्थः। **पुरूरव आद्रवसौ विश्वेदेवा इति**। "पुरूरव आद्रवसौ पार्वणे समुदाहृतौ" इति वाक्यम्। अत्र विश्वेदेवा इत्यध्याहृत्य पार्वणे विश्वेदेवाः पुरूरव आद्रवसौ समुदाहृतौ इत्यन्वयः। **द्वित्व-विशिष्टयोः पुरूरव-आद्रवःप्रभृत्योरिति**। प्रभृतिग्रहणं विशेष्यवाचक-विश्वेदेवपदोत्तर-विभक्ति-तात्पर्य-विषय-बहुत्वसंख्यायाः अन्वययोग्यतां सूचयितुम्, विश्वेदेवानां बहुत्वात्। तथा च द्वित्वविशिष्ट-पुरूरव-आद्रवोऽभिन्ना बहुत्वविशिष्ट-विश्वेदेवा इति बोधः। न च बहुत्वविशिष्टेषु विश्वेदेवेषु द्वित्वविशिष्टयोः पुरूरव-आद्रवसोः अन्वये 'द्वौ बहव' इति प्रयोगापत्तिरिति वाच्यम्। **विशेषणतया** इत्यस्य परम्परया

विशेषणतया इत्यर्थात्। परम्परा च स्वघटितसमुदायत्ववदभेद एव। स्वं = पुरूरव- आद्रवश्च। तादृशसमुदायत्वे द्वित्वान्वयः। तथा च द्वित्वविशिष्ट-पुरूरव-आद्रवो- घटितसमुदायत्ववदभिन्ना विश्वेदेवा इति बोधः। **तद्वाचकपदस्य** = पुरूरव-आद्रवो- वाचकपदस्य। **द्विवचनान्तता** = न समानवचनकत्वमिति शेषः। तथा च विशेष्यवाचक-विश्वेदेवपदोत्तरविभक्ति-तात्पर्यविषयीभूत-बहुत्वसंख्या-विरुद्ध-द्वित्व-संख्यायाः पुरूरव-आद्रवो-रूप-विशेषणपदोत्तर-विभक्त्या विवक्षितत्वात् न समान-वचनकत्वमिति भावः। विश्वेदेवानां बहुत्वेऽपि तद्विरुद्ध-द्वित्वसंख्या-विशिष्टयोरेव पुरूरव-आद्रवसोः तत्र तत्र कर्मणि पूज्यत्वस्य प्रतिपिपादयिषितत्वादिति ध्येयम्।।

**VV-D. 2.2.6:** 'वेदाः प्रमाणम्' इत्यत्र समानवचनकत्वाभावमुपपादयति- **'वेदाः प्रमाणम्' इत्यत्र** चेति। **विशेषणपदोत्तरविभक्त्येति।** विशेषणीभूत-प्रमाण-पदोत्तर-सु-विभक्त्या इत्यर्थः। **एकत्वं विवक्षितमिति।** तथा च वेदपदोत्तर-जस्-विभक्तितात्पर्यविषय-बहुत्वसंख्याविरुद्ध-एकत्वसंख्यायाः प्रमाणपदोत्तर-सुविभक्त्या विवक्षितत्वान्न समानवचनकत्वमिति भावः।

ननु एकत्वं प्रकृत्यर्थे प्रमाणे बाधितम्, तेषां बहुत्वादित्यत आह- **तच्चेति।** एकत्वं चेत्यर्थः। **प्रकृत्यर्थतावच्छेदके** इति। ननु प्रकृत्यर्थ-प्रमाणानां बहुत्वेऽपि नाना एकत्वानां प्रत्येकम् अन्वयेनैव सामञ्जस्ये प्रकृत्यर्थतावच्छेदके तदन्वयानुधावनं किमर्थम् इति चेत्? न। न हि एकत्वमात्रम् एकवचनार्थः। किन्तु सजातीयद्वितीय-रहितत्वम्। तच्च स्वसजातीयनिष्ठ-भेदप्रतियोगितानवच्छेदक-एकत्वरूपम्। तथा च चालनीन्यायेन प्रमाणगतैकत्वे तादृशभेद-प्रतियोगिता-वच्छेदकत्वस्यैव सत्त्वाद् अयोग्यत्वप्रसंगात्। न च प्रकृत्यर्थतावच्छेदकरूपेण सजातीयप्रमाणे प्रमाणत्वगतैकत्वस्य असत्वेन तत्र सजातीयनिष्ठभेदप्रतियोगिता-नवच्छेदकत्वविरहेण अयोग्यतायाः तथापि अनुद्धार इति वाच्यम्। यत्र प्रकृत्य-र्थतावच्छेदके एकत्वान्वयः तत्र भेदीय-प्रतियोगितावच्छेदकता स्वाश्रयाश्रयत्व-सम्बन्धावच्छिन्ना ग्राह्या।

**प्रमितिकरणत्वे** इति। करणत्वसामान्यं हि व्यापारसम्बन्धावच्छिन्न-कारणत्वम्। कारणत्वं तु तादात्म्यादि-विभिन्न-सम्बन्धावच्छिन्न-कारणत्वम्, न तु व्यापारसम्बन्धावच्छिन्नम्, व्यापारेऽव्याप्तेः। तस्यापि कारणत्वस्य इष्टत्वात्। कारणत्व-करणत्वयोः अयमेव विशेषः।

प्रमाणत्वं तु प्रमात्वन्यूनवृत्ति-धर्मावच्छिन्न-प्रमानिष्ठ-कार्यता-निरूपित-व्यापारसम्बन्धावच्छिन्न-कारणत्वम्। प्रमात्वं चानुगतम् अन्यत्र स्पष्टम्। तथा च प्रमितिकरणत्वे एकत्वान्वये 'एकत्वविशिष्ट-प्रमितिकरणत्ववदभिन्ना वेदाः' इति बोधः।

**VV-D. 2.2.7:** नन्वेकत्वान्वयितावच्छेदकस्य शाब्दप्रमितिकरणतात्वस्य आश्रयभेद-प्रयुक्त-प्रमितिकरणताया भिन्नतया तद्भेदेन प्रमितिकरणतात्वस्य भिन्नत्वात् कथं परिष्कृत-एकत्वान्वय इत्यत आह - **शब्दत्वावच्छिन्नमिति**। तथा च शब्दत्वस्यैव अन्वयितावच्छेदकतया तस्य चैकत्वात् तदवच्छिन्नस्य प्रमिति-करणत्वस्य अप्येकत्वेन तत्रैकत्वान्वयाबाधात्।

'नीलाभिन्नो घट' इति शाब्दबोधं प्रति 'नीलो घट' इति वाक्य-विशेषः कारणमितिरीत्या तत्तच्छाब्दं प्रति तत्तच्छब्दस्य कारणत्वमिति विशेषकार्य-कारणभावे 'यद्विशेषयोः कार्यकारणभावः तत्सामान्ययोरपि' इति न्यायेन शाब्दत्वावच्छिन्नं प्रति शब्दत्वेन सामान्यतः कार्यकारणभावोऽपि वाच्यः। सामान्य-धर्मावच्छिन्न-कारणताया सामान्यधर्म-स्वरूपतया कारणताया ऐक्येन तत्रैकत्वा-न्वयोऽपि निराबाध एव इति आशयेन '**शाब्दप्रमाकरणत्वं च शाब्दत्वावच्छिन्नं यावच्छब्दनिष्ठम् एकमेवेति नायोग्यते**'ति भट्टाचार्येण उक्तम्।

**नचेति**। **एवमितिशेषः**। एकदेशान्वये इति यावत्। 'पदार्थः पदार्थेन अन्वेति न तु पदार्थैकदेशेन' इति व्युत्पत्तिः। आश्रयतासम्बन्धावच्छिन्न-पदजन्य-बोधविषयत्व-प्रकारता-निरूपित-ईश्वरेच्छीय-विशेष्यतावान् पदार्थः। अवच्छेदकता-सम्बन्धावच्छिन्न-पदजन्यबोधविषयत्व-प्रकारतानिरूपित-भगवदिच्छीयविशेष्यतावान् **पदार्थैकदेशः**। प्रकृते च प्रमाणपदार्थैकदेशे प्रमाणत्वे = प्रमितिकरणत्वे एकत्वा-न्वयो न संभवति, व्युत्पत्ति-विरोधाद् इति भावः। एतस्या व्युत्पत्तेः अङ्गीकारादेव घटत्वे नित्यान्वयतात्पर्येण 'नित्यो घट' इत्यस्य नापत्तिः। घटत्वस्य पदार्थैक-देशत्वात्। न च स्वरूपत एव घटपदादुपस्थिते 'घटत्वे' नित्यान्वयो न संभवति। अन्वयितावच्छेदकरूपेण उपस्थित्यभावादिति वाच्यम्। जातित्वविशिष्ट-जातिमत्-तात्पर्यक-तत्पद-घटितस्य जातौ अन्वयतात्पर्येण 'स नित्य' इति वाक्यस्य प्रामाण्यापत्तेः।

कार्यकारणभावस्तु विशेष्यतासम्बन्धेन, शाब्दबोधं प्रति विशेष्यता-सम्बन्धेन उपस्थितिः कारणम् इत्याकारकः। एवं च घटत्वे विशेष्यतासम्बन्धेन घटपदजन्योपस्थितेः अभावात् न उक्तापत्तिः।

'सम्पन्नो व्रीहिः' इत्यत्र व्रीहिपदोत्तर-सु-विभक्त्यर्थैकत्वस्य व्रीहौ अन्वयो न सम्भवति। एकत्वविशिष्ट-सम्पत्तिविशिष्टस्य अभेदान्वयासम्भवात्। अनिर्धारित-बहुत्वसंख्या हि सम्पत्तिः। एवं च व्रीहित्वजातौ एकत्वान्वयस्य आवश्यकत्ववत् प्रमाणत्वेऽपि एकत्वान्वयस्य सम्भव इति उक्तव्युत्पत्तिसंकोच आवश्यक इत्याशयेनाह **सम्पन्नो व्रीहिरि**ति। **उक्तव्युत्पत्तिसंकोचस्ये**ति। कार्यकारणभाव-ज्ञानरूपाया उक्तव्युत्पत्तेः = 'पदार्थः पदार्थेनान्वेति' इति व्युत्पत्तेः संकोचस्य सामान्यतः कार्यकारणभावज्ञाने अंशतो भ्रमत्वकल्पनस्य इत्यर्थः।

अत्रेदं बोध्यम्। उक्तवाक्यरूपा न व्युत्पत्तिः। तथा सति 'व्युत्पन्नोऽयम्' इति व्यवहारानुपपत्तिः। वाक्यस्य पुरुषनिष्ठत्वाभावात्। स्वानुकूलकृतिमत्व-सम्बन्धेन पुरुषनिष्ठत्वेन तदुपपादनेऽपि 'अर्थज्ञानशून्ये व्युत्पन्न' इति व्यवहारापत्तेः। ग्रन्थे व्युत्पादकत्व-व्यवहारानुपपत्तेश्च।

सामान्यतः कार्यकारणभावस्तु (१)स्वतादात्म्य-(२)स्वप्रयोजकवृत्ति-ज्ञानीयविषयता-निरूपित-विषयत्वाप्रयोज्य-विषयता-निरूपितत्व-उभयसम्बन्धेन। विशेष्यताविशिष्टविशेष्यतासम्बन्धेन शाब्दबोधं प्रति मुख्यविशेष्यतासम्बन्धेन उपस्थितिः कारणम् इत्याकारकः। तथा च व्रीहित्वे मुख्यविशेष्यतासम्बन्धेन उपस्थितेः अभावाद् अन्वयबोधानुपपत्तिरिति भावः।

न च कार्यतावच्छेदकीभूत-विशेष्यतासम्बन्धे व्रीहिपदाप्रयोज्यत्वं व्रीहित्व-प्रमाणत्वाद्यवृत्तित्वं वा निवेशनीयम्। तथा च पदाप्रयोज्य-व्रीहित्व-प्रमाणत्वाद्य-वृत्तिर्वा या **विशेष्यता**विशिष्टविशेष्यता तत्सम्बन्धेन शाब्दं प्रति इत्युक्तौ न दोषः। अथवा मुख्यविशेष्यत्वम् अनुपादाय मुख्यविशेष्यताभिन्नत्व-व्रीह्यादिपदाप्रयोज्यत्व-उभयाभाववद्-विशेष्यतासंसर्गेण उपस्थितेः कारणत्वोक्तौ न दोष इति वाच्यम्। तथापि व्रीहित्वे एकत्वस्य इव नित्यपदार्थस्यापि अन्वयसम्भवेन नित्यो व्रीहिरिति प्रयोगस्य प्रामाण्यापत्तेः।

**अत्रोच्यते**। स्वादिप्रयोज्य-एकत्वनिष्ठ-प्रकारता-निरूपित-व्रीहित्वनिष्ठ-विशेष्यताभिन्ना या विशेष्यताविशिष्ट-विशेष्यता तत्संसर्गेण शाब्दं प्रति मुख्य-विशेष्यता-सम्बन्धेन उपस्थितेः हेतुत्वोक्तौ न दोषः। 'नित्यो व्रीहिः' इत्यादौ एकत्व-निष्ठ-प्रकारता-निरूपित-विशेष्यतातो नित्यनिष्ठ-प्रकारता-निरूपित-विशेष्यता-भिन्ना एवेति नोक्तदोष-तादवस्थ्यम्। विभक्त्यप्रयोज्य-प्रकारतानिरूपित-विशेष्यता-सम्बन्धो वा कार्यतावच्छेदकः। तथा च न व्यभिचारः। स्वार्थैकत्वनिष्ठ-प्रकारताया विभक्ति-प्रयोज्यत्वात्।

**VV-D. 2.2.8: यदि चे**ति। विवादप्रदर्शनार्थः। तथा हि आकाशपदात् स्वरूपत उपस्थितस्य आकाशस्य शाब्दबोधविषयत्वे अन्वयितावच्छेदक-रूपेणैव अन्वयिन उपस्थितेः अपेक्षितत्व-नियमाभावाद् व्रीहित्वे एकत्वान्वय-स्वीकारात् केवलं 'पदार्थः पदार्थेनान्वेति' इति नियमसंकोचो दोषः। शब्दाश्रयत्वादिना उपस्थितस्य एव आकाशस्य शाब्दबोधविषयत्वोपगमे व्रीहित्वेऽन्वयोपगमे अन्वयितावच्छेदकरूपेण इत्यस्य 'पदार्थः पदार्थेन अन्वेति' इति नियमद्वयस्य संकोचः। अतो व्रीहावेव एकत्वान्वयः स्वीकार्यः। अस्मिन्पक्षे न 'संख्यायाः पर्याप्ति-सम्बन्धेन एव अन्वयः' इति नियमस्य संकोचः। परम्परासम्बन्धस्य कल्पने च दोषः।

**स्वाश्रयेति**। स्वम् = एकत्वम्, तदाश्रयीभूतं प्रकृत्यर्थतावच्छेदकं व्रीहित्वं तद्वत्त्वसम्बन्धेन इत्यर्थः। **प्रकृत्यर्थे एवेति**। व्रीहावेव इत्यर्थः। एवकारेण व्रीहित्वस्य व्यवच्छेदः। व्रीहित्वे एकत्वान्वये बाधकमाह **व्रीहित्वजातेरिति**। अस्य **अन्वयितावच्छेदकरूपेण अनुपस्थितेः** इत्यनेन अन्वयः। व्रीहित्वजातौ अन्वयपक्षे व्रीहित्वत्वम् अन्वयितावच्छेदकं तेन रूपेण अनुपस्थितेः इत्यर्थः।

अन्वयितावच्छेदकतया सम्भाव्यमानं यद्-रूपं तद्-रूपेण अनुपस्थितेरिति यावत्। तेन प्रकृते अन्वयितावच्छेदकस्य अप्रसिद्धावपि न क्षतिः। तत्र हेतुः **स्वरूपतो व्रीह्यादिपदशक्यतावच्छेदकतयेति**। तत्र = व्रीहित्वे। पदार्थान्तरस्य = सु-विभक्त्यर्थ-एकत्वस्य। **अन्वयानुपपत्तेरिति**। तथा च आकाङ्क्षाभास्य-सम्बन्धावच्छिन्न-प्रकारता-निरूपित-विशेष्यता-सम्बन्धेन शाब्दबोधे किञ्चिद्धर्मावच्छिन्न-विशेष्यता-सम्बन्धेन उपस्थितिः कारणमिति कार्यकारणभाव-मूलिका 'अन्वयितावच्छेदकरूपेणान्वयिनः उपस्थितिः अपेक्षणीया इति' नियमोपपत्तिः। न च अनया 'पदार्थः पदार्थेन अन्वेति' इत्यस्य गतार्थता। लोम्नि पशुभेद-अन्वयतात्पर्येण 'पशुः अपशुः' इति प्रयोग-वारणाय तस्याः आवश्यकत्वात्। अन्वयितावच्छेदकीभूत-लोमत्वेन लोम्नः उपस्थितत्वात्। नापि 'पदार्थेन अन्वेति' इत्यनया तस्याः गतार्थता। घट-घटत्वे घटपदाद् बोद्धव्ये इत्याकारक-शक्तिज्ञानाधीनायां घट-घटत्वयोः विशृङ्खलभावेन उपस्थितौ घटत्वे अभेदान्वय-तात्पर्येण 'नित्यो घट' इत्यादेः प्रामाण्यवारणाय तस्या आवश्यकत्वात्। किं च प्रतिवध्य-प्रतिबन्धक-भावानुरोधेनापि सा स्वीकार्या। 'ह्रदो वह्न्यभाववान्' इति निश्चयस्य 'द्रव्यं वह्निमद्' इति बुद्धिं प्रति अविरोधित्वात्। **प्रकृतेऽपि**। 'वेदाः प्रमाणम्' इत्यादावपि **ईदृश्येव गतिः**। यथा स्वाश्रयव्रीहित्ववत्ता-सम्बन्धेन व्रीहावेकत्वान्वयेन 'सम्पन्नो व्रीहिः' इत्यत्र प्रामाण्योपपत्तिरूपा गतिः। तथा स्वाश्रयप्रमाणत्ववत्त्व-सम्बन्धेन प्रमाणे एकत्वान्वयेन प्रामाण्योपपत्तिरूपा गतिरित्यर्थः। तथा च न तदर्थ व्युत्पत्ति-संकोच इति भावः।

**VV-D. 2.2.9:** एकमात्रवृत्ति-एकत्वसंख्याया अनिर्धारित-बहुत्व-संख्यात्मक-सम्पन्नत्व-न्यूनवृत्तितया तदनुयोगितावच्छेदकत्वं न सम्भवः। एकत्व-सामान्यस्य चातिप्रसक्तत्वेन तदसम्भवात्। किन्तु एतद्देशविद्यमान-व्रीहित्व-समानाधिकरण-एकत्वसामान्यस्य तदनुयोगितावच्छेदकत्वम् उपपादनीयम्। एवं च जातावेकत्व-भानोपगमः अनुचितः। तथा च न 'पदार्थः पदार्थेन...' इत्यादिनियम-विरोध इति मतं दूषयितुम् उपन्यस्यति **यत्त्विति**। **एकवचनोपस्थितानि नानैकत्वानीति**। सु-पदाद् एकत्वं बोद्धव्यमिति इच्छातः एकत्वत्वरूपेण अनेकेषु एकत्वेषु शक्ति-ग्रहः। ततो नाना-एकत्वानाम् उपस्थितिरिति भावः।

अथ **एकवचनोपस्थितानि नाना एकत्वानि** इत्यनेन नाना एकत्वानाम् उपस्थितत्व-उक्तिः असंगता। शाब्दबोधे अपूर्वव्यक्तिभानाय उपस्थिति-शाब्द-बोधयोः समानप्रकारकत्वेन एव कार्यकारणभावस्य सिद्धान्ततया एकत्वत्वेन यत्किञ्चिदेकत्वोपस्थितावपि (नानैकत्वोपस्थिति-विरहेऽपि) शाब्दबोधे योग्यानां नानैकत्वानां भानसम्भवात्। न च शाब्दबोध-विषयक-सकलव्रीहिषु एकत्वभानं न विवक्षणीयम्, निष्प्रयोजकत्वादिति वाच्यम्। 'अयं द्वौ' इति प्रयोगवारणाय भासमान-संख्यानुयोगितावच्छेदकतया संख्याभानं स्वीकरणीयम्। 'सम्पन्नो व्रीहिः' इति ग्रन्थस्य एकत्वत्वजातीयेषु सम्पन्नत्वानुयोगितावच्छेदकत्त्व-उपादानपरत्वेन संख्याभानस्य अवश्योपेयत्वात्। अन्यथा **प्रत्येकं नानाव्रीहिषु** इत्याद्युक्तिवैफल्यात्। यत्किञ्चिद्-व्रीहिव्यक्तौ यत्किञ्चिद्-एकत्वान्वयेनापि प्रामाण्यस्य अक्षतेरिति चेत् ? न। सामान्यलक्षणा-स्वीकारपक्षे एव उक्तग्रन्थः। तत्पक्षे समानविषयतया एव उपस्थिति-शाब्दयोः कार्यकारणभाव इति सकल-एकत्वस्य उपस्थितत्वापेक्षा अस्तीति नासंगतिः। नाना एकत्वानाम् एकव्रीहौ अन्वयभ्रम-वारणाय **प्रत्येक**मिति।

**VV-D. 2.2.10:** एकत्वं न संख्यारूपम्, किन्तु पारिभाषिकम्। तच्च व्रीहौ नोपयुज्यते इत्याशयेन आह - **तदसदि**ति। **स्वसजातीये**ति। 'अत्र घटोऽस्ति' इत्यादौ स्वं = घटः, वक्ष्यमाणरीत्या तत्सजातीयः स एव। तन्निष्ठ-भेद-प्रतियोगितानवच्छेदकत्वस्य तदेकत्वे प्रसिद्धिः। 'सम्पन्नो व्रीहिः' इत्यत्र स्वपदग्राह्य-व्रीहिसजातीय-व्रीह्यन्तरनिष्ठभेदप्रतियोगितावच्छेदकत्वस्यैव तदेकत्वे सत्त्वेन तादृशभेदप्रतियोगितावच्छेदक-एकत्वाप्रसिद्धिः। अतो व्रीहित्वजातौ एकत्वान्वयः।

ननु एवमपि स्वसजातीयव्रीहिनिष्ठ-भेदप्रतियोगितावच्छेदकत्वस्य व्रीहित्वगतैकत्वे सत्त्वात् पुनः अप्रसिद्धिः। न च भेदीय-प्रतियोगितावच्छेदकतायां स्वाश्रयप्रकृत्यर्थतावच्छेदकवत्त्व-सम्बन्धावच्छिन्नत्वं निवेशनीयम् इति वाच्यम्। तथा सति तादृशसम्बन्धावच्छिन्नावच्छेदकताक-प्रतियोगिताक-भेदाप्रसिद्धेरिति चेत्? न। स्वसजातीनिष्ठ-भेदप्रतियोगितावच्छेदकत्व-अभावस्य निवेशनीयत्वात्। अभावश्च स्वाश्रयप्रकृत्यर्थतावच्छेदकवत्त्व-सम्बन्धावच्छिन्नावच्छेदकता-प्रतियोगि-क-स्वरूपसम्बन्धावच्छिन्न-प्रतियोगिताकः। प्रकृते च तादृशाभावस्य व्यधिकरण-सम्बन्धावच्छिन्न-प्रतियोगिताकतया सर्वत्र सत्त्वेन अप्रसिद्ध्यभावात्। एवं च तादृशावच्छेदकतायां सम्बन्धावच्छिन्नत्वं न निवेशनीयम्।

केचित्तु स्वसजातीयनिष्ठ-भेदप्रतियोगितावच्छेदकता-सामान्ये यत् सम्बन्धावच्छिन्नत्व-यन्निष्ठत्वोभयाभावः तत्सम्बन्धेन तद्वत्त्वं समुदितार्थ इत्याहुः।

अन्ये तु स्वाश्रयप्रकृत्यर्थतावच्छेदकवत्त्व-सम्बन्धातिरिक्त-सम्बन्धावच्छिन्नत्व-प्रकृत्यर्थतावच्छेदकगत-एकत्वनिष्ठत्व-उभयाभाववती या अवच्छेदकता तदभाववदेकत्वं सजातीयद्वितीय-रहितत्वम् इत्याहुः।

**नत्वेकत्वमात्रम्** = अविशेषित-एकत्वत्वावच्छिन्नमात्रम्। **तस्य** = एकत्वस्य। **वस्तुमात्रसाधारण्येन** = केवलान्वयित्वेन। **अर्थत एवे**ति। अर्थान्तरप्रतिपत्त्यर्थम् अवश्यप्रयोक्तव्यपदार्थाद् एव इत्यर्थः। एवकारेण एकत्वबोधनाय शब्दप्रयोगव्यवच्छेदः। **लाभात्** = ज्ञानात्। तथा च प्रकृतिं विना प्रत्ययस्य प्रयोगानर्हत्वेन प्रकृतिपदस्य अवश्यप्रयोक्तव्यतया ततः तदर्थलाभे तत्र शक्तिकल्पनम् अनुचितम्। सजातीयद्वितीयराहित्येन तु न प्रकृत्यर्थनियतम् इति तस्य अनन्यलभ्यतया एकवचनार्थतासम्भव इति भावः। **अनुपयोगाच्चे**ति। एकत्वप्रतिपत्तेः फलमनेकव्यावृत्तिः। सा च एकत्वमात्रप्रतिपत्तेर्न सम्भवतीति विशेषस्य एकवचनार्थता इति भावः।

अथ स्वसजातीय-इत्यत्र स्वपदेन कस्य ग्रहणम्? न तावद् एकत्वस्य। तद्ग्रन्थपर्यालोचनया प्रकृत्यर्थस्यैव साजात्य-प्रतियोगित्वात्। नापि प्रकृत्यर्थस्य। स्वपदस्य हि साक्षात्-परम्परया यः स्वार्थस्य विशेष्यः, यश्च क्रियाकारकपदार्थः तदुभयत्र शक्तिः। प्रकृते च उक्तस्वपद-घटितवाक्यजन्यबुद्धौ प्रकृत्यर्थो हि न स्वार्थघटितस्य विशेष्यः, तद्-बोधकपदाभावात्। प्रत्युत सजातीयद्वितीय-रहितत्वस्यैव विशेष्यत्वात्। न हि अध्याहृत-क्रियाकारक-पदार्थोऽपि सः। अस्तीत्यादि-क्रियापदानाम् एव अध्याहार्यतया उक्त-राहित्यस्यैव तत्कारकतया प्रतीतेः। एवमत्र स्वपदेन प्रकृत्यर्थग्रहणे अग्रे **स्वसमभिव्याहृत**-(VV-2.2.11)-इत्यत्र स्वपदेन तस्यैव ग्रहणे तत्समभिव्याहृतत्वाप्रसिद्धिश्च। प्रकृत्यर्थस्य शब्दानात्मकत्वात्। न च अग्रे स्वपदेन एकवचनग्रहणसम्भवः। साजात्यस्य प्रतियोग्यनुयोगि-उभयवृत्तित्वनियमेन एकवचनावृत्तेः। वक्ष्यमाणधर्मस्य साजात्यरूपतानुपपत्तेश्च इति चेत् ? न। प्रकृत्यर्थे वर्तमानम् इत्यध्याहृत्य प्रकृत्यर्थस्य स्वपदेन उपादानसम्भवात्। तस्य च वर्तमानत्वरूप-क्रियाकारकत्वात्। एवं स्वसमभिव्याहृत-इत्यस्य स्ववाचकपदसमभिव्याहृत-इत्यर्थ इति ध्येयम्।

अथ स्वसजातीयनिष्ठ-भेदप्रतियोगित्वाभाव एव सजातीयद्वितीय-रहितत्वमस्तु। किमवच्छेदकत्वोपादानेन ? न तु उभयभेदमादाय असम्भव इति वाच्यम्। भेदे प्रतियोगिताविशिष्टान्यत्वस्य निवेशनीयत्वात्। वैशिष्ट्यं च स्वनिरूपकत्व-स्वसामानाधिकरण्य-उभयसम्बन्धेन। उदासीनप्रतियोगितावारणाय स्वनिरूपकत्वदलम्। भेदप्रतियोगितानवच्छेदकत्व-विवक्षायामपि एकत्ववद्-गगन-उभयभेदवारणाय तन्निवेशस्य आवश्यकत्वादिति चेत् ? इष्टापत्तेः। अत

एव एकशब्द-शक्तिविचारे स्वसजातीयनिष्ठ-भेदप्रतियोगित्व-अभावस्यैव सजातीयद्वितीय-रहितत्वरूपता उक्ता।

वस्तुतो 'द्व्येकयोर्द्विवचनैकवचने' (P.1.4.22) इति शक्तिग्राहक-शास्त्रतः संख्यारूपद्वित्व-साहचर्यात् संख्यारूपमेव एकत्वम्, न तु तादृश-प्रतियोगित्वाभावरूपम्। अतः अवच्छेदकत्वपर्यन्तानुधावनम्।

**अत एव** = विशिष्ट-एकत्वस्य एकवचनार्थत्वादेव। **'पशुना यजेत' इत्यादौ** = 'पशुना यजेत' इति वाक्यजन्यबोधे। एकपशुकरणको याग इष्ट-साधनमिति बोधः। तादृशैकत्वस्य = स्वसजातीयनिष्ठभेदप्रतियोगितानवच्छेदक-त्वरूप-एकत्वस्य। **न अदृष्टसिद्धिरि**ति। अनेकपशुसत्त्वे स्वसजातीय-पश्वन्तर-निष्ठभेदप्रतियोगितावच्छेदकत्वस्य एव एकत्वे सत्त्वाद् इति भावः।

**VV-D. 2.2.11:** ननु स्वसजातीयत्वं स्ववृत्तिधर्मवत्त्वम्। स च धर्मो यदि पशुत्वं तदा अप्रसिद्धिः तदवस्था एव इत्यत आह **साजात्यं चे**ति। **स्वसमभिव्याहृते**ति। स्वपदं स्वबोधकपदपरम्। 'अत्र घटोऽस्ति' इत्यादौ स्वं = प्रकृत्यर्थो, घटादिः। तद्-बोधक-घटपद-समभिव्याहृतम् अत्र-पदम्, अस्ति-पदं च। तदर्थः एतद्देशवृत्तित्वम्। तत्संसर्गः स्वरूप-सम्बन्धः। संसर्गित्वं घटे सामाना-धिकरण्य-सम्बन्धेन। तत्संसर्गित्वविशिष्टं यत्प्रकृत्यर्थतावच्छेदकं घटत्वं, तद्वत्त्व-रूपेण इत्यर्थः। तथा च एतद्देशे एक-घटसत्त्वे एतद्देशवृत्तित्वविशिष्ट-घटत्वेन रूपेण घटसजातीयः एतद्-घट एव। तन्निष्ठभेदप्रतियोगितानवच्छेदकत्वस्य तदेकत्वे सत्त्वात् तादृश-एकत्वम् एकवचनार्थः।

'पशुना यजेत' इत्यत्र स्वं = पशुः, तत्सजातीयः स एव। तथा हि स्वं = पशुः, तत्समभिव्याहृत-यज्-धात्वर्थ-यागसंसर्गित्व-विशिष्ट-पशुत्ववत्त्व-रूपेण स्वस्य एव स्वसजातीयत्वात्। तन्निष्ठभेदप्रतियोगितानवच्छेदकत्वस्य पशुत्वगत-एकत्वे सत्त्वाद् एकत्वम् उपपन्नम्।

यद्यपि उक्तरूपेण साजात्यं यागान्तरकरणपशु-साधारणम्। तत्तद्-यागकरणत्वं च न समभिव्याहृतपदार्थः। तेन रूपेण पदाद् अनुपस्थितेः। तथापि स्वाश्रयनिष्ठभेदप्रतियोगि-पश्वकरणकत्व-स्वाश्रयपशुकरणत्व-उभय-सम्बन्धेन एकत्वस्य यागे अन्वयात् न अनुपपत्तिः। **अतः** = ईदृशसाजात्यविवक्षणात्। **तत्र** = 'घटोऽस्ति' इत्यादौ। **तस्य चे**ति। एतद्देशवृत्तित्वविशिष्ट-संसर्गित्व-विशिष्ट-घटत्ववद्वृत्ति-भेदप्रतियोगिता-अनवच्छेदकत्वस्य च इत्यर्थः। **प्रसिद्धत्वात्** = एतद्घटगत-एकत्वे प्रसिद्धत्वात्। ननु एतद्देशे बहुघटसत्त्वकाले 'अत्र घटोऽस्ति' इत्यस्य का गतिः? घटसजातीय-एतद्देशवृत्ति-घटान्तरनिष्ठ-भेदप्रतियोगिता-वच्छेदकस्य एव एतद्वृत्ति-एकत्वे सत्त्वाद् इत्यत आह **एतद्देशे** इति। **तादृशवाक्य-**

**प्रयागस्तु** इति। 'अत्र घटोऽस्ति' इति वाक्यप्रयोगस्तु इत्यर्थः। **जात्येकत्वादेव** इति। जातावेकत्वान्वयादेव इत्यर्थः। एवकारेण व्यक्तौ एकत्वान्वयव्यवच्छेदः।

अत्रेदं बोध्यम्। यत्र परम्परया स्वाश्रयप्रकृत्यर्थतावच्छेदकवत्त्व-सम्बन्धेन प्रकृत्यर्थे एकत्वान्वयः। तत्र स्वसमभिव्याहृतपदार्थ-संसर्गित्व-रूपेणैव साजात्यं विवक्षणीयम्। न तु प्रकृत्यर्थतावच्छेदकवत्त्वस्यापि प्रवेशः। (परम्परायां तस्य अप्रवेशात्)। यत्र एकघटसत्त्वे 'घटोऽस्ति' इत्यादौ साक्षात्-सम्बन्धेन प्रकृत्यर्थे एकत्वान्वयः, तत्र ग्रन्थकृदुक्तरूपेण तथा।

एतेन 'सम्पन्नो व्रीहिः' इत्यत्र एकत्वविवक्षायाः किं फलम् ? न तावद् यव-व्रीहि-उभय-सम्पन्नदशायां 'सम्पन्नौ व्रीहियवौ' इत्येव साधुः। न तु 'सम्पन्नो व्रीहिः' इत्यपि साधुरिति वक्तुं शक्यते। प्रकृत्यर्थतावच्छेदक-व्रीहित्वस्य यवादौ असत्त्वात्। यव-सम्पत्ति-दशायामपि स्वसजातीयनिष्ठ-भेदप्रतियोगितानवच्छेदक-एकत्वस्य स्वाश्रयव्रीहित्ववत्त्व-सम्बन्धेन प्रकृत्यर्थे व्रीहौ सत्त्वात् प्रयोगप्रामाण्यस्य अवारणाद् इति निरस्तम्। व्रीहि-यव-सम्पत्ति-दशायां 'सम्पन्नो व्रीहिः' इत्यत्र समभिव्याहृतपदार्थः सम्पन्नः तत्प्रतियोगिक-तादात्म्य-संसर्गित्व-विशिष्ट-यववृत्ति-भेदप्रतियोगितावच्छेदकत्वस्य व्रीहित्वगतैकत्वे सत्त्वेन अनवच्छेदकत्वाप्रसिद्ध्या अप्रामाण्यम् उपपद्यते। केवल-व्रीहि-सम्पन्नदशायां तु साजात्यं व्रीहावेव। तन्निष्ठभेदप्रतियोगितानवच्छेदकत्वस्य व्रीहित्वगतैकत्वे सत्त्वेन प्रामाण्यमुपपद्यते। तथा च यव-सम्पत्ति-निरासार्थम् एकवचनप्रयोग इति ध्येयम्।

**VV-D. 2.2.12:** कस्यचिन्मतमाह **यत्त्विति**। भावाख्यातस्थले कर्तृ-कर्म-कारकाणां तिङ्वाच्यत्वाभावाद् भावाख्यातप्रयोगस्य न संभवः। युष्मत्पदार्थ-वृत्ति-युष्मत्त्वे एवम् अस्मत्पदवाच्यवृत्ति-अस्मत्त्वे वा तिङर्थसंख्या-समानाधिकरणे सति मध्यमोत्तमपुरुषौ स्तः। एवं युष्मत्त्व-अस्मत्त्व-असमानाधिकरणे कर्तृत्वे तिङर्थसंख्या-समानाधिकरणे सति प्रथमपुरुषो भवति इति अभियुक्तोक्तेः।

यद्यपि वर्तमानत्वाद्यर्थकतया भावाख्यातप्रयोग आवश्यकः तथापि "यं यं भावनान्वेति तं तं संख्यानुधावति" इत्याचार्योक्त्या भावनान्वयिनि संख्यान्वय-नियमेन अत्र भावनान्वयविरहेण संख्यान्वयविरहाद् इत्याह **एकत्वाविवक्षायामपि** इति। इदं तु बोध्यम्। 'चैत्रेण गम्यते ग्राम' इत्यत्र चैत्रे आख्यातार्थ-संख्यान्वय-वारणाय विशेष्यतासम्बन्धेन आख्यातार्थसंख्याप्रकारक-शाब्दबोधं प्रति विशेष्यता-सम्बन्धेन प्रथमान्तपदजन्योपस्थितेः कारणता वाच्या। न च चैत्रे संख्यान्वये का क्षतिः? तथा सति 'चैत्रेण ग्रामौ गम्येते' इति प्रयोगानुपपत्तिः। एकत्वावरुद्धे कर्तरि आख्यातार्थद्वित्वान्वयासम्भवात्। कर्तृगतसंख्याभिधाने तृतीयानुपपत्तेश्च। इत्थं च **'चैत्रेण स्थीयते'** इत्यत्र भावाख्यातस्थले आख्यातार्थभावनाया अन्वयो न

सम्भवति। प्रथमान्तपदजन्योपस्थितेः अभावात्। न च भावाख्यातस्य सार्थकत्वाय कार्यतावच्छेदककोटौ आख्याते भावाख्यातभिन्नत्वं निवेशनीयम्। एवं च चैत्रे आख्यातार्थ-एकत्वान्वये बाधकाभाव इति वाच्यम्। 'चैत्र-मैत्राभ्यां स्थीयते' इत्यादौ द्वित्वावरुद्धयोः चैत्र-मैत्रयोः एकत्वान्वय-असम्भवात्, तृतीयानुपपत्तेश्च इति। **नापि धात्वर्थे**। धात्वर्थे संख्यान्वये आख्यातस्य निराकाङ्क्षत्वात्। तच्च अनुपदमेव स्फुटीभविष्यति। एवं च अन्यत्र आख्यातस्य संख्यावाचकत्वेऽपि यथा भावाख्यातस्थले आख्यातस्य न संख्यावाचकत्वविवक्षा तथा सु-विभक्तेः एकत्व- वाचकत्वेऽपि 'सम्पन्नो व्रीहिः' इत्यादौ न एकत्वविवक्षा इत्याशयेनाह **संख्याया अविवक्षणेऽपीति**। **जात्येकत्वपरतया** = जातावेकत्वान्वयपरतया। **तत्र** = 'सम्पन्नो व्रीहिः' इत्यादौ। **समर्थनेन** = एकत्वसमर्थनेन। 'प्रत्ययानां प्रकृत्यर्था- न्वित-स्वार्थबोधकत्व'-नियमभंगापत्तेः इति भावः।

तन्मतं निरस्यति। **तदपि अकिञ्चित्करमिति**। **गत्यन्तरविरहेणेति**। उक्तरीत्या अविवक्षातिरिक्त-गतिविरहेण इत्यर्थः। **निरर्थकत्वोपगमादिति**। न च कालबोधकत्वात् कथं निरर्थकत्वमिति वाच्यम्। संख्याविषयक-बोधजनकत्व-प्रकारक-इच्छाविशेष्यत्वाभाव-उपगमादिति तदर्थात्। भावाख्यातस्थले 'स्थीयते' इत्यादौ धात्वर्थे स्थितावेव एकत्वाऽन्वयो वाच्यः। तच्चैकत्वं स्थितित्व-व्याप्यानां द्विकर्तृक-स्थितित्वे बहुकर्तृकस्थितित्वानां व्यावृत्त्यर्थमेव वाच्यम्। व्यावृत्तिश्च न सम्भवति व्यावर्त्यानामनवगमादिति एकत्वविशेषणं व्यर्थम्। अतो भावाख्यातस्य संख्या अर्थो नास्ति। 'स्थीयते' इत्येतावन्मात्रं शृण्वतः कतिपयैः 'स्थीयते' इति प्रश्नासंगतिश्च। तथाहि 'स्थीयते' इत्यत्र आख्यातार्थक-एकत्वस्य धात्वर्थस्थितौ अन्वयाङ्गीकारे एका स्थितिः इत्यन्वयबोधो वाच्यः। तत्र एकस्यां स्थितौ 'कतिपयैः' इति जिज्ञासा-विषयीभूत-बहुनिष्ठ-कृतिजन्यत्वं बाधितम्। एवं स्थितौ द्वित्व-बहुत्वयोरपि सम्भवात् 'स्थीयेते, स्थीयन्ते' इति प्रयोगापत्तिरपि द्रष्टव्या। तस्माद् आख्यातार्थसंख्यानन्वयेन स्थितिरूपधात्वर्थे तृतीयान्तोपस्थाप्यकर्तुः तृतीयार्थ-कृतिद्वारा संख्याया अन्वयाभ्युपगमाद् उक्तप्रश्नसंगतिः बोध्या।

**तत्र चेति**। 'सम्पन्नो व्रीहिः' इत्यादौ तु इत्यर्थः। **सार्थकत्वसंभवे** = संख्याविषयक-बोधजनकत्व-प्रकारक-इच्छीयविशेष्यत्वोपगमसम्भवे। भावाख्यात-स्थलवद् अत्र अविवक्षाकारणं नास्ति। द्वयं हि अविवक्षाहेतुः - (१) विवक्षणीयस्य असम्भवनिश्चयः (२) तत्प्रयोजनत्व-अप्रतिसन्धानं च। अत्र न एकस्यापि अवसर इति तत्त्वम्।

**तत्परित्यागस्य** = सार्थकत्वपरित्यागस्य। अथ सम्पन्नव्रीहिमात्र-बुबोधयिषया प्रयुक्ते 'सम्पन्नो व्रीहिः' इति वाक्ये "न केवलं प्रत्ययः प्रयोक्तव्यः नापि कवेला प्रकृतिः" इति न्यायेनापि प्रत्ययः प्रयोक्तव्यः, परन्तु विभक्त्यर्थस्य अबुबोधयिषिततया यस्मिन्कस्मिंश्चित् प्रयोक्तव्ये औत्सर्गिकम् एकवचनं प्रयुज्यते। तथा च न एकदेशान्वयनियमभङ्गोऽपि। एवं च एकत्वस्य अविवक्षितत्वं दुर्वारम् इत्यत आह **सति तात्पर्ये** इति। अत्र सु-पदमेकत्वं बोधयतु इति तात्पर्ये इत्यर्थः। **तद्-बोधस्य** = संख्याबोधस्य। **आनुभविकत्वाच्चे**ति। एकत्ववद्व्रीहित्वावच्छिन्नः 'सर्वोऽपि व्रीहिः सम्पन्न' इति बोधस्य अनुभव-सिद्धत्वात् च इत्यर्थः।

**VV-D. 2.2.13:** ननु 'असति विशेषानुशासने विशेष्य-विशेषण-वाचक-पदयोः समानवचनकत्वम्' इति नियमस्य समानलिङ्गकस्थले एव अभ्युपगमेन 'वेदाः प्रमाणम्' इत्यस्य साधुत्वोपपादनेऽपि। 'त्रयः समुदिता हेतुः' इति **काव्यप्रकाश**व्याख्याया असंगतिः दुर्वारैव इत्यत आह। **एवमि**ति। अत्र 'त्रयः' इति पदं विशेष्यवाचकम्। तदुत्तर-जस्-विभक्ति-तात्पर्यविषयीभूत-बहुत्वसंख्या-विरुद्ध-एकत्वसंख्या-हेतु-पदोत्तर-सु-विभक्त्या विवक्षितत्वाद् एव असमानवचन-कत्वोपपत्तिः। **कार्योत्पादप्रयोजकतावच्छेदके**ति। **कार्यं** = कवित्वम्। **तस्योत्पादः** = उत्पत्तिः। **तत्प्रयोजकता** = शक्ति-निपुणता-अभ्यासानां तदवच्छेदक-इत्यर्थः। **तादृशे**ति। कवित्वोत्पत्ति-प्रयोजकतावच्छेदकेत्यर्थः। कवित्वोत्पत्तिप्रयोजकता-वच्छेदकीभूतं यत् शक्ति-निपुणता-अभ्यास-गतसमुदायत्वं तदन्वितमिति भावः। **एकवचनार्थ इति**। तथा च एकत्वविशिष्टं यत्कार्योत्पादप्रयोजकतावच्छेदक-समुदायत्वं तादृशसमुदायत्ववदभिन्नाः त्रय इति बोधः।

अथ हेतु-पदस्य कार्योत्पादप्रयोजकतावच्छेदकसमुदायत्वावच्छिन्ने लक्षणा व्यर्था। तादृशसमुदायत्वे एकत्वान्वयश्च व्यर्थः। हेतुत्वे एव एकत्वान्वय-सम्भवात्। न च हेतुतावच्छेदकं शक्तित्वं निपुणतात्वम् अभ्यासत्वं चेति त्रयम्। एवं च हेतुतावच्छेदकभेदाद् हेतुत्वं भिन्नम् एवेति न तत्र एकत्वान्वयसम्भव इति वाच्यम्। उक्तत्रयाणां समुदायत्वेन एकहेतुत्वस्य सम्भवात्। अन्यथा समुदिता इत्यस्य वैयर्थ्यापत्तेः। तथा च समुदायत्वरूप-एकधर्मावच्छिन्न-हेतुताया आश्रय-भेदेऽपि अभिन्नत्वात्। इत्थम् एव एकैकस्मात् कार्योत्पत्ति-व्यतिरेकलाभेन एकत्व-विवक्षाया नानर्थक्यम् इति चेत्? न। समुदायत्वस्य एकविशिष्टपरत्वरूपतया विशेष्यविशेषणभावे विनिगमनाविरहेण गुरुतरानेककारणत्वापेक्षया शक्तित्वेन निपुणतात्वेन अभ्यासत्वेन च पृथक्पृथगेव कारणत्वात्। न च एवमेकैकशः कार्योत्पाद-प्रसङ्गः। घटं प्रति दण्डचक्रादेः परस्पर-सहकारित्वस्य शक्त्यादेः,

परस्परसहकारित्वोपगमात्। न च समुदिता इत्यस्य वैयर्थ्यम्। हेतुपदस्य तादृश-समुदायत्वावच्छिन्ने तात्पर्यग्राहकत्वात्। तथा च एकसमुदायत्वाश्रयाणाम् एव शक्त्यादित्रयाणां हेतुत्वमिति बोधनमेव एकत्वविवक्षायाः फलमिति ध्येयम्।

**अत एवे**ति। शक्त्यादित्रयाणां परस्परसहकारित्वेन त्रितयपर्याप्त-समुदायत्वस्य प्रयोजकतावच्छेदकत्वाद् एव इत्यर्थः। **तृणारणिमणिन्यायेने**ति। तृणारणिमणीन् अधिकृत्य प्रवृत्तो न्यायः। न्यायश्चात्र परस्परनैरपेक्ष्येण प्रत्येक-धर्मपुरस्कारेण कारणत्वसाधिका युक्तिः, तया इत्यर्थः। प्रयोज्यत्वं तृतीयार्थः। तस्य हेतुत्वेऽन्वयः। तथा च उक्तयुक्तिप्रयोज्यं यद्धेतुत्वं तच्छङ्कानिरास इति भावः। **तथासति**। तृणारणिमणिन्यायेन शक्त्यादीनां कारणत्वे सति। **एषां** = शक्ति-निपुणता अभ्यासानां। **एकैक-समवधानदशायां** = एषां मध्ये एकैकसत्त्व-काले। **कार्योत्पत्तेरावश्यकतया =** काव्योत्पत्तेः आवश्यकतया। तथा च शक्तित्वा-दिकमेव कार्योत्पाद-प्रयोजकतावच्छेदकं स्यादिति भावः। **प्रयोजकतानवच्छेदक-तये**ति। प्रयोजकतातिप्रसक्तत्वादिति भावः। **तेषां त्रयाणां** = शक्त्यादीनां त्रयाणाम्। **तथाविधे**ति। कार्योत्पादप्रयोजकतावच्छेदकेत्यर्थः। **एकसमुदायत्वा-श्रयत्वानुपपत्तेरि**ति। तथा च शक्तित्वादीनां प्रत्येकस्य हेतुतावच्छेदकत्वे हेतुतावच्छेदकभेदेन हेतुताया अपि भिन्नत्वात् तत्र स्वार्थैकत्वस्य अन्वयासम्भवाद् अविवक्षितत्वेन 'त्रयः समुदिता हेतुः' इत्यत्र असमानवचनकत्वानुपपत्तेरिति भावः।

**VV-D. 2.2.14:** विशेष्यविशेषणवाचकपदयोः समानलिङ्गकत्वेऽपि न समानवचनकत्वम् उक्तनियमानाक्रान्तत्वादित्याह **एवमिति**। **त्रितयनिष्ठस्य** = जात्याकृतिव्यक्तिनिष्ठस्य। **तत्र** = जात्याकृतिव्यक्तयः पदार्थ इत्यत्र। **विशेष्य-पदस्य** = विशेष्यवाचकजात्यकृतिव्यक्तिपदस्य। **विशेषणपदस्य** = विशेषण-वाचक-*पदार्थ*-पदस्य। **एकवचनान्ततोपपत्तिरि**ति। उक्तनियम-अनाक्रान्तत्वाद् इति भावः। तथा चात्र विशेष्यवाचकं जात्याकृतिव्यक्तिपदम्। एवं **जात्याकृतिव्यक्तय** इत्यत्र त्रितयनिष्ठस्य पदशक्तिरूपपदार्थत्वस्य एकत्वं विवक्षितमिति। तत्र विशेष्यपदस्य बहुवचनान्तत्वेऽपि विशेषणपदस्य एकवचनान्ततोपपत्तिः। तदुत्तर-जस्-विभक्तितात्पर्यविषय-बहुत्वसंख्याविरुद्ध-एकत्वसंख्या विशेषणवाचक-*पदार्थ*-पदोत्तर-सु-विभक्त्या विवक्षिता एवेति, न विशेष्यविशेषणवाचकपदयोः समान-वचनकत्वम्। तथा च एकत्व-विशिष्टं यत्पदशक्तिरूपपदार्थत्वं तद्वदभिन्नाः जात्याकृतिव्यक्तय इति बोधः।

**VV-D. 2.2.15:** अथ प्रमात्वान्यूनवृत्ति-धर्मावच्छिन्न-कारणत्वं प्रमाणत्वम्। प्रमात्वं च प्रमा-इत्यनुगतप्रतीति-सिद्धम्। तत्रैव एकत्वान्वयाय विभक्त्या एकत्व-

विवक्षा अस्तु इति चेत् ? न। प्रमात्वे एकत्वबोधं प्रति प्रमाणमित्यस्य निराकांक्षत्वात्। प्रवृत्तिनिमित्त-तदाश्रयान्यस्मिन् एकत्व-प्रकारकबोधं प्रत्येव प्रकृतिप्रत्ययानुपूर्वीरूप-आकाङ्क्षात्व-अभ्युपगमात्।

**VV-D. 2.2.16:** **तत्र** = देवतात्वे। **बहुवचनान्तते**ति। तथा च पितृ-पितामहादौ त्यागोद्देश्यत्वरूप-देवतात्वं भिन्नमेव। पितृत्वपितामहत्वादिरूप-उद्देश्यतावच्छेदकभेदेन उद्देश्यताभेदाद् देवतात्वे एकत्वान्वयस्य बाधितत्वाद् बहुवचनमिति भावः।

**VV-D. 2.3.1-2:** **स्वप्रकृतिकत्वं** चेति। **स्वप्रकृतिकविभक्ति-सजातीय-** (VV-2.2.1) इत्यत्र **स्वप्रकृतिकत्वं** चेत्यर्थः। **तादृशे**ति। स्वप्रकृतिकेत्यर्थः। **तथाविधे**ति। विशेष्यवाचकपदोत्तरत्वेन अनुसन्धीयमान-विभक्तिसजातीयेत्यर्थः। न **क्षतिः** = न समानवचनकत्वानुपपत्तिः। तथा च स्वप्रकृतिकत्वं न स्वाव्यवहितोत्तरत्वम्। तादृशविभक्तिकत्वमपि न तादृश-विभक्त्यव्यवहित-पूर्वत्वम् इति भावः।

**VV-D. 2.4.1:** **अथे**ति। **पदार्थोपस्थित्यादी**ति। नीलपदजन्यनीलोपस्थिति-घटपदजन्यघटोपस्थित्यादि-इत्यर्थः। आदिना अभेदसंसर्गक-नीलप्रकारक-घट-विशेष्यक-योग्यताज्ञानपरिग्रहः।

**अभेदाऽन्वयबोध** इति। अभेदसम्बन्धावच्छिन्न-नीलत्वावच्छिन्न-प्रकारता-निरूपित-घटत्वावच्छिन्न-विशेष्यता-शालि-बोधः कथं न जायते इति भावः। **सामग्र्या कार्यजनने**। उपस्थिति-योग्यताज्ञानादिना शाब्दबोधजनने। **उक्तनियम-भङ्गे**ति। स्वसमानविभक्तिकेन स्वाव्यहितपूर्ववर्त्तिना च पदेन उपस्थापितस्य एव अभेदान्वयबोध इति नियमभङ्गेत्यर्थः। **अकिञ्चित्करत्वादि**ति। अप्रति-बन्धकत्वादित्यर्थः। फलानुसारित्वात् कल्पनाया इति भावः। समाधत्ते **तथाविधा-न्वय-बोधौपयिके**ति। अभेदसंसर्गक-नीलप्रकारक-घटविशेष्यतान्वयबोध-जनक-इत्यर्थः। **आकाङ्क्षाविरहादि**ति। विशेष्यविशेषणवाचक-पदयोः समानविभक्तित्व-रूपाऽऽकाङ्क्षाविरहादिति भावः। आकाङ्क्षा दर्शयति। **तथाहीत्यादिना**। **तादृशान्वयबोधे** = अभेदसंसर्गक-नीलप्रकारक-घटविशेष्यक-बोधे। **प्रथमा-विभक्त्यन्ते**ति। इदमुपलक्षणम्। सु-विभक्त्यन्त-घटादिपदसमभिव्याहृत-सु-अन्त-नीलादिपदत्वं बोध्यम्। एवम्-आबन्त-घट-पदसमभिव्याहृत-इत्यादिक्रमेण एक-विंशति आकाङ्क्षा बोध्या। विनिगमना विरहेण सु-अन्त-नीलपद-समभिव्यहृत-इत्यादिक्रमेण एकविंशति आकाङ्क्षा अथापि बोध्या। एवं रीत्या व्यासस्थले द्वाचत्त्वारिंशदाकाङ्क्षा भवन्ति।

अत्रेदं बोध्यम्। अत्र प्रथमान्तत्वेन न प्रवेशः, प्रथमात्व-अज्ञानेऽपि शाब्दबोधोदयात्। नापि सुत्वादिना, घट इत्यानुपूर्वीमात्रज्ञानेऽपि शाब्दबोधो-

दयात्। किन्तु नील-इत्यानुपूर्वीविशिष्टस्य घट-इत्यानुपूर्वीविशिष्टस्य च समभिव्याहाररूपाऽऽकाङ्क्षाज्ञानं कारणम्। एवं 'नीलौ घटौ', 'नीलाः घटा' इत्यादावपि बोध्यम्। समभिव्याहारश्च पदविशिष्टपदत्वम्। वैशिष्ट्यं समासस्थले च घटपदाद्यव्यवहित-पूर्ववर्त्ति-नीलादिपदत्वं, नीलादिपदाऽव्यवहितोत्तरवर्त्ति- घटादिपदत्वं वा आकाङ्क्षा। स्वप्रयोज्यविषयता-निरूपितविषयता-प्रयोज्यत्व- स्वभिन्नत्व-उभयसम्बन्धेन। उक्तग्रन्थस्तु शिष्यव्युत्पादनार्थः। 'नीलश्चैत्रस्य घट' इत्यादौ 'नीलो घट' इत्यानुपूर्वीमद्वाक्यं कल्पयित्वा एव आकाङ्क्षा संपादनीया। अत एव आसत्तिरपि उपपद्यते। विनिगमकाभावात् समासस्थले आकाङ्क्षाद्वयम् आह **समासस्थले चेति**। अथ समासस्थले नीलपदाव्यवहितोत्तरवर्त्तिघटपदत्वादेः आकाङ्क्षात्वे पदार्थोपस्थित्यादि-कारणकलापसत्त्वे निर्विभक्तिक-'नीलघट'-इति एतावन्मात्रज्ञानेऽपि अभेदसंसर्गक-नीलप्रकारक-घटविशेष्यक-शाब्दबोधापत्तिः। नीलपदाव्यवहितोत्तर-घटपदत्वरूपाकाङ्क्षाज्ञानस्य सत्त्वात्। एतेन 'नीलघटः', 'नीलघटौ', 'नीलघटाः' इत्यादिविभक्त्यन्त-समुदाय-पर्याप्तानुपूर्वीणां कारणतावच्छेदकत्वापेक्षया समासस्थले नीलघटत्वरूपानुपूर्वी-प्रकारक-ज्ञानत्वेनैव कारणत्वे लाघवम्। उक्तं च '**नीलपदाव्यवहितोत्तरवर्तिघटपदत्वं घटापदाव्यवहितपूर्ववर्तिनीलपदत्वं वा आकाङ्क्षे**'ति निरस्तम्। तथा सति निर्विभक्तिक-नीलघटेति समुदायात् शाब्दबोधापत्तेरिति चेत्? न। अनुमिताविव शाब्दबोधेऽपि विधेयताया भाननियमेन समासस्थले नीलप्रकारक-शाब्दबोधो न भवति। उपसर्जनीभूत-नीलादिपदप्रयोज्य-विषयतायाः विधेयत्वासम्भवात्। विधेयीभवद् एकत्वादिप्रकारक-नीलघट-विशेष्यक-शाब्दबोधादेरेव समासोत्तरं प्रसिद्धतया तत्सामग्र्याः सविभक्तिक-नीलघटादि-पदघटितत्वेन निर्विभक्तिक-नीलघटादि-पदस्थले तादृशसामग्र्या अभावेन आपत्त्यभावात्। विधेयीभवन्-नीलादि-प्रकारकस्य घटविशेष्यक-शाब्दबोधस्य च व्यासस्थले एव प्रसिद्धत्वेन तत्सामग्र्याश्चापि उक्तस्थलेऽभावात्।

ननु उपस्थित्यादि-कारणकलापसत्त्वे नीलपदाव्यवहितोत्तरवर्त्ति-घटपदत्वरूप-आकाङ्क्षाज्ञानाद् अभेदसंसर्गक-नीलप्रकारक-घटविशेष्यक-शाब्दबोधापत्तिरिति चेत् ? न। व्यापकधर्मावच्छिन्ने कार्ये जननीये व्याप्यधर्मावच्छिन्नसामग्र्या अपेक्षिततया न उक्तापत्तिः। व्याप्यधर्मश्च 'नीलघट' इति ज्ञानाव्यवहितोत्तर-नीलघट-विशेष्यक-एकत्वप्रकारक-शाब्दबुद्धित्वम्। व्यापक-धर्मश्च नीलघट-पदज्ञानाव्यवहितोत्तर-नीलप्रकारक-घटविशेष्यक-बुद्धित्वम्।

**उक्तस्थले**। 'नीलस्य घट' इत्यत्र च। तादृश्याः = समासव्यासस्थलीयोभयविधायाः। **एकस्या अप्याकाङ्क्षाया विरहादिति**। चतुश्चत्त्वारिंशद् आकाङ्क्षासु मध्ये इत्यादिः। **नापत्तिरि**ति। न अभेदसंसर्गक-नीलप्रकारक-घटविशेष्यक-शाब्दापत्तिरित्यर्थः।

**VV-D. 2.4.2:** ननु 'नीलघट' इत्याकाङ्क्षाज्ञानविरहेऽपि 'नीलौ घटौ' इत्याकाङ्क्षाज्ञानाद् अभेदसंसर्गक-नीलप्रकारक-घटविशेष्यक-शाब्दबोधोत्पत्तेः। एवं 'नीला घटा' इत्यादितोऽपि। तथा च परस्परजन्ये व्यतिरेकव्यभिचार इत्यत आह **कार्यतावच्छेदककोटावि**ति। अव्यवहितोत्तरत्वनिवेशादिति। तथा च 'नीलो घट' इत्याकाङ्क्षाज्ञानाव्यवहितोत्तर-अभेदसंसर्गक-नीलप्रकारक-घटविशेष्यक-शाब्दबुद्धिं प्रत्येव 'नीलो घट' इत्याकाङ्क्षाज्ञानं कारणम्। अतो न व्यभिचारः। एवं च 'नीलो घट' इत्याकाङ्क्षाज्ञान-विशिष्ट-शाब्दबोधं प्रति 'नीलो घट' इत्याकाङ्क्षाज्ञानं कारणम्। वैशिष्ट्यं च स्वाव्यवहितोत्तरत्व-स्वसामानाधिकरण्य-उभयसम्बन्धेन। द्वितीयसम्बन्धनिवेशाद् एकस्य आकाङ्क्षा-ज्ञानसत्वे अपरस्य न शाब्दबोधः।

**उक्ताकाङ्क्षाज्ञानयोरि**ति। समासव्यासस्थलीय-उक्ताकाङ्क्षा-ज्ञानयोः इत्यर्थः। **परस्परबोधे**। समासस्थलीयबोधे व्यासस्थलीय-आकाङ्क्षा-ज्ञानस्य व्यासस्थलीय-बोधे समासस्थलीयाकाङ्क्षा-ज्ञानस्य इत्यर्थः। **न व्यभिचारः** = न व्यतिरेकव्यभिचारः। **कार्यतावच्छेदककोटौ अव्यवहितोत्तरत्वनिवेशाद्** इत्यस्य अन्वयः। इदमुपलक्षणम्। समासस्थलेऽपि 'नीलघटः', 'कृष्णघटः', 'श्यामकलशः' इत्यादि पर्यायवाचकशब्द-घटिताकाङ्क्षाज्ञानजन्य-शाब्दबोधे परस्परव्यभिचारवारणाय कार्यतावच्छेदककोटावव्यवहितोत्तरत्वं निवेश्यम्। एवं 'नीलघटः', 'श्यामकलशः' इत्यादि पर्यावाचकवाक्य-घटिताकाङ्क्षाज्ञानजन्य-शाब्दबोधे व्यभिचारवारणाय, तथा 'नीलो घटः', 'नीलौ घटौ', 'नीला घटाः' इत्याद्यकाङ्क्षाज्ञानजन्य-शाब्धबोधे परस्परव्यभिचार-वारणाय च स्वन्त-नीलपद-समभिव्याहृत-स्वन्त-घटपदत्वरूप-आकाङ्क्षाज्ञानाव्यवहितोत्तर-अभेद-संसर्गक-नीलप्रकारक-घटविशेष्यक-शाब्दबोधं प्रति तादृशाकाङ्क्षाज्ञानं कारणम्। एवम् आबन्तनीलपदसमभिव्याहृत-आबन्तघटपदत्वरूप-आकाङ्क्षाज्ञान-अव्यवहितोत्तर-अभेदसंसर्गक-नीलप्रकारक-घटविशेष्यक-शाब्दबोधं प्रति तादृशाकाङ्क्षाज्ञानत्वेन इत्यादिरीत्या एकविंशतिसंख्यका अपराश्च स्वन्तघटपद-समभिव्याहृत-स्वन्त-नीलपदत्वेन इत्यादिरीत्या एकविंशतिसंख्यकाः कार्यकारणभावाः व्यासस्थले बोध्याः।

**VV-D. 2.5.1:** समस्तासमस्तोभयसाधारणैकामाकाङ्क्षामाह **यत्त्विति**। **समासव्याससाधारणमिति**। समस्तासमस्तोभयवृत्तीत्यर्थः। **विशेषणपदस्य** इति = विशेषणवाचकपदस्येत्यर्थः। निष्ठत्वं षष्ठ्यर्थः। **विरुद्धविभक्तिराहित्यमेवेति**। विशेष्यवाचकपदोत्तरविभक्ति-विरुद्धविभक्ति-राहित्यम् एव इत्यर्थः। एवकारेण उक्तचतुश्चत्वारिंशदाकाङ्क्षाणां व्यवच्छेदः। विरुद्धविभक्तिराहित्यं परिष्करोति। **विशेषणपदस्येति** = विशेषणवाचकपदस्य इत्यर्थः। निष्ठत्वं षष्ठ्यर्थः। अन्वयश्च अस्य अप्रकृतित्वे। विशेष्यवाचकपदं अप्रकृतिर्यस्याः एवम्भूता या विभक्तिः तदप्रकृतित्वमर्थः। **तादृशान्वयबोधौपयिकेति**। अभेदसंसर्गक-नीलप्रकारक-घटविशेष्यक-शाब्दबोधजनिका इत्यर्थः। तथा च विशेषणवाचकपद-निष्ठ-विशेष्यवाचकपदाप्रकृतिकविभक्ति-अप्रकृतित्वं तादृशशाब्दबोधजनिका आकाङ्क्षा इति समुदितार्थः। 'नीलो घट' इत्यत्र विशेष्यवाचकं घटपदं तदप्रकृतिका या द्वितीयादिविभक्तिः तदप्रकृतित्वं विशेषणवाचक-नीलपदेऽस्ति। एवं 'नीलघट' इत्यत्रापि विशेष्यवाचकं घटपदं तदप्रकृतिका द्वितीयादिविभक्तिः, तदप्रकृतित्वं नीलपदेऽस्ति, नीलपदोत्तरविभक्तेरभावात्। 'नीलस्य घट' इत्यादौ तु विशेष्य-वाचक-घटपद-अप्रकृतिका या षष्ठीविभक्तिः तत्प्रकृतित्वस्यैव नीलपदे सत्त्वात् न आकाङ्क्षा।

न चात्र नञ्-द्वयोपादानं किमर्थम् ? विशेष्यवाचकपदप्रकृतिक-विभक्तिप्रकृतित्वस्यैव सम्यक्त्वादिति वाच्यम्। 'नीलघट' इत्यादौ आकाङ्क्षा-विरहप्रसंगात्।

ननु विनिगमनाविरहाद् विशेष्यवाचकपदनिष्ठ-विशेषणवाचकपद-अप्रकृतिकविभक्ति-अप्रकृतित्वरूपापि आकाङ्क्षा वक्तुं शक्यते। 'नीलो घट' इत्यत्र विशेषणवाचक-नीलपदाप्रकृतिका या द्वितीयादिविभक्तिः तदप्रकृतित्वं विशेष्यवाचकपदेऽस्ति। तथा च न परस्परजन्ये व्यभिचारवारणाय कार्यता-वच्छेदक-कोटौ अव्यवहितोत्तरत्वनिवेश आवश्यक इत्यत आह **विशेष्यवाचकपद-निष्ठेति**। **न तथा**। न अभेदसंसर्गक-नीलप्रकारक-घटविशेष्यक-शाब्दबोध-जनिका आकाङ्क्षा इत्यर्थः। **असम्भवात्** = अभावात्। 'नीलघटम्' इत्यादौ विशेषणवाचक-नीलपदाप्रकृतिका या द्वितीयाविभक्तिः तत्प्रकृतित्वस्यैव घटपदे सत्त्वादिति भावः। **विशेषणवाचकपदाप्रकृतिका** इत्यस्य विशेषणवाचकपदो-त्तरत्वेन अप्रतिसन्धीयमाना इत्यर्थकरणेन 'नीलघट' इत्यत्र अनुपपत्तिविरहाद् द्वितीयान्तानुसरणम्। तदपि प्रथमान्तेन कर्मधारय इति मतेन। तेन 'नीलघटम् आनय' इत्यत्रापि नीलं च तं घटं चेति समासाश्रयणे अनुपपत्तिविरहेऽपि नासंगतिः।

**VV-D. 2.5.2:** **यत्तु** मतं निरस्यति। **तदसदिति**। **तादृशेति**। विशेष्यवाचके-त्यर्थः। तथा च विशेषणवाचकपदनिष्ठ-विशेष्यवाचक-पदानुत्तरविभक्ति-अप्रकृतित्वरूपं विरुद्धविभक्तिराहित्यमाकाङ्क्षेति भावः। ननु तस्या न सम्भवः। विशेष्यवाचक-घटपदानुत्तरा नीलपदोत्तर-सु-विभक्तिः, तत्प्रकृतित्वस्यैव नीलपदे सत्त्वात्। उच्चारणभेदेन नीलपदोत्तर-सुविभक्तेः घटपदोत्तर-सु-विभक्तिभिन्नत्वात्, 'सुन्दरं दधि' इत्यादौ विशेष्यवाचक-दधिपदोत्तर-विभक्तेः अप्रसिद्धेश्च आह - **तदुत्तरत्वेनेति**। विशेष्यवाचकपदोत्तरत्वेन इत्यर्थः। **अप्रतिसन्धीयमानत्वस्येति**। अस्य नीलादिपद-समभिव्याहृतविभक्तौ सत्वादित्यनेनाऽन्वयः। तत्र हेतुमाह। **घटपदसमभिव्याहृतविभक्तिभिन्नतयेति**। तथा च विशेष्यवाचकपदोत्तरत्वेन अप्रतिसन्धीयमान-विभक्तिप्रकृतित्वरूपं विरुद्धविभक्तिराहित्यमपि 'नीलो घट' इत्यादौ न संभवति। विशेष्यवाचक-घटपदोत्तरत्वेन अप्रतिसन्धीयमान-नील-पदोत्तर-सु-विभक्तिप्रकृतित्वस्यैव नीलपदे सत्त्वाद् असम्भव इति भावः। एतेन 'वेदाः प्रमाणम्' इत्यत्रैव विशेष्यवाचक-वेदपदाप्रकृतिक-सु-विभक्तिप्रकृतित्वस्य प्रमाण-पदे सत्त्वाद् आकाङ्क्षानुपपत्तिः कथं नोक्तेति शङ्का समाहिता। असम्भवेन तस्या अपि संग्रहात्।

**VV-D. 2.6.1:** विभक्तीनां भेदेऽपि विभक्तिविभाजक-प्रथमात्वादीनाम्। भेदात् तद्-घटितस्य एव आकाङ्क्षात्वे नोक्तानुपपत्तिः इत्याशङ्कते। **अथेति**। विशेष्य-वाचकपदोत्तरस्मिन् अवृत्तिः यो विभक्तिविभाजको धर्मः तद्वती या विभक्तिः स्वाव्यवहितपूर्वत्वसम्बन्धेन तद्राहित्यस्य विशेषणवाचकपदे विवक्षणादित्यर्थः। **न दोषः** नोक्तापत्त्यनुपपत्तिः। तथा हि 'नीलो घट' इत्यत्र विशेष्यवाचकं घटपदं तदुत्तरस्मिन् अवृत्तिः यो विभक्तिविभाजको धर्मो द्वितीयात्वादिः तद्वद्द्वितीयादि-विभक्तिराहित्यं नीलपदे। 'नीलघटमानय' इत्यादावपि विशेष्यवाचकघटपदो-त्तरस्मिन् अवृत्ति-तृतीयात्वरूप-विभक्तिविभाजकधर्मवत्-तृतीया-राहित्यं नीलपदे। 'नीलस्य घट' इत्यादौ तु विशेष्यवाचक-घटपदोत्तरस्मिन् अवृत्ति-षष्ठीत्वरूप-विभक्तिविभाजक-धर्मवत्-षष्ठीविभक्तिराहित्यस्य नीलपदे असत्त्वात् न आपत्तिः, अभेदसंसर्गक-नीलप्रकारक-घटविशेष्यक-शाब्दबोधस्येति।

**VV-D. 2.6.2:** समाधत्ते। **विभक्तित्वादिकमजानत** इति। विभक्तित्वादिज्ञान-शून्यस्य इत्यर्थः। विभक्तित्वज्ञानविरहेऽपि आनुपूर्वीज्ञानवतः शाब्दबोधो भवति, स न स्याद् इति भावः। **तादृशधर्मज्ञानासम्भवादिति**। विभक्तित्व-ज्ञानाभावेन विभक्तित्वघटित-विशेष्यवाचक-पदोत्तरावृत्ति-विभक्तिविभाजक-धर्मज्ञानासम्भवाद् इत्यर्थः। **शाब्दबोधानुपपत्तिरिति**। आकाङ्क्षाज्ञानाभावाद् इति भावः।

न च विशेष्यवाचकपदोत्तरावृत्तित्वेनैव धर्मः प्रवेश्यताम्, किं विभक्ति-विभाजकत्वनिवेशेन? तथा च न विभक्तित्वज्ञानापेक्षेति वाच्यम्। नीलादिपदोत्तर-स्वादिनिष्ठ-तद्व्यक्तित्वमादाय आकाङ्क्षानुपपत्तेः। नीलादिपदोत्तर-स्वादिनिष्ठ-तद्व्यक्तित्वस्य घटापदोत्तर-स्वादिव्यक्तौ अवृत्तित्वात्।

न च विशेष्यवाचक-पदोत्तरावृत्ति-श्रावणप्रत्यक्ष-विषयतावच्छेदक-धर्मवद्-विभक्तिराहित्यमेव उच्यताम्, तद्व्यक्तित्वस्य श्रावणप्रत्यक्षविषयता-अनवच्छेदकत्वाद् वारणम्। विभक्तित्वाद्यप्रवेशाच्च तदज्ञानदशायां न अनुपपत्तिरिति वाच्यम्। 'नीलो घट' इत्यत्र सु-पदयोः तार-मन्द-रूपत्वे श्रावण-प्रत्यक्षविषयतावच्छेदक-तारत्वजातिम् आदाय आकाङ्क्षानुपपत्तेः।

अथ विशेष्यवाचकपदोत्तरावृत्ति-विभक्तिविभाजकत्व-उपलक्षित-धर्मवद्-विभक्त्यभावज्ञानस्य विशेष्यवाचकपदोत्तरावृत्तिनिष्ठा या विभक्तिविभाजकत्व-समानाधिकरणविषयता तन्निरूपित-विभक्तिनिष्ठ-विषयता-निरूपिताभावनिष्ठ-विषयता-निरूपित-विशेषणवाचकपदनिष्ठ-विषयताक-ज्ञानत्वेन कारणत्वमस्तु। एवं च विभक्तित्वाज्ञानेऽपि न शाब्दबोधानुपपत्तिरिति चेत्? न। ईदृश-अभाव-ज्ञानेऽपि केवलानुपूर्व्यवच्छिन्नज्ञानेऽपि शाब्दबोधोत्पत्तेः। अत एव विभक्तित्वा-दिकम् इत्यत्र आदिपदमुपात्तम्।

**VV-D. 2.6.3:** अथ उक्तविभक्तिराहित्यज्ञानं नापेक्षणीयम्, येन विभक्तित्व-ज्ञानापेक्षा स्यात्, किन्तु वस्तुतो विभक्तिराहित्यम् अपेक्षणीयम्। तथा च न उक्तानुपपत्तिः इत्यतो दोषान्तरम् आह '**नीलो घट' इत्यादावपी**ति। **सु-पदस्ये**ति। नीलादि-पदोत्तरेत्यादिः। **तादृशबोधस्ये**ति। अभेदसंसर्गक-नीलप्रकारक-घट-विशेष्यक-बोधस्य इत्यर्थः। **अनुदयात्** = अनुत्पादात्। अन्वयव्यभिचारादिति शेषः। अस्य स्वरूपतो विभक्तिराहित्यस्य अप्रयोजकत्वाद् इत्यनेन अन्वयः। आपत्तिम् उक्तानुपपत्तिमाह **'नीलस्य घट' इत्यादावि**ति। **शाब्दबोधोत्पत्त्या**। अभेदसंसर्गक-नीलप्रकारक-घटविशेष्यक-शाब्दबोधोत्पत्त्या व्यतिरेकव्यभिचाराद् इति शेषः। **स्वरूपतः** वस्तुतः। अज्ञातस्येति यावत्। **विरुद्धविभक्तिराहित्यस्ये**ति। उक्ताकाङ्क्षाया इत्यर्थः। **अप्रयोजकत्वात्** अकारणत्वात्। इत्थं न विरुद्धविभक्ति-राहित्यज्ञानस्यैव कारणत्वे विभक्तित्वादिकमजानतः पुरुषस्य विशेष्यवाचक-पदोत्तरावृत्ति-विभक्तिविभाजक-धर्मज्ञानासम्भवात् 'नीलो घट' इति वाक्याद् अभेदसंसर्गक-नीलप्रकारक-घटविशेष्यक-शाब्दबोधानुपपत्तिः दुर्वारैवेति ध्येयम्।

**VV-D. 2.6.4:** विरुद्धविभक्ति-राहित्यज्ञानस्य कारणत्वेऽपि नोक्तशाब्दबोध-अनुपपत्तिः इत्याशङ्कते **अथे**ति। **द्विविधबोधसाधारणमि**ति = समासव्यास-साधारणमित्यर्थः। तथा च पृथक् पृथगाकाङ्क्षाभ्युपगमे गौरवमिति भावः।

**स्वोत्तरेति**। **स्वम्** = विशेष्यवाचकपदम्। वैशिष्ट्यं च सामानाधिकरण्यसम्बन्धेन। तथा च नीलादिपदविशिष्ट-स्वन्तघटादिपदत्वम् आकाङ्क्षा। वैशिष्ट्यं च स्वोत्तर-सु-पदभिन्न-पदानुत्तरत्व-स्वोत्तरत्व-उभय-सम्बन्धेन। तथा 'नीलो घट' इत्यत्र स्वं नीलपदं, तदुत्तर-सु-पदभिन्नं पदं घटपदं, तदनुत्तरत्वं स्वोत्तरत्वमपि घटपदेऽस्ति। 'नीलो घट' इत्यत्रापि स्वपदग्राह्य-नीलपदोत्तर-सु-पदभिन्नं घटपदं, तदनुत्तरत्वं घटपदे। 'नीलौ घटौ' इत्यादौ च स्वोत्तर-औ-पदभिन्न-पदानुत्तरत्वं, स्वोत्तरत्व-उभयसम्बन्धेन नीलादि-पदविशिष्ट-आबन्त-घटपदत्वं घटपदे। एवमन्यत्राप्यूह्यम्। 'नीलस्य घट' इत्यत्र स्वपदग्राह्य-नीलपदोत्तर-ङस्-पदभिन्नपदानुत्तरत्व-स्वोत्तरत्व-उभय-सम्बन्धेन नीलपदविशिष्ट-ङसन्तघटपदत्व-रूपाकाङ्क्षाविरहात् न आपत्तिः।

अत्र स्वोत्तर-सु-पदभिन्नपदानुत्तरत्वानुक्तौ 'नीलः पटः', 'पीतो घट' इत्यादौ नील-घटयोः आकाङ्क्षापत्तिः। स्वोत्तरत्वानुक्तौ उक्तस्थले पीत-पटयोः आकाङ्क्षापत्तिः। घटपदे स्वन्तत्वानुक्तौ 'नीलो घटा' इत्यादौ आकाङ्क्षापत्तिः, अतः तदुपादानम्।

**VV-D. 2.6.5:** समाधत्ते नेति। **'नीलघटरूपम्' इत्यादीति**। घटस्य रूपं घटरूपम्, इति षष्ठीतत्पुरुषोत्तरं, नीलं च तद्घटरूपं चेति कर्मधारयः। अत्र नील-रूप-पदयोः आकाङ्क्षानुपपत्तिः। स्वम् = नीलपदम्, तदुत्तरं सु-पदभिन्नं घटपदं, तदुत्तरत्वस्यैव रूपपदे सत्त्वात्। **अन्यादृश्या अप्याकाङ्क्षाया** इति। स्वोत्तर-सु-पदभिन्ने निराकाङ्क्षत्वं विशेषणीयमिति भावः। घटपदं तु रूप-पद-साकाङ्क्षम् एवेति नानुपपत्तिः।

तथा च स्वोत्तर-सु-पदभिन्नं यन्निराकाङ्क्षपदं तदुत्तरभिन्नत्व-स्वोत्तरत्व-उभयसम्बन्धेन नीलपदविशिष्ट-घटपदत्वरूपाकाङ्क्षाया उपगन्तव्यतयेति भावः। **उपदर्शितेति**। नीलपदविशिष्ट-घटपदत्वरूपेत्यर्थः। वैशिष्ट्यं च स्वोत्तर-सु-पदभिन्नपदानुत्तरत्व-स्वोत्तरत्व-उभयसम्बन्धेन। **आकाङ्क्षानुसरणस्य** इति। त्वदुक्ताकाङ्क्षानुसरणस्येत्यर्थः। **अप्रयोजकत्वाद्** इति। न च नीलादिपद-विशिष्ट-स्वन्त-घटपदत्वम् एव आकाङ्क्षास्तु, वैशिष्ट्यं च स्वोत्तर-सु-पदभिन्न-निराकांक्षपदानुत्तरत्व-स्वोत्तरत्व-उभयसम्बन्धेन इति वाच्यम्। स्वत्तर-सु-पदभिन्नं यन्निराकाङ्क्षपदं तदुत्तरं यत्तद्भिन्नत्व-रूपस्य भेदकूट-निवेशेन गौरवाद् दुर्ज्ञेयत्वाच्च।

'नीलं घटमानय' इत्यादौ घटपदोत्तर-अम्-विभक्तेरिव नील-पदोत्तर-अम्-विभक्तिरपि कारकविभक्तिः। अनुशासनान्तराभावात्। कारकस्य क्रिया-न्वयित्वनियमेन तस्याः धातुसाकाङ्क्षत्वम्। एवं च कर्मत्वमेव तस्या अर्थः।

अर्थान्तरबोधनेऽनुशासनविरहात्। तथा च नीलकर्मताकं घटकर्मताकं चानयनम् इति मीमांसकमते बोधः।

**VV-D. 2.7.1:** तन्मतेन आशंकते **अथेति**। **नीलादेर्घटादावन्वयोपगमे** इति। अभेदसम्बन्धेन नीलादेः घटादौ अन्वयोपगमे इत्यर्थः। **विभक्त्यर्थ-कर्मत्वादेः कुत्रान्वय** इति। अभेदसम्बन्धेन नीलादेः घटादौ अन्वयोपगमे केवलकर्मत्वस्य क्रियायामन्वयो न सम्भवति। प्रकृत्यर्थान्वित-स्वार्थबोधकत्वं प्रत्ययानामिति व्युत्पत्तेः। नीलस्य कर्मत्वेन सह अन्वये तु सर्वानुभवसिद्धस्य नीलघटयोरभेदान्वयबोधस्य अपलापप्रसंगात्। नापि नीलस्य उभयत्र अन्वयः **सकृदुच्चरित** इति न्यायविरोधात्। न च प्रकृत्यर्थे नीले एव कर्मत्वान्वयः अस्तु। तथा च न न्यायविरोधः अपीति वाच्यम्। संख्यातिरिक्तप्रत्ययार्थस्य प्रकृत्यर्थविशेष्यत्व-नियमभङ्गापत्तेरिति **कुत्रान्वय** इत्यस्य तात्पर्य बोध्यम्। तथा च नीलकर्मताकं घटकर्मताकं च आनयनमिति बोधः। अभेदान्वयबोधस्तु तदुत्तरकालीनो मानस इति **मीमांसकमतमेव** ज्याय इति भावः। विशेषणवाचक-पदोत्तर-विभक्तेः न कर्मत्वमर्थः। सर्वानुभवसिद्धस्य अभेद-संसर्गक-शाब्दबोधस्य अपलाप-प्रसंगात्। न वा अनुभवविरुद्धं कर्मत्वद्वयभानम् उचितं प्रतिभाति। न च "न केवलः प्रत्ययः प्रयोक्तव्यः नापि केवला प्रकृतिः" इत्यनुशासनाद् विभक्तेरावश्यकत्वे औत्सर्गिकी प्रथमैव किमिति न प्रयुज्यते इति वाच्यम्। अभेदसंसर्गक-शाब्दबोधं प्रति समानविभक्तिकपदज्ञानस्य कारणतया समानविभक्तिकत्वरूपाकाङ्क्षासम्पादनार्थं द्वितीयाया एव आवश्यकत्वात्। तथा च साधुत्वार्थमेव विशेषणवाचक-पदोत्तर-विभक्तिः इत्याशयेन आह **न कुत्रापी**ति। अन्वय इत्यनुषज्यते। तदुक्तं विभक्तिपदम् इत्यादिना। **साधुत्वार्थमेवे**ति। एवकारेण कर्मत्वव्यवच्छेदः। तथा च तत्र यदि कर्मत्वाद्यर्थः प्रतीयेत तदा स्यादपि **कुत्रान्वयः**, अत्र तु कर्मत्वस्य भानमेव नास्तीति भावः।

**VV-D. 3.1.1:** पदसाधुत्वार्थं प्रयुक्तस्य द्वितीयादेः अर्थानवभासकत्वात् निरर्थकत्वम् एव, इत्यतः समाधानान्तरम् आह **अभेद एवे**त्यादिना **वदन्ती**-त्यन्तेन। एवकारेण कर्मत्वस्य निरर्थकत्वस्य वा व्यवच्छेदः। तथा च अभेदस्य पदार्थतया प्रकरतयैव भानम्। एवमपि न कारकविभक्तिरिति हृदयम्। **समासस्थले एवे**ति। तेन न अभेदश्च प्रातिपदिकार्थे संसर्गतयैव भासते इति ग्रन्थविरोधः। समासस्थले अभेदोपस्थापक-पदाभावाद् अभेदस्य प्रकारतया भानासम्भवात्, संसर्गस्य अनुपस्थितस्यापि भानसम्भवादिति भावः। ननु समासस्थलेऽपि विभक्त्यनुसन्धानेन अभेदो विभक्त्यर्थ एवास्तु इत्यत आह। **तत्रे**ति। समासे इत्यर्थः। **लुप्तविभक्त्यनुसन्धानं विनापी**ति। अभेदोपस्थापक-

लुप्तविभक्तिप्रतिसन्धान-विरहे अपीत्यर्थः। सन्निहित-प्रातिपदिकात् लक्षणया अभेदस्य उपस्थितत्वेऽपि नामार्थतया नामान्तरार्थे साक्षाद् अन्वयायोग्यतया समासस्थले न अभेदप्रकारक-शाब्दबोध-सम्भव इति भावः। **शाब्दबुद्धेः आनुभविकत्वादिति**। अभेदसंसर्गक-शाब्दबोधोदयाद् इत्यर्थः।

**VV-D. 3.1.2:** संसर्गतावादी शङ्कते **अथेति**। **एतन्मते** = प्रकारता-वादिमते। भेदत्वावच्छिन्नाभव इति। भेदत्वपर्याप्तावच्छेदकताक-प्रतियोगिताका-भाव इत्यर्थः। तेन नीलभेदाभावस्यापि भेदत्वावच्छिन्नाभावस्वरूपस्य प्रसिद्धत्वेऽपि न क्षतिः। भेदत्वगतैकत्ववृत्ति-प्रतियोगिताक-अभावः इत्यर्थः। वृत्तित्वं च प्रतियोगितायां स्वावच्छेदकतात्वावच्छिन्न-प्रतियोगिताक-पर्याप्त्यनुयोगिता-वच्छेदकत्व-स्वनिरूपक-अनुयोगिता-निरूपित-निरूपकतावच्छेदकतात्वावच्छिन्न-प्रतियोगिताक-पर्याप्त्यनुयोगितावच्छेदकत्व-उभयसम्बन्धेन। स्वं = प्रतियोगिता। विस्तरस्तु **माथुरीगंगायाम्**। **तदा**। अभेदस्य भेदत्वावच्छिन्नाभावरूपत्वे। **अप्रसिद्धिः**। भेदस्य केवलान्वयित्वाद् इति भावः। अप्रसिद्धिः इत्यस्य अभावे भेदत्वावच्छिन्न-प्रतियोगिताकत्वस्य अप्रसिद्धिः इत्यर्थः। तेन भेदत्वावच्छिन्न-प्रतियोगिताकाभावप्रसिद्धिरूप-प्रतियोग्यप्रसिद्धौ अपि न क्षतिः। भेदत्वावच्छिन्न-प्रतियोगिताकत्वस्य भेदे एव प्रसिद्धत्वात्। एवं भेदनिष्ठप्रकारतायां प्रसिद्धस्य भेदत्वावच्छिन्नत्वस्य अत्यन्ताभावीय-प्रतियोगितायाम् अप्रसिद्धिः इत्यर्थोऽपि बोध्यः। **यदि चेति** = अभेदो यदीत्यर्थः। तथा च यत्किंचिद्भेदसत्त्वेऽपि तत्तद्व्यक्तित्वेन भेदाभावस्यापि सत्त्वात् न अप्रसिद्धिरिति भावः। 'नीलो घट' इत्यादौ स्वनिष्ठप्रतियोगिताकत्व-सम्बन्धेन नीलस्य विभक्त्यर्थभेदाभावैकदेशे भेदे अन्वयः। भेदस्य चोक्तसम्बन्धेन अभावेऽन्वयः। अभावस्य च स्वरूपसम्बन्धेन घटेऽन्वयः। तथा च नीलविशिष्ट-भेदविशिष्टाभाववान् घट इति बोधः। **तदा** = अभेदस्य भेदप्रतियोगिकाभावरूपत्वे। **प्रमाण्यापत्तिरि**ति। प्रमाकरणत्वापत्तिः इत्यर्थः। ननु जले नीलभेदाभावविरहात् कथं प्रामाण्यापत्तिः ? तत्र नीलभेदस्यैव सत्त्वाद् इत्यत आह **जले द्वित्वादिने**ति। नीलभेद-घटोभयाभावस्य जले सत्त्वाद् इत्यर्थः। भेदत्वपर्याप्तावच्छेदकताक-प्रतियोगिताक-अभावत्वोक्तौ अप्रसिद्धिः उक्तैव। न च अभावे स्वप्रतियोगि-वैयधिकरण्य-निवेशेन उभयाभाव-वारणम्। तस्य भेदरूपप्रतियोगिसमानाधिकरणत्वादिति वाच्यम्। तस्य स्वत्वघटितत्वेन अननुगमात्। न च तथापि भेदनिष्ठप्रतियोगितायां वैशिष्ट्य-व्यासज्यवृत्ति-धर्मा-नवच्छिन्नत्वं निवेशनीयम्। एवं च पृथिवीवृत्तित्वविशिष्टभेदाभावस्यापि वारणमिति वाच्यम्। घटत्वेन भेदाभावम् आदाय प्रामाण्यापत्तेः दुर्वारत्वात्। न चाभावे प्रतियोगिताविशिष्टान्यत्वं निवेशनीयम्। वैशिष्ट्यं च स्वनिरूपकत्व-स्वाश्रय-

सामानाधिकरण्य-उभयसम्बन्धेन। तथा च नोक्तप्रामाण्यापत्तिरिति वाच्यम्। प्रतियोगिता-विशिष्टान्यत्वं हि प्रतियोगिता-विशिष्टभेदत्वम्। प्रतियोगिता-विशिष्ट-घट-उभयभेदवत्त्वमपि तथा। तस्य द्वित्वादिना नीलभेदाभावेऽपि सत्त्वात् प्रामाण्यापत्तेः दुर्वारत्वात्। यदि प्रतियोगिभूत-वैशिष्ट्य-निष्ठावच्छेदतायाः पर्याप्तिः निवेश्यते तदा महागौरवम्। एवं नीलभेदः स्वाभाववत्त्व-सम्बन्धेन नीलत्वसमनियतत्वात् नीलत्वरूपः। तथा च नीलभेदाभावस्य नीलभेद इव नीलत्वमपि प्रतियोगि तत्समानाधिकरण एव। नीलभेदाभाव इति प्रतियोगिता-विशिष्टान्यो नीलभेदाभावः अप्रसिद्ध एवेत्यपि बोध्यम्। **नीलभेदत्वावच्छिन्ना-भावस्ये**ति। नीलभेदत्वपर्याप्तावच्छेदकताक-प्रतियोगिताक-अभावस्य इत्यर्थः। तेन न अप्रसिद्धिः, न वा उक्तप्रामाण्यम्। न चैवं 'पीतो घटः', 'शुक्लो घट' इत्यादौ पीतभेदत्वादि-तत्तद्धर्मावच्छिन्न-प्रतियोगिताक-अभावानां विभक्त्यर्थतया शक्त्यानन्त्यप्रसंग इति वाच्यम्। तदादिसर्वनामवदुपलक्षणीभूतेन प्रकृत्यर्थता-वच्छेदकत्वेन नीलत्व-पीतत्वादिधर्माननुगमय्य स्वप्रकृत्यर्थतावच्छेदकत्वोपलक्षित-धर्मावच्छिन्नप्रतियोगिताक-भेदत्वावच्छिन्नाभावत्वस्य ऐक्यात् शक्तेः ऐक्यात्। **नीलपदार्थानन्वयप्रसंग** इति। प्रकृत्यर्थ-नीलस्य विभक्त्यर्थैकदेशे नीले न अन्वय-सम्भवः। तद्धर्मावच्छिन्न-प्रकारता-निरूपित-विशेष्यतावच्छेदकता-सम्बन्धेन शाब्दबोधं प्रति तद्धर्मभेदस्य कारणतया विशेष्यतावच्छेदके प्रकारतावच्छेदक-भेदविरहात्। एकदेशान्वय-प्रसंगाच्च। नापि नीलभेदे स्वनिष्ठप्रतियोगिताकत्व-सम्बन्धेन नीलस्य अन्वयसम्भवः। उद्देश्यतावच्छेदक-विधेययोः ऐक्यात्। प्रकृत्यर्थनीलस्य आधेयतया विभक्त्यर्थनीलत्वे अन्वये एकदेशान्वय-विरहेऽपि आकाङ्क्षाविरहादिति भावः! तच्चाग्रे स्फुटीभविष्यति।

**VV-D. 3.1.3:** शङ्कते **नचे**ति। **भेदप्रतियोगिकाभाव एवे**ति। प्रतियोगिता-सम्बन्धेन भेदविशिष्टाभावः इत्यर्थः। तेन भेदरूपदार्थतावच्छेदकस्य इत्यादि-ग्रन्थसंगतिः। एव-कारो भेदत्वावच्छिन्नाभावं व्यवच्छिनत्ति, पूर्वोक्तिं द्रढयति च। 'नीलं जलम्' इति वाक्यस्य प्रामाण्यापत्तिं निराकरोति। **नीलपदसमभिव्याहाराद्** इति नीलभेदत्वावच्छिन्न-प्रतियोगिता-सम्बन्धेन भेदविशिष्टः अभावः प्रतीयते इत्यर्थः। अभावे सामान्यतः प्रतियोगितासंसर्गस्य क्लृप्ततया समभिव्याहारबलेन नीलभेदत्वावच्छिन्न-प्रतियोगितासंसर्गो बोध्यः। एवं च नीलत्वावच्छिन्नप्रति-योगिताक-भेदत्वावच्छिन्न-प्रतियोगिताकाभावस्य जले बाधितत्वात् न 'नीलं जलम्' इत्यस्य प्रामाण्यापत्तिरिति भावः। अत्र नीलभेदत्वावच्छिन्न-प्रतियोगिता-संसर्गस्य आकाङ्क्षया भानं न सम्भवतीत्याह **पदार्थद्वयसंसर्गभानस्यैव आकाङ्क्षानियम्यत्वादि**ति। एवकारेण पदार्थत्वावच्छेदकयोः संसर्ग-व्यावृत्तिः।

भेदश्चात्र पदार्थतावच्छेदक एव। अभावपदार्थे तस्य यो नीलभेदत्वावच्छिन्न-प्रतियोगित्वरूपः संसर्गस्तस्य व्यावृत्तिरिति भावः। **वृत्तिं विनेति** = शक्तिं विना इत्यर्थः। **तादृशसम्बन्धेन** = नीलभेदत्वावच्छिन्न-प्रतियोगित्व-सम्बन्धेन। **भाना-सम्भवादिति**। शक्तिस्तु भेदप्रतियोगिकाभावे एवेति भावः।

**VV-D. 3.1.4:** समाधत्ते **भेदोऽभावश्चेति**। तथा च तयोः संसर्गस्य आकाङ्क्षाभास्यतया नीलत्वावच्छिन्नप्रतियोगित्व-सम्बन्धेन नीलस्य भेदे नीलपद-समभिव्याहारात् नीलभेदत्वावच्छिन्नप्रतियोगित्वसम्बन्धेन भेदस्य अभावे अन्वयात् न उक्तस्थले प्रामाण्यापत्तिरिति भावः। **विशिष्टलाभस्त्विति**। नीलभेदत्वावच्छिन्न-प्रतियोगिताक-अभावलाभस्तु इत्यर्थः। **एतेन**। भेदे अभावे च प्रथृक् शक्ति-स्वीकारेण। **निरस्तमिति**। भेदस्यापि पदार्थत्वादिति भावः। अत्र भेदस्य अव्याप्यवृत्तित्वे 'कपिसंयोगवान् वृक्ष' इत्यत्र अभेदानुपपत्तिः। कपिसंयोगवद्-भेदस्य एव सत्त्वाद् इति वाच्यम्। भेदस्याव्याप्यवृत्तित्वे भेदाभावस्यापि अव्याप्य-वृत्तितया वृक्षे सत्त्वात्।

अथ 'नीलो घट' इत्यादौ अभेदानुपपत्तिः। कालिकेन नीलभेदस्यैव घटे सत्त्वात्। न च भेदनिष्ठ-प्रतियोगितायां स्वरूप-सम्बन्धावच्छिन्नत्वं विवक्षणीयम् इति वाच्यम्। 'पर्वतो वह्न्यभाववान्' इति प्रयोगस्य प्रामाण्यापत्तेः। वह्न्यभाववद्भेदस्य वह्निस्वरूपतया स्वरूपेण तदभावस्य पर्वते सत्त्वात्। न च भेदनिष्ठ-प्रतियोगितायां स्वरूप-संयोगान्यतर-सम्बन्धावच्छिन्नत्वं निवेशनीयम् इति वाच्यम्। 'घटो घटत्वाभाववान्' इति प्रयोगस्य प्रामाण्यापत्तेः। घटाभाववद्-भेदस्य घटत्वरूपतया अन्यतरसम्बन्धेन तदभावस्य घटे सत्त्वात्। न च समवायघटितान्यतमसम्बन्धेन सा निवेशनीयेति वाच्यम्। 'घटाभाववद् भूतलम्' इति प्रयोगस्य प्रामाण्यापत्तेः। घटाभाववद्भेदस्य घटस्वरूपतया अन्यतम-सम्बन्धान्तर्गत-समवायेन तदभावस्य भूतले सत्त्वाद् इति चेत्? न। स्वप्रतियोगि-मत्ताग्रह-प्रतिबन्धकतावच्छेदकीभूत-प्रकारतावच्छेदक-सम्बन्धावच्छिन्नत्वस्य भेद-निष्ठ-प्रतियोगितायां निवेशनीयत्वात्। स च सम्बन्धः भावप्रकारकस्थले स्वरूपः, अभावप्रकारकस्थले यथायथं संयोग-समवायादिः।

**VV-D. 3.2.1:** शंकते **न चेति**। **विशेषणविभक्तेः अभेदार्थकत्वे** इति। विशेषणवाचक-पदोत्तर-विभक्तेः अभेदार्थकत्वे इत्यर्थः। अभेद एव वा विशेषण-विभक्तेरर्थ इति मते इति यावत्। **तृतीयया अभेदबोधनादिति**। तृतीयाविभक्ति-जन्याभेदप्रकारक-बोधदर्शनादित्यर्थः। बोधश्च धान्याभिन्न-धनवान् इत्याकारकः। **अनपेक्षणादिति**। समानविभक्तिकत्वस्य अतन्त्रत्वाद् इति भावः।

विशेषणविभक्तेः अभेदार्थकत्वे इत्यनेन अभेदस्य संसर्गतामते 'नीलं घट' इत्यादौ न अभेदसंसर्गक-बोधापत्तिरिति सूचितम्। तत्र समानविभक्तित्वस्य तन्त्रत्वात्। न च अभेदस्य संसर्गतामते 'धान्येन धनवान्' इत्यादौ अपि अभेद-संसर्गक-बोधस्यैव स्वीकर्तव्यतया संसर्गतामतेऽपि समानविभक्तिकत्वस्य अप्रयोजकतया तन्मतेऽपि 'नीलं घट' इत्यादौ आपत्तिः तुल्या एवेति "विशेषण-विभक्तेः अभेदार्थकत्वे" इत्युक्तिः असङ्गता एवेति वाच्यम्। 'धान्येन धनवान्' इत्यादौ अभेदप्रकारक-बोधस्यैव संसर्गतावादिनापि स्वीकारात्। तथा च संसर्गतावादिमते न उक्तनियमव्यभिचारः। अभेदसंसर्गकबोधे एव विशेष्य-विशेषण-वाचकपदयोः समानविभक्तिकत्वस्य तन्त्रत्वात्। एवं च 'नीलं घट' इत्यादौ अभेदप्रकारक-बोधापत्तिः इत्यत आह **द्वितीयादिने**ति। विशेषणवाचक-पदोत्तर-द्वितीयादिना इत्यर्थः। **प्रयोजकत्वमि**ति। तथा च समानविभक्तिकत्वं तन्त्रम् इत्यर्थः। अभेदसंसर्गक एव बोधः तत्रेति भावः। तादृशबोध-तात्पर्येण 'नीलं घट' इति प्रयोगः असाधुरिति यावत्। अयं भावः, विशेषणविभक्तेः अभेदार्थे सङ्केतग्राहकं यत्रास्ति तत्र अभेदप्रकारको बोधो भवति। यथा कर्मत्व-ग्राहकं "कर्मणि द्वितीया" (P.2.3.2) इत्यनुशासनम्। "प्रकृत्यादिभ्य उप-संख्यानम्" इत्यपि तृतीया विधायकम्। अर्थान्तर-अयोग्यत्वात्, लाघवाच्च अभेदे संकेतग्राहकमिति 'धान्येन धनवान्' इत्यादौ अभेदः प्रकारतया भासते। 'नीलं घट' इत्यादौ विशेषणविभक्तेः अभेदबोधक-विधायकानुशासनाभावात् न अभेदो विशेषणविभक्तेः अर्थः। किन्तु संसर्गविधया तस्य भानमिति संसर्गता-वादिनाम् आशयः।

**VV-D. 3.3.1:** 'प्रमेयो घट' इत्यत्र विभक्त्यर्थे भेदे प्रमेयत्वावच्छिन्न-प्रतियोगिताकत्व-सम्बन्धेन प्रमेयस्य अन्वयो वाच्यः। स च सम्भवति इत्याह **प्रमेयत्वावच्छिन्नभेदाप्रसिद्ध्ये**ति। प्रमेयत्वावच्छिन्न-प्रतियोगिताकभेद-अप्रसिद्ध्या इत्यर्थः। भासमान-वैशिष्ट्य-प्रतियोगित्वस्य प्रकारतारूपत्वे प्रमेयवान् इति ज्ञानीय-प्रमेयनिष्ठ-प्रतियोगितायाः, एवं संयोगेन प्रमेयाभावीय-प्रतियोगितायाः प्रमेयत्वावच्छिन्नतया प्रमेयत्वावच्छिन्न-प्रतियोगित्वस्य न अप्रसिद्धिः। अतः भेद-पर्यन्तानुसरणम्। **अभावप्रतियोगितानवच्छेदकत्वे** इति। कम्बुग्रीवादिमान् इति प्रतीत्यनुरोधेन कम्बुग्रीवादिमत्त्वरूपधर्मस्य विषयतावच्छेदकत्वम् आवश्यकम् इत्यत उक्तम् **प्रतियोगितानवच्छेदकत्वे** इति। भासमानवैशिष्ट्य-प्रतियोगित्वं प्रकारत्वम् इति मते गुरुधर्मस्यापि प्रतियोगितावच्छेदकत्वात् प्रतियोगितायाम् अभावीयत्व-विशेषणम्।

**VV-D. 3.3.2:** दोषान्तरमाह **एवमिति**। **नीलत्वादिना पटादेर्भेदाभावस्य** इति। निरवच्छिन्न-नीलत्व-निष्ठावच्छेदकताक-नीलनिष्ठावच्छेदकताक-पटनिष्ठ-प्रतियोगिताको यो भेदः 'नीलो न' इत्याकारकः तदभावस्य इत्यर्थः।

**VV-D. 3.3.3:** **एतेन**। नीलपटपर-नीलघटितस्य 'नीलो घट' इति वाक्यस्य प्रामाण्यप्रसङ्गेन। नीलत्व-प्रमेयत्वादिकम् एवेति। एवकारेण अभेद-व्यावृत्तिः। **विशेषणविभक्त्यर्थ इति**। विशेषणवाचकपदोत्तरविभक्त्यर्थ इत्यर्थः। तथा च 'प्रमेयो घट' इत्यत्र 'प्रमेयवृत्तिप्रमेयत्ववान् घट' इति बोधः। 'कम्बुग्रीवादिमान् घट' इत्यत्र कम्बुग्रीवादिमद्वृत्ति-कम्बुग्रीवादिमत्त्ववान् घट इति बोधः।

**नीलत्वावच्छिन्ने**ति। नीलत्वावच्छिन्न-प्रतियोगिताकेत्यर्थः। नीलभेदा-भावरूपतयेति यावत्। भेदाभावस्य प्रतियोगितावच्छेदक-रूपत्वादिति भावः। **अभेदार्थकत्वप्रवादोपपत्तिः** इति। न च प्रमेयत्वावच्छिन्नभेदाप्रसिद्ध्या प्रमेयत्वस्य अभेदानात्मकतया 'प्रमेयो घट' इत्यादिस्थलीय-विशेषणविभक्तेः अभेदार्थकत्वा-नुपपत्तिरिति वाच्यम्। अभेदशब्दस्य क्वचिन्मुख्योऽर्थो यथा 'नीलो घट' इत्यादौ। क्वचिद्गौणः यथा 'प्रमेयो घट' इत्यादौ प्रमेयत्वम् इत्याशयात्। **निरस्तमि**ति। उक्तवाक्यस्य प्रामाण्यापत्तेः। उपलक्षणमेतत्। नीलपटादिपर-द्रव्यपदघटितस्य 'द्रव्यं घट' इति वाक्यस्य प्रामाण्यापत्तिः बोध्या। घटवृत्ति-द्रव्यत्वस्य घटेऽपि सत्त्वात्। एतेन घटपदसमानाधिकरणस्य नीलपदस्य गुणि-परत्वेन नीलत्वमत्र नीलरूपमेव। एवं च कथं पटवृत्तिनीलत्वं घटे इति शङ्का समाहिता। यद्वा नीलत्वजातेः स्वाश्रयाश्रयत्व-सम्बन्धेन घटे पटे च सत्त्वाद् ग्रन्थसङ्गतिः। नीलत्वजात्यवच्छिन्न-अधिकरणत्वं नीलत्वं तच्च अनुगतम् अधिकरणताया ऐक्यात् तद्विशिष्टपरमेव नीलपदम् इत्युक्तप्रयोग-प्रामाण्यापत्तिः बोध्या। विशेषणविभक्तेः अभेदार्थकत्वे दोषान्तरमपि आह **नीलत्वादावि**ति। तथा च 'नीलो घट' इत्यत्र विशेषणवाचक-नीलपदोत्तर-विभक्त्यर्थे नीलत्वे 'प्रकृत्यर्थस्य नीलत्ववतः स्ववृत्तित्व-सम्बन्धेन अन्वयो वाच्यः। स च न सम्भवति आकाङ्क्षाविरहाद् इत्यर्थः। आकाङ्क्षाविरहमेव उपपादयति। **यथाहि** इत्यादिना। **तद्विशिष्टे** = नीलत्वविशिष्टे। **अधिकरणे** = नीले। **आश्रयतया** = समवायादिसम्बन्धेन। **तदन्वयः** = नीलत्वान्वयः। **अनुभवविरुद्धः** ='नीलत्ववान् नीलत्ववान्' इति बोधाभावात्। उद्देश्यतावच्छेदक-विधेययोः ऐक्यादितिभावः। **तथा तद्धर्मे** = नीलत्वे। **आधेयतया** = स्ववृत्तित्वसम्बन्धेन। **तद्धर्मवतः** = नीलत्ववतः। **अन्वयोऽपि** अनुभवविरुद्ध इत्यनुवर्तते। नीलत्ववति नीलत्वमिति अनुभवाभावात्। एवं च प्रकृते विशेष्यवाचक-नीलपदोत्तर-विभक्त्यर्थ-नीलत्वे

प्रकृत्यर्थ-नीलत्ववतो (नीलस्य) अन्वयो न सम्भवति। आकाङ्क्षा-विरहादिति भावः। **अत एव** = तद्धर्मे तद्धर्मवत आधेयतया अन्वयविरहादेव। **निराकाङ्क्षता** इति-द्वितीयार्थे कर्मत्वे प्रकृत्यर्थस्य कर्मत्ववतः (कर्मणः) आधेयतया अन्वये निराकाङ्क्षता इत्यर्थः।

**VV-D. 3.4.1:** ननु अभेदस्य संसर्गतामतेऽपि अभेदो यदि भेदत्वावच्छिन्न-अभावः तदा अप्रसिद्धिः। यदि भेदप्रतियोगिकाभावः तदा 'नीलं जलम्' इत्यस्य प्रामाण्यापत्तिः। अतो विशेषणतावच्छेदकीभूत-नीलत्व-प्रमेयत्वादिकम् एव संसर्गो वाच्यः। तथा सति नीलपटपर-नीलपदघटितस्य 'नीलो घट' इति वाक्यस्य प्रामाण्यापत्तिः दुर्वारा एव इत्याशङ्कते **न चेति**। **एवम्**। नीलत्वादिना पटादेः भेदाभावस्य घटादौ सत्त्वेन। **उक्तस्थले** = नीलपटपर-नीलपदघटित-'नीलो घट' इति वाक्ये। **दुर्वारत्वादिति**। नीलपटवृत्ति-नीलत्वस्य घटेऽपि सत्त्वाद् इति भावः।

**VV-D. 3.4.2:** समाधत्ते **स्ववृत्ति-नीलत्वादेः** इति। स्ववृत्तित्वविशिष्ट-नीलत्वादेः इत्यर्थः। **स्वम्** = नीलपदार्थो नीलपटः। **वृत्तित्वम्** = विशेषणम्। न उपलक्षणम्। अतः स्ववृत्तित्वविशिष्ट-नीलत्वादिमत्व-सम्बन्धस्य स्वस्मिन् पटे एव सत्त्वाद् घटे असत्त्वाच्च न उक्तवाक्यस्य प्रामाण्यापत्तिः। प्रकारतावादिमते तु नीलत्वमात्रं विभक्त्यर्थः। वृत्तित्वं संसर्गः। न च प्रकार-संसर्गविधयोः भासमानयोः विशेष्यविशेषणभाव इति। प्रकारताया नीलत्वत्वमात्रावच्छिन्नत्वे वृत्तित्वस्य उपलक्षणत्वे प्रामाण्यापत्तेः वारणायोगादिति ध्येयम्।

**VV-D. 3.5.1:** विशेषणतावच्छेदकीभूत-नीलत्वादेः संसर्गत्वे भेदस्य पारिभाषिकत्वापत्तिः। अतः अभेदाभावत्वेनैव संसर्गतामाह **वस्तुतस्त्विति**। **तत्तद्व्यक्तित्वावच्छिन्न-भेदाभाव एवेति**। अस्य सम्बन्धतया भासते इत्यनेन अन्वयः। 'नीलो घट' इत्यत्र नील-(घट)-निष्ठ-तत्तद्व्यक्तित्वावच्छिन्न-भेदाभाव एव इत्यर्थः। एवकारेण नीलत्वावच्छिन्न-प्रतियोगिताक-भेदाभावव्यावृत्तिः। **तत्तद्-व्यक्तीनाम्** = नीलादिव्यक्तीनाम्। **स्वस्मिन्** = घटे। तथा च तत्तद्व्यक्तिनिष्ठ-प्रतियोगिता-निरूपिता घटादितत्तद्व्यक्तिनिष्ठ-अनुयोगितानिरूपिता या संसर्गता तद्वान् तत्तद्व्यक्तित्वावच्छिन्नभेदाभाव इत्यर्थः। नीलपटपर-नीलपदघटित-'नीलो घट'- इति वाक्यस्यापि नीलपटपर-नीलव्यक्तिगत-तत्तद्व्यक्तित्वावच्छिन्नभेदस्यैव घटे सत्त्वात् न प्रामाण्यापत्तिः। **तस्य** = तत्तद्व्यक्तित्वावच्छिन्न-भेदाभावस्य। **अन्यदेतदिति**। तत्तद्व्यक्तित्वावच्छिन्न-अभेदाभावनिष्ठसंसर्गताभेदप्रतियोगिताक-अभावत्वावच्छिन्ना तत्तद्व्यक्तित्व-अवच्छिन्न-भेदाभावत्वावच्छिन्ना वा भवतु, उभयथापि उक्तप्रयोगप्रामाण्यापत्ति-निरासादिति भावः।

न च भेदत्वावच्छिन्नाभावत्वस्य अप्रसिद्धिः। भेदप्रतियोगिताक-अभावत्वस्य प्रसिद्धत्वेऽपि तद्व्यक्तिभेद-घटोभयाभावादि-साधारणतया उक्तरीत्या 'नीलं जलम्' इति प्रयोगस्य अप्रामाण्यापत्तिरिति वाच्यम्। भेदप्रतियोगिताका-भावत्वावच्छिन्नापि संसर्गता तत्तद्व्यक्तित्वावच्छिन्न-भेदाभावनिष्ठा एव इत्याशयात्। अतिप्रसक्तधर्मस्य प्रतियोगितानवच्छेदकत्वेऽपि विषयतावच्छेदकत्वं स्वीक्रियते। अत एव समवायेन 'द्रव्यवत्कपालम्' इति ज्ञाने अतिप्रसक्तमपि द्रव्यत्वं प्रकारतावच्छेदकं न तु घटत्वं, द्रव्यवत्कपालं घटवत्कपालमिति प्रतीत्योः अविशेषप्रसङ्गात्। इत्थं च अतिप्रसक्तेनापि भेदप्रतियोगिताकाभावत्वेनावच्छिन्ना संसर्गता विषयतारूपा तत्तद्व्यक्तित्वावच्छिन्न-भेदाभावनिष्ठा एव न तु नीलभेद-घटोभयाभावनिष्ठा इति न 'नीलं जलम्' इत्यस्य प्रामाण्यापत्तिः।

**VV-D. 3.5.2:** शङ्कते **न चे**ति। **एवम्**। तत्तद्व्यक्तित्वावच्छिन्न-भेदाभावस्य संसर्गत्वे। **तत्तद्व्यक्तित्वावच्छिन्नाभेद एवे**ति। तत्तद्व्यक्तित्वावच्छिन्न-प्रतियोगिताक-भेदत्वावच्छिन्न-प्रतियोगिताकाभाव एव इत्यर्थः। एवकारेण विशेषणतावच्छेदकीभूत-नीलत्व-प्रमेयत्व-व्यावृत्तिः। तेन नीलपटपर-नीलपद-घटित-'नीलो घट'-इति वाक्यस्य प्रामाण्यम्। समाधत्ते **तथा सति** = तत्तद्व्यक्तित्वावच्छिन्नाभेदस्य विभक्त्यर्थत्वे सति। **अपूर्वव्यक्तिनिष्ठ-तत्तद्व्यक्तित्वस्ये**ति। 'नीलो घटो भविष्यति' इत्यत्र तत्तद्व्यक्तित्वावच्छिन्न-भेदाभावो नीलपदोत्तर-सु-विभक्त्यर्थः। तदेकदेशे तद्व्यक्तित्वे प्रकृत्यर्थस्य नीलादेः अन्वयः। तथा च भविष्यतीया नीलव्यक्तिः तन्निष्ठतत्तद्व्यक्तित्वस्य इत्यर्थः। **कथञ्चिदपि भानासम्भवेने**ति। तद्व्यक्तित्वस्य विशेषधर्मतया सामान्यलक्षणारूप-भासकविरहादिति भावः। **तदवच्छिन्ने**ति। अपूर्वव्यक्तिनिष्ठ-तत्तद्व्यक्तित्वा-वच्छिन्नेत्यर्थः। **अपूर्वव्यक्तीनाम् अभेदान्वयबोधानुपपत्तेः** इति। इदमुपलक्षणम्। विभक्त्येकदेशे तद्व्यक्तित्वे अपूर्वव्यक्तीनाम् एकदेशान्वयोऽपि बोध्यः। अभेदस्य संसर्गतामते न अनुपपत्तिः इत्याह **संसर्गज्ञानस्ये**ति। **अनुपस्थितस्यापि** इति। अभेदस्य इति शेषः। **अनुपपत्त्यभावादि**ति। अपूर्वव्यक्तीनाम् अभेदान्वयबोधे इत्यादिः।

अथ शाब्दबोधे तत्तद्व्यक्तित्वावच्छिन्न-भेदाभावसंसर्गस्य संसर्गमर्यादया भानेऽपि 'नीलो घट' इति वाक्ये तत्तद्व्यक्तित्वावच्छिन्न-भेदाभावसम्बन्धावच्छिन्न-नीलनिष्ठप्रकारताक-बोधेच्छया उच्चरितमिति तात्पर्यज्ञानेऽवच्छिन्नत्वांशे प्रकार-तयैव संसर्गस्य भानेन तद्घटिततात्पर्यज्ञाने तस्य हेतुत्वमावश्यकमिति चेत्? न। 'नीलो घट' इति वाक्यं नीलविषयताविशिष्ट-बोधेच्छया उच्चरितमिति तात्पर्यज्ञानस्य कारणत्वात्। वैशिष्ट्यं च स्वनिरूपित-सांसर्गिक-विषयता-निरूपित-घटविषयताकत्व-सम्बन्धेन। एवं च तत्तद्व्यक्तित्वोपस्थितेः न अपेक्षेति

**VV-D. 3.5.3:** भेदोऽभावश्च विशेषणविभक्त्यर्थ इत्यभिप्रायेण पुनः शङ्कते **न च** इति। **नीलत्वादिने**ति। तृतीयार्थो वैशिष्ट्यम्। नीलत्वादिविशिष्ट-तत्तद्व्यक्तीनाम् इत्यर्थः। तेन 'कम्बुग्रिवादिमान् घट' इत्यत्र कम्बुग्रीवादिमत्व-रूपेण कम्बुग्रीवादिमद्व्यक्तीनां तत्तद्व्यक्तित्वावच्छिन्न-प्रतियोगिताकत्व-सम्बन्धेन भेदे अन्वयात् न गुरुधर्मावच्छिन्न-प्रतियोगित्व-अप्रसिद्धि-निबन्धनानुपपत्तिः। 'प्रमेयो घट' इत्यादौ प्रमेयत्वावच्छिन्न-प्रतियोगिताकत्वस्य अप्रसिद्धौ अपि प्रमेयनिष्ठतत्तद्व्यक्तित्वावच्छिन्न-प्रतियोगिताकत्वस्य प्रसिद्धिः बोध्या। **तादृशे**ति। तत्तद्व्यक्तिविशिष्टेत्यर्थः। **तावतैव** उक्तरीत्या अन्वयाङ्गीकारेणैव। **न किञ्चिद् अनुपपन्नमि**ति। न अपूर्वव्यक्तीनाम् अभेदान्वयबोधानुपपत्तिः। नापि नीलपटपर-नीलपदघटितस्य 'नीलो घट' इति वाक्यस्य प्रामाण्यापत्तिः। तत्तद्व्यक्तित्वा-वच्छिन्न-प्रतियोगिताकत्वसम्बन्धेन नीलविशिष्टभेदस्यैव घटे सत्त्वात्।

**VV-D. 3.5.4:** आशङ्कां निरस्यति **विशेषणतावच्छेदकावच्छिन्नाया एवे**ति। विशेषणतावच्छेदकं नीलत्वं न तु नीलनिष्ठं तत्तद्व्यक्तित्वं तदवच्छिन्नाया एव इत्यर्थः। एवकारेण विशेषणतानवच्छेदकीभूत-ततद्व्यक्ति-त्वादेः व्यवच्छेदः। **अभावे** = भेदे। **प्रतियोगिनः** = नीलस्य। **सम्बन्धतया भानादि**ति। तथा च नीलत्वावच्छिन्न-भेदाभावस्य घटे सत्त्वात् नीलपटपर-'नीलो घट'-इति वाक्यस्य प्रामाण्यापत्तिरिति भावः। **अन्यथा** विशेषणतावच्छेदकीभूत-नीलत्वावच्छिन्न-प्रतियोगितायाः संसर्गत्वविरहे। विशेषणतानवच्छेदकीभूत-तत्तद्-व्यक्तित्वावच्छिन्नप्रतियोगितायाः संसर्गत्वे इति यावत्। **विशिष्टवैशिष्ट्यबुद्धित्वा-नुपपत्तिः** इति। अयं भावः, बोधो द्विविधः। विशिष्ट-वैशिष्ट्यम् इति रीत्या विशेष्ये विशेषणमिति रीत्या च। आद्यः विशिष्टस्य वैशिष्ट्यावगाहीति उच्यते। तत्त्वं च विशेषण-विशेषणतावच्छेदक-उभयप्रतियोगिक-सम्बन्धावगाहित्वम्। अभावस्थले अभावे विशेषणस्य प्रतियोगित्वं सम्बन्धः। विशेषणतावच्छेदकस्य स्वावच्छिन्न-प्रतियोगित्वं सम्बन्धः। विशेषणे विशेषणतावच्छेदक-वैशिष्ट्योक्तौ प्रतियोगितायां स्वसामानाधिकरण्य-निवेशे वा घटवति 'घटो नास्ति' इति प्रतीत्यापत्तेः। विशिष्टवैशिष्ट्यावगाहिबोधे विशेषणतावच्छेदक-प्रकारकज्ञानं कारणम्। यच्च ज्ञानं विशेष्ये विशेषणं तत्रापि विशेषणमिति रीत्या जायते, तदुपलक्षित-वैशिष्ट्यावगाहीति उच्यते यथा गुणकर्मान्यत्व-विशिष्टसत्तावान् गुण इति ज्ञानस्य विशिष्टवैशिष्ट्यावगाहित्वे भ्रमत्वम्। यतोऽत्र गुणे भासमानसत्तायां यद्विशेषणं गुणकर्मान्यत्वं तदपि गुणे भासते। तच्च न गुणवृत्ति, किन्तु द्रव्यधर्मिकम् एव एतादृशं ज्ञानं प्रमा। उपलक्षित-वैशिष्ट्यावगाहि तु तज्ज्ञानं प्रमा एव। यतोऽत्र गुणे भासमानसत्तायां गुणकर्मान्यत्वं भासते न तु गुणे।

उपलक्षितवैशिष्ट्यावगाहिज्ञाने तु विशेषणज्ञानमेव कारणमिति लाघवं बोध्यम्। अभावबोधस्य विशिष्टवैशिष्ट्यावगाहित्वे गमकमाह **प्रतियोगि-विशेषिताभावज्ञानं चेति**। प्रतियोगिना विशेषितं प्रतियोगिविशेषितम्। प्रतियोगिविशेषितं च तदभावज्ञानं चेति तत्। प्रतियोगिप्रकारकमित्यर्थः। **अभावज्ञानं चेति**। अभाव-प्रत्ययो हि इत्यर्थः। **मर्यादाम्** = रीतिम्। नातिशेते न जहातीत्यर्थः। तथा च तद्विशिष्ट-वैशिष्ट्यावगाहि-बोधे तत्प्रकारकं ज्ञानं कारणमिति भावः।

अभावप्रत्ययस्थले तु अभावांशे प्रतियोगितासम्बन्धेन प्रतियोगी भासते। प्रतियोगिनि भासमानं घटत्वादिकमपि स्वावच्छिन्न-प्रतियोगिताकत्व-सम्बन्धेन अभावांशे भासते। अतो 'घट नास्ति' इति प्रत्ययो विशिष्ट-वैशिष्ट्यावगाही भवति। घटत्वस्याभावे भानानङ्गीकारे (विशेष्य-विशेषणमिति भानाङ्गीकारे) स्वसमानाधिकरण-प्रतियोगिताकत्व-सम्बन्धेन भानाङ्गीकारे वा घटवति 'घटो नास्ति' इति प्रत्ययस्य प्रामाण्यापत्तिः। द्वित्वावच्छिन्नाभावस्य तत्र सत्त्वात्। इत्थं च प्रतियोगिनः अभावे प्रतियोगितामात्रसम्बन्धावगाहनेऽपि न द्वित्वावच्छिन्नत्वस्य भानम्। एकस्मिन्नभावे विशेषणतावच्छेदकीभूत-घटत्वावच्छिन्न-प्रतियोगिताकत्व-द्वित्वावच्छिन्न-प्रतियोगिताकत्वयोः विरोधात्। प्रकृते नीलपटपर-नीलपद-घटित-'नीलो घट'-इत्यादौ अपि विभक्त्यर्थे भेदे नीलः प्रतियोगितासम्बन्धेन, नीलत्वं च स्वावच्छिन्न-प्रतियोगिताकत्व-सम्बन्धेन भासेत न तु तत्तद्व्यक्तित्वावच्छिन्न-प्रतियोगिताकत्व-सम्बन्धेन उक्तप्रयोगस्य प्रामाण्यापत्तिः दुर्वारा एवेति ध्येयम्।

अथ केवलं विशेष्ये विशेषणम् इति रीत्या बोधस्वीकारे न उक्तप्रयोग-प्रामाण्यापत्तिः। अत आह **न कश्चिदभ्युपैती**ति। अभावप्रत्ययस्थले तादृशबोधो न भवतीत्यर्थः। विशेषणे प्रकारीभूतधर्मस्य अभावेन सह असम्बद्धत्वम् इह कैवल्यम्। अभावप्रत्यये तन्न स्वीक्रियते इति भावः।

इदमत्र अवधेयम्। प्रतीतिकाले प्रतियोगिनि विद्यमानस्य प्रकारस्य विशेषणत्वम्। तत्स्थलीयाभावप्रत्ययो हि विशिष्ट-वैशिष्ट्यावगाहीत्युच्यते। प्रतीतिकाले प्रकारस्या अविद्यमानत्वे तु उपलक्षणत्वम्। तत्स्थलीय-अभाव-प्रत्ययः उपलक्षित-वैशिष्ट्यावगाहीति उच्यते। अत एव 'गन्धप्रागभाववान् नास्ति', 'रक्तदण्डो नास्ति' इत्यादौ गन्धप्रागभावत्व-रक्तत्वादेः उपलक्षणता। अत एव च अभावबोधो विशिष्टवैशिष्ट्यावगाह्येव भवति इत्यनभिधाय विशिष्ट-वैशिष्ट्यबोध-मर्यादां नातिशेते इत्युक्तम्। **मर्यादा** रीतिः। सा च विशेषण-विशेषणतावच्छेदक-उभयप्रतियोगिक-सम्बन्धावगाहित्वलक्षणतां न जहातीत्यर्थः।

परन्तु 'तद्व्यक्तिः नास्ति' इत्यभावीय-प्रतियोगितावच्छेदकीभूत-तद्व्यक्तित्वे भासमानं घटत्व-समानाधिकरण-उभयवृत्तित्वम् उपलक्षणमेव अभावांशे अप्रकारत्वात् इति ध्येयम्।

**VV-D. 3.6.1:** प्रकारतावादी सिद्धान्तयति **अभेद** इति। **तच्च** = तादात्म्यं च। **स्ववृत्तीति**। स्वम् = प्रकृत्यर्थः। वृत्तित्वम् = संसर्गः । आकाङ्क्षया भासते। अनुपदमेव वक्ष्यति। **वृत्तिश्च तत्र संसर्गमर्यादया** भासते इति। **तत्र** = प्रत्ययार्थे असाधारणधर्मे। असाधारणधर्ममात्रं विभक्त्यर्थः। **एकमात्रवृत्तित्वमि**ति। तच्च एकेतरावृत्तित्वे सति एकवृत्तित्वम्। यथाश्रुतम् अप्रसिद्धमेव। एकत्वस्य केवलान्वयित्वाद् इत्यत आह **तच्चे**ति। एकमात्रवृत्तित्वं चेत्यर्थः। स्वम् = तद्घटभेदः। तद्वैशिष्ट्यं घटत्वे। तथा हि तद्घटभेद-सामानाधिकरण्यस्य तद्घटभेदप्रतियोगिवृत्तित्वस्य च तत्र सत्त्वात्। तदन्यत्वं घटगततद्व्यक्तित्वे। **एकमात्रवृत्तिधर्म एवे**ति। तद्व्यक्तित्वरूपधर्म एवेत्यर्थः। एवकारेण सामान्यधर्म-व्यवच्छेदः। वक्ष्यति च **तादृशो धर्मस्तत्तद्-व्यक्तित्वादिरूप एवे**ति।

अत्र स्वसामानाधिकरण्य-मात्रोक्तौ स्वपदग्राह्य-पटभेद-सामानाधि-करण्यस्य घटगत-तद्व्यक्तित्वे सत्त्वेन पटभेद-वैशिष्ट्यमेव। अतः **स्वप्रतियोगि-वृत्तित्व**निवेशः। तथा च स्वपदग्राह्यपटभेदप्रतियोगिनि पटे घटगततद्व्यक्तित्वस्य वृत्तित्वविरहाद् विशिष्टान्यत्वम् अक्षतमेव घटगत-तद्व्यक्तित्वे। तन्मात्रोक्तौ च स्वपदग्राह्य-तद्व्यक्तिभेद-प्रतियोगिनि तद्घटव्यक्तौ तद्व्यक्तित्वस्य वृत्तित्वाद् तद्व्यक्तिभेद-वैशिष्ट्यमेव स्यात्। अतः स्वसामानाधिकरण्यनिवेशः। तथा च स्वपदग्राह्य-तद्व्यक्तिभेद-सामानाधिकरण्यविरहात् तद्व्यक्तिभेद-विशिष्टान्यत्वं सुलभम्।

**तादृशधर्मः**। भेदविशिष्टान्यरूपो धर्मः। **तत्तद्व्यक्तित्वादिरूप एवे**ति। तथा च 'नीलो घट' इत्यत्र तद्व्यक्तित्वं विशेषण-विभक्त्यर्थः। तत्र स्वरूप-सम्बन्धावच्छिन्नाधेयतासम्बन्धेन प्रकृत्यर्थ-नीलस्यान्वयः। विभक्त्यर्थस्य च स्वरूपेण घटेऽन्वयः। तथा च नीलवृत्तितद्व्यक्तित्ववान् घट इति बोधः।

'नीलो घटो भविष्यति' इत्यत्र घटनिष्ठ-तद्व्यक्तित्वस्य कथञ्चिदपि भानासम्भवेन तद्व्यक्तित्वे शक्तिग्रहाभावात् तदनुपस्थित्यापि शाब्दबोधविषयत्वम् उपपादयति। **अपूर्वव्यक्तिनिष्ठे**ति। **तादृशधर्मस्य** = तद्व्यक्तित्वस्य। **विशिष्य** = तद्व्यक्तित्वत्वेन। **ज्ञातुमशक्यत्वेपी**ति। तस्य भावित्वादिति भावः। **एकमात्रवृत्ति-धर्मत्वादिने**ति-भेदविशिष्टान्यत्वेन इत्यर्थः। **सामान्यप्रत्यासत्तितः** = सामान्य-लक्षणा-प्रत्यासत्तितः। **सुग्रहत्वमेवे**ति। तथा च भेदविशिष्टान्यत्वेन रूपेण निखिलैकमात्रवृत्तिधर्माः सुग्रहाः इति भावः।

**VV-D. 3.7.1:** **एतादृशानुगताभेदस्यैवे**ति। भेदविशिष्टान्यस्यैव इत्यर्थः। **तथात्वम्** = संसर्गत्वम्। एवकारव्यवच्छेद्यमाह **तत्तद्व्यक्तित्वावच्छिन्न-भेदाभाव-कूटस्ये**ति। **विशिष्य** = तादृशकूटत्वेन। **तथात्वे** = संसर्गत्वे। **'घटो न नील'**

**इति वाक्यजन्यबोधे** इति। अस्य तादृशाननुगत-सम्बन्धावच्छिन्न-प्रतियोगिताक-अननुगता अभावा एव भासेरन् इत्यनेन अन्वयः। 'नीलो घट' इत्यत्र तद्व्यक्तित्वावच्छिन्न-प्रतियोगिताकभेदाभाव एव नीलस्य घटे संसर्गः। 'नीलो न घट' इत्यत्रापि तद्व्यक्तित्वावच्छिन्न-प्रतियोगिताक-भेदाभाव-सम्बन्धावच्छिन्न-प्रतियोगिताक-नीलाभाव एव घटे बोध्येत इति भावः। तत्र हेतुमाह **प्रतियोग्यभावान्वयौ च तुल्ययोगक्षेमौ** इति न्यायेनेति। अस्यार्थः "प्रतियोग्यभावान्वयौ च इत्यादेः अयमेवार्थ" इति ग्रन्थेन स्वयमेव वक्ष्यति। अक्षरार्थः तु योगः प्राप्तिः। क्षेमः लब्धपरिरक्षणम्। तुल्यौ योगक्षेमौ यस्येति व्युत्पत्तिः। तुल्यत्वं च न अर्थतत्संसर्गपरिहारेण सर्वथैकविषयत्वम्। एवकारव्यवच्छेद्यमाह **न त्विति**। **नीलवृत्तिः** = नीलघटवृत्तिः। **एकोऽभावः** = अनुगतोऽभावः।

अयं भावः - 'नीलो घट' इति वाक्यजन्यबोधे तद्व्यक्तित्वावच्छिन्न-प्रतियोगिताकाभावत्वेन एका संसर्गता। एवम् अपरेण तादृशाभावत्वेन अपरा। एवं क्रमेण अनन्ताः संसर्गताः कल्पनीयाः न त्वेकेति यावन्तः तद्व्यक्तित्वावच्छिन्न-भेदाभावाः भासेरन् तावताम् एकरूपेण संसर्गत्वासम्भवः। तत्तद्व्यक्ति-भेदाभाव-कूटत्वेन संसर्गता न सम्भवति तद्व्यक्तिभेदाभावस्य तद्व्यक्तित्व-रूपतया तादृशाभावकूटाधिकरणाप्रसिद्धेः। किन्तु अननुगतेनैव तत्तद्व्यक्तिभेदा-भाव-संसर्गेण नीलादिपदार्थानां घटादिपदार्थेषु अन्वयो वाच्यः। तदा आपत्तिमाह **नीलेऽपि न नील इति वाक्यस्य प्रामाण्यं स्यादि**ति। उक्तन्यायेन तत्तद्व्यक्ति-भेदाभाव-सम्बन्धावच्छिन्न-प्रतियोगिताक-नीलाभावस्यैव प्रत्येतव्यतया स्वेतरनील-गत-तद्व्यक्तित्वघटित-उक्तसम्बन्धस्य अभावेन तत्सम्बन्धावच्छिन्न-प्रतियोगि-ताक-नीलाभावस्य सत्त्वेन तेषां च अभावानां चालनीयन्यायेन नीलघटादिषु सत्त्वेन च 'नीलेऽपि न नील' इति प्रयोगापत्तिः इति भावः। भेदविशिष्टान्यत्वेन संसर्गत्वे तेन रूपेण निखिल-'नीलगत' तद्व्यक्तित्वानाम् अनुगमसम्भवेन अनुगतसम्बन्धावच्छिन्न-नीलत्वावच्छिन्न-प्रतियोगिताकाभावस्य एकतया तस्य नीलघटादौ असत्त्वात् न आपत्तिः।

**VV-D. 3.7.2:** एवकारव्यवच्छेद्यमाह **न त्विति**। **नीलादिभेद** इति। नीलादिभेदत्वेन नीलादिभेद इत्यर्थः। तेन नीलभेद-नीलतादात्म्याभावयोः ऐक्येऽपि न क्षतिः। **व्युत्पत्तिसिद्धत्वादि**ति। प्रकृते नञसत्त्वे नीलाभेदः प्रतीयते। नञ्सत्त्वे नीलाभेदाभाव-बोधस्य व्युत्पत्तिसिद्धत्वादित्यर्थः।

**VV-D. 3.7.3:** **एवं च**। नञो भेदाभावबोधकत्वे च। **घटपदसामानाधिकरण्यानुरोधेने**ति। पदसामानाधिकरण्यं च तदर्थयोः अभेदः। **उपगन्तव्यत्वाद्** इति। तथा च भदेमुख्यविशेष्यकोपस्थितिजनकत्वं नञो व्याहतमिति भावः।

**VV-D. 3.7.5:** अभेदस्य संसर्गत्वं व्यवस्थापयति। **इदन्तु तत्त्वमिति। असमस्त-'नीलो घट' इत्यादिस्थले** इति। अथात्र 'नीलो घट' इत्यादिस्थले इत्यस्यैव सम्यक्त्वे असमस्तेत्युक्तिः व्यर्था एवेति चेत् ? न। 'नीलो घट' इत्यादिस्थले इत्यत्र आदिपदेन 'नीलः पट' इत्यादि-संग्रहवत् समासस्य अपि संग्रहनिराकरणाय तदुपादानात्। संग्रहे तु "अभेदस्य संसर्गतया भानं तु समासस्थले एव" इति ग्रन्थेन पौनरुक्त्यं स्यात्। समासे विशेषणविभक्तेः अभावेन तत्र विशेषणविभक्तेः वृत्तिकल्पनम् अनुचितमिति ग्रन्थासंगतिश्च स्यात्। **अभेदस्य संसर्गतोपगमेऽपि** इति। अपिना प्रकारतोपगमस्य समुच्चयः। तथा च अभेदस्य प्रकारतापक्षे वृत्तिकल्पनागौरवातिरिक्त-गौरवविरहः तथा संसर्गतापक्षे अपि इत्यर्थः। **गौरवविरहादिति**। इदं च भिन्नविषयकप्रत्यक्षे शाब्दसामग्री-प्रतिबन्धकता-लाघवम्। कार्यतावच्छेदककोटौ अव्यवहितोत्तरत्वमात्रस्य प्रवेशम् आदृत्य अग्रे च अव्यवहितोत्तरत्व-निवेशस्य निर्युक्तिकत्वं दर्शितम्। तथाहि कार्यकारणभावस्य प्रवृत्तिनिवृत्ति-फलकत्वेन प्रवृत्तेश्च इष्टसाधनताज्ञान-जन्यत्वेन इष्टसाधनता-ज्ञानस्य च फलविशेषानिर्णयेन असम्भवात् तदधीनप्रवृत्त्यनुपपत्तेः। एवं च फलविशेषज्ञानार्थ कार्यतावच्छेदककोटौ विषयनिवेशस्य आवश्यकत्वे क्व लाघवम् ?

किन्तु यत्र गत्यन्तरविरहः तत्रैव कार्यतावच्छेदककोटौ अव्यवहितो-त्तरत्वनिवेशः। अत एव तृणादिजन्यवह्नौ वैजात्यं कल्प्यते। न चैवं "कार्यता-वच्छेदककोटौ अव्यवहितोत्तरत्वनिवेशात् न उक्ताकाङ्क्षा-ज्ञानयोः परस्परजन्य-बोधे व्यभिचार" इति ग्रन्थविरोध इति वाच्यम्। शाब्दबोधे वैजात्यं स्वीकर्त्तुं न शक्यते साङ्कर्यात्। **तथा हि**। एकैकाकाङ्क्षाज्ञानाव्यवहितोत्तर-शाब्दबोधे तत्तद्वैजात्याभाव-सामानाधिकरण्यात्। आकाङ्क्षाज्ञान-द्वयोत्तर-शाब्दबोधे तयोः सामानाधिकरण्याच्च। **तत्र** = उक्तस्थले। **वृत्तिकल्पनमनुचितमि**ति। वृत्तिश्च पदेन सह पदार्थस्य सम्बन्धः। तथा च विशेषणविभक्तिः निरर्थिका प्रतिपित्सितार्थ-प्रतिपत्त्यनुपपत्तिरहित-वाक्यघटकत्वे सति पदसंस्कारकत्वाद् विकरणादिवद् इत्यनुमानं बोध्यम्। न च विशेषणविभक्तिरर्थवती विभक्तित्वाद् इतरविभक्तिवद् इत्यनेन सत्प्रतिपक्ष इति वाच्यम्। पक्षे व्यभिचारसन्देहेन समान-बलत्वाभावात्। न च तव अनुमानेऽपि सोऽस्तीति वाच्यम्। वृत्त्यकल्पनलाघव-तर्केण वृत्तिकल्पनागौरव-प्रतिकूलेन निरासात्।

**VV-D. 3.7.6:** संसर्गतावादिमते कार्यकारणभावे प्रतिबध्यप्रतिबन्धकभावे च गौरवमाशङ्कते **न चेति**। **यत्र** = 'नीलो घट' इत्यादौ। **विशेषणविभक्तेः** = नीलपदोत्तर-सु-विभक्तेः। **शक्तिभ्रमः** अभेदः सु-पदवाच्यः इति भ्रमः। **स्वारसिक-**

**लक्षणाग्रहो वेति**। विवक्षितार्थतात्पर्यानुपपत्ति-प्रतिसन्धानमूला लक्षणा स्वारसिक-लक्षणा तादृशसमभिव्याहार-ज्ञानस्य। 'नीलो घट' इति समभिव्याहार-ज्ञानस्य। **द्विविधबोधे** अभेदप्रकारके अभेदसंसर्गके च बोधे। **हेतुताद्वयं कल्पनीयमिति**। 'नीलस्य घट' इत्यादौ अभेदप्रकारकस्य अभेदसंसर्गकस्य च बोधस्य वारणाय संसर्गतावादिमते तत्तद्बोधे आकाङ्क्षाज्ञानस्य कारणताद्वयम्। एवं योग्यताज्ञानम् अपि अभेदसंसर्गक-नीलप्रकारकं स्वरूपसंसर्गक-अभेदप्रकारकं चेति योग्यता-ज्ञानस्य कारणताद्वयमिति भावः। प्रकारतावादिमते तु एकविधमेव आकाङ्क्षा-ज्ञानं योग्यताज्ञानं च कारणम्।

अथ 'नीलो घट' इत्याकाङ्क्षाज्ञानं विनापि 'श्यामः कलशः' इति आकाङ्क्षाज्ञानात् तथाविध-शाब्दबोधस्य जायमानत्वेन व्यतिरेकव्यभिचार-वारणाय कार्यतावच्छेदककोटौ अव्यवहितोत्तरत्वनिवेशस्य आवश्यकत्वेऽपि विषयनिवेशे प्रयोजनाभावात् क्व कार्यकारणभावद्वयम् ? न च सकलाकाङ्क्षा-ज्ञानानामेकरूपेणैव हेतुत्वम्। एवं च अव्यवहितोत्तरत्वनिवेशस्य अनावश्यकतया कार्यकारणभावद्वैविध्यापत्तिः। अभेदसंसर्गक-नीलप्रकारक-घटविशेष्यक-शाब्दबोधं प्रति उपस्थिति-विशिष्टज्ञानं कारणम्। वैशिष्ट्यं च स्वविशिष्ट-सुत्वावच्छिन्न-विषयताकत्व-सम्बन्धेन। वैशिष्ट्यं च (१)स्वीयनीलत्वावच्छिन्न-विषयताप्रयोजक-वृत्तिनिष्ठ-विषयता-निरूपित-विषयतावच्छेदकता-पर्याप्त्यधिकरणानुपूर्व्यवच्छिन्न-विषयता-निरूपित-सुत्वावच्छिन्न-विषयता-निरूपित्व(२)स्वकालीनघटत्वावच्छिन्न-विषयता-प्रयोजक-वृत्तिनिष्ठ-विषयता-निरूपित-विषयतावच्छेदकता-पर्याप्त्यधि-करणानुपूर्व्यवच्छिन्न-विषयता-निरूपितत्व-उभयसम्बन्धेन इति वाच्यम्। तत्तद्वर्ण-त्वेन पदार्थान्तरावगाहि-वृत्तिज्ञानीय-विषयतावच्छेदकत्वस्य भ्रमात्मकाकाङ्क्षा-ज्ञानीय-विषयतावच्छेदकत्वस्य च विशिष्टानुपूर्व्याम् अभावादिति चेत् ? न। कारणाव्यवहितोत्तरत्वमात्रस्य कार्यतावच्छेदकत्वे प्रवृत्त्याद्यनुपपत्तिः इत्यनुपदमेव उक्तत्वात्।

तथापि संसर्गतावादिमते प्रतिबन्धकताद्वय-कल्पनमावश्यकम् इति आह **एवमिति**। **तादृशसमभिव्याहारज्ञानघटितसामग्र्या** इति। 'नीलो घट' इत्यादौ प्रथमान्त-नीलपदसमभिव्याहृत-प्रथमान्त-घटपदसमभिव्याहारज्ञान-घटितसामग्र्या इत्यर्थः। **भिन्नयोग्यताज्ञानघटितत्वेन** = अभेदसंसर्गक-योग्यताज्ञानघटितत्वेन। अभेदे शक्तिभ्रमे लक्षणाग्रहे वा अभेदप्रकारक-योग्यताज्ञान-घटितत्वेन च। **तादृशेति** = भिन्नयोग्यताज्ञानघटितेत्यर्थः। **शाब्दसामग्रीप्रतिबन्धकताया** इति = द्विविध-शाब्दसामग्रीनिष्ठ-प्रतिबन्धकताया इत्यर्थः। **उक्तस्थलेऽपीति**। यत्र सु-पदे अभेदस्य शक्तिभ्रमो लक्षणाग्रहो वा तत्रेत्यर्थः। **तत्संसर्गकबोधस्यैवेति**। अभेद-

संसर्गक-बोधस्यैव इत्यर्थः। एवकारेण अभदेप्रकारकबोध-व्यवच्छेदः। तथा च न कारणतायाः प्रतिबन्धकताया वा आधिक्यमिति भावः। अथ सामग्रीसत्त्वात् कथं न अभेदप्रकारको बोधः। न च अभेदसंसर्गक-शाब्दबोधं प्रत्येव उक्तसमभि-व्याहारस्य कारणत्वाद् अभेद-प्रकारक-बोधे आकाङ्क्षाज्ञानविरहात् सामग्र्येव नास्तीति वाच्यम्। फलस्वरूपानिर्णये कार्यकारणभावस्य निर्णेतुम् अशक्यत्वात्। विपरीते विनिगमकाभावाच्चेति चेत्? न। अभेदस्य प्रकारत्वे तत्संसर्गान्तरो-परस्थापकापेक्षाप्रसङ्गात्। एवं विशेषणविभक्त्या अभेदोपस्थापने यदि अनुशासनं स्यात् तदा विशेषणविभक्तिः अभेदे शक्ता भवेत् गृहीतशक्तिश्च स्यात्। किन्तु निर्विभक्तिक-प्रयोगस्य असाधुत्वात् अर्थविशेषस्य अनुपस्थापनात् विशेष्यवाचक-पदोत्तर-विभक्तिपरतन्त्रा विशेषण-विभक्तिस्थितिः न अर्थोपस्थापनपरतन्त्रा विकरणागमादिवत् इति ध्येयम्।

**VV-D. 4.1.1:** ननु स्वसमानविभक्तिकेन स्वाव्यवहितपूर्ववर्तिना वा पदेन उपस्थापितस्यैव अर्थस्य अभेदः संसर्गमर्यादया भासते इत्युक्ताकाङ्क्षयोः एकस्या अपि अभावात् कथं 'स्तोकं पचति' इत्यादौ अभेदान्वयबोध इत्यतो नामार्थ-धात्वर्थयोः अन्वयबोधौपयिकाम् आकाङ्क्षान्तरं निर्वक्ति **स्तोकं पचती**ति। **विरुद्धविभक्त्यवरुद्धपदोपस्थापितस्यापी**ति। तिङ्विभक्तिविरुद्ध-सुब्विभक्तिमत्-पदोपस्थापितस्य अपीत्यर्थः। **अभेदान्वयः**। 'स्तोकाभिन्नः पाकः', 'मृदु-अभिन्नः पाकः' इत्याकारकः। **व्युत्पत्तिसिद्धः**। कार्यकारणभावमूलकः। **तदनुरोधेन च**। अभेदान्वयबोधानुरोधेन च। **उपगम्यते इति**। तथा च नामार्थ-धात्वर्थयोः अभेदान्वयबोधं प्रति द्वितीयान्त-नामपदसमभिव्याहृत-प्रत्ययान्त-धातुपदत्व-रूप-आकाङ्क्षाज्ञानं कारणमिति भावः। प्रकृते च अभेदसम्बन्धावच्छिन्न-स्तोकत्वा-वच्छिन्न-प्रकारता-निरूपित-पाकत्वावच्छिन्न-विशेष्यताशालि-बोधं प्रति द्वितीयान्त-स्तोकपदसमभिव्याहृत-पचतिपदत्वरूपाकाङ्क्षाज्ञानं कारणम्। ननु क्रियाजन्य-फलशालित्वरूप-कर्मत्वाभावात् कथं स्तोकपदाद् द्वितीया ? 'स्तोकं स्थीयते' इत्यत्र फलस्यैव अभावादित्यत आह **क्रियाविशेषणानामि**ति। **कर्मत्वमि**ति। नपुंसकत्वमित्यपि बोध्यम्। **कर्मत्वातिदेशादि**ति। कर्मत्वोपचारादित्यर्थः। धात्वर्थतावच्छेदक-फलशालित्वरूप-कर्मत्वस्य बाधितत्वादिति भावः।

**VV-D. 4.1.2:** **एवम्**। क्रियाविशेषणानां कर्मत्वे। **क्रियायामेवे**ति। एवकारेण प्रातिपदिकव्यावृत्तिः। व्यावृत्तिं स्पष्टयति **भावकृतामि**ति। भावार्थक-कृत्प्रत्ययानाम् इत्यर्थः। **धातुनैवे**ति। एवकारे कृदन्त व्यावृत्तिः। **तत्र**। पाक इत्यत्र। **तत्र**। क्रियाविशेषणानां कर्मत्वम् इत्यनुशासने। **सार्थकप्रत्ययान्त-धातूपस्थाप्यार्थ-परत्वादि**ति। तथा च सार्थकप्रत्ययान्त-धातूपस्थाप्या या क्रिया तद्विशेषणानां

कर्मत्वम् इत्यनुशासनार्थः। 'स्तोकः पाक' इत्यत्र घञो निरर्थकतया सार्थकप्रत्ययान्त-धातूपस्थाप्यत्वाभावात् पाकक्रियाविशेषणेऽपि स्तोके न कर्मत्वम्, न वा द्वितीयेति भावः। ननु 'स्तोकं स्थीयते' इत्यत्रापि द्वितीया न स्यात्, तिङो भावार्थकत्वादित्यत आह **स्तोकं स्थीयते** इति। **सार्थकत्वादि**ति। सार्थकत्वं च वृत्तिमत्त्वम्। अर्थबोध-स्वरूपयोग्यत्वं च अर्थबोधजनकतावच्छेदकानुपूर्वीमत्वम्। 'स्तोकं स्थीयते' इत्यादौ वर्त्तमानत्व-विवक्षायां स्तोकाभिन्ना वर्तमानस्थितिः इत्याकारक-बोधजनकतावच्छेदकीभूता या स्था-धातूत्तर-यगुत्तरत्वरूपाकाङ्क्षाया अविवक्षास्थलेऽपि सत्वमित्याह।

**VV-D. 4.1.3:** **तदविवक्षास्थलेऽपी**ति। वर्तमानत्वाद्यविवक्षास्थलेऽपीत्यर्थः। न च आकाङ्क्षासत्त्वे कथं न बोध इति वाच्यम्। विवक्षारूप-तात्पर्याभावात्। पाक इत्यादौ पचधातूत्तर-घञ्त्वरूपाकाङ्क्षा न अर्थबोधजनकतावच्छेदिका। "अकर्तरि च कारके संज्ञायाम्" (P.3.3.19) इति सूत्रसहकारेण "करणाधिकरणयोश्च" (P.3.3.117) सूत्रेण करणे अधिकरणे वा संज्ञायां घञो विधानात्। न च घञो भाव एवार्थे अस्तु इति वाच्यम्। तस्य धातुत एव लाभात्। "धात्वर्थः केवलः शुद्धो भाव इत्यभिधीयते" इति वचनात्। "अनन्यलभ्यो हि शब्दार्थ" इति न्यायात्। धात्वर्थपाक-प्रत्ययार्थपाकयोः विरूपोपस्थितत्वाभावेन अन्वयबोधासम्भवात् चेति ध्येयम्। अर्थबोधजनकतावच्छेदक-आकाङ्क्षाज्ञानीय-विषयतावच्छेदक-आनुपूर्वीमत्त्वं सार्थकत्वम्। यद्रूपावच्छिन्ने यद्रूपावच्छिन्नाव्यवहितोत्तरत्वम् अर्थबोधजनकतावच्छेदकं तद्रूपावच्छिन्नान्तत्वं तद्रूपावच्छिन्नस्य सार्थकप्रत्ययान्तत्वम् इति निष्कर्षः।

**VV-D. 4.2.1:** तिङ्समभिव्याहारे धातोरिव भावार्थककृत्समभिव्याहारे समुदायस्यैव धात्वर्थव्यापारादौ शक्तिस्वीकर्तृणां केषाञ्चिन्मतम् आह **केचित्तु** इति। **अन्यथा** समुदायशक्त्यस्वीकारे। **कर्मत्वादीनामिति** षष्ठ्यर्थः प्रतियोगित्वम्। पाकादौ इत्यत्र सप्तम्यर्थोऽनुयोगित्वम्। तथा च पाक इत्यत्र सुबर्थसङ्ख्याप्रतियोगिकपाकानुयोगिकान्वयबोधानुपपत्तेः इत्यर्थः। ननु पाकमित्यत्र द्वितीयार्थकर्मत्व-प्रतियोगिक-पाकानुयोगिक-अन्वयबोधाभाव इष्ट एवेति चेत्? न। प्रतियोगित्वानुयोगित्वसाधारण-विषयतामात्रस्य तदर्थत्वात् सुप्पदं तिङोऽपि उपलक्षकम्। एवं च 'पाकोऽस्ति' इत्यादौ तिङर्थकर्तृत्वादेः पाकादौ अन्वयबोधानुपपत्तिरपि द्रष्टव्या। तिङर्थकर्तृत्वादेः। प्रथमाविभक्ति-प्रकृत्यर्थे एव अन्वयात्।

तत्र घञन्तस्थले। **अन्वयबोधानुपपत्तेः** इति। तथा च पाकमित्यादौ कर्मत्वविषयता-निरूपित-पाकनिष्ठविषयताशालिबोधानुपपत्तेः इत्यर्थः। अनुपपत्तौ हेतुमाह **धातूनामि**ति। तत्रापि हेतुमाह **प्रकृत्यर्थान्विते**ति। स्वप्रकृत्यर्थान्वितेति

तदर्थः। तेन पचधातोः घञः प्रकृतित्वेऽपि न क्षतिः। तस्य स्वपदग्राह्यसुपः अप्रकृतित्वात्।

स्वनिरूपित-प्रकृतित्वं च स्वनिष्ठविधेयता-निरूपित-उद्देश्यतावत्त्वम्। "प्रकृतिमुद्दिश्य प्रत्यया विधीयन्ते" इति उद्देश्यविधेयभावोऽनुभवसिद्धः। स्वम् = प्रत्ययः। न च स्वपूर्ववर्त्तित्वमेव तदस्तु इति वाच्यम्। पटो घटश्च इत्यादौ पटादेरपि घटपदोत्तर-सुप्प्रकृतित्वापत्तेः। स्वाव्यवहितपूर्वत्वोक्तौ आपत्तिवारणेऽपि धातु-प्रातिपदिकयोः प्रकृतित्वानुपपत्तिः। विकरणागमादिना प्रत्यय-व्यवधानात्। एवं बहुगुड इत्यादौ प्रकृतित्वानुपपत्तिः। प्रत्ययपूर्वत्वाभावात्। एवम् अव्यय-सर्वनाम्नो अकच्-प्रत्ययाव्यवहितपूर्वत्वाभावात् प्रकृतित्वानुपपत्तिः। अकच्प्रत्ययस्य टि-पूर्वविहितत्वात्। एतेन आगमादिभिन्न-स्वपूर्वपूर्वत्वशून्यत्व-स्वाव्यवहितोत्तरत्वा-न्यतरवत्त्वं तत्। 'चैत्रः पचति' इत्यादौ पच्-धातोः स्वादिप्रकृतित्वापत्तिर्न शक्या। स्वपूर्ववर्त्तित्वे सति इत्यनेन विशेषणीयत्वादिति निरस्तम्। विभक्तिप्रकृतित्वस्यैव प्राकृतत्वात् प्रत्यय-सामान्य-प्रकृतित्वस्य अनुपयोगाच्च।

ननु समुदाये शक्त्यनङ्गीकारेऽपि पच्-धातूपस्थाप्य पाकेन सह एव एकत्वान्वयात् न पाक इत्यादौ अनुपपत्तिः। धातूनां सुब्विभक्त्यप्रकृतित्वात् न अन्वयसम्भव इति तु न शङ्क्यम्। "प्रकृत्यर्थान्वित-स्वार्थबोधकत्वं प्रत्ययानाम्" इति व्युत्पत्तौ प्रकृत्यर्थत्वस्य प्रकृतिजन्य-बोधविषयत्वरूपस्य प्रकृत्यर्थ-प्रकृत्येक-देशार्थ-साधारणत्वात् इत्याशकां निरस्यति **प्रकृत्येकदेशार्थेपी**ति। प्रकृत्यर्थे इव प्रत्ययान्त-पच्-धात्वर्थेऽपि इत्यर्थः। **प्रत्ययार्थान्वयोपगमे** इति। तथा च प्रकृति-तदेकदेशार्थान्यतरान्वित-स्वार्थबोधकत्वं प्रत्ययानामिति व्युत्पत्तौ तात्पर्योपगमे इत्यर्थः। **पाकादौ द्वितीयार्थकर्मत्वाद्यन्वयबोधप्रसङ्गादि**ति। पाकादेः द्वितीयार्थ-कर्मत्वे अन्वयबोधप्रसङ्गादित्यर्थः। सिद्धान्ते पाककर्तुः कर्मत्वे अन्वयो भवतीति बोध्यम्। शङ्कते :-

**VV-D. 4.2.2:** **एकत्रे**ति। शत्रर्थकर्त्तरीत्यर्थः। **विशेषणत्वेनोपस्थितस्य**। पाकस्य। **अन्यत्र**। कर्मत्वे **अव्युत्पन्नतये**ति। **सकृदुच्चरित** इति न्यायादिति भावः। तत्र। 'पचन्तं पश्यति' इत्यादौ। **प्रत्ययार्थविशेषण-पाकादेरि**ति। शतृप्रत्ययार्थ-कर्तृविशेषण-पाकादेरित्यर्थः।

अथ विशेषणत्वेनोपस्थितस्य इति न युक्तम्। पचन् पचमान इत्यादीनां वाक्यतया विशिष्टे शक्तिविरहेण न शास्त्राद्यर्थ-कर्तृविशेषणतया पाकस्य उपस्थितिः। किन्तु विशेष्यतया एव पाकस्य उपस्थितिरिति पाकादीनाम् एकत्र विशेषणत्वेन उपस्थितित्वविरहात् इति चेत्? सत्यम्। **अयमाशयः**। **एकत्रे**ति त्रलर्थो विशेष्यत्वम्। तस्य विशेषणत्वेऽन्वयः। तृतीयार्थः प्रयोजकत्वम्। तस्य

उपस्थितिविषयतायाम् अन्वयः। उपस्थितत्वं यः उपस्थितिविषयत्वम्। **अन्यत्रे**ति। त्रलर्थः पूर्ववत्। तृतीयार्थः सम्बन्धित्वम्। तथा च एकनिष्ठ-विशेष्यता-निरूपित-प्रकारता-प्रयोजकोपस्थितीय-विषयतावतः अपरनिष्ठविशेष्यतानिरूपित-प्रकारता-योगो न भवतीत्यर्थः। तथा च शत्राद्यर्थ-कर्तृनिष्ठ-विशेष्यता-निरूपित-प्रकारता-प्रयोजकोपस्थितीय-विशेष्यतावतः पाकस्य कर्मत्वनिष्ठ-विशेष्यता-निरूपित-शाब्दबोधीय-प्रकारकायोगो न स्यादिति। अत एव 'घटो जातिः' इत्यादयो न प्रयोगाः। घटे विशेषणत्वेन उपस्थितस्य घटत्वस्य जातौ अभेदेन विशेषणत्वायोगात्।

प्रकृत्येकदेशार्थ-पाकस्य विशेष्यत्वं दुर्वारमिति समाधत्ते **तथापी**ति। उक्तव्युत्पत्त्या शत्रर्थ-कर्तृ-विशेषण-पाकस्य अन्यत्र कर्मत्वादौ विशेषणतया अन्वयबोधासम्भवेऽपि इत्यर्थः। **अन्वयसम्भवादि**ति। 'एकत्वाविशिष्टपाकानुकूल-कृतिमन्तं पश्य' इत्यन्वयबोध-प्रसङ्गादित्यर्थः। न च इष्टापत्तिरित्यादि। **यत्रे**ति = स्थलविशेषे इत्यर्थः। **द्वित्वादिकं बाधितमि**ति। एक एव पाककर्तेति भावः। **तदबाधितमि**ति। द्वित्वादिकम् अबाधितमित्यर्थः। द्वौ पाकौ इति भावः। **तत्र** = स्थलविशेषे। **दुर्वारत्वादि**ति। पाककर्तृरूप-प्रकृत्यर्थैकदेशे पाके द्वित्वसङ्ख्याया अन्वयसम्भवादिति भावः। **उपगम्ये**ति। धात्वर्थविशेष्यक-सुबर्थप्रकारक-बोधं प्रति तत्तद्धातूत्तर-प्रत्ययविशेष्यक-किञ्चिदर्थ-विषयक-बोधेच्छया उच्चरितत्व-प्रकारक-ज्ञानस्य प्रतिबन्धकता स्वीकृत्येत्यर्थः। **एतादृशातिप्रसङ्गवारणे चे**ति। तथा च 'पचन्तौ पश्य' इत्यादौ शतृप्रत्यय-धर्मिक-कर्तृपरत्वज्ञानस्य प्रतिबन्धकत्वात् न आपत्तिरिति भावः। पाकः इत्यादौ घञो निरर्थकत्वेन घञ्प्रत्यय-धर्मिक-किञ्चिद्-अर्थपरत्वज्ञानविरहात् पाकादौ सुबर्थान्वयबोधः।

**VV-D. 4.2.3:** दोषान्तरमाह **एवमि**ति। भावविहित-ल्युडन्त-समुदायस्य शक्त्यकल्पने इत्यर्थः। **धातुमात्रेणे**ति। मात्रपदेन ल्युटो व्यावृत्तिः। **तत्र** = धात्वर्थपाके। अभेदान्वयबोधानुपपत्तौ हेतुमाह **विशेषणविभक्ति-सजातीयविभक्ति-प्रकृत्यनुपस्थाप्यत्वादि**ति। पाकस्येति शेषः। **विशेषणविभक्तिः** = विशेषणवाचक-पदोत्तरविभक्तिः। प्रकृते शोभनपदोत्तर-सुविभक्तिः, तत्सजातीयविभक्तिः = पचन-पदोत्तर-सुविभक्तिः। तत्प्रकृतिभूत-पचनानुपस्थाप्यत्वादित्यर्थः। पचधातुना एव उपस्थाप्यत्वादिति भावः। स्वसमानविभक्तिक-पदोपस्थापितयोः एव अर्थयोरभेदः। संसर्गमर्यादया भासते इति नियमादिति यावत्। ननु स्वसमानविभक्तिक-पद-विशिष्ट-पदोपस्थापितयोः एव अभेदः संसर्गमर्यादया भासते इति तदर्थः। वैशिष्ट्यं च स्वतादात्म्य-स्वघटकत्वान्यतरसम्बन्धेन। प्रकृते पचनपदघटकत्वस्य पचपदे सत्त्वात् न उक्तानुपपत्तिः अत आह।

**VV-D. 4.2.4:** **प्रकृत्येकदेशसाधारणे**ति। अस्य प्रकृतित्वेऽन्वयः। **तादृशे**ति - विशेषणविभक्ति-सजातीयेत्यर्थः। **तत्र** = 'शोभनं पचनम्' इत्यत्र। **अधिकरण-परत्वेऽपि** इति। अधिकरणपरत्वग्रहेऽपि इत्यर्थः। **तथाविधान्वये**ति। पाके अभेदेन शोभनान्वयेत्यर्थः। न चेष्टापत्तिः। ल्युडादेः अधिकरणपरत्वग्रहे पाकाधिकरणे एव अभेद इव शोभनान्वयात्। **कस्यचित्प्रतिबन्धकतामि**ति। धातूपस्थाप्यार्थे द्वितीया-भिन्न-सुबर्थ-प्रकारकान्वयबोधं प्रति तद्धातूत्तरप्रत्यय-धर्मिक-किञ्चिदर्थपरत्व-ज्ञानस्य प्रतिबन्धकतामित्यर्थः। 'स्तोकं पचति' इत्यादौ सार्थकप्रत्ययान्त-पच-धातूपस्थाप्य पाकादौ अन्वयबोधोपपत्तये द्वितीयाभिन्नत्वोपादानम्। तथा च घञाद्यन्त-समुदाये एव शक्तिः स्वीकार्या इति भावः।

**VV-D. 4.3.1:** एवं प्रकृत्येकदेशार्थे विभक्त्यर्थानन्वये शोभनाद्यभेदानन्वये च। **कुम्भसमीप-पिप्पल्यर्धादौ** इति। कुम्भसमीप-पिप्पल्यर्धादिना इत्यर्थः। **विभक्त्यर्थान्वयस्य** = विभक्त्यर्थ-कर्मत्वाद्यन्वयस्य। **प्रातिपदिकान्तरार्थ-अभेदा-न्वयस्य च** = 'सुन्दरम् उपकुम्भम्' इत्यादौ सुन्दराभेदान्वयस्य च। **पूर्वपदस्य** = उपपदस्य अर्धपदस्य च। **अप्रकृतित्वात्** = प्रकृत्येकदेशत्वादिति यावत्। तथा च "प्रकृत्यर्थान्वितस्वार्धबोधकत्वं प्रत्ययानाम्" इति व्युत्पत्तिविरोध इति भावः। **तदनुरोधेनैव** = उक्तव्युत्पत्त्यनुरोधेनैव। **तत्र** = उपकुम्भम् अर्धपिप्पलीत्यादौ। **पूर्वपदस्य** = उपपदस्य अर्धपदस्य च। तथा च न एकदेशान्वयः। नापि उक्तव्युत्पत्तिविरोधः। एवं च विशिष्टे शक्तिर्न स्वीकरणीया इति ध्येयम्।

**VV-D. 4.3.2:** पूर्वपदार्थप्रधान-समासस्थले अन्यदृश्या आकाङ्क्षया एव कल्पनेन न उक्तव्युत्पत्तिविरोध इत्याह **वस्तुतस्त्वि**ति। **प्रत्ययार्थान्वयबोधे**। कर्मत्वं कुम्भसमीपवृत्ति इति बोधे। **तादृशसमस्तपद-प्रत्ययपदयोः**। उपकुम्भपद-अम्-पदयोः **अव्यवहितपूर्वापरीभावोऽपि आकाङ्क्षे**ति। तथा च कर्मत्वं कुम्भसमीप-वृत्तीति बोधे उपकुम्भपदाव्यवहितोत्तर-अम्-पदत्वरूपाकाङ्क्षा इत्यर्थः।

**VV-D. 4.3.3:** **तत्र** = 'सुन्दरम् उपकुम्भम्' इत्यादौ। **प्रातिपदिकान्तरार्था-भेदान्वयबोधे** = शोभनाभिन्नं कुम्भसमीपम् इति बोधे। **तादृशपदपदान्तरयोश्चे**ति - समस्त-इत्यर्थः। **समभिव्याहारेऽप्याकाङ्क्षे**ति। तथा च शोभनाभिन्नं कुम्भ-समीपम् इति बोधे द्वितीयान्तशोभनपद-समभिव्याहृतोपकुम्भपदत्वरूपाकाङ्क्षा इत्यर्थः। **तथा सति** = उक्ताकाङ्क्षाया नियामकत्वे सति। **अतिप्रसङ्ग-विरहादि**ति। अत्र अनुपपत्तिविरहादित्येव पाठः सम्यक् प्रतिभाति।

ननु समुदायशक्त्यनङ्गीकर्तृमतेऽपि 'पाकः पचनम्' इत्यादौ सुबर्थै-कत्वादिप्रकारक-धात्वर्थपाक-विशेष्यक-बोधे घञन्त-पाकपद-अव्यवहितोत्तर-सु-पदत्वरूपा। एवं ल्युडन्त-पचनपद-अव्यवहितोत्तर-सु-पदत्वरूपा। एवम् अभेदेन

शोभन-प्रकारक-धात्वर्थपाक-विशेष्यक-बोधे प्रथमान्त-शोभनपद-समभिव्याहृत-प्रथमान्त-पाकपदत्वरूपा। तथा प्रथमान्त-शोभनपद-समभिव्याहृत-प्रथमान्त-पचनत्वरूप-आकाङ्क्षा वाच्या। तदभावादेव पचन्तम् इत्यादौ सुबर्थैकत्वादेः न धात्वर्थेऽन्वय इत्याशङ्का निराकरोति **धात्वर्थपाकादौ** इति। **ल्युट्-घञाद्यन्त-समुदायप्रत्यययोः** = पाकः पचनम् इत्यनयोः। **समभिव्याहारस्य**। 'शोभनः पाकः', 'शोभनं पचनम्' इति समभिव्याहारस्येत्यर्थः। **अतिप्रसङ्गस्य दुरुद्धरतयेति**। अधिकरणार्थक-ल्युडन्त-पचनपदस्थलेऽपि 'शोभनं पचनम्' इत्यत्र धात्वर्थपाकादौ द्वितीयार्थसङ्ख्या-कर्मत्वादेः शोभनस्य च अतिप्रसङ्गस्य दुर्वारतया इत्यर्थः। **न तत्सम्भवः**। न पाकपदाव्यवहितोत्तर-सुप्पदत्वम्, एवं पचनपदाव्यवहितोत्तर-सुप्पदत्वम्, एवं शोभनपदसमभिव्याहृत-पचनपद-समभिव्याहार-रूपाया आकाङ्क्षाया न सम्भवः। पाकाधिकरणे शोभनाभेदान्वयेन धात्वर्थपाके अन्वय-विरहात् उक्ताकाङ्क्षाज्ञानस्य व्यभिचार इति भावः। तथा च घञन्त-समुदायस्य शक्तिः स्वीकार्या इति ध्येयम्।

**VV-D. 4.4.1:** घञन्तसमुदायस्य पाकादौ शक्तिस्वीकारे **दीधिति**विरोधम् आशङ्कते। **अथेति**। **घञन्तसमुदायस्य पाकाद्यर्थकत्वे** इति। अस्य संयोग-विभागादि-शब्दानां नैमित्तिकसंज्ञात्व-निराकरणं **दीधिति**कृतां विरुद्ध्यते इत्यनेन अन्वयः। नैमित्तिकसंज्ञा च जात्यवच्छिन्न-सङ्केतवती संज्ञा। घञोऽसत्त्वेऽपि संयुज्यते विभजते इत्यादौ संयोगत्व-विभागत्व-जातिविशिष्टे क्लृप्ततया धातुशक्त्या एव संयोगत्व-विभागत्व-विशिष्ट-बोधनिर्वाहे घञन्त-समुदायस्य शक्तिकल्पनम् अनुचितम् इति घञन्तसमुदायस्य संयोगत्व-विभागत्व-विशिष्टा-वाचकत्वं प्रसाध्य संयोगविभागादिपदानां न नैमित्तिक-संज्ञात्वम् इत्याशयो दीधितिकृताम्। धातुमात्रस्य संयोगत्वरूपजात्यवच्छिन्न-वाचकत्वस्य आवश्यकत्वे प्रत्ययविशिष्टस्य जात्यवच्छिन्नवाचकत्वरूप-नैमित्तिकसंज्ञात्वं न संयोगादि-पदानाम् इति **दीधिति**ग्रन्थः। तद्विरुद्ध्यतेति भावः। अस्तु विरोध इत्याह **का क्षतिरिति**। विरोधे न क्षतिरित्यर्थः। क्षत्यभावे हेतुमाह **न हि कस्यचिद्ग्रन्थकृतो विपरीतलिखनमिति**। अस्य च बाधकम् इत्यनेन अन्वयः। बाधकाभावे हेतुमाह **युक्तिबलाद् वस्तुसिद्धौ** इति। 'स्तोकः पाकः' 'शोभनं पचनम्' इत्यत्र धातुमात्रेण पाकाद्युपस्थितौ स्तोकेन शोभनेन च सह पाकाद्यभेदान्वयानुपपत्तिः। विशेषणविभक्ति-सजातीयविभक्ति-प्रकृति-अनुपस्थाप्यत्वाद् इति उक्तहेतुना घञन्त-समुदायस्य वाचकत्वसिद्धौ इत्यर्थः। तथा च दीधितिग्रन्थो न बाधक इति भावः।

**VV-D. 4.4.2:** एवञ्चेति। घञन्तसमुदायस्य शक्तिसिद्धौ चेत्यर्थः। **धातुमात्रस्यैवे**ति। एवकारेण घञादिव्यावृत्तिः। **तत्र** = 'स्तोकं पाक' इत्यत्र। **तद्विशेषणवाचकपदात्** = क्रियाविशेषणवाचक-स्तोकादिपदात्। **द्वितीयैवे**ति - एवकारेण प्रथमाया व्यावृत्तिः। क्रियाविशेषणानां कर्मत्वम् इत्यनुशासनादिति भावः। अत्र सुबर्थसङ्ख्यादेः धात्वर्थपाके अन्वयानुपपत्त्या सुबर्थस्य अविवक्षा बोध्या। **यत्र तु** = 'स्तोकः पाक' इत्यत्र तु। **कृदन्तसमुदायस्य तात्पर्य**मिति। **तत्र** = 'स्तोकः पाकः' इत्यत्र। **तादृशपदम्** = विशेषणवाचक-स्तोकपदम्। **तथाविधे**ति = पाकाद्यर्थोपस्थापक इत्यर्थः। **कृदन्तसमुदायसमानविभक्तिम् एवे**ति = विशेष्यवाचकपद-समानविभक्तिकम् एव इत्यर्थः। अत्र सुबर्थस्य विवक्षा बोध्या। **धात्वर्थपाकाधिकरण्ये तु** इति। धात्वर्थेन सह अभेदे विवक्षिते तु इत्यर्थः। धात्वैकाधिकरण्ये तु इति पाठे तु स्तोकपदस्य इति शेषः। तथा च स्तोकपदस्य धातुप्रतिपाद्य-प्रतिपादकत्वे तु इत्यर्थः। धातोरिव शक्तिः क्लृप्ततया तत एव विवक्षितान्वयबोधोपपत्तौ कृदन्तसमुदायस्य शक्तिकल्पने गौरवं वदन्ति इति अस्वरसबीजं बोध्यम्।

**VV-D. 4.4.3:** समानवचनक-विशेषणवाचक-पदोत्तरविभक्तिः साधुत्वार्थम् इत्युक्तम् "विभक्तिपदं साधुत्वार्थमेव प्रयुज्यते" इति ग्रन्थेन। कार्यकारण-भावमाह **तदर्थके**ति। प्रकृत्यर्थकेत्यर्थः। **तदर्थविषयते**ति। प्रकृत्यर्थनिष्ठविषयता इत्यर्थः। सा च द्वयी - भेदसम्बन्धावच्छिन्नप्रकारता एका, अपरा च विशेष्यता। तथा च तदर्थकपदोत्तरविभक्त्यर्थ-सङ्ख्याविशेष्यकबोधं प्रति अभेदसम्बन्धा-वच्छिन्न-प्रकारताभिन्न-तदर्थनिष्ठ-विषयक-शाब्दबोध-सामग्री कारणम्। 'नीलो घट' इत्यादौ प्रकारीभूत-नीलनिष्ठविषयता अभेदसम्बन्धावच्छिन्न-प्रकारतारूपा एवेति न नीले सङ्ख्यान्वयः। तत्रैव घटनिष्ठविषयता-विशेष्यतारूपा अभेद-सम्बन्धावच्छिन्न-प्रकारताभिन्ना। एवं 'राज्ञः पुरुष' इत्यादौ राजनिष्ठनिरूपितत्व-सम्बन्धावच्छिन्न-प्रकारता अपि अभेदसम्बन्धावच्छिन्न-प्रकारताभिन्ना एवेति घटे राज्ञि च एकत्वसङ्ख्यान्वयः तदेवाह **तादृशश्च बोध** इति। अभेदसम्बन्धा-वच्छिन्न-प्रकारताभिन्न-तदर्थनिष्ठ-विषयताशालिबोधः चेत्यर्थः। **तदर्थविशेष्यक** इति। प्रकृत्यर्थविशेष्यक इत्यर्थः। तथा च 'नीलो घट' इति वाक्याद् घटविशेष्यकः तादृशो बोध इत्यर्थः। **तदर्थनिरूपिते**ति। प्रकृत्यर्थनिरूपितेत्यर्थः। तादृशो भेदान्वयः। अभेदातिरिक्तः संसर्गः। तद्विषयक इत्यर्थः। यथा 'राज्ञः पुरुष' इति वाक्यात् निरूपितत्व-सम्बन्धावच्छिन्न-राजनिष्ठ-प्रकारताकः तादृशो बोध इति भावः। तथा च विभक्त्यर्थसङ्ख्या-प्रकारकबोधे अभेदसम्बन्धावच्छिन्न-प्रकारताश्रयत्वज्ञानं प्रतिबन्धकमितिभावः।

प्रत्युदाहरणम् आह **नीलौ घटौ इत्यादौ चे**ति। एकत्वस्य केवलान्वयितया नीलेऽपि भानसम्भवात् नीलौ घटौ इत्युक्तम्। **विशेष्यवाचकपदोत्तरविभक्त्यैवे**ति। घटपदोत्तरविभक्त्यैवेत्यर्थः। एवकारेण विशेषणवाचकपदोत्तरविभक्तिव्यवच्छेदः। यतो 'नीलौ घटौ' इत्यत्र विशेषणीभूतनीलनिष्ठ-विषयता-अभेदसम्बन्धावच्छिन्न-प्रकारतात्मिका एव न तद्भिन्ना इति। अभेदसम्बन्धावच्छिन्न-प्रकारताभिन्न-तदर्थनिष्ठ-विषयताशालि-शाब्दसामग्र्यभावात् नीलपदोत्तरविभक्त्या सङ्ख्याबोधः। तथा च समानवचनक-विशेषणवाचक-पदोत्तरविभक्त्या क्वापि सङ्ख्याबोधनासम्भवात् विशेषणवाचकपदोत्तर-विभक्तिः साधुत्वार्थिका एवेति ध्येयम्।

**एवं चे**ति। सङ्ख्यान्वयबोधे अभेदसम्बन्धावच्छिन्न-प्रकारताभिन्न-तदर्थनिष्ठ-विषयताशालि-शाब्दसामग्र्या अपेक्षणे चेत्यर्थः। **क्रियाविशेषणवाचकपदोत्तरविभक्त्ये**ति = स्तोकादिपदोत्तर-विभक्त्येत्यर्थः। **अबाधितयोरपि द्वित्व-बहुत्वयोरि**ति। यत्र कर्त्रा पाकद्वयं पाकत्रयं वा क्रियते तत्र अबाधितयोरपि द्वित्व-बहुत्वयोः इत्यर्थः। **प्रत्ययानामसम्भवादि**ति। द्विवचनादिविभक्त्या द्वित्व-बहुत्व-बोधनासम्भवादित्यर्थः। क्रियाविशेषण-स्तोकादीनां क्रियायाम् अभेदसम्बन्धेनैव प्रकारतया तन्निष्ठप्रकारताया अभेदसम्बन्धावच्छिन्नत्वादिति भावः। तथा चेति शेषः। **तादृशपदोत्तरम्** = क्रियाविशेषणवाचकपदोत्तरम्। पद-साधुत्वार्थं यस्य कस्यचित् प्रयोगे प्राप्ते प्राथमिकम् एकवचनमेव प्रयोक्तव्यम् इत्याशयेन आह **एकवचनमेवे**ति। तदपि अनियतलिङ्गकस्थलाभिप्रायेण। **औत्सर्गिकमि**ति। सामान्ये नपुंसकमिति क्लिबत्वमपि। एवं क्रियाविशेषणानां कर्मत्वमपि। **भावाख्यातस्थलवदि**ति। यथा भावाख्यातस्थले एकवचन-प्रयोगः तद्वत् क्रियाविशेषणानाम् अपीति भावः।

**VV-D. 5.1.1:** अभेदान्वयबोधे नियामकान्तरमपि आह **अभेदान्वयबोधश्चे**ति। अभेदसंसर्गकबोधश्चेत्यर्थः। **विरूपोपस्थितयोरेवे**ति। विभिन्नाभ्यां धर्माभ्याम् उपस्थितयोः अर्थयोः एवेत्यर्थः। यथा 'नील घट' इत्यादौ नीलत्व-घटत्वाभ्याम् उपस्थितयोः नील-घटपदार्थयोः। यथा 'नीलघटः' इत्यादौ नीलत्व-घटत्वाभ्याम् उपस्थितयोः नील-घटपदार्थयोः। एवकारव्यवच्छेद्यमाह **घटो घट इत्यादि तत्तद्रूपावच्छिन्नस्य**। घटत्व दण्डवत्त्व पाकत्वावच्छिन्नस्य। **तथाविधे**ति = अभेदसंसर्गकेत्यर्थः। **अन्वयबोधानुदयादि**ति। विभिन्नरूपेण अनुपस्थितत्वात् इति भावः।

**VV-D. 5.1.2:** आशङ्कते। **अथे**ति। **तत्प्रयोजके**ति। सामान्यतः अभेदान्वयबोध-प्रयोजकेत्यर्थः। समानधर्मावच्छिन्नप्रकारता-विशेष्यताक-अभेदान्वयबोध-

प्रयोजकेत्यर्थ इति तु न सम्यक्। तादृशबोधस्य अप्रसिद्ध्या तत्प्रयोजकस्यापि अप्रसिद्धेः अक्लृप्तत्वात्। तथा च तत्पदं सामान्यतः अभेदान्वयबोध-परम्। न तु तथाविधान्वयबोधपरमिति भावः। **समानविभक्तिकत्वादिरिति**। आदिना पदार्थोपस्थित्यादि-परिग्रहः।

**VV-D. 5.1.3:** समाधत्ते। **अत्राहुरिति**। **यादृशम्**। **यद्धर्मावच्छिन्नम्**। फलं चात्र शाब्दबोधः। **तादृशस्यैव** = तद्धर्मावच्छिन्नस्यैव। एवकारेण अप्रसिद्धस्य व्यावृत्तिः। **क्लृप्तसामग्रीबलादिति** = आकाङ्क्षा-योग्यतादि-बलादित्यर्थः। तथा च यादृशधर्मावच्छिन्न-कार्यतानिरूपित-कारणताश्रयरूप-आपादकबलात् तद्धर्मावच्छिन्नकार्यस्य आपत्तिर्भवति इत्यर्थः। तेन उत्पन्नव्यक्तेः पुनः उत्पादासम्भवेऽपि न क्षतिः। **यादृशं च** = यद्रूपावच्छिन्नं च। **तादृशस्य** = तद्रूपावच्छिन्नस्य। **आपत्तिरशक्यैवेति**। अयं भावः। आपत्तिं प्रति आपाद्यव्यतिरेक-निश्चयः आपाद्यव्याप्य-आपादकवत्ता-निश्चयश्च कारणम्। आपत्तिश्च शाब्दबोधः अभेदसंसर्गक-घटप्रकारक-घटविशेष्यकः स्याद् इत्याकारिका। अत्र अभेदसंसर्गक-घट-प्रकारक-घटविशेष्यकत्वम् आपाद्यम्। तदप्रसिद्ध्या न आपाद्यव्यतिरेक-निश्चयः। आपादकाप्रसिद्ध्या नापि आपाद्यव्याप्य-आपादकवत्ता-निश्चयश्च सम्भवति। एवं च कारणाभावात् आपत्तिः अशक्या एवेति भावः। तदेवाह **क्वचिदपि अनुदयादिति**। अनुत्पादादित्यर्थः। आपादकाप्रसिद्ध्या आपाद्याप्रसिद्धेः इति यावत्। अभेदसंसर्गक-घटप्रकारक-घटविशेष्यक-शाब्दबोध-सामग्र्या आपादकत्वात् न आपादकाप्रसिद्धिः। न वा आपत्तिः अशक्या इत्याशङ्कते।

**VV-D. 5.1.4:** **अथेति**। **तादृश-शाब्दबोधस्य**। नीलत्वादेः अधिकस्य भानेऽपि अधिकन्तु इत्यादिन्यायादिति हृदयम्। विरूपोस्थित्यभावात् कथं शाब्दबोध इत्यत आह **विधेयकोटावधिकावगाहिन** इति। विधेयघटकतया अखिलोद्देश्यघटकावगाहिनः तदघटकम् अवगाहमानस्य इत्यर्थः। अभेदान्वयबोधस्थले विधेयीभूत-आश्रयस्य नियमतो भानाद् अखिलेत्युक्तम्। **नवीनैः स्वीकारादिति**। उद्देश्यवाचकपदेन उद्देश्यस्य आदौ अवगततया तत्र बुबोधयिषाया अभावेन तस्य अज्ञापकत्वरूपविधेयतया न भानसम्भवः। किन्तु अधिकांशस्यैव। अतो 'घटो नीलघट' इत्यादौ अपि 'नीलाभिन्नो घट' इत्येव शाब्दबोधः। न च एवं 'नीलो घट' इत्यत्रापि नैल्यमात्रस्य विधेयत्वम् उचितम्। न तु आश्रयस्यापि इति वाच्यम्। सर्वानुभवसिद्ध-अभेदान्वयबोधस्य अपलापप्रसङ्गात् 'घटो नीलघट' इत्यादौ तु विधेयतया नीलस्य भाने क्षितिविरहादिति प्राचीनमते नीलस्यैव विधेयत्वमात्रम् उक्तम्। **नवीनैरिति**। वाक्यरचनायाः प्रयोजनद्वयम्। विशिष्टज्ञानं संशयनिवृत्तिश्च। तत्र 'घटो नीलघटो न वा' इति संशयं प्रति 'नीलघटाभिन्नो

घट' इति निश्चय एव प्रतिबन्धकः। न तु 'नीलाभिन्नो घट' इति निश्चयः असमानप्रकारकत्वात्। अतो विधेयांशे अधिकावगाहि-शाब्दबोधः स्वीकर्तव्य इति नवीनाः।

**स्वीकारादिति**। तथा च 'घटो नीलघट' इति वाक्यजन्य-शाब्दबोधस्य घटत्वावच्छिन्न-विशेष्यता-निरूपित-नीलघटत्वावच्छिन्न-प्रकारताकत्वे घटत्वा-वच्छिन्न-प्रकारताकत्वम् अपि सुलभम्। "अधिकन्तु प्रविष्टम्" इत्यादिन्यायात्। परन्तु विधेयांशे अधिकावगाहि-शाब्दबोध-स्वीकर्तृ-नवीनमते अधिकविषयता नियामिका सामग्री वक्तव्या। तादृशसामग्र्याश्च 'घटो घट' इत्यादिस्थलेऽपि सत्त्वात्। अभेदसंसर्गक-घटत्वावच्छिन्नप्रकारतानिरूपित-घटत्वावच्छिन्नविशेष्यता-शालि-शाब्दबोधापत्तिरिति भावः। कारणकूटस्यैव कार्योत्पाद-नियामकत्वम् इति आशयेन समाधत्ते। **तर्हीति**। अधिकावगाहि-शाब्दबोध-स्वीकर्तृभिः नवीनैः अधिकांश-विषयता-नियामिका सामग्री वाच्या। सा च सामग्री 'घटो नीलघट' इत्यादौ घटे = नीलरूप-विशिष्टे घटे विशेषणतया भासते। तत्र नीलभान-नियामिका सामग्री च नीलपदजन्य-नीलोपस्थितिः। घटपदं नीलघटान्वित-स्वार्थं बोधयतु। घटः नीलघट-अभेदसंसर्गवान् घटपदसमभिव्याहृत-नीलघटपदत्वरूप-आकाङ्क्षाज्ञानं तद्घटितसामग्री अत्र नास्ति इत्याह **घटाद्यंशे** इति। **तदभावाद् एव** = उक्तसामग्र्यभावादेव। न **तादृशशाब्दबोधापत्तिः**। न घटत्वावच्छिन्न-विशेष्यक-अभेदसंसर्गक-घटप्रकारक-शाब्दबोधापत्तिः।

अथ घटत्वावच्छिन्न-विशेष्यता-निरूपित-घटत्वावच्छिन्न-प्रकारताशालि-शाब्दबोधं प्रति नीलाद्युपस्थितेः व्यभिचारितया कारणत्वं न सम्भवति। तथाहि नीलोपस्थिति-विरहेऽपि घटप्रकारक-घटविशेष्यक-शाब्दबोधस्य 'घटो रक्तघट' इति वाक्यात् उत्पत्तेः। एवं रक्तोपस्थिति-विरहेऽपि 'घटः पीतघट' इति वाक्यात् तादृश-शाब्दबोधोत्पत्तेः। तथा च नीलाद्युपस्थिति-विरहस्य अकिञ्चित्करत्वाद् 'घटो घट' इति वाक्यात् शाब्दबोधापत्तिः इति चेत्? न। अभेदसम्बन्धेन घटप्रकारक-घटविशेष्यक-शाब्दबोधं प्रति न हि कश्चिदपि स्वातन्त्र्येण हेतुः। किन्तु नीलघटत्वावच्छिन्न-प्रकारता-शालि-बोधं प्रत्येव इति एतादृश-शाब्दबोध-सामग्री-प्रयोज्य एव। तादृश-शाब्दबोधोऽपि वक्तव्यः। सा च सामग्री नीलाद्युपस्थिति-घटिता इति नीलाद्युपस्थिति-विरहे कथं तादृशः शाब्दबोध इति ध्येयम्।

वस्तुतः सामान्यधर्मावच्छिन्न-कार्योत्पत्तौ विशेषधर्मावच्छिन्न-कार्योत्पादक सामग्र्या अपेक्षितत्वनियमेन अभेदससंर्गक-घटप्रकारक-घटविशेष्यक-शाब्दत्व-रूप-सामान्यधर्मावच्छिन्न-कार्योत्पत्तौ नीलघटत्वावच्छिन्न-प्रकारता-निरू

घटत्वावच्छिन्न-विशेष्यताशालि-शाब्दत्वरूप-विशेषधर्मावच्छिन्न-कार्योत्पादक-सामग्र्या अपेक्षितत्वे नीलाद्युपस्थितेः अवश्यापेक्षणीयत्वादिति।

तथा च धर्मितावच्छेदकता-सम्बन्धेन घटप्रकारक-शाब्दबोधं प्रति तादृश-सम्बन्धेन आकाङ्क्षाज्ञानं कारणमिति। विशेष्यतावच्छेदकानिवेश-प्रयुक्त-लाघवानुरोधेन विषयनिष्ठ-प्रत्याशाया कार्यकारणभावं स्वीकृत्य आपत्तिं पुनः आपादयति।

**VV-D. 5.2.1:** **अथेति**। **तन्न** इत्यपि पाठान्तरम्। 'द्रव्यं घट' इत्यादौ अभेदसंसर्गेण घटप्रकारक-शाब्दबोधो धर्मितावच्छेदकता-सम्बन्धेन द्रव्यत्वे जायते। तत्र 'द्रव्यं घट' इति वाक्यजन्य-अभेदसम्बन्धावच्छिन्न-घटत्वावच्छिन्न-प्रकारता-निरूपित-द्रव्यत्वावच्छिन्न-विशेष्यताशालि-बोधविशेष्यक-इच्छावान् अयम् इति तात्पर्यज्ञानं विशेष्यतावच्छेदकता-सम्बन्धेन वर्तते। एवं द्रव्यं घटत्वावच्छिन्न-भेद-संसर्गवान् इति योग्यताज्ञानं च तेन सम्बन्धेन तत्र वर्तते इति द्रव्यत्वे प्रसिद्धस्य अभेदसम्बन्धेन घटप्रकारक-शाब्दबोधस्य घटत्वे आपत्तिः इत्याशयेन आह **द्रव्यत्वादौ** इति। 'द्रव्यं घट' इत्यत्रेत्यादिः। **धर्मितावच्छेदकता-संसर्गेणेति** = विशेष्यतावच्छेदकता-सम्बन्धेन इत्यर्थः।

अथ धर्मितासम्बन्धेन इत्येव कथं नोक्तमिति चेत्? न। सामान्य-धर्मावच्छिन्न-धर्मिताया धर्मिभेदेऽपि ऐक्यमते अपूर्वव्यक्तौ अपि शाब्दबोधो जायते। तत्र धर्मितासम्बन्धेन योग्यताज्ञानादेः अभावात् व्ययतिरेक-व्यभिचारः। द्रव्यत्वेन घटावगाहि 'द्रव्यं नीलम्' इति योग्यताज्ञानसत्त्वे 'नीलो घट' इति वाक्यात् शाब्दबोधापत्तिश्च। **शुद्धघटत्वावच्छिन्नप्रकारकेति**। केवल-घटत्वावच्छिन्न-प्रकारक-इत्यर्थः। विधेयांशे अधिकावगाहि-शाब्दबोध-स्वीकारपक्षे घटत्वावच्छिन्न-प्रकारक-शाब्दबोधस्य घटत्वे इष्टत्वात् आह **शुद्धेति**। **घटत्वादावापत्ति-सम्भवादिति**। आपत्तिः च घटत्वम्। यदि अभेदसंसर्गक-घटप्रकारक-अन्वयबोध-प्रयोजक-सामग्रीमत् स्यात् तदा अभेदसंसर्गक-घटप्रकारक-अन्वयबोधवत् स्याद् इत्याकारिका। अत्र आपाद्यः शाब्दबोधः। स च प्रसिद्ध एव। आपाद्यव्याप्य-आपादकवत्ता-निश्चयोऽपि प्रसिद्ध एव।

अथ कार्यापत्तौ कार्यव्याप्यसामग्र्या एव आपादकत्वम्। प्रकृते च शुद्धघटत्वावच्छिन्न-प्रकारक-शाब्दबोधं प्रति न कापि सामग्री क्लृप्ता इति आशङ्कते। **न चेति**। **तत्र** = शुद्धघटप्रकारक-शाब्दबोधे। **आपादकाभाव** इति। तथा च न शाब्दबोधापत्तिरिति भावः। आपादिकां सामग्री संवादयति। **तात्पर्य-ज्ञान-विशेषादिघटिताया** इति। अस्य सामग्र्या इत्यनेनान्वयः। **धर्मितावच्छेदकता-सम्बन्धेनेति** = विलक्षणविषयता-सम्बन्धेन इत्यर्थः। **तदुत्पादनियामकेति**। द्रव्यत्वे

अभेदसंसर्गक-घटप्रकारक-अन्वयबोधोत्पत्ति-नियामकेत्यर्थः। **सामग्र्या एवेति**। सा च सामग्री 'द्रव्यं घट' इति वाक्यजन्य-घटत्वावच्छिन्न-प्रकारता-निरूपित-द्रव्यत्वावच्छिन्न-विशेष्यताशालि-बोधविशेष्यक इच्छावान् अयम् इति तात्पर्य-ज्ञानीय-इच्छानिष्ठ-विषयता-निरूपित-बोधनिष्ठ-विशेष्यता-निरूपितावच्छिन्नत्व-निष्ठ-विषयता-निरूपित-विषयता द्रव्यत्वे वर्तते। अथ धर्मितावच्छेदकतासम्बन्धेन द्रव्यत्वे अभेदसंसर्गक-घटप्रकारक-शाब्दबोधोत्पत्ति-नियामिका सामग्री द्रव्यत्वा-वच्छिन्न-विशेष्यक-योग्यताज्ञान-उक्ततात्पर्यज्ञानघटिता एव। सा च द्रव्यत्वे एवेति घटत्वे कथं तदुत्पादनियामकत्वमिति चेत् ? न। यादृशी सामग्री द्रव्यत्वादौ तदुत्पादनियामिका तादृश्याः तात्पर्यज्ञान-विशेषादि-घटितायाः सामग्र्याः एव आपादकत्वादिति तदर्थात्। तथा च अभेदसंसर्गकस्थले तेन संसर्गेण तद्वद्-विशेष्यक-ज्ञानत्वेन यथा 'द्रव्यं घट' इति ज्ञानस्य योग्यताज्ञानत्वम्। एवं तद्बोधक-पदयोः समानविभक्तिकयोः समभिव्याहारस्य आकाङ्क्षात्वेन 'द्रव्यं घट' इति वाक्यज्ञानस्य आकाङ्क्षा-ज्ञानत्वम्। एवं तदर्थान्वित-तदर्थपरत्वस्य तात्पर्यरूपत्वेन 'द्रव्यं घट' इति वाक्यं घटान्वित-द्रव्यपरमिति ज्ञानस्य तात्पर्य-ज्ञानत्वम्। तथा 'घटो घट' इति ज्ञानस्यापि योग्यताज्ञानत्वम्। एवं 'घटो घट' इति वाक्यज्ञानस्यापि आकाङ्क्षाज्ञानत्वम्। एवं 'घटो घट' इति वाक्यं घटान्वित-घटपदमिति तात्पर्यज्ञानस्यापि तात्पर्यज्ञानत्वम्। तथा च धर्मिता-वच्छेदकता-सम्बन्धेन समस्तसामग्री द्रव्यत्वे घटप्रकारक-शाब्दबोधम् उत्पादयति तथा घटत्वेऽपि घटप्रकारक-शाब्दबोधम् उत्पादयेत् इति भावः।

**VV-D. 5.2.2:** पुनः 'घटो घट' इत्यत्र शाब्दबोधापत्तिम् उद्धर्तुं शङ्कते **न चेति**। **तादृशान्वयबोधोत्पत्तिप्रयोजिका** = घटप्रकारक-अभेदान्वय-बोधोत्पत्ति-प्रयोजिका। **तदवच्छिन्नविशेष्यकेति** = द्रव्यत्वावच्छिन्न-विशेष्यक-इत्यर्थः। **समाग्र्येव इति** = आत्मनिष्ठ-प्रत्यासत्त्या कार्यकारणभावाभिप्रायेण। स च धर्मितावच्छेदकावच्छिन्न-विशेष्यत्वम् अन्तर्भाव्यैव समवायेन बोध्यः। एवकारेण धर्मितावच्छेदकावच्छिन्न-विशेष्यत्वम् अनन्तर्भाव्य केवलघट-प्रकारक-अभेद-संसर्गक-योग्यताज्ञानादीनां व्यवच्छेदः। अभेदसंसर्गक-घटप्रकारक-योग्यताज्ञान-मात्रस्य कारणत्वे प्रमेयत्वावच्छिन्न-विशेष्यक-योग्यताज्ञानादितो द्रव्यत्वावच्छिन्न-विशेष्यक-शाब्दबोधापत्तेः। तथा च द्रव्यत्वावच्छिन्न-विशेष्यक-योग्यताज्ञाना-द्यभावात् न 'घटो घट' इत्यादौ घटत्वे घटप्रकारक-अभेदसंसर्गक-शाब्दबोधापत्तिः।

अत्र द्रव्यत्वादौ इत्यत्र सप्तम्यर्थः अवच्छेदकत्वम्। तस्य उत्पत्तौ अन्वयः। द्रव्यत्वावच्छिन्न-तादृशान्वयबोधोत्पत्ति-प्रयोजिका इत्यर्थः। धर्मिता-

वच्छेदकता-सम्बन्धेन बोधाधिकरणद्रव्यत्वादेः बोधनिष्ठोत्पत्त्यवच्छेदकत्वम्। तदधिकरणस्यैव तन्निष्ठधर्मावच्छेदकत्वात्।

अथ आत्मनिष्ठ-प्रत्यासत्त्या कार्यकारणभावे कार्यकारणतावच्छेदक-सम्बन्धः समवायो न तु धर्मितावच्छेदकता। समवायेन तु कार्याधिकरणम् आत्मा। न तु द्रव्यत्वादिः। तथा च आत्मा कार्योत्पत्त्यवच्छेदकः। तेन सम्बन्धेन तदधिकरणस्यैव तन्निष्ठधर्मावच्छेदकत्व-नियमात्। नियमानङ्गीकारे 'कपाले घट उत्पद्यते' इतिवत् 'पर्वते घट उत्पद्यते' इति व्यवहारापत्तिः।

तथा च "धर्मितावच्छेदकतासम्बन्धेन द्रव्यत्वादौ तादृशान्वयबोधोत्पत्ति-प्रयोजिका" इति ग्रन्थोऽसङ्गतः। द्रव्यत्वादेः तादृशबोधोत्पत्त्यनवच्छेदकत्वादिति चेत्? न। तेन सम्बन्धेन तदधिकरणम् इत्यस्य "नियमघटकस्य" साक्षात्परम्परा-साधारणो यः "धर्मसम्बन्ध-साधारणः" कार्यतावच्छेदकः तदात्मकेन संसर्गेण तदधिकरणं विवक्षणीयम्। यदि कार्यतावच्छेदक-सम्बन्धेनैव कार्याधिकरणे सामग्र्याः कार्योत्पत्ति-प्रयोजकत्वं स्यात् तदा धर्मितावच्छेदकतायाः समवायस्य च प्रत्यासत्तित्वेऽपि द्रव्ये घटत्वावच्छिन्न-प्रकारताकः शाब्दबोध उत्पद्यते इति व्यवहारानुत्पत्तिः। धर्मितावच्छेदकतासम्बन्धेन समवायसम्बन्धेन वा द्रव्यस्य उक्तशाब्दबोधानधिकरणत्वात्। धर्मसाधारणकार्यतावच्छेदकेन तदधिकरणविवक्षणे तु समवायस्य संसर्गतापक्षे द्रव्यत्वावच्छिन्न-विशेष्यतायाः कार्यतावच्छेदककोटि-प्रविष्टत्वेन परम्परया विशेष्यतापि कार्यतावच्छेदिका तत्सम्बन्धेन द्रव्ये शाब्दबोधस्य सत्त्वात्। **धर्मितावच्छेदकताया** इति। द्रव्यत्वनिष्ठाया इत्यादिः। **तत्कार्यतावच्छेदकसंसर्गताविरहेऽपि** इति। द्रव्यत्वनिष्ठ-धर्मितावच्छेदकता या द्रव्यपदजन्य-द्रव्यत्वावच्छिन्न-उपस्थिति-द्रव्यत्वावच्छिन्नविशेष्यक-योग्यताज्ञानादि-घटित-सामग्री कार्यतावच्छेदक-सम्बन्धत्वाभावेऽपि इत्यर्थः। **तस्याः** = धर्मिता-वच्छेदकतायाः। **तत्कार्यतावच्छेदकधर्मघटत्वादि**ति। द्रव्यपदजन्यद्रव्यत्वावच्छिन्न-उपस्थिति-द्रव्यविशेष्यक-योग्यताज्ञानादिघटित-सामग्री-कार्यतावच्छेदकीभूत-द्रव्यत्वावच्छिन्न-विशेष्यक-अभेदसंसर्गक-घटप्रकारक-शाब्दत्वरूप-धर्मघटकत्वाद् इत्यर्थः। एवं च धर्मितावच्छेदकता-सम्बन्धेन द्रव्यत्वादौ तादृशान्वयबोधोत्पत्ति-प्रयोजिका इति ग्रन्थोऽपि सङ्गतः। द्रव्यत्वनिष्ठ-धर्मितावच्छेदकताया धर्मविधया कार्यतावच्छेदक-घटकतया तेन सम्बन्धेन कार्याधिकरणे द्रव्यत्वे शाब्दोत्पत्त्य-वच्छेदकत्वम् उक्तसामग्र्याश्च प्रयोजकत्वं तत्र अव्याहतम्। इत्थं च धर्मिता-वच्छेदकावच्छिन्न-विशेष्यत्वम् अन्तर्भाव्य एव कार्यकारणभावे घटत्वावच्छिन्न-विशेष्यक-अभेदसंसर्गक-घटप्रकारक-आपाद्य-अप्रसिद्ध्यानापत्तिरिति भावः। **तादृशसामग्र्याश्चे**ति। अथ व्याप्यतया इत्यनेन आपादकत्वं न सम्भवति इत्यनेन

च सम्बन्धः। द्रव्यपदजन्य-द्रव्यत्वावच्छिन्नोपस्थिति-द्रव्यत्वावच्छिन्न-विशेष्यक-योग्यताज्ञानादिघटित-सामग्र्याश्चेत्यर्थः। **आत्मनिष्ठप्रत्यासत्त्या** = समवायेन। **स्वीये**ति। तादृशसामग्री-निरूपितार्थः। तथा च तादृशबुद्धित्वरूपं यत्तादृश-सामग्रीकार्यतावच्छेदकं तदवच्छिन्नोत्पत्तेः एवेति यावत्। एवकारेण धर्मिता-वच्छेदकम् अनिवेश्य केवल-अभेदसंसर्गक-घटप्रकारक-बोधत्व-व्यवच्छेदः। **व्याप्यतया** = प्रयोजकतया। **न सम्भवती**ति। यद्धर्मावच्छिन्नं प्रति यस्याः सामग्र्याः व्याप्यत्वं स एव धर्मः तत्सामग्र्याः कार्यतावच्छेदकः इति नियमात्।

**VV-D. 5.2.3:** 'घटो घट' इत्यादौ शाब्दबोधम् आपादयितुम् आत्मनिष्ठ-प्रत्यासत्तिं दूषयित्वा धर्मितावच्छेदकता-प्रत्यासत्त्या शाब्दबोधम् उपपादयति। **योग्यताज्ञानस्ये**ति। योग्यताज्ञान-शाब्दबोधौ समानाधिकारौ। शाब्दबोधो निश्चयात्मकः। योग्यताज्ञानं तु संशय-निश्चय-साधारणं कारणमिति विशेषः। **धर्मितावच्छेदकं निवेश्ये**ति। अन्यथा अभेदसंसर्गक-घटप्रकारक-योग्यताज्ञानस्य समवायेन कारणत्वे 'द्रव्यं घट' इति योग्यताज्ञानात् प्रमेयविशेष्यक-घटप्रकारक-शाब्दबोधापत्तेः। **तद्भेदेन** = धर्मितावच्छेदकभेदेन। **अनन्तकारणता-कल्पनम् अपेक्ष्ये**ति। 'द्रव्यं घट' इत्यत्र समवायेन द्रव्यत्वावच्छिन्न-विशेष्यताक-घटत्वावच्छिन्न-प्रकारताक-शाब्दबोधे तादृश-योग्यताज्ञानं कारणम्। एवं 'प्रमेयो घट' इत्यत्र समवायेन प्रमेयत्वावच्छिन्न-विशेष्यताक-घटत्वावच्छिन्न-प्रकारताक-शाब्दबोधे तादृश-योग्यताज्ञानं कारणम् इति रीत्या विशेष्यतावच्छेदकानाम् आनन्त्यात् अनन्तकारणताकल्पनम् अपेक्ष्य इत्यर्थः। **धर्मितावच्छेदकतासम्बन्धेन** = विशेष्यतावच्छेदकता-सम्बन्धेन। **शाब्दबुद्धौ** = घटप्रकारक-शाब्दबुद्धौ। **तादृश-सम्बन्धेन** = विशेष्यतावच्छेदकतासम्बन्धेन। **युक्तत्वादि**ति। विशेष्यतावच्छेदकता-सम्बन्धेन घटप्रकारक-शाब्दबोधे तेन सम्बन्धेन घटप्रकारक-योग्यताज्ञानस्य कारणत्वे विशेष्यतावच्छेदक-धर्मानन्तत्वेऽपि तेषां कार्यकारणतावच्छेदक-कोटौ अनिवेशेन एक एव कार्यकारणभाव इति लाघवं बोध्यम्।

इत्थं च धर्मितावच्छेदकतायाः प्रत्यासात्तित्वे घटत्वावच्छिन्न-प्रकारक-अभेदसंसर्गक-योग्यताज्ञानं द्रव्यत्व-प्रमेयत्वादौ इव घटत्वेऽपि अस्तीति 'घटो घट' इत्यत्र शाब्दापत्तिः इत्याह **घटत्वादिधर्मितावच्छेदकके**ति। **घटत्वावच्छिन्न-प्रकारक-योग्यताज्ञानबलात् एवे**ति। 'घटो घट' इति योग्यताज्ञानबलादेव इत्यर्थः। एवकारेण 'द्रव्यं घट' इत्यादेः व्यवच्छेदः। घटत्वावच्छिन्न-प्रकारकाभेद-संसर्गक-योग्यताज्ञानस्य कारणत्वे तद्घटित-समुदायस्यापि सामग्रीत्वेन तस्या धर्मितावच्छेदकता-सम्बन्धेन घटत्वावच्छिन्न-प्रकारक-अभेदसंसर्गक-शाब्दबोधा-पादकत्व-सम्भवादिति भावः।

**VV-D. 5.2.4:** ननु योग्यताज्ञानस्य विषयनिष्ठ-प्रत्यासत्त्या लाघवेन हेतुत्वे अपि उपस्थितेः समवायेनैव हेतुत्वं वाच्यम्। प्रकारता-विशेष्यता-सम्बन्धेन उपस्थितेः सत्त्वेऽपि धर्मितावच्छेदकता-सम्बन्धेन तस्याः कुत्रापि असत्त्वात्। समवायेन आत्मनि सत्त्वेऽपि द्रव्यत्वादौ तद्विरहात् उपस्थितेः कारणत्वमेव न सम्भवति इत्याशङ्कते **न चेति। द्रव्यत्वावच्छिन्नस्य पदादनुपस्थितत्वेऽपीति**। द्रव्यपदजन्य-द्रव्यत्वावच्छिन्न-विषयकोपस्थितेः अभावेऽपि इत्यर्थः। अपिना उपस्थितेः समुच्चयः। उपस्थितेः समवायेन आत्मनिष्ठतया द्रव्यत्वादौ असत्त्वेन योग्यताज्ञान-सहकारित्वाभावात्। **तादृशप्रत्यासत्त्या** = धर्मितावच्छेदकता-सम्बन्धेन। **प्रत्यासन्नेति** = सम्बन्धेत्यर्थः। **तत्र** = द्रव्यत्वे। **तादृशप्रत्यासत्त्या** = धर्मितावच्छेदकता-प्रत्यासत्त्या। **शाब्दबोधापत्तिः** = द्रव्यत्वे घटप्रकारक-शाब्दबोधापत्तिः। समवायस्य प्रत्यासत्तित्वे तु द्रव्यत्वावच्छिन्नविशेष्यक-घटत्वावच्छिन्न-प्रकारक-शाब्दत्वस्य कार्यतावच्छेदकतया तदाश्रयः शाब्दबोधो द्रव्यपद-जन्य-द्रव्यत्वावच्छिन्न-उपस्थितिं विना न उत्पद्यते इति तदुपस्थिति-योग्यता-ज्ञानयोः सहकारित्वमिति ध्येयम्। विषयनिष्ठ-प्रत्यासत्त्या कारणतापक्षे द्रव्यपदजन्य-द्रव्यत्वावच्छिन्न-उपस्थितेः कारणत्वं न सम्भवति। अभेदसंसर्गक-घटप्रकारक-शाब्दबोधस्य प्रमेयत्वेऽपि सत्त्वात् तत्र द्रव्यत्वावच्छिन्नोपस्थितेः व्यभिचारः। एवं द्रव्यत्वे प्रमेयत्वावच्छिन्नोपस्थितेः व्यभिचारः। तं दर्शयति। **आत्मनिष्ठ-प्रत्यासत्त्येति**। सावधारणम्। समवायेन एवेत्यर्थः। **तादृशेति** = आत्मनिष्ठ-प्रत्यासत्त्या हेतुभूत-प्रमेयपदजन्य-इत्यर्थः। **फलजनकत्वात्** = शाब्दधी-जनकत्वात्। **तादृशेति** = आत्मनिष्ठ-प्रत्यासत्त्या हेतुभूतद्रव्यपदजन्य-इत्यर्थः। **अकिञ्चित्करत्वादिति**। व्यभिचारित्वादिति यावत्। धर्मितावच्छेदकता-प्रत्यासत्त्या अभेदसंसर्गक-घटप्रकारक-शाब्दाधिकरणे प्रमेयत्वे द्रव्यपदजन्य-द्रव्यत्वावच्छिन्न-उपस्थितेः एवं तादृशशाब्दबोधाधिकरणे द्रव्यत्वे प्रमेयत्वावच्छिन्न-उपस्थितेः व्यभिचारो बोध्यः। तथा च विषयनिष्ठ-प्रत्यासत्त्या कार्यकारणभावो न युक्त इति भावः।

**VV-D.5.2.5:** विषयनिष्ठ-प्रत्यासत्त्या एव उपस्थितेरपि कार्यकारणभावं समर्थयति। **हेतुत्वोपगमादिति**। तथा च प्रकारता-सम्बन्धेन शाब्दबोधं प्रति प्रकारता-सम्बन्धेन उपस्थितिः कारणमिति भावः। व्याप्यधर्मावच्छिन्नं कार्ये जननीये व्यापकधर्मावच्छिन्नकार्योत्पादकसामग्र्या अपेक्षिततया धर्मितावच्छेदकता-सम्बन्धेन शाब्दबोधे जननीये तादृश-शाब्दबोध-व्यापकीभूतस्य प्रकारता-सम्बन्धेन शाब्दबोध-उत्पादक-सामग्र्या अपेक्षितत्वमाह।

**VV-D. 5.2.6:** **येन सम्बन्धेने**ति। धर्मितावच्छेदकता-सम्बन्धेन इत्यर्थः। **यद्धर्मावच्छिन्नकार्यं प्रति** = अभेदसंसर्गक-घटप्रकारक-शाब्दं प्रति। **येन सम्बन्धेन** = प्रकारता-सम्बन्धेन। **यद्धर्मावच्छिन्नकार्यस्य व्यापकता** = अभेदसम्बन्धेन घट-प्रकारक-शाब्दस्य व्यापकता। **तेन सम्बन्धेन** = प्रकारता-सम्बन्धेन। **तद्धर्मावच्छिन्न-कार्योत्पादक-सामग्र्याः** = शाब्दत्वरूपसामान्यधर्मावच्छिन्नोत्पादक-सामग्र्याः। **तेन सम्बन्धेन** = धर्मितावच्छेदकता-सम्बन्धेन। **तद्धर्मावच्छिन्न-कार्योत्पत्तौ** = व्याप्यीभूत-अभेदसंसर्गक-घटप्रकारक-शाब्दत्वावच्छिन्नकार्योत्पत्तौ। **पदजन्यपदार्थोपस्थित्यसत्त्वे** = सामान्यधर्मावच्छिन्न-कार्योत्पादक-सामग्री-विरहे इति यावत्। **तत्र** = द्रव्यत्वे। **अयोगात्** = असम्भवात्। तथा च धर्मितावच्छेदकता-सम्बन्धेन अभेदसंसर्गक-घटप्रकारक-शाब्दबोधे प्रकारता-सम्बन्धेन शाब्दोत्पादक-सामग्र्याः अपेक्षणीयतया प्रकारतासम्बन्धेन उपस्थिति-विरहे धर्मितावच्छेदकता-सम्बन्धेनापि द्रव्यत्वे शाब्दबोधासम्भवादिति भावः।

**VV-D. 5.2.7:** प्रकारता-सम्बन्धेन उपस्थितेः कारणत्वे दोषमाह **न चे**ति। आत्मनिष्ठ-प्रत्यासत्त्या कार्यकारणभाववादिनः शङ्का। **प्रमेयत्वावच्छिन्न-विशेष्यक-वृत्तिज्ञानजन्ये**ति। प्रमेयं प्रमेयपद-शक्यमिति वृत्तिज्ञानजन्येत्यर्थः। **उद्बोधकान्तरात्** = इन्द्रिय-सन्निकर्षादितः। **द्रव्यत्वावच्छिन्नस्य भानमि**ति। द्रव्यं प्रमेयं चेति समूहालम्बनोपस्थितिः इत्यर्थः। **द्रव्यत्वावच्छिन्न-विषयक-शाब्दापत्ति-वारणाय** इति। प्रमेयपदजन्य-समूहालम्बन उपस्थितेः प्रकारता-सम्बन्धेन द्रव्यत्वे अपि सत्त्वात् तत्र धर्मतावच्छेदकता-सम्बन्धेन अभेदसंसर्गक-घटप्रकारक-शाब्दापत्ति-वारणाय इत्यर्थः। **वाच्ये**ति। तथा च उद्बोधकान्तर-जन्य-द्रव्यत्वावच्छिन्न-विषयकोपस्थितेः द्रव्यत्वावच्छिन्न-विशेष्यकं यद्वृत्तिज्ञानं "द्रव्यं द्रव्यपद-शक्यम् इत्याकारकं" तज्जन्यत्वाभावात् नापत्तिः। **तथा च** = तादृशोपस्थितेः कारणत्वे च। **आवश्यकत्वे** = द्रव्यत्व-प्रमेयत्वादि-धर्माणां कार्य-कारणतावच्छेदककोटौ निवेशेन आत्मनिष्ठ-प्रत्यासत्त्या कार्यकारणभावे साम्ये इति यावत्। **विषयनिष्ठ-प्रत्यासत्त्या हेतुताकल्पनमयुक्तमि**ति। धर्मितावच्छेदकता-सम्बन्धेन तद्धर्मावच्छिन्न-प्रकारक-शाब्दबोधं प्रति तद्धर्मावच्छिन्न-विशेष्यक-वृत्तिज्ञानजन्य-तद्धर्मावच्छिन्न-विषयकोपस्थितेः प्रकारता-सम्बन्धेन हेतुत्व-कल्पनम् अयुक्तमित्यर्थः। **तथा सति** = विषयनिष्ठ-प्रत्यासत्या हेतुत्वे सति। **पुरुषभेदेने**ति। प्रकारता-सम्बन्धेन तद्धर्मावच्छिन्न-विषयक-शाब्दबोधं प्रति प्रकारता- सम्बन्धेन तद्धर्मावच्छिन्नविशेष्यक-वृत्तिज्ञानजन्य-तद्धर्मावच्छिन्न-विषयक-उपस्थितेः कारणत्वे चैत्रस्य द्रव्यत्वप्रकारक-उपस्थितिसत्त्वे मैत्रस्य द्रव्यत्वा-वच्छिन्न-विषयक-शाब्दबोधापत्तिः। चैत्रीय-उपस्थितेः प्रकारता-सम्बन्धेन द्रव्यत्वे

सत्त्वात् तत्पुरुषत्वं निवेश्यमिति भावः। आत्मनिष्ठ-प्रत्यासत्या च द्रव्यत्वा-वच्छिन्नधर्मिक-योग्यताज्ञानादिरूप-सामग्र्यभावात् न 'घटो घट' इत्यत्र शाब्दबोधापत्तिः किमिति शङ्कितुः आशयः।

**VV-D. 5.2.8:** समाधत्ते। **स्वजनके**ति। स्वम् = उपस्थितिः। तज्जनकत्वं= तदव्यवहित-पूर्ववर्त्तित्व-मात्रम्। शेषवैयर्थ्यात्। उपस्थित्यव्यवहितपूर्ववर्त्ति यत्प्रमेयं प्रमेयपदशक्यमिति वृत्तिज्ञानं तदीयवृत्तिनिष्ठ-प्रकारता-निरूपित-विशेष्यतावच्छेदकता प्रमेयत्वे। अथ च प्रमेयपदजन्योपस्थितीय-प्रकारतापि प्रमेयत्वे इति रीत्या तादृशावच्छेदकता-वैशिष्ट्यं प्रमेयपदजन्योपस्थितीय-प्रकारतायां न तु उद्बोधकान्तरजन्य-द्रव्योपस्थितीय-द्रव्यत्वनिष्ठ-प्रकारतायाम्। तस्याः स्वजनक-ज्ञानीयवृत्तिनिष्ठ-प्रकारता-निरूपित-विशेष्यतावच्छेदकता-प्रयोज्यत्व-अभावात्। प्रकारतायां तादृशधर्मिता-वच्छेदकता-वैशिष्ट्यं च स्वप्रयोज्यत्व-सम्बन्धेन। उपस्थितीय-विषयता वृत्तिज्ञानीय-विषयता-प्रयोज्या इति नियमात्।

**VV-D. 5.2.9:** प्रकारता-सम्बन्धेन शाब्दबोधे स्वजनक-ज्ञानीय-वृत्तिनिष्ठ-प्रकारता-निरूपित-विशेष्यतावच्छेदकता-विशिष्ट-प्रकारता-सम्बन्धेन उपस्थितेः कारणत्वे व्यभिचारम् आशङ्कते **न चे**ति। **पदार्थेऽपी**ति। अपिना पदार्थतावच्छेदक-समुच्चयः। 'द्रव्यं घट' इत्यत्र घटेऽपीति यावत्। **तत्र** = घटे। **अभावादि**ति = घटपदजन्योपस्थितेः प्रकारता-सम्बन्धेन घटत्वे एव सत्त्वादिति भावः। **प्रकारनिष्ठ-प्रत्यासत्त्या** = प्रकारता-सम्बन्धेन। **व्यभिचारेण** = व्यतिरेक-व्यभिचारेण। न च स्वजनकज्ञानीय-वृत्तिनिष्ठ-प्रकारता-निरूपित-विशेष्यता-वच्छेदकता-विशिष्टत्वेनैव प्रकारता-निवेशोऽस्तु। वैशिष्ट्यं च स्वप्रयोज्यत्व-निरूपक-धर्मिताप्रयोज्यत्वान्यतर-सम्बन्धेन। तथा च अन्यतरान्तर्गत-द्वितीय-सम्बन्ध-सत्त्वात् न व्यतिरेकव्यभिचार इति वाच्यम्। तादृशविशिष्टस्य मुख्यविशेष्येऽपि समाधत्ते।

**VV-D. 5.2.10: परामर्शे**त्यादि। परामर्शनिष्ठ-प्रकारतायाः यो विचारः, तत्र दर्शिता या दिक् = रीतिः, तया तद्रीत्या व्यभिचारो वारणीय इत्यर्थः। रीतिश्च धर्मितावच्छेदकता-सम्बन्धेन धूमलिङ्गक-वह्निविधेयक-अनुमितिं प्रति धर्मिता-वच्छेदकता-सम्बन्धेन वह्निव्याप्यवत्ता-धूमवत्ता-परामर्शस्य कारणत्वे यत्र भाविज्ञानम् अप्रमा इति अप्रामाण्यज्ञानं ततो वह्निव्याप्य-धूमवत्ता-परामर्शः ततो वह्निव्याप्य-आलोकवद्द्रव्यमिति परामर्शः अप्रामाण्यज्ञान-नाशश्च। ततो 'वह्निमान् पर्वतः', 'द्रव्यं वह्निमद्' इति समूहालम्बनानुमितिः। तत्र समूहालम्बनानुमित्यधिकरणे द्रव्यत्वे, धूमलिङ्गक-परामर्शस्य आलोकलिङ्गक-

परामर्शस्य च धूमत्वे विरहाद् व्यभिचारवारणाय तत्तत्परामर्श-धर्मितावच्छेदकता-विशिष्ट-धर्मितावच्छेदकता कार्यतावच्छेदक-सम्बन्धो दर्शितः। तद्वत्प्रकृतेऽपि स्वजनक-ज्ञानीय-वृत्तिनिष्ठ-प्रकारता-निरूपित-विशेष्यतावच्छेदकता-विशिष्ट-प्रकारता-कार्यतावच्छेदक-सम्बन्धः तथा च न उक्तव्यभिचार इति भावः।

'द्रव्यं घट' इत्यादौ विषयनिष्ठ-प्रत्यासत्त्या कार्यकारणभावे कार्य-कारणताच्छेदककोटौ धर्मितावच्छेदकाप्रवेशेन अभेदसंसर्गक-घटप्रकारक-बोधस्य द्रव्यत्वे प्रसिद्धस्य घटत्वे आपत्तिरिति। "अथ द्रव्यत्वादौ प्रसिद्धस्य" इत्यारभ्य "इति चेत्" इति ग्रन्थेन आशङ्कितं समाधत्ते **तर्हि** इत्यादिना। तद्धर्मपदेन प्रकारतावच्छेदक-धर्मो ग्राह्यः अग्रिम-तद्धर्मपदेनापि स एव। **स्वीकरणीयतये**ति। तथा च अभेदसंसर्गकबोधे विशेष्यतावच्छेदक-प्रकारतावच्छेदक-भेदः कारणमिति भावः। **न शाब्दबोधापत्तिः** = विशेष्यतावच्छेदकीभूत-घटत्वे प्रकारता-वच्छेदकीभूत-घटत्व-भेदविरहादिति भावः।

**VV-D. 5.3.1:** 'स घट' इत्यत्र तत्पदार्थो जातिमान्। विशेष्यता- वच्छेदकता जातित्वावच्छिन्ना। 'घटः स' इत्यत्र तत्पदार्थो जातिमान् प्रकारता- वच्छेदकता जातित्वावच्छिन्ना इति पूर्वस्माद्विशेषः। **जातित्वादिना घटत्वादि-धर्मितावच्छेदककस्ये**ति। अस्य शाब्दबोधस्य उपपत्तये इत्यनेन अन्वयः। यथाश्रुते शाब्दबोधो न स्यात्। विशेष्यतावच्छेदक-प्रकारतावच्छेदकयोः ऐक्यादिति ध्येयम्। **विशेष्यत्व-प्रकारत्वयोरवच्छेदकत्वे** इति। विशेष्यतावच्छेदकता-प्रकारतावच्छेदकता च इत्यर्थः। **निरवच्छिन्नत्वेन विशेषणीये** इति। निरवच्छिन्ना ग्राह्या इत्यर्थः।

तथा च तद्धर्मनिष्ठ-निरवच्छिन्नावच्छेदकताक-अभेदसम्बन्धावच्छिन्न-प्रकारता-निरूपित-विशेष्यता-निरूपित-निरवच्छिन्नावच्छेदकता-सम्बन्धेन शाब्द-बोधे तद्धर्मभेदः कारणमिति भावः। **आद्ये** विशेष्यतावच्छेदकता जातित्वावच्छिन्ना। द्वितीये च प्रकारतावच्छेदकता जातित्वावच्छिन्ना इति तयोः कार्यतावच्छेदक-अनाक्रान्तत्वं बोध्यम्।

अथ 'घटो नीलघट' इति वाक्यात् अन्वयबोधानुपपत्तिः विशेष्यता-वच्छेदकीभूत-घटत्वे प्रकारतावच्छेदकीभूत-घटत्वभेदासत्त्वात्। अत आह **अन्वय-बोधस्य** इति। अभेदसंसर्गक-नीलघटप्रकारक-घटविशेष्यक-अन्वयबोधस्य इत्यर्थः। विधेयांशे अधिकावगाहिशाब्दबोधस्य प्राचीनानुमतत्वात् आह **प्रामाणिकत्वे** इति। **अन्यत्र दर्शितरीत्ये**ति = पर्याप्तिविवक्षयेत्यर्थः। **सोऽपि** = अन्वयबोधोऽपि। तथा च तद्धर्मनिष्ठ-निरवच्छिन्नावच्छेदकताभिन्न-अवच्छेदकत्वानिरूपक-प्रकारता-निरूपित-विशेष्यता-निरूपित-निरवच्छिन्नावच्छेदकता-सम्बन्धेन शाब्दबोधं प्रति तद्धर्मभेदः कारणमित भावः।

**VV-D.5.3.2:** तद्धर्मनिष्ठ-निरवच्छिन्नावच्छेदकता-प्रकारता-निरूपित-विशेष्यता-निरूपित निरवच्छिन्नावच्छेदकता-सम्बन्धेन शाब्दं प्रत्येव तद्धर्मभेदस्य कारणत्वे यत्र प्रकारतावच्छेदकता विशेष्यतावच्छेदकता च न निरवच्छिन्ना किन्तु किञ्चिद् धर्मावच्छिन्ना एव। तत्र आपत्तिं परिहरति **स च इत्यादिवाक्यादि**ति। 'जातिमान् जातिमान्' इत्यादिवाक्याद् इत्यर्थः। **जातित्वावच्छिन्ने**ति। अस्य धर्मितावच्छेदक-तायाम् अन्वयः। **अभेदान्वयबोधस्य**= अभेदसंसर्गक-जातिमत्प्रकारक-जातिमद्-विशेष्यक-बोधस्य। **तद्धर्मावच्छिन्ने**ति = जातित्वावच्छिन्नेत्यर्थः। **तद्धर्मभेदस्यापी**ति = जातित्वभेदस्यापि इत्यर्थः। **कल्पनीयम्** इति। तथा च किञ्चिद्धर्मावच्छिन्न-अवच्छेदकताक-प्रकारताक-बोधं प्रति विशेष्यतावच्छेदकतावच्छेदके प्रकारतावच्छेदकतावच्छेदक-भेदस्य कारणत्वं कल्पनीयमिति भावः।

**VV-D. 5.3.3:** 'जातिमद्वान् दण्डवान्' इत्यादौ विशेष्यतावच्छेदकता-वच्छेदकतावच्छेदक-जातौ प्रकारतावच्छेदकतावच्छेदकतावच्छेदक-दण्डत्वभेद-विरहेण अन्वयबोधानुपपत्तिः। अत आह **अवच्छेदकतायामि**ति = चरमावच्छेदक-तायामित्यर्थः। **इदमुपलक्षणम्**। प्रथमावच्छेदकतायामपि इत्यर्थः।

**VV-D. 5.4.1:** अनुगतकार्यकारणभावमाह **वस्तुतस्त्वि**ति। **तद्धर्मान्यवृत्ती**ति। तद्धर्मपदेन प्रकारतावच्छेदक-तत्त्वावच्छेदक-तत्त्वावच्छेदकाः ग्राह्याः। अन्यपदेन विशेष्यतावच्छेदक-तत्तावच्छेदक-तत्तावच्छेदकाः ग्राह्याः। वस्तुतो यस्मिन् धर्मे विषयताविशेष-सम्बन्धेन शाब्दबोधः तिष्ठति तदन्यधर्मः तत्पदेन ग्राह्यः। यत्र यत्र धर्मितावच्छेदकताख्य-विषयता-सम्बन्धेन शाब्दबोधः तत्र तत्र तद्धर्मान्य- वृत्ति-विषयता-सम्बन्धेन ज्ञानमिति शाब्दबोधं प्रति ज्ञानस्य व्यापकता। ज्ञानमात्रं घटत्वान्यवृत्ति-विषयता-सम्बन्धेन घटत्वभिन्ने एव वर्तते इति घटत्वभिन्ने घटत्व- भेदस्य सत्त्वाद् घटत्वान्यवृत्तिविषयता-सम्बन्धेन ज्ञानं प्रति घटत्वभेदः कारणम्। एवं च व्याप्यधर्मावच्छिन्ने कार्ये जननीये व्यापक-धर्मावच्छिन्न-कार्योत्पादक-सामग्र्या अपेक्षिततया व्यापकीभूत-तद्धर्मान्यवृत्ति-विषयता-सम्बन्धेन ज्ञानसामग्री घटत्वभेदः। एवं च 'द्रव्यं घट' इत्यादौ धर्मितावच्छेदकता-सम्बन्धेन अभेद-संसर्गक-घटप्रकारक-शाब्दबोधं प्रति घटत्वभेदः कारणमिति फलितम्। तथा च 'घटो घट' इत्यत्र न आपत्तिः। ननु कार्यतावच्छेदकानिर्वचने ज्ञानं घटत्वान्य-वृत्ति-विषयता-सम्बन्धेन घटेऽपि वर्तते। तत्र घटत्वभेदसत्वाद् 'घटो घट' इति वाक्यात् शाब्दबोधापत्तिः। अत आह **एवं चे**ति। तद्धर्मान्यवृत्तिविषयता-सम्बन्धेन ज्ञानं प्रति तद्धर्मभेदस्य हेतुत्वे च इत्यर्थः। **व्यापकतये**ति। विशेष्यतावच्छेदकता-सम्बन्धेन यत्र यत्र

अभेदसंसर्गक-घटप्रकारक-शाब्दबोधः तत्र तत्र घटत्वान्य-वृत्तिविषयता-सम्बन्धेन ज्ञानं यथा द्रव्यत्व-प्रमेयत्वादौ इति भावः। **तादृशेति** = घटत्वान्यवृत्तीत्यर्थः। **सामग्रीविरहेणे**ति। द्रव्यत्वादौ तादृशज्ञानोत्पादिका सामग्री घटत्व-भेदः। स च घटत्वे नास्तीति भावः। **तत्र** = घटत्वे।

**VV-D. 5.4.2:** लाघवान्तरमपि दर्शयति। **एवं चे**ति। तद्धर्मान्यवृत्ति-विषयता-सम्बन्धेन ज्ञानं प्रति तद्धर्मभेदत्वेन हेतुत्वाङ्गीकारे च इत्यर्थः। **कारणत्वान्तरमपी**ति। तद्धर्मावच्छिन्न-अवच्छेदकताक-अभेदसम्बन्धावच्छिन्न-प्रकारता-निरूपित-विशेष्यतावच्छेदकतावच्छेदकता-सम्बन्धेन तद्धर्मभेदस्य कारणत्वान्तरमपि इत्यर्थः। एवं 'दण्डवान् दण्डवान्' इत्यत्रापि बोध्यम्।

**VV-D. 5.4.3:** भेदान्वयबोधस्थले लाघवान्तरं दर्शयति **एवमि**ति। **भेदान्वयबोधानुदयादि**ति। 'एकत्ववान् एकत्ववान्' इति 'द्वित्ववान् द्वित्ववान्' इति च बोधानुदयादित्यर्थः।

**VV-D. 5.4.4:** **कर्मत्वत्वाद्यवच्छिन्ने** द्वितीयार्थे। तद्वतः = कर्मत्ववतः। प्रकृत्यर्थस्य। **एकत्वत्वादिभेदस्य**। कर्मत्वत्वादिभेदस्य चाग्रे हेतुत्वान्तरकल्पनम् इत्यनेन अन्वयः। **तद्धर्मभेदस्ये**ति = तद्धर्मान्यवृत्तिविषयतासम्बन्धेन ज्ञानं प्रति तद्धर्मभेदस्य इत्यर्थः।

*।। इति व्युत्पत्तिवाद-दीपिकायाम् अभेदान्वयबोधप्रकरणम् ।।*

श्रीः

# व्युत्पत्तिवादः

## प्रकाशः

### श्री गणेशाय नमः

त्रिविधां मूर्तिमाविश्य सृष्टिस्थित्यन्तकारिणम् ।
चन्द्रमौलिमहं वन्दे तिष्ठन्तं हृदयाम्बुजे ।। १।।
मोदयन् मानसं पित्रोः क्रीडयन् बर्हिमूषकौ ।
विनायको विजयते विघ्नपुञ्जनिवारकः।। २।।
आसीन्मैथिलपण्डितेन्द्रतिलकोऽपर्णेशपूजारतः
वेदान्तार्णवमज्जताञ्च तरणिर्न्यायेऽपरो गौतमः ।
साङ्ख्ये वा कपिलस्तथातिविदितो मीमांसयाऽलङ्कृतः
बच्चाझाऽपरनामकोऽतिकरुणः श्रीधर्मदत्तो गुरुः।। ३ ।।
स्मृत्वा तच्चरणाम्भोजं लक्ष्मीनाथेन धीमता ।
व्युत्पत्तिवादटीकेयं प्रकाशाख्या विरच्यते।। ४।।

**VV-P 1.1.1:** अथ एकस्मादपि घटादिपदाद् घटादेः उपस्थितौ अनुपस्थिते अविवक्षिते वा एकत्वे योग्यायाम् अस्तित्वादिक्रियायाम् उपस्थितायाम् अर्थनिष्ठ-आकाङ्क्षा-योग्यता-ज्ञानादिघटित-सामग्रीसम्बलनात् 'अस्तित्ववान् घट' इत्यादि-शाब्दबोधस्य अर्थाध्याहारवादि-प्रभाकरादिसम्मतत्वात्

"पश्यतः श्वेतिमारूपं ह्रेषाशब्दञ्च शृण्वतः।
खुरविक्षेपशब्दञ्च श्वेतोऽश्वो धावतीति धीः"।।

इति वदद्भिः भट्टपादैः श्वेतादिबोधकपदाभावेऽपि तादृशस्थले 'श्वेतोऽश्वो धावति' इति विशिष्टप्रत्ययस्य शाब्दबोधात्मकस्य एव अङ्गीकृतत्वात् च चिकीर्षितग्रन्थे पदनिष्ठ-आकाङ्क्षाज्ञानकारणत्वस्य वक्ष्यमाणस्य सिद्धान्त-विरुद्धत्वमिति आशङ्कां परिजिहीर्षुः प्रथममेव पदद्वयार्थसंसर्गे शाब्दबोधत्व-व्यापक-आकाङ्क्षाप्रयोज्य-संसर्गत्वाभिधानेन तत्पक्षं प्रतिक्षिपन् तार्किकतर्कसिद्धं पदनिष्ठाकाङ्क्षाप्रयोज्यसंसर्गत्वं बोधयति - **शाब्दबोधे चेति**। अत्राभिव्यापकार्था सप्तमी। अभिव्यापकत्वञ्च अवच्छेदकावच्छेदेन वृत्तिमत्त्वम्। तदपि प्रकृत्यर्थता-वच्छेदक-व्यापकत्वं पर्यवस्यति। तस्य च भास्-धात्वर्थ-विषयतायाम् अन्वयः। **एकपदार्थे** इत्यत्र सप्तम्या अनुयोगित्वम्। **अपरपदार्थस्य** इत्यत्र षष्ठ्याः

प्रतियोगित्वम्। **संसर्गमर्यादाशब्दस्य** आकाङ्क्षाप्रयोज्य-संसर्गत्वम्। तृतीयाया अभेदोऽर्थः। तथा च उक्तवाक्याद् एकपदार्थानुयोगिक-अपरपदार्थप्रतियोगिक-संसर्ग आकाङ्क्षाप्रयोज्य-संसर्गत्वाभिन्न-शाब्दबुद्धित्व-व्यापक-विषयतावान् इति बोधः। अत्र च एकत्वापरत्वयोः पदे एव अन्वयः। पदार्थे पदार्थतावच्छेदके वा तदन्वयत्वे तद्वाक्यार्थस्य प्रभाकरमत-साधारणत्वापत्त्या तन्मतखण्डन एतद्वाक्य-स्वारस्यं न लभ्येत इति। ननु एवं घट-घटत्वयोः समवायः शक्तिभास्योऽपि एकत्ववद् यद् घटपदं तदर्थानुयोगिकः अपरत्ववद् यद् घटपदं तदर्थप्रति-योगिकश्चेति तथाविध-संसर्गान्तर्गतः एकत्व-अपरत्वयोः सर्वसाधारण्यात् तत्र च आकाङ्क्षाप्रयोज्य-सांसर्गिकविषयत्वाभावात् न उक्तवाक्यार्थो युक्त इति चेत् ? न। **एकपदार्थे अपरपदार्थस्य संसर्ग** एतत्पर्यन्तस्य हि पदविशिष्ट-संसर्गतावान् इत्यर्थः। वैशिष्ट्यञ्च स्वप्रयोज्यविशेष्यताकत्व-स्वभिन्नपदप्रयोज्य-प्रकारताकत्व-उभयसम्बन्धेन। एवञ्च न एकपदस्य अर्थयोः घट-घटत्वयोः समवायस्य ग्रहणम् इति। न च एवम् आख्यातार्थ-काल-कृत्योः संसर्गस्य आकाङ्क्षाभास्यस्य संग्रहो न स्यात्। तयोः पदद्वयार्थत्वाभावाद् इति वाच्यम्। तावतापि क्षत्यभावाद्। यदि हि एतद्वाक्यालब्धः संसर्ग आकाङ्क्षाज्ञानादिकारणकलापे सत्यपि नैव भासते इति नियमः स्यात्, स्यादयम् असंग्रहो दोषाय, न तु एतदस्तीति। प्रभाकरादि-सम्मत-उक्तशाब्दस्थले च स्वसिद्धान्ते मानसप्रत्यक्षस्य एव उपगमात् नानुपपत्तिः इति। ननु अर्थज्ञानार्थमेव पदप्रयोगात् विनापि पदं प्रमाणान्तरेण उपस्थितार्थस्य प्रकारविधया विशेष्यविधया वा शाब्दबोधे भानं किमिति न अभ्युपेयते इति चेत् ? न। पदजन्य-पदार्थोपस्थितेः शाब्दबोधे कारणत्वात् पदानुपस्थितस्य संसर्गा-तिरिक्तस्य शाब्दबोधे भानासंभवात्। अन्यथा घटादिपदज्ञानजन्योपस्थितौ 'एकसम्बन्धिज्ञानम् अपरसम्बन्धिनं स्मारयति' इत्यादिरीत्या भासमानस्य आकाशस्यापि 'घटोऽस्ति' इत्यादिवाक्यजन्य-शाब्दबोधे भानप्रसंगः। 'घटः कर्मत्वम् आनयनं कृतिः' इत्यादौ 'नीलं घट' इत्यादौ च तत्तत्पदजन्य-तत्तदर्थोपस्थितौ 'घटकर्मताक-आनयनानुकूलकृतेः'; एवम् 'अभेदेन नीलविशिष्ट-घटादेः' शाब्दबोधप्रसंगश्च स्यात्। अथ पदनिष्ठाकाङ्क्षाज्ञानस्य हेतुत्वेऽपि तत्पदसमभिव्याहृत-अपरपदत्वरूपाकाङ्क्षाया उक्तस्थले सत्त्वाद् अन्वयबोधापत्तिः दुर्वारा एव इति चेत् ? न। आनुपूर्वीविशेषरूप-आकाङ्क्षाज्ञानत्वेन कारणत्वस्य वक्ष्यमाणतया तदभावाद् उक्तापत्तेः असम्भवात्। न च एवमपि आकाङ्क्षाज्ञान-शाब्दबोधयोरव्यवहितोत्तरत्वघटित-कार्यकारणभावस्य वक्तव्यतया तत्तदाकाङ्क्षा-विरहस्य अकिञ्चित्करत्वात्। एकपदात् अपि शाब्दबोधस्य अङ्गीकरणमेव शरणीकरणीयमिति वाच्यम्। सामान्यतः शाब्दबुद्धित्वावच्छिन्नं प्रति पदविशिष्ट-

पदत्वरूपाकाङ्क्षाज्ञानस्य कारणताया वक्तव्यत्वात्। वैशिष्ट्यस्य च स्वभिन्नत्व-स्वप्रयोज्य-विषयतानिरूपित-विषयताप्रयोजकत्व-उभयसम्बन्धेन विवक्षितत्वात्। तथा च व्याप्यधर्मावच्छिन्नकार्योत्पत्तौ व्यापकधर्मावच्छिन्न-सामग्र्या अपेक्षिततया उक्तसामान्यकारण-विरहादेव उक्तस्थले शाब्दबोधासम्भवात्। एतत्कार्य-कारण-भावे 'यद्विशेषयोः कार्यकारणभावः तत्सामान्ययोरपि' इति न्यायोऽपि अनुग्राहको बोध्यः। शाब्दबोधे च इत्यत्र च-कारो अनुमित्यादिभ्यो वैलक्षण्यं सूचयति। मङ्गलं तु ग्रन्थाद्बहिः एव कृतम् इति बोध्यम्।

**VV-P 1.2.1:** स चेति। आकाङ्क्षाप्रयोज्यसंसर्गतावाँश्च इत्यर्थः। भेदा-भेदान्वय-विषयकत्वेन शाब्दबोधो द्विविधः। भेदशब्दश्च अभेदान्यसम्बन्धेषु पारिभाषिकः। तत्र भेदसम्बन्धान् आह - **आधारेत्यादि**। भावशब्दस्य द्वन्द्वान्ते श्रूयमाणत्वात् प्रत्येकं सम्बन्धः। तेन आधार-आधेययोर्भावादिलाभः। आधाराधेययोः भावः = असाधारणधर्मः आधारत्वम् आधेयत्वञ्च। यद्यपि आधारत्व-आधेयत्वयोः मिलितयोः न सम्बन्धत्वम्, उभयोः एकत्र-असत्वात्। नापि प्रत्येकम्। आधेयत्वस्य संसर्गत्वेऽपि आधारत्वस्य संसर्गताया नवीनैः अस्वीकृतत्वात्, तथापि पक्षपात-राहित्येन अर्वाचीन-प्राचीन-उभयमतानुसारिणी इयम् उक्तिः। आधारतानिरूपित-आधेयत्वादे संसर्गत्वाभिप्रायेण वा। तत्र यथा वह्नित्वावच्छिन्न-प्रतियोगितायाः संसर्गत्वे वह्नित्वम्, अवच्छिन्नत्वम्, प्रतियोगित्वञ्च त्रितयमेव संसर्गो भवति। तथा आधारतानिरूपित-आधेयत्वस्य संसर्गत्वे आधारत्वम् आधेयत्वञ्च संसर्गो भवति। एवम् अग्रेऽपि बोध्यम्। अत्र च 'ग्रामं गच्छति' इत्यादिस्थले द्वितीयार्थकर्मत्वादौ ग्रामादेः आधाराधेयभावः। 'घटो न पट' इत्यादौ प्रतियोग्यनु-योगिभावः। 'घटं जानाति' इत्यादौ विषयविषयिभावो बोध्यः। **आदिपदात्** समवाय-अनुकूलत्वादिपरिग्रहः। तेन 'चैत्रः पचति' इत्यादौ कृति-चैत्रयोः समवायस्य पाककृत्योः अनुकूलत्वस्य च न असङ्ग्रहः। एवम् अन्यत्रापि ऊहनीयम्।

**VV-P 2.1.1:** 'नीलघटम् आनय' इति। अत्र प्रथमान्तोदाहरणं परित्यज्य द्वितीयान्तोदाहरणं चिन्त्यप्रयोजनकम्। क्वचित् तु 'नीलं घटम् आनय' इत्यादौ इति असमस्त एव पाठः। स च युक्तः। तत्र आदि-पदात् तृतीयाद्यन्त-व्यस्त-वाक्यपरिग्रहो 'नीलघट' इति समस्त-परिग्रहश्च इति। **विरुद्धविभक्तिमदिति** = समानविभक्तिक-भिन्नेत्यर्थः।

**VV-P 2.2.1-2:** **स्वप्रकृतिकेति**। स्वम् = विशेष्यवाचकपदम्। **विभक्ति-विभाजकेति**। विभक्तिविभाजकत्वञ्च विभक्तित्वव्याप्यत्वे सति विभक्तित्वव्याप्या-व्याप्यत्वरूपम्। तच्च न प्रथमात्वादौ। विभक्तित्वस्य सुप्तिङ्-साधारणत्वेन

विभक्तित्वव्याप्यीभूत-सुप्त्व-व्याप्यत्वाद्। अतो विभक्तिपदं सुप्परम्। तथा च सुब्विभाजकम् यत्प्रथमात्व-द्वितीयात्वादिकं तदन्यतमरूपेण साजात्यम्। सुप्त्वञ्च सुप्पदात्-सु-औ-जस्-आदिः बोद्धव्य इति पाणिनि-सङ्केत-सम्बन्धेन सुप्पद-वत्त्वमिति बोध्यम्। **समानानुपूर्वीकत्वेनेति**। आनुपूर्वी च तत्तद्-वर्णोतर-तत्तद्-वर्णत्वरूपा। तस्याश्च 'शोभनौ हरी' इत्यादौ न साम्यम्। अतः सुत्व-औत्व-जस्त्वादिकान् ङित्व-औस्त्व-सुप्त्व-पर्यन्तान् धर्मान् उपादाय स्ववृत्तितावद्-अन्यतमवत्त्वमेव समानापूर्वीकत्वम् अत्र बोध्यम्। **अन्वयबोधानुपपत्तेरि**ति। यद्यपि अत्र 'शोभनाभ्यां पटाभ्याम्' इत्यादौ एकविभक्तौ तृतीयात्वग्रहे अपरत्र चतुर्थीत्व-ग्रहेऽपि उक्तसमानानुपूर्वीकत्वसत्त्वाद् अभेदान्वयबोधापत्तिरप्युद्भावयितुम् उचिता, तथापि 'यावन्तो दोषाः सम्भवन्ति तावन्तो न उद्भावनीया' इति न्यायेन एकतर-दोषस्यैव उद्भावनीयतया आपत्त्यपेक्षया प्रबलानुपपत्तिरेव उद्भाविता। वस्तुतोऽत्र समानानुपूर्वीकत्वसत्त्वेऽपि न क्षतिः प्रकृतित्वादि-अज्ञानदशायाम् अपि हि शाब्दबोधस्य उदयात् समानविभक्तिकत्वस्य ज्ञानं न हेतुः। एवम् असमान-विभक्तिकत्व-भ्रमदशायां शाब्दबोधस्य अनुत्पादात् समान-विभक्तिकत्व-भ्रमदशायां तदुत्पादाच्च स्वरूपसत्समान-विभक्तिकत्वमपि न हेतुः। विरुद्धविभक्तिकत्व-ज्ञान-दशायाञ्च तस्यैव ज्ञानस्य प्रतिबन्धकत्वकल्पनात् नाभेदान्वयबोधः। प्रकृतग्रन्थस्तु अभेदान्वय-बोधस्थल-प्रदर्शनपरः। न तु तेन रूपेण कार्यकारणभाव-प्रदर्शनपर इति बोध्यम्।

**VV-P 2.2.3-4:** **समानलिङ्गकेति**। समानलिङ्गकत्वञ्च स्ववृत्ति-पुँल्लिङ्गत्वाद्यन्यतमवत्त्वम्। तत्र यद्यपि पुँलिङ्गत्वादिकं लिङ्गयोन्यादिमत्त्वमेव। तदपि 'ब्राह्मणः, ब्राह्मणी' इत्यादिवाक्यजन्य एव बोधे भासते, न तु 'घटो अस्ति' इत्यादिवाक्यजन्ये, तथाप्यत्र पुँल्लिङ्गत्वादिना सङ्केतितत्वं पदसंस्कार-प्रयोजकमेव पुँल्लिङ्गत्वादिकं वाच्यम्। न तु तस्य घटादौ भानं, मानाभावादिति। वैयाकरणास्तु लिङ्गस्यापि प्रातिपदिकार्थत्वं तत्तत्प्रयोगानुमेय-सत्त्वादिगुण-उपचयादिरूपत्वञ्च अभ्युपेत्य घटाद्यचेतनेऽपि तद्भानम् अभ्युपगच्छन्ति। **इति हेतुरि**ति।

> शक्तिर्निपुणता लोकशास्त्रकाव्याद्यवेक्षणात्।
>
> काव्यज्ञशिक्षयाभ्यास इति हेतुस्तदुद्भवे।।

इति **काव्यप्रकाशे** प्रथमोल्लासे। **इति त्रय** इति। **इति**-पदेन शक्तेः निपुणताया अभ्यासस्य च परामर्शः।

**VV-P 2.2.5-6:** **यत्र** इत्यादि। अत्र वाक्यम् यच्छब्दार्थः। त्रल्प्रत्ययस्य घटकत्वम् अर्थः। तस्य विशेष्यवाचकपदे अन्वयः। वाचकशब्दो बोधकार्थः।

**उत्तरेत्यस्य** अव्यवहितोत्तरत्वेन अनुसन्धीयमानेत्यर्थः। **विभक्तितात्पर्यविषयसंख्या-विरुद्धसंख्येत्यस्य** विभक्तिजन्य-बोधविषयनिष्ठप्रकारतानिरूपित-इच्छीयविशेष्यता-वच्छेदक-संख्यात्वव्याप्यधर्मावच्छिन्नभिन्नसंख्येत्यर्थः। **अविवक्षितमित्यत्र** विशेषण-पदोत्तर-विभक्त्या इति शेषः। तत्सहितस्य अविवक्षितत्वम् इत्यस्य उक्तसंख्या-विषयक-बोधजनकत्वनिष्ठ-प्रकारतानिरूपित-इच्छीयविशेष्यत्वाभाववद्-विभक्तिक-विशेषणवाचकपदम् अर्थः। तत्रेत्यस्य तद्घटकत्वमर्थः। तस्य विशेष्य-विशेषण-पदयोः अन्वयः। पदयोः इत्यत्र सप्तम्यर्थ-आधेयत्वस्य नियम-शब्दार्थव्याप्तौ अन्वयः। तथा च यद्वाक्यघटक-विशेष्यवाचक-पदोत्तरत्वेन अनुसन्धीयमान-विभक्तिजन्य-बोधविषयत्वनिष्ठ-प्रकारतानिरूपित-इच्छीयविशेष्यता-अवच्छेदक-संख्यात्व-व्याप्यधर्मावच्छिन्न-भिन्नसंख्यानिष्ठ-विषयताकबोधजनकत्वनिष्ठ-प्रकारता-निरूपित-इच्छीयविशेष्यत्वाभाववद्-विभक्तिकं विशेषणवाचकपदं तद्वाक्यघटक-विशेष्य-विशेषण-वाचक-पदव्यापकं समानवचनत्वम् इत्यर्थः। अत्र च विशेष्य-विशेषणपदयोः व्याप्यत्वं तादात्म्येन बोध्यम्। तथा च 'नीलो घटः' इत्यादौ घटपदाव्यवहितोत्तरत्वेनानुसन्धीयमान-सु-विभक्तिजन्य-बोधविषयत्वनिष्ठ-प्रकारता-निरूपिताया एकत्वं सु-विभक्तिजन्य-बोधविषयो भवतु इति इच्छीय-एकत्वनिष्ठ-विशेष्यता तदवच्छेदकसंख्यात्वव्याप्य-एकत्वत्वावच्छिन्नभिन्न-द्वित्वादि-संख्यानिष्ठ-विषयताक-बोधजनकत्वनिष्ठप्रकारतानिरूपित-इच्छीयविशेष्यता, सा च नीलपदो-त्तर-सु-पदनिष्ठा। नीलपदोत्तर-सु-पदं द्वित्वादि-विषयकबोधं जनयतु इतीच्छाया अभावात्। एवं सति उक्तविशेष्यत्वाभाववद्-विभक्तिकमेव नील-पदम्। अत उक्त-वाक्यघटक-नीलपद-घटपद-व्यापकत्वं समानवचनत्वस्य इति उक्तनियमोपपत्तिः। 'वेदाः प्रमाणम्' इत्यादौ च तथाविध-संख्यात्वव्याप्य-धर्मावच्छिन्नभिन्न-एकत्वनिष्ठ-विषयताक-बोधजनकत्वनिष्ठ-प्रकारतानिरूपितायाः प्रमाणपदोत्तर-सु-पदम् एकत्वं बोधयतु इति इच्छीयविशेष्यतायाः प्रमाणपदोत्तर-सु-पदे सत्त्वात्। यद्-वाक्य-घटक-यत्पदेन 'वेदाः प्रमाणम्' इति वाक्यं न ग्रहीतुं शक्यम्। किन्तु 'नीलो घट' इत्यादिकमेव। एवञ्च अग्रिम-तद्-वाक्यघटक-इत्यत्रापि तत्पदेन 'नीलो घट' इत्यादि वाक्यमेव परामर्ष्टुं शक्यते, न तु 'वेदाः प्रमाणम्' इत्यादिकम्। अतो न अत्र समानवचनत्वमिति। अत्र लाक्षणिकस्यापि विशेष्यपदस्य संग्रहाय वाचक-पदस्य बोधकपरत्वम् उक्तम्। 'इदं दधि' इत्यादौ विभक्तेः अश्रवणाद् **उत्तरेत्यस्य** अव्यवहितोत्तरत्वेन अनुसन्धीयमानार्थकत्वम् उक्तम्। **विभक्तितात्पर्यविषयसंख्या-विरुद्धसंख्या-(VV-2.2.5)**-इत्यस्य विभक्तिजन्यबोधविषयक-इच्छाविषय-संख्या-भिन्नसंख्यार्थकत्वे 'वेदाः प्रमाणम्' इत्यत्र "जस्-पदजन्यबोधविषयो बहुत्वं सु-पद-जन्य-बोधविषय-एकत्वञ्च भवतु इति समूहालम्बनेच्छाविषय-एकत्वभिन्नसंख्यायाः

प्रमाणपदोत्तरविभक्त्या अविवक्षितत्वात् समानवचनत्वापत्तिः। अतः सोऽर्थः परित्यक्त इति। ननु उक्तरीत्या विशेष्य-विशेषणपदयोः समानवचनत्व-व्याप्यत्वेऽपि 'वेदाः प्रमाणम्' इत्यादौ समानवचनत्वापत्तिः दुरुद्धरा। 'न हि व्याप्याभावो व्यापकाभावं प्रयोजयति' इति व्याप्यीभूत-उक्तविशेष्य-विशेषणपदयोः अभावेऽपि व्यापकस्य समानवचनकत्वस्य सत्त्वे बाधकाभावादिति चेत् ? न। प्रयोजकान्तर-अभावात् समानवचनत्वे उक्तपदव्याप्यत्वस्यापि विवक्षितत्वेन व्यापकीभूते ये उक्तविशेष्य-विशेषणवाचकपदे तयोः असत्त्वात् व्याप्यस्य समानवचनकत्वस्य अभावसिद्धेः इति। अथ एवमपि समानविभक्तिक-विशेषणवाचक-पदोत्तरविभक्त्या संख्याया अबोधनात्। 'अयं घटः', 'शोभनाः पटाः' इति वाक्यघटक-विशेष्यवाचक-घटपदोत्तरत्वेन अनुसन्धीयमान-सुविभक्तिजन्यबोधविषयत्वप्रकारता-निरूपित-इच्छीयविशेष्यतावच्छेदक-संख्यात्वव्याप्य-एकत्वत्वावच्छिन्नभिन्न-बहुत्व-निष्ठविषयताकबोधजनकत्व-प्रकारतानिरूपित-इच्छीयविशेष्यत्वाभाववद्-विभक्ति-कत्वस्य विशेषणवाचक-शोभनपदे सत्त्वात् तत्र घटपद-शोभनपदयोः समान-वचनत्वापत्तिः इति चेत् ? न। विशेष्यपद-व्याप्यं समानवचनत्वम् इत्यर्थे तात्पर्यात्। विशेष्यपदनिष्ठव्यापकता च (१)स्वप्रयोज्यविशेष्यतानिरूपित-तादात्म्य-सम्बन्धावच्छिन्न-प्रकारताप्रयोजकत्व-(२)स्व-अव्यवहितोत्तरत्वेन अनुसन्धीयमान-विभक्तिजन्य-बोधविषयत्व-प्रकारतानिरूपित-इच्छीय-विशेष्यतावच्छेदक-संख्यात्व-व्याप्यधर्मावच्छिन्नभिन्नसंख्यानिष्ठ-विशेष्यताक-बोधजनकत्व-प्रकारता-निरूपित-इच्छीयविशेष्यत्वाभाववद्-विभक्तिकत्व-उभयसम्बन्धेन। तत्र प्रथमसम्बन्धनिवेशेन 'अयं घटः', 'शोभनाः पटाः' इत्यादौ घटपदप्रयोज्यविशेष्यत्व-शोभनपदप्रयोज्य-प्रकारत्वयोः निरूप्यनिरूपकभावविरहात् न घटपदवत्त्वस्य शोभनपदे सत्त्वम् इति न तयोः समानवचनकत्वम्। द्वितीयसम्बन्धनिवेशेन 'वेदाः प्रमाणम्' इत्यादौ न समानवचनत्वमिति। समानवचनत्वञ्च विभक्तिविशिष्टविभक्तिकत्वम्। वैशिष्ट्यञ्च स्ववृत्ति-सुत्व-औत्व-जस्त्वाद्यन्यतमवत्त्व-सम्बन्धेन।

इदमत्र बोध्यम्। यत्र एकत्वं प्रमाणपदोत्तर-सु-पदजन्य-बोधविषयो भवतु इत्याकारकेच्छा, तत्र तद्विशेष्यत्वम् एकत्व एव वर्तते न तु विभक्तौ। तथा च तथाविध-इच्छीयविशेष्यत्व-अभाववद्-विभक्तिकत्वस्य प्रमाणपदेऽपि सत्त्वात् समानवचनत्वापत्तिः। यदि च संख्यानिष्ठ-विशेष्यतानिरूपित-इच्छीयविषयत्व-निष्ठ-प्रकारतानिरूपित-बोधनिष्ठविषयतानिरूपित-जन्यत्वनिष्ठ-विषयतानिरूपित-विषयत्वाभाववद्-विभक्तिकत्वम् इति उच्येत, तदा यत्र प्रमाणपदोत्तर-सु-पदम् एकत्व-विषयकबोधं जनयतु इति इच्छा तत्र उक्तविषयत्वाभाववद्-विभक्तिकत्वस्य प्रमाणपदे सत्त्वात् उक्तापत्तितादवस्थ्यम् इत्युभयतः पाशा रज्जुः इति चेत् ? न।

विशेष्यवाचक-पदोत्तरत्वेन अनुसन्धीयमान-विभक्तिप्रयोजक-इच्छीय-संख्यानिष्ठ-विषयतावच्छेदकधर्मभिन्न-धर्मावच्छिन्नविषयता-निरूपक-इच्छाप्रयोज्यत्व-अभाववद्-विभक्तिकत्वस्य विवक्षितत्वात्। उक्तविभक्ति-प्रयोजकत्वञ्च संख्यानिष्ठ-विषयतायां विशेषणम्। इत्थञ्च इच्छायां विभक्ति-धर्मिकत्वं संख्या-धर्मिकत्वं वा भवतु। उभयथापि विशेष्यवाचक-पदोत्तरविभक्ति-प्रयोजकत्वं संख्यानिष्ठ-विषयतायाम् अस्ति एवेति नानुपपत्तिः इति। उक्तविभक्ति-प्रयोजकत्वस्य इच्छायां विशेषणत्वे तु 'वेदाः प्रमाणम्' इत्यादौ पूर्वोक्तरीत्या समूहालम्बनेच्छाम् आदाय जस्-प्रयोजक-इच्छाविषयत्वस्य एकत्वादौ सत्त्वात् समानवचनत्वापत्तिः। अतो विषयतायां विशेषणम् इत्युक्तम्। इतः अधिकं तु अस्मद्गुरुकृत-**गूढार्थतत्त्वालोके** अन्वेष्टव्यम्।

अत एवेति = उक्तनियमोपगमादेव इत्यर्थः। **पुरूरव** इत्यादि। अत्र

पिशाचा राक्षसा यक्षा भूता नानाविधास्तथा।
प्रतिलुम्पन्ति सहसा श्राद्धमारक्षवर्जितम्।।
तत्पालनाय विहिता विश्वेदेवाः स्वयम्भुवा।
इष्टिश्राद्धे क्रतुर्दक्षः सत्यो नान्दीमुखे वसुः।।
नैमित्तिके कालकामौ काम्ये च धुरिलोचनौ।
पुरूरवामार्द्रवाश्च पार्वणे समुदाहृतौ।।

इत्यादिवचनम् अस्ति। तत्र पुरूरवोमाद्रवसौ इति क्वाचित्कं पाठम् अवलम्ब्य अयं ग्रन्थः। क्रतु-दक्ष-सत्य-वसु-काल-काम-धुरिलोचन-पुरूरवो-मार्द्रवस एते विश्वेदेव-पदवाच्याः। तत्र इष्टिश्राद्धादौ एतेषां सर्वेषां प्राप्तौ सत्याम् अपि द्वौ द्वौ प्रधानतया वेदितव्यौ इत्युक्तवचनाशयः। इत्थञ्च इष्टिश्राद्धे क्रतुदक्षौ विश्वेदेवाः। नान्दीमुखे सत्यवसू विश्वदेवाः। एवं क्रमेण पार्वणे पुरूरवोमाद्रवसौ विश्वेदेवाः इति समन्वयो बोध्यः। तत्र क्रतुदक्षौ इत्यादौ एकं पदं तात्पर्यग्राहकम्, अपरञ्च प्रधानतया बोधनीयं क्रतुदक्षादि-घटित-समुदाये लाक्षणिकम्। तथा च प्रधानतया बोधनीय-द्वित्ववत्-क्रतुदक्ष-घटित-समुदायप्रकारक-इष्टिश्राद्धघटक-बहुत्ववद्-विश्वेदेव-विशेष्यकः अभेदान्वयबोधः। एवं प्रधानतया बोधनीय-द्वित्ववत्-पुरूरवो-माद्रवोघटितसमुदायप्रकारक-पार्वणघटकबहुत्ववद्-विश्वेदेवविशेष्यकः अभेदान्वय-बोधः। तत्र द्वयोः प्राधान्योपपत्त्यर्थ द्वित्वं विवक्षितम् इति बोध्यम्। **द्वित्वविशिष्टयोरि**ति। न च बहुत्वविशिष्टेषु द्वित्वान्वय-अविरुद्धः। तदुपगमे 'द्वौ बहवः' इत्यादीन् प्रयोगान् परीक्षका अपि प्रयुञ्जीरन् इति वाच्यम्। बहुत्वविशिष्टे साक्षाद्द्वित्वान्वयो विरुद्धो न तु परम्परया अपि। प्रकृते च प्रधानतया बोधनीय-पुरूरवोमाद्रवो-घटितसमुदायरूप-लक्ष्यार्थघटक-पुरूरवोमाद्रवसोः द्वित्वम्

अन्वेति। बहुत्वञ्च तादृशसमुदायात्मक-विश्वेदेवपदार्थे इति न अनुपपत्तिः। **प्रभृति**-पदात् क्रतुदक्षौ विश्वेदेवा इत्यादिस्थलीय-क्रतुदक्षाद्योः परिग्रहः। तत्रापि एषा एव रीतिः अनुसन्धेया।

**VV-P 2.2.7:** **शाब्दप्रमाकरणत्वञ्चेति**। तच्च प्रमात्व-न्यूनवृत्ति-शाब्दत्व-घटित-धर्मावच्छिन्न-कार्यतानिरूपित-असाधारणकारणत्वम्। तत्र प्रमात्वन्यूनवृत्तित्वं न शाब्दत्वस्य विशेषणम् उपलक्षणं वा। भ्रमात्मकेऽपि शाब्दबोधे शाब्दत्वस्य सत्त्वात्। तस्य प्रमात्व-न्यूनवृत्तित्वासम्भवात्। किन्तु शाब्दत्व-घटितधर्मस्य उपलक्षणम्। एवञ्च प्रमात्व-न्यूनवृत्तित्व-उपलक्षितं यन्नीलादि-प्रकारक-घटादि-विशेष्यक-शाब्दत्वं तदवच्छिन्न-कार्यतानिरूपित-कारणत्वस्य 'नीलो घट' इत्यादि वाक्ये सत्त्वात् तस्य प्रमाणत्वम् एवम् इष्टसाधनीभूत-यागानुकूल-कृतिप्रकारक-स्वर्गकामविशेष्यक-शाब्दत्वस्य प्रमात्वन्यूनवृत्तितया तदवच्छिन्न-कार्यतानिरूपित-कारणत्वस्य 'स्वर्गकामो यजेत' इति वेदवाक्ये सत्त्वात्। एवं वाक्यान्तरेषु अपि प्रमात्वन्यूनवृत्ति-तत्तच्छाब्दत्वावच्छिन्न-कार्यतानिरूपित-कारणत्वस्य सत्त्वात् सर्वेषां वेदवाक्यानां प्रमाणत्वं बोध्यम्। न च एवम् उक्तप्रमाकरणत्वस्य प्रतिवाक्यं भिन्नत्वात् यावच्छब्दनिष्ठम् एकमेव इति ग्रन्थासङ्गतिः इति वाच्यम्। शाब्दत्व-जातेः एकत्वेन उक्तग्रन्थस्य भात्तैकत्व-परत्वात्। उक्तशाब्दत्व-घटितधर्मावच्छिन्न-कार्यतानिरूपित-कारणत्वविरहादेव 'ध्वनिः प्रमाणम्', 'घटः कर्मत्वम् आनयनं कृतिः', 'इति वाक्यं प्रमाणम्' इत्यादयः प्रयोगा अप्रामाणिकाः। यदि तु 'यद्विशेष्ययोः कार्यकारणभावः तत्सामान्ययोः अपि' इति न्यायात् शाब्दबुद्धित्वा-वच्छिन्नं प्रति शब्दत्वेन कारणत्वम् अभ्युपगम्य यावच्छब्दनिष्ठम् एकमेव करणत्वम् उक्तग्रन्थाभिप्रेतमिति मन्येत, तदा तु 'घटः कर्मत्वम् आनयनं कृतिः', 'इति वाक्यं प्रमाणम्' इत्यादौ इष्टापत्तिरेव शरणीकरणीया। तस्यापि शब्द-रूपत्वेन उक्तप्रमाकरणत्वस्य सत्त्वादिति।

न चेति। **एवमिति** शेषः। पदार्थतावच्छेदकेऽपि पदार्थान्तरान्वयोपगम इति तदर्थः। **इति व्युत्पत्तिविरोध** इति। इति शब्दस्यात्र सन्निहितवाक्यार्थ-परत्वम्। उक्तवाक्यार्थस्य च अभेदेन व्युत्पत्ति-पदार्थेन नियमेन सह अन्वयः। तथा च उक्तवाक्यार्थात्मक-नियमविरोध इत्यर्थः। अथ उक्तव्युत्पत्ति-निर्वाहको घटादिपदजन्य-शाब्दबोधे घटत्वाद्यंश इतरपदार्थान्वयवारको विशेष्यतासम्बन्धेन शाब्दबोधे मुख्यविशेष्यतासम्बन्धेन उपस्थितित्वेन कार्यकारणभावो न सम्भवति। पशुपदस्य लोमवल्लाङ्गूलात्मक-पशुत्वविशिष्टे शक्ततया तत्पदजन्यशाब्दबोधस्य विशेष्यतासम्बन्धेन लोमवल्लाङ्गूलयोः सत्त्वात् तयोः जात्यखंडोपाध्यतिरिक्ततया स्वरूपतो भानासम्भवेन लोमत्व-लाङ्गूलत्वाभ्यां भानात्। तत्र च मुख्यविशेष्यता-

सम्बन्धेन उपस्थितेः असत्त्वात्। न वा मुख्यविशेष्यतासम्बन्धेन शाब्दबोधे मुख्यविशेष्यतासम्बन्धेन उपस्थितित्वेन कार्यकारणभावः। तथा सति पशुपदजन्य-शाब्दबोधस्य उक्तसम्बन्धेन लोमादौ अजायमानत्वात् तदंशे मुख्यविशेष्यता-सम्बन्धेन उपस्थित्यनपेक्षणात् उक्तदोषवारणेऽपि 'दीर्घः पशुः' इत्यादिवाक्यात् लोमाद्यंशे दीर्घादिरूप-इतरपदार्थावगाहिनः शाब्दबोधस्य आपत्तेः। तथा अन्वयेऽपि तदंशे मुख्यविशेष्यतासम्बन्धेन शाब्दबोधस्य असत्त्वात्। तत्र मुख्यविशेष्यतासम्बन्धेन उपस्थितेरनपेक्षणादिति चेत् ? मैवम्। विशेष्यताविशिष्ट-विशेष्यतासम्बन्धेन शाब्दबोधे हि मुख्यविशेष्यतासम्बन्धेन उपस्थितिः हेतुः। वैशिष्ट्यञ्च (१)स्वतादात्म्य-(२)स्वप्रयोजकवृत्तिज्ञानीयविषयतानिरूपितविषयत्वा-प्रयोज्य-विषयतानिरूपितत्व-उभयसम्बन्धेन। तथा च 'नीलो घटः' इत्यादिवाक्य-जन्यशाब्दबोधस्थले घटनिष्ठविशेष्यतया स्वप्रयोजक-वृत्तिज्ञानीय-विषयता-निरूपित-घटत्वनिष्ठ-विषयत्वाप्रयोज्य-नीलादिविषयतानिरूपितत्व-स्वतादात्म्य-उभयसम्बन्धेन विशिष्टा घटनिष्ठविशेष्यता चास्ति। तेन सम्बन्धेन शाब्दबोधो घटे। तत्र मुख्यविशेष्यतासम्बन्धेन उपस्थितिरपि इति न अनुपपत्तिः। एवञ्च लोमादौ यदि इतरपदार्थान्वयबोधः स्यात्तदा उक्तविषयत्वाप्रयोज्याय इतरपदार्थ-निष्ठ-विषयता तन्निरूपितत्व-स्वतादात्म्य-उभयसम्बन्धेन लोमनिष्ठ-विशेष्यता-विशिष्ट-विशेष्यतासम्बन्धेन शाब्दबोधस्य लोम्नि सत्त्वं स्यात्। तत्र मुख्यविशेष्यता सम्बन्धेन उपस्थितेः एव असत्त्वात् न लोमाद्यंशे इतरपदार्थान्वयबोधः। इदञ्च द्वितीयसम्बन्धस्य फलम्। स्वतादात्म्यानुक्तौ च घटादिनिष्ठ-विशेष्यतायाः स्वप्रयोजकवृत्तिज्ञानीयविषयतानिरूपित-विषयत्वाप्रयोज्य-लोमत्वादिनिष्ठविषयता-निरूपितत्व-सम्बन्धेन वैशिष्ट्यस्य लोमादिनिष्ठ-विशेष्यतायां सत्त्वात् तादृश-विशेष्यतासम्बन्धेन शाब्दबोधाधिकरणे लोमादौ मुख्यविशेष्यतासम्बन्धेन उपस्थितेः अभावादनुपपत्तिः। अतः तन्निवेश्यम्। अधिकन्तु मद्गुरुविरचित-**गूढार्थतत्त्वालोके** (VV-G.2.2.7)विलोकनीयम्। मुख्यविशेष्यत्वञ्च एकज्ञानीय-समानाधिकरण-विषयतयोः अभेदपक्षे प्रकारत्वभिन्नविशेष्यत्वम्। उक्तविषयतयोरवच्छेद्यावच्छेदक-भावपक्षे तु प्रकारत्वानवच्छिन्न-विशेष्यत्वम् इति बोध्यम्।

ननु 'सम्पन्नो व्रीहिः' इति वाक्यस्य जातौ एकत्वान्वयमन्तरेण न प्रामाण्यं सम्भवति। सम्पन्नत्वस्य बहुत्वसंख्याविशेषत्वेन एकत्वविशिष्टे व्रीहौ अन्वयस्यायोग्यत्वात्। एकत्वस्य तन्न्यूनवृत्तितया तदनुयोगितावच्छेदकत्वाभावात्। अन्यथा सङ्ख्याया भासमान-संख्यान्तरानुयोगितावच्छेदकतया एव भानाद्। अन्यथा 'एको द्वौ' इत्यादि-प्रयोगापत्तिः। अत उक्तनियमसङ्कोचस्य आवश्यकतया प्रमाणत्वेऽपि एकत्वान्वयो निरबाधं सिध्यति इति आशयवान् आह - **'सम्पन्नो**

**व्रीहिः'** इत्यादि। **एकवचनदर्शनेनेति।** इदं तु बोध्यम् - 'सम्पन्नो व्रीहिः', 'सम्पन्ना व्रीहयः' इति उभयविधप्रयोगस्य "जात्याख्यायाम् एकस्मिन् बहुवचनम् अन्यतरस्याम्" (P.1.2.58) इति सूत्रनिष्पन्नत्वात् बहुवचनस्यापि एकत्वम् एव अर्थः। तच्च जातौ अन्वेति इति। स्पष्टीकृतञ्च एतत् **पदवाक्यरत्नाकरे** प्रथमायां वचनार्थविवरणे **गोकुलनाथोपाध्यायैः।** **व्युत्पत्तिसङ्कोचरयेति।** यद्-यत्-पद-पदार्थतावच्छेदकयोः अन्वयबोधः प्रामाणिकः तद्-तद्-भेदकूटवत्त्वस्य नियम-घटकीभूतपदे निवेशोऽत्र सङ्कोचः।

**VV-P 2.2.8:** **यदि च स्वाश्रयेत्यादि।** अत्र **यदि च** इति विवादप्रदर्शनाय उक्तम्। तथा हि आकाशपदात् स्वरूपतः उपस्थितस्य आकाशस्य शाब्दबोध-विषयत्वपक्षे अन्वयितावच्छेदकरूपेण उपस्थितस्यैव अन्वयिनः शाब्दबोधे भानम् इति नियमस्यैव अभावात् व्रीहित्वे एकत्वान्वये बाधकाभावात् केवलः 'पदार्थः पदार्थेन अन्वेति' इति नियमसङ्कोचो दोषः। शब्दाश्रयत्वादिना उपस्थितस्यैव आकाशस्य शाब्दमतौ भानमिति पक्षे समादृतस्य अन्वयितावच्छेदकरूपेण उपस्थितस्यैव इति नियमस्य व्रीहित्वे एकत्वान्वयपक्षे सङ्कोचः पदार्थैकदेश-अनन्वयनियमसङ्कोचश्च दोषः। स्वाश्रयव्रीहित्ववत्त्व-सम्बन्धेन व्रीहौ एकत्वान्वये च विभक्त्यर्थ-संख्यायाः पर्याप्तिसम्बन्धेनैव अन्वय इति नियमसङ्कोच उक्त-परम्परायाः संसर्गत्वकल्पनञ्च दोष इति विवदन्ते अत्र वादिनः। **स्वाश्रयेति।** स्वम् = एकत्वम्। **अन्वयितावच्छेकरूपेणेति।** अथान्वयित्वं भासमान-वैशिष्ट्य-प्रतियोगित्वरूप-प्रकारत्वभासमान-वैशिष्ट्यानुयोगित्वरूप-विशेष्यत्व-अन्यतररूपम् एव वाच्यम्। एवञ्च एकत्वस्य भासमानं यत्पर्याप्त्याख्य-वैशिष्ट्यं तदनुयोगित्वरूपस्यान्वयित्वस्य व्रीहित्वे अभ्युपगमे सति एव अनुयोगितावच्छेदकः कश्चिद्धर्मो भवितुम् अर्हति। इत्थञ्च अभ्युपगते व्रीहित्वे एकत्वान्वये तन्निषेधानुपपत्तिः। अनभ्युपगते च **अन्वयितावच्छेदकरूपेणेति** लिखनम् असङ्गतम् इति चेत् ? न। अन्वयितावच्छेदकरूपेण इत्यस्य अन्वयितावच्छेदक-तया सम्भाव्यमानेन इत्यर्थकत्वात्। तच्च रूपं व्रीहित्वत्वम् इति। **अनुपस्थितोरिति।** व्रीहिपदस्य व्रीहित्वत्वविशिष्टव्रीहित्वाश्रये लक्षणया तदुपस्थिति-सम्भवेऽपि तल्लक्षणाया निरूढत्वाभावात् उक्तप्रयोगस्य स्वारसिकत्व-अनुपपत्तिः इति भावः। इदं तु बोध्यम्। अन्वयितावच्छेदकरूपेण उपस्थितस्यैव शाब्दबोधे भानम् इति नियमनिर्वाहको न कार्यकारणभावः कल्पनीयः। किन्तु प्रकारान्तरेण एव अयं नियमो लभ्यते। तथा हि शाब्दबोधीयविषयता द्विविधा। वृत्तिज्ञानीय-विषयताप्रयोज्या आकाङ्क्षाप्रयोज्या च। तत्र वृत्तिज्ञानीय-विषयता-प्रयोज्याया अवच्छिन्नत्व-अनियमेऽपि आकाङ्क्षाप्रयोज्याया अपि पारतन्त्र्येण

भासमान-निष्ठाया अवच्छिन्नत्वानियमेऽपि च तद्भिन्नाया आकाङ्क्षाप्रयोज्याया अवच्छिन्नत्वनियमः। तत्तद्धर्मावच्छिन्न-तत्तत्सम्बन्धावच्छिन्न-प्रकारतानिरूपित-तत्तद्धर्मावच्छिन्नविशेष्यताक-शाब्दबोधं प्रति तत्तदाकाङ्क्षाज्ञानस्य कारणत्वात्, एतन्मूलक एव चायं नियम इति। **प्रकृतेऽपि** इति। 'वेदाः प्रमाणम्' इत्यादौ अपि। **ईदृश्येवेति**। यथा स्वाश्रयव्रीहित्ववत्त्व-सम्बन्धेन व्रीहौ एकत्वान्वयात् 'सम्पन्नो व्रीहिः' इत्यादौ प्रामाण्योपपत्तिरूपा गतिः, तथा स्वाश्रय-प्रमाणत्ववत्त्व-सम्बन्धेन प्रमाणे एकत्वान्वयात् अत्रापि प्रामाण्योपपत्तिरूपा गतिः इत्यर्थः। **गोकुलनाथोपाध्यायानां** तु पदार्थैकदेश-अनन्वयनियमसङ्कोच एव सम्मतः। उक्तञ्च तैः 'वेदाः प्रमाणम्' इत्यादौ पदार्थैकदेशे प्रमाणत्वे एव तात्पर्यवशात् एकवचनार्थस्य अन्वय इति **जगदीशतर्कालङ्कारैरपि** 'महाकविर्महाविज्ञः' 'स्तोकनम्रा' इत्यादौ एकदेशान्वय एव **शब्दशक्तिप्रकाशिकायाम्** उक्त इति बोध्यम्।

**VV-P 2.2.9:** अथ यद्यपि एकत्वस्य न्यूनवृत्तितया अनुयोगितावच्छेदकत्वाभावात् तद्विशिष्टे व्रीहौ सम्पन्नत्वस्य बहुत्वसंख्याविशेषस्य अन्वयो न सम्भवति। तथापि व्रीहिः इति एकवचनात् एकत्वत्वरूपेण नाना-एकत्वोपस्थितिः। **अत्र** इत्यस्य एतद्देश-विद्यमानत्वम् अर्थः। यत्र तु अत्र-इत्यादिपदं न प्रयुक्तं तत्र तदध्याहारः। तथा च एतद्देशविद्यमान-व्रीहित्वसहितानां नाना-एकत्वानाम् अन्यून-अनतिप्रसक्ततया तादृशावच्छेदकत्वं सुघटम् एवेति ये मन्यन्ते तन्मतं दूषयितुम् उपन्यस्यति - **यत्त्विति**। **एकवचनोपस्थितानीति**। यथा घटादिपदात् घटत्वेन रूपेण बहूनां घटानाम् उपस्थितिः सम्भवति तथा एकवचनात् एकत्वत्वेन रूपेण बहूनाम् एकत्वानाम् उपस्थितिः सम्भवतीति भावः। अथ उपस्थिति-शाब्दबोधयोः समानविषयकत्वेन कार्यकारणभावे यद्विषयकानुभवः पूर्वं न जातः तस्य अपूर्वस्य घटादेः उपस्थितिरेव न सम्भवति। तद्-विषयकोपस्थित्यभावे च तद्-विषयक-शाब्दबोधो न उत्पद्येत इति अपूर्वव्यक्तिभान-उपपत्तये समान-प्रकारकत्वेन स्मृति-अनुभवयोः उपस्थिति-शाब्दबोधयोश्च कार्यकारणभावः अवश्यम् अभ्युपेतव्यः। तथा च एकत्वत्वप्रकारक-शाब्दबोधे एकत्वत्व-प्रकारकोपस्थितिः अपेक्षणीया। तस्यां च उपस्थितौ विशेष्यतया किञ्चिदेकत्वस्य भानेऽपि यावन्त्येकत्वानि शाब्दबुद्धौ भासन्ते तावताम् उपस्थितौ भानासम्भवात् तेषां तत्र भानस्य अकिञ्चित्करत्वाच्च **एकवचनोपस्थितानि नानैकत्वानीत्युक्तिः** निरर्थिकेति चेत् ? न। समानविषयकत्वेन कार्यकारणभाव-पक्षाभिप्रायेण उक्तत्वात्। अयं हि पक्षः सामान्यलक्षणायाः प्रत्यासत्तित्वं विना न उपपद्यते। अत एतत्पक्षे सामान्य-लक्षणायाः प्रत्यासत्तित्वस्य आवश्यकतया अपूर्वत्वेन अभिमतस्यापि सामान्य-

लक्षणया पूर्वम् एव ज्ञातत्वात् अपूर्वत्वमेव नास्तीति संसर्गतातिरिक्त-विषयता-सम्बन्धेन शाब्दबोधं प्रति विषयतासम्बन्धेन उपस्थितेः कारणतया सर्वेषाम् एकत्वानाम् उस्थितेः आवश्यकत्वादिति। वस्तुतस्तु यावताम् एकत्वानां शाब्दबुद्धौ भानं तावताम् उपस्थितिपरोऽयं ग्रन्थो भवेत्। भवेत् तत्र तदुक्ति-प्रयोजनापेक्षा। स एव तु नास्ति। किन्तु बहूनाम् एकत्वानाम् उपस्थितिः सम्भवति इति अभिप्रायक इति बोध्यम्। **नानैकत्वानि प्रत्येकं नानेत्यादि**। यावन्तो व्रीहयो भासन्ते तावत्सु प्रत्येकम् एकत्वान्वय इति भावः। तत्र नानैकत्वानाम् एकैकव्रीहौ अन्वयभ्रम-वारणाय प्रत्येकम् इत्युक्तम्। तथा च तत्तद्व्रीहिषु तत्तदेकत्वान्वयलाभः।

**VV-P 2.2.10:** **स्वसजातीयेति**। ननु स्वपदेन एकत्वस्य परिग्रहे प्रकृतानुपयोगः। प्रकृत्यर्थस्य परिग्रहे अग्रे **स्वसमभिव्याहृत**-(VV-2.2.11)-इत्यत्रापि स्वपदेन स एव परिगृह्येत। उभयत्र एकस्यैव स्वपदबोध्यत्वात्। तत्र च प्रकृत्यर्थग्रहणं न सम्भवति। शब्दधर्मस्य समभिव्याहृतत्वस्य अर्थे अभावात् कोऽत्र स्वपदार्थ इति चेत् ? न। प्रकृत्यर्थे वर्तमानम् एकत्वम् उक्तसजातीय-द्वितीय-रहितत्वमिति समन्वयस्य अभिमतत्वेन प्रकृत्यर्थस्यात्र स्वपदार्थत्वात्। अग्रिमं च स्वपदम् आत्मीयवाचित्वेन प्रकृत्यर्थबोधकपदपरमिति। एवञ्च एकघटवति गृहादौ 'अत्र घटोऽस्ति' इति प्रयोगस्थले अनुपदवक्ष्यमाणरूपेण घटसजातीयः स्वात्मक एव घटः। तन्निष्ठश्च भेदः तद्वृत्तिः यदेकत्वं तदवच्छिन्न-प्रतियोगिताको न सम्भवति। अतः तदैकत्वमुक्तभेद-प्रतियोगितानवच्छेदकत्वविशिष्टम् एकवचनार्थः। घटद्वयादिमतिः तु स्वजातीयं घटद्वयादिकमेव इति तयोः परस्परं तत्तदेकत्व-वद्भेदसत्त्वात् तत्प्रतियोगितावच्छेदकम् एव एकत्व द्वयादिकमिति घटद्वयादिमति 'अत्र घटोऽस्ति' इत्यादिः न घटे पर्याप्तिसम्बन्धेन एकत्वान्वयाभिप्रायेण प्रयोग इति। **भेदप्रतियोगितानवच्छेदकेति**। अथात्र यद्यपि स्वसजातीयनिष्ठभेद-प्रतियोगित्वाभावरूपम् एव एकत्वं वक्तुम् उचितम्। घटद्वयादिमति तु स्वसजातीयं घटद्वयादिकमेव, तत्र परस्परं तत्तद्व्यक्तित्वाच्छिन्न-प्रतियोगिताकभेदस्यैव सत्त्वेन उक्तप्रतियोगित्वाभावासत्त्वात् न 'अत्र घटोऽस्ति' इति प्रयोगः। न च एकघट-स्थलेऽपि स्वसजातीये स्वात्मकघटेऽपि 'घट-पटोभयं न अयम्' इत्यादि-प्रतीतिसिद्ध-उभयत्वाद्यवच्छिन्न-प्रतियोगिताक-भेदप्रतियोगित्वम् एव अस्ति इत्यत अवच्छेदकत्वानुसरणमिति वाच्यम्। तत्पक्षेऽपि एकत्ववत्पटोभयं न घट इत्यादि-प्रतीतिसाक्षिक-भेदप्रतियोगितावच्छेदकत्वस्यैव एकत्वे सत्त्वात् अनुपपत्तिः। अतः तद्वारणाय स्वसजातीयनिष्ठभेदे प्रतियोग्यवृत्तित्वस्य निवेश्यत्वात् उक्त प्रतियोगित्वाभावस्य एकत्वरूपत्वपक्षेऽपि तन्निवेशेन उक्तोभयभेदम् आदाय दोषाभावः, तथापि "द्व्येकयोर्द्विवचनैकवचने" (P.1.4.22) इति शक्तिग्राहक-

शास्त्रतः सङ्ख्यारूप-द्वित्वसाहचर्यात् सङ्ख्यारूपैकत्व एव एकवचनस्य शक्तिः प्रतीयते। सङ्ख्यारूपं च एकत्वं न उक्तप्रतियोगित्वाभावरूपम्। किन्तु गुणात्मकम्। अत अवच्छेदकत्वपर्यन्तानुधावनं कृतमिति।

वस्तुतस्तु एकवचनतुल्यार्थक-एकशब्दशक्तिविचारे **शक्तिवादे** तादृश-प्रतियोगित्वाभावरूपमेव सजातीय-द्वितीयरहितत्वम् उक्तम्। इहापि तदेव उचितम् इति बोध्यम्। **एकत्वमात्रम्।** उक्तानवच्छेदकत्वविशेषणरहितम् एकत्वम् **अर्थत एव लाभाद् अनुपयोगाच्चेति।** अयमाशयः - 'अत्र घटोऽस्ति' इत्यादिवाक्यजन्य-शाब्दबोधे केवल-एकत्वस्य अभानेऽपि यत्र यत्र पदार्थत्वं तत्र तत्र एकत्वमिति व्याप्तिग्रहसम्भवात् 'घट एकत्ववान् पदार्थत्वात्' इति अनुमानेन शाब्दबोधात् पश्चादपि केवल-एकत्वस्य ज्ञानोत्पत्तौ क्षतिविरहात्। तत्र एकवचनस्य शक्ति-स्वीकारो निर्युक्तिकः। अत एव 'स्वर्गकामो यजेत' इत्यादिवाक्यार्थबोधानन्तरम् 'अपूर्वं विना यागे स्वर्गसाधनत्वं न उपपद्यते' इति अनुपपत्ति-प्रतिसन्धानात् कल्प्यमानेऽपि अपूर्वे लिङादीना न शक्तिः। परन्तु प्रकृते 'अत्र घटोऽस्ति' इत्यादि वाक्यार्थबोधोत्तरम् 'एकं घटं शाब्दयामि' इति अनुव्यवसायात् एकत्वस्य शाब्दबोधे भानम् आवश्यकम्। तत्र च यादृशस्य एकत्वस्य भाने अनेकव्यावृत्तिः भवेत् तादृशस्यैव एकत्वस्य भानं समुचितम्। अतो निरुक्तमेव एकत्वं विवक्षणीयमिति भावः। **अत एव** निरुक्तविशिष्ट-एकत्वस्य एकवचनार्थत्वात् एव। **'पशुना यजेत'** इति। अस्य प्रयोगस्य "यजेः कर्मणः करणसंज्ञा सम्प्रदानस्य च कर्मसंज्ञा" (SK.570) इति अनुशासन-निष्पन्नत्वात् गौणे कर्मत्व-करणत्वे अत्र बोध्ये। तथा च 'एकपशुनिष्ठं यद् रुद्रनिरूपितं स्वत्वं तद्विषयको मन्त्रपूर्वकः त्याग इष्टसाधनम्' इति वाक्यार्थः। तथा च इदं वाक्यम् अनेकपशुकरणकयागं न विधत्ते। अत उक्तवाक्यलब्धो यागो यदा पशुद्वयादिना सम्पद्यते तदा नासौ अदृष्टम् उत्पादयति इति भावः।

**VV-P 2.2.11: स्वसमभिव्याहृते**त्यादि। अत्र स्व-पदम् आत्मीयवाचित्वेन स्व-बोधकपदपरम्। तथा च 'अत्र घटोऽस्ति' इत्यादौ स्वम् = प्रकृत्यर्थो घटादिः। तद्बोधकघटादि-पदसमभिव्याहृतं पदम् अत्र-पदम्, अस्ति-पदं च। तत्पर्यन्तार्थ एतद्देश-विद्यमानत्वम्। तत्संसर्गित्व-विशिष्टप्रकृत्यर्थतावच्छेदकीभूत-घटत्वरूपेण घटसजातीय-एकस्यैव घटस्य एतद्देशे विद्यमानत्वे स्वात्मक एव परस्यापि घटस्य विद्यमानत्वे तु परोऽपि इति न अनुपपत्तिः। समभिव्याहृतत्वञ्च = 'इदं पदम् अनेन पदेन सह अन्वयबोधं जनयतु' इति इच्छारूपम्। एतद् इच्छाविषयत्वम्, एतदिच्छया उच्चरितत्वं वा। पदविशिष्टं पदत्वं वा। वैशिष्ट्यञ्च (१)स्वप्रयोज्य-विषयतानिरूपित-विषयताप्रयोजकत्व-(२)स्वभिन्नत्व-उभयसम्बन्धेन।

निरूपितत्वञ्च साक्षात्परम्परासाधारणमिति बोध्यम्। अत इत्यादि। उक्तरूपेण साजात्यप्रवेशात् इत्यर्थः। तथा च यत्र घटसजातीयः स्वात्मक एव घटः तत्र तन्निष्ठभेद-प्रतियोगिताया अवच्छेदकत्वस्य एकत्वान्तरे सत्त्वेऽपि तद्घटवृत्तिः यदेकत्वं तत्र तदभाव इति भावः। ननु एवम् एतद्देशे बहुघटसत्वे 'अत्र घटोऽस्ति' इत्यादिप्रामाणिक-प्रयोगस्य कथम् उपपत्तिः? एकत्वस्य उक्तभेद-प्रतियोगितावच्छेदकत्वात् इत्यत आह - **एतद्देशे** इति। **जात्येकत्वे**ति। अयं भावः- यत्र पर्याप्तिसम्बन्धेन प्रकृत्यर्थे एकत्वान्वयः तत्र एतादृशैकत्वस्य भानम्। यत्र तु योग्यताविरहात् न एतादृशैकत्वस्य प्रकृत्यर्थे भानसम्भवः तत्र तु पर्याप्तिसम्बन्धेन प्रकृत्यर्थतावच्छेदके स्वाश्रय-प्रकृत्यर्थतावच्छेदकवत्त्व-सम्बन्धेन प्रकृत्यर्थे वा केवलस्यैव एकत्वस्य भानमिति।

**VV-P 2.2.12:** **एकत्व-अविवक्षायामपि** इति। अयमाशयः - 'चैत्रो गच्छति' इत्यादौ सुब्-विभक्तेः एव सङ्ख्याप्रतिपत्तेः अलम् आख्यातस्य सङ्ख्यावाचकत्वाङ्गीकारेण इति वक्तुम् अशक्यम्। तथा सति हि 'चैत्रो गच्छतः', 'चैत्रो गच्छन्ति' इत्यादिप्रयोगापत्तिः। सङ्ख्यावाचकत्वाङ्गीकारे च एकत्वावरुद्धे कर्तरि न आख्यातार्थ-द्वित्वादेः अन्वयः सम्भवतीति न तथा प्रयोगः। तथा च उक्तरीत्या आख्यातस्य सङ्ख्यावाचकत्वे सिद्धे कर्माख्यातस्थले 'चैत्रेण ग्रामौ गम्येते' इत्यादौ एकत्वावरुद्धे कर्तरि द्वित्वान्वयासम्भवात् कर्मण्येव तदन्वयो वाच्यः। तदुपपत्तये च विशेष्यतासम्बन्धेन आख्यातार्थ-सङ्ख्याप्रकारक-अन्वयबुद्धिं प्रति विशेष्यतासम्बन्धेन प्रथमान्त-पदजन्योपस्थितिः कारणमिति कार्यकारणभावः अङ्गीकर्तव्यः। इत्थञ्च 'चैत्रेण रथीयते' इत्यादिभावाख्यातस्थले प्रथमान्तपद-जन्योपस्थितेः अभावात् न आख्यातार्थ सङ्ख्यायाः अन्वयः सम्भवति। न च भावाख्यातस्य सार्थकत्वानुरोधेन भावाख्यातार्थातिरिक्तत्वम् उक्तकार्यतावच्छेदक-घटकाख्याते विशेषणं देयम्। तथा च चैत्रे आख्यातार्थैकत्वान्वये बाधकाभाव इति वाच्यम्। 'चैत्र-मैत्राभ्यां रथीयते' इत्यादौ द्वित्वावरुद्धयोः चैत्र-मैत्रयोः एकत्वान्वय-असम्भवात्। नापि धात्वर्थेन सह आख्यातार्थबहुत्वेऽपि भावाख्यात-स्थले एकवचनस्यैव साधुत्वेन तत्र एकत्वान्वयासम्भवात्। अन्यथा द्विवचनादेरपि आपत्तिः स्यात्। अतो धात्वर्थे सङ्ख्यान्वये आख्यातस्य निराकाङ्क्षत्वमेव अभ्युपेयम्। एवञ्च आख्यातमात्रस्य सङ्ख्यावाचकत्वे सिद्धेऽपि यथा भावाख्यात-स्थले तदर्थः सङ्ख्या न विवक्ष्यते तथा सु-विभक्तेः एकत्ववाचकत्वेऽपि 'सम्पन्नो व्रीहिः' इत्यादौ एकत्वं न विवक्ष्यते इति। **गत्यन्तरविरहेणे**ति। अविवक्षातिरिक्त-गतिविरहेण इत्यर्थः। **निरर्थकत्वोपगमादि**ति। सङ्ख्याविषयकबोधतात्पर्य-रहितत्व-उपगमात् इत्यर्थः। तेन उक्तरीत्या कर्त्राख्यातादिस्थले ते-प्रभृतेः

सङ्ख्याप्रत्यय-उत्पादात् तादृशानुपूर्वीप्रकारेण उक्तरीत्या आख्यातमात्रस्य एकत्वादिशक्तत्वेन भावाख्यातस्यापि तेन रूपेण सङ्ख्यावाचकत्वेऽपि भावाख्यात-स्थले कालप्रतिपत्तावपि च न क्षतिः। न वा "अर्थबोध-स्वरूपयोग्यता-प्रयोजक-आकाङ्क्षाशालित्वेन तदविवक्षास्थलेऽपि भावाख्यातस्य अर्थवत्त्वात्" (VV-4.1.3) इत्यादिग्रन्थविरोधः। **सार्थकत्वोपगमसम्भव** इति। सङ्ख्यायाः तात्पर्यविषयत्व-उपगमसम्भव इत्यर्थः। ननु सम्पन्नव्रीहिमात्र-बुबोधयिषया प्रयोक्तव्ये 'सम्पन्नो व्रीहिः' इति वाक्ये "न केवलं प्रकृतिः प्रयोक्तव्या नापि केवलं प्रत्ययः" इति न्यायेन अवर्जनीयतया प्रयोक्तव्यायां विभक्तौ औत्सर्गिकत्वात् प्रथमैकवचनम् एव प्रयुज्यते। न तु तदर्थो विवक्ष्यते इति व्यर्थ एव एकदेशानन्वय-नियमभङ्ग-व्यासङ्ग इत्यत आह - **सति तात्पर्ये** इति। अयं भावः - अविवक्षाहेतुः द्विविधः। (१)विवक्षणीयस्य असम्भवः (२)तस्य अप्रयोजनत्वज्ञानञ्च। तत्र न एकोऽपि अत्र प्रसरति। जात्यादौ एकत्वान्वयस्य योग्यत्वात्। एकमेव व्रीहित्वम् एतेषु सम्पत्त्याश्रयेषु व्रीहिषु वर्तते इति बोधनस्य प्रयोजनस्य सत्त्वाच्च इति।

**VV-P 2.2.13:** तादृशसमुदायत्वान्वितमिति। ननु हेतुपदात् शक्त्युपस्थापिते हेतुत्वे एकत्वान्वयसम्भवे किमिति तं परित्यज्य समुदायत्वविशिष्टे लक्षणा समुदायत्वे एकत्वान्वयश्च उपेयते? न च शक्तिनिपुणताभ्यास-एतत्त्रितय-साधारणस्य एकस्य हेतुत्वस्य अभावात् न तत्र एकत्वान्वयः सम्भवतीति वाच्यम्। उक्तानां त्रयाणां शक्तित्वादिप्रत्येकधर्मेण हेतुत्वे समुदिता इत्यस्य वैयर्थ्यप्रसङ्गेन उक्तत्रितयसाधारणसमुदायत्वेन एकहेतुत्वस्य वक्तव्यतया एकधर्मावच्छिन्नहेतुत्वस्य आश्रयभेदेऽपि ऐक्यात् इति चेत्? न। स्यादेवं यदि हि उक्तरूपेण त्रयाणां हेतुत्वं स्यात्, तदेव न सम्भवति। समुदायत्वस्य एकविशिष्ट-अपरत्व-रूपतया त्रयाणां विशेष्यविशेषणभावे विनिगमनाविरहेण गुरुधर्मावच्छिन्न-कार्यकारण-बाहुल्य-प्रसङ्गात्। किन्तु शक्तित्वेन शक्तेर्निपुणतात्वेन निपुणताया अभ्यासत्वेन अभ्यासस्य च पृथक्-पृथगेव कारणत्वं वक्तव्यम्। न च एवम् एकैकशः कार्योत्पादप्रसङ्गः। समुदिता इत्यस्य वैयर्थ्यञ्च स्याद् इति वाच्यम्। घटं प्रति दण्डचक्रादेः परस्परसहकारित्वस्येव प्रकृते अपि शक्त्यादेः परस्परसहकारित्वस्य अभ्युपगमात् त्रयाणां सहकारित्वबोधनार्थम् एव हि **समुदिता** इति उक्तम्। अतो न तस्य वैयर्थ्यम् अपि। तथा च एकसमुदायत्व-आश्रयाणाम् एव शक्त्यादित्रयाणां काव्योद्भवहेतुत्वम् इति बोधनम्। एकत्वविवक्षायाः प्रयोजनम् इति बोध्यम्। अत्र **काव्योत्पादप्रयोजकतावच्छेदकेति** तु समुदायत्वस्य परिचायकम्। न तु तेन रूपेण हेतुपदार्थता इति। **अत एव** इति। शक्त्यादीनां त्रयाणां पृथक् हेतुत्वेऽपि परस्परं तेषां सहकारित्वेन त्रितयवृत्त्येक-समुदायत्वस्य प्रयोजकतावच्छेदकत्वात्

एव इत्यर्थः। **तृणारणिमणिन्यायेन** इति। तृणारणिमणीन् अधिकृत्य प्रवृत्तो न्यायः तृणारणिमणिन्यायः। न्यायः अत्र युक्तिः। सा च परस्पर-नैरपेक्ष्येण प्रत्येकधर्म-पुरस्कारेण कारणत्वसाधिका। न्यायेन इत्यत्र प्रयोज्यत्वं तृतीयार्थः, तस्य हेतुत्वे अन्वयः। तथा च उक्तयुक्तिप्रयोज्यं यद् असहकृतानां हेतुत्वं तच्छङ्कानिरास इति भावः।

सा च इयं युक्तिः क्वचित् तृणेन क्वचित् मणिना च वह्निर्जन्यते। तत्र त्रयाणां तृणत्वादिप्रत्येकधर्मेण कारणत्वे त्रयाणां कारणत्वानां त्रयाणां तदवच्छेदकत्वानां च कल्पने गौरवेऽपि एकधर्मेण कारणत्वे तु एकस्यैव कारणत्वस्य एकस्यैव तदवच्छेदकत्वस्य च कल्पनायां लाघवेऽपि अन्यतमत्वेन एकरूपेण तेषां न कारणत्वम्। तथा सति हि सहकारिनियमो न उपपद्येत। तथा हि तृणस्य सहकारी फूत्कारः। अरणेः मन्थनम्। मणेः तरणिकिरणसंयोगः। तदेतत्-त्रितय-विशिष्ट-तृणाद्यन्यतमत्वेनैव कारणत्वं वाच्यम्। तथा सति तरणिकिरण-संयोग-विशिष्ट-मणिसत्त्वेऽपि दाहो न स्यात्। मणेः त्रितयवैशिष्ट्याभावात्। नापि फूत्काराद्यन्यतमविशिष्ट-तृणाद्यन्यतमत्वेन तरणिकिरण-संयोगविरहे फूत्कार-विशिष्टमणिसत्त्वेऽपि दाहप्रसङ्गात्। किन्तु सहकारनियमोपपत्त्यर्थं वह्निगत-वैजात्यत्रयं कल्पयित्वा तार्ण-वह्नित्वावच्छिन्नं प्रति तृणत्वेन इति एवं क्रमेण परस्परनिरपेक्षाणामेव तृणारणिमणीनां हेतुत्वं वाच्यम्। न तु सहकृतानाम्। फूत्कारादीनां त्रयाणामपि फूत्कारत्वादि-प्रत्येकरूपेणैव तार्णवह्नित्वावच्छिन्नं प्रति फूत्कारत्वेन इति। एवं क्रमेण स्वातन्त्र्येण हेतुत्वम्। न तु तार्णवह्नित्वावच्छिन्नं प्रति फूत्कारतृणविशिष्टत्वेन इति एवं क्रमेण कारणत्वं विनिगमनाविरहेण तृणविशिष्ट-फूत्कारत्वादिनापि कारणत्वप्रसक्तौ गुरुधर्मावच्छिन्न-कारणता-षट्क-प्रसङ्गात्। इत्थञ्च तृण-फूत्कारयोः अरणि-मन्थनयोः मणितरणिकिरण-संयोगयोः द्वयोर्द्वयोः सहकारित्वोपगमात् न तृणादेः फूत्कारादेः एव एकैकस्य सत्त्वे कार्योत्पत्तिप्रसङ्ग इति। तथा च यथा सहकारिभावानापन्नानामेव तृणारणिमणीनां तार्णत्वादिवैजात्यविशेषावच्छिन्नं प्रति कारणत्वं न तथा। प्रकृते किन्तु शक्त्यादीनां त्रयाणां सहकारित्वस्य आवश्यकत्वमेव इति बोध्यम्।

**VV-P 2.2.14: व्यक्त्याकृतिजातयः पदार्थः** (NS.2.2.68) इति गौतमसूत्रम् एतत्। अस्यार्थस्तु व्यक्तिः घटादिः, आकृतिः समवायादिसम्बन्धः, जातिः द्रव्यत्वा-दिकम्। एतत्-त्रितयमेव पदशक्तिमदिति। तत्र जातिपदेन यस्य शक्यता-वच्छेदकत्वाङ्गीकारे आपत्त्यादिविरहः, स धर्मो ग्राह्यः। अत्र 'जात्याकृतिव्यक्तयः पदार्थः' इति पाठस्तु प्रामादिकः। तथाविध-सूत्रस्य अनुपलभ्यमानत्वादिति। **पदशक्तिरूप-पदार्थत्वस्येति**। ननु अत्र यदि ईश्वरेच्छारूपा शक्तिः विवक्ष्यते तदा

तस्याः सकलपदार्थगोचराया एकत्वेन एकत्वान्वययोग्यत्वेऽपि व्यक्त्याकृतिजातयः पदार्थ इतिवत् 'घट-पट-मठाः पदार्थः' इत्यपि स्यात् प्रयोगः, एकत्ववदिच्छारूप-शक्तिविषयत्वस्य सर्वत्र सत्त्वात्। यदि ईश्वरेच्छीयविषयतारूपशक्तिः तस्यां च एकत्वान्वयो विवक्ष्यते तदा एकत्वाश्रयीभूतोक्तविषयत्वस्य त्रितयसाधारण्याभावात् व्यक्त्याकृतिजातय पदार्थ इत्यादिप्रयोगस्य अप्रामाण्यापत्तिः इति चेत्? न। स्व-निरूपितविशेष्यत्व-स्वावच्छेदकविशेष्यतानिरूपितावच्छेद्यत्वनिष्ठविषयतानिरूपित-अवच्छेदकत्वनिष्ठविषयतावत्त्व-अन्यतरसम्बन्धेन ईश्वरेच्छीय-पदजन्यबोधविषयत्व-निष्ठप्रकारतावत्त्वस्यैव शक्तिपदार्थत्वात्। विषयतावत्ता च (१)स्वनिरूपितविषयता-वदाधेयत्व-(२)स्वनिरूपितावच्छिन्नत्व-सम्बन्धावच्छिन्न-विषयतावत्त्वान्यतरसम्बन्धेन। घटत्वावच्छेदेन घटपदजन्यबोधविषयत्वम् अवगाहमानायां घटो घटपदजन्य-बोधविषयो भवतु इति इच्छायां घटत्वमपि हि समवायसम्बन्धावच्छिन्न-स्वनिष्ठा-वच्छेदकतानिरूपितावच्छेद्यत्वसम्बन्धेन विषयतांशे संसर्गविधया भासते। तथा च उक्तबोध-विषयत्व-निष्ठा या आश्रयत्व-सम्बन्धावच्छिन्न-प्रकारता तन्निरूपित-विशेष्यत्वं घटे, उक्तबोधविषयत्वनिष्ठ-विशेष्यता-निरूपितावच्छेद्यत्वनिष्ठसंसर्गता-त्मक-विषयता-निरूपिता या अवच्छेदकत्वनिष्ठ-विषयता तन्निरूपित-विषयतावद् आधेयत्वं घटत्वे, समवाये तु उक्तावच्छेदकत्वनिष्ठ-विषयता-निरूपितावच्छिन्नत्व-सम्बन्धावच्छिन्न-विषयता अस्ति इति न अनुपपत्तिः। एकज्ञानीय-समानाधिकरण-विषयतयोः इव एकेच्छीयसमानाधिकरणविषयतयोः अपि अवच्छेद्यावच्छेदकभावात् उक्तं स्वावच्छेद्यविशेष्यतेति। ननु ईश्वरेच्छाया ईश्वरेच्छीय-उक्तविषयताया वा शक्तिरूपत्वे अस्मदादिभिः दुर्ज्ञेया एव शक्तिः इति चेत्? अत्र आहुः **वाचस्पति-मिश्रचरणाः** "सर्गादिभुवां महर्षि-देवतानाम् ईश्वरेण साक्षात्कृतः सङ्केतः, तद्व्यवहारात् अस्मदादीनामपि संग्रहः सङ्केतः" इति अधिकं तु अन्यत्र अनुसन्धेयम्। इत्थञ्च प्रकृते ईश्वरेच्छीयपदजन्यबोध-विषयत्वनिष्ठ-प्रकारताया ऐक्यात् एकत्वस्य योग्यतयान्वयो बोध्यः।

**VV-P 2.2.15:** 'प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानि' (NS.1.1.3) 'पितरो देवता' इत्यादौ उक्ताया अनुपपत्तेः समाधानमाह **प्रत्यक्षानुमानेत्यादि**। **बाधितत्वेन** इति। प्रत्यक्षादीनां चतूर्णां न चतुष्ट्वेनैकरूपेण प्रमाकरणत्वम् एकैकशः कार्यानुत्पादप्रसङ्गाद्, नाप्यन्यतमत्वेन सहकारिनियमानुपपत्तेः। किन्तु प्रत्यक्षादिप्रमां प्रति प्रत्यक्षत्वादिनैव करणत्वं वाच्यम्। कारणता च अवच्छेदक-भेदात् भिन्नैव। अतो नात्र कारणत्व-विशेषरूप-करणत्वे एकत्वान्वयः सम्भवति, बाधितत्वादिति भावः।

**VV-P 2.2.16:** **एवमित्यादि**। यत्कर्माङ्गभूताः पितृपितामहादयः पितरः

पितृत्वेन एकरूपेण 'पितृभ्यः स्वधा' इत्यादिवाक्येन न निर्दिष्टाः किन्तु 'पित्रे स्वधा', 'पितामहाय स्वधा' इत्यादिना प्रत्येकरूपेणैव तत्रत्योऽयं प्रयोगः। तत्र च पितृपितामहादौ त्यागोद्देश्यत्वरूप-देवतात्वं भिन्नमेव। पितृत्व-पितामहत्वादिरूप-अवच्छेदकभेदेन उद्देश्यताभेदात्। अतः तत्र एकत्वान्वयस्य बाधितत्वात् बहुवचनम् इति भावः।

**VV-P 2.3.1:** **स्वप्रकृतिकविभक्ति-सजातीयविभक्तिकत्वमि**ति (VV-2.2.1) यदुक्तं पूर्वं तत्र स्वप्रकृतिकत्वं यदि स्वाव्यवहितोत्तरत्वरूपं तदा 'दधि सुन्दरम्' इत्यादौ दधि-पदोत्तरविभक्तेः अविद्यमानत्वेन स्वसमानविभक्तिकत्वं न स्यात्, अत आह **स्वप्रकृतिकत्वञ्चे**ति।

**VV-P 2.4.1:** **उक्तनियमे**ति। स्वसमानविभक्तिकेन स्वाव्यवहितपूर्ववर्तिना च पदेन उपस्थापितस्य एव अभेदान्वयबोध इति नियम इत्यर्थः। **अकिञ्चित्कर-त्वादि**ति। नियमस्य फलानुसारेण कल्पनीयतया 'नीलस्य घट' इत्यादावपि अभेदान्वयबोधजनने तदनुसारेणैव नियमोऽपि कल्प्येत इति भावः। **प्रथमा-विभक्त्यन्त-घटादिपदे**त्यादि। नात्र प्रथमात्वेन आकाङ्क्षाशरीरे प्रवेशो, न वा सुत्वादिना प्रथमात्वाद्यज्ञानदशायामपि शाब्दबोधोत्पत्तेः। किन्तु नील-इत्याद्या-नुपूर्वीविशेष-विशिष्ट-घट-इत्याद्यानुपूर्वीविशेष-विशिष्टयोः समभिव्याहाररूपा एव आकाङ्क्षा। समभिव्याहारश्च पदविशिष्ट-पदत्वरूपः। वैशिष्ट्यञ्च स्वप्रयोज्य-विषयतानिरूपित-विषयताप्रयोजकत्व-स्वभिन्नत्व-उभयसम्बन्धेन इत्युक्तमधस्तात्। विनिगमनाविरहात् समासस्थले आकाङ्क्षाद्वयम् आह **समासस्थले चे**ति। ननु एवं पदार्थोपस्थित्यादि-कारणकलापसत्त्वे विभक्तिरहित-'नीलघट'-इत्येतन्मात्रज्ञानेऽपि नील-घटयोः अभेदान्वयबोध-प्रसङ्गः। नीलपदाव्यवहितोत्तर-घटपदत्वादिरूपाक-आङ्क्षाज्ञानस्य अत्रापि सत्त्वादिति चेत्? न। अत्रत्यं हि नीलपदं प्रकारता-प्रयोजकमेव न तु विधेयताप्रयोजकं भवितुम् अर्हति। अपूर्वांशस्यैव विधेयत्वात् नीलपदार्थस्य च उद्देश्य-घट-विशेषणत्वेन सिद्धतया अपूर्वत्वाभावात् विधेयत्वा-सम्भवः।

शाब्दबोधेऽपि अनुमिताविव विधेयतानियमेन समासस्थलेऽपि विधेयो भवेत्। एकत्वादि-प्रकारकस्यैव शाब्दबोधस्य प्रसिद्धतया तत्सामग्र्या विभक्त्यन्त-नील-घट-पदादिज्ञानघटिताया व्यापकधर्मावच्छिन्न-कार्योत्पत्तौ व्याप्य-धर्मावच्छिन्न-सामग्रीविधया अपेक्षिताया अभेद-सम्बन्धावच्छिन्न-नीलत्वाद्यवच्छिन्न-प्रकारता-निरूपित-घटत्वाद्यवच्छिन्न-विशेष्यत्वाभिन्न-विशेष्यता-निरूपित-एकत्वादि-प्रकारक-शाब्दबुद्धित्वावच्छिन्न-प्रयोजिकाया अभावात्। व्यासस्थलीय-स्वन्तनीलादिपदज्ञान-घटितायाश्च न आपत्तिः सम्भवति।

**VV-P 2.4.2:** ननु 'नीलो घट' इत्याकाङ्क्षाज्ञानाभावेऽपि 'नीलघट' इति समासस्थलीयाकाङ्क्षाज्ञानात् अभेदसम्बन्धेन नीलप्रकारक-घटविशेष्यक-शाब्द-बोधस्य उत्पत्तेः। एवमुक्तसमासस्थलीयाकाङ्क्षाज्ञान-व्यतिरेकेऽपि 'नीलो घटः' इत्याकाङ्क्षाज्ञानात् तादृश-शाब्दबोधस्य उत्पत्तेश्च। परस्पर-व्यतिरेक-व्यभिचारात् न उक्तरीत्या कार्यकारणभावः सम्भवति इति आशङ्कायाम् आह **कार्यतावच्छेदककोटाविति**। तथा च 'नीलो घट' इत्याकाङ्क्षा-ज्ञानाव्यवहितोत्तर-नीलत्वावच्छिन्न-प्रकारता-निरूपित-घटत्वावच्छिन्न-विशेष्यताक-शाब्दबोधत्वावच्छिन्नं प्रति एव 'नीलो घटः' इति आकाङ्क्षाज्ञानत्वेन कारणत्वम्, अतो न व्यभिचारः। न चात्र अव्यवहितोत्तरत्वस्यैव कार्यतावच्छेदकत्वमस्तु, न तु विषयतादेः इति वाच्यम्। उक्तशाब्दबोधत्वस्य कार्यतावच्छेदकत्वे हि प्रवृत्तिं प्रति इष्टतावच्छेदकावच्छिन्न-साधनताज्ञानस्य कारणत्वात् नीलघटान्वयबुद्धिः इष्टा इति। नीलघटान्वयबुद्धित्वावच्छिन्नविशेष्यक-इष्टत्वप्रकारकज्ञान-दशायामुक्तान्वयबुद्धित्वावच्छिन्न-निरूपित-साधनत्वज्ञानात् 'नीलो घटः' इति वाक्यं प्रयुज्यते। अव्यवहितोत्तरत्व-मात्रस्य कार्यतावच्छेदकत्वे तु नीलत्वानवच्छिन्न-प्रकारतानिरूपित-घटत्वावच्छिन्न-विशेष्यताक-शाब्दबोधत्वावच्छिन्नजनकं 'नीलो घटः - इदं वाक्यम्' इत्याकारक-इष्टतावच्छेदकावच्छिन्न-निरूपित-साधनताज्ञानाभावात् न एतद्बोधजननाय इदं वाक्यं प्रयुञ्जीत, अतो विषयत्वादिप्रवेश आवश्यक इति। प्रकारन्तरेणापि विषयत्वादिप्रवेशसार्थक्यन्तु विवेचितम् अस्मद्गुरुचरणैः **गूढार्थतत्त्वालोके**।

**नोक्ताकाङ्क्षाज्ञानयोरिति**। इदम् उपलक्षणम्। समासस्थले व्यासस्थले अपि च घटादिपदस्थाने तत्पर्यायं कलशादिपदं नीलादिपदस्थाने कृष्णादिपदं च प्रक्षिप्य तद्घटिताकाङ्क्षाज्ञानानामपि परस्परबोधे व्यभिचारवारणाय अव्यवहितोत्तरत्वस्य कार्यतावच्छेदक-घटकत्वं बोध्यम्। **व्यभिचार** इति। व्यतिरेकव्यभिचार इत्यर्थः।

**VV-P 2.5.1:** **समासव्यास-साधारणमिति**। समासव्यासोभयवृत्ति इत्यर्थः। व्यासपदस्य असमस्त-वाक्यमर्थः। **विशेषणवाचकपदस्येति**। षष्ठ्यर्थो निष्ठत्वम्।

**VV-P 2.5.2:** न च एतत्पक्षे 'वेदाः प्रमाणम्' इत्यादौ वेदपद-अप्रकृतिक-सु-विभक्तिप्रकृतित्वस्य एव प्रमाणपदे सत्त्वात् उक्ताकाङ्क्षाविरहात् अनुपपत्तिः कुतो न उक्ता इति वाच्यम्। ततोऽपि गुरुतरस्य असम्भवदोषस्य अत्र सत्त्वे तस्यैव प्रतिपादयितुम् उचितत्वेन असम्भवस्यैव **तदसत्** इत्यादिना प्रतिपादनात्। अथवा विशेषणवाचकपदस्य इत्यस्य विशेष्यवाचक-पदोत्तरविभक्ति-तात्पर्यविषय-सङ्ख्याविरुद्ध-सङ्ख्या-बोधनेच्छया उच्चरितविभक्त्यप्रकृति-विशेषणवाचकपदस्य इत्यर्थकत्वात् न दोषः। 'सुन्दरं दधि' इत्यादौ विभक्तेः अश्रवणात् आह -

**तदुत्तरत्वेनेति**। **'नीलो घटः' इत्यादाविति**। यद्यपि "उद्देश्यवचनं पूर्वं विधेयस्य ततः परम्" इत्यभियुक्तोक्तेः 'घटो नीलः' इत्येव प्रयोक्तुमुचितं तथापि तदुक्तेः प्रतिज्ञावाक्याभिप्रायकतया अन्यत्र प्रयोगस्य ऐच्छिकत्वं दृष्टानुसारात् कल्प्यते।

**VV-P 2.6.1-3: विशेष्यवाचकपदोत्तरेत्यादि**। अत्र विभक्तित्वेन विभक्तिप्रवेशे प्रयोजनविरहात् तादृशपदोत्तरत्वेन प्रवेशः। तदपि 'सुन्दरं दधि' इत्यादिसङ्ग्रहाय उक्तपदोत्तरत्वेन प्रतिसन्धीयमानत्वरूपं बोध्यम्। ननु अत्र सामान्यतो विशेष्य-वाचकपदत्वेन प्रवेशो न सम्भवति। सर्वस्यैव सुत्वादिधर्मस्य तत्तत्स्थलभेदेन विशेष्यवाचकपदोत्तरवृत्तित्वेन विशेष्यवाचकपदोत्तरावृत्ति-विभक्तिविभाजक-धर्मस्यैव अप्रसिद्धेः। न वा घटपदत्वादिना प्रवेश एतद्-अप्रसिद्धिदोष-तादवस्थ्यात्। विभक्तित्वस्य सुप्-तिङ्साधारणत्वेन सुत्वादेः विभक्तिविभाजकत्व-असम्भवेन विभक्तिविभाजकधर्मपदेन सुत्व-औत्वादेः एव वक्तव्यतया सर्वस्यैव तत्तत्स्थलभेदेन घटपदोत्तरवृत्तित्वात् 'नीलो घटः' इतिवाक्यघटक-घट-पदोत्तरावृत्ति-इति क्रमेण तत्तत्पदानां विशिष्यप्रवेशे तात्पर्यं च समास-व्यास-साधारण-आकाङ्क्षाभिधान-प्रवर्तमानस्य न शोभनम्। एवं सति प्रतिवाक्यम् आकाङ्क्षाया भेदात् अनुगतत्वा-सम्भवादिति चेत्? न। विशेषणपदे विशेष्यपदवत्त्वम् आकाङ्क्षा इत्यत्र तात्पर्यात्। पदवत्त्वञ्च स्वोत्तर-निरूपितवृत्तित्व-सम्बन्धावच्छिन्न-प्रतियोगिताक-स्वाभाववद्-विभक्तिविभाजक-धर्मवत्त्व-सम्बन्धावच्छिन्न-प्रतियोगिताक-स्वाभाववत्व-सम्बन्धेन। धर्मवत्त्वञ्च स्वाश्रयाव्यवहितपूर्वत्व-सम्बन्धेनेति। अस्ति च 'नीलो घटः' इत्यादौ घटपदवत्त्वं नीलपदे। तथा हि स्वं प्रकृतवाक्यघटकमेव घटपदम्। स्वपदस्य विशेष्ये एव विश्रामात्। तदुत्तर-सु-विभक्ति-निरूपितवृत्तित्वं सुत्वे एव न तु औत्वादौ। अतः तथाविध-वृत्तित्व-सम्बन्धावच्छिन्न-प्रतियोगिताक-घटपदाभाववान् विभक्तिविभाजको धर्मः औत्वादिः तदाश्रयाव्यवहितपूर्वत्वञ्च। न नीलपदे इत्यत उक्तसम्बन्धावच्छिन्न-प्रतियोगिताक-घटपदाभाववत्त्वं नीलपदे। 'नीलस्य घटः' इत्यादौ तु उक्तसम्बन्धेन घटपदवत्त्वं न नीलपदे। एतद्वाक्यघटक-घटपदोत्तर-सु-निरूपितवृत्तित्व-सम्बन्धावच्छिन्न-प्रतियोगिताक- घटपदाभाववत्त्वस्य ङस्त्वे सत्त्वात्। तथाविध-ङस्त्वधर्मवत्त्वस्यैव स्वाश्रयाव्यवहितपूर्वत्वसम्बन्धेन नीलपदे सत्त्वात्। तथा च नीलपदं घटपदवद् इत्याकारकं नीलपदधर्मिक-घटपदवत्त्वा-वगाह्य-आकाङ्क्षाज्ञानं 'नीलो घट' इति शाब्दबोधकारणमिति पर्यवसितम्। न चैवं विभक्तित्वादेः संसर्गकोटौ प्रविष्टतया संसर्गस्य तु अनुपस्थितस्यापि भानाद् **विभक्तित्वादिकम् अजानत** (VV-2.6.2) इत्युत्तरग्रन्थासङ्गतिः इति वाच्यम्। यत्र घटपदे एव अव्यवहितोत्तरत्व-सम्बन्धेन नीलादिपदवत्त्वग्रहः तत्रापि शाब्दबोधस्य आनुभविकतया तत्र नीलपदं घटपदवदिति-ज्ञानाभावात् अनुपपत्तौ तात्पर्यात्।

अत्र च विशेष्यवाचक-पदोत्तरावृत्ति-धर्मवद्-विभक्तिराहित्य-मात्रोक्तौ घटादिपदोत्तर-विभक्त्यवृत्तित्वस्य नीलादिपदोत्तर-स्वादिनिष्ठ-तत्तद्व्यक्तित्वादिधर्मे सत्त्वात् तद्धर्मवद्-विभक्तिमत्त्वस्यैव नीलादिपदे सत्त्वात् अनुपपत्तिः। अतो **विभक्ति-विभाजकधर्म** इत्युक्तम्। **विभक्तिराहित्ये**त्यत्र विभक्तिपदोपादान-प्रयोजनं न किमपि पश्यामः।

**VV-P 2.6.4:** **स्वोत्तरे**ति। इयञ्च 'नीलो घटः' इत्यादिस्थलीय-सु-विभक्त्यन्त-विशेष्य-विशेषणपदयोः 'नीलघट' इत्यादि-समासस्थलीय-विशेष्य-विशेषण-पदयोश्च आकाङ्क्षा। 'नीलौ घटौ' इत्यादौ च स्वोत्तर-औ-पदभिन्न-पदानुत्तरत्वविशिष्ट-स्वोत्तरत्व-सम्बन्धेन नीलपदवद्-औ-विभक्त्यन्त-घटपदवत्त्वम् आकाङ्क्षा। एवम् अन्यत्रापि ऊह्यम्। **सुपदे**ति। अत्र शक्तं पदं विवक्षितं न तु "सुप्तिङन्तं पदम्" (P.1.4.14) इति वैयाकरण-पारिभाषिकम्। **नीलादिपदवत्-स्वन्ते**ति। अत्र स्वन्तत्वानुक्तौ 'नीलो घटाः' इत्यादावाकाङ्क्षापत्ति-नीतः तदुपात्तम् इति।

**VV-P 2.6.5:** 'नीलघटरूपम्' इत्यत्र विशेष्यवाचक-घटपदस्य स्वाद्यन्तत्व-विरहादनुपपत्तिः इति आह **नीलघटरूपमित्यादी**ति। ननु स्वन्तत्वम् इह सुभिन्न-विभक्त्यव्यवहितपूर्वत्वाभावरूपमेव वाच्यम्। तावतैव 'नीलो घटौ' इत्यादौ वारणम्। तथा च 'नीलघटरूपम्' इत्यत्र न अनुपपत्तिः इति चेत्? न। 'नीलो घटरूपम्' इत्यादौ घटपदे सुभिन्न-विभक्त्यव्यवहितपूर्वत्व-अभाव-सत्त्वात् आकाङ्क्षापत्तेः इति। अथ 'नीलघटरूपम्' इत्यत्र 'नीलश्चासौ घटो नीलघटः, नीलघटस्य रूपं नीलघटरूपम्' इति विग्रहे निपातातिरिक्तनाम् अर्थयोः साक्षाद् भेदेन अन्वयस्य अव्युत्पन्नतया घटपदस्य घटीये लक्षणां विना घटपदार्थस्य रूपपदार्थेन सह अन्वयो न सम्भवति। अतो लक्षणाया आवश्यकतया घटीयमात्रे लक्षणायां नीलपदार्थस्य घटीयैकदेशे घटे अन्वयो वक्तव्य इति एकदेशान्वया-पत्तिः। तद्वारणाय घटपदस्य नीलघटीये एव लक्षणा युक्ता। नीलपदं तात्पर्य-ग्राहकम्। तथा च घटपदस्यैव विशेषणवाचकत्वात् घटपदोत्तर-सु-भिन्नपद-अनुत्तरत्व-विशिष्ट-घटपद-उत्तरत्वस्य स्वन्तत्वस्य च रूपपदे न सत्त्वात् अनुपपत्ति-प्रदर्शनम् अयुक्तम्। एवं 'घटस्य रूपं घटरूपम्' इति विग्रहनिष्पन्न-घटीय-रूपार्थक-घटरूपशब्देन सह नीलञ्च आदौ 'घटरूपम्' इति विग्रहे नीलपदार्थस्य अभेदेन घटीयरूपेण सह अन्वयात् 'नीलं घटीय-रूपम्' इति अन्वयबोधोदयात् घटरूप-पदस्यैव विशेष्यवाचकत्वात्। तत्र स्वन्तत्वस्य स्वोत्तर-सु-भिन्नपदानुत्तरत्वविशिष्ट स्वोत्तरत्वसम्बन्धेन नीलपदवत्त्वस्य च सत्त्वात् न अनुपपत्तिः इति चेत्? न। यत्र हि घटीय-लाक्षणिक-घटशब्देन सह नीलशब्दस्य

कर्मधारयः। ततो नीलघट-शब्दस्य रूपशब्देन सह कर्मधारयः। तथा च अभेदेन नीलविशिष्टं यद्घटीयम् अभेदेन तद्विशिष्टं रूपमिति वाक्यार्थः। तत्र नीलपदस्य विशेषणवाचकस्य स्वोत्तर-सु-भिन्नपदानुत्तरत्वविशिष्ट-स्वोत्तरत्वसम्बन्धेन घटपदे सत्त्वेऽपि घटपदस्य स्वन्तत्वविरहात् अनुपपत्तिः सङ्गच्छते इति बोध्यम्। ननु निरर्थक-प्रोयगस्य अन्याय्यतया अर्थान्तरबोधकानुशासनविरहेण च 'नीलं घटम् आनय' इत्यादौ विशेषणपदोत्तर-द्वितीयादेरपि कारकविभक्तित्वमेव युक्तम्। अतः कर्मत्वादिरेव तदर्थः। कर्मत्वादेः च क्रियासापेक्षतया नीलकर्मताकं घटकर्मताकञ्च आनयनम् इति प्राथमिको बोधः।

**VV-P 2.7.1:** पार्ष्टिकञ्च विशेष्य-विशेषणयोः अभेदभानम् इति मन्वानो मीमांसकः पृच्छति **अथेति**। पदसंस्कारकतया अपि विभक्तेः सार्थकत्वसम्भवे कर्मत्वादिपरत्वम् अयुक्तम्। 'स्रग्विणं कुण्डलिनं वासस्विनं चैत्रम् आनय' इत्यादौ प्रतिविशेषणं क्रियान्वयस्य सर्वानुभवविरुद्धत्वात् प्रत्यक्षानुशासनाभावेऽपि **क्रिया-विशेषणानां कर्मत्वमितिवत्** अनुशासनस्य कल्पनीयतया न कारकविभक्तित्वम् इति आशयेन उत्तरति **न कुत्रापीति**। तथा च यदि तत्र कर्मत्वाद्यर्थः प्रतीयेत स्यादपि कुत्रचिदन्वयो न तु एवमिति भावः।

**VV-P 3.1.1:** पदसाधुत्वार्थ प्रयुक्तोऽपि द्वितीयादिः अर्थानवभासकत्वात् निरर्थकप्राय एव इत्यतः समाधानान्तरम् आह **अभेद एव** वेति। तथा च तस्यापि पदोपस्थाप्यतया प्रकारविधयैव भानम्। एवमपि न कारकविभक्तित्वमिति हृदयम्। **लुप्तविभक्तीति**। पदजन्योपस्थिति-विषयात्मकस्य पदार्थस्यैव प्रकारविधया भानं समासस्थले च अभेदोपस्थापक-पदाभावात् न पदजन्योपस्थिति-विषयत्वम् अभेदस्य इति। अतो न तस्य प्रकारविधया भानं तत्र सम्भवति। संसर्गस्य अनुपस्थितस्यापि भानात् इति भावः।

**VV-P 3.1.2:** **एतन्मत** इति। विशेषणविभक्तेरभेदार्थकत्ववादिमते इत्यर्थः। अभेदस्य संसर्गतामतोपपत्तिः उपरिष्टाद् व्यक्तीभविष्यति। **भेदत्वावच्छिन्नेति**। भेदत्वेतर-धर्मानवच्छिन्न-प्रतियोगिताकाभाव इत्यर्थः। तेन भेदत्वावच्छिन्न-प्रतियोगिताकस्य भेदघटोभयाद्यभावस्य प्रसिद्धत्वेऽपि न क्षतिः **अप्रसिद्धिरिति**। सर्वत्र यत्किञ्चिद्भेदसत्त्वेन निरुक्तभेदत्वावच्छिन्न-प्रतियोगिताकाभावस्य हि न कुत्रापि सत्त्वमिति भावः। **प्रामाण्यापत्तिरिति**। प्रमाकरणत्वापत्तिरित्यर्थः। **द्वित्वादिनेत्यादि**। नीलभेद-घटोभयं नास्ति इत्यादि-प्रतीति-सिद्धस्य द्वित्वाद्य-वच्छिन्न-प्रतियोगिताकाभावस्य इत्यर्थः। **नीलभेदत्वावच्छिन्नाभावस्येति**। नीलभेद-त्वातिरिक्त-धर्मानवच्छिन्न-प्रतियोगिताकाभावस्य इत्यर्थः। तथा च नीलभेदत्वा-तिरिक्तो यो द्वित्वादिधर्मः तदनवच्छिन्न-प्रतियोगिताको न नीलभेद-घट-उभयाद्य-

भाव इति न दोषः। न च एवं 'पीतो घटः' इत्यत्र पीतभेदत्वावच्छिन्नाभावोऽपि विभक्त्यर्थावाच्यः। एवं क्रमेण विशेषणविभक्तिशक्तेः अननुगम-प्रसङ्ग इति वाच्यम्। यथा हि तदादिपदशक्यतावच्छेदकानां घटत्व-पटत्वादीनां बुद्धिविषयता-वच्छेदकत्वेन अनुगमात् बुद्धिविषयतावच्छेदकत्व-उपलक्षित-धर्मावच्छिन्ने अनुगत-शक्तिः उपपद्यते। तथा प्रकृतेऽपि नीलत्वादिधर्माणां प्रकृत्यर्थतावच्छेदकत्वेन अनुगमात् प्रकृत्यर्थतावच्छेदकत्व-उपलक्षित-धर्मावच्छिन्न-प्रतियोगिताक-अभावे अनुगता एव शक्तिः सम्भवतीति बोध्यम्। **नीलादिपदार्थानन्वयेति**। अत्र अनुगता एव शक्तिः सम्भवतीति बोध्यम्। नीलादिपदार्थस्य विभक्त्यर्थ-घटक-नीलत्वादौ आधेयतासम्बन्धेन अन्वये एकदेशा-नन्वय-नियमभङ्गो न अनन्वय-प्रयोजकः अभिमतः। तथा सति न च **भेदप्रति-योगिकाभाव एवेति** (VV-3.1.3) अनुपदाग्रिमग्रन्थस्य अनुत्थानापत्तेः। तत्रापि एकदेशानन्वय-नियमभङ्ग-प्रसङ्गदोषस्य सत्त्वात्। किन्तु नीलत्व-विशिष्टस्य नीलत्वे आधेयतया अन्वये आकाङ्क्षाविरहो वक्ष्यमाण एव अनन्वय-प्रयोजकः अभिमतः। अथवा प्रकृत्यर्थाभानेऽपि 'नीलत्वावच्छिन्न-प्रतियोगिताक-भेदाभाववान् घट' इति वाक्यार्थस्य पर्यवसानात् नीलत्वादौ आधेयतासम्बन्धेन प्रकृत्यर्थान्वयः अकिञ्चित्कर इत्यभिमतः।

**VV-P 3.1.3:** अथ भेदनिष्ठ-प्रतियोगिताकस्य तत्तदभेदाद्यभावस्य सर्वत्र प्रसिद्धस्य प्रतियोगिता-सम्बन्धेन भेदविशिष्टाभावत्वेन विभक्त्यर्थताम् आशङ्कते **न चेति**। ननु एवमपि नीलभेद-प्रतियोगिकस्य नीलभेद-घट-उभयाद्यभावस्य जलेऽपि सत्त्वात् 'नीलं जलम्' इति वाक्यस्य प्रामाण्यापत्तिः दुर्वारा इत्यत आह **नीलपद-समभिव्याहाराद्** इति। तथा च नीलपदार्थस्य भेदे नीलत्वावच्छिन्न-प्रतियोगिताकत्व-सम्बन्धेन अन्वयः। विशेषणविभक्त्या प्रतियोगिता-सम्बन्धमात्रेण भेदविशिष्टाभावोपस्थितावपि नीलपदसमभिव्याहारबलात् नीलभदेत्वावच्छिन्न-प्रतियोगिता-संसर्गेण एव अन्वयः। एवञ्च नीलत्वावच्छिन्न-प्रतियोगिताक-भेदत्वावच्छिन्न-प्रतियोगिताकाभावस्य 'नीलम्' इति विशेषणविभक्ति-पर्यन्तार्थस्य जले बाधितत्वात् न 'नीलं जलम्' इति वाक्यस्य प्रामाण्यापत्तिरिति भावः। **पदार्थद्वयसंसर्ग-भानस्यैवेति**। विभिन्नशक्त्युपस्थापित-अर्थद्वय-संसर्गभानस्य एव इत्यर्थः। तेन आख्यातार्थयोः काल-कृत्योः संसर्गस्य आकाङ्क्षाभास्यत्वेऽपि न क्षतिः। तत्र आख्यातस्य हि वर्तमानकालत्वादिना अवर्तमानकालादौ कृतित्वेन कृतौ च भिन्ना एव शक्तिः न तु एका। प्रकृते च भेदविशिष्टाभावे एकस्या एव शक्तेः स्वीकारे भेदाभावयोः विभिन्नशक्त्यनुपस्थापितत्वात् न तयोः आकाङ्क्षा-प्रयोज्यः संसर्गः सम्भवति इति भावः।

**VV-P 3.1.4:** **भेदोऽभावश्चेति**। तथा च उक्तार्थद्वये खण्डशः शक्त्युपगमे

विभिन्नशक्त्युपस्थापिते भेदे नीलपदार्थस्य नीलत्वावच्छिन्न-प्रतियोगिताकत्व-सम्बन्धः। भेदस्य च अभावे नीलपदसमभिव्याहारबलात् नीलप्रतियोगिताक-भेदत्वावच्छिन्न-प्रतियोगिताकत्व-रूपः संसर्गः सम्भवति इत्याह **विशिष्टलाभ** इति। तथा च 'नीलो घटः' इति वाक्यात् 'नीलभेदाभाववान् घटः' इत्यन्वयबोध उपपद्यते इति भावः। पूर्वोक्तदोषम् एतत्पक्षे निरस्यति **एतेनेति**। शक्तिद्वयाङ्गी-कारेण इत्यर्थः। **निरस्तमिति**। भेदस्य मुख्यार्थत्वात् तत्रान्वये एकदेशान्वयदोष-विरह इति भावः।

**VV-P 3.2.1:** **न च विशेषणविभक्तेः अभेदार्थकत्व** इति। संसर्गतावादिनां तु समानविभक्तिक-विशेष्यविशेषणवाचक-पदघटिताकाङ्क्षाज्ञानस्य हेतुत्वोपगमात् नानुपपत्तिः। न च समानविभक्तिक-पदघटित-आकाङ्क्षाज्ञानाभावेऽपि 'धान्येन धनवान्' इत्यादौ अभेदसंसर्गक-बोधस्य जायमानत्वात् संसर्गतापक्षेऽपि तथाविध-आकाङ्क्षाज्ञानत्वेन कारणत्वस्य निर्वक्तुम् अशक्यतया 'नीलं घटः' इत्यादौ आपत्तिः तुल्या एवेति वाच्यम्। "प्रकृत्यादिभ्य उपसङ्ख्यानम्" इति वार्तिकेन अभेदार्थे तृतीयाविधानात्। तदर्थोऽभेदो हि प्रकारविधयैव संसर्गतावादिमतेऽपि तत्र भासते। एवं प्रत्यक्षानुशासनविहित-द्वितीयाद्यर्थ-कर्मत्वादयोऽपि प्रकारविधयैव भासन्ते। विशेषणविभक्ति-स्थले तु अभेदबोधक-विभक्तिविधायक-प्रत्यक्षानुशासन-अभावात् न अभेदो विशेषणविभक्तेः अर्थः। अतः संसर्गविधया भानमिति संसर्गतावादिनाम् अभिप्रायः। इत्थञ्च संसर्गतामते अपि न 'धान्येन धनवान्' इत्यादौ अभेदसंसर्गकबोधः। येन संसर्गतावाद्यभिमत-कार्यकारणभावे व्यभिचारः स्यात् इति भावः। **द्वितीयादीति**। अथ अत्र आदिपदात् तृतीयायाः परिग्रहे 'धान्येन धनवान्' इत्यादौ अनुपपत्तिः। अपरिग्रहे च 'सुन्दरेण घटः' इत्यादि-प्रयोगापत्तिः नियामकाभावादिति चेत् ? न। "प्रकृत्यादिभ्य उपसंख्यानम्" इति वार्तिकविहित-तृतीयातिरिक्तविभक्तेः आदिपदग्राह्यत्वेन अनुपपत्तिविरहादिति।

**VV-P 3.3.1:** **भेदाप्रसिध्येति**। अत्र संयोगादिसम्बन्धावच्छिन्न-प्रमेयत्वावच्छिन्न-प्रतियोगितायाः संयोगेन 'प्रमेयो नास्ति' इत्यादिप्रतीतिसिद्धायाः सत्त्वाद्। भासमान-वैशिष्ट्यप्रतियोगित्वस्य प्रकारत्वपक्षे 'संयोगेन प्रमेयावगाहि प्रमेयवान्' इति प्रतीत्या संयोगप्रतियोगित्वरूप-प्रकारतायां प्रमेयत्वावच्छिन्नत्व-सत्त्वाद् वा न प्रमेयत्वावच्छिन्न-प्रतियोगित्वाप्रसिद्धिः। अतो भेदपर्यन्तानुधावनम्। संसर्गतामते यथा निर्वाहः तथानुपदमेव व्यक्तीभविष्यति। **अभावप्रतियोगितानवच्छेदकत्वेति**। गुरोरपि धर्मस्य विषयतावच्छेदकत्वम् आवश्यकम्। अन्यथा कम्बुग्रीवादिमत्त्वा-वच्छिन्न-प्रकारताशालिनी कम्बुग्रीवादिमद्वान्-इत्यादिप्रतीतिः एव न उपपद्येत। अत उक्तं **प्रतियोगितेति**। भासमानवैशिष्ट्यस्य प्रतियोगित्वानुयोगित्वे एव प्रकारत्व-

विशेष्यत्वे इति पक्षे गुरोरपि धर्मस्य उक्तप्रतियोगितावच्छेदकत्व-सत्त्वात् अभावेत्युक्तम् इति बोध्यम्।

**VV-P 3.3.2:** **नीलपटादिपरेति**। अयं भावः भेदोऽभावश्च इत्युक्तपक्षे नीलत्वावच्छिन्न-प्रतियोगिताकभेदाभावस्य 'नील' इत्यन्तार्थस्य अनुगततया सर्वेष्वेव नीलघटपटादिषु एकस्यैव तस्य सत्त्वात् नीलपटतात्पर्येण प्रयुक्त-नीलपदघटित-'नीलो घट' इति वाक्यस्य प्रामाण्यापत्तिरिति। **एतेनेति**। उक्तवाक्यस्य प्रामाण्य-प्रसङ्गेन इत्यर्थः। अथात्र विशेषणविभक्तेः नीलत्वाद्यर्थकत्वेऽपि उक्तप्रयोगस्य प्रामाण्यापत्तिः न सम्भवति। अत्रत्य-नीलपदस्य गुणिपरत्वेन नीलरूपात्मकमेव हि नीलत्वं विशेषणविभक्त्यर्थः स्यात्, न तु जातिरूपम्। प्रकृतिजन्यबोधे प्रकारी-भूतस्यैव भावप्रत्ययार्थतया नीलपदात्मक-प्रकृतिजन्य-नीलाश्रय-विषयकबोधे नीलरूपस्यैव प्रकारत्वात्। एवञ्च पटवृत्ति-नीलरूपव्यक्तेः घटे अभावादिति चेत्? न। विशेषणविभक्तेः नीलरूपे शक्त्युपगमे अनन्तेषु शक्तिकल्पनायां गौरवात्। यावत् नीलवृत्तिनीलत्वजातावेव तद्विभक्तेः शक्तिः, तस्याश्च जातेः स्वाश्रयाश्रयत्व-सम्बन्धेन विशेष्ये अन्वयः। प्रकृत्यर्थस्य च तत्र स्ववृत्ति-वृत्तित्व-सम्बन्धेन अन्वयः। एवञ्च प्रकृते नीलपटपरक-नीलपदघटित-'नीलो घटः'इति वाक्यस्थले नीलत्वस्य एतत्सम्बन्धेन पट इव घटेऽपि सत्त्वात् आपत्तिसम्भवात् इति। न च एवमपि पटवृत्ति-नीलत्वस्य विशेषणविभक्त्यन्तार्थस्य विशिष्टाधिकरणताया वैलक्षण्येन घटे विरहात् आपत्तिः असङ्गतेति वाच्यम्। विशिष्टवैशिष्ट्यावगाहिबुद्धौ प्रामाण्यापत्तेः असम्भवेऽपि विशेष्ये विशेषणं तत्रापि च विशेषणान्तरम् इति रीत्या जायमानायां घटे स्वाश्रयाश्रयत्वसम्बन्धेन नीलत्वं तत्र स्ववृत्ति-वृत्तित्व-सम्बन्धेन नीलाश्रयीभूत-पटवत्त्वम् अवगाहमानायाम् उपलक्षित-वैशिष्ट्यावगाहि-शाब्दबुद्धौ प्रामाण्यस्य आपतौ तात्पर्यादिति।

**VV-P 3.3.3:** **प्रवादोपपत्तिरिति**। न च 'प्रमेयो घटः' इत्यादौ प्रमेयत्वा-वच्छिन्न-प्रतियोगिताक-भेदाप्रसिद्ध्या प्रमेयत्वावच्छिन्न-भेदाभावरूप-अभेदात्मकत्वं प्रमेयत्वे असम्भव इति न तत्र उक्तप्रवादोपपत्तिः इति वाच्यम्। प्रमेयत्वावच्छिन्न-प्रतियोगिताक-भेदाभावरूपस्य मुख्याभेदपदार्थस्य तत्र बाधितत्वेऽपि गौणस्यैव कस्यचिद् भेदप्रतियोगितावच्छेदकत्व-अभावादिरूपस्य तत्र वाच्यत्वादिति। दूषणान्तरमपि आह **नीलत्वादावि**ति। **स्ववृत्तित्वसम्बन्धेने**ति। स्ववृत्ति-वृत्तित्व-सम्बन्धेन इत्यत्र तात्पर्यम्। अथवा स्ववृत्तित्वं स्वाश्रयाश्रयत्व-सम्बन्धावच्छिन्नं विवक्षितम्, न तु समवाय-सम्बन्धावच्छिन्नम्। एवमग्रेऽपि च बोध्यम्। **यथा ही**ति। हिर्हेतौ। **तद्विशिष्टेऽधिकरणे** इति। घटस्य घटाधिकरणम् इत्यादौ घटाधिकरणे घटस्य अधिकरणतया अन्वयः अनुभवविरुद्धः। 'घटस्य भूतलम्' इत्यादौ

अधिकरणतया अन्वयः तु आनुभविक इति भावः। 'कर्म गच्छति' इति। अत्र द्वितीयार्थकर्मत्वे प्रकृत्यर्थस्य· कर्मण आधेयतया अन्वयस्य अनुभवविरुद्धत्वात् निराकाङ्क्षता इत्यर्थः। ननु अभेदस्य संसर्गतोपगमेऽपि अभेदस्य भेदाभावरूपत्वे पूर्वोक्तो भेदत्वावच्छिन्न-प्रतियोगिताक-अभाव-अप्रसिद्ध्यादि-दोषः परिस्फुरति। तद्वारणाय विशेषणतावच्छेदकीभूत-नीलत्वादेरेव संसर्गता अभ्युपेया।

**VV-P 3.4.1-2:** तथा सति नीलपटादिपरक-नीलादिपदघटितस्य 'नीलो घटः' इति वाक्यस्य प्रामाण्यापत्तिः दुर्वारा इत्यभिप्रायवान् शङ्कते **न चैवमिति**। **स्ववृत्तिनीलत्वादेः स्वस्मिन्निति**। अत्र उभयत्र स्वपदेन एक एव नीलपटादिः ग्राह्यः। षष्ठ्यर्थो निष्ठत्वम्। सप्तम्यर्थोऽनुयोगित्वम्। तस्य निरूपितत्व-सम्बन्धेन संसर्गतायाम् अन्वयः। तथा च नीलपटादिनिष्ठ-अनुयोगिता-निरूपिता या स्ववृत्ति-नीलत्वादिनिष्ठा संसर्गता, तदङ्गीकारेण इत्यर्थः। तत्र च वृत्तित्वं विशेषणतया विवक्षितं न उपलक्षणतया। अतः स्ववृत्तित्वविशिष्ट-नीलत्वादिमत्त्व-रूप-सम्बन्धस्य स्वस्मिन् पटे एव सत्त्वं न तु घटे। प्रकारतापक्षे तु नीलत्वस्य न स्ववृत्तित्वं विशेषणम्। अस्य सम्बन्धविधया भासमानत्वात् प्रकारविधया-भासमान-संसर्गविधया-भासमानयोः विशेष्यविशेषणभाव-विरहात्। न च आधेयत्व-सम्बन्धेन नीलपटादिरेव नीलत्वविशेषणतया विवक्षणीयम्। अतो न तस्य घटादिवृत्तित्वं स्यात्। विशिष्टाधिकरणताया वैलक्षण्यादिति वाच्यम्। नीलपटो विशेषणमेव न उपलक्षणम् इत्यत्र नियामकाभावात्। संसर्गतायास्तु विशिष्टबुद्ध्यनुसारेण कल्पनात् स्ववृत्तित्व-नीलत्वत्व-उभय-धर्मावच्छिन्नायाः स्ववृत्ति-नीलत्वनिष्ठाया एव कल्पनीयतया स्ववृत्तित्वस्य उपलक्षणत्वे एतदुभयधर्मावच्छिन्नत्व-असम्भवात्। अतो न अस्य उपलक्षणत्वं सम्भवति इत्यतः प्रकारतापक्षे उक्तवाक्यस्य प्रामाण्यापत्तिः दुर्वारा इति भावः। विशेषणतावच्छेदकीभूत-नीलत्वादेः संसर्गत्वे अभेदपद-मुख्यार्थस्य भेदाभावस्य संसर्गत्वालाभात् अत्र अभेदपदस्य पारिभाषिकत्वापत्तिः।

**VV-P 3.5.1:** अत आह **वस्तुतस्त्विति**। **तत्तद्व्यक्तित्वावच्छिन्न-भेदाभाव एवेति**। अस्य सम्बन्धतया भासते इत्यनेन अन्वयः। **तत्तद्व्यक्तीनामिति**। अत्र षष्ठ्याः प्रतियोगित्वमर्थः। **स्वस्मिन्निति**। सप्तम्या अनुयोगित्वमर्थः। तस्य निरूपितत्व-सम्बन्धेन सम्बन्धतायाम् अन्वयः। **सम्बन्धतयेति**। तृतीयार्थो वैशिष्ट्यम्। तथा च तत्तद्व्यक्तिनिष्ठ-प्रतियोगिता-निरूपिता तत्तद्व्यक्तिनिष्ठा-नुयोगितानिरूपिता च या संसर्गता तद्विशिष्ट उक्तभेदाभाव एव भासते इत्यर्थः। **न काप्यनुपपत्तिरिति**। पटात्मकनीलपदार्थस्य तद्व्यक्तित्वावच्छिन्न-प्रतियोगिताक-भेद एव हि घटे न तु तदभाव इति भावः। **अन्यदेतदिति**। भेदप्रतियोगिताक-अभावत्वावच्छिन्ना तद्व्यक्तित्वावच्छिन्नप्रतियोगिताक-भेदत्वावच्छिन्न-प्रतियोगिताक-

भावत्वावच्छिन्ना वा संसर्गता इति अविचारणीयम्। पक्षद्वयेऽपि उक्तप्रामाण्यापत्ति-वारणसम्भवाद् इति भावः। ननु भेदप्रतियोगिताकाभावत्वं तद्व्यक्तिभेद-गगन-उभयाभावादिसाधारणम्। अतः तादृशाभावत्वेन रूपेण संसर्गत्वे उक्तोभयाभावोऽपि संसर्गतया परिगृह्येत। तस्य च जलादौ सत्वात्। 'नीलं जलम्' इत्यादिवाक्यस्य प्रामाण्यापत्तिः। भेदत्वावच्छिन्न-प्रतियोगिताकत्व-अभावत्वस्य अलीकतया नापि तेन रूपेण संसर्गत्वसम्भव इति चेत्? न। अतिप्रसक्तो हि धर्मः प्रतियोगिताद्य-नवच्छेदकोऽपि विषयतावच्छेदको भवत्येव। कथमन्यथा द्रव्यवत्कपालम् इत्यादि-ज्ञाने समवायसम्बन्धावच्छिन्न-द्रव्यत्वावच्छिन्नप्रकारताया घटमात्रनिष्ठया अतिप्रक्तम् अपि द्रव्यत्वं भवति अवच्छेदकं न तु अनतिप्रसक्तमपि घटत्वमिति तत्र घटत्वस्य अवच्छेदकत्वे 'द्रव्यवत्कपालम्', 'घटवत्कपालम्' इति प्रतीत्योः को भेदः स्यात्? "अर्थेनैव विशेषो हि निराकारतया धियाम्" इत्याचार्योक्तेः। विषयवैलक्षण्यं विना विषयिवैलक्षण्यासम्भवात्। इत्थञ्च अतिप्रसक्तेनापि भेदप्रतियोगिताक-अभावत्वेन अवच्छिद्यते प्रकृतसंसर्गता विषयतारूपत्वात्। सा चेयं तत्तद्व्यक्तित्वावच्छिन्न-प्रतियोगिताक-भेदत्वावच्छिन्न-प्रतियोगिताक-अभावनिष्ठैव कल्पनीया। न तु नीलभेद-गगन-उभयाभावनिष्ठा। 'नीलं जलम्' इति विशिष्टबुद्ध्यनुदयादिति। इदं तु बोध्यम् - 'घटत्वेन पटोऽस्ति', 'घटत्वेन पटो नास्ति' इति प्रयोगद्वयस्य अप्रामाणिकत्वमिव नीलपटपरक-नीलपदघटित- 'नीलो घटः' इति वाक्यस्य अप्रामाणिकत्वे तत्र नञ्घटितस्य 'नीलो न घट' इत्यस्यापि अप्रामाणिकत्वमेव युक्तम्। अत्र हि न अर्थभेदे नीलपदार्थस्य नीलत्वावच्छिन्न-प्रतियोगिताकत्व-सम्बन्धेनैव अन्वयो वाच्यः। तथा च नीलत्वावच्छिन्न-प्रतियोगिताक-भेदस्य घटे विरहात् प्रामाण्यासम्भवः। न चात्र नीलत्वेन पटभेद एव प्रतीयते इति वक्तुं युक्तम्। सामान्यरूपेण विशेषाभावानङ्गीकारात्। तदङ्गीकारपक्षेऽपि प्रतियोगि-विशेषवाचक-पदघटितस्यैव 'वह्नित्वेन महानसीयवह्निः नास्ति' इत्यादिवाक्यस्य तदभिलापकत्वात्। प्रतियोगिविशेष-वाचक-पद-अघटितस्यापि वाक्यस्य तदभिला-पकत्वे 'पर्वते वह्निः नास्ति' इत्यादिप्रयोगापत्तिः। न हि सामान्यरूपेण विशेषाभाववादिनामपि एतादृशः प्रयोगः अनुमत इति बोध्यम्।

**VV-P 3.5.2:** **तत्तद्व्यक्तित्वावच्छिन्नाभेद एवेति**। तत्तद्व्यक्तित्वावच्छिन्न-प्रतियोगिताक-भेदत्वावच्छिन्न-प्रतियोगिताक-अभाव एव इत्यर्थः। **विभक्त्यर्थो वक्तव्य** इति। नीलपटपरक-नीलपद-घटितस्य 'नीलो घटः' इति वाक्यस्य प्रामाण्यापत्तिवारणाय इति भावः। **अपूर्वव्यक्तीति**। या व्यक्तिः न केनचिदपि प्रमाणेन पूर्वं गृहीता सा पूर्वव्यक्तिः इति उच्यते। यथा 'अस्मद्गृहे घटोऽस्ति' इत्युक्ते तद्वाक्यश्रवणाद् पूर्वं श्रोतुः तद्गृहवृत्तिघटो न केनचिदपि प्रमाणेन गृहीतः।

अतः सः अपूर्वोऽपि शाब्दबोधे भासते एव इति बोध्यम्। **बोधानुपपत्तेरिति**। यद्यप्यत्र तत्तद्व्यक्तित्वावच्छिन्नाभेदरूप-विभक्त्यर्थघटक-तत्तद्व्यक्तित्वे नीलादि-पदार्थस्य आधेयतासम्बन्धेन अन्वये एकदेशान्वयापत्तिरपि दोषः। तथापि महाकविः इत्यादौ महत्पदार्थस्य कवित्वादिरूपैकदेशे अन्वयस्य, एवं 'जात्या ब्राह्मणः' इत्यादौ जात्यभिन्न-ब्राह्मणत्ववान् इति अन्वयस्य आनुभविकत्वात् स दोषो न गरीयान्। अतो न उद्भावितः। **संसर्गतामते अनुपपत्त्यभावादिति**। न च 'नीलो घटः - इदं वाक्यम्' अभेदसम्बन्धावच्छिन्न-नीलत्वावच्छिन्न-प्रकारताक-घटत्वावच्छिन्न-विशेष्यताक-बोधपरम्' इति तात्पर्यज्ञानम् अवश्यम् अपेक्षणीयम्। तथा च विशिष्टबुद्धौ विशेषणज्ञानस्य कारणतया नीलत्वावच्छिन्न-प्रकारतायां विशेषणीभूत-अभेदसम्बन्धावच्छिन्नत्व-घटकस्य अभेदस्य ग्रह आवश्यक एव इति वाच्यम्। 'नीलो घटः - इदं वाक्यम्' नीलविषयता-विशिष्ट-बोधपरम् इत्याकारकमेव हि तात्पर्यज्ञानं शाब्दबोधोपयोगि। वैशिष्ट्यञ्च स्वनिरूपित-संसर्गतानिरूपित-घटादि-विषयताकत्व-सम्बन्धेन। तथा च अनुपस्थितस्यापि संसर्गस्य भानात् न अभेद-उपस्थितेः अपेक्षा इति बोध्यम्।

**VV-P 3.5.3:** "भेदोऽभावश्च विशेषणविभक्तेः अर्थ" (VV-3.1.4) इत्यभि-प्रायवान् शङ्कते **न चेति**। **नीलत्वादिनेति**। वैशिष्ट्यं तृतीयार्थः। तथा च नीलत्वादिविशिष्ट-तत्तद्व्यक्तीनाम् इत्यर्थः। इत्थमेव 'कम्बुग्रीवादिमान् घटः' इत्यत्र कम्बुग्रीवादिमत्वेन रूपेण भासमान-कम्बुग्रीवादिमद्-व्यक्तीनां तत्तद्व्यक्ति-त्वावच्छिन्न-प्रतियोगिताकत्व-सम्बन्धेन भेदे अन्वयात् न गुरुधर्मावच्छिन्न-प्रतियोगि-त्वाप्रसिद्धि-निबन्धनो दोषः। एवं 'प्रमेयो घटः' इत्यादौ प्रमेयत्वावच्छिन्न-प्रतियोगिताकत्वस्य भेदे अप्रसिद्धावपि तत्तद्व्यक्तित्वावच्छिन्न-प्रतियोगिताकत्वस्य प्रसिद्धत्वात् न दोष इति बोध्यम्।

**VV-P 3.5.4:** **विशेषणतावच्छेदकावच्छिन्नेति**। तथा च 'नीलो घटः' इत्यादौ नीलत्वेन रूपेण नीलस्य भानात् नीलत्वमेव विशेषणतावच्छेदकं न तु तत्तद्व्यक्तित्वम्। अतो न तत्तद्व्यक्तित्वावच्छिन्न-प्रतियोगिताया भानसम्भव इति भावः। अथ यद्यपि "विशेष्ये विशेषणं तत्रापि च विशेषणान्तरम्" इति रीत्या शाब्दबोध औत्सर्गिकः, यतो विशिष्टवैशिष्ट्यावगाहि-बोधे विशेषणतावच्छेदक-प्रकारकज्ञानस्य अधिकस्य कारणत्वं "विशेष्ये विशेषणम्" इति रीत्या जायमाने उपलक्षित-वैशिष्ट्यावगाहि-बोधे तु "विशिष्टबुद्धिसामान्यं प्रति विशेषणज्ञानस्य कारणत्वम्" इति रीत्या विशेषणज्ञानस्य एव कारणत्वं न तु विशेषणतावच्छेदक-प्रकारकज्ञानस्यापि इति कारणलाघवम्। तथापि यत्र विशेषणतावच्छेदक-प्रकारक-ज्ञानरूप-कारणसम्पत्तिः तत्र विशिष्टवैशिष्ट्यावगाहि-बोधोऽपि भवत्येव।

अभावविषयकस्तु विशिष्टवैशिष्ट्यावगाह्येव बोधः प्रायशो भवति। यत्रापि क्वचिदभाव-प्रतियोगि-प्रकारस्य उपलक्षणत्वं तत्रापि न विशिष्टवैशिष्ट्य-बोध-मर्यादाभङ्ग इति आशयवान् आह **अन्यथा विशिष्टवैशिष्ट्येति**। यज्ज्ञानीय-विशेषणान्वयिनि विशेषणांशे प्रकारीभूतोऽपि धर्मो भासते तज्ज्ञानं विशिष्ट-वैशिष्ट्यावगाहि इति उच्यते। यच्च ज्ञानं न एवं, किन्तु "विशेष्ये विशेषणं तत्रापि च विशेषणान्तरम्" इति रीत्या जायते तदुपलक्षित-वैशिष्ट्यावगाहि इत्युच्यते तत्र 'गुणकर्मान्यत्वविशिष्ट-सत्तावान् गुणः' इति विशिष्टवैष्ट्यावगाहि-ज्ञानं न प्रमा। यतोऽत्र गुणे भासमानायाः सत्ताया यद्विशेषणं गुणकर्मान्यत्वं तदपि गुणे भासते। तच्च न गुणवृत्ति इति, अपि तु द्रव्यधर्मिकमेव। एतादृशं ज्ञानं प्रमा इति। उपलक्षित-वैशिष्ट्यावगाहि तु 'गुणकर्मान्यत्व-विशिष्टसत्तावान् गुणः' इति ज्ञानं प्रमा एव। यतोऽत्र गुणे सत्ता, तस्यां गुणकर्मान्यत्वं भासते। न तु गुणे गुणकर्मान्यत्वम् अपि इति। 'घटो नास्ति' इत्यादौ अभावप्रत्ययस्थले तु अभावांशे प्रतियोगितासम्बन्धेन प्रतियोगि भासते। प्रतियोगिनि भासमानं घटत्वादिकमपि स्वावच्छिन्न-प्रतियोगिताकत्व-सम्बन्धेन अभावांशे भासते। अतोऽस्य प्रत्ययस्य विशिष्टवैशिष्ट्यावगाहित्वं भवति। घटत्वस्य अभावांशे भानाङ्गीकारे स्वसमानाधिकरण-प्रतियोगितादि-सम्बन्धेन भानाङ्गीकारे या घटवत्यपि 'घटो नास्ति' इति प्रत्ययस्य प्रामाण्यापत्तिः। द्वित्वाद्यवच्छिन्न-प्रतियोगिताकत्व-सम्बन्धेन घटविशिष्टस्य अभावस्य तत्र सत्त्वात्। स्वसमानाधिकरणप्रतियोगित्वादिसम्बन्धेन घटत्व-विशिष्टस्य अभावस्य च तत्र सत्त्वात्। घटत्वस्य स्वावच्छिन्न-प्रतियोगिताकत्वसम्बन्धेन भानाङ्गीकारे तु तादृशसम्बन्धेन घटत्वविशिष्टाभावस्य घटवति असत्त्वात्। तत्र 'घटो नास्ति' इति प्रत्ययस्य न प्रमात्वसम्भवः। इत्थञ्च 'घटो नास्ति' इत्यादिप्रतीतिः घटादेः प्रतियोगितासम्बन्धमात्रम् अभावांशे अवगाहते। न तु द्वित्वाद्यवच्छिन्न-प्रतियोगिताकत्वम्। एकस्मिन् अभावे द्वित्वाद्यवच्छिन्नप्रतियोगिताकत्व-घटत्वमात्रावच्छिन्नप्रतियोगिताकत्वयोः विरोधात्। प्रकृते च नीलः प्रतियोगितासम्बन्धेन विभक्त्यर्थे भेदे यदि भासते तदा तत्र नीलत्वम् अपि स्वावच्छिन्न-प्रतियोगिताकत्व-सम्बन्धेन एव भासेत। न तु तत्तद्व्यक्तित्वावच्छिन्न-प्रतियोगिताकत्व-सम्बन्धेनेति बोध्यम्। **केवलं विशेष्ये विशेषणमिति**। विशेषणे प्रकारीभूतो यो धर्मः तस्य विशेष्यासम्बद्धत्वम् इह कैवल्यं विवक्षित्। तत्र अभावप्रत्यये अस्तीति भावः। एतच्च इदानीमेव विशदीकृत्य प्रदर्शितम्। केवलपदोपादानात् प्रतियोगिप्रकारस्य उपलक्षणत्वमपि क्वचिद्भवतीति सूचितम्। तेन 'गन्धप्रागभाववान् नास्ति' इत्यादौ 'रक्तो दण्डो नास्ति' इत्यादौ च प्रतियोगिप्रकारस्य गन्धप्रागभाव-रक्तत्वादेः उपलक्षणत्वोक्तिः न

विरुध्यते। ननु एवं पूर्वोक्तयुक्त्या प्रतियोगिप्रकारीभूतस्य उपलक्षणत्वासम्भवः। **"विशिष्टवैशिष्ट्यावगाहि-बोधमर्यादां नातिशेते"** इत्युक्तनियम-विरोधश्च इति चेत्? न। पूर्वोक्तयुक्त्या अभावप्रत्यये प्रतियोग्यंशे प्रकारीभूतस्य हि स्वावच्छिन्न-प्रतियोगिताकत्व-सम्बन्धेन प्रतियोग्यंशे भानम् आयातम्। न तु विशेषणत्वम् एव इति। उपलक्षणम् अपि रजतत्वादिकं स्वावच्छिन्न-प्रतियोगिताकत्व-सम्बन्धेन अभावे अन्वेति इति अनुपपत्तिविरहः। न च तथा सति उपलक्षणत्वम् एव व्याहतम् इति वाच्यम्। यतः प्रतियोग्यंशे प्रकारीभूतस्य प्रतीतिकाले प्रतियोगिनि विद्यमानत्वे तस्य विशेषणत्वम्। तादृशस्थलीयाभाव-प्रत्ययस्य च विशिष्ट-वैशिष्ट्यावगाहित्वं प्रतीतिकाले तस्य प्रतियोगिनि अविद्यमानत्वे तु उपलक्षणत्वं तत्स्थलीयाभाव-प्रत्ययस्य च उपलक्षित-वैशिष्ट्यावगाहित्वम् इति। अत एव भावप्रत्ययो विशिष्ट-वैशिष्ट्यावगाह्येव भवति इति अनभिधाय मर्यादां नातिशेते इत्युक्तिः सङ्गच्छते। मर्यादा तु अत्र रीतिः। तथा च विशिष्टवैशिष्ट्यावगाहिनो रीतिं विशेषण-विशेषणांशे प्रकारीभूतधर्म-उभयसम्बन्धावगाहित्व-रूपाम् अभाव-प्रत्ययो न व्यभिचरति इति आशयः। इदं तु बोध्यम्। प्रतियोग्यंशे प्रकारीभूतस्य एव स्वावच्छिन्नत्व-सम्बन्धेन अभावे भाननियमो न तु प्रतियोगितावच्छेदकांशे प्रकारीभूतस्यापि। अतो घटत्वादि-समानाधिकरण-उभयावृत्तित्वेन उपलक्षणीभूत-धर्मेण तत्तद्व्यक्तित्वान्यानुगमय्य यत्र उक्तोभयावृत्ति-धर्मावच्छिन्न-प्रतियोगिताकाः तत्तद्घटादि-व्यक्त्यभावा विवक्ष्यन्ते न तत्र उक्त-उभयावृत्तित्वं स्वावच्छिन्न-प्रतियोगिताकत्व-सम्बन्धेन अभावे सम्बध्नाति। तस्य प्रतियोग्यंशे अप्रकारत्वात्। किन्तु प्रतियोगितावच्छेदकीभूत-तत्तद्व्यक्तित्वांशे एव प्रकारत्वादिति।

**VV-P 3.6.1:** **स्वसामानाधिकरण्येत्यादि**। अत्र यत्किञ्चिदेकव्यक्तिभेदम् उपादाय सङ्गमनीयम्। घटत्वादिकन्तु यत्किञ्चित्-तद्व्यक्तिभेदस्य अनुयोगिनि अपरघटे प्रतियोगिनि तद्घटे च वर्तमानम्। अतो न उभयावृतीति। न च तद्व्यक्तित्वस्यापि कालिक-सम्बन्धेन तद्व्यक्तिभेदाधिकरणवृत्तित्वं तद्व्यक्तिभेद-प्रतियोगिवृत्तित्वञ्च अस्तीति वाच्यम्। उभयत्र वृत्तित्वस्य स्वरूप-सम्बन्धेन विवक्षितत्वात्। ननु एवं घटादौ अतिप्रसङ्गः। घटत्वे स्वरूप-सम्बन्धेन वृत्तित्व-विरहेण उक्तोभय-सम्बन्धेन भेदविशिष्टत्व-विरहादिति चेत्? न। स्वरूप-सम्बन्धावच्छिन्न-वृत्तित्वघटित-उक्तोभयसम्बन्धेन भेदविशिष्टान्यत्वे सति स्वरूपेण वृत्तिमत्त्वस्य विवक्षितत्वात् घटत्वादौ तद्विरहात् न दोष इति बोध्यम्। **स्ववृत्त्य-साधारणधर्म** इत्यत्र स्ववृत्तित्वान्तर्भावेण विभक्त्यर्थतागौरवात्। अतः तस्य संसर्गमर्यादया एव भानम् इति आह **वृत्तिश्च तत्रे**ति। ननु एवम् अपूर्वव्यक्तेः शाब्दबोधस्थले तद्व्यक्तित्वे शक्तिग्रहाभावात् तदनुपस्थित्या न तस्य प्रकारत्व-

सम्भव इति आशङ्कायाम् आह **अपूर्वव्यक्तीति**। तथा च यत्किञ्चिद् घटादि-निष्ठ-तद्व्यक्तित्वे एकव्यक्तिमात्रवृत्तित्वग्रह-अननुगतेन तेन रूपेण निखिलैक-व्यक्तिमात्रवृत्तिधर्माः सामान्यलक्षणा-प्रत्यासत्त्या सुग्रहा इत्यतो न अनुपपत्तिः इति भावः।

**VV-P 3.7.1-2:** **एतादृशानुगतेति**। एकव्यक्तिमात्रवृत्ति-धर्मत्वेन अनुगत-तत्तद्-व्यक्तित्वादिरूप-अभेदस्यैव इत्यर्थः। **अभावकूटस्येति**। अत्र कूटपदं न कूटत्वेन संसर्गत्वाभिप्रायकं, किन्तु 'नीलो घटः' इत्यादौ नीलव्यक्तीनां घटव्यक्तीनां च बहुत्वात् बहवः तत्तद्व्यक्तिभेदाभावाः बाधन्ते इति बोधनार्थम्। यत्र तु तन्नीलव्यक्तेः तद्घटव्यक्तेरेव अन्वयबोधः स इत्यादिवाक्यात् जायते तत्र तु एक एव तद्व्यक्तिभेदाभावो भासते इति बोध्यम्। **विशिष्य तथात्वेति**। तत्तद्व्यक्तित्वावच्छिन्न-प्रतियोगिताकभेदाभावत्वेन रूपेण भेदाभावस्य संसर्गत्वे इत्यर्थः। **तुल्ययोगक्षेमाविति**। योगः प्राप्तिः। लब्धपरिरक्षणं क्षेमः। तुल्यौ योगक्षेमौ यस्येति बहुव्रीहिः। तथा च यद्धर्मावच्छिन्ने येन सम्बन्धेन यद्धर्मावच्छिन्नस्य अन्वयो नञ्समभिव्याहार-विरहस्थले प्रतीयते नञ्समभिव्याहारस्थले तद्धर्मावच्छिन्ने तत्सम्बन्धावच्छिन्न-तद्धर्मावच्छिन्न-प्रतियोगिताकाभावः प्रतीयते इति तात्पर्यार्थः। **तादृशाननुगतेत्यादि**। अयं भावः - 'नीलो घटः' इति शाब्दबुद्धौ तद्व्यक्तित्वा-वच्छिन्न-प्रतियोगिताक-भेदत्वावच्छिन्न-अभावत्वेन रूपेण एका संसर्गता, एवमपरेण तद्व्यक्तित्वावच्छिन्न-प्रतियोगिताक-अभावत्वेन अपरा। एवं क्रमेण अनन्ताः संसर्गता अनन्ताश्च तदवच्छेदकताः कल्पनीयाः, न तु एका इति। यावन्तः तत्तद्व्यक्तिभेदाभावा भासेरन् तावताम् एकरूपेण संसर्गत्वासम्भवः। तत्तद्व्यक्ति-भेदाभावकूटत्वेन अनुगतरूपेण संसर्गता तु न सम्भवति। तत्तद्व्यक्तित्वाच्छिन्न-प्रतियोगिताक-भेदाभावानां स्व-स्व-प्रतियोगिभेद-प्रतियोगितावच्छेदकीभूत-तत्तद्-व्यक्तित्वाश्रयेषु एव सत्त्वात् तादृशाभाव-कूटाधिकरणस्य अप्रसिद्धेः। इत्थञ्च अननुगतेन एव तत्तद्व्यक्तिभेदाभाव-संसर्गेण नीलादिपदार्थानां घटादि-पदार्थेषु अन्वयो वक्तव्यः। तथा सति नीलघटादावपि **'न नील'** इति वाक्यस्य प्रामाण्या-पत्तिः। तथा हि उक्त-तुल्ययोगक्षेम-न्यायात् हि नञ्समभिव्याहार-स्थले तत्तद्व्यक्ति-भेदाभाव-सम्बन्धावच्छिन्न-नीलत्वावच्छिन्न-प्रतियोगिताक-अभावा एव प्रत्येतव्याः। प्रतियोगितावच्छेदक-धर्मस्य अनुगतत्वेऽपि संसर्गतावच्छेदक-धर्मस्य अनुगमाभावात् उक्त-सम्बन्धावच्छिन्न-नीलत्वावच्छिन्न-प्रतियोगिताक-अभावानां नानात्वस्यैव वाच्यत्वात्। तेषां च अभावानां पीतघटादौ इव तन्नीलघटादि-व्यक्ति-भिन्नायाम् अपरनीलघटादि-व्यक्तौ। एवं क्रमेण सर्वत्रैव नीलघटादौ चालनीन्यायेन परस्पराभावसत्त्वात्। अतो न तत्तद्व्यक्तित्वावच्छिन्न-प्रतियोगिताक-अभावत्वेन

संसर्गता अपि तु एकमात्रवृत्ति-धर्मत्वेन अनुगता तत्तद्व्यक्तित्वनिष्ठा एव संसर्गता वाच्या। तथा च अनुगत-तत्सम्बन्धावच्छिन्न-नीलत्वावच्छिन्न-प्रतियोगिताकाभावस्य एकतया न तस्य नीलघटादौ सत्त्वम्। अतो न अनुपपत्तिः इति। **नीलवृत्तिरिति**। नीलात्मक-घटादिवृत्तिः नीलप्रतियोगिकः अनुगतैकोऽभाव इत्यर्थः।

**VV-P 3.7.3:** एवञ्चेति। भेदाभावस्य नञर्थत्वे च इत्यर्थः।

**VV-P 3.7.5:** अभेदस्य संसर्गतया भानम् उपपादयति **इदन्तु तत्त्वमिति**। **असमस्तेति**। अथात्र 'नीलो घटः' इत्यादिस्थले इत्युक्त्या एव सामञ्जस्ये असमस्तेत्युक्तिः निरर्थिका इति चेत्? न। 'नीलः पटः' इत्यादिसङ्ग्रहाय 'नीलो घटः' इत्यादिस्थले इत्यत्र आदिपदोपादानस्य आवश्यकतया आदिपदेन समासस्य अपि बोधो मा भवतु। एतदर्थं हि तदुपादानम्। "अभेदस्य संसर्गतया भानं तु समासस्थले एव" (VV-3.1.1.1) इति पूर्वम् उक्तत्वात् समासस्य आदिपदग्राह्यत्वे सन्दर्भविरोधः स्यादिति बोध्यम्। **वृत्तिकल्पनमिति**। वृत्तिर्नाम शाब्दबोधौपयिकः पद-पदार्थ-सम्बन्धः। स च सङ्केतो लक्षणा च। तत्र "अस्मात् शब्दात् अयमर्थो बोद्धव्यः", "इदं पदं अमुमर्थं बोधयतु" इति ईश्वरेच्छा तदीयविषयता वा सङ्केतः शक्तिः इति व्यपदिश्यते। एतादृशी च आधुनिकेच्छा परिभाषा। शक्यसम्बन्धश्च लक्षणा इति बोध्यम्। **अनुचितमिति**। तथा च विकरणादेरिव विशेषणविभक्तेरपि पदसंस्कारकत्वमेव। 'विवादाध्यासिता विशेषणविभक्तिः अर्थवती, विभक्तित्वात्, इतरविभक्तिवत्' इति अनुमानं तु वृत्तिकल्पनागौरव-प्रतिकूल-तर्कपराहतमिति भावः।

**VV-P 3.7.6:** **स्वारसिकलक्षणाग्रहो वेति**। विवक्षितार्थ-तात्पर्यानुपपत्ति-प्रतिसन्धानमूला लक्षणा स्वारसिकलक्षणेत्युच्यते। या तु अनादितात्पर्यवती सा निरूढलक्षणा इत्युच्यते। **तादृशसमभिव्याहारेति**। 'नीलघट' इति समभिव्याहार-इत्यर्थः। **द्विविधबोधेति**। अभेदप्रकारके भेदसंसर्गके च बोधे इत्यर्थः। **हेतुताद्वयं कल्पनीयमिति**। न भेद-सम्बन्धावच्छिन्न-नीलत्वावच्छिन्न-प्रतियोगिता-निरूपित-घटत्वावच्छिन्न-विशेष्यताक-शाब्दबोधं प्रति 'नीलो घटः' इत्याकाङ्क्षाज्ञानस्य कारणत्वं न सम्भवति। विनापि उक्ताकाङ्क्षाज्ञानं 'श्यामः कुम्भः' इत्याद्याकाङ्क्षा-ज्ञानात् तथाविध-शाब्दबोधस्य जायमानत्वेन व्यतिरेक-व्यभिचारात्। अतः कार्यता-वच्छेदककोटौ अव्यवहितोत्तरत्वनिवेश आवश्यकः। तथा च तन्मात्रस्य एव कार्यतावच्छेदकत्वं वाच्यम्। न तु अभेदसम्बन्धावच्छिन्न-नीलत्वावच्छिन्न-प्रकारत्वादेः, प्रयोजनविरहात्। एवञ्च प्रकृते सु-पदस्य अभेदे शक्तिग्रहो लक्षणाग्रहो वा अस्तु, किं तेन ? न हि ततः कार्यकारणभाव-भेद इति "हेतुताद्वयं कल्पनीयम्" इत्युक्तिः अयुक्ता इति चेत्? नैवम्। कारणाव्यवहितोत्तरत्व-मात्रस्य

हि कार्यतावच्छेदकत्वे प्रवृत्त्याद्यनुपपत्तिरिति प्रागेव अभिहितम्। अथवा उक्तप्रकारेण कारणता-द्वैविध्यासम्भवम् अवधार्य दूषणान्तरम् आह **एवमिति**। अयं भावः - अस्तु आकाङ्क्षाज्ञानानां अव्यवहितोत्तरत्वघटितः कार्यकारणभावः। तथापि एकत्र अभेदप्रकारकः अपरत्र अभेदसंसर्गकः शाब्दबोधः इति फलयोः वैलक्षण्यम् अवश्यम् अभ्युपेयम्। तच्च कारणभेदं विना न सम्भवति। अतः एकत्र प्रकारक-योग्यताज्ञान-सु-पदशक्तिभ्रमादिभिः घटिता सामग्री, परत्र तु तद्-रहिता एव सामग्री वाच्या। तथा च विभिन्नविषयक-प्रत्यक्षादिकं प्रति द्वयोरपि शाब्दसामग्र्योः प्रतिबन्धकत्वं वाच्यम्। इत्थञ्च संसर्गतामते न उक्तप्रतिबन्धकत्व-द्वय-तदवच्छेदकत्वादिकल्पनागौरवम्। प्रकारतामते तु अभेदसंसर्गकशाब्दसामग्र्या एव अभावात् न तदंशे प्रतिबन्धकत्वादिकल्पनमिति लाघवम् इति भावः। **उक्तस्थलेऽपि** इति। यत्तु सु-पदे शक्तिभ्रमो लक्षणाग्रहो वा तत्स्थलेऽपि इत्यर्थः। **तत्संसर्गकबोधस्य एवोपगमादिति**। तथा च संसर्गतावादिना अभेदप्रकारक-शाब्दसामग्री एव न क्लृप्ता। अतो न एतन्मते अभेदप्रकारक-शाब्दसामग्र्यादेः प्रतिबन्धकत्वादि-कल्पनम् इति भावः। सिद्धान्तोऽपि अभेदस्य संसर्गतापक्ष एव। सत्त्वादेः संसर्गपूर्वपक्षे 'नीलो घटः' इत्यादौ "विशेषणवाचकपद-समभिव्याहृत-विभक्तेः इव सर्वविभक्तीनां साधुत्वमात्रार्थकत्वस्य एव उचितत्वाद्" इति वक्ष्यति उभयवादि-सम्प्रतिपन्नस्य एव दृष्टान्तत्वादिति बोध्यम्।

**VV-P 4.1.1:** **कर्मत्वमिति**। नपुंसकत्वम् इत्यपि द्रष्टव्यम्। तत्र नपुंसकत्वं च अनियतलिङ्गकस्थले एव। यच्च प्रातिपदिकम् अनपुंसकमेव नियतं तत्र न अनेन नपुंसकत्वम्। अत एव "जगाद मधुरां वाचं विशदाक्षरशालिनीम्" इत्यादौ वाचः क्रियाविशेषणत्वेऽपि न नपुंसकत्वम्। स्पष्टं च एतत् **पदवाक्यरत्नाकरे** तृतीयाविवरणेऽन्यत्र चेति। **कर्मत्वातिदेशादि**ति। मुख्यकर्मत्वं धात्वर्थतावच्छेदक-फलशालित्वरूपं स्तोकादौ नास्ति। अत उक्तम् अतिदेशादिति। वस्तुतः

"उभसर्वतसोः कार्या धिगुपर्यादिषु त्रिषु।
द्वितीयाम्रेडितान्तेषु ततोऽन्यत्रापि दृश्यते।।"

इति वार्तिकघटकस्य "ततोऽन्यत्रापि दृश्यते" इत्यस्य, अन्यत्र = क्रियाविशेषण-स्थले द्वितीया दृश्यते इत्यभिप्रायकस्य अनुवादकमेव। 'क्रियाविशेषणानां कर्मत्वम्' इति। तथा च नातिदैशिकम् अपि कर्मत्वं किन्तु द्वितीयामात्रम् इत्यत्र तात्पर्यं बोध्यम्। अतएव **पदवाक्यरत्नाकरे** उक्तवार्तिक-घटकस्य "ततोऽन्यत्रापि दृश्यते" इत्यस्य विवरणे "अन्यत्र 'स्तोकं पचति' इत्यादि-क्रियाविशेषणस्थले" इत्युक्तम्। **भाट्टरहस्ये**ऽपि "कथं तर्हि तत्र द्वितीयानियमः" इति आशङ्कायाम् "ततोऽन्यत्रापि दृश्यते" इति अनेनैव क्रियाविशेषणवाचकपदात् द्वितीया समर्थिता

इति बोध्यम्। यत्तु धात्वर्थतावच्छेदक-फलशालित्वरूपं मुख्यमेव कर्मत्वं स्तोकादेरपि वाच्यम्। उक्तफलशालित्वञ्च तादात्म्यं फलतावच्छेदकान्यतर-सम्बन्धेन तत्र पाकात्मक-फलस्य तादात्म्येन स्तोकार्थे सत्त्वात् धातुमात्रस्य फलव्यापारवाचकत्वेन अकर्मकधातुस्थलेऽपि फलस्य धात्वर्थतावच्छेदकत्वात् न 'स्तोकं तिष्ठति' इत्यादेरपि अनुपपत्तिः। न च सर्वत्र धातोः व्यपारवाचकत्वे सकर्मकत्व-अकर्मकत्व-व्यवस्था न उपपद्यते इति वाच्यम्। व्यापारस्य फलव्यधिकरणत्वे सकर्मकत्वं फलसमानाधिकरणत्वे च अकर्मकत्वम् इति उपगमात्। तथा च "कर्त्तुरीप्सिततमं कर्म" (P.1.4.49) इति कर्मसंज्ञया "कर्मणि द्वितीया" (P.2.3.2) इति द्वितीया इत्याहुः प्राञ्च वैयाकरणाः। तन्न। मुख्य-कर्मत्वस्य हि विभक्त्यर्थत्व-स्वीकारे कर्मणि लकारापत्त्या 'स्तोकः पच्यते' इत्यादयः प्रयोगा अपि उपपद्येत। न च फलतावच्छेदक-सम्बन्धमात्रेण धात्वर्थतावच्छेदक-फलाश्रये कर्मणि लकारः स्वीक्रियते इति वाच्यम्। 'मन्दं गच्छति', 'द्रुतं गच्छति' इत्यादिप्रयोगानुपपत्तेः। तत्र संयोगात्मकं फलं न मन्दाद्यात्मकम्। अतः अत्रोक्त-संयोगानुकूल-व्यापार एव मन्दः तादात्म्येन अन्वयो भवति। तथा च मन्दादौ तादात्म्येन धात्वर्थतावच्छेदक-फलस्य अभावात् मन्दादिवाचकपदाद् द्वितीया न स्यात्। न च क्रियाविशेषण-द्वितीयाया अकारक-विभक्तित्वे 'स्तोकपक्ता' इत्यादौ समासानुपपत्तिः। असति विशेषानुशासने कारकविभक्ति-भिन्न-विभक्त्यन्तेन समासस्य असाधुत्वात्। कारकविभक्तित्वोपगमे च न तदनुपपत्तिः इति चेत्? अत्र आहुः - 'स्तोकं पक्ता' इति विग्रहे कर्मधारय एव समासः। न च पदद्वयार्थयोः यत्र अभेदो यत्र च पदद्वयस्य समान-विभक्तिकत्वं तत्रैव कर्मधारयो, नास्ति च एतत्प्रकृत इति वाच्यम्। यतो 'महाकविर्महाविज्ञ' इत्यादाविव स्तोकादेः पाकादौ एकदेशे अन्वयेऽपि भवति समासस्य साधुत्वम्। समानविभक्तिकत्वं तु उक्तसमासे न तन्त्रम्। "तत्पुरुषः समानाधिकरणः कर्मधारयः" (P.1.2.42) इति अनुशासनं हि पदद्वययोः सामानाधिकरण्यमात्रम् अपेक्ष्यते। सामानाधिकरण्यञ्च तदर्थयोः अभेद एवेति। तथा च उक्तं **शब्दशक्तिप्रकाशिका**याम् 'स्तोकपक्ता' इत्यादौ क्रियाविशेषणैः कर्मधारय एवेति। क्रियाविशेषणैः समास एव अव्युत्पन्न इति तु न देश्यम्। "स्तोकनम्रा स्तनाभ्याम्" इत्यादेः कालिदासाद्यैः प्रयुक्तत्वादिति च।

**VV-P 4.1.2:** ननु अत्र पाकस्य घञन्त-नाम-प्रतिपाद्यतया धातुप्रतिपाद्यत्वा-भावात् न क्रियात्वम् इति आशङ्कायाम् आह **भावकृताम**िति। **प्रयोगसाधुत्व-मात्रे**ति। न च कर्तरि विहितस्य तृजादेः कर्तृरूपार्थ इव भाव-विहित-घञादेः भाव एवार्थः कुतो न स्वीक्रियते इति वाच्यम्। "धात्वर्थः केवलः शुद्धो भाव

इत्यभिधीयते" इति व्याकरणादौ धात्वर्थरूपस्य भावस्य धातुत एव लाभात्। अनन्यलभ्यो हि शब्दार्थ इति न्यायात् पुनः तदर्थस्य भानासम्भवात्। धात्वर्थपाक-प्रत्ययार्थपाकयोः विरूपोपस्थितयोरभावात् 'घटो घटः' इत्यादौ इव तत्र अन्वयबोधासम्भवात् चेति बोद्ध्यम्। **क्रियापदस्येति**। **क्रियाविशेषणानामिति** अनुशासनघटकस्येति शेषः। ननु तर्हि भावाख्यातस्थले निरर्थकत्वात् तत्समभि-व्याहृत-स्तोकादिपदाद् द्वितीयानुपपत्तिरिति आशयेन आह **'स्तोकं स्थीयते'** इति।

**VV-P 4.1.3:** ननु भगवदिच्छाया अविसंवादिनीत्वात् पच्-धातूत्तर-घञ्-धर्मिकाया यत्किञ्चिदर्थविषयक-बोधजनकत्व-प्रकारिकायाः तस्या अभावेऽपि "करणाधिकरयोश्च" (P.3.3.117) इति सूत्रेण करणदौ घञ्प्रत्ययस्य विधीय-मानत्वेन तत्र करणाधिकरणम् अर्थं बोधयतु इत्यादिभगवदिच्छा अवश्यं कल्पनीया। तस्याञ्च घञत्वेन भावविहितघञोऽपि विषयत्वम्। अतः तत्रापि वृत्तिमत्त्वरूपं सार्थकत्वम् अस्ति एव। यदि तत्रेश्वरेच्छाया अविसंवादिनीत्वादेव घञत्वेन भावविहितघञो न एतस्यां विषयत्वम्। अतिप्रसक्तस्यापि घञ्त्वस्य विषयतावच्छेदकत्वे बाधकाभावात्। विषयतावच्छेदकत्वस्य अतिप्रसक्तेऽपि स्वीकारात् इति उच्येत? तदा भावाख्यातस्थलेऽपि ते-पदं वर्तमानकालं बोधयतु इति भगवदिच्छायाम् अविसंवादिन्याम् अविवक्षास्थलीय-आख्यातस्यापि शक्तिमत्त्वरूप-सार्थकत्वाभावः समान इति। अत आह **अर्थबोधस्वरूपेत्यादि**। अयं भावः - अर्थबोध-स्वरूपयोग्यत्वम् अर्थबोध-जनकतावच्छेदक-धर्मवत्त्वरूपम्। तत्प्रयोजिकाकाङ्क्षा। आकाङ्क्षावदेव हि वाक्यम् अर्थं बोधयति। तस्याश्च आनुपूर्वीविशेषरूपाया यथा विवक्षितार्थक-भावप्रत्ययान्त-'स्थीयत'-इत्यादौ सत्त्वं तथा अविवक्षितार्थक-भावप्रत्ययान्त-'स्थीयत'-इत्यादावपि इत्यतः उभयत्र 'स्तोकं स्थीयते' इति प्रयोगोपपत्तिः। घञ्प्रत्ययस्थले च यदि पच्धात्वर्थ-घञ्प्रत्ययार्थयोः अन्वयबोधः स्यात्, स्यात् तदा पच्धातु-घञ्प्रत्यययोः तथाविधाकाङ्क्षा। स एव तु नास्ति इति भावः।

**VV-P 4.2.1:** भावकृदन्तस्थले समुदायशक्तिं मन्वानानां केषाञ्चित् नैयायिकानां मतमाह **केचित्त्विति**। **अन्यथा सुब्विभक्त्यर्थेति**। अत्र सुप्पदं तिङोऽपि उपलक्षकम्। तेन तिङर्थकर्तृत्वादेः धात्वर्थेन समम् अन्वयस्य अव्युत्पन्नत्त्वात् प्रथमाप्रकृत्यर्थ एव अन्वयात्। पाकशब्दस्य शक्त्यनङ्गीकारे 'पाकोऽस्ति' इत्यादौ पच्धात्वर्थपाके सत्ताश्रयत्व-एकत्वयोः अन्वयानुपपत्तिरपि दोषः सङ्गृह्यते। **कर्मत्वादीनां तत्र पाकादाविति**। तत्र-इत्यस्य विवरणवाक्ये पाकादौ इति। अत्र षष्ठ्याः प्रतियोगित्वं सप्तम्याश्च अनुयोगित्वं न अर्थः। तथा सति कर्मत्वप्रतियोगिक-पाकाद्यनुयोगिकान्वय इत्यर्थो लभ्येत। स च नोपपद्येत।

कर्मत्वस्य धात्वर्थे एव अन्वयस्य व्युत्पन्नत्वात् पाकादिप्रातिपदिकार्थेऽन्वयानुपपत्तेः इष्टत्वेन असङ्गत्यापत्तेः। किन्तु षष्ठ्याः सप्तम्याश्च प्रतियोगित्व-अनुयोगित्व-उभयसाधारणं यन्निरूपितत्वं तदाश्रयोऽर्थः। तथा च पाक-प्रतियोगिकः कर्मत्वा-नुयोगिको यः अन्वयः तदनुपपत्तेः इत्यर्थः। **प्रकृत्यर्थान्वितेति**। अत्र प्रकृतिपदेन स्वप्रकृतिः विवक्षिता। तेन पच्-धातोः घञ्-प्रत्यय-प्रकृतित्वेऽपि स्वपदग्राह्य-सुप्-प्रकृतित्वाभावात् न तत्र सुबर्थान्वय इति बोध्यम्। ननु अत्र किं स्वनिरूपित-प्रकृतित्वं न तावत् स्वंपूर्ववर्तित्वम्? 'घटः पटश्च' इत्यादौ घटपदादेरपि पटपदो-त्तरवर्ति-सुप्प्रकृतित्वापत्तेः। नापि स्वाव्यवहित-पूर्ववर्तित्वम् आगमादिव्यवहितयोः धातु-प्रातिपदिकयोः प्रकृतित्वानुपपत्तेः। एवं 'बहुगुड' इत्यादौ प्रकृतेः बहुच्-प्रत्यय-पूर्वत्वाभावात् प्रकृतित्वानुपपत्तेः इति चेत्? न। स्ववृत्तित्व-विशिष्ट-विधेयता-निरूपितोद्देश्यत्वमेव हि स्वनिरूपित-प्रकृतित्वम्। उद्देश्यविधेयभावश्च इयमस्य प्रकृतिरिति विलक्षणानुभवसिद्धः प्रकृति-प्रत्यययोः आगम-विकरणादि-व्यवधानेऽपि अस्त्येव। स्ववृत्तित्वस्य अत्र विशेषणतया विवक्षितत्वात् पटपदोत्तर-सु-वृत्तित्वविशिष्ट-विधेयता-निरूपित-उद्देश्यत्वस्य पटपद एव सत्त्वं, न तु घटादिपदे। अतो न आपत्तिः। अथ प्रकृत्यर्थत्वं यदि प्रकृतिवृत्त्युपस्थाप्यत्वं तदा कृदन्त-नाम्नः समुदाय-शक्त्यनुपगमात् 'पाचकः' इत्यादौ पाककर्तुः प्रकृत्यर्थत्वं न स्यात्। तथा च तदन्वित-एकत्वाद्यर्थक-सुप्-प्रत्यये उक्तव्युत्पत्तिः न प्रवर्त्तेत। न च अस्तु तेषामपि समुदायशक्तिः। न हि कश्चित्प्रमाणमन्तरेण अनभ्युपगम-मात्रेण वस्तुसत्तां निषेधयितुम् इष्टे इति वाच्यम्। यतो धात्वर्थभागस्य क्लृप्तशक्तिकैः धातुभिः एव भानसम्भवात्। यद्यदर्थे अनुशासनेन यो यः कृत्प्रत्ययो विहितः तत्तदर्थे तत्तत्कृत्प्रत्ययस्य शक्तिस्वीकारेण पाचकादिपदात् पाककर्त्राद्यात्मक-विशिष्टविषयकान्वयबोध-निर्वाहे पुनः एकैककृत्प्रत्यय-समभिव्याहृत-अनन्तधातु-घटित-अनन्तकृदन्त-समुदायानाम् अनन्तशक्तिकल्पने गौरवेण विशिष्टशक्तिकल्पने प्रमाणाभावः। तथा च प्रकृत्यर्थत्वं दुर्निरूपमेव इति चेत्? न। प्रत्ययनिष्ठ-विधेयतानिरूपित-उद्देश्यतासमानाधिकरण-निरूपकता-निरूप्य-तावद्वृत्ति-प्रयोज्य-विषयत्वमेव हि प्रकृत्यर्थत्वम्। तथा च 'पाचक' इत्यादौ सुप्प्रत्ययनिष्ठ-विधेयता-निरूपिता या उद्देश्यता सा प्रातिपदिकत्वावच्छिन्ना, प्रातिपदिकोद्देशेन सुप्प्रत्यय-विधानात्। प्रातिपदिकञ्च न अखण्डस्फोटात्मकं, तदनङ्गीकारात्। किन्तु तत्तद्वर्णोत्तर-तत्तद्वर्णरूपमेव। तथा च प्रकृतिघटक-चरमवर्णनिष्ठा एव उद्देश्यता पर्यवसन्ना। एवं पाचक-पदघटक-अक-पदनिरूपिता च या सङ्केत-लक्षणा-अन्यतररूपा कर्तृनिष्ठावृत्तिः तन्निष्ठनिरूप्यता-निरूपित-अक-पदत्वावच्छिन्न-निरूपकताश्रयस्य अक-पदस्य च स्वरूपे विचार्यमाणे अकारोत्तर-क-कारोत्तर-

अकार एव स्वरूपं पर्यवस्यति इत्यतः अक-निष्ठ-निरूपकतापि चरमवर्णवर्तिन्येव इति भवति। तथाविध-उद्देश्यत्व-निरूपकत्वयोः सामानाधिकरण्यम्। तथा च तादृश-निरूपकता-निरूपित-निरूप्यतावती या वृत्तिः तत्प्रयोज्य-विषयत्वस्य कर्तृ-रूपार्थे सत्त्वात् विशिष्ट-शुद्धयोः अभेदेन पाककर्तरि अपि उक्तप्रकृत्यर्थत्वस्य सत्त्वात् न अनुपपत्तिः। उक्तरीत्या उद्देश्यतायाः चरमवर्णे एव वृत्तितया च पाचकपदघटक-पच्-धातुनिष्ठ-निरूपकताया न उक्तोद्देश्यता-सामानाधिकरण्यम्। अतो न 'पाचक' इत्यादौ पाकस्य प्रकृत्यर्थत्वापत्तिः। न वा पाक इत्यादौ भाव-प्रत्ययान्त-प्रकृतिके अनुपपत्तिः। तत्रापि सु-निष्ठ-विधेयता-निरूपिता या पाकपदनिष्ठा प्रातिपदिकत्वावच्छिन्ना उद्देश्यता सा चरमवर्णविश्रान्तापि तद्-वर्ण-निष्ठा या निरूपकता सा पाकरूपार्थनिष्ठ-शक्तिवृत्ति-निरूप्यता-निरूपिता पाकपदत्वावच्छिन्ना एव। पाकपदे समुदायशक्तेः स्वीकारात्। तथा च तादृशवृत्ति-प्रयोज्य-विषयतायाः पाकरूपार्थे सत्त्वादिति। ननु प्रकृत्यर्थान्वित-स्वार्थेति व्युत्पत्तिघटक-प्रकृत्यर्थत्वं प्रकृतिजन्यबोध-विषयत्वरूपं प्रकृत्यर्थ-प्रकृत्येकदेशार्थ-साधारणमेव वाच्यम्। अतो न समुदायशक्त्यनङ्गीकारेऽपि पाक इत्यादौ अनुपपत्तिः। पच्-धातूपस्थाप्येन पाकेन सह एकत्वादेः अन्वयबोध-सम्भवादिति। अत आह **प्रकृत्येकदेशार्थेऽपीति**। **एकत्र** इत्यादि। अत्र त्रल्-प्रत्ययद्वयं विशेष्यत्वार्थकम्। विशेष्यत्वद्वयञ्च विशेषणत्वद्वये अन्वेति। प्रथम-तृतीयार्थो वैशिष्ट्यम्। तस्य उपस्थितपदार्थे अन्वयः। उपस्थितत्वं च उपस्थिति-विषयत्वम्। तथा च उपस्थितीय-विषयत्व-विशिष्टे विशेषणत्वस्य अन्वये उद्देश्यतावच्छेदकीभूतं यदुपस्थिति-विषयत्वं तत्प्रयोज्यत्वस्य विशेषणत्वे लाभः। असति बाधके उद्देश्यतावच्छेदक-प्रयोज्यत्वस्य विधेये भानात्। 'धनवान् सुखी' इत्यादौ तथा दृष्टत्वात्। एवञ्च तुल्यन्यायात् उक्तविषयत्वे विशेषणत्व-प्रयोजकत्वमपि लभ्यते। द्वितीय-तृतीयायाश्च प्रतियोगिकत्वम् अर्थः। तस्य अन्वयेन सह सम्बन्धः। तथा च एकत्र विशेषणत्वेन उपस्थितस्य न अन्यत्र विशेषणत्वेन अन्वय इत्यस्य एकनिष्ठ-विशेष्यता-निरूपित-विशेषणत्व-प्रयोजक-उपस्थितीय-विषयतावतः अन्य-निष्ठ-विशेष्यता-निरूपित-विशेषणत्व-प्रतियोगिक-सम्बन्धो न भवति इत्यर्थः प्रर्यवसितः। एवञ्च पशुपदजन्य-बोधे लाङ्गूलनिष्ठविशेष्यता-निरूपित-लोमनिष्ठ-विशेषणत्व-प्रयोजिका या लोमवल्लाङ्गूलाश्रय-विषयक-उपस्थितीय-लोमनिष्ठा विषयता तद्वतो लोम्नः अन्यनिष्ठ-विशेष्यता-निरूपित-विशेषणत्वं न भवति। तत्र उक्त-व्युत्पत्तिः यथा प्रवर्तते तथा ययोः अर्थयोः मध्ये एकस्य परस्मिन् विशेषणतया अन्वय एव तद्बोधक-पदयोः आकाङ्क्षानियमः तत्तदर्थोपस्थापक-पदद्वयघटित-कृत्-तद्धितान्त-समासादि-स्थलेऽपि उक्तव्युत्पत्तिः प्रवर्तते। तत्रापि

या पाचक-पचमानादि-पदजन्य-बोधीया कर्तृनिष्ठ-विशेष्यता-निरूपित-पाकनिष्ठ-विशेषणता तां प्रति पाचकादि-पदघटक-पच्-धातुजन्य-उपस्थितीय-पाकनिष्ठ-विषयतायाः प्रयोजकत्वेन तद्विषयताश्रयस्य पाकस्य कर्तृभिन्न-विशेषणत्वं न भवति। कर्तरि एव पाकस्य अन्वये तत्र धातु-प्रत्यययोः साकाङ्क्षत्वात्। तथा च प्रत्ययार्थनिष्ठ-विशेष्यता-निरूपित-स्वार्थनिष्ठ-विशेषणताक-बोधसामग्र्याः तदितरार्थविशेष्यक-स्वार्थ-प्रकारक-बोधं प्रति प्रतिबन्धकत्त्वं पर्यवसितम्। अत्र तृतीयार्थः तादात्म्यम्। तस्य उपस्थितत्वे अन्वयः। तथा च एकनिष्ठ-विशेष्यता-निरूपित-विशेषणत्वाभिन्न-उपस्थितीयविषयतावतः अन्यनिष्ठविशेष्यता-निरूपित-विशेषणत्व-सम्बन्धो न भवति इत्यर्थस्तु न सम्यक्। पाचकादि-शब्दानां सिद्धान्ते विशिष्टशक्ति-विरहेण पाचकादि-पदघटक-पच्-धातोः पाक-विशेष्यिकाया एव उपस्थितेः जायमानत्वेन उक्तविशेषणत्वाभिन्न-उपस्थितीय-विषयत्वस्य असम्भवात् इत्यवधेयम्।

**VV-P 4.2.2:** क्रमत्वस्य प्रकृत्यर्थ इव प्रकृत्यर्थैकदेशेऽपि विशेषणतया अन्वयः अव्युत्पन्न इत्यतः कर्मत्वान्वयापत्तिं परित्यज्य सङ्ख्यान्वयापत्तिम् आह **तथापि** इति। **पाकादेश्च तदबाधितमिति**। इदञ्च योग्यताज्ञान-सम्पत्त्यर्थम् उक्तम्। **धातूपरस्थाप्यार्थ** इति। तथा च 'पचमानौ' इत्यादौ शानच्-प्रत्ययधर्मिकस्य कर्तृपरत्वज्ञानस्य सत्त्वात् न धातूपरथाप्य-पाकादौ सुबर्थान्वयबोधः। 'पाक' इत्यादौ च घञ्प्रत्यय-धर्मिकं न किञ्चिदर्थपरत्वज्ञानम्। अतो धात्वर्थपाकादौ सुबर्थान्वये बाधकाभाव इति भावः। ननु उक्तरीत्या प्रतिबध्य-प्रतिबन्धकभाव-कल्पनेऽपि यत्र राजद्वय-सम्बन्धी एकः पुरुषोऽस्ति तत्र 'राजपुरुषौ पश्यति' इति प्रयोगापत्तिः न वार्यते। राजपदार्थस्य धातूपरस्थाप्यत्वाभावेन तद्-धर्मिकसुबर्थान्वय-बोधस्य उक्तप्रतिवध्यतावच्छेदक-धर्मानाक्रान्ततया राजपदार्थे द्वित्वान्वयबोधे बाधकाभावादिति चेत्? न। तत्तत्पदार्थधर्मिकसुबर्थान्वयबुद्धौ तत्तत्पदाव्यवहितोत्तर-सुब्भिन्नपदधर्मिक-तत्तत्पदार्थान्वितार्थपरत्व-ज्ञानत्वेन प्रतिबन्धकत्वस्य विवक्षितत्वेन उक्तस्थले राजपदाव्यवहितोत्तर-पुरुषपद-धर्मिकस्य राजपदार्थान्वितार्थपरत्व-ज्ञानस्य प्रतिबन्धकस्यैव सत्त्वात्। अत्र तत्पदार्थान्वित इत्यस्य अनुक्तौ घटपटौ इत्यादि-द्वन्द्वस्थले पटपदधर्मिक-अर्थपरत्व-ज्ञानस्य प्रतिबन्धकत्वापत्त्या घटे द्वित्वान्वयबोधानुपपत्तिः, अतः तदुक्तम्। तथा च पटपदधर्मिकस्य घटपदार्थान्वितार्थपरत्वज्ञानस्य अभावात् नानुपपत्तिः। 'घट' इत्यादौ घट-धर्मिक-एकत्वान्वयबुद्धौ सु-पद-धर्मिकस्य घटान्वितार्थपरत्व-ज्ञानस्यापि प्रतिबन्धकत्वापत्तिः। अतः सुब्भिन्न-इत्युक्तम्। अथ भाव-विहित-घञो निरर्थकत्व-वादिना भाव-विहित-ल्युटोऽपि निरर्थकत्वमेव स्वीकार्यम्। अतो न सुबर्थान्वयानुपपत्तिदोषः।

**VV-P 4.2.3:** अतो दोषान्तरम् आह **एवं शोभनमिति। विशेषणविभक्ति-सजातीयेति।** स्वसमानविभक्तिक-पदोपस्थापितयोरेव अभेदः संसर्गविधया भासते इति नियमाद् इति भावः। ननु स्वसमानविभक्तिक-पदविशिष्ट-पदोपस्थाप्यत्वमेव अभेदान्वयबोधोपयोगी-आकाङ्क्षानिर्वाहकनियमो वाच्यः। वैशिष्ट्यं च स्वतादात्म्य स्वघटकत्व-अन्यतरसम्बन्धेन। प्रकृते च तथाविध-पदघटकत्वस्य पच्-पदे सत्त्वात् नानुपपत्तिः। अत आह **प्रकृत्येकदेश-साधारणेति। अधिकरणपरत्वेऽपीति।** अधिकरणपरत्व-ग्रहेऽपि इत्यर्थः। **तथा विधान्वयेति।** शोभनाभिन्न-पाकान्वये-त्यर्थः। **कस्यचित्प्रतिबन्धकतामिति।** धातूपस्थाप्यार्थ-द्वितीयान्तभिन्न-प्रातिपदिका-र्थयोः अभेदान्वयबुद्धौ धातूत्तरप्रत्ययधर्मिक-किञ्चिदर्थपरत्वज्ञानस्य प्रतिबन्धकताम् इत्यर्थः। अत्र 'स्तोकं पचति' इत्यादौ सार्थकप्रत्ययान्त-पच्-धातूपस्थाप्य-पाकादौ स्तोकादेः अन्वयबोधोपपत्तये द्वितीयान्तभिन्न-इत्युक्तम्। **गौरवादिति।** तस्मात् घञाद्यन्त-समुदाय एव शक्तिः स्वीकार्या इति भावः।

**VV-P 4.3.1:** न **चैवमिति।** प्रत्ययानां प्रकृत्यर्थान्वित-स्वार्थबोधकत्व-व्युत्पत्त्यनुरोधेन घञाद्यन्तसमुदायस्य शक्तिस्वीकारेऽपि इत्यर्थः। **विभक्त्य-प्रकृतित्वाद्** इति। अनुपदोपपादितस्य प्रकृतित्वस्यात्र विभक्त्यव्यवहितपूर्ववर्तिवर्णे एव पर्यवसानात् अनुपदोक्त-प्रकृत्यर्थत्वस्य समुदायघटक-चरमपदार्थे एव पर्यवसानाच्च। पूर्वपदार्थेऽन्वये प्रकृत्यर्थान्वित-स्वार्थबोधकत्वमिति व्युत्पत्तिः, स्वसमानविभक्तिक-पदोपस्थापितयोरेव अभेदः संसर्गविधया भासते इति व्युत्पत्तिः च विरुध्यते। अत उत्तरपदार्थे एव विभक्त्यर्थादेः अन्वयः प्रसक्त इति भावः। **तदनुरोधेनैवेति।** उक्तव्युत्पत्तिद्वयानुरोधेनैव इत्यर्थः।

**VV-P 4.3.2:** **वस्तुतस्त्विति।** तथा च विभक्त्यादेः उत्तरपदेन आकाङ्क्षा-विरहात् न तदर्थेन समं विभक्त्यर्थस्य प्रातिपदिकान्तरार्थस्य चान्वयबोधप्रसङ्गः।

**VV-P 4.3.3:** एतदेव आह **तथा सति अतिप्रसङ्गविरहादिति।** अत्रेदम् आलोचनीयम्। उक्तरीत्या आकाङ्क्षोपपत्तौ अपि उपपादितस्य प्रकृत्यर्थत्वस्य समीपादौ विरहात् न सुबर्थस्य प्रकृत्यर्थेन सह अन्वयः। अत उक्तप्रयोगस्य प्रामाण्यानुरोधेन उक्तव्युत्पत्ति-सङ्कोचस्य आवश्यकत्वात् 'पाक' इत्यादौ अपि सङ्कोचे बाधकाभावः। समुदायशक्त्यनङ्गीकारे लाघवञ्चेति। ननु समुदाय-शक्त्यनङ्गीकर्तृभिरपि 'पाक' इत्यादौ सुबर्थैकत्वादेः धात्वर्थे अन्वये घञन्त-पाकपद-सुप्पदयोः अव्यवहित-पूर्वापरीभाव आकाङ्क्षा वाच्या। एवं 'पचनम्' इत्यादौ अपि। तथा च तथाविध आकाङ्क्षा-विरहादेव न 'पचमान' इत्यादौ एकत्वादेः धात्वर्थे अन्वयः स्यात् इति शङ्कते **धात्वर्थपाकादाविति।** भावार्थक-ल्युट्प्रत्ययान्त-'पचनम्' इत्यादिस्थलीय-आकाङ्क्षाया अधिकरणार्थक-ल्युट्-

प्रत्ययान्त-पचनमित्यादौ अपि सत्त्वात् अत्रापि एकत्वादेः धात्वर्थे अन्वयप्रसङ्ग इतिं आह **दर्शिताधिकरणार्थकेति**।

**VV-P 4.4.1:** **नैमित्तिकसंज्ञेति**। यस्याः संज्ञाया जातिविशिष्टेऽर्थे सङ्केतः सा नैमित्तिकसंज्ञा इति उच्यते।

**VV-P 4.4.2:** **धात्वर्थैकाधिकरण्ये त्विति**। धात्वर्थेन सह अभेदे विवक्षिते तु इत्यर्थः। अत्र "धात्वैकाधिकरण्ये तु" इत्यपि पाठः। तत्र स्तोकपदस्येति शेषः। तथा च स्तोकपदस्य धातुप्रतिपाद्यान्वित-स्तोकपरत्वे तु इत्यर्थः। **वदन्तीति**। अत्र अस्वरसबीजं तु **गूढार्थतत्त्वालोके** प्रपञ्चितं गुरुचरणैः। तत्रैव निरीक्षणीयं विशेषजिगृक्षुभिः।

**VV-P 4.4.3:** **तदर्थकपदोत्तरविभक्त्येति**। अत्र 'चैत्रो ग्रामं गच्छति', 'ग्रामौ गच्छति' इत्यादौ ग्रामादेः आधेयतासम्बन्धेन कर्मत्वादौ प्रकारत्वेऽपि ग्रामादौ एकत्व-द्वित्वाद्यन्वयबोध-जननात् उक्तम् **अभेद-सम्बन्धावच्छिन्नेति**। ननु एतेन किमायातम् इत्यत आह **तादृशश्च बोध** इति। **'नीलौ घटौ' इत्यादाविति**। वस्तुमात्र-साधारणस्य केवल-एकत्वस्य 'नीलो घटः' इत्यादौ नीलेऽपि भान-सम्भवात् द्विवचनान्तप्रयोगः प्रदर्शितः। ननु नील-घट-पदार्थयोः अभेदात् नीलपदमपि घटार्थबोधकम्। तथा च अभेद-सम्बन्धावच्छिन्न-प्रकारताभिन्न-नील-पदार्थीभूत-घटनिष्ठ-विशेष्यताशालि-शाब्दसामग्र्याः सत्त्वात् नीलपदोत्तर-विभक्त्या कुतो न नीलपदार्थे द्वित्वाद्यन्वयः। एवं स्वाश्रय-प्रमाणत्ववत्त्व-सम्बन्धेन प्रमाणे एकत्वान्वये 'वेदाः प्रमाणम्' इत्यत्र प्रमाणनिष्ठ-विषयताया अभेदसम्बन्धावच्छिन्न-प्रकारतात्मकत्वात् प्रमाणे एकत्वान्वयानुपपत्तिश्चेति चेत्? न। तत्पदोत्तर-विभक्तिप्रयोज्य-सङ्ख्यानिष्ठ-प्रकारता-निरूपित-तदर्थनिष्ठ-विशेष्यताक-बोधं प्रति अभेद-सम्बन्धावच्छिन्न-प्रकारताभिन्न-तदर्थनिष्ठ-तत्पदप्रयोज्य-विषयताक-शाब्द-सामग्र्यपेक्षिता इत्यत्र तात्पर्यात्। एवञ्च घटनिष्ठ-विषयताया घटत्वावच्छिन्न-विषयतारूपाया नीलपदाप्रयोज्यत्वात् नीलनिष्ठ-विषयताया नीलपद-प्रयोज्यत्वेऽपि तस्या उक्तप्रकारतात्मकत्वात् न नीलपदोत्तरविभक्त्या सङ्ख्यान्वय-बोधापत्तिः। सङ्ख्यानिष्ठ-प्रकारतायां पर्याप्ति-सम्बन्धावच्छिन्नत्वस्य विवक्षितत्वाच्च न 'वेदाः प्रमाणम्' इत्यत्र अनुपपत्तिः इति। न च एकज्ञानीय-समानाधिकरण-विषयतयोः अभेदपक्षे उक्तरीत्या उक्तस्थले नीलादौ सङ्ख्यान्वयबोध-वारणेऽपि तयोः अवच्छेद्यावच्छेदकभावपक्षे 'नीलौ घटौ' इत्यादि-स्थले अभेदसम्बन्धावच्छिन्न-प्रकारताभिन्नाया नीलत्वादिनिष्ठ-प्रकारतानिरूपित-विशेष्यताया नीलादौ सत्त्वात् तत्र द्वित्वाद्यन्वयबोधापत्तिः दुर्वारा इति चेत्? उच्यते। अभेदसम्बन्धावच्छिन्न-प्रकारताभिन्नतदर्थनिष्ठ-तत्पदप्रयोज्य-विषयतान्तस्य अनुपदोक्तस्य अभेदसम्बन्धा-

वच्छिन्न-प्रकारता-विशिष्टान्यविषयत्वमर्थः। वैशिष्ट्यञ्च स्वप्रयोजकपद-प्रयोज्य-उपस्थितीय-विशेष्यता-प्रयोज्यत्व-सम्बन्धेन। तथा च 'नीलो घटः' इत्यादौ नील-निष्ठ-प्रकारता-प्रयोजक-नीलपद-प्रयोज्य-उपस्थितीया या नीलत्वनिष्ठ-प्रकारता-निरूपित-नीलनिष्ठ-विशेष्यता तत्प्रयोज्यत्वस्य शाब्दबोधीय-नीलत्वनिष्ठ-प्रकारता-निरूपित-नीलनिष्ठ-विशेष्यतायां नीलत्वावच्छिन्न-प्रकारतायाञ्च सत्त्वेन उभयस्याम् अपि विषयतायाम् उक्तवैशिष्ट्यस्य एव सत्त्वात्। घटत्वावच्छिन्न-विषयतायां तु अत्र तद्विशिष्टान्यत्वसत्त्वात् न दोषः। **एवञ्चेति**। विभक्त्या सङ्ख्याबोधने एतत्सामग्र्याम् अपेक्षितायां च इत्यर्थः। **असम्भवादिति**। निरुक्तसामग्र्यभावादिति शेषः। तथा च तत्र सङ्ख्याप्रतिपत्त्यर्थं न विभक्तिप्रयोगः। किन्तु "न केवला प्रकृतिः प्रयोक्तव्या" इति न्यायात् पदसंस्कारार्थं एव। एवञ्च यस्यां कस्याञ्चिद् विभक्तौ प्रयोक्तव्यायां प्राथमिकत्वात् प्रथमैकवचनम् एव प्रयुज्यते। अथवा यथा आख्यातस्थले शप्-श्यनादयः पदसंस्कारमात्रार्थका अपि प्रतिनियता एव। तथा प्रथमैकवचनमेव पदसंस्कारकतया नियतो, नान्यः। अतः प्रथमैकवचनम् एव प्रयुज्यते इति बोध्यम्। **औत्सर्गिकमेकवचनमिति**। औत्सर्गिकं क्लीवत्वमपि। तदपि अनियतलिङ्गकस्थले एव इत्युक्तम् अधस्तादिति।

**VV-P 5.1.1:** विरूपोपस्थितयोरेवेति। अत्र यदि षष्ठ्या विषयत्वमर्थः एव-कारस्य च इतरव्यावर्तकस्य सरूपोपस्थित-विषयकत्वाभावोऽर्थः तयोश्च अभेदान्वयबोध इत्यनेन अन्वयः तदा सरूपोपस्थित-विषयकत्वाभाववान् विरूपोपस्थितार्थद्वय-विषयकोऽभेदान्वयबोध इत्यर्थः स्यात्। स च न युक्तः। 'नीलो घटः', 'पीतो घटः' च इत्यादिवाक्यात् नीलाभिन्नघटविषयक-पीताभिन्न-घटविषयक-समूहालम्बनबोधस्य सरूपोपस्थितार्थद्वयविषयकस्यापि जायमानत्वात्। किन्तु प्रतियोगिनिरूपितत्व-अनुयोगिनिरूपितत्व-उभयसाधारण-निरूपितत्वत्वा-वच्छिन्नं षष्ठ्यर्थः। तस्य अभेदपदार्थेन अन्वयः। एव-कारस्य च उक्तनिरूपितत्वा-तिरिक्त-व्यवच्छेदोऽर्थः। तथा च उपस्थितीय-विषयता शाब्दबोधीयाभेदत्वावच्छिन्न-संसर्गतात्वव्यापिका इति पर्यवसितोऽर्थः। व्यापकता च (१)स्वावच्छेदकावच्छिन्न-प्रकारतानिरूपितत्व-(२)स्वभिन्न-उपस्थितीय-विषयतावच्छेदकावच्छिन्न-विशेष्यता-निरूपितत्व-उभयसम्बन्धेन। एवञ्च 'नीलो घटः' इत्यादौ अभेदत्वावच्छिन्न-संसर्गतायां नीलपदजन्य-उपस्थितीयविषयतायाः स्वावच्छेदकीभूत-नीलत्वावच्छिन्न-प्रकारतानिरूपितत्व-स्वभिन्नोपस्थितीय-विषयतावच्छेदकीभूत-घटत्वावच्छिन्नविषयता-निरूपितत्व-उभयसम्बन्धेन सत्त्वात् उक्तनियमोपपत्तिः। अथवा स्वनिरूपित-प्रकारतावद्-धर्मावच्छिन्नविषयतानिरूपितत्व-स्वनिरूपितविषयत्व-असमानाधिकरण-विषयतावद्धर्मावच्छिन्न-विषयतानिरूपितत्व-उभयसम्बन्धेन उक्तव्यापकत्वं वाच्यम्।

तेन उपस्थितीयविशेष्यतायाः प्रायशः अनवच्छिन्नत्वेन स्वावच्छेदक-धर्माप्रसिद्धावपि न क्षतिः। विषयतायां स्वनिरूपितत्वञ्च साक्षात्परम्परासाधारणं बोध्यम्। एवञ्च सरूपोपस्थितस्यापि पदद्वयार्थस्य किञ्चिद् अपेक्षया विरूपोपस्थितत्वेऽपि न क्षतिः इति अवधेयम्। **तथाविधान्वयेति** = अभेदान्वयेत्यर्थः।

**VV-P 5.1.2:** **तत्प्रयोजकेति**। अभेदान्वयबोधप्रयोजकेत्यर्थः। **यादृशमिति** = यद्धर्मावच्छिन्नमित्यर्थः।

**VV-P 5.1.3:** **आपादकाप्रसिद्धेरिति**। अयं भाव - आपत्तिः नाम तर्कः। तर्कयामि इति अनुभवसाक्षिक-मानसत्वव्याप्य-जातिविशेषाश्रयः। तं प्रति आपाद्य-व्यतिरेक-निश्चय आपाद्यव्याप्य-आपादकवत्तानिश्चयः च कारणम्। इत्थञ्च यदि क्वचिदपि अभेदसंसर्गक-घटत्वावच्छिन्न-प्रकारताक-घटत्वावच्छिन्न-विशेष्यताकः शाब्दबोधः स्यात्, स्यात्तदा प्रकृते आपाद्यस्य तादृश-शाब्दबोधस्य व्यतिरेक-निश्चयः। तादृश-शाब्दबोधव्याप्यं यदापादकं तथाविध-अन्वयबोधप्रयोजक-सामग्री-रूपं तन्निश्चयश्च आपत्तिकारणम्। न च अयं बोधः क्वचित्प्रसिद्धः। अतो न तद्व्यतिरेकनिश्चयो न वा तद्व्याप्यापादकवत्तानिश्चयः। अतः कारणाभावात् न आपत्तिः सम्भवतीति भावः।

**VV-P 5.1.4:** **अधिकावगाहिन** इति। उद्देश्यघटक-निखिलपदार्थान् विधेय-घटकतया अवगाहमानस्य इत्यर्थः। अभेदान्वयबोधस्थले विधेयस्य अवश्यम् उद्देश्यघटकाश्रयांशात्मकत्वम्। अतो निखिलेत्युक्तम्। **नवीनैरिति**। अनया च वाचोभङ्ग्या प्राचीनैः अस्वीकृतत्वमिति सूचितम्। प्राचीना हि अभेदान्वयबोधस्थले उद्देश्यस्य अपूर्वत्वाभावात् न विधेयत्वम्। अतो 'घटो नीलघटः' इत्यादावपि नीलाभिन्नो घट इत्येव शाब्दबोधः। न च एवं 'नीलो घटः' इत्यत्रापि नैल्यमात्रस्य विधेयत्वम् उचितम्। न तु आश्रयांशस्य अपि इति वाच्यम्। नैल्यस्य घटेन सह अभेदान्वयस्य बाधितत्वात्। सर्वानुभवसिद्धस्यात्र नील-घटयोः अभेदान्वयबोधस्य अपलापप्रसङ्गात्। सर्वो हि अभेदप्रतिपिपादयिषया 'नीलो घटः' इति वाक्यं प्रयुङ्क्ते। न जातु कश्चित्परीक्षको 'नीलस्य घटः' इति। भेदप्रतिपिपादयिषया एव तु 'नीलस्य घटः' इत्यादिकं प्रयुङ्क्ते। तत्र यदि 'नीलो घटः' इत्यादावपि भेदान्वयबोध एव स्यात् तदा भेदान्वयबुद्धौ समानवचनत्वस्य अनियमेन क्व 'नीलो घटः' इति क्व च 'नीलस्य घटः' इति प्रयोक्तव्यमिति अगृहीतमूला-शाब्दमतिः प्रतिपुरुषं वारविलासिनीव विगतमर्यादैव आश्रयांशस्य विधेयकोटौ प्रवेश आवश्यकः। 'घटो नीलघटः' इत्यादौ तु विधेयतया नीलस्यैव भानेऽपि न काचिदपि शाब्दमर्यादा भज्यते। अतः तदंशस्यैव विधेयत्वम् उररीकुर्वन्ति। तत्र अर्वाचीनास्तु एवमाहुः। प्रवृत्त्युपयोगि-विशिष्टविषयक-ज्ञानसम्पत्तिः संशयनिवृत्तिश्च

वाक्यरचनाप्रयोजनमिति सार्वजनीनम्। तथा च 'घटो नीलघटो न वा' इति संशयं बोद्धव्य-पुरुषनिष्ठम् अनुमानादिना ज्ञात्वा तन्निवृत्तिम् अभीप्सवो 'नीलघटो घटः' इति वाक्यं प्रयुञ्जते। तत्र यदि उक्तवाक्यात् नीलाभिन्न-घटविषयकमेव शाब्दबोधमङ्गीकुर्यात् तदा अयं शाब्दबोधः असमानप्रकारकतया उक्तसंशयं न प्रतिबध्नीयात्। अतः अगत्या विधेयांशे अधिकावगाहिशाब्दबोध उपेय इति। **स्वीकारादिति**। तथा च एतद्वाक्यजन्य-शाब्दबोधस्य घटत्वावच्छिन्न-विशेष्यताकस्य नीलघटत्वावच्छिन्न-प्रकारताकत्वे घटत्वावच्छिन्न-प्रकारताकत्वं सुतराम् आयातम्। 'अधिकं प्रविष्टम्, न तु तद् हानिः' इति न्यायात्। एवञ्च 'घटो घटः' इत्यादौ घटत्वावच्छिन्नप्रकारताक-घटत्वावच्छिन्नविशेष्यताक-शाब्दबोध-उत्पत्तौ बाधकाभाव इति भावः। **घटाद्यंशे विशेषणतावच्छेदकेति**। ननु नीलोपस्थितिविरहेऽपि घटत्वावच्छिन्न-विशेष्यतानिरूपित-घटत्वावच्छिन्न-प्रकारताक-शाब्दबोधस्य 'घटो रक्तघटः' इत्यादौ जायमानत्वात्। एवं रक्तोपस्थिति-विरहेऽपि 'पीतघटो घटः' इत्यादौ तादृशशाब्दबोधस्य जायमानत्वात् नीलाद्युपस्थितिविरह उक्तशाब्दबोधे अकिञ्चित्कर एवेति कुतो न 'घटो घटः' इत्यादौ शाब्दबोध इति चेत्? न। घटत्वावच्छिन्न-विशेष्यतानिरूपित-घटत्वावच्छिन्न-प्रकारताक-शाब्दबुद्धित्वावच्छिन्नं प्रति हि न कश्चिदपि स्वातन्त्र्येण हेतुः। तथा सत्यपि तद्धर्मावच्छिन्न-कार्यसत्त्वं तु नीलघटत्वावच्छिन्न-प्रकारतानिरूपित-घटत्वावच्छिन्न-विशेष्यताक-शाब्दबुद्धित्वादि-रूपं यत् 'नीलघटो घटः' इत्याद्याकाङ्क्षाज्ञानजन्यतावच्छेदकं तदवच्छिन्नसामग्री-प्रयोज्यम् एव। तस्याश्च सामग्र्याः नीलादिपदजन्य-नीलाद्युपस्थिति-घटिताया अभावे उक्तकार्यसत्त्वासम्भव इति बोध्यम्।

**VV-P 5.2.1:** **धर्मितावच्छेदकतेति**। विशेष्यतावच्छेदकता इत्यर्थः। ननु धर्मिता-प्रत्यासत्त्यैव कार्यकारणभावः कुतो न उपेयते? धर्मिभेदेऽपि एकधर्मा-वच्छिन्नाया धर्मिताया ऐक्यात् अनुगतेन तत्सम्बन्धेन अखिलधर्मिषु शाब्दबोध-उत्पादे घटे शाब्दबोध उत्पद्यते इत्यादिधर्म्यंशे उत्पत्तिव्यवहारः अपि उपपद्यते इति चेत्? न। अपूर्वार्थविषयक-शाब्दबोधो हि धर्मितासम्बन्धेन अपूर्वव्यक्तौ अपि जायते। तत्र च योग्यताज्ञानादेः तेन सम्बन्धेन असत्त्वात् अनुपपत्तिः। द्रव्यत्वेन घटावगाहि- 'नीलं द्रव्यम्' इति योग्यताज्ञानसत्त्वे 'नीलो घटः' इति शाब्दबोध-आपत्तिश्च स्यात्। किञ्च एवं सति द्रव्यत्वे शाब्दबोध उत्पद्यते इत्यादिव्यवहारा-नुपपत्तिः। द्रव्यत्वस्य धर्मितासम्बन्धेन कार्यानधिकरणत्वात्। न च धर्मिणि अपि उत्पत्तिव्यवहारस्य इष्टतया धर्मितावच्छेदकतायाः प्रत्यासत्तित्वे धर्मिणि उत्पत्ति-व्यवहारो न स्यादिति वाच्यम्। एतदुत्तरस्य अनुपदमेव उपपादयिष्यमाणत्वात्। **शुद्धघटत्वावच्छिन्नेति**। केवलघटत्वावच्छिन्नेत्यर्थः। विधेयांशे अधिकावगाहि-शाब्द-बोधपक्षे घटत्वावच्छिन्न-प्रकारताक-शाब्दबोधस्य घटत्वे इष्टत्वेन आपत्त्यसम्भवात्

उक्तं शुद्धेति। **आपत्तिसम्भवादिति।** उक्तरीत्या आपाद्यतावच्छेदक-धर्मस्य प्रसिद्धौ तदवच्छिन्नव्याप्य-आपादकवत्ता-ज्ञानात् आपत्तिसम्भवात् इत्यर्थः। ननु ज्ञानापत्ति-स्थले आपाद्यव्याप्य-आपादकवत्ता-ज्ञानस्य कारणत्वेऽपि कार्यापत्तिस्थले कार्यता-वच्छेदकावच्छिन्न-व्याप्यसामग्र्या एव आपादकत्वात्। प्रकृते तस्या एव अभावात् न आपत्तिः सम्भवति इति आशङ्कते न च तत्रापादकाभाव इति। **तदुत्पाद-नियामक-सामग्र्या एवेति।** ननु द्रव्यपदजन्य-द्रव्यत्व-प्रकारक-उपस्थिति-योग्यताज्ञानादिघटिता द्रव्यत्वे धर्मितावच्छेदकतासम्बन्धेन घटत्वावच्छिन्नप्रकारक-शाब्दबोधोत्पादिका या समाग्री सा घटत्वे अवर्तमाना कथं तत्र घटत्वावच्छिन्न-प्रकारक-शाब्दबोधम् आपादयेत् इति चेत्? न। द्रव्यत्वे तदुत्पादनियामिका यादृशी सामग्री तादृश्या एव इत्यर्थकत्वात्। तथा च द्रव्यपदजन्य-द्रव्यत्व-प्रकारको-पस्थितेः 'द्रव्यं घटः' इदं वाक्यं घटान्वित-द्रव्यपरमिति तात्पर्यज्ञानस्य द्रव्यत्वा-वच्छिन्नविशेष्यक-घटत्वावच्छिन्न-प्रकारक-योग्यताज्ञानस्य आकाङ्क्षा-ज्ञानादेश्च सत्त्वे तद्घटितसामग्री यथा द्रव्यत्वे धर्मितावच्छेदकत्वसम्बन्धेन घटत्वावच्छिन्न-प्रकारताक-शाब्दबोधम् उत्पादयति। तथा घटपदजन्य-घटत्व-प्रकारकोपस्थितेः 'घटो घटः' इदं वाक्यं घटान्वित-घटपरमिति तात्पर्यज्ञानस्य घटत्वावच्छिन्न-विशेष्यक-घटत्वावच्छिन्न-प्रकारक-योग्यताज्ञानस्य आकाङ्क्षाज्ञानादेश्च सत्त्वे तद्घटित-सामग्री धर्मितावच्छेदकता-सम्बन्धेन घटत्वेऽपि घटत्वावच्छिन्न-प्रकारताक-शाब्दबोधम् उत्पादयेत् इति अभिप्रायः। ननु यदि धर्मितावच्छेदकतायाः प्रत्यासत्तित्वं तदा तु इयम् आपत्तिः सम्भवति। तथा हि कारणतावच्छेदक-धर्मा-वच्छिन्न-घटितसमुदायरूपैव सामग्री। सा च स्वीय-कार्यतावच्छेदकावच्छिन्नो-त्पत्तिव्याप्या भवतीति सार्वजनीनम्। एवं हि सति धर्मितावच्छेदकता-प्रत्यासत्तिपक्षे घटत्वावच्छिन्न-प्रकारताकज्ञानत्वरूप-कारणतावच्छेदक-धर्माश्रयीभूतं यद्घटत्वा-वच्छिन्नप्रकारताक-घटत्वावच्छिन्नविशेष्यताक-योग्यताज्ञानं तद्घटित-समुदायोऽपि सामग्री स्यात्। सा च घटत्वावच्छिन्नप्रकारताक-घटत्वावच्छिन्नविशेष्यताक-शाब्दबोधोत्पत्ति-व्याप्यापि स्यात्। तदेव तु नास्ति। किन्तु समवायेन द्रव्यत्वा-वच्छिन्न-विशेष्यताक-घटत्वावच्छिन्नप्रकारताक-शाब्दबुद्धित्वावच्छिन्नं प्रति द्रव्यत्वा-वच्छिन्नविशेष्यताक-घटत्वावच्छिन्नप्रकारताक-योग्यताज्ञानं समवायेन कारणम् इति रीत्या आत्मनिष्ठ-प्रत्यासत्त्या एव कार्यकारणभावः। एवं सति घटत्वावच्छिन्न-प्रकारताक-घटत्वावच्छिन्न-विशेष्यताक-शाब्दबोधस्य क्वचिदपि प्रसिद्धौ सत्यामेव घटत्वावच्छिन्न-प्रकारताक-घटत्वावच्छिन्न-विशेष्यताक-ज्ञानस्य योग्यताज्ञानविधया कारणत्वं तद्घटितसमुदायस्य सामग्रीत्वञ्च कल्पनार्हम्। अन्यथा गगन-कुसुमादिकं प्रति अपि कस्यचित् कारणत्वकल्पनम् उचितं स्यात्।

**VV-P 5.2.2:** तथाविध-शाब्दबोधस्यैव अप्रसिद्धौ च न उक्तयोग्यताज्ञानस्य कारणत्वं न वा तद्घटित-समुदायस्य सामग्रीत्वम्। न वा एतत्समुदायरूपायाः सामग्र्याः कार्योत्पत्तिव्याप्यत्वम्। न वा आपत्तिः सम्भवति इति आशयवान् शङ्कते न चेति। द्रव्यात्वादाविति। यथा 'तन्तौ पट उत्पद्यते' इत्यत्र सप्तम्यर्थावच्छेदकत्वस्य उत्पत्तौ अन्वये 'तन्त्ववच्छिन्नोत्पत्तिमान् पटः' इत्यर्थो लभ्यते। तथा प्रकृतेऽपि सप्तम्यर्थावच्छेदकत्वस्य उत्पत्तौ अन्वये द्रव्यत्वावच्छिन्ना या घटत्वावच्छिन्नप्रकारताक-शाब्दबोधोत्पत्तिः तत्प्रयोजिका इत्यर्थो लभ्यते। **सामग्र्येवेति।** एव-कारो धर्मितावच्छेदकतासम्बन्धेन योग्यताज्ञानादिघटित-समुदायस्य सामग्रीत्वं व्यवच्छिनत्ति। ननु कार्यतावच्छेदकसम्बन्धेन कार्यस्य कारणतावच्छेदकसम्बन्धेन कारणस्य वा यदधिकरणं तदेव उत्पत्त्यवच्छेदकम्। तद्धर्मावच्छिन्नायामेव कार्योत्पत्तौ तत्कार्यनिरूपिता या या कारणता तत्तदवच्छेदक-धर्माश्रयघटित-समुदायरूपसामग्र्याः प्रयोजकत्वं चेति नियमः अवश्यम् उररीकार्यः। अत एव कार्यतावच्छेदक-समवायसम्बन्धेन कार्यस्य घटस्य अधिकरणं कारणतावच्छेदक-तादात्म्य-सम्बन्धेन कारणस्य कपालस्य वा अधिकरणं यत्कपालं तदवच्छिन्ना घटत्वाश्रयस्य उत्पत्तिः भवति। तस्याम् उत्पत्तौ घटत्वावच्छिन्न-कार्यतानिरूपित-कारणतावच्छेदकीभूत-दण्डत्वाद्यवच्छिन्न-घटितसामग्र्याः प्रयोजकत्वञ्च भवति। अत एव च कपालादौ इव न वृक्षादौ घट उत्पद्यते। इत्थञ्च धर्मितावच्छेदकताया प्रत्यासत्तित्वानङ्गीकारे द्रव्यत्वे समवायेन कार्यस्य कारणस्य वा अधिकरणत्वाभावात् 'द्रव्यं घटः' इति शाब्दबोधो द्रव्यत्व उत्पद्यते इत्यादिव्यवहारः कथम् उपपद्यते? कथं वा तदुत्पत्तिः द्रव्यत्वेन अवच्छिद्येत? कथं वा तत्र सामग्र्याः प्रयोजकत्वं घटेत? इति आशङ्कायाम् आह **धर्मितावच्छेदकताया** इत्यादि। अयमाशयः - उपदर्शित-नियमघटकेन "कारणस्य वा अधिकरणम्" इत्यन्तेन धर्मः संसर्गो वा साक्षात्परम्परया वा यः कश्चित्कार्यतावच्छेदकः कारणतावच्छेदको वा तदात्मकेन संसर्गेण कार्यस्य कारणस्य वा अधिकरणं विवक्षितं यदि, येन सम्बन्धेन कार्यता तेनैव सम्बन्धेन कार्याधिकरणं, येन सम्बन्धेन कारणता तेनैव सम्बन्धेन कारणाधिकरणं वा विवक्ष्येत, तदा धर्मितावच्छेदकतायाः प्रत्यासत्तित्वपक्षे समवायस्य प्रत्यासत्तित्वपक्षे च द्रव्ये घटत्वावच्छिन्न-प्रकारताकः शाब्दबोध उत्पद्यते, घटे नीलत्वावच्छिन्नप्रकारताकः शाब्दबोध उत्पद्यते, इत्यादयो व्यवहाराः कथमपि न उपपद्येरन्। अवच्छेदकतासम्बन्धेन समवायसम्बन्धेन वा द्रव्यादेः उक्तशाब्दबोधानधिकरणत्वात् उक्तरीत्या तु नानुपपत्तिः। तथा हि समवायस्य संसर्गत्वपक्षे द्रव्यत्वाद्यवच्छिन्न-विशेष्यतायाः कार्यतावच्छेदक-कोटिप्रविष्टत्वेन परम्परया साऽपि कार्यतावच्छेदिका। तेन च सम्बन्धेन द्रव्यादौ शाब्दबोधस्य

सत्त्वात् धर्मितावच्छेदकतायाः संसर्गत्वे च तद्घटक-धर्मिताऽपि संसर्गता-वच्छेदिका। तेन च सम्बन्धेन द्रव्यादौ शाब्दबोधस्य सत्त्वात् इति अनया एव च रीत्या स्वसमवायि-संयुक्तत्व-सम्बन्धेन महौषध्यादिकं प्रति तादात्म्येन हिमालयादीनां कारणत्वम् उपेत्य 'हिमालये महौषधय उत्पद्यन्ते'। एवम् एतत्सम्बन्धेन घटादिकं प्रति तादात्म्येन कुलालगेहादेः कारणत्वम् उपेत्य 'कुलालगेहे घट उत्पद्यते' इत्यादयोऽपि व्यवहारा उपपादनीयाः। इत्थञ्च समवायस्य प्रत्यसात्तित्वपक्षे द्रव्यत्वाच्छिन्न-विशेष्यतानिरूपित-घटत्वावच्छिन्न-प्रकारताक-शाब्दबुद्धित्वरूपो यः कार्यतावच्छेदकधर्मः तद्घटकं यद्द्रव्यत्वनिष्ठम् अवच्छेदकत्वं परम्परया कार्यतावच्छेदकीभूतं तदात्मकेन सम्बन्धेन द्रव्यत्वस्य कार्याधिकरणत्वात् तदवच्छिन्नत्वम् उत्पत्तौ तस्यां सामग्र्याः प्रयोजकत्वञ्च उपपद्यते एवेति न धर्मितावच्छेदकतायाः प्रत्यासत्तित्वस्य आवश्यकता। अतो 'घटो घटः' इत्यादौ आपाद्यतावच्छेदकधर्मस्य अप्रसिद्धत्वात् न आपत्तिरिति भावः। **तादृशसामग्र्याश्च** इति। अस्य **"व्याप्यतया"** इत्यनेन **"आपादकत्वं न सम्भवति"** इत्यनेन च सम्बन्धः।

**VV-P 5.2.3:** **धर्मितावच्छेदकं निवेश्येति**। अयमभिप्रायः - 'द्रव्यं घटः' इत्यादौ समवायेन द्रव्यत्वावच्छिन्नविशेष्यताक-घटत्वावच्छिन्नप्रकारताक-शाब्दबोधं प्रति समावायेन द्रव्यत्वावच्छिन्नविशेष्यताक-घटत्वावच्छिन्नप्रकारताक-ज्ञानत्वेन योग्यताज्ञानस्य कारणत्वम्। एवं 'प्रमेयो घटः' इत्यादौ अपि इति। एवं क्रमेण समवायस्य प्रत्यासत्तित्वपक्षे घटत्वावच्छिन्नप्रकारताकयोः शाब्दबोधयोग्यताज्ञानयोः कार्यकारणभावो विशेष्यतावच्छेदकधर्माणाम् आनन्त्यात् अनन्तः स्यात्। धर्मितावच्छेदकतायाः प्रत्यासत्तित्वपक्षे तु धर्मितावच्छेकतासम्बन्धेन घटत्वावच्छिन्न-प्रकारताक-शाब्दबोधे तेन सम्बन्धेन घटत्वावच्छिन्न-प्रकारताक-ज्ञानत्वेन कारणत्वं वाच्यम्। अतो विशेष्यतावच्छेदकधर्माणाम् अनन्तत्वेऽपि तेषां कार्यतावच्छेदककोटौ कारणतावच्छेदककोटौ वा प्रवेशविरहादेक एव कार्यकारणभाव इति महालाघवम्। न च एतत्पक्षे यदा चैत्रस्य घटत्वावच्छिन्न-प्रकारताक-योग्यताज्ञानं धर्मिता-वच्छेदकता-प्रत्यात्त्या द्रव्यत्वादौ नास्ति, अस्ति च मैत्रस्य तदापि चैत्रस्य द्रव्यत्वादौ धर्मितावच्छेदकताप्रत्यासत्त्या घटत्वावच्छिन्नप्रकारताक-शाब्दबोधापत्तिः। मैत्रीयज्ञानस्य तथाविधस्य धर्मितावच्छेदकतासम्बन्धेन द्रव्यत्वादौ सत्त्वात् समवायस्य प्रत्यासत्तित्वे तु न आपत्तिः। तत्पुरुषे पुरुषान्तरीयज्ञानस्य असमवेतत्वात्। अतः तद्वारणाय धर्मितावच्छेदकतासम्बन्धेन तत्पुरुषीयघटत्वा-वच्छिन्नप्रकारक-शाब्दबोधं प्रति तेन सम्बन्धेन तत्पुरुषीयघटत्वावच्छिन्न-प्रकारक-ज्ञानत्वेन कारणत्वं वाच्यम्। एवञ्च विशेष्यतावच्छेदकधर्माणाम् इव पुरुषाणामपि

आनन्त्यात् एतत्पक्षेऽपि कार्यकारणभाव-आनन्त्यमेव इति पक्षद्वयेऽपि न्यूनाधिक-भावः परिच्छेत्तुम् अशक्य एवेति लाघव-गौरव-परिज्ञानमेव दुर्घटमिति वाच्यम्। चैत्रादिषु दशसु पुरुषेषु घटादि-दशविशेष्यक-द्रव्यप्रकारक-शाब्दबोधस्थले लाघव-गौरव-परिज्ञाने हि अन्यत्रापि तत्परिज्ञानं सुकरमेव। तथा हि समवायस्य संसर्गत्वे 'घटो द्रव्यम्' इति शाब्दबुद्धौ 'घटो द्रव्यम्' इति योग्यताज्ञानं समवायेन कारणम्। एवं 'पटो द्रव्यम्' इत्यत्रापि इति। एवं क्रमेण दशविध-विशेष्यप्रयुक्ता दशकार्यकारणभावाः। एवं घटादिषु इव पुरुषेष्वपि द्रव्यान्वयस्य योग्यतया 'समवायेन द्रव्यं चैत्रः' इति शाब्दबुद्धौ 'द्रव्यं चैत्रः' इति योग्यताज्ञानं समवायेन कारणम्। एवं 'द्रव्यं मैत्रः' इत्यत्रापि इति। एवं रीत्या दशविधपुरुषप्रयुक्ता दशकार्यकारणभावाः। सर्वेषाञ्च सङ्कलने विंशतिः कार्यकारणभावाः पर्यवसिताः। धर्मितावच्छेदकतापक्षे तु धर्मितावच्छेदकतासम्बन्धेन चैत्रीयद्रव्यत्वावच्छिन्न-अभेद-सम्बन्धावच्छिन्न-प्रकारताक-शाब्दबोधे तेन सम्बन्धेन चैत्रीय-द्रव्यत्वावच्छिन्न-अभेद-सम्बन्धावच्छिन्न-प्रकारताक-योग्यताज्ञानं कारणमिति रीत्या दशविधपुरुषप्रयुक्ता दशैव कार्यकारणभावाः। न तु विशेष्य-दशभेदप्रयुक्ता अपि इति महल्लाघवम्। इत्थञ्च धर्मितावच्छेदकतायाः प्रत्यासत्तित्वे सिद्धे घटत्वावच्छिन्न-प्रकारताक-ज्ञानत्वरूप-कारणतावच्छेदकस्य द्रव्यत्वावच्छिन्नविशेष्यक-घटत्वावच्छिन्नप्रकारक-ज्ञान इव घटत्वावच्छिन्न-प्रकारक-घटत्वावच्छिन्न-विशेष्यक-ज्ञानेऽपि सत्त्वात् तद्घटित-समुदायस्यापि सामग्रीत्वं सम्भवति इति घटत्वे धर्मितावच्छेदकता-प्रत्यासत्त्या घटत्वावच्छिन्न-प्रकारक-शाब्दबोधः कथं न इति भावः।

**VV-P 5.2.4:** ननु उक्तरीत्या योग्यताज्ञानस्य विषयनिष्ठ-प्रत्यासत्त्या हेतुत्वोपगमे तस्य उपस्थिति-सहकारित्वं न घटेत। उपस्थितेः हि समवायेन तद्-धर्मावच्छिन्न-विषयताक-शाब्दबोधे समवायेन तद्-धर्मप्रकारकोपस्थितित्वेनैव कारणत्वं वाच्यम्। तत्तद्-धर्मभेदेन कार्यकारणभाव-अननुगमेऽपि प्रकारान्तरस्य निर्वक्तुम् अशक्यत्वात्। तथा च द्रव्यपदजन्योपस्थिति-विरहेऽपि 'प्रमेयो घटः' इत्यादौ घटत्वावच्छिन्न-प्रकारताक-शाब्दबोधोत्पत्त्या घटत्वावच्छिन्न-प्रकारक-शाब्दबोधोत्पत्तौ द्रव्यपदजन्योपस्थितेः अकिञ्चित्करत्वेन विनापि द्रव्यपदजन्यो-पस्थितिं 'द्रव्यं घटः' इति शाब्दबोधापत्तिः इति आशङ्कते न चेति। **वाच्यमिति।** परेण अन्वयः। **धर्मितावच्छेदकनिष्ठ-प्रत्यासत्त्येति।** धर्मितावच्छेदक-निष्ठा या अवच्छेदकत्वरूपा प्रत्यासत्तिः तया इत्यर्थः। प्रत्यासत्तिः सम्बन्धः। **प्रत्यासन्नेति** = सम्बद्धेत्यर्थः। **शाब्दबोधापत्तिरिति।** समवायस्य प्रत्यासत्तित्वे तु द्रव्यत्वावच्छिन्न-विशेष्यक-घटत्वावच्छिन्नप्रकारक-शाब्दबुद्धित्वस्य कार्यतावच्छेदकतया तदाश्रयः शाब्दबोधो द्रव्यपदजन्योपस्थितिं विना न क्वचिदपि उदेतीति। भवति

तदुपस्थिति-योग्यताज्ञानयोः सहकारित्वमिति भावः। **आत्मनिष्ठप्रत्यासत्येति** = समवाय-सम्बन्धेन इत्यर्थः। **द्रव्यत्वाद्यवच्छिन्नोपस्थितिमिति।** अवच्छिन्नपदमात्र-आश्रयार्थकम्। तथा च द्रव्यत्वाश्रयविषयकोपस्थितिम् इत्यर्थः। द्रव्यत्वप्रकारकोपस्थितिमिति यावत्। अथ तद्धर्मावच्छिन्नकार्योत्पत्तिः तद्धर्मावच्छिन्नकार्यं प्रति यद्यद्धर्मावच्छिन्नं येन येन सम्बन्धेन कारणं तत्तद्धर्मावच्छिन्नकार्यस्य कार्यतावच्छेदकसम्बन्धेन अधिकरणे तत्तद्धर्मावच्छिन्नस्य कारणस्य कारणतावच्छेदकीभूतेन तेन तेन सम्बन्धेन वर्तमानस्य पूर्वक्षणवृत्तित्वम् अपेक्षते। यस्य यस्य च वृत्तित्वम् अपेक्षितं तस्य तस्य परस्परसहकारित्वञ्च भवति इति एतत्सार्वजनीनम्। भवति च घटत्वावच्छिन्नं प्रति तादात्म्येन कपालत्वावच्छिन्नस्य समवायेन कपालसंयोगत्वावच्छिन्नस्य स्वभ्रमिजन्यत्वादिसम्बन्धेन चक्रत्वाद्यवच्छिन्नस्य च हेतुत्वम्। अतो घटत्वावच्छिन्नकार्यस्य समवायेन अधिकरणे कपाले कपालत्वावच्छिन्नस्य तादात्म्येन कपालसंयोगत्वावच्छिन्नस्य समवायेन चक्रत्वावच्छिन्नस्य स्वभ्रमिजन्यत्वेन। एवं क्रमेण सर्वस्यैव कारणस्य स्व-स्व-कारणतावच्छेदक-सम्बन्धेन वर्त्तमानत्वे सत्येव घटत्वावच्छिन्नस्य उत्पत्तिः इति। इत्थञ्च घटत्वावच्छिन्नप्रकारताक-शाब्दबुद्धित्वावच्छिन्नं प्रति येन येन यद्यद्धर्मावच्छिन्नं कारणं तत्तद्धर्मावच्छिन्नं घटत्वावच्छिन्नप्रकारताक-शाब्दबोधरूपकार्यस्य धर्मितावच्छेदकतासम्बन्धेन अधिकरणे द्रव्यत्वे यदि वर्तमानं स्यात्, स्यात् तदा 'द्रव्यं घटः' इति शाब्दबोधः, तेषां परस्परस्य सहकारित्वञ्च। न च एतदस्ति। उपस्थितेः समवायेन कारणत्वे द्रव्यपदजन्योपस्थितेः समवायेन द्रव्यत्वे वृत्तित्वविरहात्। तथा च अनया रीत्या शाब्दबोधानुपपत्तेः एव सम्भवे आपत्तिप्रदर्शनम् अयुक्तम्। एवमनया एव रीत्या सहकारित्वस्य अनुपपत्तिसम्भवे प्रमेयत्वादौ व्यभिचारं प्रदर्श्य तदनुपपत्तिप्रदर्शनमपि अयुक्तम्। किञ्च एवं घटत्वप्रकारकोपस्थितिरपि 'समवायेन द्रव्यत्वे नास्ति' इति। तस्या अपि असहकारित्वं प्रदर्शयितुम् उचितमिति चेत्? मैवम्। तद्धर्मावच्छिन्नकार्योत्पत्तिः तद्धर्मव्यापका यावन्तः कार्यतावच्छेदकधर्माः तत्तदाश्रयकार्यं प्रति यद्यद्धर्मावच्छिन्नं कारणं तत्तद्धर्मावच्छिन्नकारणस्य स्वस्वकार्यतावच्छेदकसम्बन्धेन तत्तद्धर्माश्रयकार्यस्य अधिकरणे कारणतावच्छेदकसम्बन्धेन सम्बद्धस्य पूर्वक्षणवृत्तित्वमपेक्षते इति अस्यापि नियमस्य आवश्यकत्वात्। अन्यथा विषयतासम्बन्धेन प्रत्यक्षं प्रति तादात्म्येन विषयस्य कारणत्वेन त्वङ्-मनो-योगादेः ज्ञानसामान्यं प्रति समवायेनैव कारणत्वेन च विषयतासम्बन्धेन प्रत्यक्षाधिकरणे विषये घटादौ त्वङ्-मनो-योगादेः समवायेन वृत्तित्वविरहेण तस्य विषयसहकारित्वं न उपपद्येत। उक्तरीत्या तु उपपद्यते प्रत्यक्षत्वव्यापकीभूतज्ञानत्वाश्रयकार्यं प्रति कारणस्य त्वङ्-मनो-योगस्य स्वकार्यतावच्छेदकीभूत-समवायसम्बन्धेन प्रत्यक्षा-

धिकरणे आत्मनि कारणतावच्छेदकीभूत-समवायसम्बन्धेन पूर्वक्षणवृत्तित्वस्य सत्त्वात्। तथा च घटत्वप्रकारकोपस्थितिमन्तरेण घटत्वावच्छिन्न-प्रकारक-शाब्दबुद्धित्वावच्छिन्नस्य न क्वापि उत्पत्तिसम्भवः। घटत्वावच्छिन्न-प्रकारताक-शाब्दबुद्धित्वव्यापकम् उपस्थितिकार्यतावच्छेदकीभूतं यद्घटत्वावच्छिन्न-विषयताक-शाब्दबुद्धित्वं तदाश्रयकार्यं प्रति कारणस्य घटोपस्थितेः स्वकार्यतावच्छेदक-समवाय-सम्बन्धेन तदाश्रयकार्यस्य अधिकरणे आत्मनि पूर्वक्षणावच्छेदेन वृत्तित्वस्य उक्तशाब्दबोधोत्पत्तौ अपेक्षितत्वात्। द्रव्यत्वप्रकारकोपस्थिति-कार्यतावच्छेदकस्य द्रव्यत्वावच्छिन्न-विषयक-शाब्दबुद्धित्वस्य घटत्वावच्छिन्न-प्रकारक-शाब्दबुद्धित्व-अव्यापकत्वात् न द्रव्यत्व-प्रकारकोपस्थितेः पूर्वकालसत्त्वापेक्षा। अतः तद्विरहेऽपि घटत्वावच्छिन्न-प्रकारक-शाब्दबोधापत्तिः सम्भवतीति सोल्लिखिता। इत्थञ्च कारणतावच्छेदक-सम्बन्धेन यत्कारणाधिकरणं तदवच्छेदेन कार्योत्पत्ति-प्राक्क्षण-वृत्तित्वाभाव एव सहकारिताविरह-प्रयोजको वाच्य इति सर्वम् अवदातम्। **तादृशप्रमेयत्वेत्यादि।** तादृशपदम् आत्मनिष्ठ-प्रत्यासत्त्या हेतुभूत-इत्यर्थकम्। तस्य उपस्थितौ अन्वयः। **अकिञ्चित्करत्वादिति।** कार्यप्रतिरोध-अक्षमत्वादित्यर्थः।

**VV-P 5.2.5:** **शाब्दबोधे हेतुत्वोपगमादिति।** अथ उक्तरीत्या उपस्थिति-सहकारित्वस्य योग्यताज्ञाने उपपत्तावपि तत्र आकाङ्क्षाज्ञान-सहकारित्वानुपपत्तिः अस्त्येव। 'घटो द्रव्यम्' इति आकाङ्क्षाज्ञानमन्तरेणापि घटत्वावच्छिन्न-प्रकारक-योग्यताज्ञानस्य 'प्रमेयो घटः' इत्यादौ फलजनकत्वात् 'घटो द्रव्यम्' इति आकाङ्क्षाज्ञानस्य घटत्वावच्छिन्न-प्रकारताक-शाब्दबोधोत्पत्तौ अकिञ्चित्करतया तद्विरहेऽपि योग्यताज्ञानादिना 'घटो द्रव्यम्' इति शाब्दबोधापत्तिः इति चेत्? न। तद्धर्मावच्छिन्नकार्योत्पत्तिः तद्धर्मव्याप्य-किञ्चिद्धर्मावच्छिन्नकार्यं प्रति यद्यद्धर्मा-वच्छिन्नं कारणं तत्तद्धर्मावच्छिन्नस्य स्वस्वकार्यतावच्छेदकसम्बन्धेन तद्धर्मावच्छिन्न-कार्याधिकरणे कारणतावच्छेदकसम्बन्धेन वर्त्तमानस्य पूर्वक्षणवृत्तित्वम् अपेक्षते इत्यस्य व्यापकधर्मावच्छिन्नकार्योत्पत्तौ व्याप्यधर्मावच्छिन्नसामग्र्या अपेक्षितत्वनियम-स्वरूपभूतस्यापि आवश्यकत्वेन प्रकृते घटत्वावच्छिन्न-प्रकारताक-शाब्दबोधत्व-व्याप्यो यो घटत्वावच्छिन्न-प्रकारता-निरूपित-द्रव्यत्वावच्छिन्न-विशेष्यताक-शाब्दबोधत्वादिधर्मो 'घटो द्रव्यम्' इत्याद्याकाङ्क्षाज्ञान-जन्यतावच्छेदकीभूतः तदवच्छिन्न-'घटो द्रव्यम्'-इत्याद्याकारकः। शाब्दबोधरूप-कार्यं प्रति 'घटो द्रव्यम्' इत्याद्याकाङ्क्षाज्ञानत्वावच्छिन्नस्य कारणस्य स्वनिरूपिता या कार्यता तदवच्छेदको यः समवायसम्बन्धः तेन घटत्वावच्छिन्न-प्रकारताक-शाब्दबोधरूप-कार्यस्य अधिकरणे आत्मनि कारणतावच्छेदक-समवाय-सम्बन्धेन तदुत्पत्ति-प्राक्क्षणावच्छेदेन वृत्तित्वविरहेण घटत्वावच्छिन्न-प्रकारताक-शाब्दबोधापत्तेः असम्भवात्। **अथ एवमपि घटत्वावच्छिन्न-प्रकारताक-शाब्दबोधत्व-व्याप्यीभूतं**

यद्घटत्वावच्छिन्न-प्रकारता-निरूपित-प्रमेयत्वावच्छिन्न-विशेष्यताक-शाब्दबुद्धित्वं तदवच्छिन्नकार्यस्य कारणं 'घटः प्रमेयः' इति आकाङ्क्षाज्ञानमपि। तस्य समवायेन आत्मनि सत्त्वे प्रमेयत्व इव द्रव्यत्वेऽपि घटत्वावच्छिन्न-प्रकारताक-शाब्दबोधापत्तिः। न च द्रव्यत्वे प्रकारतासम्बन्धेन उपस्थित्यभावादेव न दोष इति वाच्यम्। 'प्रमेयो घटः', 'द्रव्यं पटः' इति समूहालम्बन-आकाङ्क्षाज्ञान-दशायां द्रव्यपद-जन्याया उपस्थितेः प्रकारतासम्बन्धेन द्रव्यत्वे सत्त्वात्। 'द्रव्यं घटः', 'प्रमेयो घटः', 'द्रव्यं पट' इति समूहालम्बन-शाब्दबोधापत्तौ बाधकाभावात् इति चेत्? न। घटत्वावच्छिन्न-प्रकारताक-द्रव्यत्वावच्छिन्न-विशेष्यताक-शाब्दबुद्धित्वावच्छिन्नं प्रति 'घटो द्रव्यम्' इत्यादि-वाक्य-धर्मिकस्य इदं वाक्यं घटान्वित-द्रव्यपरमिति तात्पर्यज्ञानस्यापि कारणतया तस्य स्वनिरूपित-कार्यतावच्छेदकीभूत-समवाय-सम्बन्धेन घटत्वावच्छिन्न-प्रकारताक-शाब्दबोध-रूपकार्यस्य अधिकरणे आत्मनि समवायेन उक्तशाब्दबोधोत्पत्तिप्राक्क्षणे वृत्तित्वविरहेण आपत्त्यसम्भवात्। न च स्वग्राहक-प्रकरणज्ञानेन अन्यथासिद्धं तात्पर्यज्ञानं न हेतुरिति वाच्यम्। प्रकरण-ज्ञानस्यानुगतरूपेण कारणत्वासम्भवात्। तात्पर्यज्ञानस्य कारणताया आवश्यक-त्वादिति। तात्पर्यज्ञानस्य अहेतुत्वपक्ष-साधारणी तु उक्तापत्तिवारण-रीतिस्तु **गूढार्थतत्त्वालोके** प्रदर्शिता अस्मद्गुरुचरणैः। **गदाधरभट्टाचार्याणान्तु** सर्वत्रैव शाब्दबोधे तात्पर्यज्ञानस्य कारणत्वम् अभिमतम् इति अग्रिमबहुस्थल-लेख-स्वारस्यात् प्रतीयते। अत एव तात्पर्यज्ञानेनैव निर्वाहात् समभिव्याहारज्ञानस्य कारणत्वं निराकरिष्यते इति बोध्यम्।

**VV-P 5.2.6:** ननु उपस्थितिः प्रकारतासम्बन्धेन शाब्दबुद्धित्वरूप-सामान्य-धर्ममात्रावच्छिन्नं प्रति हेतुः। न तु घटत्वावच्छिन्न-प्रकारताक-शाब्दबुद्धित्वरूप-विशेष-धर्मावच्छिन्नं प्रति। अतः द्रव्यत्वप्रकारकोपस्थितिविरहेऽपि योग्यताज्ञानादिना तत्र धर्मितावच्छेदकतासम्बन्धेन घटत्वावच्छिन्न-प्रकारताक-शाब्दोत्पत्तौ बाधकाभाव इत्यत आह **येन सम्बन्धेनेत्यादि**। तथा च धर्मितावच्छेदकता-सम्बन्धेन घटत्वावच्छिन्न-प्रकारताक-शाब्दबुद्धित्वावच्छिन्नं प्रति प्रकारतासम्बन्धेन शाब्दबुद्धि-त्वावच्छिन्नं व्यापकम्। अतः प्रकारतासम्बन्धेन शाब्दोत्पादकसामग्र्याः प्रकारता-सम्बन्धेन उपस्थित्यादिघटिताया अपि धर्मितावच्छेदकता-सम्बन्धेन घटत्वावच्छिन्न-प्रकारताक-शाब्दोत्पत्तौ अपेक्षितत्वात् न आपत्तिः। तदेतद् आह **प्रकारता-सम्बन्धेन** इत्यादिना। ननु एवं प्रकारतासम्बन्धेन घटत्वे उपस्थितिविरहदशायामपि धर्मितावच्छेदकता-सम्बन्धेन द्रव्यत्वे घटत्वावच्छिन्न-प्रकारताक-शाब्दबोधापत्तिः दुर्वारा। उक्तरीत्यनुसरणेऽपि घटत्वप्रकारकोपस्थित्यपेक्षणस्य अप्राप्तत्वादिति चेत्? न। 'द्रव्यं घटः' इति शाब्दबोधो यथा धर्मितावच्छेदकता-सम्बन्धेन द्रव्यत्वे उत्पद्यते तथा अयं प्रकारतावच्छेदकतासम्बन्धेन घटत्वेऽपि उत्पद्यते एव। एकत्रैव

उत्पद्यते इत्यत्र विनिगमकाभावात्। तथा च प्रकारतावच्छेदकतासम्बन्धेन द्रव्यत्वावच्छिन्न-विशेष्यताक-शाब्दबोधं प्रति तेन सम्बन्धेन द्रव्यत्वावच्छिन्न-विशेष्यताक-ज्ञानत्वेनापि योग्यताज्ञाने कारणत्वस्य वाच्यतया प्रकारतावच्छेदकता-सम्बन्धेन द्रव्यत्वावच्छिन्न-विशेष्यताक-शाब्दबोधस्य उत्पत्तौ तद्व्यापकीभूतस्य प्रकारतासम्बन्धेन शाब्दबोधस्य उत्पादप्रयोजिकायाः प्रकारतासम्बन्धेन उपस्थिति-घटितसामग्र्या अपि अपेक्षितत्वात् प्रकारतासम्बन्धेन घटत्वे उपस्थितिविरहे तदवच्छिन्न-प्रकारताक-शाब्दबोधस्य उत्पत्तेरसम्भवादिति।

**VV-P 5.2.7:** उपस्थिति-शाब्दबोधयोः आत्मनिष्ठप्रत्यासत्त्या हेतुहेतुमद्भाव-वादी पुनः प्रत्यवतिष्ठते **न च यत्रेति। तत्र द्रव्यत्वाद्यवच्छिन्नेति।** तदुपस्थितेः प्रकारतासम्बन्धेन द्रव्यत्वेऽपि सत्त्वात् इत्यादि। **हेतुता वाच्येति।** एवं सति प्रकृते द्रव्यत्वावच्छिन्न-विशेष्यक-वृत्तिज्ञानजन्य-द्रव्यत्व-प्रकारक-उपस्थितेः अभावात् न आपत्तिः इति भावः। एवञ्च अत्र प्रकारतासम्बन्धेन तद्धर्मावच्छिन्न-विषयक-शाब्दबोधं प्रति प्रकारतासम्बन्धेन उक्तवृत्तिज्ञानजन्य-तद्धर्मप्रकारकोपस्थितित्वेन न कारणत्वं वाच्यम्। तथा सति चैत्रस्य द्रव्यत्वप्रकारकोपस्थितिसत्त्वे मैत्रस्य द्रव्यत्वावच्छिन्न-विषयक-शाब्दबोधापत्तेः। तदीयोपस्थितेः प्रकारतासम्बन्धेन द्रव्यत्वे सत्त्वात्। अतः तद्दोषवारणाय तत्तत्पुरुषीयत्वस्य कार्यतायाः कारणतायाश्च अवच्छेदककोटौ प्रवेशनीयतया विषय-पुरुषयोः उभयोः एव प्रवेशात् महागौरवम्। अतः समवायप्रत्यासत्त्यैव कार्यकारणभावो वाच्य इति आह **तथा चेत्यारभ्य बाहुल्यप्रसङ्ग-**इत्यन्तेन।

**VV-P 5.2.8:** **स्वजनकज्ञानीयेत्यादि।** स्वपदम् उपस्थितिपरम्। जनकत्वम् अत्र अव्यवहितपूर्ववर्तित्वमात्रम्। अधिकप्रवेशे प्रयोजनाभावात्। **अवच्छेदकता-विशिष्टेति।** अत्र उक्तावच्छेदकतामात्रस्य संसर्गत्वे यत्र 'द्रव्यं द्रव्यपदशक्यं', 'प्रमेयं प्रमेयपदशक्यम्' इत्याकारक-समूहालम्बन-वृत्तिज्ञानं प्रमेयं प्रमेयपदशक्यम् इत्यंशे अप्रामाण्यज्ञानास्कन्दितं तत्र तदनन्तरं जायमानोपस्थितिः द्रव्यत्वमात्र-प्रकारिकापि स्वजनकज्ञानीया या वृत्तिनिष्ठ-प्रकारतानिरूपित-विशेष्यतावच्छेदकता तत्सम्बन्धेन द्रव्यत्व इव प्रमेयत्वेऽपि अस्ति। अतः प्रमेयत्वेऽपि प्रकारतासम्बन्धेन शाब्दबोधापत्तिः। अत उक्तावच्छेदकताविशिष्टप्रकारत्वस्य संसर्गत्वम् उक्तम्। वैशिष्ट्यञ्च स्वप्रयोज्यत्व-सम्बन्धेन उपस्थितीया यादृशसम्बन्धावच्छिन्ना यादृश-रूपावच्छिन्ना निरवच्छिन्ना वा या विषयता तस्याः तादृशसम्बन्धावच्छिन्ना तादृश-रूपावच्छिन्ना निरवच्छिन्ना वा या वृत्तिज्ञानीयविषयता सा प्रयोजिका भवतीति स्वीकारात्। तथा च प्रकृते स्वप्रयोज्यत्व-सम्बन्धेन उक्तावच्छेदकता-विशिष्टा या प्रकारता तत्सम्बन्धेन उपस्थितिः द्रव्यत्वनिष्ठा एव, न तु प्रमेयत्वनिष्ठापीति

सदोष इति भावः। **हेतुतां स्वीकृत्येति**। प्रकारतासम्बन्धेन शाब्दबोधं प्रति इति शेषः।

**VV-P 5.2.9:** ननु 'घटो द्रव्यम्' इति शाब्दबोधः प्रकारतासम्बन्धेन घटेऽपि अस्ति। तत्र च प्रकारतासम्बन्धेन उपस्थितिः नास्ति। घटपदात् घटविशेष्यिकाया एव उपस्थितेः जायमानत्वात् इति आशङ्कते - **न च पदार्थेऽपीति**। पदार्थश्च अत्र पदवृत्तिज्ञानीय-मुख्यविशेष्यता। **प्रकारनिष्ठप्रत्यासत्त्येति** = प्रकारतासम्बन्धेन इत्यर्थः।

**VV-P 5.2.10: परामर्शकारणतेत्यादि**। तत्रायं विचारः - धर्मितावच्छेदकता-सम्बन्धेन तल्लिङ्गकानुमितौ धर्मितावच्छेदकतासम्बन्धेन तल्लिङ्गक-परामर्शत्वेन कारणत्वे यत्र भाविज्ञानम् अप्रमा इति अप्रामाण्यज्ञानोत्तरं 'वह्निव्याप्यधूमवान् पर्वतः' इति परामर्शः तदनन्तरं वह्निव्याप्य-आलोकवद्द्रव्यमिति परामर्शः ततः 'पर्वतो वह्निमान्', 'द्रव्यं वह्निमद्' इति समूहालम्बनानुमितिः। तत्र तस्या धूम-आलोक-उभयलिङ्गिकाया द्रव्यत्व-पर्वतत्व-उभयस्मिन्नेव धर्मितावच्छेदकता-सम्बन्धेन सत्त्वात् उक्तपरामर्शयोः एकतरस्यापि उभयत्र तेन सम्बन्धेन असत्त्वाद् व्यभिचारः। अतः तल्लिङ्गक-परामर्श-धर्मितावच्छेदकता-विशिष्टावच्छेदकतायाः कार्यतावच्छेदक-सम्बन्धत्वं वाच्यम्। तथा च धूमलिङ्गकपरामर्श-धर्मितावच्छेदकतायाः पर्वतत्वनिष्ठायाः स्वप्रयोज्यत्वसम्बन्धेन वैशिष्ट्यं पर्वतत्वनिष्ठायामेव अवच्छेदकतायाम्। अतः तादृशावच्छेदकतासम्बन्धेन अनुमितेः पर्वतत्व एव सत्त्वम्। न तु द्रव्यत्वेऽपि इति। एवम् आलोकलिङ्गकानुमितेः अपि उक्तसम्बन्धेन द्रव्यत्व एव सत्त्वं न तु पर्वतत्वेऽपि, इति न दोषः। एवमेव प्रकृतेऽपि स्वजनकोपस्थितीय-प्रकारताविशिष्ट-प्रकारतायाः कार्यतावच्छेदक-सम्बन्धत्वम्। वैशिष्ट्यञ्च स्वप्रयोज्यत्वसम्बन्धेन वक्तव्यम्। अतो न दोष इति भावः।

**VV-P 5.3.1:** **विशेषणीये** इति। तथा च तद्धर्मनिष्ठ-निरवच्छिन्नावच्छेदकताक-प्रकारताक-विशेष्यता-निरूपित-निरवच्छिन्न-अवच्छेदकता-सम्बन्धेन शाब्दबुद्धौ तद्धर्मभेदः कारणमिति पर्यवसितम्। विधेयांशे अधिकावगाहिनः शाब्दबोधस्य प्राचामनभिमतत्वात् आह **प्रामाणिकत्वे** इति। **अन्यत्रदर्शित**-इति। अयं भावः - तद्धर्मनिष्ठ-निरवच्छिन्नावच्छेदकता-भिन्न-अवच्छेदकत्वानिरूपित-प्रकारताकविशेष्यतानिरूपित-निरवच्छिन्नावच्छेदकतासम्बन्धेन शाब्दबुद्धित्वावच्छिन्नं प्रति तद्धर्मभेदस्य कारणत्वं वाच्यम्। तथा च घटत्वावच्छिन्न-विशेष्यताक-नीलघटत्वावच्छिन्न-प्रकारताक-शाब्दबोधस्य उक्तकार्यतावच्छेदकानाक्रान्ततया न अनुपपत्तिरिति। अथैवमपि 'नीलघटो नीलघटः' इति शाब्दबोधस्य आपत्तिः। तस्यापि उक्तकार्यतावच्छेदकानाक्रान्तत्वेन उक्तभेदात्मककारणस्य अनपेक्षितत्वात्।

न च तद्रूपवृत्ति-प्रकारता-निरूपित-विशेष्यतावच्छेदकतात्वावच्छिन्न-पर्याप्त्य-नुयोगितावच्छेदकत्व-सम्बन्धेन शाब्दबुद्धौ तद्धर्मभेदः कारणम्। वृत्तित्वञ्च स्व-निरूपितावच्छेदकतात्व-अवच्छिन्न-पर्याप्ति-अनुयोगितावच्छेदकत्व-सम्बन्धेन। अवच्छेदकत्वञ्च साक्षात्परम्परासाधारणं विवक्षणीयम्। तथा च तथाविधानुयोगितावच्छेदकत्व-सम्बन्धेन शाब्दबोधस्य नीलत्व-नीलघटत्व-एतद्गत-समुदायत्वे वृत्तित्वम्। तत्र तत्समुदायत्वभेदस्य असत्त्वात् न आपत्तिः इति वाच्यम्। 'नीलघटो घटः' इति उद्देश्यांशे अधिकावगाहि-शाब्दबोधापत्तेः नीलत्व-नीलघटत्व-एतत्-समुदायत्वे घटत्वगतैकत्वभेदस्य सत्त्वादिति चेत्? अत्र अस्मद्गुरुचरणाः। विशेष्यतात्व-सम्बन्धेन शाब्दबुद्धौ प्रकारतावदन्यत्वं हेतुः। प्रकारतावत्ता च स्वनिरूपितत्व-स्वनिरूपितावच्छेदकतात्वव्यापकत्वोभयसम्बन्धेन। व्यापकता च स्वनिरूपितावच्छेदकतावत्त्वसम्बन्धेन। अवच्छेदकतावत्ता च (१)स्वसामानाधिकरण्य-(२)स्वावच्छेदकसम्बन्धावच्छिन्नत्व-(३)स्वानवच्छेदकानवच्छिन्नत्व-(४)स्ववृत्तित्व-एतच्चतुष्टय-सम्बन्धेन। वृत्तित्वञ्च स्वानवच्छेदकानवच्छिन्नत्व-सम्बन्धेनेति प्राहुः। तथा च 'नीलो घटः' इत्यादौ विशेष्यतात्व-सम्बन्धेन शाब्दबोधो घटत्वावच्छिन्न-विशेष्यतायाम्। तत्र नीलत्वावच्छिन्न-प्रकारतायाः स्वनिरूपितत्व-सम्बन्धेन सत्त्वेऽपि न स्वनिरूपितावच्छेदकतात्व-व्यापकत्व-सम्बन्धेन सत्त्वम्। घटत्वावच्छिन्न-विशेष्यतायाः स्वनिरूपितावच्छेदकतावत्त्व-सम्बन्धेन नीलत्व-निष्ठावच्छेदकतायाम् असत्त्वात् नीलत्वनिष्ठावच्छेदकत्व- घटत्वनिष्ठावच्छेदकत्वयोः सामानाधिकरण्यविरहात्। अतः प्रकारतावदन्यत्वसत्त्वात् न अनुपपत्तिः। न च उक्तप्रकारतावदन्यत्वे हेतुत्वस्य अभिमतत्वे **"स स"** (VV-5.3.2) इत्यादिवाक्यात् इत्यारभ्य **"निरवच्छिन्नत्वनिवेशोऽपि पूर्ववद्बोध्य"** (VV-5.3.3) इत्यत्र ग्रन्थस्य अनुत्थानापत्तिः। तद्-दोषस्यापि अनेनैव कार्यकारणभावेन वारणादिति वाच्यम्। तत्पर्यन्तस्यापि अत्रैव तात्पर्यादिति।

**VV-P 5.3.2:** इत्थञ्च **'स स'** इत्यादिग्रन्थस्तु यथाश्रुतरीत्या एवं व्याख्येयः। तथा च तद्धर्मनिष्ठ-**'स स' इत्यादीति**। अत्र तत्पदद्वयं जातिमद्बोधकम्। तथा च तद्धर्मनिष्ठ-निरवच्छिन्नावच्छेदकता-भिन्नावच्छेदकत्वानिरूपित-प्रकारताक-विशेष्यता-निरूपित-निरवच्छिन्नावच्छेदकता-सम्बन्धेन शाब्दबुद्धौ तद्धर्मभेदस्य कारणत्वोक्तावपि 'जातिमान् जातिमान्' इत्यस्य न वारणम्। तद्धर्मपदेन घटत्वस्य परिग्रहे तन्निष्ठावच्छेदकताक-प्रकारताक-विशेष्यता-निरूपित-अवच्छेदकत्वाश्रये पटत्वादौ घटत्वभेदसत्त्वात् इति भावः। अथ उक्तभेदस्य कारणत्वेऽपि 'दण्डवान् दण्डवान्' इत्यादौ शाब्दबोधापत्तिः। तथा हि मतुवर्थः सम्बन्धी। सम्बन्धश्च अत्र संयोगः। तत्र संयोगांशे दण्डप्रतियोगिकत्वस्य प्रतियोगिता-निरूपकत्व-सम्बन्धेन दण्डस्य वा विशेषणत्वात् दण्डत्वेन दण्डस्य संयोगत्वस्य स्वरूपतः संयोगनिष्ठावच्छेदकताया

**VV-P 5.3.3:** तत्र तद्धर्मपदेन दण्डस्य परिग्रहे तदवच्छिन्नावच्छेदकता-निरूपित-प्रकारताक-विशेष्यतावच्छेदकताश्रये संयोगत्वे दण्डभेदस्य सत्त्वात्। एवं संयोगत्वस्य परिग्रहे तद्भेदस्य दण्डे सत्त्वात् इति आह - **एवं दण्डवानित्यादि। दण्डसंयोगत्वादि**-इति। दण्ड-संयोगत्व-उभयादि-इत्यर्थः। आदिपदेन स्थलान्तर-परिग्रहः। यत्र प्रकारतावच्छेदक-विशेष्यतावच्छेदकयोः एकतरकोटौ स्वरूपतो दण्डत्वस्य अवच्छेदकत्वम्। अपरत्र किञ्चिद्धर्मपुरस्कारेण तस्य अवच्छेदकत्वं तत्र शाब्दबोधस्य इष्टत्वात् आह - **निरवच्छिन्नत्वनिवेशोऽपीति।**

**VV-P 5.4.1-4: लाघवादिति।** लाघवञ्च अनुपदमेव स्फुटीभविष्यति। ननु एवमपि घटत्वान्यवृत्तिविषयताश्रये घटे घटत्वभेदस्य सत्त्वात् घटो इत्यादौ आपत्तिस्तदवस्थेत्यत आह - **एवञ्चेत्यादि।** तथा च घटत्वावच्छिन्न-प्रकारता-निरूपित-विशेष्यतावच्छेदकतासम्बन्धेन शाब्दबोधाधिकरणेषु द्रव्यत्वादिषु घटत्वा-न्यवृत्तिविषयता-सम्बन्धेन ज्ञानमपि अस्ति इत्यत उक्तावच्छेदकत्व-सम्बन्धेन शाब्दबोधस्य उक्तविषयता-सम्बन्धेन ज्ञानं व्यापकम्। अत उक्तावच्छेदकता-सम्बन्धेन शाब्दबोधस्य उत्पत्तौ उक्तविषयतासम्बन्धेन तद्व्यापकीभूतं यज्ज्ञानं तदुत्पादकसामग्र्या अपि घटत्वभेदघटिताया अपेक्षणाद् द्रव्यत्वादौ शाब्दबोध उपपद्यते। घटत्वान्यवृत्ति-विषयतासम्बन्धेन व्यापकस्य ज्ञानस्य या घटत्वभेद-घटिता सामग्री घटत्वे तदभावादेव न घटत्वावच्छिन्न-प्रकारतानिरूपित-विशेष्यता-वच्छेदकता-सम्बन्धेन घटत्वे शाब्दबोध इति भावः। ननु प्रकारतावच्छेदक-विशेष्यतावच्छेदकयोः एकतरकोटौ स्वरूपतो घटत्वम् अपरत्र प्रमेयत्वादिरूपेण घटत्वम् अवगाहमानस्य 'प्रमेयवद्वान् घट' इत्यादि-शाब्दबोधस्य घटत्वावच्छिन्न-प्रकारतानिरूपित-विशेष्यतावच्छेदकता-सम्बन्धेन घटत्वेऽपि सत्त्वात् तत्र घटत्वा-न्यवृत्ति-विषयता-सम्बन्धेन ज्ञानस्य असत्त्वात् न उक्तविषयता-सम्बन्धेन ज्ञानम्। उक्तावच्छेदकता-सम्बन्धेन शाब्दबोधं प्रति व्यापकम्। न च निरवच्छिन्न-घटत्व-निष्ठावच्छेदकताक-प्रकारतानिरूपित-विशेष्यतानिरूपित-निरवच्छिन्नावच्छेदकत्व-सम्बन्धेन शाब्दबोधं प्रति घटत्वान्यवृतिविषयता-सम्बन्धेन ज्ञानं व्यापकम् इत्यपि वक्तुं युक्तम्। 'घटो नीलघटः' इति विधेयांशेऽधिकावगाहि-शाब्दबोध-अङ्गीकारपक्षे उक्तावच्छेदकत्वसम्बन्धे शाब्दबोधाधिकरणे घटत्वे घटत्वान्यवृत्ति-विषयता-सम्बन्धेन ज्ञानस्य असत्त्वेन तस्य व्यापकत्वासम्भवादिति चेत् ? न। निरवच्छिन्न-घटत्वनिष्ठ-अवच्छेदकता-भिन्नावच्छेदकत्वानिरूपित-प्रकारता-निरूपत-विशेष्यता-निरूपित-अनवच्छिन्नावच्छेदकता-सम्बन्धेन शाब्दबोधं प्रति घटत्वान्यवृत्ति-विषयता-सम्बन्धेन ज्ञानस्य व्यापकत्वे बाधकाभावादिति। अधिकन्तु **गूढार्थतत्त्वालोके** अवलोकनीयम्।।

*।। इति व्युत्पत्तिवाद-प्रकाशेऽभेदान्वयविवरणम् ।।*

श्रीवेणीमाधवशुक्लशास्त्रिविरचिता

# शास्त्रार्थकला

श्रीः

# व्युत्पत्तिवादः

## शास्त्रार्थकलाटीका

*श्रीमते रामानुजाय नमः*

नत्वा च विष्णुं भगवन्तमाद्यं रामानुजं योगिवरं यतीन्द्रम्।
श्रीवैष्णवौ सत्पितरौ गुरुञ्च प्रारभ्यते कार्यमिदं हिताय।। १।।
व्युत्पत्तिवादे विमलाश्च टीका यद्यप्यनेका विलसन्ति लोके।
शास्त्रार्थयुद्धे विजयां विचित्रां टीकां तु शास्त्रार्थकलां तनोमि।। २।।
काशीप्रयागावथ मध्यवर्ती कृतश्रमश्शास्त्रनिकुञ्जपुञ्जे।
व्याख्यां परिष्कारततिप्रभूतां तथा परीक्षाफलदामजस्रम्।। ३।।
सरयूपारीणशुक्लो वेणीमाधवनामकः।
टीकामेनाम्परिष्कृत्य मुहुस्सद्भ्यः समर्पये।। ४।।

**VV-S 1.1.1:** ननु नैयायिकमते अस्ति ईश्वर इति कथङ्कारम् आदौ शिष्टाचारपरम्पराप्राप्तं मङ्गलं न कृतमिति चेत् ? न । चतुष्षष्ठि-(64)-वादा गदाधरेण कृता इति आदिवादे मङ्गलस्य सत्त्वेन अत्र असत्त्वेऽपि अदोषात्, वस्तुनिर्देशात्मकमङ्गलस्य सत्त्वाच्च। व्युत्पत्तीर्वदति इति व्युत्पत्तिवादः। **शाब्दबोधे** इति - शब्दात् आगतः "कर्मण्यण्" (P.3.2.1), कुम्भकारादिशब्दवत्। **शाब्दबोधे** इति - शब्दात् आगतः शाब्दः। "तत आगत"(P-4.3.74)इति अण्। शब्दप्रयोज्य इत्यर्थः। प्रयोज्यत्वम् अण्प्रत्ययार्थो भाति। तादृशो बोधः शाब्दबोधः। न च शब्दप्रत्यक्षे शब्दलिङ्गकानुमितौ च शब्दप्रयोज्यबोधसत्त्वाद् व्यभिचारापत्तिः इति वाच्यम्। पङ्कजादिशब्दवत् योगरूढ्यभ्युपगमेन अक्षतेः। ननु **शाब्दबोधे च एकपदार्थे अपरपदार्थस्येति** नियमस्य किम् अवतरणम् इति प्रश्नः। न्यायमते प्रत्यक्षानुमानोपमानशब्दानामेव प्रामाण्यं प्रसिद्धम्। तत्र प्रत्यक्षे संसर्गभासकः सन्निकर्ष एव। अनुमितौ संसर्गस्य भासकः परामर्शः। उपमितौ शक्तिरूप-संसर्गभासकम् अतिदिष्टवाक्यार्थस्मरणम्। 'राजपुरुषः', 'नीलो घटः', 'नीलघटम् आनय' इत्यादिवाक्यजन्यशाब्दबोधस्थले स्वत्व-अभेदादिसम्बन्धानां कथं प्रतीतिः ?

तादृशसम्बन्धनिष्ठा विषयता च किं प्रयोज्या भवति ? इति शिष्यजिज्ञासया चतुर्थशब्दप्रमाणविषयक-तुरीयप्रकरणादौ पदार्थद्वयसंसर्गभासकत्वेन आकाङ्क्षा-सामान्यं व्यवस्थापयन् प्रतिजानीते - **शाब्दबोधे** चेति। तदुक्तं वैशेषिके "इहात्मनि ज्ञानमिहाकाशे शब्द इतीह बुद्धिरुत्पद्यमाना न विना सम्बन्धम् उत्पत्तुम् अर्हति तेन अनुमीयते अस्ति कश्चित्सम्बन्ध" इति। स वाक्यार्थे कस्मात् आगत इति आशयेन आह - **शाब्दबोधे चैके**ति।

अपौरुषेयवेदनिष्ठ-कर्ममात्रसमर्थक-अनीश्वरवादि-मीमांसकमतं खण्डयन् अपि आह - **शाब्दबोधे चैके**ति। तथा हि मीमांसकमते घटपदाद् घटोपस्थितिः। योग्य-अस्ति-आदिक्रियासम्बन्धः अर्थनिष्ठ-आकाङ्क्षा-योग्यताज्ञानादिकारणसामग्री-सत्त्वात् 'अस्तित्ववान् घट' इति शाब्दबोधः अर्थाध्याहारिसम्मतः। किञ्च

पश्यतः श्वेतिमा रूपं ह्रेषाशब्दञ्च शृण्वतः।
खुरविक्षेपशब्दं च श्वेतोऽश्वो धावतीति धीः।।

इति तदीया कारिका। श्वेतादिबोधकपदाभावेऽपि 'श्वेतः अश्वो धावति' इति शाब्दबोधो मीमांसकाभिमत इति च। एवञ्च अर्थनिष्ठ-आकाङ्क्षा-योग्यतादि ज्ञानं न कारणं शाब्दबोधे, किन्तु पदनिष्ठ-आकाङ्क्षा-योग्यतादि ज्ञानमेव इति तन्मतनिरोधपूर्वक-पदनिष्ठ-आकाङ्क्षाप्रयोज्य-संसर्गस्यैव शाब्दबोधे कारणत्वम् इति खण्डनतात्पर्येण प्रदर्शयति - **शाब्दबोधे चैके**ति नैयायिकः। किञ्च मीमांसकमते कार्यकारणभावस्तु तत्पदजन्य-तद्विषयक-शाब्दबोधे तत्पदनिष्ठ-वृत्तिज्ञानाधीन-तद्विषयकोपस्थितिः कारणम्। वृत्तिज्ञानाधीन-निवेशफलं तु घटपदजन्य-घटविषयक-शाब्दबोधे समवाय-सम्बन्धेन सम्बन्ध्याकाश-विषयकशाब्दबोधवारणम् एव। आकाशोपस्थितेः वृत्तिज्ञानजन्यत्वाभावात्। कार्यकारण-भाव-समन्वयश्च 'नीलो घट' इत्यादौ। तथा हि - नीलपदजन्य-नीलविषयक-शाब्दबोधं प्रति घटपदजन्य-घटविषयक-शाब्दबोधं प्रति च नीलघटपदनिष्ठ-वृत्तिज्ञानाधीन-नीलघटविषयको-पस्थितेः सत्त्वात्। एवम् अन्यत्रापि। ननु तन्मते 'नीलो घटः' इति वाक्यजन्य-अभेदसंसर्गक-नीलत्वावच्छिन्न-प्रकारताक-घटत्वावच्छिन्न-विशेष्यताक-शाब्दबोधे अभेदसंसर्गप्रवेशो न स्यात्। तत्पदनिष्ठवृत्तिज्ञानाधीन-अभेदसंसर्गोपस्थितेः अभावात् कार्यकारणभावघटक-तद्विषयक-शाब्दबोधं प्रति इति कार्यदलं गच्छति। परन्तु कारणदलं न गच्छति इति हेतोः कार्यतावच्छेदकानाक्रान्तत्वेन कथङ्कारं कार्य-सिद्धिः? कारणात् कार्यम् उत्पद्यते इति नियमविरोधात्। शाब्दबोधे सम्बन्धानां स्वातन्त्र्येण प्रवेशः चेत्? तर्हि विनिगमनाविरहेण अबाधितकालिकादि-सम्बन्ध-प्रवेशापत्तौ महदनिष्टमापद्येत। न च मीमांसकमते संसर्गभिन्न-तद्विषयक-शाब्दबोधत्वावच्छिन्नं प्रति तत्पदनिष्ठ-वृत्तिज्ञानाधीनोपस्थितिः कारणमिति

कार्यकारणभावेन नास्ति हेत्वनाक्रान्तत्वम्। दलद्वयमपि संसर्गांशं न अवगाहते इति न व्यभिचार इति वाच्यम्। गौरवात् तादृशनिवेशानर्हत्वात् इति चेत् ? न। 'अन्वितो घटो घटपदशक्य' इत्यादिक्रमेण तत्तत्संसर्गविशिष्ट-घटादित्वावच्छिन्ने घटादिपदशक्तेः अङ्गीकारः। न च यथा 'नीलो घटः' इति शाब्दबोधे वृत्त्या अभेदप्रवेशः तथा विनिगमनाभावात् कालिकादिसम्बन्धप्रवेशो दुर्वार इति वाच्यम्। शाब्दबोधे सम्बन्धभाननियामिका प्रतीतिरेव तस्याः सर्वसम्मताया अभावात्। मीमांसकमते दोषप्रकाराः - यत्र शक्तिभ्रमेण खण्डशः घटपदात् घट-घटत्वयोः विशेष्य-विशेषणभाव-रहितयोः उपस्थितिः, तत्र तन्मते कार्यम् अस्ति, हेतुः नास्ति। वृत्तिज्ञानाधीन-उपस्थित्यभावात्। तथा च हेतोः कार्यतावच्छेदक-अनाक्रान्तत्वं स्यात्। किञ्च विनिगमनाविरहेण यथा 'घट' इत्यादौ घटत्व-प्रकारक-घटविशेष्यकबोधः तथा घटप्रकारक-घटत्वविशेष्यक-शाब्दबोधोऽपि तन्मते दुर्वार एव स्यात्। किञ्च शाब्दबोधे शक्तिज्ञानं लक्षणाज्ञानञ्च तन्मतेऽपि कारणमिति तयोः कार्यकारणभावयोः परस्परव्यभिचारवारणाय तत्पदनिष्ठ-शक्तिज्ञानाधीन-उपस्थित्यव्यवहितोत्तरजायमान-तद्विषयक-शाब्दबुद्धित्वावच्छिन्नं प्रति तत्पदनिष्ठशक्तिज्ञानाधीन-उपस्थितिः कारणम्। तत्पदनिष्ठलक्षणाज्ञाना-धीनोपस्थित्यव्यवहितोत्तरजायमान-तद्विषयकशाब्दबुद्धित्वावच्छिन्नं प्रति तत्पदनिष्ठ-लक्षणाज्ञानाधीनोपस्थितिः कारणम्। तथा च तन्मतेऽपि संसर्गांशे कार्यकारण-भावीयदलद्वयं न गच्छति इति कथं व्यभिचार इति ? न। संसर्गविशिष्टे शक्तिः। तथा च घटप्रकारक-घटत्व-विशेष्यक-इत्यादिपूर्वोक्तदोष-वारणाय तत्पदजन्य-तत्प्रकारक-तद्विशेष्यक-शाब्दबुद्धित्वावच्छिन्नं प्रति तत्पदनिष्ठ-वृत्तिज्ञानाधीन-तत्प्रकारक-तद्विशेष्यकोपस्थितिः कारणमिति नैयायिकमतम्। एवञ्च घटप्रकारक-घटत्व-विशेष्यकोपस्थितेः अभावात् अक्षतेः। अभेदादिसंसर्गस्य यत्किञ्चिन्निष्ठ-प्रकारतात्मक-यत्किञ्चिन्निष्ठ-विशेष्यतात्मक-उपस्थितेः अभावात् पदार्थबोधे चिकीर्षिते व्यभिचाराद्यभावात् न तन्मतं ज्यायस्तरमिति। पदार्थद्वयसंसर्गभान-नियामकं किमिति स्वमतम् आह - **शाब्दबोधे चैकेति**। "अस्मात् शब्दात् अयम् अर्थो बोद्धव्य" इति अनुभवत्वसाक्षाद्व्याप्ये शाब्दत्वजात्याश्रयः शाब्दबोध इति फलितम्। न च योगरूढित्वं कथम् ? अनुमितित्वव्याप्य-शाब्दत्वजात्याश्रयः शाब्दबोध इत्येव अस्तु। न च "प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानि" इति शास्त्रे शब्दस्य पृथगुपादानेन स्वातन्त्र्यमेव शब्दार्थयोरिति वाच्यम् । सिद्धान्ते समान-विषयक-शाब्दबोधं प्रति प्रत्यक्षसामग्री प्रतिबन्धिका इति एको नियमः। समान-विषयकानुमितत्वावच्छिन्नं प्रति प्रत्यक्षसामग्री प्रतिबन्धिका इति द्वितीयो नियमः। एकस्मिन् एव पदार्थे शाब्दत्वम् अनुमितित्वञ्च परापरत्वेन चिकीर्षितम्, तत्र

समानविषयक-शाब्दबुद्धित्वावच्छिन्नं प्रति अनुमितिसामग्री प्रतिबन्धिका इति तृतीयो नियमः। विनिगमनावैकल्येन समानविषयक-अनुमितित्वावच्छिन्नं प्रति शाब्दसामग्री प्रतिबन्धिका इति चतुर्थो नियमः। परन्तु शाब्दत्वस्य अनुमितित्वे तु एकेन एव समानविषयकानुमितित्वावच्छिन्नं प्रति प्रत्यक्षसामग्री प्रतिबन्धिकेति कार्यकारण-भावेन निर्वाहे त्रयाणाम् अकरणरूपलाघवानुसन्धानेन सूत्रविरोधेऽपि क्षतिविरहात्। न च विभिन्नविषयक-प्रत्यक्षत्वावच्छिन्नं प्रति शाब्दसामग्री प्रतिबन्धिका इति नियमे शाब्दसामग्रीपदेन अनुमितिकारणीभूत-शाब्दबोधकारणीभूत व्याप्ति-परामर्श-पक्षता-योग्यता-आकाङ्क्षा-आसत्ति-तात्पर्याणां सर्वेषामेव सामग्रीत्वेन रूपेण ग्रहणे विशेष्य-विशेषणभावे विनिगमना-वैकल्येन अनेकगौरवम्। अतो न अनुमितित्व-व्याप्यत्वं शाब्दत्वस्य इति वाच्यम्। तद्विषयकप्रवृत्तिं प्रति तद्विषयक-इष्टसाधनत्व-प्रकारकज्ञानं कारणम्। 'पर्वतो वह्निमान्' इत्यादौ व्याप्तिज्ञानादीनाम् एकस्वरूपेण कारणत्वं न भवति। परस्परजन्यबोधेऽव्यभिचारश्च कार्यतावच्छेदक-कोटौ कारणाव्यवहितोत्तरत्वनिवेशात्। एवं 'नीलो घटः' इत्यत्र आकाङ्क्षा-योग्यतादावपि। एवञ्च अर्थबोधनाय वाक्यप्रयोग इति न्यायेन व्याप्तिज्ञानादि-रहित-आकाङ्क्षा-योग्यतादिघटित-सामग्र्या एव शाब्दात्मकानुमित्युत्पत्तिः। विशेष-विशेषसामग्री-सहकारेण शाब्दबोधस्य अनुमितित्वसम्भवः। एवञ्च पूर्वोक्तकार्य-कारणभावे कारणमात्राणाम् अप्रवेशेन अगौरवात्। तथा च शाब्दबोधस्य अनुमितौ अन्तर्भावे विशिष्टं लाघवम्। स कुतो न इति प्रश्नकर्तुः आशयः। ननु यथा लाघवात् शाब्दस्य अनुमितौ अन्तर्भावः तथैव विनिगमनाविरहेण अनुमितेः अपि शाब्दे अन्तर्भावः कथं न?

> यश्चोभयोः समो दोषः परिहारः तयोः समः।
> नैकः पर्यनुयोक्तव्यस्तादृगर्थविचारणे।।

इति न्यायात्। न च अत्र लाघवाभावः शङ्क्यः। समानविषयकानुमितित्वा-वच्छिन्नं प्रति प्रत्यक्षसामग्री प्रतिबन्धिका इति पृथक् कार्यकारणभावस्य अकर्त्तव्यत्वेन समानविषयक-शाब्दबुद्धित्वावच्छिन्नं प्रति प्रत्यक्षसामग्री प्रतिबन्धिका इति एकेनैव निर्वाहसम्भवात्। अत एव समानविषयक-शाब्दबुद्धित्वावच्छिन्नं प्रति अनुमितिसामग्र्याः प्रतिबन्धकत्वमपि न कर्त्तव्यं भवति, उभयोः एकत्वात्। न च अनुमितेः शाब्दे अन्तर्भावे अनुमितावपि 'शाब्दयामि' इति प्रतीतिः आपतेत्, उभयोः एकत्वादिति वाच्यम्। पूर्वोक्तलाघवरीत्या शाब्दे अपि 'अनुमिनोमि' इति व्यवहार-रूपप्रतीतेः, "यश्च उभयोः समो दोष" इति न्यायेन तुल्यत्वात्। न च 'न शाब्दयामि' इत्याकारक-अनुव्यवसाये अनुमितिभिन्नः शब्द एव कारणमिति न व्यभिचार इति वाच्यम्। 'अनुमिनोमि' इति अनुव्यवसायेऽपि शाब्दान्यत्वस्य

हेतुत्वसम्भवात्। न च 'शाब्दयामि' इति अनुभवानुरोधेन उभयोः एकत्वेऽपि न व्यभिचार इति वाच्यम्। 'न अनुमिनोमि' इति अनुभवानुरोधेनापि समाधानस्य तुल्यत्वात् इति चेत् ? सत्यम्। उभयत्र-समाधानप्रतिबन्ध्यैव शाब्द-अनुमित्योः पार्थक्येन उपादानात्। न च शाब्दमात्रे ज्ञानलक्षणप्रत्यासत्त्या उपस्थितिसत्त्वेन लौकिकसन्निकर्षाभावेऽपि शाब्दे प्रत्यक्षत्वमेव अस्ति इति वाच्यम्। ज्ञानलक्षण-प्रत्यासत्त्या अपूर्वव्यक्तिभानासम्भवात्। न च सामान्यलक्षणप्रत्यासत्त्या एव अपूर्व-व्यक्तिभानम् इति वाच्यम्। तदनङ्गीकारपक्षे दोषात्। न च ईश्वरज्ञानस्य इव सन्निकर्षाभावेऽपि शाब्दबोधस्यापि प्रत्यक्षत्वसम्भव इति वाच्यम्। ज्ञानाकरणकं ज्ञानं प्रत्यक्षमिति हि प्रत्यक्षलक्षणम्। एवञ्च शाब्दबोधे पदज्ञानादेः करणत्वेन लक्षणा-असङ्घटनात्। न च ज्ञानत्वावच्छिन्नं प्रति सामान्यरूपेण मन एव कारणम्। एवञ्च पदज्ञानादेः अकरणत्वेन प्रत्यक्षत्वसम्भव इति वाच्यम्। शाब्दत्वजातौ चाक्षुषत्व-जात्या साङ्कर्यापत्तेः। न च शाब्दबुद्धौ प्रत्यक्षत्वस्वीकारे मानसत्वव्याप्यत्वस्यैव शाब्दत्वजातौ स्वीकारेण तादृशदोषासम्भव इति वाच्यम्। 'नीलो घटः', 'पीतो घटः' इति शाब्दबोधाव्यवहितोत्तरकाले 'नीलं घटं साक्षात् प्रत्यक्षीकरोमि' इति अनिष्टानुभवापत्तेः दुर्वारत्वात्। न च लौकिकसन्निकर्षाभावात् न उक्तानुभव इति वाच्यम्। विभिन्नविषयकप्रत्यक्षत्वावच्छिन्नं प्रति शाब्दसामग्री प्रतिबन्धिका इति कार्यकारणभाव एकः। विभिन्नविषयक-प्रत्यक्षत्वावच्छिन्नं प्रति अनुमितिसामग्री प्रतिबन्धिका इति द्वितीयः। एवञ्च शाब्दबोधस्य प्रत्यक्षत्वस्वीकारे 'नीलो घटः' इति 'पीतो घटः' इति च शाब्दबोधसामग्रीसत्त्वे इष्टोऽपि समूहालम्बनशाब्दबोधो न स्यात्। पीतपटात्मक-विभिन्नविषयक-शाब्दबोधरूप-प्रत्यक्षत्वावच्छिन्नं प्रति नीलघट-विषयक-शाब्दसामग्र्याः प्रतिबन्धकत्वेन क्लृप्तत्वात्। एवं विनिगमनाविरहेण नीलघट-शाब्दात्मक-प्रत्यक्षत्वावच्छिन्नं प्रति 'पीतो घटः' इति शाब्दसामग्र्याः प्रतिबन्धकत्वापत्तेश्च। अनया एव रीत्या 'पर्वतो वह्निमान्', 'महानसं वह्निमद्' इति समूहालम्बनात्मक-अनुमितौ अपि प्रतिबन्धकत्वापत्तौ समूहालम्बनत्वानुपपत्तिः बोध्या। न च प्रतिबध्यतावच्छेदककोटौ शाब्दरहितत्वे सति इति निवेशः। अर्थात् शाब्दभिन्नविभिन्नविषयकप्रत्यक्षत्वमेव प्रतिबध्यतावच्छेदकमिति तथैव अनुमितिरहित-विभिन्नविषयक-प्रत्यक्षत्वमेव प्रतिबध्यतावच्छेदकमिति कार्यकारणभावानुरोधेन न उक्तसमूहालम्बनद्वयानुपपत्तिः इति वाच्यम्। शाब्दबोधरहितत्व-अनुमितिरहितत्व-निवेशोऽपि सगौरवः। तत्र विशेष्यविशेषणभावे विनिगमनावैकल्येन वैपरीत्य-अनुसन्धाने गुरुधर्मावच्छिन्न-अनेकप्रतिबध्यतापत्तेश्च। यदि तु अनेक-निरुक्त-कार्यकारणभाव-लाघवानुरोधेन एतद्गौरवं न दोषावहम् इत्युच्यते तर्हि शाब्दत्वस्य प्रत्यक्षत्वोपगमे दोषः अन्वेषणीयः।

वस्तुतस्तु "प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानि" इति सूत्रे चतूर्णां प्रमाणानां पार्थक्येन उपादानात् प्रमेयानाम् (प्रमितीनाम् ?) अपि शाब्दबोधादीनां पार्थक्येन उपादानमेव ज्यायस्तरमिति अलम्।

**अत्र कुशाग्रबुद्धयस्तु** - ननु 'गाम् आनय', 'गौः अस्ति' इत्यादौ शाब्दबोध-सिद्धये शब्दाः प्रमाणम् आनुभविकम्। परन्तु तादृशवाक्ये मानस एव बोधः स्वीकार्यः। अलं शब्दस्य प्रमाणान्तरत्वस्वीकारेणेति चेत् ? न। विषयता-सम्बन्धेन प्रत्यक्षत्वावच्छिन्नं प्रति तादात्म्यसम्बन्धेन विषयस्य हेतुत्वम् इति नियमानुसारेण 'गोकर्मकत्वेन आनयनं शृणोमि', 'अस्तित्वेन गां शाब्दयामि' इत्याद्यनुभवानां सर्वाभिमतत्वेन असिद्ध्यापत्तेः। किञ्च 'गाम् आनय' इत्यादि-वाक्यस्थले मानसबोधस्वीकारे प्रतिबन्धकाभावात् कारणान्तरेण उपस्थितानां घट-दण्डादीनाम् उपस्थित्या कार्यत्वांशे भानापत्तेश्च। न च इष्टापत्तिः। अत्यन्तानुभवविरोधात्। एवं विधांशे 'घटादिकर्मकत्वेन आनयनं शृणोमि' इति विशिष्टानुभवस्य अनुदयात्। न च अनुमितिः एव सा अस्तु, कथं शब्दप्रमाण-स्वीकृतिरिति प्रश्ने प्रकारो द्रष्टव्यः। 'गौः अस्ति' इति वाक्यश्रवणानन्तरं 'गौरस्तितावती, अस्ति-पदसाकाङ्क्ष-पदस्मारितत्वात्, चक्षुर्वत्' इति विशेषा-नुमानात्। एवम् अन्यत्रापि इति वाच्यम्। विनष्टचक्षुषि व्यभिचारसम्भवात्। पक्षे स्मृतिविषयत्वाज्ञानदशायामपि शाब्दमतेरनुभवसिद्धत्वात्, शाब्दं प्रति पदजन्यो-पस्थितेरेव कारणत्वात्, तद्विषयत्वज्ञानस्य अनावश्यकत्वेन शाब्दस्यैव युक्तत्वात् इत्याहुः।

अत्रैव प्रसङ्गात् कारणत्वं विचार्यते। ननु कारणत्वञ्च अन्यथासिद्धि-शून्यत्वे सति नियतपूर्ववृत्तित्वम् इति। अत्र लक्षणे अन्यथासिद्धित्वस्य अनुगतरूपेण ज्ञानाभाव इति कथं लक्षणसिद्धिः इति चेत्? न। नियतपूर्ववर्त्तिवृत्ति-दण्डत्वादिभेदकूटवत्त्वे सति घटनियतपूर्ववृत्तित्वं घटकारणत्वम्। अनियत-पूर्ववर्त्ति-पटादिवारणाय विशेष्यदलम्। न च विशेषणकोटौ पटादिभिन्नत्वे सति इत्यस्य निवेशः, गौरवात्। अत्र नियतपूर्ववर्तित्वञ्च कार्याव्यवहित-प्राक्क्षणा-वच्छेदेन कार्यसमानाधिकरण-अत्यन्ताभावप्रतियोगिता-अनवच्छेदक-धर्मवत्त्वम्। दण्डत्वादिवारणाय सत्यन्तनिवेशः। अत्र **शुक्लाः** - ननु कार्यप्राक्क्षणे कार्य-असत्त्वेन तदानीं कार्याधिकरणत्वस्य कथङ्कारं सम्भवः ? कार्य-कारणयोः एककालावच्छेदेन एकाधिकरण-कारणज्ञानवृत्तित्वाभावात् यावत्कार्यज्ञानं नास्ति तावत्कारणज्ञानं न भवेत्। यावच्च कारणज्ञानं नास्ति तावत्कार्यज्ञानं न भवेत् इति परस्परापेक्षत्वात्। न च कार्य-कारणयोः साक्षात्सम्बन्धाभावेऽपि परम्परासम्बन्धेन कथञ्चित्कार्यासत्त्वकाले अपि कार्यवत्त्वाङ्गीकारेण एकाधिकरणवृत्तित्वात्

कारणत्वलक्षणं युक्तम् एवेति वाच्यम्। परम्परासम्बन्धेन कार्यवत्त्वम् इत्यत्रापि कारणत्वज्ञानम् अन्तरा सिद्धिर्न भवेत्। 'भक्षितेऽपि लशुने न शान्तो व्याधिः' इति न्यायेन परम्परासम्बन्धस्वीकारेऽपि कार्य-कारणयोः ऐक्याभावेन लक्षणे महाप्रलयस्य दुर्वारत्वात्। किञ्च उक्तकारणत्वलक्षणात् प्राक् एवं किञ्चिदस्ति इति अवगम्यते, तदुत्पत्तिरस्तु कुतो न ज्ञायते? तदुत्पत्ति- प्रयोजकत्वादिकं किञ्चिद्विलक्षणम् अङ्गीकार्य स्यात् तर्हि विलक्षणं कीदृशम् ? विलक्षणे विलक्षणं कीदृशम् ? इति अनवस्था दुर्वारा एव स्यात्।

वस्तुतस्तु कल्पितं कार्य-कारणयोः अधिकरणत्वम् आश्रित्य लक्षण-सङ्घटने कथञ्चिद्विवादराहित्यम्। ननु तद्विषयकशाब्दानुकूल-शक्तिमत्त्वेन पदार्थज्ञाने पदानां कारणत्वे भावि-भूत-पदज्ञानात् शाब्दबोधो न स्यात्। तयोः शाब्दबोधप्राक्कालावच्छेदेन अवर्त्तमानत्वात्। कारणस्य च कार्याव्यवहित-प्राक्क्षणसत्त्वस्य उक्तत्वादिति चेत् ? न। केषाञ्चिन्मते पदानां नित्यत्वात्। न च शाब्दधाराप्रसङ्गः। ज्ञानविषयतापन्नशक्तिमत्त्वेन पदानां हेतुत्वात्। न च पुरुषान्तरीयज्ञानदशायां पुरुषान्तरस्य शाब्दबोधापत्तिः इति वाच्यम्। तत्पुरुषीयत्वस्य तत्र तत्र निवेशन-अदोषात्। न च शब्दस्य आकाशधर्मत्वात् शाब्दबोधकारणत्वं कथमिति वाच्यम्। कालिकविशेषणतया कार्यकारणभाव-अभ्युपगमेन कार्य-कारणयोः सामानाधिकरण्यसम्भवात्। तथा च 'शब्दाः प्रमाणम्' इति विवेकेन शब्दप्रमाणस्य गरीयस्त्वात् इति। समन्वयश्च 'नीलो घट' इत्यादौ नीलादिपदजन्य-नीलत्वादिप्रकारक-नीलादिनिष्ठविशेष्यताक-शाब्दबोधे नीलत्वादि-प्रकारक-नीलादिनिष्ठ-विशेष्यताकोपस्थितेः सत्त्वात्। न च 'नीलो घटः' इत्यादि-वाक्यजन्य-अभेदसंसर्गक-नीलप्रकारक-घटविशेष्यक-शाब्दबोधे नीलत्व-प्रकारक-उपस्थितेरभावात् हेतोः कार्यतावच्छेदक-अनाक्रान्तत्वं स्यादिति वाच्यम्। कार्यतावच्छेदककोटीयप्रकारांशे निरवच्छिन्नत्वनिवेशात्। 'नीलो घटः' इत्यादौ अभेदसंसर्गक-नीलनिष्ठाप्रकारता नीलत्वावच्छिन्नत्वेन सावच्छिन्ना इति न कार्यदलीयो व्यभिचार इति आशयात्। समन्वयश्च यथा 'घट' इत्यादौ घटनिष्ठविशेष्यतानिरूपिता घटत्वनिष्ठा प्रकारता निरवच्छिन्ना एवेति समवाय-संसर्गक-निरवच्छिन्न-घटत्वप्रकारक-घटविशेष्यक-शाब्दबुद्धिं प्रति घटत्वप्रकारक-घटविशेष्यकोपस्थितिः अस्ति एवेति। न च एवं निवेशे 'गुरुः' इत्यादौ आश्रयत्वसंसर्गक-गुरुत्वप्रकारक-गुरुविशेष्यक-शाब्दबोधो न स्यात्। गुरुत्वस्य जात्यखण्डोपाध्यतिरिक्तपदार्थत्वेन गुरुत्वत्वेन उपस्थितेः। एवञ्च गुरुत्वनिष्ठा प्रकारता गुरुत्वावच्छिन्नत्वेन सावच्छिन्ना एवेति कथं शाब्दबोध इति वाच्यम्। तथा च प्रकारांशे निरवच्छिन्नत्वनिवेशं परित्यज्य विशेष्यांशे देयः।

गुरुनिष्ठा-विशेष्यता निरवच्छिन्ना एवेति तत्र अदोषात्। न च पूर्वोक्तरीत्या 'नीलो घटः' इत्यादौ अभेदसंसर्गक-सावच्छिन्नविशेष्यक-शाब्दबोधः कथमिति वाच्यम्। तत्र कारणान्तरम् आदाय शाब्दबोधविधानात्।

**शाब्दबोधे च** - इत्यत्र च-शब्दः तु-शब्दार्थकः अनुमित्यादिभ्यो वैलक्षण्यं द्योतयति। अथवा यावत्-तावत्-शब्दवद्-वाक्यालङ्कारार्थश्च। **शाब्दबोध** इत्यत्र निरूपितत्वं सप्तम्यर्थ इति विद्वद्धौरया वदन्ति। तत्र कुशाग्रबुद्धीनां न रुचिः। निरूपितत्वस्य वृत्त्यनियामकत्वेन सप्तम्यर्थत्वाभावात्। आश्रयत्व-संयोगादीनामेव वृत्तिनियामकत्वं प्रसिद्धम्। 'येन सम्बन्धेन यः पदार्थो यत्र अस्ति स एव अधिकरणतानियामक' इति आशयः। किञ्च निरूपितत्वस्य सप्तम्यर्थत्वे व्याप्यव्यापकभावभङ्गः। एकपदार्थानुयोगिक-अपरपदार्थप्रतियोगिक-संसर्गत्वमेव उद्देश्यतावच्छेदकम्। तच्च प्रत्यक्षानुमानोपमानेषु सर्वत्र साधारणम्। शाब्दबोध-निरूपित-आकाङ्क्षाप्रयोज्य-विषयताश्रयत्वाख्ये विधेये तद्व्यापकत्वं व्याहन्येत इति अभिप्रायात्। एवञ्च अभिव्यापकत्वं सप्तम्यर्थः। प्रकृत्यर्थतावच्छेदकव्यापकत्वमिति फलति। भास-धात्वर्थो विषयता। आश्रयत्वं तिङर्थः। **एकपदार्थ** - इत्यत्र अनुयोगित्वं सप्तम्यर्थः। **अपरपदार्थस्य** इत्यत्र प्रतियोगित्वं षष्ठ्यर्थः। **संसर्गमर्यादाशब्दार्थः** आकाङ्क्षाप्रयोज्यसंसर्गत्वम्। अभेदः तृतीयार्थः। एवञ्च एकपदार्थानुयोगिक-अपरपदार्थप्रतियोगिकसंसर्ग-आकाङ्क्षाप्रयोज्य संसर्गत्वाभिन्न-शाब्दबोधत्वव्यापक-विषयताश्रय इति विशिष्टार्थः। पदार्थद्वयसंसर्गः शाब्दबोधे आकाङ्क्षाबलेनैव भासते। 'पीतघटम् आनय' इत्यादौ पीतप्रतियोगिक-घटानुयोगिको यो हि पीत-घटयोः अभेदादिसंसर्गः, तस्य पदानुपस्थितत्वेन आकाङ्क्षाबलेनैव भानम्। एवमेव 'राजपुरुष' इत्यादिसमासस्थले राजप्रतियोगिक-पुरुषानुयोगिक-स्वत्वोपस्थापक-पदाभावात् स्वत्वसम्बन्धज्ञानं विना विशिष्टबोधस्य 'राजपुरुष' इत्यस्य अनुपपत्त्या आकाङ्क्षाबलेन स्वत्वसंसर्गस्य शाब्दबोधे व्यवहृतिः।

आकाङ्क्षा तु -

> यत्पदेन विना यस्याननुभावकता भवेत्।
> आकाङ्क्षा वक्तुरिच्छा तु तात्पर्यं परिकीर्त्तितम्।।

इति कारिकावली (८४) ।

आकाङ्क्षा-योग्यता-आसत्ति-तात्पर्याणि शाब्दबोधकारणानि। तथा हि 'नीलो घटः' इत्यादौ अभेदसम्बन्धावच्छिन्न-नीलत्वावच्छिन्न प्रकारतानिरूपित-घटत्वावच्छिन्न-विशेष्यताशालि-शाब्दबुद्धित्वावच्छिन्नं प्रति सु-अन्त-नीलपद-समभिव्याहृत-सु-अन्त-घटपदत्वरूप-आकाङ्क्षाज्ञानं कारणम् इति आकाङ्क्षा-

ज्ञानाकारः। अभेदसम्बन्धावच्छिन्न-नीलत्वावच्छिन्न-प्रकारतानिरूपित-घटत्वावच्छिन्न-विशेष्यताशालि-शाब्दबुद्धित्वावच्छिन्नं प्रति नीलपदजन्य-नीलत्वावच्छिन्न-घटपद-जन्य-घटत्वावच्छिन्न-उपस्थितिरूप-योग्यताज्ञानं कारणमिति योग्यताज्ञानाकारः। नीलपदाव्यवहितोत्तरवर्त्ति-घटपदत्वरूप-आसत्तिज्ञानं कारणम्। तत्पदाव्यवहितोत्तर-वर्त्ति-तत्पदत्वरूपमेव आसत्तिज्ञानम् इति आसत्तिज्ञानाकारः। 'नीलो घटः' इति वाक्यम् अभेदसम्बन्धावच्छिन्न-नीलत्वावच्छिन्न-विशेष्यताक-शाब्दबोधं जनयतु इति तात्पर्यज्ञानाकारः।

उपक्रमोपसंहारावभ्यासोऽपूर्वता फलम्।
अर्थवादोपपत्ती च षड्भिस्तात्पर्यनिर्णयः।।

इति दार्शनिकाः।

**गदाधरभट्टाचार्यास्तु** समभिव्याहाररूप-आकाङ्क्षाज्ञानं न शाब्दबोधे कारणम्। केवलेन तात्पर्यज्ञानकारणेन एव गतार्थत्वादिति मूल एव आहुः।

ननु पदप्रयोगेणैव अर्थज्ञानम् इति। अर्थज्ञानार्थ सर्वत्र लोके पदप्रयोग इति व्याप्तिः। परन्तु पदप्रयोगं विना एव प्रकरण-अनुमान-इङ्गन-चेष्टन-निमेषणादि-प्रमाणान्तरेण उपस्थितिविषयीभूतो यः पदार्थो घट-पटादिः तस्य प्रकारविशेष्यविधया शाब्दबोधे प्रतीतिः कुतो न इति प्रश्नः। 'घटः कर्मत्वम् आनयनं कृतिः', 'नीलं घटः' इत्यादिषु तत्तत्पदजन्यपदार्थोपस्थितौ घटनिष्ठ-कर्मता-निरूपक-आनयनानुकूल-कृतिविषयक-शाब्दबोधवारणाय अभेदसम्बन्धेन नील-विशिष्ट-घटविषयक-शाब्दबोधवारणाय 'घटम् आनय' इति वाक्यजन्यशाब्दबुद्धौ एकसम्बन्धिज्ञानम् अपरसम्बन्धिस्मारकं भवति इति न्यायेन घटादिपदज्ञान-जन्योपस्थितौ भासमान-आकाशविषयक-शाब्दबोध-वारणाय च संसर्गभिन्नपद-अनुपस्थितपदार्थस्य शाब्दबोधे भानं न भवति इति कल्पनाया वृत्त्या पदजन्य-पदार्थोपस्थितिः शाब्दबोधे कारणमिति नियमानुरोधेन प्रकृतत्वात्। ननु एतन्मते पूर्वोक्तरीत्या पदनिष्ठाकाङ्क्षाज्ञानमेव शाब्दबोधे कारणमिति सिद्धम्। एवञ्च 'घटः कर्मत्वम् आनयनं कृतिः' इत्यादिषु घटपदसमभिव्याहृत-कर्मत्वपदरूप-आकाङ्क्षाज्ञानस्य सत्त्वेन घटनिष्ठ-कर्मतानिरूपक-आनयनमिति शाब्दबोधः स्यादेव इति चेत् ? न। द्वितीयान्त-घटपद-समभिव्याहृत-आनय-पदसमभिव्याहारस्यैव कारणत्वाभ्युपगमेन क्षतिविरहात्। न च एकघटादिपदात् अपि शाब्दबोधो दुर्वारः। तथा हि नील-पदसमभिव्याहृत-घटपदत्वरूप-आकाङ्क्षाज्ञान-अव्यवहितोत्तर-जायमान-'नीलाभिन्नो घटः' इति शाब्दबोधं प्रति नीलपदसमभिव्याहृत-घटपदत्वरूप-आकाङ्क्षाज्ञानं कारणम्। एवं शाब्दबोधेऽपि कार्यकारणभावः। तथा च तत्तदाकाङ्क्षाज्ञानाभावस्य क्षतिकरत्वाभावेन उक्तशाब्दस्य निश्शङ्कत्वादिति

वाच्यम्। यद्विशेषयोः कार्यकारणभावः तत्सामान्ययोः अपि इति न्यायेन सामान्यरूपेण शाब्दबोधत्वावच्छिन्नं प्रति पदविशिष्ट-पदत्वरूप-आकाङ्क्षाज्ञानं कारणम् इति अभिप्रायात्। वैशिष्ट्यञ्च स्वभिन्नत्व-स्वप्रयोज्यविषयता-निरूपित-विषयताप्रयोजकत्वम् इति उभयसम्बन्धेन परिष्काराश्रयणात्। एवञ्च सामान्यकारणाभावेन एकपदात् शाब्दापत्तेः असम्भवात् इति अलम्।

यथा 'नीलो घटः' इत्यादौ एकपदार्थो घटः, तदनुयोगिकः अपरपदार्थो नीलः, तत्प्रतियोगिकश्च अभेदसंसर्ग इति समन्वयः। ननु एवं 'पर्वतो वह्निमान्' इत्यादौ व्याप्तिभास्य-संयोगस्यापि आकाङ्क्षाभास्यत्वापत्तौ उद्देश्यतावच्छेदकावच्छेदेन विधेयान्वयविरोध इति चेत्? न। न हि तावदुद्देश्यतावच्छेदकम् एकपदार्थानुयोगिक-अपरपदार्थप्रतियोगिक-संसर्गत्वम्। किन्तु प्राप्ताप्राप्तविवेक-न्यायेन एकपदार्थनिष्ठानुयोगितानिरूपक-अपरपदार्थनिष्ठ-प्रतियोगितानिरूपक-संसर्गवृत्ति-शाब्दबोधत्वव्यापकविषयतात्वम्। एवञ्च विषयताम् उद्दिश्य आकाङ्क्षा-प्रयोज्यत्वविधानेन अनुमितिस्थलीय-संयोगसंसर्गस्य तादृशविषयतावत्त्वाभावात् न आकाङ्क्षाभास्यत्वम्। किञ्च **शाब्दबोध** इत्यत्र वृत्तित्वं सप्तम्यर्थः। तथा च एकपदार्थानुयोगिकः अपरपदार्थप्रतियोगिकः शाब्दवृत्तिः। संसर्गस्तु आकाङ्क्षा-प्रयोज्य-शाब्दबुद्धित्वव्यापक-विषयताश्रय इति न अनुमित्यादिस्थले दोष इति। ननु एकत्वत्वेन एकत्वस्य अपरत्वत्वेन अपरत्वस्य सामान्यरूपेण भाने तदुपादान-वैयर्थ्यम्। तत्-शब्दप्रवेशात् तत्तदेकत्वत्वेन एकत्वस्य तत्तदेकत्ववद्भेदवत्त्वेन अपरत्वस्य प्रवेशे अननुगमापातः। अयं भावः - अपरपदस्यार्थो भेदो भेदाश्रयश्च। सोऽपि समभिव्याहृतपदार्थस्य एव। स च समभिव्याहृतपदार्थत्वावच्छिन्न-प्रतियोगिताक आहोस्वित् समभिव्यहृत-यत्किञ्चित्पदार्थनिष्ठ-प्रतियोगिताकः? नाद्यः। तथा सत्यप्रसिद्धेः। तथा हि 'नीलो घट' इत्यादौ एकपदार्थो घटः। तदनुयोगिक-अभेदसंसर्गो ज्ञातः। परन्तु पदार्थत्वावच्छिन्नप्रतियोगिताक-भेदाश्रयो नास्ति। सर्वे पदार्था एकपदार्थ-पदेन ग्राह्या भवन्ति इति, नीलेऽपि एकपदार्थत्वस्य सत्त्वात् एकपदार्थत्वावच्छिन्न-प्रतियोगिताक-भेदवन्नीलपदार्थो न ज्ञात इति तत्प्रतियोगिकत्वं संसर्गे न गतमिति तत्र उद्देश्यतावच्छेदकव्यापकत्वं हेतोः अनुपपन्नं स्यात्। न अन्त्यः। तथा सति अननुगतः स्यात्। तथा हि 'नीलो घटः' इत्यादौ एकपदार्थो घटः, तन्निष्ठानुयोगितानिरूपक-अपरपदार्थ-प्रतियोगितानिरूपक-भेदाश्रयो नील-पदार्थः। तत्प्रतियोगिकोऽपि अभेदसंसर्गो ज्ञातः। परन्तु 'राजपुरुषः' इत्यादौ एकपदार्थपदेन राजपदार्थस्य ग्रहणं न स्यात्। एकपदार्थस्तु 'नीलो घटः' इत्यादौ एकपदार्थपदेन घटं सङ्गृह्य नष्टः। 'सकृदुच्चरितः शब्दः सकृदर्थं गमयति' इति नियमात्।

ननु एकञ्च तत्पदम् एकपदम्। तस्यार्थ एकपदार्थः। अपरञ्च तत्पदम् अपरपदम्। तस्यार्थः अपरपदार्थ इति विगृह्य अनुगतत्वाभावो वारयितुं शक्यः। तथा सत्यपि यदि एकपदत्वावच्छिन्न-प्रतियोगिताकभेदवद् यत् पदं तदर्थनिष्ठ-प्रतियोगिताकसंसर्ग चेत् ? तदा अप्रसिद्धिः दुर्वारा। सर्वत्र एकपदत्वस्य सत्त्वात्। न च एकपदनिष्ठप्रतियोगिताकभेदवद् यत्पदं तदर्थ-प्रतियोगिक इति। तथा सति अननुगतनिरुक्तदोषस्य दुर्वारत्वात्। तथा च अननुगतनिरुक्तदोष-वारणाय पदार्थ-विशिष्टः संसर्ग आकाङ्क्षाभास्यः। पदार्थ-वैशिष्ट्यन्तु संसर्गे स्वनिष्ठानुयोगिता-निरूपकत्व-स्वेतरपदार्थनिष्ठप्रतियोगिता-निरूपकत्व-उभयसम्बन्धेन। तथा च न कुत्रापि अननुगतत्वदोष इति तात्पर्यात्। न च 'नीलो घटः' इत्यादौ एव अभेदसंसर्गस्य शाब्दबोधे भानं न स्यात्। तथा हि - शाब्दबोधे एकपदार्थो घटः। तदनुयोगिकत्वस्य अभेदे सत्त्वेऽपि अपरपदार्थप्रतियोगिकत्वं नास्ति। अभेदप्रतीत्या नीलपदवाच्य-घटपदवाच्ययोः ऐक्यात्। घटपदार्थापेक्षया अपरपदार्थपदेन नीलपदार्थस्य धर्तुम् अशक्यत्वात् इति वाच्यम्। पदविशिष्टः संसर्ग आकाङ्क्षा-भास्य इति परिष्कारात्। वैशिष्ट्यं च स्वार्थनिष्ठानुयोगिता-निरूपकत्व-स्वेतरपदार्थनिष्ठप्रतियोगितानिरूपकत्व-उभयसम्बन्धेन। स्वं घटपदम्। तदर्थनिष्ठा या अनुयोगिता तन्निरूपकत्वम् अभेदस्यास्ति। स्वेतरपदं नीलम्। तदर्थो नीलपदार्थः। तन्निष्ठा या प्रतियोगिता तन्निरूपकत्वम् अभेदस्येति समन्वयः। ननु पच्-धातुसमभिव्याहारे विक्लित्ति-व्यापारयोः जन्यजनकयोः सम्बन्धयोः आकाङ्क्षा-भास्यत्वं न स्यात्। तथा हि - पच्-धातोः विक्लित्तित्वावच्छिन्ने व्यापारत्वावच्छिन्ने च खण्डशः शक्तिः। तथा च 'तण्डुलं पचति चैत्रः' इत्यादौ विक्लित्तेः जनकत्व-सम्बन्धेन व्यापारे अन्वयः। तथा च तण्डुलनिष्ठ-विक्लित्तिजनक-व्यापाराश्रयः चैत्रः। तत्र जनकत्वसम्बन्धस्य स्वार्थनिष्ठानुयोगिता-निरूपकत्वेऽपि स्वेतर-पदाभावात् आकाङ्क्षाभास्यत्वं न स्यात्। एवं 'पच्यते चैत्रेण तण्डुलः' इत्यादौ व्यापारस्य विक्लित्तौ जन्यत्वसम्बन्धेन अन्वयः 'चैत्रवृत्तिव्यापारजन्यविक्लित्त्याश्रयः तण्डुलः'। तत्रापि उक्तयुक्त्या जनकत्व-सम्बन्धस्य आकाङ्क्षाभास्यत्वं न स्यात्। न च पच्-धातोः समुदाये एव शक्तिः अस्तु, न तु खण्डशः शक्तिः। फलावच्छिन्न-व्यापार एव शक्य इति न दोष इति वाच्यम्। नैयायिकमते प्रथमान्तार्थ-मुख्यविशेष्यक-शाब्दबोध इति नियमात्। 'तण्डुलं पचति' इत्यादौ तादृशबोधे सिद्धेऽपि कर्मप्रत्ययसमभिव्याहारे विक्लित्त्यनुकूलव्यापारस्य जन्यत्वसम्बन्धेन विक्लित्तौ अन्वये तादृशबोधो न स्यादिति दोषात्। न च समुदाय एव शक्तिरस्तु। कर्मप्रत्यये तु विक्लित्त्यनुकूल-व्यापारस्य जन्यत्वसम्बन्धेन विक्लित्तौ अन्वयेन 'तण्डुलनिष्ठ-विक्लित्त्यनुकूल-व्यापारजन्य-विक्लित्त्याश्रयः तण्डुल' इति

प्रथमान्तार्थमुख्यविशेष्यको बोधः स्यात् एवेति वाच्यम्। शाब्दबोधे विक्लित्तेः द्विधा भानापत्तेः। व्यापारस्य विक्लित्तौ अन्वये 'पदार्थः पदार्थेन अन्वेति न तु पदार्थैकदेशेनेति' न्यायविरोधाच्च। न च व्यापारजन्यविक्लित्तौ एव शक्तिरस्तु इति वाच्यम्। कर्तृप्रत्ययसमभिव्याहारे विक्लित्तेः द्विधा भानात् एकदेशान्वयदोषाच्च। न च विक्लित्तिजनकव्यापारे एव अस्तु शक्तिरिति वाच्यम्। कर्मप्रत्ययसमभिव्याहारे पूर्वोक्तदोषस्य जागरूकत्वात्। किञ्च एवं परिष्कारे 'रामः रामः','कृष्णः कृष्णः'

"काकः कृष्णः पिकः कृष्णः को भेदः पिक-काकयोः।

प्राप्ते वसन्तसमये काकः काकः पिकः पिकः।।"

इत्यादौ अभेदसंसर्गग्रहणं न स्यात्। एकपदाख्यातार्थ-कालकृत्योः आधेयत्व-सम्बन्धस्य आकाङ्क्षाभास्यस्य च सङ्ग्रहो न स्यात्, पदद्वयार्थाभावात्। किञ्च एव-शब्दस्य यदि अन्ययोगव्यवच्छेदे शक्तिः। तदा 'पार्थ एव धनुर्द्धरः' इत्यादौ इतरस्य योगः = सम्बन्धः तस्य व्यवच्छेदो = निवृत्तिः। एवञ्च पार्थेतरस्मिन् धनुर्द्धरत्वाभावेऽपि इतरपदेन तत्प्राणिनां ग्रहणापत्तौ तन्निवृत्तिः नास्ति इति दोषात्। खण्डशः शक्तिः अन्ययोगे व्यवच्छेदे च। तत्र अन्ययोगपदार्थस्य स्वनिष्ठ-प्रतियोगिताकत्वसम्बन्धेन व्यवच्छेदपदार्थे अन्वयः। स आकाङ्क्षाभास्यो न स्यात्। स्वेतरपदाभावात् इति वाच्यम्। पदार्थविशिष्टः संसर्ग आकाङ्क्षाभास्य इति कल्पनात्। वैशिष्ट्यं च स्वनिष्ठानुयोगिता-निरूपकत्व-स्वेतरनिष्ठ-प्रतियोगिता-निरूपकत्व-उभयसम्बन्धेन। तथा च विक्लित्तिपदार्थ-व्यापारपदार्थयोः भिन्नत्वात् अन्ययोगपदार्थ-व्यवच्छेदपदार्थयोः भिन्नत्वात् 'प्रत्युच्चारणं शब्दो भिद्यते' इति न्यायेन 'कृष्णः कृष्णः' इत्यादौ अपि द्वयोः भिन्नत्वात्। न च 'नीलो घटः' इत्यादौ अभेदसम्बन्धेन प्रतियोगिन एव अनुयोगित्वेन भेदाभावः। शक्तिभास्यपदार्थ-पदार्थतावच्छेदक-संसर्गाणाम् अपि पदार्थविशिष्टत्वापत्तौ व्यापकत्वभङ्गश्चेति वाच्यम्। पदार्थतावच्छेदकविशिष्टः संसर्ग आकाङ्क्षाभास्य इति तात्पर्यात्। वैशिष्ट्यं च स्वावच्छिन्नानुयोगिता-निरूपकत्व-स्वेतरधर्मावच्छिन्न-प्रतियोगिता-निरूपकत्व-एतद्-उभय-सम्बन्धेन। एवञ्च पच्-धातुसमभिव्याहारे कर्तृप्रत्ययस्थले स्वं = व्यापारत्वम्, तदितरो धर्मो विक्लित्तित्वम्। तन्निष्ठप्रतियोगिता-निरूपकत्व-सत्त्वात्। एवं नीलत्व-घटत्वयोः भिन्नत्वात्। एव-पदस्थले अन्ययोगत्व-व्यवच्छेदत्वयोः भिन्नत्वात्। एवं तदुच्चारणीभूतकृष्णत्व-तदुच्चारणीभूतकृष्णत्वयोः भिन्नत्वात् दोषपुञ्जाभावात्। न च 'सम्पन्नो व्रीहिः' इत्यादौ व्रीहित्व-अनुयोगिक-एकत्व-प्रतियोगिक-स्वाश्रयत्व-संसर्गस्य आकाङ्क्षाभास्यत्वं न स्यात् इति वाच्यम्। स्वाश्रयप्रकृत्यर्थतावच्छेदकवत्त्वेन स्वाश्रय-व्रीहित्ववत्त्वेन व्रीहौ एव अन्वय-स्वीकारात्। न च 'राज्ञो राजा' इत्यादौ असमस्तस्थले स्वत्वसंसर्गस्य

आकङ्क्षाभास्यत्वं न स्यात्। स्वत्वस्य राजपदार्थतावच्छेदकधर्मावच्छिन्न-अनुयोगितानिरूपकत्वेऽपि द्वितीयसम्बन्धो न गतः। स्वं पदार्थतावच्छेदकधर्मो राजत्वम्। तदितरधर्मो राजत्वं नास्ति। तथा च तदितरधर्मावच्छिन्न-प्रतियोगिता-निरूपकत्वरूप-द्वितीयसम्बन्धानवगमात् स्वत्वसम्बन्धावच्छिन्न-राजत्वावच्छिन्न-प्रकारतानिरूपित-राजत्वावच्छिन्न-विशेष्यताकबोधो न स्यादिति वाच्यम्। प्रकारता-वादिगदाधरमते स्वत्वप्रकारकबोधस्यैवाङ्गीकारात्। एवञ्च स्वत्वं षष्ठ्यर्थः। तत्र राजपदार्थस्य निरूपितत्व-सम्बन्धेन अन्वयः। स्वत्व-षष्ठ्यर्थपदार्थस्य स्वरूप-सम्बन्धेन अग्रिमराजपदार्थेऽन्वयः। तथा च निरूपितत्व-सम्बन्धावच्छिन्न-राजत्वाच्छिन्न-प्रकारतानिरूपित-स्वत्वत्वावच्छिन्न-विशेष्यत्वावच्छिन्न-प्रकारता-निरूपित-राजत्वावच्छिन्न-विशेष्यताक इति। 'राजराज' इति समासस्थले तु राजपदस्य राजस्वामिनि लक्षणया अभेदसंसर्गको बोध इति तत्र राजस्वामित्व-राजत्वयोः भिन्नत्वात्।

न च 'जातिमान् घटः' इत्यादौ पदार्थतावच्छेदक-ऐक्यात् अभेदान्वयबोधो न स्यात् इति वाच्यम्। तत्रापि पदार्थतावच्छेदकावच्छेदकभेदस्य सत्त्वात्, जातिमत्पदार्थतावच्छेदकावच्छेदकस्य जातित्वस्य घटत्वस्य च भेदप्रसिद्धेः।

न च 'चैत्रस्य गुरुकुलम्' इत्यादौ चैत्रपदार्थस्य निरूपितत्वसम्बन्धेन गुरुत्वे अन्वयः, तस्य आकाङ्क्षाभास्यत्वं न स्यात्। गुरुत्वनिष्ठनिरवच्छिन्ना-नुयोगितायाः पदार्थतावच्छेदकावच्छिन्नत्वाभावात् इति वाच्यम्। गुरुत्वस्य जात्यखण्डोपाध्यतिरिक्तत्वेन जात्यखण्डोपाध्यतिरिक्त-पदार्थस्य किञ्चिद्धर्म-पुरस्कारेण एव भानमिति नियममनुसृत्य गुरुत्वस्य गुरुत्वत्वेन उपस्थितिरिति तयोः भिन्नत्वेन अदोषात्। न च लघुधर्मसमनियत-गुरुधर्मस्य अभाव-प्रतियोगिता-अनवच्छेदकत्वनियमात् 'कम्बुग्रीवादिमान् नास्ति' इत्यादौ स्ववृत्ति-कम्बुग्रीवादि-मत्त्वावच्छिन्न-प्रतियोगिताकत्व-संसर्गस्य आकाङ्क्षाभास्यत्वं न स्यादिति वाच्यम्। कम्बुग्रीवादिमत्त्वस्य अपि अखण्डोपाध्यतिरिक्तत्वेन कम्बुग्रीवादिमत्त्वत्वेन भानात्। तत्र स्वावच्छिन्नप्रतियोगिताकत्वस्यैव आकाङ्क्षाभास्यत्वेन दोषाभावात्। न च 'घटो नास्ति' इत्यादौ घटत्वस्य जातित्वेन स्वरूपतो भानं, न तु घटत्वत्वेन। 'घटत्वम् अहं जानामि' इति सर्वसिद्धानुव्यवसायदर्शनेन घटत्वपदार्थस्य स्वावच्छिन्नप्रतियोगिताकत्वेन एव अन्वय इष्टः। स्ववृत्ति-घटत्वावच्छिन्न-प्रतियोगिता-निरूपकत्वेन वा अन्वयः। तथा च एतस्य आकाङ्क्षाभास्यत्वं न स्यादिति वाच्यम्। पदार्थतावच्छेदकविशिष्टः संसर्ग आकाङ्क्षाभास्यः। वैशिष्ट्यञ्च (१)स्वविशिष्टानुयोगिताकत्व-(२)स्वभिन्नपदार्थतावच्छेदकविशिष्ट-

प्रतियोगिताकत्व-उभयसम्बन्धेन। उभयत्र वैशिष्ट्यञ्च (१)स्वावच्छिन्नत्व-(२)स्ववृत्तित्व-अन्यतरसम्बन्धेनेति पूर्वोक्तसर्वस्थले दोषाभावात्।

न च पशुपदं लोमवल्लाङ्गूलावच्छिन्ने शक्तमिति। लोम-लाङ्गूलयोः संयोगसम्बन्धः। तस्यापि आकाङ्क्षाभास्यत्वम् अनिष्टम् आपद्येत। न च शक्तिभास्योऽपि कश्चित्सम्बन्ध आकाङ्क्षाभास्योऽपि स्यात्। को विरोधः ? न च सम्बन्धे शक्तिस्वीकारो व्यर्थः शङ्क्यः। आकाङ्क्षा-योग्यकालिकादि-सम्बन्ध-निरासाय तत्तत्संसर्गविशेषनियामकशक्तेः एव स्वीकारात्। एवञ्च न व्यापकत्वभङ्ग इति वाच्यम्। लोम-लाङ्गूलयोः यः संयोगः स न आकाङ्क्षा-भास्य इति। प्रसिद्धव्यवहार-प्रतीति-विरोधात्। आकाङ्क्षाभास्य-अभेदादि-संसर्गवत् तात्पर्य-व्यवहार-आप्तवाक्यादेव विशेषसंसर्गज्ञाने सिद्धे संसर्गांशे शक्तिस्वीकारवैयर्थ्यापत्तेश्च। न च शक्त्यभास्यः संसर्ग आकाङ्क्षाभास्य इति ग्रहणेन लोम-लाङ्गूलयोः संयोगस्य न आकाङ्क्षाभास्यत्वमिति वाच्यम्। ईश्वरेच्छात्मकशक्तेः व्यापकत्वेन सार्वत्रिकत्वात् तादृशसंसर्गस्यापि अप्रसिद्धत्वापत्तेः। न च अनुयोगितावाचक-पदनिष्ठ-शक्त्यभास्यः संसर्ग आकाङ्क्षाभास्य इत्येव ग्रन्थकृत्तात्पर्यमिति न अप्रसिद्धः संसर्गस्येति वाच्यम्। तच्छब्दस्य बुद्धिविशेषविषयत्वोपलक्षित वक्तृजिज्ञासित-धर्मावच्छिन्ने शक्तत्वाद् यत्र अनुयोगिवाचकत्वं तच्छब्दस्य तत्रत्यसंसर्ग-ग्रहणानापत्तेः।

ननु अनुयोगि-वाचकपदनिष्ठ-शक्तिसम्बन्धिबोध-विषयत्वनिष्ठ-विशेष्यता-भिन्न-बोधविषयत्वनिष्ठ-विशेष्यता-निरूपित-प्रकारताश्रय-प्रतियोगिकः संसर्ग आकाङ्क्षाभास्य इत्येवं ग्रन्थकृताम् आशयेन 'एव' शब्दादिस्थले न दोषः पदार्थविवेकिनामिति चेत् ? न। एक एव समवाय इति मते एकत्वप्रतियोगिक-समवायः घटत्वप्रतियोगिक-समवायाद् भिन्न एव। तथा च घटत्वप्रतियोगिक-समवायस्य अपि आकाङ्क्षाभास्यत्वम् आपद्येत। तथा हि घटपदनिष्ठ-शक्ति-सम्बन्धि-बोधविषयत्वनिष्ठ-विशेष्यताभिन्नम् एकवचनपदनिष्ठ-शक्तिसम्बन्धिबोध-विषयत्वनिष्ठ-विशेष्यतानिरूपित-प्रकारताश्रय-एकत्व-प्रतियोगित्वम् इति। तादृश-एकत्वप्रतियोगिकत्वेन घटत्वप्रतियोगिक-समवायस्य ग्रहणम् अनिष्टं स्यादिति विचारात्। न च घटत्वप्रतियोगिकसमवायस्य न आकाङ्क्षाभास्यत्वम् "व्यक्त्याकृतिजातयः पदार्थः" (NS. 2.2.66) इति गौतमसूत्रात् शक्तिभास्यत्वं प्रसिद्धम् एवेति वाच्यम्। 'वृक्षः कपिसंयोगी, एतद्-वृक्षत्वात्' इत्यत्र मूलावच्छेदेन कपिसंयोगसत्त्वेऽपि शाखावच्छेदेन कपिसंयोगो नास्ति इति प्रतीतिवत् एकत्वप्रति-योगिकत्वावच्छेदेन समवायस्य आकाङ्क्षाभास्यत्ववतो घटत्वप्रतियोगिकत्वा-वच्छेदेन समवायाद् भिन्नत्वेन तस्यापि आकाङ्क्षाभास्यत्वापत्तेः दुरुद्धरत्वात्। न

च उपस्थितीयविशेष्यताविशिष्टः संसर्ग आकाङ्क्षाभास्यः। वैशिष्ट्यं च स्वप्रयोज्य-शाब्दबोधीयविषयतानिरूपकत्व-स्वनिरूपितत्वाभाववद्-उपस्थितीय-विषयताप्रयोज्य-शाब्दबोधीयविषयता-निरूपकत्वम् इति उभयसम्बन्धेन। तथा च न पूर्वोक्ता दोषा इति वाच्यम्। 'संयोगेन समवायेन वा अभावो नास्ति' इत्यादौ अभावपदार्थस्य स्वावच्छिन्नप्रतियोगिता-निरूपकत्वसम्बन्धेन अन्वयः। तस्यापि आकाङ्क्षाभास्यत्वं न स्यात्। अभावपदवाच्य-नञ्पदवाच्ययोः एकत्वात्। द्वितीयसम्बन्ध-असङ्घटनात् इति।

न च उपस्थितीयविशेष्यताविशिष्टः संसर्ग आकाङ्क्षाभास्य इति। वैशिष्ट्यं च स्वप्रयोज्य-शाब्दबोधीय-विषयतानिरूपकत्व-स्वाभाववदुपस्थितीय-विषयताप्रयोज्य-शाब्दबोधीयविषयता-निरूपकत्वम् इत्युभयसम्बन्धेन। स्वाभाववत्त्वं केन सम्बन्धेन ग्राह्यम् ? स्वनिरूपितत्व-स्वप्रयोजकपदप्रयोज्यत्व-एतदुभय-सम्बन्धेन। एवञ्च पदभेदप्रयुक्तः अभावः अभाव-नञ्-पदयोः भिन्नत्वात् इति वाच्यम्। अवच्छेदकभेदेनैव विषयताभेदो भवति। अत एव घटत्व-पटत्व-रूपावच्छेदकभेदात् न एकविषयता। तथा च नञ्पद-अभावपदयोः अभावत्वमेव अवच्छेदकमिति। तयोः अभेदात् उक्तसंसर्गासङ्घटनेन आपत्तेः तादवस्थ्यात्। न च पदार्थविशिष्टः संसर्ग आकाङ्क्षाभास्य इति। वैशिष्ट्यञ्च स्वप्रयोज्य-शाब्दबोधीय-विषयतानिरूपकत्व-स्वनिरूपितत्वाभाववद्-उपस्थितीय-विषयता-प्रयोज्यत्व-एतदुभयसम्बन्धेन। अभाववत्त्वं केन सम्बन्धेन ग्राह्यमिति? स्वप्रयोजकपदभिन्नपदप्रयोज्य-उपस्थितीयविषयताप्रयोज्यत्व-स्वविशिष्टशाब्दबोधीय-विषयता-निरूपकत्वम् इति उभयसम्बन्धेन। एवञ्च अभावस्य उभयपद-प्रयोज्यत्वेन आपत्त्यभावात् इति वाच्यम्। घट-घटत्वयोः समवायस्यापि आकाङ्क्षा-भास्यत्वापत्तेः। एकत्वप्रतियोगिक-घटानुयोगिक-समवायस्य यथा आकाङ्क्षा-भास्यत्वं तथा घट-घटत्वयोः समवायस्यापि आकाङ्क्षाभास्यत्व-सौष्ठवात्।

**अत्र सिद्धान्तः** - उपस्थितीयविषयताविशिष्टा या संसर्गता सा आकाङ्क्षाप्रयोज्या। वैशिष्ट्यञ्च स्वप्रयोज्यशाब्दबोधीयविषयता-निरूपितत्व-स्वनिरूपितत्वाभाववदुपस्थितीयविषयता-निरूपितत्व-एतदुभयसम्बन्धेन।समवायस्य एकत्वात् घट-घटत्वयोः समवाये संसर्गता एव नास्तीति न दोषः।

किञ्च - शास्त्रे पदार्थान्तरत्वव्यवहारश्च पदभेदप्रयुक्तो वृत्तिभेदप्रयुक्तश्च दृश्यते। तथा च अपरपदार्थत्वम् अत्र उभयसाधारणं विवक्षणीयम्। एवञ्च संसर्गताविशिष्टा संसर्गता आकाङ्क्षाप्रयोज्या इति व्याख्यानम्। वैशिष्ट्यञ्च स्वतादात्म्य-स्वनिरूपितप्रकारताविशिष्ट-विशेष्यताकत्वम् इति उभयसम्बन्धेन। सम्बन्धघटक-वैशिष्ट्यञ्च स्वप्रयोजकपद-भिन्नपदप्रयोज्यत्व-स्वप्रयोजकवृत्ति-

ज्ञानीयविषयता-निरूपित-विषयत्व-अप्रयोज्यत्व-अन्यतरसम्बन्धेन। 'अभावो नास्ति' इत्यत्र पदद्वयभेदः अभावपदार्थाभावत्व-निष्ठप्रकारता-विशिष्टत्वस्य नञ्-पदार्थाभाव-निष्ठविशेष्यतायां विद्यमानत्वात्। शब्दः तावच्छाब्दबोधे भासते इति सिद्धान्ताच्च।

न च एवमपि 'घटो नास्ति', 'कलशो नास्ति' इति समूहालम्बन-ज्ञानोत्तरकाले घट-कलश-उभयवृत्तिज्ञानजन्यघटोपस्थितेः घटविषयकशाब्दबोधे घटत्वनिष्ठप्रकारत्व-घटनिष्ठविशेष्यत्वयोः विनिगमनावैकल्येन पदयोः प्रयोजकत्वात् तत्रत्य तन्निरूपितसंसर्गता-संग्रहापत्तिरिति वाच्यम्। प्रथमसंसर्गस्थाने स्वप्रयोजकपदनिष्ठ-आकाङ्क्षाज्ञानीय-विषयतानिरूपित-सांसर्गिकविषयतानिरूपित-पदनिष्ठविषयताप्रयोज्यत्वस्य दानेन घट-कलश-पदनिष्ठ-विषयतयोः निरूप्य-निरूपकभावाभावात्। अभाव-नञ्-पदनिष्ठ-विषयतयोस्तु परस्परम् आकाङ्क्षाज्ञाने निरूप्य-निरूपकभावत्वात् च।

**केचित्तु** - शक्त्यप्रयोज्यः संसर्ग आकाङ्क्षाभास्य इति तन्न। 'नीलो घटः' इत्यादौ अभेदस्य आकाङ्क्षाभास्यत्वं न स्यात्। 'अभेदोऽस्ति' इत्यादौ अभेदरूपार्थस्य शक्तिप्रयोज्यत्वात्। न च शक्त्यप्रयोज्या या संसर्गता सा आकाङ्क्षाभास्येति न दोष इति वाच्यम्। 'नीलाभिन्नो घट' इति तात्पर्येण स इति तच्छब्दः प्रयुज्यते तत्र अभेदः शक्तिप्रयोज्य एवेति, तत्र अभेदस्य आकाङ्क्षा-भास्यत्वं न स्यात्।

**श्रीगुरुचरणास्तु** - उपस्थितीयविषयता-विशिष्टा संसर्गता आकाङ्क्षा-प्रयोज्या इति। वैशिष्ट्यञ्च स्वप्रयोज्य-विशेष्यतानिरूपितत्व-स्वप्रयोजक-वृत्तिज्ञानीयविषयत्वानिरूपित-वृत्तिज्ञानीयविषयताप्रयोज्य-उपस्थितीयविषयता-प्रयोज्य-प्रकारतानिरूपितत्व-उभयसम्बन्धेन। घट-घटत्वयोः समवायस्य न आकाङ्क्षाभास्यत्वम्। एकत्वनिष्ठप्रकारतानिरूपिता संसर्गता भिन्ना, घटत्व-निष्ठप्रकारतानिरूपिता संसर्गता भिन्ना इति वर्णनेन दोषाभावात्। ननु एतत्प्रकरणात् प्राक् आकाङ्क्षाज्ञानं शाब्दबोधे कारणमिति निश्चयाभावात् कथं संसर्गतावैशिष्ट्यमिति वाच्यम्। 'घटः कर्मत्वम् आनयनं कृतिः' इति परस्पर-निराकाङ्क्षवाक्यात् शाब्दबोधाभावाय आकाङ्क्षाज्ञानस्य शाब्दबोधप्रयोजकत्वम् इति पूर्वप्रकरणे निर्द्धारितत्वाद् विवेकसौष्ठवे क्षतिविरहात्।

**केचिन्मान्यास्तु** - उपस्थितीयविषयत्वाप्रयोज्या या शाब्दबोधीया संसर्गता सा आकाङ्क्षाप्रयोज्या। अथवा वृत्तिज्ञानीयविषयत्वाप्रयोज्या या संर्सगता सा आकाङ्क्षाप्रयोज्या इति सर्वत्र अदोष इति।

अत्र अस्मद्गुरवः - 'नीलो घटः', 'पीतो घटः' इत्यादौ अभेद-सम्बन्ध आकाङ्क्षाभास्यो वृत्तिभास्यो वेति विचिकित्सायां वृत्तिभास्य इति मीमांसकाः। आकाङ्क्षाभास्य इति नैयायिकाः। मतभेदात् निश्चयाभावेन वृत्त्यभास्यत्वस्य आकाङ्क्षाभास्यत्वोद्देश्यतावच्छेदके प्रवेशाभावेन अनिष्टापत्तेः इति अलम्। विधेयांशे अधिकावगाहिशाब्दानुभवस्वीकर्तृ-नवीनमते 'घटो नीलघटः' इत्यादौ घटत्वे घटत्वभेदाभावः। जातित्वविशिष्टजातिमत्परक-सर्वनामघटित-जातिमान् घट इत्यर्थक 'स घट' इत्यादौ घटत्वे घटत्वभेदाभावः। 'चैत्रस्य गुरुकुलम्' इत्यत्र निरूपितत्वसंसर्गे पदार्थतावच्छेदक-कुलत्वावच्छिन्न-अनुयोगिकत्वाभाव। 'धान्याद् धनम्' इत्यत्र विभक्तिः साधुत्वार्थिका, प्रयोज्यत्व-संसर्ग आकाङ्क्षाभास्यः। धान्यप्रयोज्यं धनम् इति बोधः अभीष्टः। तत्र प्रयोज्यत्वसंसर्गस्य आकाङ्क्षया भानं न स्यात्। पदार्थतावच्छेदके धान्यत्वे पदार्थतावच्छेदकधान्यत्वभेदाभावः। 'कुलात् कुलम्' इत्यत्र 'देहाद् देहोऽभिजायते' इत्यत्र च कुलत्वे पदार्थतावच्छेदके कुलत्वपदार्थतावच्छेदकभेदाभावः। देहत्वे पदार्थतावच्छेदके देहत्वपदार्थतावच्छेदकभेदाभाव इति जन्यत्वसंसर्गस्य भानं न स्यात्।

केचित् तु कुशाग्रधियः - समवायस्य एकत्वपक्षे घट-घटत्वयोः वृत्तिभास्यस्यापि समवायस्य आकाङ्क्षाभास्यत्वापत्तिवारणाय पूर्वोक्तसर्वदोष-परिहाराय च। एकपदार्थे इत्यत्र सप्तमी विशेष्यत्वार्थिका। **अपरपदार्थस्य** इत्यत्र षष्ठी प्रकारत्वार्थिका, न तु अनुयोगित्वे विभक्तिवाक्ये। प्रकारता-विशेष्यतयोश्च निरूपितत्वसम्बन्धेन लक्षणया संसर्गविषयतायाम् अन्वयः। तथा च पदजन्य-प्रतिपत्तीयविषयता विशिष्ट-सांसर्गिकविषयत्व-आकाङ्क्षाप्रयोज्य-शाब्दबोधनिरूपित-विषयत्वाभिन्न इत्यर्थः। वैशिष्ट्यं च स्वनिष्ठनिरूपकता-निरूपित-निरूप्यतावत्त्व-स्वविशिष्ट-विषयतानिष्ठ-निरूपकता-निरूपित-निरूप्यतावत्त्व-उभयसम्बन्धेन। सम्बन्धघटक-वैशिष्ट्यं च स्वभिन्नत्व-स्वनिरूपित-पदसाकाङ्क्षपदनिष्ठ-प्रयोजकता-निरूपित-प्रयोज्यतावत्त्व-उभयसम्बन्धेन। स्वं = विषयता। एवञ्च विषयभेदाद् विषयताभेदस्य मान्यत्वेन एकत्वप्रतियोगिकसमवायाद् भिन्नो हि घटत्वप्रतियोगिकसमवाय इति न आपत्तिः। प्रकारतानिरूपितत्वं सांसर्गिक-विषयतायां ये न उपगच्छन्ति ते तु 'संयोगेन पर्वते वह्न्यवृत्तिः' इति बुद्धिं प्रति 'समवायेन पर्वतो वह्निमान्' इति निश्चयस्यापि प्रतिबन्धकत्वापत्तिभिया पराहताः। विशेष्यतानिरूपितत्वम् अपि सांसर्गिकविषयतायाम् आवश्यकमेव। अन्यथा 'संयोगेन वह्न्यभाववान्' इति बुद्धिं प्रति यथा 'संयोगेन वह्निमान्' इति निश्चयस्य प्रतिबन्धकत्वम्। तथा 'स्वसंयोगिसंयोगसम्बन्धेन वह्निमान् पर्वत'

इत्यस्यापि प्रतिबन्धकत्वापत्तेः। न च स दोषस्तु संयोगत्वमात्रावच्छिन्नत्वस्य संसर्गत्वे निवेशेनैव परिहर्तुं शक्यते इति वाच्यम्। तथा सति 'चत्वरीयसंयोगेन वह्निमान् पर्वत' इति ज्ञानस्य प्रतिबन्धकत्वानुपपत्तेरिति वदन्ति।

**अत्रैव प्रसङ्गाद् विषयत्वं विचार्यते** - प्रतीयमानतया भोगसाधनत्वं विषयत्वम्। भोगत्वम् अनुभवविशेषत्वम्। सुखदुःखान्यतरसाक्षात्कारत्वमिति यावत्। अत्र साधनता च अभेदसम्बन्धावच्छिन्ना गृह्यते। साधनपदेन जनकताश्रयो गृह्यते। जनकत्वञ्च क्वचित्साक्षात्सम्बन्धेन क्वचिच्च परम्परया। एवञ्च विषयता-सम्बन्धावच्छिन्न-भोगनिष्ठजन्यतानिरूपित-तादात्म्यसम्बन्धावच्छिन्न-जनकतावत्त्वं विषयत्वम् इति फलितम्। विशेषस्पष्टीकरणं तु तादात्म्य-सम्बन्धावच्छिन्न-भोगनिष्ठ-जन्यता-निरूपित-विषयित्व-स्वप्रयोज्यनिरूपित-विषयित्वान्यतर-सम्बन्धावच्छिन्नजनकतावत्त्वं विषयत्वमिति। स्वप्रोज्यत्वञ्च स्वजन्यस्वजन्यजन्यादिरूपम्। परम्पराजनकतायाम् अवयविनिष्ठत्व-उपादानेन नित्यपदार्थानां व्यावृत्तिः।

'आपाततः प्रतीतः सन्दिग्धार्थो विषयः' इति जैमिनिः।

विषयो विशयश्चैव पूर्वपक्षस्तथोत्तरम्।
निर्णयश्चेति शास्त्रेऽस्मिन्पञ्चाधिकरणं स्मृतम्।।

इति मीमांसा। "विशब्दो हि विशेषार्थस्सिनोतिर्बन्धनार्थकः"। आरोपाश्रयो विषयो गौर्वाहीक इत्यादौ। वाहीको विषय इति आलङ्कारिकाः। इन्द्रियजन्यज्ञानं विषयः। शब्द-स्पर्श-रूप-रस-गन्धाः विषयाः।

"विषयाशामहापाशाद्यो विमुक्तस्सुदुस्त्यजात्।
स एव कल्प्यते मुक्त्यै नान्यः षट्शास्त्रवेद्यपि।।"

इति पौराणिकाः।

शरीरेन्द्रियभिन्नत्वे सति उपभोगसाधनत्वं विषयत्वमिति नैयायिकाः। विषयो द्विविधः परोक्षः अपरोक्षश्च। अनुमानगम्यः प्रथमः। प्रत्यक्षविषयो द्वितीयः। इतोऽधिकम् अस्मत्कृत-**परिष्कारदर्पणे** द्रष्टव्यमिति।

'घटोऽस्ति', "व्यक्त्याकृतिजजातयः पदार्थाः" इति सूत्रानुरोधेन घटपदस्य घट-घटत्व-समवायेषु शक्तिः। तथा च घटे घटत्वं समवायेन भासते इति सिद्धान्तः। ननु घटे घटत्वं समवायेन भासते इत्यस्य कोऽर्थः ? निरूपितत्वं सप्तम्यर्थम् आदाय किं 'घटनिरूपित-समवाय-सम्बन्धावच्छिन्न-वृत्तित्वं घटत्वे' अयम् अर्थः ? अथवा 'समवायसम्बन्धावच्छिन्न-घटत्व-निरूपिताधिकरणत्वं घटे' अयम् अर्थः ? उभयथापि वृत्तित्व-अधिकरणत्वयोः अभेदसम्बन्धे घट-घटत्वयोरेव भाने पर्यवसानम्। भेदसम्बन्धस्वीकारे अभीष्टबोधो न स्यात्। एवञ्च अस्मिन् सन्देहे किमुत्तरमिति **शुक्लाः**।

घटवद्-भूतलमिति। 'घटवद्भूतलम्' इत्यादौ संयोगसम्बन्धावच्छिन्न-घटत्वावच्छिन्न प्रकारतानिरूपित-भूतलत्वावच्छिन्न-विशेष्यताक इति बोधे विलक्षणो विचारप्रकारः। संयोगेन भूतले घटावगाहनम् इति फलितार्थे संयोगेन भूतले घटावगाहित्वम् इत्यस्य कोऽर्थः ? किं संयोगेन घटाधिकरणत्वम् ? अथवा भूतलनिरूपित-संयोगसम्बन्धावच्छिन्न-वृत्तित्ववत्त्वम् ? किञ्च तादृशाधिकरणत्व-वृत्तित्वयोः भूतल-घटाभ्यां कीदृक् सम्बन्धः ? तयोः ताभ्याम् अभेदसम्बन्धः ? तर्हि सर्वसिद्धो भेदो विरुद्धः स्यात्। वृत्तित्व-अधिकरणत्वयोरपि वृत्तित्वेन अधिकरणत्वेन वा अन्यसम्बन्धेन वा स्वीकारे वृत्तित्त्व-अधिकरणत्वयोः सम्बन्धविशेषजिज्ञासायां सम्बन्धविशेषावच्छिन्नत्वनिवेशे तयोरपि भेदेन अभेदेन वा अन्वय इति प्रश्नजिज्ञासायाम् अनवस्थाप्रसङ्गः। कुत्रचिद् गत्वा सम्बन्धा-नङ्गीकारेण वाक्यार्थस्वीकृतिः इति चेत् ? तर्हि पूर्वमेव सम्बन्धानङ्गीकारो न्याय्यः। किं शिरोवेष्टन-नासिकास्पर्श-न्यायानुसरणेन ? तस्मात् 'घटवद्भूतलम्' इत्यादौ सम्बन्धरहित एव मानसः कश्चन बोधः। इतोऽधिकमुत्तरं मृग्यमिति **शुक्लाः**।

**VV-S 1.2.1:** स च **क्वचिदभेद** इति। भेदसम्बन्धः अभेदान्यसम्बन्धेषु पारिभाषिकः। शाब्दबोधो द्विविधः, भेदाभेदान्वयविषयकत्वात्। भेदलक्षण-सम्बन्धानां प्रतियोगित्वानुयोगित्वादीनाम् अनन्तत्वेन पूर्वम् अभेदमेव आह - **स चेति**। भेदसम्बन्धान् अपि दर्शयति - **आधाराधेयेति**। 'घटवद् भूतलम्', 'भूतले घटः' इत्यादिषु आधाराधेयभावः। वस्तुतो 'भूतले घट' इत्यादौ सप्तम्यर्थयोः वृत्तित्वाधेयत्वयोः प्रतीत्या न संसर्गमर्यादया भानम्। तथापि 'ग्रामं गच्छति' इत्यादौ कर्मत्वं द्वितीयार्थः। तत्र ग्रामादेः आधेयत्वेन अन्वयः। तत्र आधेयत्वस्य संसर्गतया भानम्। 'चैत्रस्य धनम्' इत्यादौ आश्रयत्वार्थक-आधारत्वस्य च ससंर्गमर्यादया भानमिति सिद्धान्तः। 'घटो नास्ति भूतले' इत्यादौ प्रतियोग्य-नुयोगिभावः सम्बन्धः। 'घटे ज्ञानम्', 'मोक्षे इच्छा अस्ति' घटविषयकज्ञानस्य मोक्षविषयकेच्छायाः प्रतीयमानत्वेन विषयविषयिभावः। घटः विषयः, ज्ञानं विषयि। आधाराधेय इति विशिष्टस्य। सम्बन्धत्वं तु वैयाकरणमतेन "सम्बन्धो हि सम्बन्धिभ्यां भिन्नो द्विष्ठो विशिष्टबुद्धिनियामकश्चेति" भाष्यबलेन प्रतियोग्यनुयोगि-निष्ठस्यैव सम्बन्धत्वम्। न्यायमते तु अनुयोगिवृत्तिधर्मस्यैव सम्बन्धत्वम्। 'भूतले घट' इत्यादौ घटस्य भूतले आधारता-सम्बन्धः। भूतलस्य घटे आधेयता-सम्बन्धः। भूतलस्य घटे प्रतियोगिता, घटस्य भूतले अनुयोगिता-सम्बन्धः। किन्तु 'घटो नास्ति' इत्यादौ घटत्वावच्छिन्नप्रतियोगिता-निरूपकत्वस्य संसर्गत्वेऽपि घटत्वम् अवच्छिन्नत्वं प्रतियोगित्वञ्चेति प्रत्येकं त्रिषु सम्बन्धत्वम्। यथा तथैव

आधारतानिरूपित-आधेयत्वस्य विशिष्टस्य सम्बन्धत्वेऽपि प्रत्येकम् आधारत्वादेः सम्बन्धत्वे बाधकाभाव इति आशय इति।

**केचित्तु** - स्वरूपसम्बन्धेन आधेयपदार्थे अन्वयो निरूपकत्वसम्बन्धेन आधारे अन्वय इत्येवं द्विष्ठत्वोपपत्तौ अपि निरूपकत्वसम्बन्धस्य वृत्त्यनियामकत्वेन तत्त्वासिद्धेः इति। 'भूतले घट' इत्यत्र घटस्य भूतले संयोगसम्बन्धो घटसंयोगः समवायेन भूतले अस्ति, समवायश्च स्वरूपसम्बन्धेन अस्ति इति वदन्ति। न च अभेदसम्बन्धस्य द्विष्ठत्वाभावेन वैयाकरणमते कथम् अभेदस्य सम्बन्धत्वमिति ? किञ्च व्याकरणमहाभाष्य-प्रमाणसत्त्वे तद्विरोधो न्यायमते कथं, व्याकरणप्रणेतृणां साक्षादवतारभूतत्वादिति वाच्यम् ? न विद्यते भेदो भेदसंसर्गो यत्र विशेष्य-विशेषणभावे सोऽभेद इति विशेष्यविशेषणभावरूपार्थक अभेदशब्द इति सूक्ष्मतत्त्ववेत्तृवैयाकरणाः। किञ्च विशिष्टबुद्धिविशेषणविशेष्यसम्बन्धविषया, विशिष्टबुद्धित्वाद्, दण्डी पुरुषः इति विशिष्टबुद्धिवत्। यत्किञ्चिन्निष्ठप्रकारता-निरूपित-विशेष्यतानिरूपिका विशिष्टबुद्धिः सम्बन्धावगाहिनी, विशिष्टबुद्धित्वाद्, दण्डी पुरुषः इति विशिष्टबुद्धिवत् इत्यनुमानेन अपि अभेदसम्बन्धसिद्धिः।

न च अभेदसम्बन्धसत्त्वे 'नीलो घटः' इत्यादौ "षष्ठी शेषे" इत्यनेन षष्ठ्यापत्तिरिति वाच्यम्। 'राज्ञः पुरुषः' इत्यादौ भेदमूलकसम्बन्ध एव। "द्विष्ठो यद्यपि सम्बन्धः षष्ठ्युत्पत्तिस्तु भेदकात्" इति **वाक्यपदीय**बलेन षष्टीविधानेन अत्र अनुपपत्तेः अधिकं तु अस्मत्कृत-**कौमुदीकल्पलतिकायां वैयाकरण-सिद्धान्तकौमुदीटीकायां** द्रष्टव्यम्।

वस्तुतस्तु "व्यक्त्याकृतिजातयः पदार्थः" (NS. 2.2.66) इति न्यायसूत्रे वार्तिककारेणोक्तविशेषणविशेष्यभावस्य एकविषयत्वाद् यदि अभेदसम्बन्धः स्यात् तर्हि विना सम्बन्धम् इति वार्तिककार-कथनं निरर्थकं स्यात्। तस्मात् नास्ति अभेदसम्बन्ध इति शाब्दिकंमन्याः।

न च 'राहोः शिरः', 'शिलापुत्रकस्य शरीरम्' इत्यादौ औपाधिकभेदम् आदाय षष्ठ्युपपादनं व्यपदेशिवद्भावेन भेदम् आदाय इति तत्त्वम्। संसर्गस्य द्विष्ठत्वनियमात् न अभेदसंसर्ग इति वाच्यम्। तादृशभाष्येण अभेदस्य षष्ठी-प्रयोजकत्वं न इति कल्पनेन अविरोधात्। किञ्च वैयाकरणीयसम्बन्धलक्षणे द्विष्ठत्वं न द्वयोः पदार्थयोः तिष्ठति इति द्विष्ठः तस्य भावो द्विष्ठत्वं वर्णनीयम्। किन्तु विरोधपरिहाराय द्वित्वविशिष्टत्वं द्विष्ठत्वम्। वैशिष्ट्यञ्च स्वाश्रयवृत्तित्व-स्वाश्रयाश्रयवृत्तित्वान्यतरसम्बन्धेन। संसर्गतावादिमते 'राज्ञो राजा' इत्यादौ यत्र प्रकारतावच्छेदक-विशेष्यतावच्छेदकयोः ऐक्यं तत्सम्बन्धस्य स्वत्वादेः द्विष्ठत्व-सिद्धिः एव प्रथमसम्बन्धनिवेशफलम्।

अभेदस्य द्विष्ठत्वसिद्धिपूर्वक-सम्बन्धत्वसिद्धये द्वितीयसम्बन्धनिवेशः। 'भूतले घट' इत्यादौ तु सुतरां द्विष्ठत्वासिद्ध्या सम्बन्धत्वम् इत्यपि परस्परविरोध-परिहारोपायः।

वस्तुतस्तु - "न हि कस्यचिद् ग्रन्थकृतो विपरीतलिखनं युक्तिबलाद् वस्तुसिद्धौ बाधकमिति" (VV-4.4.1) मूलसिद्धान्तेन व्याकरणभाष्यकृता हि औपाधिकभेदेन 'राहोः शिरः' इत्यादौ षष्ठीसाधितत्वेऽपि सर्वव्यवहार-लोकशास्त्र-आबालवृद्धसाधारणप्रसिद्धस्य अभेदस्य सम्बन्धस्य सत्त्वे क्षतिविरहः। किञ्च अथ "व्याकरणम् इत्यस्य कः पदार्थः ? सूत्रम्" - इति व्याख्यानेन "व्यपदेशिवद् एकस्मिन्" इति परिभाषोत्पत्तये औपाधिकभेदपूर्वक-षष्ठीप्रदर्शनम् अर्थात् काल-पुरुषादि-उपाधिभेदेन राहु-शिरः-पदार्थयोः भेद इति। तथा च **परिभाषाप्रकाशे** भाष्यकृतः परिश्रम इति अभेदसम्बन्धसत्त्वे न किञ्चिद् बाधकमिति **शुक्लाः**।

**VV-S 2.1.1:** सूचीकटाहन्यायेन उद्देशक्रमेण च अभेदस्य संसर्गतया भानस्थलम् आह - **अभेदश्च प्रातिपदिकार्थे** इति। अनुयोगित्वं सप्तम्यर्थः। उपस्थापितस्य इत्यत्र षष्ठ्यर्थः प्रतियोगित्वम्। पदार्थस्य इति शेषः। समन्वयश्च 'नीलो घटः' इत्यादौ प्रातिपदिकार्थे स्वसमानविभक्तिकेन घटादिलक्षणानुयोगि-वाचक-घटपदादिसमानविभक्तिकेन नीलपदेन उपस्थापितस्य नीलपदार्थस्य अभेदः संसर्गमर्यादया आकाङ्क्षया भासते। नीलपदोत्तरविभक्तेः साधुत्वमात्रार्थकत्वात्। 'नीलस्य घट' इत्यादौ विभक्त्या व्यवधानं विरुद्धविभक्तिमत्पदार्थस्य अभेदो न भासते इति तत्त्वम्।

**VV-S 2.2.1:** ननु 'वेदाः प्रमाणम्' इत्यादौ वेदपद-प्रमाणपदयोः समानविभक्तिकत्वाभावेऽपि वेद-प्रमाणादि-पदार्थयोः अभेदो भासते एवेति तात्पर्येण समानविभक्तिकत्वं निर्वक्ति - **स्वसमानेति**। अत्र स्वपदेन अनुयोगिवाचकं पदं गृह्यते। 'वेदाः प्रमाणम्' इत्यत्र अनुयोगिवाचकं वेदपदम्। तत्प्रकृतिका विभक्तिः जस्-विभक्तिः। तत्सजातीयत्वं प्रमाणपदेऽपि अस्ति एव। तस्यापि = प्रमाणपदस्य अपि, प्रथमान्तत्वात्। तथा च न अभेदान्वयहानिः। ननु वेदपदोत्तरं जस्-विभक्तिः प्रमाणपदोत्तरञ्च सु-विभक्तिः कथं साजात्यमिति तदेव परिष्करोति - **साजात्यञ्च** इति। आनुपूर्वीलक्षणम् अत्र साजात्यं न ग्राह्यम्। किन्तु प्रथमात्वाद्यन्यतमधर्मेणैव। एवञ्च सु-जसोः उभयोः अपि प्रथमात्वेन साजात्यम् अस्ति एवेति समानविभक्ति-कत्वेन अभेदान्वयः। प्रमीयते अनेनेति प्रमाणम्। प्रमितिकरणं प्रमाणम्। तथा च प्रमितिकरणतावन्तो वेदा इति शाब्दबोधः। **साजात्यञ्च विभक्तिविभाजकेति** - स्वनिष्ठः यो विभक्तिविभाजकः प्रथमात्वाद्यन्यतमो धर्मः तद्वत्त्वम्। समानानुपूर्वीकत्वं नाम स्ववृत्त्यानुपूर्वीसजातीयानुपूर्वीकत्वम्।

**आनुपूर्वीत्वञ्च** वर्णानां पूर्वापरीभावरूपम्। यथा 'घटः' इत्यादौ घ-कारोत्तर-अ-कारोत्तर-ट-कारोत्तर-अ-कार इति। पूर्वस्य योग्यम् अनुपूर्वम्। अनुपूर्वमेव आनुपूर्वी। स्वार्थिकः "प्रज्ञादिभ्यश्च" (P.5.4.38) इत्यण्, तदन्तत्वात् ङीप्। कम्बुग्रीवादिमद्-व्यक्त्यवच्छिन्न-शक्तघटपदसमानानुपूर्वीकत्वं घश्च टश्च अनयोः समाहारो घटम् इत्यादौ।

तत्समानानुपूर्वीकत्वं तस्मिन्निति तत्तद्वर्णोत्तोर-तद्वर्णवत्त्वं तत्समानानुपूर्वीकत्वम् इति सामान्यलक्षणम्। न चैवं लक्षणे घ-कारोत्तर-अकार-अ-कारोत्तर-टकार-ट-कारोत्तर-अकार-अ-कारोत्तरत्वस्य नीलघटेति समुदायेऽपि सत्त्वात् घटपदसमानानुपूर्वीकत्वं नीलघटेति समुदायस्यापि आपद्येत इति वाच्यम्। तत्पदविशिष्टतत्पदत्वं तत्समानानुपूर्वीकत्वम्। वैशिष्ट्यञ्च स्वघटकतानवच्छेदकावच्छिन्नाघटितत्व-स्वघटकतानवच्छेदकावच्छिन्नाघटितत्व-सम्बन्धावच्छिन्नस्ववृत्तित्व-उभयसम्बन्धेन। तथा च घटपदसमानानुपूर्वीकत्वं न नीलघटे घटपद-घटकतानवच्छिन्न-नीलत्वावच्छिन्न-घटितत्वेन लक्षणे अव्यभिचारात्।

ननु पदत्वस्य **पाणिनीय**-सङ्केतसम्बन्धेन पदत्ववत्परत्वेनानुगतत्वेऽपि 'सरो-रस'-'नदी दीन'-'राज-जरा'-'ताल-लता'-इत्यादिशब्दानां समानानुपूर्वीकत्वमापद्येत इति वाच्यम् । स्वार्थबोधप्रयोजकतावच्छेदक-धर्मवत्त्वमिति तृतीयसम्बन्धनिवेशात्। लता-तालादि-शब्दार्थयोः भेदेन तत्तत्प्रयोजकधर्माणां भिन्नत्वेन अक्षतेः।

न च तृतीयसम्बन्धनिवेशे "निपातस्य अनर्थकस्य प्रातिपदिकसंज्ञा वक्तव्या" इति वार्तिकोदाहरणे केवलपादपूरणमात्रार्थकत्वेन च-वै-तु-हि-इत्यादौ अर्थप्रयोजकत्वाभावे तयोः समानानुपूर्वीकत्वं न स्यादिति वाच्यम्। तत्तत्समानानुपूर्वीकत्वं तत्तत्पद एव। तथा हि घटपदसमानानुपूर्वीकत्वं घटपद एव न तु नीलघटे। स्वनिष्ठ-घ-त्वावच्छिन्नविषयतानिरूपित-अ-त्वावच्छिन्नविषयता-निरूपित-ट-त्वावच्छिन्नविषयतानिरूपित-अ-त्वावच्छिन्नविषयत्वावच्छिन्न-भेदप्रतियोगितावच्छेदकविषयतात्व-समनियत-ज्ञानविषयता-पर्याप्त्यवच्छेदकधर्मवत्त्वं घटे घटपदसमानानुपूर्वीकत्वम्। पटादिसमानानुपूर्वीकत्वं पटादिषु बोध्यम् इति निर्विवादः प्रकारः।

**साजात्यञ्च विभक्तिविभाजकेति** - तत्साजात्यं नाम तद्वृत्तिधर्मवत्त्वम्। अत्र विभक्ति-शब्दो धर्मपरः। एवञ्च 'वेदाः प्रमाणम्' इत्यादिस्थले प्रथमात्व-द्वितीयात्व-तृतीयात्वादि-अन्यतमधर्मेणैव गृह्यते।

ननु प्रथमात्वाद्यन्यतमधर्मेणैव साजात्यग्रहणे प्रथमात्वं नाम प्रथमसङ्ख्यापूरकत्वम्। द्वितीयात्वं नाम द्वितीयसङ्ख्यापूरकत्वम्। तृतीयात्वं नाम

तृतीयसङ्ख्यापूरकत्वम् इत्येव अभिप्रायो वक्तुं शक्यते। एवञ्च 'घटानां नीला' इत्यादावपि नीलपदोत्तर-जस्‌विभक्तिगत-बहुत्वपूरकत्वं घटपदोत्तरविभक्तेः अपि बहुत्वसङ्ख्यापूरकत्वेन साजात्यात् तत्प्रकृत्युपस्थाप्य-घटादेरपि अभेदान्वयापत्तिः इत्यत आह - **विभक्तिविभाजकेति**। विभक्तिविभाजकेत्यस्य विभक्तित्वव्याप्येत्यर्थः। तथा च समुदायार्थो विभक्तित्वव्याप्य-प्रथमात्वाद्यन्यतमधर्मेण इत्यर्थः। द्वित्वादि-सङ्ख्यापूरकत्वस्य तु विभक्तित्वव्याप्यत्वाभावात्। किन्तु सङ्केतसम्बन्धेन प्रथमा-पदवत्त्वादेः एव तद्व्याप्यत्वात्। ननु विभक्तिविभाजकेन येन केनापि धर्मेण साजात्यम् उच्यतां किमिति प्रथमात्वादिना एवेति चेत् ? न । "सुडनपुंसकस्य" (P.1.1.43) इति सूत्रबलेन स्वादिपञ्चानां सर्वनामस्थानसंज्ञा अन्येषां शसादीनां न। एवञ्च विभक्तिविभाजक-सर्वनामस्थानसंज्ञकत्वेन साजात्यापत्तौ 'घटो नीलम्' इत्यादौ घटपदोत्तर-सु-विभक्तिगत-सर्वनामस्थानत्वस्य नीलपदोत्तर-अम्-विभक्तौ अपि सत्त्वेन साजात्यापत्तौ अभेदान्वयापत्तेः। तस्माद् ग्रन्थोक्तिः सम्यगेव इति।

ननु

या विशेष्येषु दृश्यन्ते लिङ्गसङ्ख्याविभक्तयः।
प्रायस्ता एव कर्त्तव्यास्समानार्थे विशेषणे।।

इति **भर्तृहरि**पद्ये प्रायः-पदोपादानेन शिष्टप्रयोगे चिरन्तनमर्यादासंरक्षणाय क्वचित् समानलिङ्गकत्वाद्यभावेऽपि न विरोधः।

ननु 'वेदाः प्रमाणम्' इतिवत् नीलत्वगतैकत्वविवक्षया 'घटाः नीलः' इत्यपि प्रयोगः कुतो न ? न च 'नीलो घटः' इत्यादौ गुणिपरं नीलपदं गुणवाचकत्वेन त्व प्रत्ययार्थोऽपि गुणः, वाचकमाहात्म्यात्। तथा च गुणत्वात् जात्यतिरिक्तत्वेन नीलत्वत्वेन उपस्थितिः। तथा च कथं नीलत्वान्वयतात्पर्येण एकत्वव्यवस्था इति वाच्यम् ? 'नीलं रूपम्' इत्यादौ गुणिपरत्वाभावेन जात्यतिरिक्तत्वाभावेन अर्थात् जातित्वेन नीलत्वस्यैव उपस्थित्या तत्र नीलत्व एकत्वान्वयतात्पर्येण तादृशः प्रोयोगः कुतो नेति तात्पर्यात्। किञ्च प्रथमात्वेन साजात्याश्रयणम् अनुभवसिद्धम्। तथा च 'नीलो घटौ', 'नीलो घटाः' इत्येवं प्रयोगः कुतो नेति चेत् ? न। इष्टापत्तेः। अत एव 'चैत्रो मैत्रश्च सुन्दरौ' इत्यादीनि रूपाणि सङ्गच्छन्ते। तत्र तु चैत्रपदार्थे एकत्वस्य द्वित्वविशिष्ट-सुन्दरस्य चान्वयः। एकत्र द्वयमिति न्यायानुसन्धानात् ।

एवम् -

शुम्भो निशुम्भश्चैवान्यौ उत्पत्स्येते महासुरौ।
ब्रूहि शुम्भं निशुम्भञ्च दानवावतिगर्वितौ।।
'चैत्रो मैत्रश्च गच्छतः'।

"चन्द्रे कलङ्कस्सुजने दरिद्रता विकासलक्ष्मीः कमलेषु चञ्चला।
मुखाप्रसादरसधनेषु सर्वदा यशो विधातुः कथयन्ति खण्डितम्।।"

इत्यादिषु एका एव रीतिः "श्यालाः स्युः भ्रातरः पत्न्यास्स्वामिनो देवृदेवरौ" इत्यत्रापि भ्रातर इत्यस्य बहुवचनान्तत्वेऽपि द्वित्वविवक्षया देवृदेवरौ इति द्विवचनं सुगतम्। देवृदेवर-पदयोः स्वस्ववाच्ये लक्षणा। अत एव लक्ष्यतावच्छेदकयोः देवृदेवरयोः द्वित्वान्वयः। अतएव पदार्थतावच्छेदकभेदाद् द्वन्द्वोऽपि समीचीन इति विशिष्टो विचारः।

किञ्च सिद्धस्य (स्थितस्य ?) गतिश्चिन्तनीया इति न्यायेन लोके 'नीलो घटा' इति प्रयोगः कैरपि न प्रयुज्यते तस्मात् क्लिष्टकल्पनया न तादृशः प्रयोग इत्यपि **शुक्लाः**।

नीलपदस्य नीलगुणविशिष्टे लक्षणया लक्ष्यतावच्छेदक-नीलस्य अनन्तत्वात् सजातीयरहितत्वात्मक-एकत्वस्य अभावेन 'नीलो घटाः' इत्यादेः अयुक्तत्वात्। प्रकृत्यर्थतावच्छेदकतावच्छेदकैकत्वान्वयस्य सर्वानुभवविरुद्धत्वात्।

किञ्च क्रियताम् अवच्छेदकतावच्छेदक एकत्वान्वयः, परन्तु विशेषणतावच्छेदके विशेषणतावच्छेदकतावच्छेदके वा यदि एकत्वान्वयस्य किञ्चिदपि प्रयोजनं लभेत। न च 'वेदाः प्रमाणम्' इत्यत्र किं प्रयोजनमिति वाच्यम्। तत्र एकत्व-अविवक्षाप्रयोजनं तु चार्वाकादि-आगमानां प्रमाणत्व-निराकरणरूपम्। अत्र नीलत्वे एकत्वान्वयस्य न किमपि फलं प्रयोजनं वाऽपि श्रूयते। तथा च 'नीलो घटः' इत्येव प्रयोगो न तु 'नीलो घटाः' इत्यादि इति।

ननु नीलपदार्थगुणस्य कथं घटे अन्वयः अभेदेन इति चेत् ? न। नीलशब्दात् "तदस्यास्त्यस्मिन्निति मतुप्" (P.5.2.94) इति सूत्रेण अस्त्यर्थे मतुपि "गुणवचनेभ्यो मतुपो लुगिष्ट" इति वार्त्तिकेन मतुपो लुग्विधानेन अ-स्यापत्यम् इः, इयान् इतिवत् 'यश्शिष्यते स लुप्यमानार्थाभिधायी' इति न्यायेन अस्त्यर्थ-सत्ताया घटादौ विद्यमानत्वाभेदान्वये क्षतिविरहादिति **शुक्लाः**।

ननु प्रकृते विभाजकलक्षणस्य अनुपयोगेऽपि 'नवधा द्रव्याणि विभजते' इत्यादौ स्वसमभिव्याहृत-पदार्थतावच्छेदकव्याप्य-मिथःविरुद्ध-यावद्धर्मप्रकारक-ज्ञानानुकूलव्यापारो विभजतेः अर्थः। स्वं वि-पूर्वको भज्, तत्समभिव्याहृतपदार्थो द्रव्यपदार्थः। पदार्थतावच्छेदकं द्रव्यत्वम्। तद्व्याप्यमिथोविरुद्ध-यावद्धर्मः क्षितित्वादिकम्। अर्थात् अप्त्वं तेजस्त्वं वायुत्वम् आकाशत्वमित्यादिकं तत्प्रकारकज्ञानानुकूलव्यापारः क्षितित्वं वायुत्वम् आकाशत्वम् अप्त्वम् इत्येवंरूपः। **तथा** च क्षित्यादि-नव घटं च आदाय दशधा द्रव्याणीति प्राप्नोति। घटत्वस्य **क्षितित्वेन** प्रसिद्धत्वाभावेऽपि तेषां जस्त्वादि-नानाविरुद्धधर्म-सत्त्वादिति चेत् ? न।

"संख्यायाः प्रकारे घ" इति व्याकरणवार्त्तिकस्य अयमर्थः स्वसमभिव्याहृतपदार्थतावच्छेदकविशिष्टा या सङ्ख्या तद्वाचकाद् घ-प्रत्ययो भवति। तत्सङ्ख्यावान् धर्मस्य विभाजको भवतीत्यर्थः। पदार्थतावच्छेदक-वैशिष्ट्यञ्च सङ्ख्यायां स्वव्याप्यभिन्नावृत्तित्व-स्वव्याप्यविशिष्टत्व-उभयसम्बन्धेन। सम्बन्धघटक-वैशिष्ट्यञ्च स्ववृत्तित्व-स्वव्याप्यावृत्तित्व-उभयसम्बन्धेन। तथा च घटमादाय दशत्वसङ्ख्यायाः स्वव्याप्यं घटत्वम्, तद्वृत्तित्वेन स्वव्याप्यावृत्तित्व-सम्बन्धघटक-सम्बन्धविरहात् दशत्वसङ्ख्यावाचकात् घ-प्रत्ययाप्राप्तेः। ननु घटम् आदाय दशत्वसङ्ख्यायामपि स्वव्याप्यं तेजस्त्वम्। तद्व्याप्य-सुवर्णत्वादौ अवृतित्तित्वेन द्वितीयसम्बन्धघटकस्य द्वितीयसम्बन्धस्य गमनाद् 'दशधा द्रव्याणि' इति रूपं स्यादेव इति चेत् ? न। मुख्यद्वितीयसम्बन्धस्थाने स्वव्याप्यविशिष्टभिन्नत्वरूपः सम्बन्धो देयः। व्याप्यवैशिष्ट्यञ्च स्ववृत्तित्व-स्वव्याप्यवृत्तित्व-उभयसम्बन्धेन। तथा च स्वव्याप्यं क्षितित्वं तद्व्याप्यघटत्वे वृत्तित्वेन स्वव्याप्यवृत्तित्वरूप-द्वितीयसम्बन्धघटक-द्वितीयसम्बन्धस्य च सत्त्वेन उभयसम्बन्धेन स्वव्याप्यविशिष्टत्वसत्त्वेन तद्भिन्नत्वस्य वक्तुम् अशक्यत्वेन द्वितीयसम्बन्धेन वैशिष्ट्यविरहात् उक्तस्थले दशधा इति प्रयोगाभाव इति। गुणादिकम् आदाय 'दशधा द्रव्याणि' इत्यपि न प्रयोगः। तथा हि दशत्वसङ्ख्यायाः स्वव्याप्यं क्षितित्वम् अप्त्वम् इत्यादि तद्व्याप्यं गुणत्वं तद्वृत्तित्वेन स्वव्याप्यभिन्नावृत्तित्वविरहेण प्रथमसम्बन्धस्य अनागमनात् उक्त-अनिष्टप्रयोगाभावात्।

अथ 'सप्तधा पदार्थ' इत्यत्र स्वव्याप्यो द्रव्यत्व-गुणत्वादिः। तद्भिन्नत्वस्य अप्रसिद्ध्या स्वव्याप्यभिन्नवृत्तित्वस्य सुतरामप्रसिद्धेः प्रथमसम्बन्धेन वैशिष्ट्यविरहात् सप्तधा पदार्थो न स्यादिति चेत् ? सत्यम्। तत्सम्बन्धस्थाने स्वव्याप्यभिन्नवृत्तित्वसम्बन्धावच्छिन्नप्रतियोगिताक-स्वाभाववत्त्वरूपः सम्बन्धो गृह्यते। एवञ्च अप्रसिद्धत्वादेव तत्सम्बन्धे तदभाववत्त्वस्य सप्तत्वसङ्ख्यायां सत्त्वात्।

अथ क्षितिं विहाय घटम् आदाय नवधा द्रव्याणीतिप्रोगः कस्मान्न भवति? तत्र उभयमुख्यसम्बन्धस्य सत्त्वात्। अथवा घटं विहाय अष्टधा द्रव्याणीति वाक्यं कुतो नेति चेत् ? अत्र **कुशाग्रबुद्धयः** - स्वव्याप्यवृत्तिः यः स्वाश्रयत्व-सम्बन्धावच्छिन्न-प्रतियोगिताकाभावः तत्प्रतियोगित्वमिति तृतीय-सम्बन्धदानेन न दोषः। तथा हि स्वव्याप्यं क्षितित्वम्, तद्वृत्तिः या स्वाश्रयत्वसबन्धेन क्षितिं विहाय घटम् आदाय इति नवत्वसङ्ख्या नास्ति इत्याकारक-अभावीया या प्रतियोगिता तत्प्रतियोगिताकत्वस्य, अथ च उक्तरीत्या अष्टत्वसङ्ख्या नास्ति इत्याकारको यः अभावो तत्प्रतियोगिताकत्वस्य च सत्त्वेन तादृशाभावाप्रतियोगित्वविरहेण निरुक्त-रीत्या नवत्वसङ्ख्यायाम् अष्टसङ्ख्यायाञ्च वैशिष्ट्यविरहात् न उक्तप्रयोग इति

वदन्ति। तन्न। तथा सम्बन्धस्वीकारे क्षित्यादि-नव आदाय इष्टस्थलेऽपि 'नवधा द्रव्याणि' इति प्रयोगे नवत्व-सङ्ख्यायां तृतीयसम्बन्धेन वैशिष्ट्यस्याप्रसिद्ध्यापत्तेः। यतो हि स्वव्याप्ये घटत्वे निरुक्तसम्बन्धेन योऽभावः तत्प्रतियोगित्वस्यैव नवत्वसङ्ख्यायां सत्त्वात्। तस्मात् वक्ष्यमाणसम्बन्ध एव ज्यायान्। तथा हि - स्वाश्रयवृत्तिः यः स्वाश्रयत्वसम्बन्धावच्छिन्न-प्रतियोगिताकाभावः तत्प्रतियोगित्व-रूपस्य निवेशः। स्वं = द्रव्यत्वम्। तदाश्रयो = द्रव्यम्। तत्र = द्रव्ये। स्वं = नवत्व-सङ्ख्या। तदाश्रयः = क्षितित्वम्। तदाश्रया = क्षितिः। तद्रूपे = घटरूपे च द्रव्ये नवत्वसङ्ख्यासत्त्वे निरुक्तसंसर्गेण नवत्वसङ्ख्याप्रतियोगिकाभावविरहेण निरुक्तसङ्ख्यायां स्वप्रतियोगित्वासिद्धेः 'अष्टधा द्रव्याणि' इत्यस्य वारणं तु भवत्येव। यतो हि स्वाश्रयक्षित्यां निरुक्तसम्बन्धेन अष्टत्वसङ्ख्याप्रतियोगिका-भावसत्त्वेन निरुक्त-अष्टत्व-सङ्ख्यायाः प्रतियोगित्वस्यैव सत्त्वेन तृतीयसम्बन्धेन वैशिष्ट्यविरहात् न दोषः। तथा च स्वसमभिव्याहृतपदार्थतावच्छेदक-धर्मविशिष्टसङ्ख्यावत्त्वं विभाजकत्वम्। वैशिष्ट्यञ्च स्वव्याप्यभिन्नवृत्तित्व-सम्बन्धावच्छिन्नप्रतियोगिताक-स्वाभाववत्त्व-स्वव्याप्यविशिष्टभिन्नत्वस्वाश्रयवृत्तिः यः स्वाश्रयाश्रयत्व-सम्बन्धावच्छिन्न-प्रतियोगिकाभावः तत्प्रतियोगित्व-एतत्-त्रितय-सम्बन्धेन। इदमपि बोध्यम्। क्षितिं विहाय घटरूपपृथिवीम् आदाय नवधा द्रव्याणीत्यपि न। घटरूपपृथिव्यां निरुक्तसम्बन्धेन योऽभावः तत्प्रतियोगित्वस्यैव नवत्वसङ्ख्यायां भासमानत्वात् इति अलम्।

विभक्तिविभाजक=सुब्विभाजकधर्म-निर्वचनापेक्षया अत्रैव लाघवम्। अत्र अयं प्रकारः -- ननु विभक्तिविभाजकत्वं नाम किमिति प्रश्नः। न च विभक्तित्व-विशिष्टत्वं विभक्तिविभाजकत्वम्। वैशिष्ट्यञ्च स्वव्याप्यत्व-स्वव्याप्याव्याप्यत्वम् इति उभयसम्बन्धेन। स्वाभाववदवृत्तित्वं व्याप्यत्वम्। स्वं = विभक्तित्वम्। तद्व्याप्यत्वम् प्रथमात्वे इति प्रथमसम्बन्धः। स्वं = विभक्तित्वम्। तद्व्याप्यत्वं प्रथमात्वे। तद्व्याप्यं = सुत्वादि। तदवृत्तित्वेन अर्थात् सुत्वमात्रावृत्तित्वेन स्वव्याप्याव्याप्यत्वरूपद्वितीयसम्बन्धसङ्घटनेन तत्त्वसिद्धिरिति वाच्यम्। विभक्तित्व-धर्मव्याप्यं सुप्त्वम्। तद्व्याप्यं प्रथमात्वाद्यन्यतमधर्म इति द्वितीयसम्बन्धासङ्घटनेन प्रथमात्वादेः विभक्तिविभाजकत्वानापत्तेः। न च विभक्तित्वविशिष्टत्वं विभक्ति-विभाजकत्वम्। विभक्तित्वविशिष्टत्वञ्च विभक्तित्वव्याप्यत्वमेवेति लक्षणेन विभक्तित्वधर्मापेक्षया प्रथमात्वस्य व्याप्यत्वेन विभक्तिविभाजकत्वं सिद्धमेवेति वाच्यम्। सु-औ-जस्-इत्यन्यतमस्यापि विभक्तित्वधर्मव्याप्यत्वेन सुत्व-औत्वादीनाम् अपि विभक्तिविभाजकत्वापत्तेः। न च "विभक्तिश्च" (P.1.4.104) इति विभक्तिसंज्ञाविधायकं सूत्रम्। अत्र विभक्तिपदेन सुप एव ग्रहणम्। विभक्ति-

विभाजकेत्यस्य सुब्विभाजकधर्मेण इत्यर्थः। सुप्त्वविशिष्टत्वं सुब्विभाजकत्वम्। वैशिष्ट्यञ्च स्वव्याप्यत्व-स्वव्याप्याव्याप्यत्व-उभयसम्बन्धेन। स्वम् = सुप्त्वम्। तद्व्याप्यता प्रथमात्वे अस्तीति प्रथमात्वव्याप्यं सुत्वादि। तद्रहितत्वेन सुप्त्वव्याप्याव्याप्यत्वं च जातमेव इति न दोष इति वाच्यम्। "सुडनपुंसकस्य" (P.1.1.43) इति सूत्रेण पाणिनिना सङ्केतितं सर्वनामस्थानपदं स्वादिपञ्च-प्रत्ययबोधकम्। तथा च स्वं = सुप्त्वम्। तद्व्याप्यं सर्वनामस्थानत्वम्। तद्व्याप्यता प्रथमात्व इति प्रथमसम्बन्धस्य कदाचित्सङ्घटनेऽपि द्वितीयसम्बन्धा-सङ्घटनाद् अव्याप्तेः दुर्वारत्वात्। न च अनपुंसकस्येति पर्युदासेन नपुंसके सर्वनामस्थानसंज्ञा न भवति, तत्र प्रथमात्वस्य स्वव्याप्याव्याप्यत्वेन न आपत्तिः इति वाच्यम्। "अनाप्यक" (P.7.2.117) इति सूत्रे आबिति टा इत्यारभ्य सुपः पकारेण प्रत्याहारः। तथा च स्वम् = सुप्त्वम्। तद्व्याप्यता आप्त्वे। तद्व्याप्यता एव प्रथमात्व इति द्वितीयसम्बन्धासङ्घटनेन दोषस्य दुर्वारत्वात्। किञ्च व्याप्यत्वस्य प्रकृते न्यूनवृत्तित्वलक्षणाक्रान्तत्वात् निर्वाहेऽपि सु-अम्-गत-अन्यतरत्वस्य अखण्डोपाधिरूपस्यापि सुप्त्वविशिष्टत्वेन तेन धर्मेणापि साजात्यापत्तौ 'नीलं घटः' इति वाक्यस्यापि प्रामाण्यापत्तेश्च। न च सु-अम्-जस्-एतदन्यतमनिष्ठो धर्मः अन्यतमत्वम्। तद्व्याप्यता अन्यतरत्वे अस्ति। अर्थात् सुप्त्वव्याप्यः सु-अम्-जस्-गतान्यतमत्वम्। तद्व्याप्यः अन्यतरत्वमिति स्वव्याप्या-व्याप्यत्वं न जातम् इति अन्यतरत्वेन साजात्यं न भविष्यतीति न दोष इति वाच्यम्। स्वव्याप्यत्वाख्यप्रथमसम्बन्धं परित्यज्य तत्स्थाने स्वव्याप्यभेदाघटितत्व-स्वव्याप्याव्याप्यत्वम् इति उभयसम्बन्धेन। तथा च अन्यतरत्वस्य भेद-अघटितत्वेन तेन साजात्याभावात् न कापि आपत्तिः इति वर्णनात्। न च भ्याम्-विभक्तेः तृतीया-चतुर्थी-पञ्चमी-पर्याप्तत्वात् भ्याम्-विभक्तिगत-भ्याम्त्वस्यापि सुप्त्वविशिष्ट-त्वेन भ्याम्वत्त्वेन अपि विभक्तिविभाजकत्वेन साजात्यापत्तौ तृतीया-चतुर्थी-द्विवचनान्तघटितस्य 'नीलाभ्यां घटाभ्याम्' इत्यादिवाक्यस्यापि प्रामाण्यापत्तिरिति वाच्यम्। स्वव्याप्यभेदाघटित-श्रावणप्रत्यक्षविषयतानवच्छेदकत्व-स्वव्याप्या-व्याप्यत्वम् इति उभयसम्बन्धेन। तथा च भ्याम्त्वस्य श्रावणप्रत्यक्षविषयता-वच्छेदकत्वेन तस्य विभक्तिविभाजकत्वाभावेन तेन साजात्याश्रयणेन दोषाभावात्। न च सुडिति प्रत्याहारः "सुडनपुंसकस्य" (P.1.1.43) इत्यत्र सुट्त्वं नाम पाणिनीय-सङ्केत-सम्बन्धेन सुट्पदवत्त्वमेव। तस्यापि सुप्त्वविशिष्टत्वेन सुट्त्वेन विभक्तिविभाजकेन साजात्यापत्तौ 'नीलं घटः' इति पूर्वोक्तापत्तिः तदवस्थैव। अन्यतमत्वे अतिप्रसङ्गश्चेति वाच्यम्। सुप्त्वविशिष्टजातित्वं विभक्तिविभाजकत्वम्, तेन धर्मेणैव साजात्यम्। प्रकृते सुट्त्वस्य सुट्पदवत्त्वरूपत्त्वेन जातित्वाभावः।

अन्यतरत्वम् अन्यतमत्वं च अखण्डोपाधिरेव न तु जातिः। जात्यखण्डोपाध्यतिरिक्तपदार्थस्य किञ्चिद्धर्मपुरस्कारेणैव भानमिति न्यायनियमे अखण्डोपाधेः पार्थक्येन उपादानाद् भेदद्वयावच्छिन्नप्रतियोगिताक-भेदवत्त्वात् च अन्यतरत्वादेः जातित्वाभाव इति न 'नीलं घटः' इत्यादिवाक्याना प्रामाण्यमिति विशिष्टव्याख्यानात्।

न च सुट्त्वादिवत् प्रथमात्व-द्वितीयात्व-तृतीयात्वादेरपि प्राचीनसङ्केतसम्बन्धेन प्रथमापदत्वरूपत्वेन तेषामपि जातित्वं नास्ति "ङेप्रथमयोरम्" (P.7.1.28), "प्रथमायाश्च द्विवचने भाषायाम्" (P.7.2.88) इत्यादौ प्राचीनसङ्केतितसंज्ञानां व्यवहारविषयत्वमिति प्रथमात्वादेः जातित्वाभावेन विभक्तिविभाजकत्वाभावेन सर्वस्वभङ्गः इति वाच्यम्। सुब्वृत्तिसङ्ख्यानिरूपितशक्ततावच्छेदकः धर्म एव सुब्विभक्तिविभाजकः। सङ्ख्यानिरूपित-इत्यस्य सङ्ख्यानिष्ठनिरूपकतानिरूपित-निरूप्यत्वाभाववत् शक्ततावच्छेदकधर्म इत्यर्थः। एवंविध-शक्ततावच्छेदक-धर्मेणैव साजात्यम्। सुप्त्वस्य सुट्त्वस्य च शक्ततानवच्छेदकत्वात् न तेन साजात्यम्। सुत्वस्य एकवचनत्वस्य च सङ्ख्यानिरूपितशक्ततावच्छेदकत्वेन अनिरूपितत्वाभावेन तेनापि साजात्यानाश्रयणम्। प्रथमात्वद्वितीयात्वादेः तु सम्बोधन-कर्मत्व-कर्तृत्व-सम्प्रदानत्व-अपादानत्व-सम्बन्ध-अधिकरणत्व-निरूपित-शक्ततावच्छेदकत्वेन तेनैव धर्मेण साजात्याश्रयणेन क्वापि दोषो नास्ति।

**अस्मद्गुरवस्तु** सुप्त्वविशिष्टसङ्ख्यावत्त्वं सुब्विभाजकत्वं, तेनैव साजात्यम्। सङ्ख्यायां सुप्त्ववैशिष्ट्यञ्च स्वव्यापकत्व-स्वव्याप्यवृत्तित्व-स्वाव्याप्यावृत्तित्व-स्वव्याप्यविशिष्टभिन्नत्वमिति चतुष्टयसम्बन्धेन। चतुर्थसम्बन्धघटक-वैशिष्ट्यञ्च स्ववृत्तित्व-स्वेतरस्वसमानाधिकरणवृत्तित्व-उभयसम्बन्धेन। स्वम् = सुप्त्वम्। तद्व्यापकत्वं सप्तत्वसङ्ख्यायाम्। तद्वत्त्वं प्रथमात्वादिषु सर्वत्र यत्र यत्र स्वरूपसम्बन्धेन सुप्त्वं तत्र तत्र स्वाश्रयाश्रयत्वसम्बन्धेन सप्तत्वं प्रथमात्वादिगतम्। व्याप्यतावच्छेदकसम्बन्धश्चात्र स्वरूपसम्बन्धः। व्यापकतावच्छेदकश्चात्र स्वाश्रयाश्रयत्वसम्बन्धः। सुप्त्वव्यापकता सप्तत्वसङ्ख्यायां तस्य व्याप्यं प्रथमात्वादि तद्वृत्तित्वमिति द्वितीयसम्बन्धः। सुप्त्वाव्याप्यं घटत्वादि, तदवृत्तित्वमपि इति तृतीयसम्बन्धसङ्घटनप्रकारः। तस्य सुप्त्वस्य स्वपदबोध्यस्य व्याप्यं प्रथमात्वादि, तद्वैशिष्ट्यं तु नास्ति एव। तथा हि स्ववृत्तित्वरूपादि-असम्बन्धसत्त्वेऽपि स्वेतरसमानधिकरणेति द्वितीय-सम्बन्धो नास्तीति तद्विशिष्टभिन्नत्वं सप्तत्वसङ्ख्यायामिति तद्वत्त्वेन प्रथमात्वद्वितीयात्वादिना साजात्येन क्षतिविरहाद् इति आहुः।

**VV-S 2.2.3** **समानलिङ्गस्थले** इति। समानलिङ्गकत्वञ्च स्ववृत्ति-पुँल्लिङ्गत्वाद्यन्यतमवत्त्वम्। पुँल्लिङ्गत्वादिकञ्च पाणिनीयलिङ्गानुशासन-प्रकरणानुसारेण चेतनाचेतन-उभयविषयीभूत-परिभाषितत्वम्। अत एव दारशब्दस्य पुँल्लिङ्गत्वम्। खट्वा-शब्दस्य

स्तनकेशवती स्त्री स्याल्लोमशः पुरुषः स्मृतः।
उभयोरन्तरं यत्र तदभावे नपुंसकम्।।

इति सङ्घटनाभावेऽपि स्त्रीत्वं सङ्गच्छते। तस्मात् लिङ्गनिर्णायकं लिङ्गानुशासनमेव। उपचयविवक्षायां पुंस्त्वम् अपचयविवक्षायां स्त्रीत्वम् उपचयापचययोः सामान्यविवक्षायां क्लीवत्वमिति तु शाब्दिकनये। नैयायिकमते तु गुणत्रयानङ्गीकारात्। "विंशत्याद्याः सदैकत्वे सर्वाः सङ्ख्येय-सङ्ख्ययोः" इत्यनुशासनात् 'शतं ब्राह्मणाः' इत्यादीनां साधुत्वमिति तात्पर्यम्।

**शक्तिर्निपुणतेति** - शक्तिः कवित्वबीजभूतः संस्कारविशेषः।
"बुद्धिस्तात्कालिकी ज्ञेया मतिरागामिगोचरा।
प्रज्ञां नवनवोन्मेषशालिनीं प्रतिभां विदुः।।"

इति शिष्टोक्त्या प्रतिभाव्यपदेश्यः लोक-काव्य-शास्त्राद्यवेक्षणप्रयुक्त-निपुणता व्युत्पत्तिविशेषः। **"काव्यज्ञशिक्षयाभ्यास"** इत्यस्य काव्यज्ञशिक्षाप्रयुक्तः अभ्यास इति करणे योजने चेति त्रितयमेव इति शब्देन परामृश्यते।

**त्रयः समुदिताः हेतुरिति** - अत्र हेतुपदस्य प्रयोजकतावच्छेदक-समुदायत्वावच्छिन्ने लक्षणा। न च हेतुपदस्य हेतुत्वेऽपि शक्तिरस्ति। हेतुत्व एव एकत्वान्वयः। तेनैव निर्वाहः। समुदायत्वे लक्षणा। समुदाय-एकत्वान्वयश्च निरर्थक इति वाच्यम्। अत्र समुदायत्वं नाम एकविशिष्टापरत्वरूपम्। एवञ्च पार्थक्येन त्रयाणां हेतुत्वे विशेष्यविशेषणभावे विनिगमनावैकल्येन गुरुधर्मावच्छिन्न-कारणत्वाधिक्यापत्तौ पृथगेव शक्तित्वेन शक्तेः, निपुणतात्वेन निपुणतायाः, अभ्यासत्वेन अभ्यासस्य च कारणत्वस्वीकारात्। न च एकैकस्यापि पार्थक्येन कार्योत्पादकत्वापत्तौ प्रतीतिविरोधः। समुदिता इति वैयार्थ्यापत्तिः चेति वाच्यम्। घटपटादिकार्यं प्रति दण्ड-चक्र-तुरी-वेमादीनां पार्थक्येन परस्परसहकारित्वप्रसिद्धिवत् इहापि परस्परसहकारित्वे क्षतिविरहात्। तथा च लक्षणाश्रयणं मूलोक्तं सयुक्तिकं प्रयोजकता च शक्तिनिपुणताभ्यासात्मिके समुदाये काव्योत्पत्तिसमानाधिकरणाभाव-अप्रतियोगित्वरूपेति।

**VV-S 2.2.5** **यत्र विशेष्यवाचके**ति। यथा 'नीलो घटः' इत्यत्र विशेष्यवाचकं घटपदम्। तदुत्तरवर्तिविभक्तिः सुविभक्तिः। तत्तात्पर्यविषयीभूता सङ्ख्या एकत्वसङ्ख्या। तद्विरुद्धा सङ्ख्या द्वित्व-बहुत्वे तयोः अविवक्षितत्वात्

नीलपदोत्तरमपि सुविभक्तिरेव युक्तेति समानवचनकत्वम्। एव "प्रत्यक्षानुमान..." इति सूत्रेऽपि विशेष्यवाचकं शब्दपदम्, तदुत्तरवर्ति-जस् विभक्तिः तत्तात्पर्य-विषयीभूता सङ्ख्या बहुत्वसङ्ख्या, तद्विरुद्धा एकत्वादिसङ्ख्या तस्या विशेषण-वाचकप्रमाणपदे अविवक्षितत्वात् समानवचनकत्वम्। 'वेदाः प्रमाणम्' इत्यत्र तु विशेष्यवाचकं पदं वेदपदम्, तदुत्तरवर्त्ति-जस्-विभक्तिः, तत्तात्पर्यविषयीभूता सङ्ख्या बहुत्वसङ्ख्या, तद्विरुद्ध-एकत्वादिसङ्ख्याया विशेषणवाचक प्रमाणपदे अविवक्षितत्वात् समानवचनकत्वम्। एवं 'मैथिली तस्य दाराः' इत्यत्र विशेष्य-वाचकं पदं मैथिलीपदम्, तदुत्तरवर्त्तिविभक्तिः सु-विभक्तिः, तत्तात्पर्यविषयीभूता सङ्ख्या एकत्वसङ्ख्या, तद्विरुद्धाया एव विशेषणवाचक-दार-पदोत्तर-जस्-विभक्ति-तात्पर्यविषयीभूताया बहुत्वसङ्ख्याया विवक्षितत्वात् न समान-वचनकत्वम् इति सङ्घटनाप्रकारः। यद्वाक्यघटकविशेष्यवाचकपदोत्तरत्वेन अभिप्रीयमाण-विभक्तिजन्यबोधविषयत्वनिष्ठ-प्रकारतानिरूपित-इच्छीयविशेष्यतावच्छेदकसङ्ख्यात्व व्याप्यधर्मावच्छिन्न-भिन्नसङ्ख्यानिष्ठविषयताकबोधजनकत्व-निष्ठप्रकारता-निरूपित-इच्छीयविशेष्यत्वाभाववद्विभक्तिकं विशेषणवाचकपदम्। तद्वाक्यघटकविशेष्य-विशेषणवाचकपदव्यापकं समानवचनत्वम् इति अभिप्रायः। ननु उद्देश्यता-वच्छेदकव्यापकत्वं विधेये यत्र न भासते तत्रैव समानवचनकत्वनियमो, नान्यत्र। इत्येवं नियमेनैव निर्वाहे यत्र विशेष्यवाचकपदोत्तरेति गुरुभूतनियमाश्रयणं किमर्थम् इति चेत् ?' न। 'घटाः प्रमेयः' इतिरूपापत्तेः अनिवार्यत्वात्। न च विधेयपदेन अत्र केवलान्वयिभिन्नविधेयस्य ग्रहणमिति न पूर्वोक्तापत्तिरिति वाच्यम्। 'जातिमान् घटाः' इत्याद्यापत्तेः सौष्ठवात्। यत्-शब्देन अत्र विशेष्यविशेषणवाचकपदघटितं वाक्यम् एव। वाचकपदस्य बोधक इत्यर्थः। अत एव लाक्षणिकस्यापि विशेष्यपदस्य ग्रहणम्। उत्तरपदेन-उत्तरत्वेन अनुसन्धीयमान इत्यर्थः। अत एव 'इदं दधि' इत्यादौ विशेष्यवाचकपदोत्तरं विभक्तेः अश्रवणेऽपि न क्षतिः। विभक्तितात्पर्य-विषयेत्यस्य विभक्तिजन्यबोध-विषयत्वेन तात्पर्यविषयेत्यर्थः। यथा 'नीला घटाः' इत्यत्र विशेष्यवाचकं पदं घटपदम्। तदुत्तरवर्तिविभक्तिः जस्-विभक्तिः। तत्तात्पर्यविषयीभूता सङ्ख्या बहुत्वसङ्ख्या। तद्विरुद्धसङ्ख्याया अविवक्षितत्वात् नीलपदोत्तरमपि जस् एव युक्तम् इति समानवचनकत्वम्। एवं 'पितरो देवताः' इत्यादिषु अपि बोध्यम्। न च समानलिङ्गकस्थले समानवचनकत्वनियमेन 'त्रयस्समुदिताः हेतुः' इत्यत्र अनुपपत्ति-सम्भवेऽपि असमानालिङ्गकस्थले न किञ्चिन्नियतं निमित्तमिति कथं 'प्रमाणानि' इत्यत्र बहुवचनानुपपत्तिः शङ्किता इति वाच्यम्। बहुवचनप्रयोगे हि क्वचिन्नियमो नियामकः। यथा 'नीलाः घटाः' इत्यत्र समानलिङ्गकेषु समानवचनकत्वरूपः। क्वचिच्च बहुत्वसङ्ख्याबोधो

'घटान्' इतिवत्। 'प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानि' इत्यत्र तु उभयविध-हेत्वभावात् प्रथमोपस्थितत्वात् च एकवचनस्य एव भावाख्यातवत् साधुत्वात्। विशेषणपदोत्तरवचनेषु अनुगतं निमित्तम् आह - **यत्र विशेष्यवाचकेति**। 'घटाः नीलाः' इत्यादौ सङ्ख्यारूपो विभक्त्यर्थः। 'नीलाः वर्णाः' इत्यादौ तु गुणे गुणानङ्गीकारात् अपेक्षाबुद्धिविशेषविषयत्वरूप एव विभक्त्यर्थो न तु सङ्ख्यारूप इति शक्य-लक्ष्यसाधारण्येन आह - **यत्र विशेष्यवाचकेति**। अत्र समानवचनत्वस्य न स्वरूपसत्कारणता, किन्तु यादृश-शाब्दबोधे विशेष्यवाचकपदोत्तरविभक्ति-तात्पर्यविषयसङ्ख्याभिन्न-सङ्ख्याया विशेषणेन भानं तादृश-शाब्दबोध एव विशेष्यविशेषणवाचकपदयोः समानवचनत्वज्ञानं कारणम् इत्येव नियमः। अत एव 'घटाः नीलाः' इत्यत्र विशेष्यवाचक-घट-पदोत्तरविभक्तौ सुत्वभ्रमेण घटविषयक-नीलविषयक-शाब्दबोधात् पूर्वं स्वरूपसत्-समानवचनपदाभावेऽपि न दोषः। विभक्तितात्पर्यविषयेत्यस्य विभक्तिजन्यबोधविषयत्वेन तात्पर्यविषयेत्याशयः। यत्र विशेष्यवाचकपदोत्तर-सुप्-तात्पर्यविषयसङ्ख्या-विरुद्धसङ्ख्याया अविवक्षितत्वमिति निवेशे 'स्तोकं पचत' इत्यादिदोषवारके विभक्तिग्रहणस्य चर्चा एव नास्ति इति किं स्पष्टार्थत्वेन इति अलम्। अत्र विभक्तिपदं स्पष्टार्थमेव। न तु 'सुन्दरं दधि', 'बहवो गुणाः' इत्यादौ सौन्दर्य एकत्वविवक्षया बहुशब्द-तात्पर्यविषय-बहुत्वविरुद्ध-एकत्वसत्त्वात् समानवचनत्वानुपपत्तिपरिहारः फलम्। अविवक्षितत्वं तु समानवचनत्व-व्याप्यमेव। व्याप्येन व्यापकानुमानम्, धूमेन वह्निः। न हि व्याप्यधूमाभावो वह्न्यभावस्यापि प्रवर्त्तकः। अयोगोलके तप्तायःपिण्डे धूमाभावेऽपि वह्निसत्ता अस्त्येव। समानवचनत्वं समानविभक्तिकत्वञ्च अत्र प्रवेशनीयम्। अत एव 'सुन्दरो घटम्' इत्यादौ न अभेदान्वयापत्तिः। समानवचनत्वञ्च समानानु-पूर्वीकत्वमेव। न च 'घटो द्रव्यम्' इत्यादौ सोः अमादेशे समानानुपूर्वीकत्वा-भावात् कथम् अभेदान्वय इति वाच्यम्। "स्थानिवत्"-(P.1.1.56)-सूत्रबलेन स्थानिवृत्त्यानुपूर्वीम् आदाय समानवचनत्वसौष्ठवात्।

किञ्च विभक्तिविशिष्टविभक्तिकत्वं वा समानविभक्तिकत्वम्? वैशिष्ट्यञ्च स्ववृत्ति-सुत्व-औत्व-जस्त्वाद्यन्यतमवत्त्व-सम्बन्धेनेति केचित्। ननु विरुद्धत्वञ्च स्वाधिकरणावृत्तित्वमेव। तच्च न सङ्घटते। बहुत्वाधिकरणेऽपि वेदे स्वाश्रय-प्रकृत्यर्थतावच्छेदकवत्त्वसम्बन्धेन एकत्वसत्त्वात् इति चेत् ? न। स्वप्रकारकज्ञान-प्रतिबन्धक-ज्ञानप्रकारत्वमेव विरुद्धत्वम्। तत्सम्बन्धावच्छिन्नैकसङ्ख्यात्वव्याप्य-धर्मावच्छिन्नप्रकारताक-बहुत्ववान् इत्यादिबुद्धिं प्रति तत्सम्बन्धावच्छिन्न-अपर-सङ्ख्यात्वव्याप्यधर्मावच्छिन्न-प्रकारताक-एकत्ववान् इत्यादिबुद्धेः प्रतिबन्धकत्वात् एव सङ्ख्ययोः विरुद्धत्वसिद्धेः। ननु सङ्ख्यायां विरुद्धान्तविशेषणं किमर्थमिति

प्रश्नः। यत्र विशेषणवाचकपदोत्तरविभक्त्या सङ्ख्याया अविवक्षितत्त्वं तत्र समानवचनकत्वम् एव इत्युक्तौ **चिन्तामणिकार**मतानुसारेण प्राचीननैयायिकमते विशेषणवाचकपदोत्तरविभक्त्या अपि सर्वत्र सङ्ख्याप्रतीतिः भवतीति तद्रीत्या 'नीलो घटः' इत्यादौ अपि समानवचनकत्वानुपपत्तेः। न च नव्यनैयायिकमते विशेषणवाचकपदोत्तरविभक्तिः साधुत्वार्थैव। तथा च एतन्मते किमुत्तरमिति वाच्यम्। विशेषणतावच्छेदके नीलत्वादौ यत्र एकत्वान्वयतात्पर्य तत्र समानवचनकत्व-सिद्ध्यर्थं तदुपादानात्। किञ्च एकत्वसङ्ख्याया वेदत्वान्वयतात्पर्येण एकत्व-सङ्ख्यायाः प्रमाणत्वान्वयतात्पर्येण 'वेदः प्रमाणम्' इति विशेष्यविशेषणवाचके द्वे पदे एकवचनान्ते एव। तत्र समानवचनत्वं न स्याद्। विशेषणवाचकपदोत्तर-विभक्त्या अपि सङ्ख्याया विवक्षितत्वात्। विरुद्धान्तनिवेशे तु विशिष्टाभावसत्त्वेन तत्र अदोषात्।

अत्र नियमे विभक्त्यर्थेति त्यक्त्वा **विभक्तितात्पर्यविषय**(VV-2.2.5)-इत्युपादानं किमर्थमिति चेत् ? न। विभक्त्यर्थेति एतावन्मात्रकथने 'नीलो घटो', 'नीलाः घटाः' इत्यादिषु अपि समानवचनकत्वं न स्यात्। वेदे सुपां स्थाने 'ऋजवः सन्तु पन्था' इतिवत् "सुपां सुलुग्" (P.7.1.39) इति **पाणिनिसूत्रेण** स्वादेशे बहुत्वप्रतीतिः। "छन्दसि पुनर्वस्वोः" (P.1.2.61), "विशाखयोश्च" (P.1.2.62) इति सूत्राभ्याम् एकवचनस्य द्वित्वार्थबोधकत्वम्। "जात्याख्यायामेकस्मिन्निति" (P.1.2.58), "अस्मदो द्वयोश्च" (P.1.2.59) इति सूत्राभ्यां बहुवचनस्य एकत्व-द्वित्वार्थकत्वेन "फल्गुनीप्रोष्ठपदानाञ्च नक्षत्रे" (P.1.2.60) इति "तिष्यपुनर्वस्वो-र्नक्षत्रद्वन्द्वे" (P.1.2.63) इत्यादिसूत्रैः द्विवचनस्यापि बहुत्वार्थकत्वेन घटरूपविशेष्य-वाचकपदोत्तर-सु-जसाद्यर्थसङ्ख्या-विरुद्धसङ्ख्याया अप्रसिद्ध्या तत्र समान-वचनकत्वासिद्धेः। अत्र नियमे सङ्ख्या इति उपलक्षणम्। सङ्ख्या-पदेन अपेक्षाबुद्धिविशेषविषयत्वादिरूप-विभक्तिलक्ष्यस्यापि ग्रहणात्। अन्यथा 'नीलाः वर्णाः' इत्यादौ गुणे गुणानङ्गीकारात् समानवचनकत्वं न स्यात्। 'नीलाः घटाः' इत्यादौ तु सङ्ख्याया एव प्रतीतिः। अत एव नियमाकारे सङ्ख्यात्वेन अपेक्षाबुद्धि-विशेषविषयत्वेन च न सङ्ख्यायाः प्रवेशः। अपि तु विशेष्यवाचकपदोत्तर-विभक्तितात्पर्यविषयत्वेन एवेति फलितार्थः। अत्र नियमे विरुद्धत्वं नाम स्वाधिकरणावृत्तित्वार्थकत्वम्। अत्र पर्याप्तिसम्बन्धावच्छिन्नाया एव सङ्ख्यानिष्ठ-आधेयतानिरूपिताधिकरणताया ग्रहणम्। तथा च बहुत्वनिष्ठ-आधेयतानिरूपित-अधिकरणता बहुषु एव। एकत्वनिष्ठाधेयता-निरूपिताधिकरणता एकेषु एव इत्यादि। अत एव 'नीलो गुणौ' इति वाक्यस्य न प्रामाण्यम्। भिन्नपदोपादाने तु विशिष्टसत्ता-शुद्धसत्तानतिरिक्तत्ववत् सङ्ख्याया भिन्नत्वाद् 'नीलो गुणौ', 'नीलो

गुणाः' इति अनिष्टम् आपद्येत एव। अतो भिन्नपदं त्यक्त्वा विरुद्धमिति कथितम्। अस्मिन् नियमे वाचकपदेन बोधकस्यैव ग्रहणम् अन्यथा लाक्षणिकविशेष्यवाचकस्य अग्रहणापत्तेः। 'वेदाः प्रमाणम्' इत्यत्र जस्-विभक्तेः एकत्वे लक्षणया जसर्थम् एकत्वम्। तद्विरुद्धायाः सङ्ख्यायाः प्रमाणपदे अभावात् एतन्नियमाप्रवृत्तौ समानवचनत्वापत्तिदोषभिया तात्पर्यपदनिवेशो नियमे बोध्यः।

**पुरूरवोमाद्रवसाविति -**

नैमित्तिके कालकामौ काम्ये च धूरिलोचनौ।
पुरूरवोमाद्रवाश्च पार्वणे समुदाहृतौ।।

क्रतु-दक्ष-सत्य-वसु-काल-काम-धूरि-लोचन-पुरूरवो-माद्रवस इति विश्वेदेव-पदवाच्याः। इष्टिश्राद्धादौ द्वयोर्द्वयोरेव प्रधानतया पूजनं विहितम्। तत्र 'पुरूरवोमाद्रवसौ विश्वेदेवा' इति तात्पर्यम्। तत्र विशेष्यवाचकं विश्वेदेवपदं तदुत्तरवर्तिविभक्तिः जस्-विभक्तिः। तत्तात्पर्यविषयसङ्ख्या बहुत्वसङ्ख्या। तद्विरुद्धाया द्वित्वसङ्ख्याया एव विवक्षितत्वात् न समानवचनत्वम्। अपि तु द्वित्वसङ्ख्यायाः शिष्टैः विवक्षितत्वाद् द्विवचनान्तत्वमेव युक्तम्।

वस्तुतस्तु पुरूरवमाद्रवपदम् अकारान्तमेव इति शिष्टाः। ननु एवं नियमे 'स्तोकं पचत' इत्यादौ पच्-धातुरूप-विशेष्यवाचक-पदोत्तरविभक्ति-तात्पर्यविषयीभूतसङ्ख्या च द्वित्वसङ्ख्या। तद्विरुद्धैकत्व-सङ्ख्यायाः क्रियाविशेषणवाचक-स्तोकादिपदे अविवक्षितत्वात् समानवचनकत्वं स्यादिति चेत् ? न। उक्तनियम-घटक-विभक्तिपदेन विशेष्यवाचकपद-अव्यवहितोत्तरा विभक्तिः गृह्यते। प्रकृते तु विशेष्यवाचकं पदं पच्-इति शपा व्यवधानेन अव्यवहितोत्तर-विभक्त्यभावेन अक्षतेः। न च अदादौ शपो लुकि 'स्तोकम् अत्त' इत्यादौ व्यवधानाभावात् अद्-धातुरूप-विशेष्यवाचकपदाव्यवहितोत्तर-तिङ्-विभक्तितात्पर्यविषय-द्वित्वसङ्ख्या-विरुद्धैकत्व-सङ्ख्याया अविवक्षितत्वेन समानवचनकत्वापत्तिः दुवारा एवेति वाच्यम्। पूर्वोक्त-अव्यवहितोत्तरत्वानिवेशलाघवेन विभक्तिपदेन सुब्विभक्तेः एव ग्रहणात्। न च 'स्तोकं पाकौ' इत्यादौ स्तोकादेः धात्वर्थविशेषणत्वेऽपि समानवचनकत्वापत्तिरिति वाच्यम्। विशेष्यवाचकपदाव्यवहितोत्तर-सुब्विभक्तिग्रहणेन प्रकृते विशेष्यवाचक-पच्-पदं, तदव्यवहितोत्तरत्वं न, विभक्तेः घञा व्यवधानात्। न च पच्-धातोः क्विपि 'स्तोकं पचौ' इत्यादौ व्यवधानाभावेन समानवचनकत्वं स्यादेव इति वाच्यम्। अभेदसम्बन्धावच्छिन्नप्रकारतानिरूपितविशेष्यतासमानाधिकरणाया विशेष्यवाचकपद-अव्यवहितोत्तर-विभक्तितात्पर्यविषयसङ्ख्याया ग्रहणेन अत्र विभक्त्यर्थसङ्ख्यायाः कर्तृवृत्तित्वेन अदोषात्। किञ्च विभक्तिश्च विशेष्यविशिष्टा गृह्यते। विभक्तौ विशेष्यवैशिष्ट्यञ्च स्वनिष्ठविशेष्यतानिरूपित-सङ्ख्यानिष्ठप्रकारता-प्रयोजकत्व-

स्ववाचकपदोत्तरत्व-उभयसम्बन्धेन। यथा 'नीलो घटः' इत्यत्र घटनिष्ठविशेष्यता-निरूपित-सङ्ख्यानिष्ठ-प्रकारता-प्रयोजकत्वं स्ववाचकपदोत्तरत्वमपि विभक्तेरस्तीति लक्षणसमन्वयात् समानवचनकत्वम्। 'स्तोकं पचौ' इत्यादौ विभक्त्यर्थसङ्ख्यायाः क्विबर्थ-कर्त्तरि अन्वयो न तु पच्-धात्वर्थव्यापारे। विशेष्यः तु अभेदसम्बन्धावच्छिन्न-प्रकारतानिरूपित-विशेष्यतावान् एव गृह्यते। एवं च विशेष्यः पच्-धात्वर्थ एव परन्तु तन्निष्ठविशेष्यतानिरूपित-सङ्ख्यानिष्ठप्रकारता एव नास्ति। एवञ्च द्वितीयसम्बन्ध-सत्त्वेऽपि उभयसम्बन्धेन वैशिष्ट्याभावात् लक्षणसमन्वयस्य अभावेन नात्र समानवचनत्वमिति आश्रयणात्। अत्र यद्यपि विभक्तौ क्विबर्थरूपवैशिष्ट्यमस्ति परन्तु उक्तविशेष्याभावात्।

ननु एवं 'स्तोकं सुन्दरौ पचौ' इत्यत्र सुन्दरौ इत्यस्य क्विबर्थकर्त्रा सह अभेदान्वयः। तथा च अभेदसम्बन्धावच्छिन्न-सुन्दरनिष्ठप्रकारता-निरूपित-विशेष्यताश्रयरूप-क्विबर्थकर्त्ता अस्ति एव। एवञ्च स्वं = विशेष्यः, क्विबर्थकर्त्ता। तन्निष्ठविशेष्यतानिरूपित-सङ्ख्यानिष्ठप्रकारता-प्रयोजकत्वं स्वप्रयोजक-स्तोकपदे अपि स्यादिति चेत् ? न। प्रत्यासत्तिन्यायेन ययोः विशेषणविशेष्यवाचकपदयोः समानवचनकत्वम् इष्टम् तादृश-विशेषणवाचक-पदप्रयोज्य-अभेदसम्बन्धावच्छिन्न-प्रकारतानिरूपित-विशेष्यता-समानाधिकरणाया विशेष्यवाचकपद-अव्यवहितोत्तर-विभक्ति-तात्पर्यविषय-सङ्ख्याया ग्रहणम्। उदासीनाभेदसम्बन्धावच्छिन्न-प्रकारताया आश्रयणेन दोषदानस्य अनुचितत्वात्। किञ्च स्वविशेष्यताविशिष्टं यद्विशेषणवाचकं पदं तद्विशेष्यताप्रयोजकसमानवचनम्। पदे विशेष्यतावैशिष्ट्यञ्च स्वनिरूपित-अभेदसम्बन्धावच्छिन्न-प्रकारताप्रयोजकत्व-स्वविशिष्टविभक्ति-तात्पर्यविषय-सङ्ख्या-विरुद्धसङ्ख्याविषयक-बोधजनकत्वेन तात्पर्यविषयीभूत-विभक्ति-प्रकृतित्वाभाववत्त्व-उभयसम्बन्धेन। विभक्तौ स्ववैशिष्ट्यञ्च स्वावच्छेदकधर्मावच्छिन्न-विशेष्यता निरूपित-सङ्ख्यानिष्ठप्रकारता-प्रयोजकत्व-स्वप्रयोजक-पदोत्तरत्व-उभयसम्बन्धेन। यथा अत्रैव क्विबर्थनिष्ठविशेष्यता-विशिष्टं सुन्दरपदं जातमेव। तथा हि प्रथमसम्बन्धस्तु सुतरां सुन्दरपदे जातः। औ-विभक्त्यर्थनिष्ठ-द्वित्वसङ्ख्यायाः क्विबर्थकर्त्तरि एवान्वयः। एवञ्च स्वं = कर्त्तृविशेष्यता, तदवच्छेदक-धर्मावच्छिन्न-विशेष्यतानिरूपितसङ्ख्यानिष्ठप्रकारता-प्रयोजकत्वमस्ति। एवं स्वप्रयोजकपदो-त्तरत्वमपि विभक्तौ अस्ति इति उभयसम्बन्धेन स्वविशिष्ट-विभक्तितात्पर्येत्यादि सर्वं सुन्दरपदे अस्ति इति समानपदत्वं जातम्। परन्तु स्तोकपदे तु स्तोकपदार्थ-निरूपितविशेष्यः पच्-धात्वर्थः। तन्निष्ठविशेष्यताया उक्तोभयसम्बन्धेन विभक्तौ वैशिष्ट्यं नास्ति। औ-विभक्त्यर्थ-द्वित्वसङ्ख्याया धात्वर्थे अन्वयाभावाद् धात्वर्थ-निष्ठ-विशेष्यतावच्छेदकधर्मावच्छिन्न-विशेष्यतानिरूपित-प्रकारता एव नास्ति। अतः

तत्प्रयोजकत्वम् अप्रसिद्धम्। एवञ्च द्वितीयसम्बन्धगमनेऽपि उभयसम्बन्धेन विभक्तेः स्वविशिष्टाया अप्रसिद्धेः। विशेषणवाचक-स्तोकपदे प्रथम-सम्बन्धगमने अपि उभयसम्बन्धेन विशेष्यतावैशिष्ट्यं स्तोकपदे नास्तीति न समानवचनत्वम्। ननु यत्र भावे क्विप् बाहुलकात् "सम्पदादिभ्यः क्विब्वा वक्तव्य" इति वार्तिकाच्च तत्र क्विप्प्रत्ययेनापि व्यापार एव उच्यते। विभक्त्यर्थद्वित्वसङ्ख्यायाश्च व्यापार एव अन्वयः। एवञ्च 'स्तोकं सम्पदौ' इत्यत्र उभयसम्बन्धेन विशेष्यताविशिष्टविभक्तेः सत्त्वेन तत्तात्पर्य इत्यादि-सर्वस्य द्वितीयसम्बन्धस्य स्तोकपदे सत्त्वात् समानवचनत्वं प्राप्तम्। अत्र यद्यपि साध्यतावच्छेदकरूपेण धातुतो व्यापारोपस्थितिः पृथगेव। क्विप्-प्रत्ययेन तु लिङ्गसङ्ख्यान्वयितावच्छेदकरूपेण सिद्धावस्थापन्न-व्यापारोपस्थितिः पृथगेव। तत्र "क्रियाविशेषणानां कर्मत्वम्" इति न्यायसूत्रं तु साध्यावस्थापन्नव्यापार एव स्तोकादीनाम् अन्वये कर्मत्वं विदधाति। सिद्धावस्था-पन्नव्यापारे अन्वये तु 'स्तोका सम्पत्', 'स्तोकः पाकः' इत्येव। एवञ्च उभय-व्यापारोऽत्र सिद्धः तत्र विभक्त्यर्थसङ्ख्यायाः क्विबर्थव्यापार एव अन्वयः। एवञ्च उक्तोभयसम्बन्धेन स्वविशिष्टविभक्तेः अभावाद् धात्वर्थनिष्ठ-विशेष्यताया वैशिष्ट्यं स्तोकपदे न गतं समानवचनत्वं न प्राप्तमिति । क्विबर्थनिष्ठविशेष्यताया वैशिष्ट्यं च प्रथमसम्बन्धेन न गतमिति सर्वथा समानवचनत्वं न। तथापि विशेष्यतावच्छेदकं सम्पत्तित्वमपि तदवच्छिन्ना क्विबर्थनिष्ठ-विशष्यतापि अस्ति एवेति तन्निरूपित-सङ्ख्या-निष्ठ-प्रकारता-प्रयोजकत्वविभक्तौ अस्ति एवेति। स्वविशिष्टविभक्ति-तात्पर्येत्यादि सर्व स्तोकपदे अस्त्येवेति समानवचनत्वं दुर्वारमेव इति। किञ्च नियमे विभक्ति-पदेन सुप एव ग्रहणं क्विपः अनुसन्धानेन विशेष्यवाचकपदा-व्यवहितोत्तरसुपः अभावेन दोषाभावात्। क्विबनुसन्धानेनैव उपपतौ न अन्योऽपि निवेशः तत्रेति यावत् इति चेत् ? न। स्वविशिष्टा या विभक्तिरिति स्वरूपम्। तत्र वैशिष्ट्यञ्च पूर्वसम्बन्धं विहाय स्वानवच्छेदकधर्मानवच्छिन्न-विशेष्यतानिरूपित-सङ्ख्यानिष्ठप्रकारता-प्रयोजकत्वं स्वप्रयोजकपदोत्तरत्वम्। एवञ्च स्वानवच्छेदक-सिद्धत्व-धर्मावच्छिन्ना एव। अन्त्याया विशेष्यतायास्तु स्वानवच्छेदकधर्मावच्छिन्ना धात्वर्थनिष्ठा विशेष्यता तन्निरूपित-सङ्ख्यानिष्ठ-प्रकारता एव नास्तीति विभक्तौ वैशिष्ट्याभावेन स्तोकपदेऽपि वैशिष्ट्यम् अप्रसिद्धमिति। समानवचनत्वम् अप्रसिद्धमिति तात्पर्यात्। सम्प्रति ग्रन्थस्थलक्षण एव दोषः। तथा हि 'सुन्दराः दाराः', 'शोभनाः रामदाराः' इत्यत्र दारपदोत्तर-जस्-विभक्तेः पदसाधुत्वमात्रेण प्रयोगो, न तु बहुत्वसङ्ख्या-प्रयोजकत्वेन एकव्यक्तिमात्रबोधनतात्पर्येण एव तत्र जसः प्रयोगात्। न तु बहुसङ्ख्याप्रयोजकत्वेन। "दाराः पुंसि च भूम्न्येव" इति कोशस्वरसात् एकस्त्री-तात्पर्येणापि साधुत्वमात्रार्थक-जसः प्रयोगः। एवञ्च

विशेष्यवाचकपदं दारपदम्। तदुत्तरविभक्तितात्पर्यसङ्ख्या एव नास्ति इति समानवचनत्वलक्षण-समन्वयाभावात् कदाचित् 'सुन्दरो दाराः' इति स्यात् न तु 'सुन्दराः दाराः' इति चेत् ? न। विशेष्यताविशिष्टं पदं स्वसमानवचनम्। पदे विशेष्यता-वैशिष्ट्यञ्च स्वप्रयोजकपदोत्तरविभक्त्यभाववत्त्वसम्बन्धेन। विभक्तेः अभावीय-प्रतियोगितावच्छेदक-सम्बन्धश्च स्वजन्यबोधविषयत्वेन तात्पर्यविषयीभूत-सङ्ख्याविरुद्ध-सङ्ख्याविषयक-बोधजनकत्वेन तात्पर्यविषयीभूत-विभक्तिप्रकृतित्व-रूपः। एवञ्च स्वं दारपदोत्तरविभक्तिः जस्। तज्जन्यबोधविषयत्वेन तात्पर्यविषयी-भूतसङ्ख्यैव नास्ति। तथा च सर्वम् अप्रसिद्धमेव इति उभयसम्बन्धेन स्वाभाववत्त्वस्य सुन्दरपदे विद्यमानतया समानवचनमेव जातमिति वर्णनात्। ननु एवं 'स्तोकं पचौ' इत्यत्र धात्वर्थनिष्ठविशेष्यता-विशिष्टं स्तोकपदम् अस्ति एवेति समानवचनत्वं स्यादेव। तथा हि विशेष्यताप्रयोजक-विभक्तिः औ-विभक्तिः। तज्जन्यबोधविषयत्वेन तात्पर्यविषयीभूत-सङ्ख्या द्वित्वम्। तद्विरुद्धैकत्वसङ्ख्या-बोधजनकत्वेन तात्पर्यविषयीभूता द्वितीयैकवचन-अम्-विभक्तिः नास्ति इति तत्प्रकृतिकत्वं स्तोकपदस्य अप्रसिद्धम् इति। एवञ्च उक्तसम्बन्धेन स्वाभाववत्त्वात् स्तोकपदस्य समानवचनत्वं स्यादिति चेत् ? न। पदे विशेष्यतावैशिष्ट्यनियामकः सम्बन्ध एकश्च उक्त एव। द्वितीयश्च स्वनिरूपित-अभेदसम्बन्धावच्छिन्न-प्रकारता-प्रयोजकत्वरूपः। तृतीयस्तु स्वविशिष्टविभक्ति-सजातीयविभक्तिप्रकृतित्व-रूपः। तृतीयसम्बन्धे विभक्तौ स्ववैशिष्ट्यञ्च स्वावच्छेदकधर्मावच्छिन्न-विशेष्यता-निरूपित-सङ्ख्यानिष्ठ-प्रकारताप्रयोजकत्व-स्वप्रयोजकपदोत्तरत्व-उभयसम्बन्धेन। एवञ्च 'स्तोकं सम्पदौ' इत्यत्र स्तोकपदे आद्योभयसम्बन्धगमनेऽपि उभयसम्बन्धेन स्वविशिष्ट-विभक्तेः अभावात् तृतीयसम्बन्धस्य स्तोकपदे अनागमनात् तृतीय-सम्बन्धे विशेष्यताविशिष्टस्य असत्त्वात् न स्तोकपदस्य समानवचनत्वम् इति आशयात्।

वस्तुतस्तु यत्र विशेष्यवाचकपदोत्तरविभक्ति-तात्पर्यविषयीभूतसङ्ख्या-विरुद्धसङ्ख्यायाः क्रियाविशेषणवाचकपदातिरिक्त-विशेषणवाचकपदेऽविवक्षितत्वं तत्रैव समानवचनकत्वमिति नियमाकारः। क्रियाविशेषण-वाचकातिरिक्तत्वं तु क्रियानिष्ठ-विशेष्यतानिरूपित-तादात्म्यसम्बन्धावच्छिन्न-प्रकारता-प्रोयजकभिन्नत्वम्। तेन 'स्तोकं पचतः', 'स्तोकं सम्पदौ', 'स्तोकं पचौ' इत्यादिषु क्रियाविशेषण-वाचकपदसत्त्वात् न दोष इति तदर्थं न परिष्कारधाराधृतिः इति **सूक्ष्मवेत्तारः**।

ननु एवं 'सुन्दराः दाराः' इत्यत्रैव समानवचनत्वं न स्यात्। तथा हि तृतीयसम्बन्धघटक-प्रथमसम्बन्धेन वैशिष्ट्याभावात्। तत्र दारनिष्ठा या विशेष्यता तदवच्छेदकधर्मावच्छिन्न-विशेष्यतानिरूपित-सङ्ख्यानिष्ठ-प्रकारतावत्-प्रयोजकत्वं

जस्-विभक्तेः नास्तीति चेत् ? सत्यम्। विभक्तौ स्ववैशिष्ट्यनियामक-सम्बन्धम् अपहाय तत्स्थाने स्वाभाववत्त्वं गृह्यते। अभावीयप्रतियोगितावच्छेदक-सम्बन्धश्च स्वानवच्छेदकधर्मावच्छिन्न-विशेष्यता-निरूपित-सङ्ख्यानिष्ठ-प्रकारता-प्रयोजकत्व-रूपः। एवञ्च स्वानवच्छेदकः पटत्वादिधर्मः, तदवच्छिन्न-विशेष्यता-निरूपित-सङ्ख्यानिष्ठप्रकारता एव नास्तीति। तत्प्रयोजकत्वञ्च विभक्तेः अप्रसिद्धमिति एतत्सम्बन्धेन दार-पदोत्तरजस्-विभक्तेः स्वाभाववत्तया तत्सजातीयविभक्ति-प्रकृतित्वात् सुन्दरपदे समानवचनत्वं सिद्धम्। विभक्तिसाजात्यं च इदानीं सुप्त्वेन बोध्यम्। 'वेदाः प्रमाणम्' इत्यत्र तु प्रथमसम्बन्ध एव न गतः। तेन तत्र समानवचनत्वनियमो नेति तत्त्वम्। तथाहि - प्रमाणपदोत्तर-सु-विभक्त्यर्थैकत्व-सङ्ख्या विवक्षिता। ततश्च वेदपदोत्तर-जस्-विभक्ति-जन्यबोधविषयत्वेन तात्पर्य-विषयीभूतसङ्ख्या बहुत्वमिति तद्विरुद्धैकत्व-सङ्ख्याविषयक-बोधकजनकत्वेन तात्पर्यविषयीभूत-सु-विभक्तिप्रकृतित्व-सम्बन्धसत्त्वे तत्सम्बन्धेन प्रमाणपदे स्व-अभाववत्त्वस्य वक्तुम् अशक्यत्वात्। ननु मिथिलादेशोद्भवत्व-विशिष्ट-जनकापत्यत्व-प्रवृत्तिनिमित्तेन प्रतीयमानाया मैथिल्या विशेषणत्वस्यैव न्याय्यत्वेन 'मैथिल्यो रामदाराः' इति। एवंविध-प्रयोगस्यैव ज्यायस्तरत्वेन **महानाटके** 'त्रिभुवनजयलक्ष्मीर्मैथिली तस्य दाराः' इति कथं दारपदे तृतीयसम्बन्धेन मैथिलीनिष्ठ-विशेष्यतावैशिष्ट्यसत्त्वात् समानवचनत्वं स्यादिति चेत् ? न। तृतीय-सम्बन्धस्य अग्रे साधुत्ववत्त्वं निवेश्यते। तथा च तृतीयसम्बन्धाकारः स्वविशिष्ट-विभक्ति-सजातीयविभक्ति-अव्यवहितपूर्वत्व-समानाधिकरणसाधुत्ववत्त्वेऽपि। विभक्ति-साजात्यञ्च अत्र सुप्त्वादिना एव बोध्यम्। तथा च फलितः सम्बन्धः स्वविशिष्ट-विभक्तिवृत्ति-श्रावणप्रत्यक्ष-विषयतावच्छेदकधर्मवद्-विभक्ति-अव्यवहितपूर्वत्व-समानाधिकरणसाधुत्ववत्त्वम्। एवञ्च स्वविशिष्ट-विभक्तिः मैथिली-पदोत्तर-सु-विभक्तिः, तत्सजातीय-सु-विभक्ति-अव्यवहितपूर्वत्व-समानाधिकरण-साधुत्ववत्त्वं दारपदे नास्तीति तस्य बहुवचन एव प्रयोगात् इति लक्षणसमन्वयाभावात् न समानवचनत्वमिति भावः। ननु एवं सति 'नीलाः घटाः' इत्यत्र यद्यपि विशेष्यताप्रयोजक-घटपदोत्तर-जस्-विभक्तिसजातीय-जस्-विभक्त्यव्यवहितपूर्वत्व-समानाधिकरणसाधुत्ववत्त्वं जसन्त-नीलपदस्य अस्ति इति। तथापि 'नीलो घटाः' इत्यत्र एतस्य प्रथमान्त-नीलपदस्य जस्-विभक्त्यव्यवहितपूर्वत्व-समानाधिकरण-साधुत्ववत्त्व-अभावात् नीलघट-पदस्यापि समानवचनत्वं न स्यादिति चेत्? न। साधुत्ववत्त्व-समानाधिकरणानुपूर्वीमत्त्वस्य निवेशेन अदोषात्। तथा हि - तादृश-विभक्ति-पूर्वक-साधुत्ववत्त्वम् जसन्तनीलपदस्य अस्ति इति तद्वृत्ति-नीलत्वानुपूर्वी-मत्त्वं 'नीलो घटाः' इत्यत्र घटपदस्यापि अस्ति इति न दोषः। ननु स्वविशिष्टा या

मैथिलीपदोत्तर-सुविभक्तिः तत्सजातीय-सु-विभक्ति-अव्यवहितपूर्वत्व-समानाधिकरण-साधुत्ववत्त्वं दारयति इत्यर्थक-क्रियावाचक-दार-शब्दस्य अस्तीति! तथा च तद्वृत्यानुपूर्वीमत्त्वं 'मैथिली दारा' इत्यत्र दार-पदस्य अस्तीति लक्षणसमन्वयात् समानवचनत्वं 'मैथिली तस्य दाराः' इत्यत्र स्यादिति चेत् ? सत्यम्। तृतीय-सम्बन्धम् अपहाय तत्स्थाने स्वविशिष्टवृत्यानुपूर्वीमत्त्वरूपः सम्बन्धो गृह्यते। स्ववैशिष्ट्यञ्च स्वविशिष्टविभक्ति-सजातीयविभक्त्यव्यवहितपूर्वत्व-समानाधिकरण-साधुत्ववत्त्वमिति पूर्ववदेव। विभक्तौ स्ववैशिष्ट्यञ्च पूर्वोक्तोभयसम्बन्धेन। द्वितीयश्च स्वनिरूपिताभेदसम्बन्धावच्छिन्न-प्रकारतावच्छेदकत्वेन तात्पर्यविषयीभूतधर्मावच्छिन्न-मुख्यविशेष्यताक-बोधजनकत्वेन तात्पर्यविषयत्व-उभयसम्बन्धेन। एवञ्च यद्यपि स्वन्तक्रियावाचक-दार-पदे प्रथमसम्बन्धो गतः परन्तु द्वितीयसम्बन्धो न गतः। तथा हि स्वनिरूपिताभेदसम्बन्धावच्छिन्ना प्रकारता जसन्त-दार-पदनिष्ठा। तदवच्छेकत्वेन तात्पर्यविषयीभूतधर्मो दारत्वं, तदवच्छिन्न-मुख्यविशेष्यताक-बोधजनकत्वेन तात्पर्य-विषयीभूतत्वं जसन्त-दार-पदस्यैव न तु क्रियावाचक-दार-पदस्येति उभयसम्बन्धेन क्रियावाचक-दार-शब्दो जातः। जसन्त-दार-पदे तु प्रथमसम्बन्ध एव न गतः। एवञ्च उभयसम्बन्धेन स्वविशिष्ट-स्त्री-शब्दो जातः। तद्वृत्तित्वरूपानुपूर्वीमत्त्वं जसन्तदारपदस्य नास्तीति लक्षणसमन्वयाभावात् न दार-मैथिली-पदयोः समान-वचनत्वम्। स्त्री-शब्दस्य उभयसम्बन्धेन स्वविशिष्टत्वं तु तस्याः स्त्रिया दार-पद-वाच्यस्य च ऐक्यात् स्त्रीत्वनिष्टप्रकारतावच्छेदकं दारत्वमपि इति आशयात्।

वस्तुतस्तु विशेष्यवाचकपदोत्तर-विभक्तितात्पर्यविषय-सङ्ख्याविरुद्ध-सङ्ख्याया असति बाधके यत्र विशेषणवाचकपदे अविवक्षितत्वं तत्रैव समानवाचनकत्वमिति नियमकरणे 'मैथिली तस्य दाराः' इत्यादिषु न दोषः। "दाराः पुंसि च भूम्न्येवेति" कोशस्य बाधकत्वेन क्लृप्तत्वादिति **कुशाग्रबुद्धयः**। ननु एवमपि पुरुषपदात् पुरुषत्वजातिगतैकत्वविवक्षया एकवचने 'त्रयः पुरुषः' इति वाक्यस्यापि अनिष्टस्य प्रामाण्यम् आपद्येत। त्रि-शब्दोत्तर-जस्-विभक्तेः पदसाधुत्वमात्रेण प्रयोगो न तु सङ्ख्यान्वयतात्पर्येण। एवञ्च विशेष्यता-वैशिष्ट्यं विशेषणवाचक-त्रि-पदे न जातम्। प्रथमसम्बन्धः द्वितीयसम्बन्धेन वैशिष्ट्यं गतमपि। परन्तु स्वविशिष्ट-वृत्यानुपूर्वीमत्त्वरूपः तृतीयसम्बन्धः तदघटक-उभयसम्बन्धेन मध्ये प्रथमसम्बन्धो न गतः। तथा हि स्वविशिष्ट-विभक्तिः पुरुषपदोत्तर-जस्-विभक्तिः। तत्सजातीय-विभक्ति-अव्यवहितपूर्वत्व-समानाधिकरणसाधुत्ववत्त्वं त्रिशब्दस्य नास्ति इति उभय-सम्बन्धेन स्वविशिष्टः त्रिशब्दो न जातः, किन्तु उदासीनः कोऽपि अस्ति। तद्वृत्यानुपूर्वीमत्त्वं नास्तीति त्रितयसम्बन्धेन स्वविशिष्टत्वं त्रिपदे नास्तीति त्रिपद-पुरुष-पदयोः समानवचनत्वं न स्यात्। एवञ्च 'त्रयः पुरुषाः' इत्यनिष्टः कुतो नेति

चेत् ? न। यद्यपि अत्र आपत्तिवारणाय उक्तोभयसम्बन्धेन स्वविशिष्टवृत्त्यानुपूर्व्य-भाववत्त्वरूपः तृतीयसम्बन्ध उच्यते। एवञ्च उक्तसम्बन्धेन स्वविशिष्ट उदासीनः। तद्-वृत्त्यानुपूर्व्यभाववत्वस्य त्रिशब्दे विद्यमानतया लक्षणसमन्वयात् त्रिशब्द-पुरुष-शब्दयोः समानवचनकत्वसिद्ध्या 'त्रयः पुरुषाः' इत्युभयत्र जसन्तत्वं विद्यताम्। परन्तु 'मैथिली तस्य दाराः' इत्यत्रापि स्वविशिष्टं स्त्रीपदम्। तद्वृत्त्यानुपूर्व्य-भाववत्त्वं दारपदेऽपि मैथिलीपदसमानवचनत्वं स्यात्। अतः तद्वारणाय तृतीय-सम्बन्धघटक-प्रथमसम्बन्धे साधुत्वस्य स्थाने साधुत्वाभाववत्त्वं निवेश्यते। सम्बन्धा-कारस्तु स्वविशिष्टविभक्ति-सजातीयविभक्त्यव्यवहितपूर्वत्व-समानाधिकरण-साधुत्व-अभाववत्त्वरूपः। एवञ्च जसन्तदारपदेऽपि साधुत्वाभावपर्यन्तः प्रथमसम्बन्धो गतः। तथा च उभयसम्बन्धेन स्वविशिष्टं जसन्तदारपदम्। तद्-वृत्तिदारत्वानुपूर्वीमत्वमेव 'मैथिली दाराः' इत्यत्र दार-पदस्य अस्ति इति। न तु स्वविशिष्ट-दारत्वानुपूर्व्या अभाववत्त्वमिति लक्षणसमन्वयाभावात् न मैथिली-दारपदयोः समानवचनत्वम्। ननु एवं सति 'त्रयः पुरुषाः' इत्यत्रापि साधुत्वाभावपर्यन्तः प्रथमसम्बन्धो गत एव अस्ति। एवञ्च उभयसम्बन्धेन स्वविशिष्टं त्रिपदं तद्वृत्त्यानुपूर्व्या अभावत्वं दारपदे नास्ति इति दार इति वदता अपि समानवचनं न स्यादिति चेत् ? न। वक्ष्यमाणरीत्या स्वविशिष्टमेव त्रिपदं न जातं किन्तु उदासीनम्, तद्वृत्त्यानुपूर्व्या अभाववत्त्वं त्रिपदे अस्त्येव इति समानवचनं सिद्धम्। तथा हि तृतीयसम्बन्धे प्रथमसम्बन्धाकारः तु उक्त एव। परन्तु स्वनिरूपिताभेदसम्बन्ध-इत्यादि-द्वितीयसम्बन्धम् अपहाय स्वविशिष्टो यो धर्मः तद्धर्मावच्छिन्न-मुख्यविशेष्यक-बोधजनकत्वेन तात्पर्यविषयत्वरूपधर्मे विशेष्यतावैशिष्ट्यञ्च स्वनिरूपित-अभेद-सम्बन्धावच्छिन्न-प्रकारतावच्छेदकत्वेन तात्पर्यविषयत्व-स्वप्रयोजकपदोत्तर-विभक्ति-वाच्य-सङ्ख्यावच्छिन्नानुयोगिताक-पर्याप्तिप्रतियोगित्व-एतद्-उभयसम्बन्धेन। एवञ्च 'त्रयः पुरुषाः' इत्यत्र प्रकारतावच्छेदक-त्रित्वधर्मे इत्यत्र प्रथमसम्बन्धगमनेऽपि द्वितीयसम्बन्धो न गतः। तथा हि स्वं पुरुषनिष्ठा विशेष्यता। तत्प्रयोजकपदोत्तर-विभक्तिः पुरुषपदोत्तर-सु-विभक्तिः। तद्वाच्य-एकत्वसङ्ख्यावच्छिन्नानुयोगिताक-पर्याप्ति-पर्याप्तिप्रतिगोगित्वं नास्ति, किन्तु बहुत्वसङ्ख्यावच्छिन्नानुयोगिताक-पर्याप्ति-प्रतियोगित्वं त्रित्वेऽस्ति इति उभयसम्बन्धेन स्वविशिष्टस्त्रिशब्दो न जातः। तथा च उभयसम्बन्धेन स्वविशिष्टधर्मावच्छिन्नमुख्यविशेष्यताक-बोधजनकत्वेन तात्पर्यविषयः त्रिशब्दो न जातः। किन्तु उदासीनोऽस्तीति तद्वृत्त्यानुपूर्व्यभाववत्त्वं त्रिशब्देऽस्ति इति समानवचनत्वं सिद्धम् इति आशयात्। 'मैथिली दाराः' इत्यत्र सुविभक्ति-वाच्यैकत्वसङ्ख्यावच्छिन्नानुयोगिताक-पर्याप्तिप्रतियोगित्वं दारत्वे अस्ति एवेति। यत्र एकस्त्रीविषयक-बोधजनकत्वेन एकत्वेनैव जसन्त-दार-पदस्य प्रयोगः तत्र

उभयसम्बन्धेन स्वविशिष्टधर्मो दारत्वं, तद्धर्मावच्छिन्न मुख्यविशेष्यताक-बोधजनकत्वेन तात्पर्यविषयत्वस्य दारपदे सत्त्वात् द्वितीयसम्बन्धो गतः। स्वविशिष्ट-विभक्तिसजातीय इत्यादिप्रथमसम्बन्धोऽपि गतः। तथा च स्वविशिष्टं दारपदम्। तद्वृत्ति-आनुपूर्व्यभाववत्त्वं दारपदे नास्तीति लक्षणसमन्वयाभावात् न समानवचनकत्वम् इति भावः।

वस्तुतस्तु 'मैथिली तस्य दाराः', 'रुक्मिणीसत्यभामे कृष्णस्य दाराः' इत्यादौ दोषवारणाय विशेषणवाचकपदे नियतवचनकातिरिक्तनिवेशेन दार-शब्दस्य "दाराः पुंसि च भूम्न्येव" इति कोशबलेन नियतवचनकतया न दोषः। योगरूढं वा पदमेतत्। नियतवचनत्वं तु एकवचनत्व-द्विवचनत्व-बहुवचनत्व-अन्यतमधर्मव्याप्य-विषयताप्रयोजकत्वम् कोषाद्यनुरोधेन इत्यपि निवेश्यम्। अतएव सर्वे दोषाः परिहृता भवन्ति इति तत्त्वम्।

ननु एवं सति त्रि-बहु-पुष्पवन्तादयः शब्दा नियतवचनाः। एकया उक्त्या "पुष्पवन्तौ दिवाकरनिशाकरौ" इति लिङ्गात् पुष्पवन्तौ दिवाकरौ इति साधुः। तत्र स्वार्थैकत्वस्य अविवक्षया 'पुष्पवन्तौ देवः' इति प्राप्नोति। धर्मे विशेष्यता-नियामक-वैशिष्ट्यस्य द्वितीयसम्बन्धस्यापि सत्त्वात्। तथा हि स्वप्रयोजकपदोत्तर-सु-विभक्तिः तद्वाच्यैकत्वसङ्ख्यावच्छिन्नानुयोगित्वं चन्द्रत्वे सूर्यत्वे वास्ति। एवं द्वितीयसम्बन्धो गतः। तथा च उभयम्बन्धेन स्वविशिष्टधर्मः चन्द्रत्वं तद्धर्मावच्छिन्नमुख्यविशेष्यताक-बोधजनकत्वेन तात्पर्यविषय-पुष्पवन्त-शब्दः। एवं स्वविशिष्टविभक्ति-इत्यादि-प्रथम-सम्बन्ध विशिष्टः अपि। एवञ्च तद्वृत्त्यानुपूर्व्यभाववत्त्वं नास्तीति लक्षणसमन्वया-भावात् न समानवचनत्वमिति। 'पुष्पवन्तौ देवः' इति आपद्येत इति चेत्? न। तृतीयसम्बन्धश्च स्वविशिष्टवृत्त्यानुपूर्व्यभाववत्त्वरूपः। तत्र वैशिष्ट्यञ्च स्वविशिष्ट-विभक्ति-इत्यादि-प्रथमसम्बन्ध उक्त एव। द्वितीयसम्बन्धस्तु उक्तोभयसम्बन्धेन स्वविशिष्टो यो धर्मः तद्विशिष्टत्वरूपः। तत्र धर्मे वैशिष्ट्यञ्च स्वावच्छिन्न-मुख्य-विशेष्यताक-बोधजनकत्वेन तात्पर्यविषयत्व-स्वपर्याप्तशक्यतावच्छेदकताकत्व-उभयसम्बन्धेन। एवञ्च उक्त-उभयसम्बन्धेन स्वविशिष्टो धर्मः चन्द्रत्वम्, तद्धर्म-पर्याप्तशक्यतावच्छेदकताकत्वं पुष्पवन्तशब्दस्य नास्तीति स्वविशिष्टधर्मविशिष्टत्व-रूपस्य तृतीयसम्बन्धघटक-द्वितीयसम्बन्धस्य गमनं पुष्पवन्तशब्दे न जातं, किन्तु उदासीन एव। एवञ्च स्वविशिष्टम् उदासीनपदम्। तदवृत्त्यानुपूर्व्यभाववत्त्वं पुष्पवन्तपदे अस्ति एवेति लक्षणसमन्वयात् पुष्पवन्त-देव पदयोः समानवचनत्व-सिद्ध्या 'न पुष्पवन्तौ देवः' इति वाक्यम्। अपि तु 'पुष्पवन्तौ देवौ' इत्येव इति। विशेषणवाचकपदे विंशत्यादिसङ्ख्यावाचकातिरिक्तत्वस्य निवेशेन 'विंशतिः ब्राह्मणाः', 'द्वेविंशती' इत्यादीनामपि साधुत्वम् इति अलम्।

किञ्च विशेष्यवाचकपदविशिष्टं यत्र विभक्तिप्रकृतित्ववद्-विशेषण-वाचकं पदं, तत्रैव समानवचनकत्वं न अन्यत्रेति। वैशिष्ट्यञ्च स्वप्रयोज्य-विशेष्यतानिरूपित-अभेदसम्बन्धावच्छिन्न-प्रकारताप्रयोजकत्व-प्रकारक-वक्तृतात्पर्य-विशेष्यत्व-स्वाव्यवहितोत्तर-सुविभक्तिविशिष्टत्वसम्बन्धाभ्याम्। अत्र वैशिष्ट्यञ्च स्वाभाववत्त्व-स्वविशिष्टानुपूर्वीमत्त्व-सम्बन्धाभ्याम्। अभावश्च स्वजन्यबोध-विषयत्व-प्रकारक-तात्पर्यविषयसङ्ख्या-विरुद्धसङ्ख्यानिष्ठ-प्रकारता-निरूपित-विशेष्यता-प्रयोजकत्वप्रकारक-तात्पर्यविशेष्यत्व-सम्बन्धावच्छिन्न-प्रतियोगिताक एव बोध्यः। सम्बन्धघटक-वैशिष्ट्यञ्च स्वप्रकृतिप्रयोज्यविशेष्यता-निरूपिताभेदसम्बन्धावच्छिन्न-प्रकारतावच्छेदकधर्मावच्छिन्नविषयताप्रयोजकत्वप्रकारकतात्पर्यविशेष्यत्व-स्वविशिष्ट-भिन्नत्व-सम्बन्धाभ्याम्। अत्र वैशिष्ट्यञ्च स्वसमानानुपूर्वीक-विभक्ति-प्रकृतित्व-समानाधिकरणसाधुत्वाभाववत्त्व-स्ववृत्तिसङ्ख्यातात्पर्यकविभक्तित्वव्यापकत्व-उभय-सम्बन्धेन। अत्र व्यापकता च स्वीय-प्रवृत्तिनिमित्तावच्छिन्नधर्मिता-निरूपित-प्रकारतावच्छेदक-सङ्ख्यात्वव्याप्यधर्मावच्छिन्न-प्रकारताप्रयोजकत्व-सम्बन्धावच्छिन्ना ग्राह्या। आद्यसम्बन्धफलं तु 'राज्ञः पुरुषौ' इत्यादौ यत्र राजपदोत्तरविभक्तिः औत्सर्गिकी साधुत्वार्था। तत्र समानवचनत्व-परिहारार्थम् अभेदसम्बन्धावच्छिन्न-इत्यादि। स्वाव्यवहितोत्तरत्वफलं तु 'स्तोकं पचत' इति शपा व्यवधाने 'स्तोकम् अत्त' इत्यत्र दोषवारणाय सुबिति। 'स्तोकं पचौ', 'स्तोकं सम्पदौ' इत्यादौ तु क्विपः अनुसन्धानेन न दोषः। विभक्ति-वैशिष्ट्यनियामक-स्वाभाववत्त्वफलं तु 'सुन्दरा दाराः' इत्यादौ अप्रसिद्धि-निराकरणम्। स्वविशिष्टवृत्ति इत्यत्र स्वप्रकृति-प्रयोज्य-इत्यादिसम्बन्धफलं तु 'मैथिली दाराः' इतिवत् 'घटाः नीलः' इत्यादि-वारणमेव। स्वविशिष्टभिन्नत्वघटक-प्रथमसम्बन्धफलञ्च 'मैथिलीदाराः', 'मैथिल्यौ दाराः' इत्यादीनाम् उपपत्तिः एव। द्वितीयस्य फलं तु 'त्रयः पुरुषः', 'बहवः पुरुषः', 'पुष्पवन्तौ देवः', 'नासत्यौ देवः' इत्यादिसमस्तवाक्ये न समानवचनकत्व-आपत्तिः इति। एवमेव इति **पूज्यमैथिलाः**।

अथ कीदृशकार्यकारणभावमूलकोऽयं यत्र विशेष्यवाचकेतिनियम इति प्रश्नः। विशेष्यताविशिष्टप्रकारतासम्बन्धेन शाब्दबोधं प्रति तादृशविशेष्यताप्रयोजक-पद-समानवचनकपद-जन्योपस्थितिः विशेष्यतासम्बन्धेन कारणम्। विशेष्यता-वैशिष्ट्यञ्च प्रकारतायां स्वनिरूपितत्व-स्वप्रयोजक-पदविशिष्टं यद्विभक्तिप्रकृतित्व-वत्पदं तत्प्रयोज्यत्व-उभयसम्बन्धेन। पदे पदवैशिष्ट्यं च पूर्वोक्तरीत्या बोध्यम्।

वस्तुतस्तु 'वेदाः प्रमाणम्' इत्यादौ जस्-प्रत्ययान्त-वेदपदसमभिव्याहृत-स्वन्तप्रमाणपद-समभिव्याहाररूप-आकाङ्क्षाज्ञानं कारणमिति। एवमभेदसंसर्गक-नीलप्रकारक-घटविशेष्यक-शाब्दबुद्धित्वावच्छिन्नं प्रति स्वन्तनील-पदसमभिव्याहृत-

स्वन्तघटपदत्वरूप-आकाङ्क्षाज्ञानं कारणमिति। तथा च अभेदश्च प्रातिपदिकार्थे स्वसमानविभक्तिकेन इतिवद् यत्र विशेष्यवाचक-पदोत्तरविभक्ति-तात्पर्यविषयेति नियमोऽपि पूर्वोक्तप्रकारेण आकाङ्क्षाज्ञान-कार्यकारणभावमूलक एव। तथा च एतन्नियमस्फुटप्रतिपत्तये न अपूर्वः कार्यकारणभाव इति सूक्ष्मवेत्तारः।

ननु 'सुन्दराभ्यां घटाभ्याम्' इत्यादौ सुन्दरपदोत्तर-तृतीयाद्विवचन-भ्याम्-विभक्तिः घटपदोत्तरं पञ्चमीविभक्तिः भ्याम्-इति विरुद्धविभक्तिसत्त्वे अभेदान्वयबोधः कुतो न ? विशेष्यवाचक-घटपदप्रकृतिक-भ्याम्-विभक्तिभिन्ना एव विशेषणवाचक-सुन्दरपदोत्तर-भ्याम्-विभक्तिः। तृतीयाविभक्तौ चतुर्थीविभक्तौ पञ्चमी-भ्याम्-विभक्तौ च समानानुपूर्वीकत्वं समानम् एव। तत्तत्प्रत्यय-प्रकृतित्वम् अपि अस्त्येव। शाब्दबोधस्वरूपयोग्यतायाः सर्वतोभावेन आकाङ्क्षा-ज्ञानस्यापि सत्त्वात् इति चेत् ? सत्यम्। 'सुन्दराभ्यां घटाभ्याम्' इत्यादौ तृतीयार्थकरणत्व-विशिष्टतात्पर्येण बोधनदशायां विशेष्य-विशेषणयोः समानविभक्त्यर्थविशिष्ट-समानविभक्तिकत्वस्य कारणत्वात्। एवमेव चतुर्थी-पञ्चम्योः उभयोरपि कारणत्व-कल्पनम्। किञ्च गौः इत्युक्ते सर्वे सन्देहा निवर्त्तन्ते न अश्वो न गर्दभ इति न्यायेन एकविषयकज्ञाने अपरविषयो नास्तीति व्यवहारः सार्वजनीनः। तथा च विशेष्यवाचकपदोत्तरविभक्त्यर्थ-करणत्वरूपार्थ-विशेष्यवाचक-पदोत्तरविभक्त्यर्थ-सम्प्रदानत्वरूपार्थं प्रतिबध्नातीति। एवं विशेष्यवाचकपदोत्तर-विभक्त्यर्थ-अपादानत्वरूपार्थः विशेष्यवाचकपदोत्तर-तृतीयाविभक्त्यर्थ-करणत्वरूपार्थं प्रतिबध्नातीति परस्परप्रतिबध्य-प्रतिबन्धक-भावकल्पनेन परस्परव्यभिचाराभावात्। परस्परविरुद्धविभक्तिसत्त्वेऽपि न अभेदान्वयबोधः 'सुन्दराभ्यां घटाभ्याम्' इत्यादौ इति तत्त्वम् इति अलम्।

**VV-S 2.2.6** **'वेदाः प्रमाणम्' इत्यत्र च विशेषणपदोत्तरेति**। विशेष्यवाचकं वेदपदम्। तदुत्तरवर्त्तिविभक्तिः जस्-विभक्तिः। तत्तात्पर्यविषयसङ्ख्या बहुत्व-सङ्ख्या। तद्विरुद्धा एकत्वसङ्ख्या। तस्या एव विशेषणवाचक-प्रमाणपदे विवक्षितत्वात् न समानवचनत्वम्। अत एकवचनमेव तत्र प्रयुक्तम्। चतुर्षु वेदेषु यद्यपि एकत्वान्वयः अनर्हः, तथापि प्रकृत्यर्थतावच्छेदके तदेकत्वान्वयः। प्रकृतिपदेन प्रमाणपदं बोध्यम्। प्रमीयते अनेन इति प्रमाणम्। करणे ल्युट्। प्रमितिकरणं प्रमाणम्। प्रमितिकरणतावन्तो वेदाः इति फलितार्थः। प्रकृत्यर्थता-वच्छेदकञ्च प्रमितिकरणत्वमेव। तत्प्रमितिकरणत्वं सर्वेषु वेदेषु एकमेव विवक्षितम् अस्ति। तथा च प्रमितिकरणत्व एव एकत्वान्वयो न तु प्रमितिकरणभूतेषु चतुर्षु वेदेषु। यथा अनेकेषु घटपटादिषु एकमेव घटत्वं पटत्वं च अनुगमकम्, तथा अनेकेषु प्रमितिकरणेषु वेदेषु एकमेव हि प्रमितिकरणत्वम् अनुगमकमिति तत्र एकत्वान्वये न हानिः।

प्रमितिकरणत्व इति। वस्तुतस्तु प्रमितिकरणत्वे अन्वेति इत्यस्य प्रमितिकरणत्व-घटकप्रमितित्व इत्यर्थः। वेदानां संसारनिदान-मिथ्याज्ञानोन्मूलन-क्षमे परमात्मविषयकानुभवे तात्पर्यम्। "सर्वे वेदाः यत्पदमामनन्ति" इति श्रुतेः। न तु अनेकवैजात्यविशिष्ट-अनेकानुभव इति।

ननु सकलवेदजन्य-परमात्मविषयकज्ञानस्य व्यास-वामदेवादि-भेदेन नानात्वात् कथं तादृश-एकत्वान्वय-योग्यतेति प्रश्नः। प्रमितित्वे एकत्वान्वयस्य निर्वाधत्वात्। 'दशमः त्वमसि' इति महावाक्यात् प्रत्यक्षप्रमाणवादिनां मतनिरासाय तत्सौष्ठवात्। ननु तत्तदर्थान्वित-तत्तदर्थविषयक-शाब्दबोधत्वावच्छिन्नं प्रति तत्तत्पदसाकाङ्क्ष-तत्तत्पदत्वेन कारणता शाब्दस्य। 'वह्निना सिञ्चति' इत्यादौ अयोग्यसाधारणत्वेन व्यभिचरितत्वात् प्रमितिकरणतानवच्छेदकत्वात् कथं शब्दत्वावच्छिन्न-प्रमितिकरणत्वम्। किञ्च शब्दत्वं न किमपि शाब्दं प्रति जनकतावच्छेदकम् अतिप्रसक्तत्वादिति चेत् ? न। सकलवेद-तात्पर्यार्थविषयक-विजातीय-प्रमितित्वावच्छिन्नं प्रति स्वतन्त्रपुरुषोच्चरित-शब्दत्वावच्छिन्न-प्रमितिकरणत्वं तु एकमेव इति अदोषात्। वेदत्वं च स्वतन्त्रपुरुषोच्चरितशब्दत्वम्। शब्दतदुपजीवि-प्रमाणातिरिक्त-प्रमाणजन्य-प्रमित्यविषयार्थकत्वे सति शब्दजन्य-वाक्यार्थज्ञानजन्य-प्रमाणशब्दत्वं वेति।

अत्र यावच्छब्दपदेन प्रमाणभूत-शिष्टसम्प्रदायानुकूल-श्रुत्यनुकूल-स्मृत्यादि-प्रतिपादितशब्द एव गृह्यते "इतिहास-पुराणानि पञ्चमो वेद उच्यते" इति श्रीमद्भागवतोक्तेः। एवं 'त्रयः समुदिताः हेतुः' इत्यत्र शक्तिनिपुणताभ्यास-समुदाये एकमेव हेतुत्वं विवक्षितमिति। तत्र समुदायनिष्ठहेतुत्व एव एकत्वान्वय इति न समानवचनकत्वमिति तत्त्वम्।

ननु शब्दत्वावच्छिन्न-कारणतानिरूपित-कार्यताया 'वह्निना सिञ्चति', 'घटे पृथिवी' इत्यादिभ्रमज्ञान- 'जलेन सिञ्चति', 'भूतले घटः' इत्यादिप्रमा-ज्ञान-उभयसाधारण्येन उभयत्र वाक्ये प्रामाण्यम् आपद्येत इति चेत् ? न। शाब्दत्वावच्छिन्न-प्रमावृत्तित्वविशिष्ट-कार्यतानिरूपित-कारणत्वमित्येव शाब्दप्रमा-करणमितिवाक्यार्थः। तथा च लोकप्रयोग-अनर्हे 'वह्निना सिञ्चति' इत्यादौ प्रमाणत्वव्यवहार एव न भवतीति न कश्चिद्विरोधः। न च 'स्वर्गकामो यजेत', 'अहरहः सन्ध्याम् उपासीत' इत्यादिप्रतिवाक्यं प्रमाकरणत्वं भिन्नं भिन्नम् इति कथङ्कारं यावच्छब्दनिष्ठम् एकमेवेति मूलग्रन्थसङ्गतिरिति वाच्यम् ? शाब्दत्वजातेः एकत्वेन अदोषात्। न च एवं स्वीकारे 'घटः कर्मत्वम् आनयनं कृतिः' इत्यादौ अपि शाब्दत्वजातिसत्त्वेन प्रामाण्यम् आपतेत् इति वाच्यम्। शाब्दत्वजातिसत्त्वेऽपि शाब्दत्वघटित-धर्मावच्छिन्न-कार्यतानिरूपित-कारणत्वाभावात्

घटनिष्ठकर्मतानिरूपक-आनयनत्वावच्छिन्नं प्रति द्वितीयान्त-घट-पदसमभिव्याहृत 'आनय' इति क्रियापदसमभिव्याहारः कारणम् इति कार्यकारणभावात्।

न च शब्दत्वेन कारणत्वस्वीकारे सकलशाब्दबुद्धित्वावच्छिन्नं प्रति यावच्छब्दनिष्ठम् एकमेव कारणत्वमिति ग्रन्थाशयवर्णने 'घटः कर्मत्वम् आनयनं कृतिः' इत्यादिवाक्यप्रामाण्यं सुशकमेवेति वाच्यम्। परम्परया प्रमाणत्वसत्त्वेऽपि सम्प्रदायविरुद्धत्वेन शाब्दबोधाजनकत्वात्।

**VV-S 2.2.7** **शब्दत्वावच्छिन्नं यावच्छब्देति**। अस्य अयमाशयः - कार्याव्यवहितप्राक्क्षणावच्छेदेन कार्याधिकरणवृत्त्यभावाप्रतियोगित्वम्, न सकलशब्देषु चालनीन्यायेन प्रतियोगित्वात्। अतः तादृशप्रतियोगितानवच्छेदक-शब्दत्वरूपधर्मवत्त्वमेव शाब्दधियं प्रति कारणत्वं वाच्यम्। तच्च शब्दत्वम् एव इति आशयेन आह - **शब्दत्वावच्छिन्नेति**।

यदि च शब्दत्वमेव कारणत्वं तदा कारणतावच्छेदकत्वं शब्दत्वे न सम्भवति। अभेदे अवच्छेद्यावच्छेदकभाव-अनङ्गीकारात्। तथापि तादृशप्रतियोगितानवच्छेदकत्वविशिष्ट-शब्दत्वस्य कारणत्वं स्वरूपतः शब्दत्वस्य कारणतावच्छेदकत्व-स्वीकारात् न कश्चन विरोधः।

ननु प्रमितिकरणत्वस्य प्रमाणपदार्थैकदेशत्वेन तत्र कथमेकत्वान्वयः? "पदार्थः पदार्थेनान्वेति न तु पदार्थैकदेशेन" इति नियमविरोधात्। नियमफलं तु घटत्वस्य नित्यत्वात् अभेदेन अन्वयतात्पर्येण 'नित्यो घटः' इति वाक्यवारणमेव। तत्र घटत्वस्य पदार्थैकदेशत्वेन अभेदेन अन्वयविरोधात्। ननु पदार्थान्तरनिष्ठप्रकारतानिरूपित-विशेष्यतासम्बन्धेन शाब्दबुद्धित्वावच्छिन्नं प्रति अन्वयितावच्छेदकरूपेण उपस्थितिः कारणम्। अन्वयः अस्ति अस्मिन् इति अन्वयी। तस्य भावः अन्वयिता। पदार्थस्य नीलादेः पदार्थेन घटादिना एव अन्वयः। घटादिपदार्थस्य अन्वयितावच्छेदक-घटत्वरूपेण उपस्थितिसत्त्वात् स्वरूपत एव घटत्वोपस्थितिसत्त्वात् जात्यखण्डोपाध्यतिरिक्तपदार्थस्यैव किञ्चिद्धर्मपुरस्कारेण भानमिति न्यायेन घटत्वस्य जातित्वात्। समवायभिन्नत्वे सति स्वरूपसम्बन्धेन वृत्तित्वे सति भावत्वम् अखण्डोपाधित्वम् अनिर्वचनीयधर्मविशेषत्वं वा। तथा च स्वरूपत उपस्थिते घटत्वे कथं नित्यत्वान्वय इति चेत् ? न। 'नित्यो जातिमान् घटः' इत्यादौ जातित्वविशिष्ट-जातिमद्बोधक-तच्छब्दघटिते 'नित्यः सः' इत्यादौ च अजातिपदार्थे पदार्थैकदेशे अन्वयवारणाय "पदार्थः पदार्थेन" इति व्युत्पत्तिस्वीकारात्। किञ्च पशुपदं लोमवल्लाङ्गूलावच्छिन्ने शक्तं 'दीर्घो लोमदिमान् पशुः' तत्र लोम्नः पदार्थैकदेशत्वेन अनिष्टस्य दीर्घत्वान्वयस्य आपत्त्या 'दीर्घः पशुः' इति वाक्यापत्तेश्च।

न च पूर्वोक्तरीत्या 'नित्यो घटः' इत्यादौ घटत्वस्य कथं
पदार्थैकदेशत्वम्? "व्यक्त्याकृतिजातयः पदार्थ" (NS. 2.2.66) इति न्यायसूत्रेण
घटत्वं तु पदार्थ एव। घटः घटत्वं समवायश्चेति पदार्थ इति कथम् आपत्तिरिति
वाच्यम्? पदार्थान्तरनिष्ठप्रकारतानिरूपित-विशेष्यतासम्बन्धेन शाब्दबुद्धित्वावच्छिन्नं
प्रति आश्रयत्वसम्बन्धावच्छिन्न-बोधविषयतात्वावच्छिन्नप्रकारता-निरूपित-विशेष्यता-
सम्बन्धेन शक्तिज्ञानं कारणम्। एवञ्च 'नीलो घट' इत्यादौ पदार्थान्तर-नीलनिष्ठ-
प्रकारता-निरूपित-विशेष्यता-सम्बन्धेन शाब्दबोधं प्रति आश्रयत्वसम्बन्ध-इत्याद्युक्त-
प्रकारेण शक्तिज्ञानं कारणमिति प्राप्तम्। आश्रयत्वसम्बन्ध-इत्याद्युक्तरूप-
शक्तिज्ञानञ्च घटस्य एव अस्ति न घटत्वादेः इति नीलपदार्थस्य घट एव अन्वयो
न तु घटत्वे। तथा च 'नित्यो घटः' इत्यादौ आश्रयत्वसम्बन्ध-इत्याद्युक्तरूप-
शक्तिज्ञानं सर्वसम्मतं घटस्यैव न तु घटत्वस्य इति घटे एव नित्यत्वान्वय न तु
घटत्वे। घटस्य च अनित्यत्वात् तत्र नित्यत्वान्वयबाधात् 'नित्यो घट' इति न
भवति। अयं फलितार्थः। यस्मिन् घटादिपदार्थे बोधविषयत्व-प्रकारतानिरूपित-
भगवदिच्छीय-विशेष्यता आश्रयत्वसम्बन्धेन वर्तते तस्मिन्नेव पदार्थान्तरस्य अन्वयो
भवति, न अन्यत्रेति सिद्धान्तः। तथा च घटत्वान्वयतात्पर्येण उक्तापत्तेः
तादवस्थ्यात् 'नित्यो जातिमान् घटः', 'नित्यः स' इति फलान्तराणामुक्तत्वाच्च।
न च घटे नित्यत्वान्वयबाधेन तादृशतात्पर्येण तथा प्रयोगाभावेऽपि घटत्व-
पदार्थस्यैव नित्यपदार्थे अन्वयोऽस्तु। घटत्वान्वयतात्पर्येणापि 'नित्यो घटः' इति
कुतो न इति वाच्यम् ? एकत्र विशेषणतया अन्वितस्य पदार्थस्य पदार्थान्तरे
विशेषणतया अन्वयः अव्युत्पन्न इति व्युत्पत्तिमूलक-यत्किञ्चित्पदार्थ-निष्ठ-
विशेष्यतानिरूपित-अपदार्थसम्बन्धावच्छिन्न-प्रकारता-सम्बन्धेन शाब्दबुद्धित्वावच्छिन्नं
प्रति यत्किञ्चित्पदार्थनिष्ठ-विशेष्यता-निरूपितप्रकारता-प्रयोजकपदनिष्ठ-शक्ति-
निष्ठ-बोधविषयत्वनिष्ठ-आश्रयत्वसम्बन्धावच्छिन्नप्रकारता-निरूपित-विशेष्यतानिष्ठ-
प्रकारतानिरूपित-विशेष्यतासम्बन्धेन शक्तिज्ञानं कारणम्। तथा च घटत्वस्य अपि
नित्यपदार्थे अन्वय इति 'नित्यो घटः' इति प्रयोगस्य अप्रामाणिकत्वात्।
आकाङ्क्षाभास्य-सम्बन्धावच्छिन्नप्रकारतानिरूपित-विशेष्यतासम्बन्धेन शाब्दबुद्धि-
त्वावच्छिन्नं प्रति आकाङ्क्षाभास्य-सम्बन्धावच्छिन्न-प्रकारतानिरूपित-विशेष्यता-
प्रयोजकपदनिष्ठ-शक्तिनिष्ठ-बोधविषयत्वनिष्ठ-आश्रयत्व-सम्बन्धावच्छिन्न-प्रकारता-
निरूपित-विशेष्यतासम्बन्धेन शक्तिज्ञानस्य कारणत्वात् फलति इयं व्युत्पत्तिः
"पदार्थः पदार्थेन अन्वेति" इति। कार्यकारणभावीय-आकाङ्क्षाभास्य-सम्बन्धा-
वच्छिन्न-निवेशफलं तु लोमवल्लाङ्गूलावच्छिन्ने शक्तं पशुपदमिति शक्तिज्ञानाकारे
पशुपदार्थतावच्छेदकतावच्छेदक-लोमनिष्ठ-प्रकारतया लाङ्गूले विशेष्यतासम्बन्धेन

यत्र इष्यते शाब्दबोधः तत्र व्यभिचारः स्यात्। अत आकाङ्क्षाभास्य-सम्बन्धावच्छिन्नत्व-निवेशः। लोमनिष्ठप्रकारतावच्छेदक-संयोगसम्बन्धस्य शक्ति-भास्यत्वात्।

तद्विशिष्टे शक्तिरिति विचारः। ननु पदशक्तिरूप-पदार्थत्वस्य इत्यस्य यदि पदनिरूपिता शक्तिः पदशक्तिः, पदनिष्ठा वा शक्तिः पदशक्तिः, शक्तिश्च ईश्वरेच्छारूपा एवेति मन्यते। तर्हि पदनिरूपितत्व-पदनिष्ठत्वयोः ईश्वरेच्छायां बाधः। तथा च पदशक्तिरित्यस्य पदसम्बन्धिनी शक्तिरित्येव अर्थः। सम्बन्धश्च स्वजन्यबोधनिरूपितत्वाख्य एव। सा शक्तिश्च स्वनिष्ठाश्रयत्व-सम्बन्धावच्छिन्न-प्रकारतानिरूपित-ईश्वरेच्छीय-विशेष्यतावत्त्व-सम्बन्धेन व्यक्तौ वर्त्तते। स्वनिष्ठ-विशेष्यतानिरूपित-अवच्छिन्नत्वसम्बन्धावच्छिन्न-प्रकारतावत्त्वसम्बन्धेन जातौ वर्त्तते। स्वनिष्ठविशेष्यता-निरूपित-प्रकारतावच्छेदक-संसर्गघटकावच्छेदकता-वच्छेदकत्व-सम्बन्धेन समवाये वर्त्तत इति तात्पर्यम्। तथा च तद्धर्म-तद्वैशिष्ट्य-तदाश्रयेषु शक्त्या विशेषणपदस्य एकवचनान्तत्वमिति। अत एव सन्मात्रविषयिण्या ईश्वरे-च्छायाः समूहालम्बने 'घटपदाद् घटो बोद्धव्य' इत्याकारके बोधादौ अपि सत्त्वेऽपि न व्यभिचार इत्यलम्।

**सम्पन्नो व्रीहिरिति**। एकत्वस्य पदार्थतावच्छेदके अन्वयाद् व्रीहित्व-जात्यवच्छिन्नः क्षेत्रस्थः सर्वोऽपि व्रीहिः सम्पन्नः परिपक्व इत्याशयः। "पदार्थः पदार्थेन" इति नियमे पदार्थः = पदजन्यप्रतीति-विशेष्यः, पदार्थेन = पदजन्य-प्रतीति-विशेष्येण अन्वेति। तथा च फलितार्थः। एकपदार्थविशेष्यक-अपरपदार्थप्रकारक-शाब्दबोधं प्रति समानविशेष्यता-प्रत्यासत्त्या पदजन्यपदार्थ-उपस्थितिः हेतुः। क्वचित्तु 'वेदाः प्रमाणम्' इत्यादौ शिष्टानुभवानुरोधेन विशेष्यतया एकत्वादिपदार्थप्रकारकबोधे विशेषणतया प्रमाणादिपदजन्य-पदार्थ-उपस्थितिः कारणम्। विशेषणतया प्रमाणादि-पदजन्य-पदार्थ-उपस्थिति-अव्यवहितोत्तरजायमान-एकत्वादिपदार्थ-प्रकारकबोधे विशेष्यतया प्रमाणादिपद-जन्य-उपस्थितिः हेतुः इति रीत्या व्यभिचारादिवारणम्।

**तादृशव्युत्पत्तिसङ्कोचस्येति**। अर्थात् व्युत्पत्तिभूत-कार्यकारणभाव-घटक-कार्यतावच्छेदक-कोटिप्रविष्ट-आकाङ्क्षाभास्य-सम्बन्धावच्छिन्न-प्रकारतायां सुबर्थेतरत्वेन प्रातिपदिकार्थेतरत्वेन वा सङ्कोचः। एवञ्च सुबर्थेतराकाङ्क्षाभास्य-सम्बन्धावच्छिन्न-प्रकारतानिरूपित-विशेष्यतासम्बन्धेन शाब्दबुद्धित्वावच्छिन्नं प्रति सुबर्थेतर-आकाङ्क्षाभास्य-सम्बन्धावच्छिन्न-प्रकारता-निरूपित-विशेष्यता-प्रयोजक-पदनिष्ठ-शक्तिनिष्ठ-बोधविषयत्वनिष्ठ-आश्रयत्व-सम्बन्धावच्छिन्न-प्रकारतानिरूपित-विशेष्यतानिष्ठप्रकारतानिरूपितविशेष्यतासम्बन्धेन शक्तिज्ञानं कारणमिति। 'सम्पन्नो

व्रीहिः' इत्यादौ एकत्वस्य सुबर्थत्वेन "पञ्चकं प्रातिपदिकार्थ" इति मते प्रातिपदिकार्थत्वेन च क्षतिविरहात्। न च सङ्ख्येतर-यत्किञ्चित्-पदार्थनिष्ठ-आकाङ्क्षाभास्य-सम्बन्धावच्छिन्नप्रकारतानिरूपित-विशेष्यतासम्बन्धेन शाब्दबुद्धित्वावच्छिन्नं प्रतीति कार्यतावच्छेदकस्वरूपवर्णनं क्रियतां किं सुबर्थेतरत्वनिवेशेन इति वाच्यम्। "प्रकृत्यादिभ्य उपसङ्ख्यानम्" इति व्याकरणवार्तिकम्, 'प्रकृत्या चारुः' इति उदाहरणम्। अभेदः तृतीयार्थः। चारुत्वनिष्ठ-विशेष्यता-निरूपित-प्रकारताया नियमाक्रान्तत्वेन तृतीयार्थाभेदस्य सङ्ख्येतरत्वेन 'प्रकृत्या चारुः' इति वाक्यस्य अप्रामाण्यापत्तिः। सुबर्थेतरत्वेन सङ्कोचे तु अभेदस्य सुब्घटक-तृतीयार्थत्वेन नियमाविषयत्वेन अक्षतेः। न च 'चैत्रस्य गुरुकुलम्' इत्यादौ चैत्रपदार्थस्य निरूपितत्वेन गुरुत्वेऽन्वयः। चैत्रनिरूपितं गुरुत्वमिति बोधात्। तथा च गुरुत्वस्य अपि पदार्थैकदेशत्वेन उक्तव्युत्पत्तिविरोध इति वाच्यम्। सुबर्थेतर-यत्किञ्चिन्-पदार्थनिष्ठ-आकाङ्क्षाभास्य-सम्बन्धावच्छिन्नप्रकारतानिरूपित-पदार्थान्तरविषयक-आकाङ्क्षा-जनक-ज्ञाननिष्ठविषयितानिरूपक-पदार्थेतरनिष्ठ-विशेष्यतासम्बन्धेन शाब्दबुद्धित्वावच्छिन्नं प्रति तादृशविशेष्यता-प्रयोजकपदनिष्ठ-शक्तिनिष्ठ-बोधविषयत्वनिष्ठ-आश्रयत्व-सम्बन्धावच्छिन्नप्रकारता-निरूपित-विशेष्यता-सम्बन्धेन शक्तिज्ञानं कारणम् इति। तथा च चैत्रपदार्थस्य आकाङ्क्षाजनक-ज्ञाननिष्ठ-विषयिता-निरूपकत्वेन तदितरत्वाभावेन अदोषात्। न च गुरुत्व-पदार्थे गुरु-भेदान्वयतात्पर्येण 'गुरुः अगुरुः' इति अनिष्टस्य वाक्यस्य प्रामाण्यं स्यात्। तथा अभेदसम्बन्धेन प्रमेयपदार्थस्य गुरुत्वान्वयतात्पर्येण 'प्रमेयो गुरुकुलम्' इति वाक्यस्य प्रामाण्यं च। "पदार्थः पदार्थेन" इति नियमस्य तु न प्रवृत्तिः। आकाङ्क्षाजनक-ज्ञाननिष्ठ-विषयतानिरूपक-पदार्थसत्त्वात्। एवं 'पशुः अपशुः' इत्यादिवाक्यस्यापि प्रामाण्यं स्यादिति वाच्यम्। अपदार्थसम्बन्धावच्छिन्न-प्रकारताविशिष्ट-विशेष्यतासम्बन्धेन शाब्दबुद्धित्वावच्छिन्नं प्रति पूर्वोक्तविशेष्यता-सम्बन्धेन शक्तिज्ञानं कारणमिति। विशेष्यतायां प्रकारता-वैशिष्ट्यञ्च स्वनिष्ठनिरूपकता-निरूपित-निरूप्यतावत्त्व-स्वाश्रयनिरूपितनिरूपितत्वाभाववद्-वृत्तित्व-उभयसम्बन्धेन। 'गुरुः अगुरुः' इत्यादौ गुरुभेदनिष्ठप्रकारता-निरूपित-गुरुत्वनिष्ठ-विशेष्यतायाः सत्त्वात् प्रकारताश्रय-गुरुभेदनिरूपितत्वाभाव-गुरुत्ववद्-वृत्तित्वेन च न नियमप्रवृत्तिः। 'प्रमेयो गुरुकुलम्' इत्यादौ च प्रमेयनिष्ठ-प्रकारता-निरूपितत्वेन प्रकारताश्रयः प्रमेयः कश्चित् तत्प्रमेयनिरूपित-निरूपितत्वाभाववद्-वृत्तित्वेन च क्षतिविरहः। 'चैत्रस्य गुरुकुलम्' इत्यत्रापि प्रथमसम्बन्धसत्त्वेऽपि अर्थात् गुरुत्व-निष्ठविशेष्यतायाः चैत्रनिष्ठा या प्रकारता तन्निरूपितत्वेऽपि द्वितीयसम्बन्धो न गतः। प्रकारताश्रयः चैत्रः। तन्निरूपितं गुरुत्वनिष्ठं विशेष्यत्वम्। तन्निरूपितत्ववत्-कुलादिवृत्तित्वेन नियमाप्रवृत्त्या न दोषः।

वस्तुतस्तु निरूपितत्वेतर-आकाङ्क्षाभास्य-सम्बन्धावच्छिन्न-प्रकारता-निरूपित-विशेष्यतासम्बन्धेन इति निवेशः। 'गुरुः अगुरुः', 'प्रमेयो गुरुकुलम्' इत्यादौ तु नियमप्रवृत्तिः। गुरुभेदनिष्ठायाः प्रकारतायाः प्रमेयनिष्ठप्रकारतायाः च इतरसम्बन्धावच्छिन्नत्वेन न इमौ प्रयोगौ। 'चैत्रस्य गुरुकुलम्' इत्यत्र तु न "पदार्थः पदार्थेन" इति नियमप्रवृत्तिः। चैत्रनिष्ठप्रकारताया निरूपितत्व-सम्बन्धावच्छिन्नत्वात् इति। किञ्च नित्यसाकाङ्क्षपदार्थातिरिक्तत्वनिवेशेनापि न आपत्तिः। एवं च इत्थं कार्यकारणभावः। नित्यसाकाङ्क्षत्वञ्च स्वविशिष्टत्वम्। वैशिष्ट्यञ्च स्वनिरूपक-विषयकजिज्ञासा-व्याप्यज्ञानविषयत्व-स्वतादात्म्य-एतदुभयसम्बन्धेन।

यत्किञ्चित्-सम्बन्धावच्छिन्न-सङ्ख्येतरपदार्थान्तरनिष्ठ-प्रकारतानिरूपित-विशेष्यता-सम्बन्धेन शाब्दबुद्धित्वावच्छिन्नं प्रति तादृश-प्रकारता-निरूपित-विशेष्यता-सम्बन्धेन उपस्थितिः कारणम् इति कार्यकारणभावमूलिका "पदार्थः पदार्थेन" इति व्युत्पत्तिः। न च 'नित्यो जातिमान् घटः' इत्यादौ जातिमद्घटकजातौ नित्यत्वान्वयतात्पर्येण 'नित्यो जातिमान् घटः' इति प्रयोगः स्यात्। एतन्नियमस्य तु न प्राप्तिः विशेष्यतासम्बन्धेन जातिपदार्थोपस्थित्यभावादिति वाच्यम्। मुख्यविशेष्यतासम्बन्धेन उपस्थितिः कारणमिति निवेशः। मुख्यविशेष्यत्वञ्च प्रकारत्वानवच्छिन्नविशेष्यत्वम् प्रकारत्वाभिन्नविशेष्यत्वं वा प्रकारत्वासामानाधिकरण्यं वा। 'जातिमान् घटः' इत्यादौ तु जातिमन्निष्ठ-विशेष्यता-निरूपित-प्रकारत्व-सामानाधिकरण्यमेव अस्ति जातिपदार्थस्येति न तादृशप्रयोग इति आशयात्।

न च 'नित्यं घटत्वम्' इति प्रयोगे नित्यपदार्थस्य घटत्वे अन्वयो न स्यात्। 'नीलो घटः' इत्यादौ घटनिष्ठविशेष्यता-निरूपित-प्रकारता घटत्वे समायाता। तथा च तत्रत्यघटत्व-अत्रत्यघटत्वयोः ऐक्येन अत्रत्यं घटत्वं प्रकारत्व-समानाधिकरणमेव इति वाच्यम्। उपस्थितीय-विशेष्यताविशिष्टा या मुख्यविशेष्यता तेन सम्बन्धेन उपस्थितिः कारणम् उपस्थितीय-विशेष्यता-वैशिष्ट्यञ्च स्वनिरूपितत्व-स्वनिरूपितप्रकारत्व-असामानाधिकरण्यम् इति उभयसम्बन्धेन। तथा च अन्यनिरूपितप्रकारत्व-सामानाधिकरण्य-सत्त्वेऽपि स्वनिरूपितप्रकारत्व-सामानाधिकरण्यं नास्ति इति तादृशप्रयोगसौष्ठवात्।

न च 'चैत्रस्य गुरुकुलम्' इत्यादौ यत्किञ्चित्-सम्बन्धावच्छिन्न-सङ्ख्येतर-पदार्थान्तरनिष्ठ-प्रकारता-निरूपित-विशेष्यता-सम्बन्धेन इत्यादि कार्यतावच्छेदकदलं गतम्। परन्तु उपस्थितीय-विशेष्यता इत्यादि कारणदलं न गतम्। इति हेतोः कार्यतावच्छेदकानाक्रान्तत्वेन हेतुः व्यभिचरित इति वाच्यम्। यत्किञ्चित्-सम्बन्धावच्छिन्न-सङ्ख्येतर-पदार्थान्तरनिष्ठ-प्रकारता-निरूपित-नित्य-साकाङ्क्षवदवृत्ति-मुख्यविशेष्यतासम्बन्धेन उपस्थितिः कारणम्। गुरुत्वस्य

नित्यसाकाङ्क्षवद्-वृत्तित्वेन कार्यदलमपि न गतमिति भागासिद्धि-दोषाभावात्। ननु एवं निविशेऽपि 'गुरुः अगुरुः', 'पशुः अपशुः' इति स्यात्। गुरुभिन्नाभिन्नं यद्गुरुत्वमिति बोधात् गुरुभिन्नत्व-गुरुनिरूपितत्वेन तस्य नित्यसाकाङ्क्षवद्-वृत्तित्वेन एतन्नियमाप्रवृत्तेः इति चेत् ? न। यत्किञ्चित्-सम्बन्धावच्छिन्न-सङ्ख्येतर-पदार्थान्तरनिष्ठ-स्वनिरूपितत्व-स्वाश्रयनिरूपितत्व-असामानाधिकरण्य-एतदुभय-सम्बन्धेन। प्रकरताविशिष्ट-विशेष्यता-सम्बन्धेन शाब्दबुद्धित्वावच्छिन्नं प्रति स्वनिरूपितत्व-स्वनिरूपितप्रकारत्व-असामानाधिकरण्य-एतदुभय-सम्बन्धेन। उपस्थितीय-विशेष्यता-विशिष्ट-मुख्यविशेष्यता-सम्बन्धेन उपस्थितिः कारणम्। तथा च स्वं प्रकारता। तदाश्रयो गुरुभिन्नत्वम्। तन्निरूपितत्वासामानाधिकरण्यम् अस्त्येवेति नियमाक्रान्तत्वेन तादृशप्रयोगस्य दुर्लभत्वात्।

यदि तु 'चैत्रस्य गुरुकुलम्' इत्यादिदोषवारणाय अभेदसम्बन्धावच्छिन्न-सङ्ख्येतर-पदार्थान्तरनिष्ठ-प्रकारतानिरूपित-विशेष्यता-सम्बन्धेन इति कार्यदले निवेश्य चैत्रस्य इत्यत्र निरूपितत्वसम्बन्धावच्छिन्नेति तत्र न नियमप्रवृत्तिरिति कथ्यते तदपि न। 'दण्डेन न घटः' इत्यादौ दण्डप्रयोज्यत्व-प्रतियोगिको योऽभावः तस्य स्वरूपसम्बन्धेन घटत्वान्वयतात्पर्ये 'न दण्डेन न घटः' इति प्रयोगापत्तेः अभेदसम्बन्धनिवेशस्य दोषप्रवर्त्तकत्वात्।

वस्तुतस्तु पूर्वोक्तद्वितीयप्रकारेऽपि दोषाः। पशुपदार्थीय-लोमनिष्ठ-प्रकारतावच्छेदक-संयोगसम्बन्धस्य शक्तिभास्यत्वेन तद्ग्रहणाभावाय आकाङ्क्षा-भास्य-सम्बन्धावच्छिन्न-अपदार्थसम्बन्धावच्छिन्न इत्यादिनिवेशस्य आवश्यकत्वेन पूर्वोक्तप्रकार एव ज्यायानिति।

कल्पकारस्तु 'दण्डेन न घटः' इत्यादौ विलक्षणा गतिः। तत्र स्वरूप-सम्बन्धेन एव नञर्थाभावे अन्वयः। तत्र का गतिरिति विचिन्त्यताम्।

यथा 'सम्पन्नो व्रीहिः' इति वाक्यस्य न हि एकव्रीहिकण-सम्पन्नत्वे तात्पर्यम् अपितु अनेकव्रीहिसम्पन्नत्वे अस्ति। अत्र एकवचनदर्शनेन एकत्वस्य अनेकव्रीहिषु असम्भवाद् व्रीहित्वजातौ एव अन्वयः अस्ति। तथा 'वेदाः प्रमाणम्' इत्यत्रापि एकत्वपदार्थस्य पदार्थैकदेशेन प्रमितिकरणत्वेन साकम् अन्वये तात्पर्यम्।

ननु यस्य कुत्रापि गतिः नास्ति तस्य वारणस्य अङ्गतिरिति न्यायेन गत्यभावे सङ्ख्येतरत्वेन इत्याद्युक्तरीत्या सङ्कोचः। परन्तु न व्रीहित्वजातौ एकत्वान्वयो युक्ततरः। पदार्थान्तरनिष्ठ-प्रकारतानिरूपित-विशेष्यतासम्बन्धेन शाब्दबुद्धित्वावच्छिन्नं प्रति अन्वयितावच्छेदकरूपेण उपस्थितिः कारणम्। व्रीहित्वं हि स्वरूपत एव व्रीहिपदस्य शक्यतावच्छेदकम् अस्ति। व्रीहिपदेन व्रीहित्वस्य

स्वरूपत एव उपस्थितिः भवति न तु अन्वयितावच्छेदकेन व्रीहित्वत्वेन रूपेण इति, न व्रीहित्वजातौ एकत्वान्वयः। किन्तु स्वाश्रयप्रकृत्यर्थतावच्छेदकवत्त्व-सम्बन्धेन प्रकृत्यर्थव्रीहिषु एव अन्वयः। तथा च "पदार्थः पदार्थेन" इति नियमेन एव सङ्कोचः। तथा हि - स्वम् = एकत्वम्। तदाश्रयीभूतं यत्प्रकृत्यर्थतावच्छेदकं व्रीहित्वम्, तद्वत्त्वं व्रीहित्ववत्त्वं सम्बन्धरूपं व्रीहिषु अस्ति एव। एवं 'वेदाः प्रमाणम्' इत्यादावपि स्वम् = एकत्वम्। तदाश्रयीभूतं यत्प्रकृत्यर्थतावच्छेदकं प्रमिति-करणत्वम्। तद्वत्त्वसम्बन्धेन वेदेषु एव एकत्वान्वयः। प्रमितिकरणतावत्त्वं तु अस्ति एव वेदेषु इति न "पदार्थः पदार्थेन" इत्यत्र सङ्कोचादिप्रपञ्च इति **'यदि'** इत्यारभ्य ग्रन्थाशयः।

**VV-S 2.2.8:** न च व्रीहिपदस्य व्रीहित्वत्व-विशिष्टव्रीहित्वावच्छिन्ने लक्षणां कृत्वा व्रीहित्वत्वावच्छिन्नव्रीहित्वे चैकत्वान्वयोपपत्तौ न अन्वयितावच्छेदकत्वेन अनुपस्थितिरिति वाच्यम्। लक्षणाया आश्रयणे प्रमाणाभावात् इति आशयेनैव आह - **यदि स्वाश्रये**ति। ननु अन्वयितावच्छेदकरूपेण उपस्थितिः कुतो न इति प्रश्नः। "जात्यखण्डोपाध्यतिरिक्तिपदार्थस्यैव किञ्चिद्धर्मपुरस्कारेण भानम्" इति नियमात् आकाङ्क्षाभास्यसम्बन्धावच्छिन्न-यत्किञ्चिन्निष्ठप्रकारतानिरूपित-विशेष्यतासम्बन्धेन शाब्दबुद्धित्वावच्छिन्नं प्रति यत्किञ्चिद्धर्मावच्छिन्नविशेष्यतासम्बन्धेन उपस्थितिः (अन्वयितावच्छेदकरूपेण इत्यर्थः) कारणमिति नियमीय-कार्यकारणभावाच्च। ननु **अन्वयितावच्छेदकरूपेणे**ति मूलं कथम्? 'सम्पन्नो व्रीहिः' इत्यत्र 'अन्वयः अस्ति अस्मिन् इति अन्वयि'। तस्य भावः अन्वयिता, एकत्वनिष्ठप्रकारतानिरूपित-विशेष्यता व्रीहित्वनिष्ठा। तस्या अवच्छेदकञ्च अप्रसिद्धम्। जात्यखण्डोपाध्य-तिरिक्तस्य इति न्यायेन व्रीहित्वत्वस्य अनुपस्थितत्वात्। तथा च कथं ग्रन्थसङ्गतिरिति चेत् ? न। अन्वयितावच्छेदकतया सम्भाव्यमानेन रूपेण इति तदर्थवर्णनात् अप्रसिद्ध्यभावात्। न च पदार्थान्तरनिष्ठ-प्रकारतानिरूपित-विशेष्यता-सम्बन्धेन शाब्दबुद्धित्वावच्छिन्नं प्रति अन्वयितावच्छेदकरूपेण उपस्थितिः कारणम् इत्यर्थक-आकाङ्क्षाभास्य-सम्बन्धावच्छिन्नेति पूर्वोक्तनियमेनैव निर्वाहे "पदार्थः पदार्थेन अन्वेति" इति नियमो व्यर्थ इति वाच्यम्। पशुपदं लोमवल्-लाङ्गूलावच्छिन्ने शक्तम्। तत्र पदेन पदार्थतावच्छेदकं पशुत्वम्। तदवच्छेदकं लोमत्वम्। लोमपदार्थोपस्थितौ तत्रैव लोमपदार्थे पशुभेदतात्पर्येण 'पशुः अपशुः' इति प्रयोगवारणाय "पदार्थः पदार्थेन" इत्यस्य आवश्यकत्वात्। न च पदार्थान्तरनिष्ठ-प्रकारतानिरूपित-विशेष्यता-सम्बन्धेन शाब्दबुद्धित्वावच्छिन्नं प्रति अन्वयितावच्छेदकरूपेण उपस्थितिः कारणम् इत्यर्थक-आकाङ्क्षाभास्य-सम्बन्धावच्छिन्नप्रकारता-निरूपित-विशेष्यतासम्बन्धेन शाब्दबुद्धित्वावच्छिन्नं प्रति

यत्किञ्चिद्धर्मावच्छिन्न-विशेष्यता-सम्बन्धेन उपस्थितिः कारणमिति नियमः किमर्थम् इति वाच्यम्। विशेष्यविशेषणभाव-रहितयोः खण्डशक्त्या उपस्थितयोः विशृङ्खल-भावेन इति आशयः। घट-घटत्वयोः परस्पर-निरपेक्षयोः तत्र अभेदसम्बन्धेन नित्यपदार्थस्य घटत्वान्वयतात्पर्येण 'नित्यो घटः' इति वाक्य-प्रामाण्यापत्तिभिया अस्यापि आवश्यकत्वात्। निरवच्छन्नविशेष्यताक-इतरपदार्थप्रकारक-शाब्दबोधो न भवतीति फलितार्थः।

'वह्निमान् पर्वतः' इत्याकारकशाब्दबुद्धित्वावच्छिन्नं प्रति वह्न्यभाव-वद्द्रव्यम् इत्यादिबुद्धेः प्रतिबन्धकत्व-वारणाय समानधर्मावच्छिन्न-विशेष्यताक-निश्चयस्य एव अवच्छेदकनिष्ठ-प्रत्यासत्त्या एव वा विरोधिज्ञान-प्रतिबन्धकत्वम्। तथा च प्रकृते 'सम्पन्नो व्रीहिः' इत्यत्र जात्यखण्डोपाधि-अतिरिक्तपदार्थस्यैव किञ्चिद्धर्मप्रकारेण भानमिति नियमेन व्रीहित्वस्य जातित्वेन स्वरूपत एव व्रीहित्वेन रूपेण उपस्थितिविषयत्वात् एकत्ववद्व्रीहित्वम् इत्याकारकम्। ज्ञानञ्च कस्यचिदपि निश्चयस्य न प्रतिबन्धकं नापि प्रतिबध्यम्, न कस्यचिद्ज्ञानस्य प्रवर्त्तकं नापि कस्यचिद् ज्ञानस्य निवर्त्तकम्। तथा च अन्वयितावच्छेदकरूपेण उपस्थितेः आवश्यकत्वात्। तस्याश्च व्रीहित्वस्य जातित्वेन बाधितत्वादिति तात्पर्यम्। ननु कीदृश आकारः प्रतिबध्य-प्रतिबन्धकयोः यो न संङ्घटते इति प्रश्नः। तत्सम्बन्धावच्छिन्न-तद्धर्मावच्छिन्न-प्रकारता-निरूपित-धर्मितावच्छेदकता-सम्बन्धेन इन्द्रियसन्निकर्षाजन्य-दोषविशेषाजन्य-ज्ञानत्वावच्छिन्नं प्रति तत्सम्बन्धा-वच्छिन्न-तद्धर्मावच्छिन्न-प्रतियोगिताक-अभावत्वावच्छिन्न-प्रकारता-निरूपित-धर्मिता-वच्छेदकता-सम्बन्धेन अनाहार्या। अप्रामाण्यज्ञानानास्कन्दितं ज्ञानमेव प्रतिबन्धकम् इति प्रकारेण अवच्छेदकनिष्ठ-प्रत्यासत्त्या, अर्थात् सम्बन्धेन प्रतिबध्य-प्रतिबन्धक-भावः सार्वजनीनः। कार्यकारणभावे घटप्रत्यक्षस्य घटाभावानुमित्या प्रतिबन्धकत्व-वारणाय प्रतिबध्यतावच्छेदककोटौ इन्द्रियसन्निकर्षाजन्यत्वनिवेशः। पित्तरोगेण 'पीतः शङ्ख' इति ज्ञानस्य पीतत्वाभावात् शङ्ख इति ज्ञानेन प्रतिबन्धकत्व-वारणाय दोषविशेषाजन्यत्व-निवेशः। 'घटवद्भूतलम्' इति शुद्धयथार्थज्ञानस्य 'घटाभाववद् भूतलम्' इति ज्ञानेन प्रतिबन्धकत्वसिद्धये प्रतिबन्धकतावच्छेदक-कोटौ अनाहार्यत्वनिवेशः। 'घटवद् भूतलम्' इति शुद्धज्ञानस्य अप्रामाण्यज्ञानाना-स्कन्दितस्य 'घटाभाववद् भूतलम्' इति ज्ञानेन प्रतिबन्धकत्वसिद्धये अप्रामाण्य-ज्ञानानास्कन्दितत्व-निवेशः। 'संयोगेन घटवद् भूतलम्' इति ज्ञानस्य 'समवायेन घटाभाववद् भूतलम्' इति ज्ञानेन प्रतिबन्धकत्ववारणाय प्रतिबध्य-प्रतिबन्धक-उभयकोटौ तत्तत्सम्बन्धावच्छिन्नत्व-निवेशः। 'द्रव्यवद् भूतलम्' इति ज्ञानस्य 'घटाभाववद् भूतलम्' इति निश्चयेन प्रतिबन्धकत्व-वारणाय प्रतिबध्य-प्रतिबन्धक-उभयकोटौ तत्तद्धर्मावच्छिन्नत्वनिवेशः।

**अत्रैव प्रसङ्गात् प्रतिबध्यप्रतिबन्धकभाव-निर्णयः** - (१)तद्वत्ताबुद्धिं प्रति तदभाववत्तानिश्चयस्य प्रतिबन्धकत्वम् इति एकः प्रकारः। (२)तद्वत्ताबुद्धिं प्रति तदभावव्याप्यवत्तानिश्चयस्य प्रतिबन्धकत्वमिति द्वितीयः प्रकारः। (३)तद्वत्ता-बुद्धिं प्रति तदभावावच्छेदकतया गृहीतधर्मवत्तानिश्चयस्य प्रतिबन्धकत्वमिति तृतीयः प्रकारः। (४)तद्वत्ताबुद्धिं प्रति तद्-असमानाधिकरणधर्मवत्ता-निश्चयस्य प्रतिबन्धकत्वम् इति चतुर्थः प्रकारः। (५)तद्वत्ताबुद्धिं प्रति तद्-व्यापकता-वच्छेदकतया गृहीतधर्मावच्छिन्नाभाववत्तानिश्चयस्य प्रतिबन्धकत्वम् इति पञ्चमः प्रकारः। (क)'ह्रदो वह्निमान्', 'ह्रदो न वह्निमान्'। (ख)'ह्रदो वह्निमान्', 'ह्रदो वह्न्यभावव्याप्यवान्'। (ग)'जलवान् वह्न्यभाववान् ह्रदः' इति निश्चयविशिष्टस्य 'जलवान् ह्रदः' इति ज्ञानं प्रति प्रतिबन्धकत्वम् इति। (घ)'वह्न्यसमानाधि-करणजलवान् ह्रदः', (ङ)'ह्रदः धूमवान्' इति बुद्धिं प्रति धूमव्यापकतावच्छेदकतया गृहीतं यद्वह्नित्वं तादृशवह्नित्वावच्छिन्नाभाववान् ह्रदः इति निश्चयस्य प्रतिबन्धकत्वमिति क्रमेण उदाहरणानि। कार्यत्वावच्छिन्नं प्रति तु कामातुराणां कामिनीजिज्ञासा प्रतिबन्धिका। कार्यविशेषं प्रति तु क्वचित् कस्यचित्पदार्थस्य प्रतिबन्धकत्वम्। यथा दाहत्वावच्छिन्नं प्रति मणेः प्रतिबन्धकत्वम्। विभिन्नविषयक-प्रत्यक्षत्वावच्छिन्नं प्रति शाब्दसामग्र्याः प्रतिबन्धकत्वम्। समानविषयकानुमितित्वा-वच्छिन्नं प्रति शाब्दसामग्र्याः प्रतिबन्धकत्वम् इत्यादि। प्रतिबन्धकत्वञ्च तद्धर्मावच्छिन्न-प्रतियोगिताकत्व-सम्बन्धावच्छिन्नावच्छेदकताश्रयधर्मत्त्वम्। तथा च 'सम्पन्नो व्रीहिः' इत्यत्र प्रकृते एकत्ववद् व्रीहित्वम् इति निश्चयस्य न प्रतिबध्यत्वं नापि प्रतिबन्धकत्वं कस्यचिदपि ज्ञानस्य। व्रीहित्वत्वेन अनुपस्थितत्वात्। पूर्वोक्ततत्सम्बन्धावच्छिन्न-तद्धर्मावच्छिन्नेति प्रतिबध्यप्रतिबन्धक-कार्यकारण-भाव-मूलकनियमाप्रवृत्त्या 'वेदाः प्रमाणम्' इत्यादौ स्वाश्रयप्रकृत्यर्थतावच्छेदकवत्त्व-सम्बन्धेनैव स्वाश्रयप्रमितिकरणत्ववत्त्व-सम्बन्धेन प्रमाण एवैकत्व-सङ्ख्यान्वय इति। एकत्वाश्रयप्रमाणतावच्छेदकवत्त्वसम्बन्धेन एकत्वविशिष्टं यत्प्रमाणं तदभिन्ना वेदाः इति आशयः। तथा च "पदार्थः पदार्थेन" इति न्याये सुबर्थेतरत्वादिरीत्या न सङ्कोच उक्त-प्रकारान्तरेण अभीष्टसिद्धेः इति अलम्।

अत्र किञ्चित् (उच्यते)। 'घटवद् भूतलम्', 'वृक्षात् पर्ण पतति' इत्यादौ संयोगपदार्थ-विभागपदार्थयोः यद्यपि सापेक्षत्वं परन्तु 'संयोगाभावो विभागः', 'विभागाभावः संयोग' इत्यत्र विनिगमनावैकल्येन उभयोः पदार्थयोः अखण्डोपाधिवदतिरिक्तत्वमेव इति **सूक्ष्मतत्त्ववेत्तारः**।

**VV-S 2.2.9: यत्तु 'सम्पन्नो व्रीहिः'** इति। ननु 'सम्पन्नो व्रीहिः' इत्यत्र एकत्वसङ्ख्याया न व्रीहित्वजातौ अन्वयो, येन "पदार्थः पदार्थेन अन्वेति" इति

न्याये सङ्कोचादिप्रपञ्चः। व्रीहिः इत्यत्र सु-विभक्त्या एकस्य एव एकत्वस्य उपस्थिति अपि न, येन अनेकव्रीहिषु एकैकत्वस्य बाधः, किन्तु एकवचन-सु-विभक्त्या अनेकैकत्वोपस्थितिः। अनेकेषाम् एकत्वानामनेकव्रीहिषु अन्वये न कोऽपि विरोध इत्याशयेनाह - **यत्त्विति**। पदार्थतावच्छेदके स्वाश्रयप्रकृत्यर्थतावच्छेदकत्व-सम्बन्धेन पदार्थे वा अन्वय इति पक्षद्वयेऽपि जात्येकत्वभानोपगमो निरर्थक इति आशयः।

**VV-S 2.2.10:** निरस्यति तदसदिति। 'सम्पन्नो व्रीहिः' इत्यत्र एकवचन-सोः न एकत्वसङ्ख्यारूपोऽर्थः। तस्य वस्तुमात्रसाधारण्येन अर्थात् केवलान्वयित्वेन अर्थत एव लाभात्। सङ्ख्यारूपैकत्वस्य न उपयोगः। अर्थात् व्रीहिविशिष्ट-क्षेत्र-समीपवर्ति-व्रीहिसजातीय-उप्तान्नान्तर-सम्पन्नत्व-व्यावृत्तिः एव 'सम्पन्नो व्रीहिः' इति वक्तुः तात्पर्यविषयीभूता सा। एकत्वसङ्ख्यान्वयि-व्रीहिसम्पन्नत्वेऽपि व्रीहिभिन्न-अन्नान्तरस्यापि तत्समीपवर्त्तिक्षेत्रोप्तस्य सम्पन्नत्वे न कोऽपि बाधकः। ग्रन्थोक्त-सजातीयद्वितीय-राहित्यरूपैकत्वार्थे स्वीकृते तु तादृशैकत्वान्वयि-व्रीहीणां सत्त्वेन सम्पन्नत्वे व्रीहिसजातीयोप्तान्नान्तर-सम्पन्नत्वव्यावृत्तिः सुतरां लभ्यते। तथा च न एकत्वम् एकवचनार्थः। अपि तु स्वसजातीयनिष्ठ-भेदप्रतियोगितानवच्छेदक-एकत्वरूपं यत्स्वसजातीय-द्वितीयरहितत्वं तदेव एकवचनार्थः। सङ्घटना-प्रकारश्च इत्थम् - 'अत्र घटः' इत्यादौ भूतले एकघटसत्त्वदशायां स्वं = प्रकृत्यर्थः, एतद्देशवृत्तिः घटः। तत्सजातीयः स एव। अन्यस्य अभावात्। तन्निष्ठैकपटादिभेदः, तत्प्रतियोगितावच्छेदकं तन्निष्ठैकत्वम् अर्थात् पटादिनिष्ठैकत्वम्। अनवच्छेदकञ्च तद्घटनिष्ठम् एकत्वम्। तदेव सजातीयद्वितीयरहितत्वं घटपदोत्तरम् एकवचनार्थः। एतद्देशे बहुघटसत्त्वदशायां तु स्वं = प्रकृत्यर्थः, एतद्देशवृत्तिः घटः। तत्सजातीयो द्वितीयोऽपि घटः तन्निष्ठैकत्ववद्-एतद्घटभेदः। तत्प्रतियोगितावच्छेदकमेव एतद्घटनिष्ठम् एकत्वम् इति अनेकघटतात्पर्येण न अत्र घट इति प्रयोगः।

तथा च प्रकृते 'सम्पन्नो व्रीहिः' इत्यादौ यदि अन्नान्तरं सम्पन्नं स्यात् तदा सम्पन्नत्वेन व्रीहिसजातीयान्नान्तरस्य सत्त्वात् तत्र वर्तते यो व्रीहिभेदः तत्प्रतियोगितावच्छेदकं व्रीहित्वगतैकत्वं स्यात्। यदि च अन्नान्तरं न सम्पन्नं तदा सम्पन्नत्वेन रूपेण व्रीहिसजातीयस्य एव अभावात् स्वसजातीयनिष्ठ-भेद-प्रतियोगितानवच्छेदकमेव जातं व्रीहित्वगत-एकत्वम्। तदेव सजातीयद्वितीय-रहितत्वम्। एवंविधैकवचनार्थस्वीकारात् एव 'पशुना यजेत' इत्यादौ एकपशु-करणकयागात् एव अदृष्टसिद्धिः। तथा हि - अत्र वाक्ये स्वं = पशुः। तत्सजातीयो द्वितीयः पशुः यदि यागे स्यात् तदा द्वितीयपशुनिष्ठस्य एतत्पशुनिष्ठमेकत्वं भेदप्रतियोगितावच्छेदकं स्यात्। परन्तु यागे द्वितीयपशोः अभावे

तु एतत्पशुनिष्ठभेदस्य प्रतियोगितानवच्छेदकमेव जायते इति तदेव सजातीय-द्वितीयरहितत्वम् एवञ्च एकपशुकरणकयागात् अदृष्टसिद्धिः इति तात्पर्यम्।

**VV-S 2.2.11:** ननु यागस्थले कार्यान्तरार्थबद्धपशौ तन्निष्ठः य एतत्पशु भेदः तादृशभेदप्रतियोगितावच्छेदकम् एव एतत्पशुनिष्ठम् एकत्वं, तस्यापि पशोः एतत्पशुजातीयत्वात्। किञ्च यागीयघृतादिसामग्रीणामपि यागसम्बन्धित्वेनैव धर्मेण एतत्पशुसाजात्याद् यागसम्बन्धि-घृतादिषु एतत्पशुभेदः, तादृशभेद-प्रतियोगिता-अवच्छेदकम् अपि एतत्पशुनिष्ठम् एकत्वं स्यादेव। तथा च तत्पशुनिष्ठैकत्वस्य कथं स्वजातीयनिष्ठ-भेदप्रतियोगितानवच्छेदकत्वमिति आशङ्क्य परिष्करोति - **साजात्यञ्चेति**। 'यजेत स्वर्गकाम' इत्यत्र स्वपदेन वर्त्तमान-तिङ्विभक्तिः। तत्समभिव्याहृतः पदार्थो यागपदार्थः। तत्संसर्गित्वविशिष्टं (संसर्गित्व-वैशिष्ट्यञ्च प्रकृत्यर्थतावच्छेदके सामानाधिकरण्यसम्बन्धेन बोध्यम्) यागसम्बन्धित्व-समानाधि-करणं यत्प्रकृत्यर्थतावच्छेदकं पशुत्वं तद्वत्त्वेन उभयरूपेणैव साजात्यम्। कार्यान्तरार्थबद्धपशौ पशुत्वस्य सत्त्वेऽपि यागसंसर्गित्वाभावः। घृतादीनां यागसंसर्गित्वेऽपि प्रकृत्यर्थतावच्छेदक-पशुत्वाभाव इति द्वाभ्यां विशेषणाभ्याम् उभयोः व्यावृत्तिरिति न साजात्य-व्यभिचारः। एतत्साजात्यपरिष्कारादेव 'अत्र घटोऽस्ति' इत्यादौ घटानाम् अनेकत्वेन परस्परभेदा नीलघटादिषु पीतघटादिभेदस्य तद्गतैकत्वस्य भेदाद् 'अयं घटः तद्घटनिष्ठैकत्ववान्' इति प्रतीतिदर्शनेन एकत्ववद्घटनिष्ठा या भेदप्रतियोगिता तदवच्छेदकमेव एकत्ववद्-घटनिष्ठम् एकत्वं जातं न अनवच्छेदकमिति भेदप्रतियोगितानवच्छेदकैकत्वाप्रसिद्धेः अपि अभावः। तथा हि 'अत्र घटोऽस्ति' इत्यत्र स्वपदेन एकवचनान्तं गृह्यते। समभिव्याहृतत्वञ्च तत्तत्पदप्रयोज्यविषयता-निरूपित-विषयताप्रयोजकत्वे सति तत्तद्भिन्नपदत्वम्। तत्समभिव्याहृतं पदम् 'अत्र' इति पदम्। तदर्थ एतद्देश-वृत्तित्वं तत्संसर्गित्वं तत्संसर्ग एव। स च संसर्ग एतद्देशवृत्तित्वीय-स्वरूप-सम्बन्धरूपः। तद्विशिष्टं यत्प्रकृत्यर्थतावच्छेदकं घटत्वं तेन रूपेण सजातीयः स एव घटः, तन्निष्ठो य एकपटभेदः तत्प्रतियोगितावच्छेदकं तत्पटनिष्ठैकत्वम्। तदनवच्छेदकं घटनिष्ठम् एकत्वम् इति रीत्या एतद्देशवृत्तित्वविशिष्ट-घट-सजातीय इत्यस्य एतद्देशविद्यमानत्व-समानाधिकरण-घटत्ववत्त्वेन सजातीयाभावात् एतद्देश-विद्यमानघटगतैकत्वस्य प्रसिद्धत्वात्।

**जात्येकत्वादेवेति** - 'सम्पन्नो व्रीहिः' इत्यत्रेव जातौ एकत्वान्वयः। स्वाश्रयप्रकृत्यर्थतावच्छेदकवत्त्वेन वा। स्वम् = एकत्वम्। तदाश्रयीभूतं यत्प्रकृत्यर्थ-तावच्छेदकं घटत्वं, तद्वत्त्वं सर्वेषु घटेषु इति तेन सम्बन्धेन अनेकघटेषु अपि एकत्वसङ्ख्यान्वये न क्षतिः इति अभिप्रायः।

अत्र तु शब्दप्रयोगात् बहुघटसत्त्वदशायाम् 'अत्र घटोऽस्ति' इति न भवति पदार्थान्तरनिष्ठप्रकारता-निरूपित-विशेष्यतासम्बन्धेन शाब्दबुद्धित्वावच्छिन्नं प्रति अन्वयितावच्छेदकरूपेण उपस्थितिः कारणम् इति नियमात् घटत्वस्य जातित्वेन स्वरूपत एव उपस्थितिसत्त्वात्। तथा च स्वाश्रय-प्रकृत्यर्थतावच्छेदकवत्त्व-सम्बन्धेति प्रकार एव गरीयान्। किञ्च जातावेकत्वान्वयेन एव समर्थने अभिलाषात् चेत् तर्हि प्रकृत्यर्थतावच्छेदकतावच्छेदक-सम्बन्धेन स्व-समभिव्याहृत-पदार्थसंसर्गित्वविशिष्ट-प्रकृत्यर्थतावच्छेकमात्रवृत्ति-धर्मेण साजात्य-ग्रहणे ग्रन्थकर्तु तात्पर्य वर्णनीयम्। एवञ्च घटपदसमभिव्याहृतं पदम् 'अत्र' इति। तदर्थश्च एतद्देशवृत्तित्त्वम्। तस्य स्वरूपसम्बन्धेन संसर्गी घटः। तत्र घटप्रकृत्यर्थतावच्छेदकतावच्छेदक-सम्बन्धः समवायः। तेन वृत्तिः यस्य तादृश-घटत्वं तत्त्वम्। तादृशवृत्तित्वरूपं घटत्वे अस्त्येव। किञ्च प्रकृत्यर्थतावच्छेदक-मात्रवृत्तिधर्मो घटत्वम्। तच्च घटत्वे सामानाधिकरण्य-सम्बन्धेन समभिव्याहृत-पदार्थसंसर्गित्व-विशिष्टो यः प्रकृत्यर्थतावच्छेदकमात्र-वृत्तिधर्मो घटत्वत्वं, तेनैव धर्मेण घटत्वसजातीय घटत्वमेव अस्ति। तन्निष्ठः भेद एकत्ववत् पटत्वभेदः। तत्प्रतियोगितावच्छेदकं पटत्वनिष्ठम् एकत्वम्। तदनवच्छेदकञ्च घटत्वनिष्ठम् एकत्वम्। तदेव सजातीयद्वितीय-राहित्यम् 'अत्र घटोऽस्ति' इत्यत्र घटपदोत्तर-एकवचनार्थः।

प्रकृत्यर्थतावच्छेदकमात्र-वृत्तिधर्मेण साजात्याश्रयणे गौरवात् स्वाश्रय-प्रकृत्यर्थतावच्छेदकवत्त्व-सम्बन्धेन इति 'सम्पन्नो व्रीहिः' इतिवत्प्रकार एव श्रेयानिति। सिंहावलोकनन्यायेन पुनरपि साजात्यं विचार्यते।

ननु एकस्मिन्नेव भूतले ब्राह्मण-शूद्रयोः यदा घटः तत्र 'अत्र ब्राह्मणस्य घटोऽस्ति', 'शूद्रस्य च घटोऽस्ति' एवं प्रयोगो न स्यात् तथा हि - एतद्देश-विद्यमानत्वादिसंसर्गः शूद्रघटे तन्निष्ठभेदप्रतियोगितावच्छेदकत्वमेव ब्राह्मणघट-गतैकत्वे इति चेत् ? न। यावत्-स्वसमभिव्याहृत-पदार्थसंसर्गित्व-विशिष्ट-प्रकृत्यर्थतावच्छेदकवत्त्वरूपेणेति स्वीकारः। ब्राह्मणसंसर्गित्वं शूद्रघटे नास्तीति भेदप्रतियोगितानवच्छेदकवत्त्वमेव ब्राह्मणघट इति दोषाभावात्। यावत्संसर्गित्व-इति निवेशः तेन कालिकसम्बन्धेन शूद्रघटसत्त्वात् न दोषः प्रकृतशाब्दबोधो प्रकारकविषयसंसर्गग्रहणेन अदोषाच्च इति। यजधातोः तत्तद्व्यक्तित्वावच्छिन्ने लक्षणा तेन पशुद्वयकत्वविशिष्ट-पशुकरणकयागत्वरूप-उद्देश्यतावच्छेदक-अनाक्रान्तत्वात् एकत्वविशिष्टपशौ एतद्यागीय-व्यक्तिसंसर्गो न अन्यस्मिन् इति परस्परभेदात् न व्यभिचारचर्चा। अत एव 'नरेण नरो यजेत' इत्यादौ कर्त्तृभूतनरे करणभूतनर-सजातीयत्वं नास्ति। संसर्गभेदात्। एकत्र करणत्वं संसर्गः अपरत्र

कर्तृत्वम्। ननु एवमपि अनेकब्राह्मणकर्तृक शयनाधिकरण-स्थानतात्पर्येण 'अत्र ब्राह्मणः शेते भुङ्क्ते' इत्यादिवाक्यम् अनिष्टमपि स्यात्। शयनक्रियाकर्तृभेदेन शयनक्रियाव्यक्तिभेदः। स्वसजातीयत्वं स्वस्मिन्नेव। तन्निष्ठ-भेदप्रतियोगिता-अनवच्छेदकत्व-सत्त्वादिति चेत् ? न। स्वसमभिव्याहृत-पदार्थेत्यत्र पदार्थपदेन पदार्थतावच्छेदकस्य ग्रहणं तथा च शयनरूप-पदार्थतावच्छेदक-सम्बन्धः शयनत्वावच्छिन्न-निरूपित-कर्तृत्वाख्यः। स एव ब्राह्मणान्तरेऽपि एतद्-ब्राह्मण-सजातीयो द्वितीयः तृतीयोऽपि ब्राह्मणः तद्राहित्यस्य एतद्देशे असत्त्वेन तादृश-प्रयोगाभावात्।

वस्तुतस्तु एकवचन-सु-प्रत्ययादेः 'सम्पन्नो व्रीहिः' इत्यादौ सङ्ख्यारूप-एकत्वमेव अर्थो न तु स्वसजातीयनिष्ठभेदेति। स्वसमभिव्याहृतपदार्थेति पूर्वोक्तरीत्या एकवचनार्थः। वक्तृतात्पर्यावधारणेन व्रीहिः सम्पन्नः अर्थात् न क्षेत्रान्तरस्थ-सस्यान्तरं सम्पन्नं न परिपक्वम् इत्यर्थः। सम्पन्नपदोत्तर-सु-वाच्य-सङ्ख्यारूप-एकत्वविशिष्टो व्रीहिः इति फलति। वैशिष्ट्यञ्च व्रीहौ एकत्वस्य स्वाधिकरणत्ववत्त्व स्वाधिकरणप्रकृत्यर्थतावच्छेदकवद्-इतरावृत्तिसम्पत्त्यवच्छिन्ना-भेदवत्त्व-उभयसम्बन्धेन। स्वम् = एकत्वम्। तदधिकरणं = व्रीहित्वम्। तद्वत्त्वं व्रीहाविति एकसम्बन्धसङ्घटनम्। स्वम् = एकत्वम्। तदधिकरणप्रकृत्यर्थता-वच्छेदकं व्रीहित्वम्, तद्वान् व्रीहिः। तदितरः क्षेत्रान्तरस्थ-सस्यादिः। तदवृत्तिः या सम्पत्तिः तदवच्छिन्नाभेदवत्ता व्रीहौ, न सस्यान्तरे इति। अनया एव रीत्या 'अत्र घटोऽस्ति' इत्यत्रापि वारणम्। तथा हि सङ्ख्यारूपैकत्वविशिष्टो घट इति बोधः। एकत्ववैशिष्ट्यञ्च घटे स्वाश्रयवत्त्व स्वाश्रयप्रकृत्यर्थतावच्छेदकवद्-इतरावृत्ति-एतद्देशवृत्तिसत्ताश्रयत्ववत्त्व-उभयसम्बन्धेन। स्वम् = एकत्वम्। तदाश्रयो = घटत्वम्। तद्वत्त्वं घटे इति एकसम्बन्धः। स्वम् = एकत्वम्। तदाश्रयप्रकृत्यर्थतावच्छेदकं घटत्वम्। तद्वान् घटः। तदितरः पटादिः। तदवृत्तित्वे सति एतद्देशवृत्तिसत्ताश्रयत्वं घटत्वे। तद्वत्त्वं घटे इति द्वितीयसम्बन्ध-सङ्घटनम्। एवंविध-आकाङ्क्षाबोधकं वाक्यघटकम् 'अत्र' इति पदं तात्पर्य वा। एवं निर्वाहे अलम् एकत्वपरिष्कारेण।

किञ्च 'पशुना यजेत' इत्यत्र यज्-धातोः पशुविशिष्टयागे लक्षणा कार्या। वैशिष्ट्यं च स्वकरणकत्व-स्वभिन्नपश्वकरणकत्व-उभयसम्बन्धेन। एतादृशलक्षणा-तात्पर्यग्राहिका तृतीयाविभक्तिः। स्वम् = पशुः। तत्करणकत्वमेव यागे। स्वम् = पशुः। तद्भिन्नो द्वितीयः पशुः। तत्करणकत्वं न यागे इति अनेकपशुकरणकयागात् न अदृष्टसिद्धिः।

सूक्ष्मवेत्तारस्तु एकत्वविशिष्ट-यागकरणत्वमेव सजातीयद्वितीय-राहित्यम्। वैशिष्ट्यञ्च स्वाश्रयपशुकरणकत्व-स्वाश्रयनिष्ठ-भेदप्रतियोगि-पश्वकरणत्व-उभय-सम्बन्धेन। स्वम् = एकत्वम्। तदाश्रयः पशुः यागीय एव। न अन्यः। तत्करणकत्वम् अस्ति। स्वम् = एकत्वम्। तदाश्रयो यागीयः पशुः। तन्निष्ठो भेदः कस्यचित् अन्यस्य यज्ञभूमिबहिर्भूतस्य पशोः। भेदप्रतियोगिपशुः अन्यः तदकरणकत्वमपि यागे इति सजातीयद्वितीय-राहित्यं ब्रूवन्ति।

ननु 'पशुना यजेत' इत्यत्र इष्टे पशौ साजात्याश्रिते यज्ञार्हे एकत्व-विशिष्टे संयोगसम्बन्धेन 'एतत्पशुगतैकत्ववान् न', 'तत्पशुगतैकत्ववान् न' इति संयोगसम्बन्धावच्छिन्न-अवच्छेदकताकभेदस्य विद्यमानत्वेन भेदप्रतियोगिता-अनवच्छेदकत्वासङ्घटनेन कथम् एकपशुकरणकयागाद् अदृष्टसिद्धिः इति चेत् ? न। समवायसम्बन्धावच्छिन्न-अवच्छेदकताकभेदस्यैव स्वीकारात्। न च 'रूपम् अस्ति' इति वाक्ये एकत्वस्य स्वरूपसम्बन्धेनैव रूपपदार्थे अन्वयो न तु समवायेन इति। कथं तत्र अन्वय इति वाच्यम् ? स्वरूप-समवाय-स्वाश्रय-प्रकृत्यर्थता-वच्छेदकवत्त्व-अन्यतमसम्बन्धावच्छिन्न-अवच्छेदकताक-भेदस्वीकारेण अदोषात्। ननु अन्यतमत्वावच्छिन्नत्वात् पशौ स्वरूप-सम्बन्धावच्छिन्न-अवच्छेदकताकभेदस्य सत्त्वेन तत्रानुपपत्तिदुर्वारा एवेति चेत् ? न। एकत्वनिष्ठ-प्रकारकतावच्छेदक-सम्बन्धा-वच्छिन्नावच्छेदकताभेदस्यैव स्वीकारेण संयोगेन एतत्पशुगतैकत्ववान् न इति भेदम् आदाय आपत्तेः वक्तुम् अशक्यत्वात्।

न च एवमपि स्वरूप-समवायादि-सम्बन्धावच्छिन्न-अवच्छेदकताया अपि एकत्वनिष्ठप्रकारतावच्छेदक-सम्बन्धावच्छिन्नावच्छेदकताकत्वात् आपत्तिः तदवस्था एवेति वाच्यम्। प्रकृतशाब्दबोध-उपधायक-प्रकारतावच्छेदक-सम्बन्धावच्छिन्ना-वच्छेदकताक-भेदस्य स्वीकारेण अनुपपत्तिविरहात्।

**VV-S 2.2.12:** ननु आख्यातार्थसङ्ख्यानिष्ठ-प्रकारतानिरूपित-विशेष्यता-सम्बन्धेन शाब्दबुद्धित्वावच्छिन्नं प्रति प्रथमान्तपदजन्योपस्थितिः कारणमिति नियमेन 'देवदत्तो गच्छति', 'देवदत्तः पचति', 'देवदत्तेन तण्डुलः पच्यते' इत्यादि-प्रथमान्तपदसत्त्वेन देवदत्त-तण्डुलादौ आख्यातार्थ-सङ्ख्याया अन्वयेन सिद्धौ अपि 'देवदत्तेन सुप्यते', 'देवदत्तेन गम्यते', 'अन्यैः गम्यते' इत्यादौ प्रथमान्तपदाभावेन आख्यातार्थसङ्ख्याया अन्वयाभावेन एकवचनम् उत्सर्गतः करिष्यत इत्यादि शाब्दिक-नियमेन प्रत्ययोत्पत्तौ यथा तत्र एकत्वाविवक्षया एव एकवचनस्य साधुत्वम्। एवं 'सम्पन्नो व्रीहिः' इत्यादौ अपि सङ्ख्याया अविवक्षायामपि औत्सर्गिकैकवचनत्वं सुतरां सिद्धमिति व्रीहित्वजातौ सङ्ख्याया अन्वयेन कथं गौरवाश्रयणमिति तन्निरस्यति - **तदपि** इति। तत्र प्रथमान्तपदाभावेन निरर्थकत्वेऽपि

सर्वत्र तथा स्वीकारे मानाभावेन व्रीहित्वजातौ अन्वयस्वीकारे क्षतिविरहः। तत्र सङ्ख्याबोधः अनुभवगम्य इति।

**VV-S 2.2.13:** एवं त्रयः समुदिता हेतुरिति। कार्यं काव्यम्। उत्पादः उत्पत्तिः। तत्प्रयोजकता शक्ति-निपुणता-अभ्यासाना त्रयाणा समुदितानां समुदाये तत्प्रयोजकतावच्छेदकत्वम्। समुदाये असमुदायत्वावच्छिन्नसमुदायपरम् अत्र हेतुपदमिति तस्मिन्नेव समुदायत्वे एकत्वान्वयः। तृण-अरणि-मणि-न्यायेन यथा वह्निं प्रति पार्थक्येन तृणस्य कारणत्वम् अरणेः मणेश्च तथा अत्र न व्यवहारः। किन्तु काव्योत्पत्तिप्रयोजकतावच्छेदकसमुदायत्वाश्रयत्वं तत्तात्पर्येण हेतुः इति एकवचनान्तमेव।

एवं "व्यक्त्याकृति." (NS.2.2.66) इति सूत्रेऽपि एकवचनान्तत्वसङ्गतिः। "प्रत्यक्षानुमान.." (NS 1.1.3) इति सूत्रे प्रत्यक्षं प्रमाणम्, अनुमानं प्रमाणम्, उपमानं प्रमाणम्, शब्दः प्रमाणम् इति पार्थक्येन प्रामाण्याद् बहुवचनम् उपपद्यते। एवं विशेषणवाचक-देवतापदस्यापि बहुवचनान्तत्वमेव ज्यायस्तरम्।

**तृणारणिमणिन्यायेन** इति। अत्र क्वचित् तृणेन वह्निः जन्यते, क्वचिदरणिना, क्वचिन्मणिना। तृणस्य सहकारी फूत्कारः। अरणेः मन्थनम्। मणेः तरणिकिरणसंयोगः। तार्णवह्नित्वावच्छिन्नं प्रति फूत्कारः कारणम्। अरणिवह्नित्वावच्छिन्नं प्रति मन्थनं कारणम्। मणिवह्नित्वावच्छिन्नं प्रति तरणिकिरणसंयोगः कारणमिति स्वातन्त्र्येण एव हेतुत्वं न परस्परसहकारित्वम्। प्रकृते 'त्रयः समुदिता हेतुः' इत्यतो वैलक्षण्यम् अस्त्येव इति आशयः।

**VV-S 2.2.14:** एवं **"व्यक्त्याकृतिजातयः पदार्थ"** (NS. 2.2.66) इति। ननु अस्मिन् सूत्रे यदि ईश्वरेच्छारूपशक्तिं गृहीत्वा पदार्थ इत्यत्र एकत्वान्वयो ग्रन्थोक्तरीत्या वक्तुम् अर्हः परन्तु सन्मात्रविषयिण्या भगवदिच्छायाः सकलपदार्थगोचरत्वेन सामान्यत एकत्वमेव। एवञ्च यथा "व्यक्त्याकृतिजातयः पदार्थः" (NS. 2.2.66) इत्यत्र एकत्वान्वयेन पदार्थ इति भवति। तथैव देवदत्त-यज्ञदत्त-द्रव्य-घटाः पदार्थ इत्यपि रूपम् आपद्येत, युक्तेः तौल्यात्। न च ईश्वरेच्छीय-विषयतारूपा शक्तिः। तस्याम् एकत्वान्वयः पूर्वोक्तलक्ष्ये ईश्वरेच्छीयविषयताया अभावेन न आपत्तिः इति वाच्यम्। तथा सति एकत्वाश्रयीभूतोक्तविषयत्वस्य व्यक्ति-आकृति-जाति-पदार्थत्रयासाधारण्याभावेन गौतमसूत्र-घटकपदार्थ इति प्रयोगस्य वृषोत्सर्गापत्तेः। एवञ्च आपत्तिग्रस्तः पूर्वोक्तप्रयोगः कथं नेति प्रश्नकर्त्तुः आशयः। शिष्टप्रयोगे तथा सत्त्वेऽपि अशिष्टप्रयोगे तथा व्यवहाराभावात्। किञ्च गौतमप्रयोग-लौकिकप्रयोगयोः वैषम्यम्। गौतमसूत्रस्य परार्थबोधने तात्पर्यम्। लौकिक-प्रयोगस्य तु स्वार्थबोधने तात्पर्यम्। किञ्च यदि घट-पट-मठाः पदार्थ इति वाक्ये एकत्वान्वये तात्पर्यम् इष्यते तदा तु इष्ट एव अयं प्रयोगः।

**VV-S 2.3.1:** ननु "विंशत्याद्या सदैकत्वे" इत्यादिव्याख्या तु प्रकरण-प्राप्ता इति। अवतरणिका तु स्वप्रकृतिकविभक्ति-सजातीयेति। तत्र सिंहावलोकनन्यायेन पुनः प्राप्तावकाशे आह - **स्वप्रकृतिकत्वञ्चेति**। वैयाकरणमते स्वप्रकृतिकत्वं स्वनिष्ठोद्देश्यतानिरूपित-विधेयतावत्त्वम्। परन्तु स्वमते लक्षणम् आह - **स्वाव्यवहितोत्तरत्वेनेति**।

अत्रैव प्रसङ्गात् प्रकृतित्वं प्रत्ययत्वञ्च विचार्यते। प्रकृतित्वम् 'प्रत्ययः' (P 3.1.1.) इति एतच्छब्दाधिकारीयकार्यनिष्ठ-विधेयतानिरूपित-उद्देश्यताश्रयत्वम्। प्रत्ययत्वञ्च प्रकृतिविशिष्टत्वम्। वैशिष्ट्यं च स्वसमभिव्याहृतत्व-स्वनिष्ठोद्देश्यता-निरूपित-विधेयताश्रयत्व-स्वार्थान्वितार्थप्रत्यायकत्वम् इत्येतत् त्रितय-सम्बन्धेन। एवं लक्षणे न अव्याप्ति-अतिव्याप्ति-असम्भवादि-दोषावकाश इति।

**VV-S 2.4.1:** अथ 'नीलस्य घट' इत्यादावपीति। अस्यायम् आशयः - बाधाभावो योग्यता। अत्र बाधनिश्चयश्च 'अभेदेन नीलाभाववान् घटः' इत्याकारक एव। तथा च एवंविध-बाधनिश्चयाभावः अस्त्येव 'नीलस्य घट' इत्यत्र। तथा हि - नीलपदजन्य-नीलोपस्थिति-घटपदजन्य-घटोपस्थिति-नीलपदसमभिव्याहृत-घट-पदत्व-रूपाकाङ्क्षाज्ञानम्। 'नीलस्य घटः' इति वाक्यम् अभेदसम्बन्धावच्छिन्न-नीलत्वावच्छिन्न-प्रकारतानिरूपित-घटत्वावच्छिन्न-विशेष्यताक-शाब्दबोधं जनयतु इत्याकारक-तात्पर्यज्ञानम्। नीलपद-सन्निहितं घटपदम् इत्याकारक-आसत्तिज्ञानम्। एवंविधानां चतुर्णां शाब्दबोधकारणानां सत्त्वेन कथं न अभेदसंसर्गक-नीलप्रकारक-घटविशेष्यकः शाब्दबोध इति प्रश्नाशयः।

न च अभेदान्वयबोधं प्रति स्वसमानविभक्तिकपदजन्योपस्थितिः कारणमिति 'नीलस्य घटः' इत्यादौ विरुद्धविभक्तिकत्वात् न अभेदान्वयापत्तिरिति वाच्यम्। सामग्रीसत्त्वे अवश्यं कार्यमिति नियमः। व्यापकधर्मावच्छिन्नकार्यत्वावच्छिन्नं प्रति व्याप्यधर्मावच्छिन्नकार्योत्पादकसामग्र्या अपेक्षेति नियमः। कार्यसत्तायाः कारणसामग्रीसत्ताव्यापकत्वमिति नियमः। यथा केनचित् ज्योतिश्शास्त्रज्ञेन घोषणा कृता 'अस्मिन् वर्षे वृष्टिः न भविष्यति इति' वर्षाप्रबलहेतु-मेघादिसमवधाने वृष्टेः अवश्यम्भावादिदर्शनेन ज्योतिश्शास्त्रीयनियमभङ्गस्य अकिञ्चित्करत्वम्। तथा अभेदान्वयबोधं प्रति स्वसमानविभक्तिकत्वाम् इति नियमस्य अकिञ्चित्करत्वे क्षतिविरहात्। **आकाङ्क्षाविरहादिति**। अन्वयबोधौपयिक इत्यस्य अन्वयबोधजनक इत्यर्थः। तथा हि - प्रथमापदं श्रावणप्रत्यक्षविषयतावच्छेदकधर्मवत्वादिपरमेव। प्रथमात्वेन अज्ञानदशायां 'नीलो घटः' इत्यादिवाक्यादपि शाब्दबोधानापत्तेः। अतः अभेदसम्बन्धावच्छिन्न-नीलत्वावच्छिन्न-प्रकारतानिरूपित-घटत्वावच्छिन्नविशेष्यता-शालि-शाब्दबुद्धित्वावच्छिन्नं प्रति स्वन्तनीलपदसमभिव्याहृत-स्वन्तघटपदत्वरूप-

आकाङ्क्षाज्ञानं कारणम्। विनिगमनाविरहात् अभेदसम्बन्धावच्छिन्न-नीलत्वावच्छिन्न-प्रकारतानिरूपित-घटत्वावच्छिन्नविशेष्यताशालिशाब्दबुद्धित्वावच्छिन्नं प्रति स्वन्तघट-पदसमभिव्याहृत-स्वन्तनीलपदसमभिव्याहाररूप-आकाङ्क्षाज्ञानं कारणम्। एवम् औ-जस्-अम्-औ-शस्-इत्यादिष्वपि अभेदसम्बन्धावच्छिन्न-नीलत्वावच्छिन्न-प्रकारता-निरूपित-घटत्वावच्छिन्नविशेष्यताकशालि-शाब्दबुद्धित्वावच्छिन्नं प्रति औविभक्त्यन्त-नीलपद-समभिव्याहृत-औविभक्त्यन्त-घटपद-समभिव्याहाररूप-आकाङ्क्षाज्ञानं कारणम्। विनिगमनाविरहात् अभेदसम्बन्धावच्छिन्न-नीलत्वावच्छिन्न-प्रकारता-निरूपित-घटत्वावच्छिन्नविशेष्यताकशालि-शाब्दबुद्धित्वावच्छिन्नं प्रति औविभक्त्यन्त-घटपद-समभिव्याहृत-औविभक्त्यन्तनीलपद-समभिव्याहारूपाकाङ्क्षाज्ञानं कारणम्। एवं जसन्तनीलपद-समभिव्याहृत-जसन्तघटपदत्व-रूपाकाङ्क्षाज्ञानं कारणम्। जसन्तघटपद-समभिव्याहृत-जसन्तनीलपद-समभिव्याहाररूप-आकाङ्क्षाज्ञानं कारणम्। एवम् अन्यासु अपि विभक्तिषु। 'नीलघटः' इत्यादौ समासे विभक्तिलोपे स्वन्त-जसन्तत्वाद्यभावेन पूर्वोक्तकारणाप्रवृत्तौ कथं तत्र अभेदसंसर्गकशाब्दबोध इति विचिकित्सायाम् अभेदसम्बन्धावच्छिन्न-नीलत्वावच्छिन्न-प्रकारतानिरूपित-घटत्वा-वच्छिन्न-विशेष्यताशालि-शाब्दबुद्धित्वावच्छिन्नं प्रति नीलपदाव्यवहितोत्तरवर्ति-घटपदत्वरूप-आकाङ्क्षाज्ञानं कारणम्। घटपदाव्यवहितपूर्ववर्ति-नीलपदत्वरूप-आकाङ्क्षाज्ञानं वा कारणम् इति विनिगमनाविरहात् कार्यकारणभावद्वयम्।

ननु समासस्थले नीलपदाव्यवहितोत्तरवर्त्ति-घटपदत्वं घटपदाव्यवहित-पूर्ववर्त्ति-नीलपदत्वमेव वा यदि आकाङ्क्षाज्ञानं कारणम् इति नियमः तर्हि मूलग्रन्थानुपपत्तिः। तथा हि केवल-निर्विभक्तिक-व्याकरणानिष्पन्न-शुद्ध-'नीलघट'-'घटनील'-इति वाक्याद् अपि अभेदान्वयबोधापत्तिः, आकाङ्क्षाज्ञानस्य सत्त्वात् इति चेत् ? न । अनुमितौ इव शाब्दबोधेऽपि विधेयतानियमः सार्वजनीनः। विधेयत्वञ्च अपूर्वांशस्य एव भवति। प्रकृते निर्विभक्तिक-नीलघटेति समुदाये उद्देश्यत्वेन आश्रीयमाण-घटविशेषणत्वेनैव नीलपदार्थस्य प्रवृत्तिः प्रकारताप्रयोजकम् एव। अत्र नीलपदं न तु विधेयताप्रयोजकम्। तथा च अपूर्वत्वासम्भवेन विधेयत्वासम्भवः। निर्विभक्तिक-नीलघट-पदे विभक्तिविशिष्टत्वेन अनुसन्धाने विभक्त्यन्तत्वेन वा लुप्तविभक्तिस्मरणेन वा विधेयीभवद् एकत्वादिप्रकारक-शाब्दबोधस्यैव सिद्धान्तितत्वेन निर्विभक्तिके तादृशाकाङ्क्षाज्ञान-अप्रवृत्त्या दोषपरिहाराद् इति आशयः।

ननु एषु कार्यकारणभावेषु परस्परं व्यभिचारः। अभेदसम्बन्धावच्छिन्न-नीलत्वावच्छिन्न-प्रकारतानिरूपित-घटत्वावच्छिन्न-विशेष्यताकशालि-शाब्दबुद्धित्वमेव कार्यतावच्छेदकम्। तच्च उक्तकार्यकारणभावमात्रे पर्याप्तम्। स्वन्त-नीलपद-

समभिव्याहृत-स्वन्तघटपदत्वरूप-आकाङ्क्षाज्ञानस्य औ-विभक्त्यन्त-नीलपद-समभिव्याहृत-औ-विभक्त्यन्त-घटपदसमभिव्याहारे अभावः। तस्य च जसन्तनील-पदसमभिव्याहृत-जसन्तघटपद-समभिव्याहारे अभावः। एवं सर्वत्र। परन्तु कार्यतावच्छेदकावच्छिन्नस्य सर्वत्र सत्त्वात् कारणतावच्छेदकावच्छिन्नस्य विलक्षणत्वात् सर्वत्र असत्त्वेन, हेतोः कार्यतावच्छेदकानाक्रान्तत्वदोषेण कथङ्कारम् उद्धार इति प्रश्ने अव्यवहितोत्तरत्वनिवेशः। तथा हि स्वन्तनीलपद-समभिव्याहृत-स्वन्तघटपदत्वरूप-आकाङ्क्षाज्ञान-अव्यवहितोत्तर-जायमान-अभेद-सम्बन्धावच्छिन्न-नीलत्वावच्छिन्न-प्रकारतानिरूपित-घटत्वावच्छिन्न-विशेष्यताशालि-शाब्दबुद्धित्वावच्छिन्नं प्रति स्वन्तनीलपद-समभिव्याहृत-स्वन्तघटपदत्वरूप-आकाङ्क्षाज्ञानं कारणम्। एवं विनिगमनाविरहित-कार्यकारणभावेऽपि। तथा च व्यासस्थले एकविंशति-विभक्तीनां सत्त्वात् एकप्रकारेण एकविंशतिः कार्यकारण-भावाः। विनिगमनाविरहेऽपि एकविंशतिः सम्मेलने तु द्विचत्त्वारिंशत् कार्यकारण-भावाः। समासस्थले तु कार्यकारणभावद्वयम्। अनयोरपि गणनासम्मेलने चतुश्चत्वारिंशत्कार्यकारणभावाः सम्पद्यन्तेतराम् इति।

कार्यतावच्छेदककोटौ अवव्यवहितोत्तरत्वनिवेश आवश्यक एव। अन्यथा समास-व्यास-साधारण्येन 'नीलो घटः', 'नीलघटः' इत्यादौ घटपदस्थाने तत्पर्याय कलशपद-प्रक्षेपः। नीलपदस्थाने तत्पर्याय-कृष्णपद-प्रक्षेपः। एवञ्च तद्घटित-आकाङ्क्षाज्ञानानामपि परस्परबोधे व्यभिचारः स्यात्। एतदर्थं कार्यतावच्छेदककोटिकाण्डे घटकत्वेन अव्यवहितोत्तरत्वनिवेश इति सिद्धान्तः।

ननु 'नीलो घटः', 'नीलघटः' इति वाक्यमेव न सम्भवति।

"उद्देश्य- वचनं पूर्वं विधेयञ्च ततः परम्" । इति

"यच्छब्दयोगः प्राथम्यं स्याद् उद्देश्यस्य लक्षणम्।
यच्छब्दयोगः पाश्चात्यं स्याद् विधेयस्य लक्षणम्"।।

इति अभियुक्तोक्तिभ्यां 'घटो नीलः', 'घटनीलः' इत्याकारकस्यैव प्रयोक्तुम् उचितत्वादिति चेत् ? न। प्रतिज्ञावाक्याभिप्रायकत्वेन तदुक्तिसौष्ठवात्। अन्यत्र तु सदिच्छानुरोधेन प्रयोगे अविरोधात्।

ननु ईश्वरेच्छाया ईश्वरेच्छीय-उक्तविलक्षणविषयतायाश्च शक्तित्वे शास्त्रकृदभिमते मनुष्यैः साधारणैः सा दुर्ज्ञेया इति कथं सा इच्छा बोधजनिका इति चेत् ? न। सर्गादिभुवां महर्षिदेवतानाम् ईश्वरेण साक्षादेव कृतः सङ्केतः। तद्व्यवहारात् च अस्मदादीनामपि सुग्रहस्सङ्केत इति शिष्टोक्तेः।

'वेदस्याध्ययनं सर्वं गुर्वद्ध्ययनपूर्वकम्।
वेदाद्ध्ययनसामान्याद् अधुनाध्ययनं यथा।।'

यः कल्पः स कल्पपूर्वः 'यथापूर्वमकल्पयद्' इति श्रुतेश्च। पूर्वोक्तकार्यकारणभावे समभिव्याहृतत्वञ्च नियतपूर्वापरभावत्वमिति केचित्। अस्य लक्षणस्य श्लोकघटक-पदान्तरादौ व्यभिचरितत्वेन अवाच्यत्वात्। अतः पदविशिष्टपदत्वमेव समभिव्याहारत्वम्। वैशिष्ट्यञ्च स्वप्रयोज्यविषयतानिरूपित-विषयताप्रयोजकत्व-स्वभिन्नत्वम् इति उभयसम्बन्धेन। समन्वयश्च 'नीलो घटः' इत्यादौ विस्पष्ट एव इति अलम्।

तथा च 'नीलस्य घटः' इत्यत्र एतेषाम् आकाङ्क्षाज्ञान-कार्यकारण-भावानाम् अभावेन विरुद्धविभक्तिकत्वेन न अभेदान्वयबोधः। न च 'नीलस्य घटः' इत्यत्र वैशिष्ट्यं षष्ठ्यर्थः। एकशतं षष्ठ्यर्था इति भाष्यात्। तथा च नीलविशिष्टो घट इति शाब्दबोधः स्यादिति वाच्यम्। लोके तादृशप्रतीत्यभावात् तादृश-षष्ठ्यर्थस्य शिष्टैः अस्वीकृतत्वाच्च। ननु चतुश्चत्वारिंशदेव कार्यकारणभावाः कथम्? 'नीलो घटः' इत्यादौ विशेषणवाचकपदोत्तरविभक्तेरपि एकत्वसङ्ख्या अर्थः। तस्य नीले नीलत्वे वा अन्वये 'नीलो घटौ' 'नीलो घटाः' इत्यादीनां पूर्वोक्तरीत्या अभीष्टत्वे तु सु-अन्त-नीलपद-समभिव्याहृत-औ-अन्त-घटपद-समभिव्याहारः कारणम्। स्वन्तनीलपद-समभिव्याहृत-जसन्तघटपद-समभिव्याहारः कारणम्। एवं स्वन्त-नीलपद-समभिव्याहृत-शसन्तघटपद-समभिव्याहारः, विनिगमनाविरहात् वैपरीत्ये तु जसन्त-घटपद-समभिव्याहृत-स्वन्तनीलपद-समभिव्याहारः कारणम्। एवञ्च व्यासस्थले चतुरशीति-(८४)-कार्यकारणभावाः। समासस्थले तु कार्यकारणभावद्वयम्। सम्मेलने तु षडशीति-(८६)-कार्यकारण-भावाः अनन्ता वा। कथम् एतावदेव इति वाच्यम् ? इष्टापत्तेः। न च देवदत्तस्य प्रथमान्तनीलपदसमभिव्याहृत इत्याकाङ्क्षाज्ञान, तदव्यवहितोत्तरक्षणे विष्णुमित्रस्य पूर्वक्षणीय-द्वितीयान्त-नीलपद-समभिव्याहृत इत्याद्याकाङ्क्षाज्ञानात् तादृशबोधे व्यभिचार इति वाच्यम्। अभेदसम्बन्धावच्छिन्न-नीलत्वावच्छिन्न-प्रकारतानिरूपित-घटत्वावच्छिन्न-विशेष्यताक-शाब्दबुद्धित्वावच्छिन्नं प्रति स्वन्तनीलपदसमभिव्याहृत-इत्यत्र स्वन्तनीलपदसमभिव्याहृत-स्वन्तघटपदत्वरूपाकाङ्क्षाज्ञानाव्यवहितोत्तर-जायमान-शाब्दबुद्धित्वावच्छिन्नं प्रति इत्यत्र आकाङ्क्षाज्ञानविशिष्ट-शाब्दबुद्धित्वा-वच्छिन्नं प्रति इति निवेशः। वैशिष्ट्यञ्च स्वाव्यवहितोत्तरत्व-स्वाधिकरणदेश-वृत्तित्व-उभयसम्बन्धेन इति आपत्तिवारणात्।

न च स्वन्तनीलपदसमभिव्याहृत-स्वन्तघटपदत्वरूपाकाङ्क्षाज्ञान-अव्यवहितोत्तरजायमान-अभेदसम्बन्धावच्छिन्न-नीलत्वावच्छिन्नप्रकारता-निरूपित-घटत्वावच्छिन्नविशेष्यताक-शाब्दबुद्धित्वावच्छिन्नं प्रति स्वन्तनीलपदसमभिव्याहृत-स्वन्तघटपदत्वरूप-आकाङ्क्षाज्ञानं कारणम् इति एवंविधे कार्यकारणभावे

विषययो नील-घटयोः प्रवेशः किमर्थः? किन्तु स्वन्तनीलपदसमभिव्याहृत-स्वन्त-घटपदत्वरूप आकाङ्क्षाज्ञान-अव्यवहितोत्तर-जायमान-शाब्दबुद्धित्वावच्छिन्नं प्रति स्वन्तनीलपद समभिव्याहृत-स्वन्तघटपदत्वरूप-आकाङ्क्षाज्ञानं कारणम् इत्येव कार्यकारणभावोऽस्तु। अव्यवहितोत्तरत्वनिवेशेन सर्वापत्तिवारणात्। एतच्च संसर्गतावादि मीमांसकानुयायिमतम्। अत एव तत्र विषयनिवेशे प्रयोजनाभावेन इत्यादिना विषयानिवेशो व्युत्पत्तिवादे विस्पष्टः। संसर्गतावाद-स्थापनप्रकरणे लाघवञ्चेति वाच्यम्? कार्यदलनिवेशं विनैव केवल-स्वन्तनीलपद-समभिव्याहृत-स्वन्तघटपदत्वरूप-आकाङ्क्षाज्ञानादेव अभेदसम्बन्धावच्छिन्न-नीलप्रकारक-घटविशेष्यक शाब्दबोधस्यापि कदाचिद् आपत्या कार्यानियम-प्रसङ्गापत्तेः। न च शाब्दबोधसहकारि-योग्यताज्ञान-तात्पर्यज्ञान-आसत्तिज्ञानानां यथा कार्यनियामकत्वं तथा आकाङ्क्षाज्ञानस्यापि स्यादिति वाच्यम्। एवमपि विषयनिवेशाभावे अनेकार्थक हरिपदघटित-'सुन्दरो हरिः' इति वाक्यात् तात्पर्यानुरोधेन क्वचिद् इन्द्रविषयक शाब्दबोधः, कदाचित् सूर्यविषयक-शाब्दबोधः, कदाचिद् विष्णु-विषयकः शाब्दबोधः। तथा च स्वन्त-सुन्दरपद-समभिव्याहृत-स्वन्त-हरिपदत्वरूप-आकाङ्क्षाज्ञान-अव्यवहितोत्तर-जायमान-शाब्दबुद्धित्वावच्छिन्नं प्रति स्वन्त-सुन्दर-पदसमभिव्याहृतस्वन्त-हरिपदत्व-रूपाकाङ्क्षाज्ञानं कारणमित्येव कार्यकारणभावः। एवञ्च विषयविशेषनिवेशाभावेन सूर्यविषयकबोधस्थले इन्द्रविषयकोपस्थितेः इन्द्रविषयकबोधस्थले सूर्यविषयकोपस्थतेः, एवं सर्वार्थे व्यभिचारापत्तौ महान् उपप्लवः। विषयनिवेशे तु स्वन्त-सुन्दरपद-समभिव्याहृत-स्वन्त-हरिपदत्व-रूप-आकाङ्क्षाज्ञान-अव्यवहितोत्तरजायमान-सूर्यविषयक-शाब्दबोधं प्रति स्वन्त-सुन्दर-पदसमभिव्याहृत-स्वन्त-हरिपदत्वरूप-आकाङ्क्षाज्ञानं कारणम् इति। एवम् इन्द्रविषयकबोधे विष्णुविषयकबोधेऽपि कार्यकारणभाव इति न अनेकार्थक-गवादिशब्देऽपि व्यभिचार इति।

**VV-S 2.4.2:** ननु तत्तत्कारणाव्यवहितोत्तरत्वविशिष्ट-स्वीयकार्यतावच्छेदक-धर्मावच्छिन्नापादने एव तत्तदाकाङ्क्षाज्ञानरूप-कारणस्य अपेक्षिततया स्वीकार्यता-वच्छेदकशुद्ध-अभेदसम्बन्धावच्छिन्न-नीलत्वावच्छिन्न-प्रकारतानिरूपित-घटत्वावच्छिन्न-विशेष्यताक-शाब्दबुद्धित्वापादने तत्तत्कारणस्य अप्रयोजकतया तत्तत्कारणाभाव-प्रयोज्य तत्तत्कार्याऽभावो वक्तुम् अशक्य इति। शुद्ध-तादृश-कार्यता-निरूपित-कारणतावन्-नीलत्वावच्छिन्न-अभेदसम्बन्धावच्छिन्न-प्रकारताक-घटत्वावच्छिन्न-विशेष्यताक-योग्यताज्ञानात् 'नीलस्य घट' इत्यादौ अभेदान्वयापत्तिः। एवं तात्पर्य-ज्ञानम् आसत्तिज्ञानं च विद्येते। त्रिषु कारणेषु सत्सु एकस्य आकाङ्क्षाज्ञानरूप-कारणविरहस्य अकिञ्चित्करत्त्वम्। न च अप्रसिद्धिः शङ्क्या। 'नीलो घट' इत्यादौ एव आपद्यमान-धर्मावच्छिन्न-प्रसिद्धेः।

अथोत्तरम्। तत्तदाकाङ्क्षाज्ञान-अव्यवहितोत्तरजायमानत्वविशिष्ट-तादृश-शाब्दबुद्धित्वावच्छिन्नं प्रति योग्यताज्ञानविशिष्ट-तादृश-आकाङ्क्षाज्ञानत्वेन कारणत्वाभ्युपगमात्। केवलयोग्यताज्ञानस्य आपाद्यमान-धर्मावच्छिन्न प्रति अकारणत्वात्। तात्पर्यज्ञान-आसत्तिज्ञानयोः पृथक् कारणत्वाकल्पनात् आपादकाभावादेव नापत्तिः। कतिपय-कारणसत्त्वे कार्याभावप्रयोजकजिज्ञासा हि आपत्तिः। तदभावे तदभावरूप-व्याप्तेः कारणतानियामकतया यद्रूपावच्छिन्नाभावप्रयोजक-अभावीय-प्रतियोगितावच्छेदकं यद्रूपं तद्रूपावच्छिन्न-कार्यतानिरूपित-कारणतावच्छेदकम् इति व्याप्तिलाभात् तादृशयोग्यताक-ज्ञानाभावात् तादृश-धर्मावच्छिन्न-कार्याभावस्य दृष्टतया अवश्यमेव तादृशयोग्यताज्ञानं केवलमपि कारणं स्यादिति। तस्यैव प्रकृते ह्यापादकत्वात्। आकाङ्क्षाज्ञानविशिष्ट-तादृशयोग्यताज्ञानं कारणं योग्यताज्ञान-विशिष्ट-तादृशाकाङ्क्षाज्ञानं कारणमिति विनिगमना-विरहेण अनन्तकार्यकारणभाव-कल्पनापेक्षया तादृशाकाङ्क्षाज्ञानादीनां पृथगेव कार्यकारणभाव-कल्पनाया लाघवात् ।

समाधानं तु व्यापकधर्मावच्छिन्ने कार्ये जननीये व्याप्यधर्मावच्छिन्न-कार्योत्पादकसामग्र्या अपेक्षा इति। प्रकृते न तादृश-शुद्धधर्मावच्छिन्न-कार्यापत्तिः सम्भवति। तद्व्याप्य-तत्तत्कारण-अव्यवहितोत्तरत्वविशिष्ट-अभेदसम्बन्धावच्छिन्न-नीलत्वावच्छिन्न-प्रकारतानिरूपित-घटत्वावच्छिन्न-विशेष्यताक-शाब्दबुद्धित्वावच्छिन्न-कार्योत्पादक-तत्तदाकाङ्क्षाज्ञानादि-सामग्र्या अभावात् 'नीलस्य घटः' इत्यत्र न आपत्तिः। ननु सामग्रीत्वस्य जात्यखण्डोपाध्यतिरिक्ततया अनुगताननतिप्रसक्त-रूपताया अभावेन च विशिष्य तत्तत्कारणकूटस्यैव प्रवेशनीयतया एककारणकूटस्य प्रयोजकत्वे अपरकारणकूटात् जायमानशाब्दबोधस्थले व्यभिचारेण सकलकारण-कूटस्य प्रयोजकत्वेऽप्रसिद्धता च। व्याप्यधर्मावच्छिन्नकार्योत्पादक-तत्तत्कारणकूटा-न्यतमत्वेनैव सामान्यधर्मावच्छिन्न-कार्योत्पत्तौ प्रयोजकताया उपगन्तव्यतया प्रथमम् एव अन्यतमत्वेनैव कार्यकारणभावोऽस्तु, अलमव्यवहितोत्तरत्वनिवेशेन। 'अन्ते रण्डाविवाहश्चेदादावेव कुतो न हि' इति न्यायात्।

**सूक्ष्मवेत्तारस्तु** तद्धर्मावच्छिन्नकार्यतापादने तत्तदाश्रयव्यक्ति-निष्ठकार्यता-निरूपित-कारणतावत् आकाङ्क्षाज्ञानस्य कारणत्वेन नैवास्ति आपत्तिः इति तत्त्वम् आहुः। किञ्च अभेदसम्बन्धावच्छिन्न-नीलत्वावच्छिन्न-प्रकारतानिरूपित-घटत्वा-वच्छिन्न-विशेष्यताक-शाब्दबुद्धित्वावच्छिन्नं प्रति अभेदसम्बन्धावच्छिन्न-नीलत्वा-वच्छिन्न-प्रकारता-निरूपित-घटत्वावच्छिन्न-विशेष्यताक-शाब्दबुद्धित्व-निष्ठ-पर्याप्त-असाधारणावच्छेदकता-निरूपित-अवच्छेद्यतावत्-कार्यता-निरूपित-कारणतावद्-आकाङ्क्षाज्ञानस्य एव कारणत्वात् न आपत्तिः इति वर्णनात्। ननु

सर्वेषामाकाङ्क्षा-ज्ञानानाम् अन्यतमत्वेनैव कारणत्वमस्तु, किमव्यवहितोत्तरत्व-निवेशेनेति चेत् ? न। अन्यतमत्वस्य एकभेदविशिष्ट-अपरभेदविशिष्ट-अपरभेदविशिष्टान्यत्व-रूपतया कारणतावच्छेदककोटौ जगतः प्रवेशेन समस्तजगत्कारणतावच्छेदकत्व-कल्पनापत्तौ गौरवात्। तत्प्रतियोगिकभेदविशिष्ट-एतत्प्रतियोगिकभेदविशिष्ट-एतत्प्रतियोगिकभेद-विशिष्टैवंरूपेण तत्प्रतियोगिक-भेदविशिष्ट-तत्प्रतियोगिकभेदविशिष्ट-तत्प्रतियोगिक-भेदविशिष्टैवंरूपेण वा अवच्छेदकत्वमिति विनिगमनाविरहेण कारणतावच्छेदकत्व-बाहुल्यापत्तेश्च। उभयाभावमादाय पर्याप्त्यादिनिवेशस्यापि आवश्यकत्वेन अत्यन्त-गौरवाच्च। न च भेदकूटावच्छिन्न प्रतियोगिताक-भेदत्वम् एव अन्यतमत्वम् इति भेदे भेदवैशिष्ट्य-अनवगाहनात् न विनिगमनाविरहप्रयुक्त-कारणतावच्छेदकानन्त्यम् इति वाच्यम्। तावताऽपि जगत्प्रवेशत्वेन गौरवस्य दुरुद्धरत्वात्। अन्यतर-अन्यतमशब्दौ अव्युत्पन्नौ रूढौ इति वर्णने न कापि हानिः। यदि च अन्यतमत्वं भेदकूटाभाव एवेति न जगत्प्रवेश इति मन्यते। किञ्च यत्र 'नीलो घट' इत्याद्याकाङ्क्षाज्ञान-घटितसामग्री तत्र समानविषयकप्रत्यक्षसामग्रीसत्त्वेन तत्तदाकाङ्क्षाज्ञानाधीन-शाब्दबोधेच्छाया एव उत्तेजकतया तादृशेच्छाविरहविशिष्ट-समानविषयक-प्रत्यक्ष-सामग्र्यभावविरहकृत-अन्यतमत्वेन आकाङ्क्षाज्ञानानां कारणत्वस्य उपगन्तव्यतया 'नीलौ घटौ' इत्याद्याकाङ्क्षाज्ञान-घटितसामग्रीकालेऽपि 'नीलो घट' इत्याद्या-काङ्क्षाज्ञानाधीन-शाब्दबोधेच्छायां सत्यां समानविषयक-प्रत्यक्षसामग्रीसत्त्वेऽपि शाब्दबोधापत्तेः। मम तु तत्तदाकाङ्क्षाज्ञानजन्य-शाब्दबोधे तत्तदाकाङ्क्षाज्ञानाधीन-शाब्दबोधेच्छाविरहविशिष्ट-आकाङ्क्षाज्ञानानामेव भेदप्रतियोगितया अन्यतमत्वेन प्रवेश इति मन्यते तदा पूर्वोक्तरीत्या गौरवमेवास्ति इति अलम्।

अथ स्वन्तनीलपदसमभिव्याहृत-स्वन्तघटपदत्वरूप-आकाङ्क्षाज्ञान-अव्यवहितोत्तर-जायमान-शाब्दबोधं प्रति तत्तदाकाङ्क्षाज्ञानानां कारणत्वमेवास्तु, किम् अभेद-सम्बन्धावच्छिन्न-नीलत्वावच्छिन्न-प्रकारता-निरूपित-घटत्वावच्छिन्न-विशेष्यताकत्वनिवेशनेन ? अस्मिन् विषये पुनरपि विचारः प्रस्तूयते। 'नीलो घट' इत्याद्याकाङ्क्षाज्ञानोत्तरम् 'इदं ज्ञानम् अप्रमेति' यत्र ज्ञानमस्ति तत्र निरुक्त-शाब्दबोधवारणाय तत्तदाकाङ्क्षाज्ञान-अव्यवहितोत्तर-जायमान-शाब्दबोधे अप्रामाण्य-ज्ञानानास्कन्दितानामेव तत्तदाकाङ्क्षाज्ञानानां कारणत्वस्य वाच्यतया यत्र 'नीलो घटः'-'घटवद् भूतलम्' इति समूहालम्बनात्मक-आकाङ्क्षाज्ञानाव्यवहितोत्तरं 'नीलो घट' इत्यंशे अप्रामाण्यग्रहः तत्र तदुत्तरजायमाने 'घटवद् भूतलम्' इत्याकारकबोधे निरुक्तशाब्दबुद्धित्वाक्रान्तत्वेन अप्रामाण्यज्ञानानास्कन्दित-निरुक्त-आकाङ्क्षाज्ञानानाम् असत्त्वेन व्यभिचारवारणाय विषयनिवेशस्य आवश्यकत्वात्।

निवेशिते च तस्मिन् निरुक्तस्थले न दोषः। 'नीलो घटः' इत्याकाङ्क्षाज्ञान-अव्यवहितोत्तरं जायमान-अग्रिम-अभेदसम्बन्धेन नीलघटान्वयबोधं प्रति एव तादृश-विशेषणविशिष्ट-कारणापेक्षायाः सत्त्वेन प्रकृते कार्यकारणयोः उभयोः असत्त्वेन अव्यभिचारात्। न च यत्र 'नीलो घटः' इति ज्ञानोत्तरं तद्धर्मिक-अप्रामाण्यग्रहः तत्र शाब्दबोधानुदयेन आकाङ्क्षाज्ञानस्य तादृश-शाब्दबोधोत्पादकत्वम् एव इत्यस्य उक्तत्वेन निरुक्तकारणसत्त्वे अपि आपत्त्यभावेन तत्र शाब्दबोधवारणाय कारणता-वच्छेदककोटौ अप्रामाण्यज्ञानानास्कन्दितत्व-निवेश-अनावश्यकतया 'नीलो घटः' 'घटवद् भूतलम्' इत्यांशिक-अप्रामाण्यग्रहास्कन्दित-आकाङ्क्षाज्ञानोत्तर-जायमान-'घटवद् भूतलम्' इति शाब्दबोधे कार्यकारणभावयोः उभयोः सत्त्वेन व्यभिचारा-प्रसिद्ध्या अलं विषयकत्व-निवेशेन इति वाच्यम्। यत्र 'भाविज्ञानम् अप्रमा' इति ज्ञानोत्तरं 'नीलो घटः' इति ज्ञानं तत्र आकाङ्क्षाज्ञानात् तृतीयक्षणे शाब्दबोधाभावो भवति न द्वितीयक्षणे आकाङ्क्षाज्ञानाधिकरण-प्रथमक्षणे अप्रामाण्यज्ञानास्कन्दित-आकाङ्क्षाज्ञानस्यैव सत्त्वेन अप्रामाण्यज्ञानानास्कन्दितत्वस्य कारणतावच्छेदककोटौ अनिवेशे आकाङ्क्षाज्ञान-द्वितीयक्षणेऽपि शाब्दबोधस्य दुरुद्धरतया तद्वारणाय अप्रामाण्यज्ञानानास्कन्दितत्वस्य अवश्यं वाच्यतया 'नीलो घटः'-'घटवद्भूतलम्' इति समूहालम्बन-आकाङ्क्षाज्ञानात् जायमानशाब्दबोधे व्यभिचारवारणाय विषय-निवेशस्य आवश्यकत्वात्। न च अप्रामाण्यज्ञानानास्कन्दित-तत्तदाकाङ्क्षाज्ञान-अव्यवहितोत्तर-जायमान-शाब्दबोधं प्रति अप्रामाण्यज्ञानानास्कन्दित-तत्तदाकाङ्क्षा-ज्ञानं कारणमस्तु। तावतापि उक्तस्थले कार्यकारणयोः असत्त्वेन न व्यभिचार-शङ्कापि इति किं विषयत्व-निवेशेनेति वाच्यम्। कार्यतावच्छेदककोटौ अप्रामाण्य-ज्ञानानास्कन्दितत्व-निवेशापेक्षया विषयनिवेशे सद्धर्म-सद्विषय-निवेशस्य युक्तत्वात्। ननु विषयनिवेशस्य सत्त्वेऽपि 'नीलो घटः'-'श्यामो घटः' इति समूहालम्बनोत्तरं यत्र 'नीलो घटः' इत्यंशे अप्रामाण्यज्ञानं, तत्रापि अभेदसम्बन्धावच्छिन्न-नीलत्वावच्छिन्न-प्रकारतानिरूपित-घटत्वावच्छिन्न-विशेष्यताक-शाब्दबोधस्य सद्धर्म-सिद्धतया निरुक्त-कारणस्य असत्त्वेन व्यभिचारादर्शनात् तद्वारणाय कार्यतावच्छेदककोटावपि अप्रामाण्यज्ञानानास्कन्दितत्वविशेषणम् आवश्यकम्। तथा सति कार्यकारणयोः उभयोः असत्त्वेन अव्यभिचार इति। विषयनिवेशात् पूर्वमेव अप्रामाण्यज्ञाना-नास्कन्दित-विशेषणं कार्यदलेऽपि निवेश्यताम्। तावताऽपि वारणसम्भवेन किं विषयत्व-निवेशेनेति चेत्? इष्टापत्तेः। अत एव ग्रन्थकारेण अव्यवहितोत्तरत्वनिवेशा-नन्तरमपि विषयं निवेश्य कार्यकारणभावो न दर्शित इति।

वस्तुतस्तु अव्यवहितोत्तरप्रवेशपूर्वक-स्वन्त-नीलपदसमभिव्याहृत-घटपदत्व-रूप-आकाङ्क्षाज्ञान-अव्यवहितोत्तरजायमान-अभेदसंसर्गक-नीलप्रकारक-

घटविशेष्यक शाब्दबुद्धित्वावच्छिन्नं प्रति स्वन्त-नीलपद-समभिव्याहृत-स्वन्त-घट-पदत्व रूपाकाङ्क्षाज्ञान कारणम्। एवमेव ङसन्त-नीलपद-समभिव्याहृत-घटपदत्व रूपाकाक्षाज्ञान-अव्यवहितोत्तर-जायमानशाब्दबोधं प्रति ङसन्त-नीलपद-समभिव्याहृत ङसन्त-घटपदत्व-रूपाकाङ्क्षाज्ञानं कारणम्। कार्यदलीय-विशेष्य-वाचकपदे विभक्तेः न निवेशः किन्तु विभक्त्यनिवेशपूर्वक-अव्यवहितोत्तरत्व-निवेशतात्पर्येण न 'नीलस्य घट' इत्यादौ अभेदसंसर्गकबोधः। स्वार्थिक-क-प्रत्ययान्तघटित-'नीलस्य-घटकस्य' इत्यादौ शुद्धघट-पदत्वरूप-आङ्क्षाज्ञानाभावेन शाब्दबोधानापत्तौ अपि प्रत्ययात् पूर्वतात्पर्यम् अनुरुध्य तत्र अदोषात्।

किञ्च शुद्धाभेदसम्बन्धावच्छिन्न-नीलत्वावच्छिन्न-प्रकारता-निरूपित-घटत्वावच्छिन्नविशेष्यताक-शाब्दबुद्धित्वावच्छिन्नं प्रति अभेद-सम्बन्धावच्छिन्न-नीलत्वावच्छिन्न-प्रकारतानिरूपित-घटत्वावच्छिन्न-विशेष्यताक-शाब्दबुद्धित्वनिष्ठावच्छेदकताक-जन्यता-निरूपित-जनकतावद् आकाङ्क्षाज्ञानं पृथगेव। एतादृशाकाङ्क्षाज्ञानस्य एकजन्यतावच्छेदककत्वेन योग्यताज्ञानादि-सहकारित्वस्य आवश्यकतया तदभावात् 'नीलस्य घट' इत्यादौ न अभेदान्वयबोध इति। किञ्च स्वन्त-नीलपद-समभिव्याहृत-स्वन्तघटपदत्वरूप-आकाङ्क्षाज्ञानेतर-आवन्त-नीलपदसमभिव्याहृत-आवन्त-घटपदत्वादिरूप-आकाङ्क्षाज्ञानानुत्तर-अभेदसंसर्गक-नीलप्रकारक-घट-विशेष्यक-शाब्दबोधं प्रति स्वन्तनीलपदसमभिव्याहृत-स्वन्तघटपदत्वरूपाकाङ्क्षाज्ञानं कारणम् इत्यादिकार्यकारणभावेन 'नीलस्य घट' इत्यादौ अदोष इति।

वस्तुतस्तु तद्विषयकप्रवृत्तिं प्रति तद्विषयक-इष्टतावच्छेदकावच्छिन्न-साधनताज्ञान कारणम् इति नियमः। 'इदं मदिष्टसाधनम्', 'इदं मत्कृतिसाध्यम्' 'बलवदनिष्टाननुबन्धित्व-विशिष्टेष्टसाधनम्' इति 'न कलञ्जं भक्षयेत्' इत्यादिवत्। अत्र नीलघटान्वयबुद्धिः अभेदसंसर्गेणेष्टा। नीलघटान्वयबुद्धित्वावच्छिन्न-विशेष्यक-इष्टत्वप्रकारकज्ञाने सति अभेदसंसर्गक-नीलत्वावच्छिन्न-प्रकारक-घटत्वावच्छिन्न-विशेष्यक-शाब्दबुद्धित्वावच्छिन्न-निरूपित-इष्टसाधनताज्ञान-सत्त्वात् 'नीलो घट' इति वाक्यप्रयोगः। यदि कार्यतावच्छेदककोटौ विषयत्वप्रवेशो न स्यात्तर्हि अभेदसंसर्गक-नीलत्वावच्छिन्नप्रकारक-घटत्वावच्छिन्नविशेष्यक-शाब्दबोधत्वावच्छिन्नजनकं 'नीलो घट' इति वाक्यम् एतादृश-इष्टतावच्छेदकतावच्छिन्न-निरूपित-साधनत्वज्ञानाभावात् प्रवृत्तिं प्रत्ति तस्यैव कारणत्वात् अभेदसंसर्गक-नीलप्रकारक-घट इति वाक्यं न प्रयोक्तव्यम् इत्यस्याऽपि वक्तुं शक्यत्वेन अभेदसंसर्गक-नीलप्रकारक-घटविशेष्यक-शाब्दबोधो न स्याद्। अतो विषयत्वप्रवेश आवश्यक इति सिंहावलोकितम्।

**VV-S 2.5.1:** यत्तु समासव्यासस्साधारणमिति। अयम्भावः - मूलोक्तरीत्या विशेष्यवाचकं पदं घटपदम्। तदप्रकृतिका विभक्तिः द्वितीयादिविभक्तिः।

तदप्रकृतित्वं विशेषणवाचक-नीलेऽस्ति। 'नीलघट' इति समस्तवाक्येऽपि विशेष्यवाचकपदं घटपदम्। तदप्रकृतिका विभक्तिः द्वितीयादिविभक्तिः। तदप्रकृतित्वं नीलपदे इति विरुद्धविभक्तिराहित्यमेव। समासव्याससाधारण-नीलादिप्रकारक-अभेदसंसर्गक-घटविशेष्यक-अन्वयबोधजनिक-आकाङ्क्षा। तथा च 'नीलस्य घट' इत्यादौ विशेष्यवाचकघटपदाप्रकृतिका विभक्तिः षष्ठीविभक्तिः। तत्प्रकृतित्वमेव नीलपदे, अतो न 'नीलस्य घट' इति वाक्यात् नीलप्रकारक-घटविशेष्यक-शाब्दबोधः।

**VV-S 2.6.1:** **विशेष्यवाचकपदोत्तरावृत्तिविभक्तीति**। समासव्यास-साधारण्येन 'नीलो घटः' 'नीलघट' इत्यादौ विशेष्यवाचकपदं घटपद, तदुत्तरा विभक्तिः सुविभक्तिः, तदवृत्तिविभक्तिविभाजकधर्मो द्वितीयत्वादिः, तद्धर्मवत्यः अमादिविभक्तयः तद्राहित्यम् उभयत्र वर्त्तते इति साकाङ्क्षत्वम्। न च प्रकृतोदाहरणे विशेष्यवाचकं घटपदं तदुत्तरत्वं तु घटं / घटेन / घटात् / घटस्य इत्यादौ सर्वविभक्तीनां, तन्निरूपितवृत्तित्वमेव विभक्तिविभाजकद्वितीयादीनाम्। अतो विशेष्यवाचकपदोत्तरा-वृत्ति-विभक्तिविभाजकधर्म-अप्रसिद्धिः। विभक्तित्वस्य सुप्तिङ्साधारणत्वेन सुत्वादीनां विभक्तिविभाजकत्व-अप्रसिद्धिश्च। प्रतिवाक्यं विशिष्य तात्पर्यानुरोधेन आकाङ्क्षा कल्प्यते चेत्? तर्हि ''प्रत्युच्चारणं शब्दो भिद्यते'' इति सिद्धान्तेन अननुगतत्व-प्रसङ्ग आकाङ्क्षानन्त्यापत्तिश्च इति कथं ग्रन्थसङ्गतिरिति विशेषप्रश्नः। नीलादि-विशेषणपदे घटादि-विशेष्यपदवत्त्वम् आकाङ्क्षा इति तात्पर्यात्। घटादि-विशेष्यपदवत्त्वञ्च केन सम्बन्धेनेति चेत् ? स्व-अभाववत्त्व-सम्बन्धेन इति। अत्र अभावश्च किंसम्बन्धावच्छिन्न-प्रतियोगिताको ग्राह्य इति चेत्? स्वोत्तरावृत्ति-विभक्ति-विभाजकधर्मवद्-विभक्तिप्रकृतित्व-सम्बन्धावच्छिन्न-प्रतियोगिताकः। तथा च यद् घट-पदवत्त्वं नीले अभिप्रेतं तद् घटपद-व्यक्त्युत्तरविभक्तेरेव सम्बन्धघटकत्वेन अन्यघट-व्यक्तिम् आदाय दोषस्य अननुसृतत्वात्। एवञ्च न अप्रसिद्धिः नापि अननुगतत्वम्। स्वशब्देन इष्टधारणात्।

**VV-S 2.6.2:** **विभक्तित्वादिकमजानत** इति। यस्य "विभक्तिश्च" (P.1.4.104) इति सूत्रज्ञानं नास्ति, तस्यापि शाब्दबोधो भवति, स न स्यात्। स्वोत्तरावृत्ति-धर्मवदिति तु न योग्यम्। 'नीलो घट' इत्यादौ नीलपदोत्तर-विभक्तिगत-तद्व्यक्तित्वस्य घटपदोत्तर-विभक्तावसत्त्वेन आकाङ्क्षानापत्तेः। न च विशेष्यवाचक-पदोत्तरावृत्ति-श्रावणप्रत्यक्ष-विषयतावच्छेदक-धर्म इत्येव उच्यताम्। तद्व्यक्तित्वस्य श्रावणप्रत्यक्ष-विषयतावच्छेदकत्व-अभावेन तदादाय दोषाभाव इति वाच्यम्। 'नीलो घट' इत्यत्र विशेष्यवाचक-घटपदोत्तरं विसर्गः, तद्वृत्तिः धर्म उत्व-गुणनिष्पन्नम् ओत्वं, तस्य नीलपदोत्तर-विभक्तिवृत्तित्वेन निराकाङ्क्षत्वापत्तेः। ध्रौव्येतरत्वात्

शाब्दबोध अनापत्ते। अत एव **विभक्तित्वादिकम्** इत्यत्र आदिपदोपादानं ग्रन्थकृतः सङ्गतम्। विभक्तिराहित्य इत्यत्र विभक्तिपदोपादानं तु निरर्थकम् इवाभाति मूल इति अलम् अधिकेन।

**VV-S 2.6.3: स्वरूपतो विरुद्धविभक्तिराहित्यस्य अप्रयोजकत्वादिति** - वस्तुतस्तु विशेष्यवाचकपदविशिष्ट-श्रावणप्रत्यक्षविषयतावच्छेदकधर्मप्रकारक-ज्ञान-विषय अप्रकृतित्वमेव विरुद्धविभक्तिराहित्यम्। तज्ज्ञानस्य एव अभेदान्वयबोध-जनकत्वम्। वैशिष्ट्यञ्च स्वाव्यवहितोत्तरावृत्तित्व-स्वावृत्तित्व-एतदुभयसम्बन्धेन। 'नीलो घट' इत्यत्र नीलपदे सु-प्रकृतित्वेऽपि घटपदविशिष्ट-श्रावणप्रत्यक्षविषयता-वच्छेदक ङसत्वादिधर्म-प्रकारक-ज्ञानविषयीभूत-ङसादिप्रत्यय-अप्रकृतित्वेन 'नील-घट' इत्यत्रापि तथा सत्वेन अभीष्टसिद्धिः। 'नीलस्य घट' इत्यादौ घटपद-विशिष्ट श्रावणप्रत्यक्षविषयतावच्छेदकधर्मप्रकारक-ज्ञानविषय-ङस्-प्रकृतित्वस्य एव विद्यमानत्वेन अक्षते। न चैवमपि 'घटस्य रूपं घटरूपं', 'नीलञ्च तद्घटरूपं नीलघटरूपम्' इत्यादौ अभेदान्वयबोधो न स्यात्। तत्र विशेष्यवाचकं पदं रूपपदं तद्विशिष्ट श्रावणप्रत्यक्षविषयतावच्छेदक-धर्मो घटत्वं, तत्प्रकारकज्ञान-विषय-घट-प्रकृतित्वस्यैव सत्त्वात् समासविषयिका या आकाङ्क्षा विशेष्यवाचकपदाव्यवहित-पूर्ववर्त्ति-विशेषणवाचकपदत्वरूपा तस्या अप्यत्र प्रवृत्तिः। तथाहि, विशेष्यवाचकं तु रूपपदमेव, तत्रैव नीलपदार्थस्य अन्वयः। एवञ्च घटपदेन व्यवधानात् न समासीय आकाङ्क्षाप्रवृत्तिरिति वाच्यम्। तत्र नीलपद-अव्यवहितत्तोर-घटपद-अव्यवहितोत्तर-रूपपदत्व-रूप-आकाङ्क्षाज्ञानं कारणमिति विलक्षणाकाङ्क्षाज्ञानस्य भिन्नस्य स्वीकारेण तत्राभेदान्वय-सौष्ठवात्।

ननु 'प्रशस्तः पाचक' इति विग्रहे प्रशंसायां रूपप्-प्रत्यये 'पाचकरूप' इति। तत्र सुन्दरपदसम्बन्धे 'सुन्दरः पाचकरूपः' इत्यादौ सुन्दरपदार्थस्य पाचकपदार्थ एवान्वयः सर्वानुभवसिद्धो न तु रूपप्-प्रत्ययार्थविशिष्टे पाचकपदार्थे। स्वन्त-सुन्दरपद-समभिव्याहृत-स्वन्त-घटपदत्वरूप-आकाङ्क्षाज्ञानेन 'सुन्दरो घट' इत्यादि स्थलीय-आकाङ्क्षाज्ञानस्यापि न प्रवृत्तिः। पाचकपदस्य केवलस्य स्वन्त-त्वाभावात्। एवञ्च तत्र केन आकाङ्क्षाज्ञानेन अभेदान्वयसिद्धिः इति वाच्यम् ? सत्यमेवेति। एवम्प्रकारेण 'सुन्दरतरः पाचकरूपः', 'सुन्दरदास्याः पुत्र' इत्यादौ अलुकि उत्तरपदक-कर्मधारये च निरुक्ताकाङ्क्षाज्ञानस्य अप्रवृत्त्या कथमन्वयश्चेति चेत् ? न। एकेन आकाङ्क्षाज्ञानेन न सर्वत्र शाब्दबोधः, अपि तु तत्र तत्र उक्तेषु वाक्येषु व्यभिचारवारणाय विलक्षणाकाङ्क्षाया अन्यादृश्या एव स्वीकारेण दोषपरिहारात्। न च 'नीलो घट' इत्यत्रैव सु-पदे ङस्त्वभ्रमे ङस्त्वप्रकारक-अन्यदीयं भ्रमम् आदाय, अपि वा अभ्रान्तस्यापि पुरुषस्य शाब्दबोधो न स्यात्।

किञ्च 'नीलस्य घट' इत्यत्रैव ङसि प्रत्यये सुत्व-प्रकारक-अन्यदीयभ्रमम् आदाय अभ्रान्तस्य पुरुषस्य अनिष्टोऽपि शाब्दबोधः स्यादिति वाच्यम्। विशेष्यवाचकपद-विशिष्ट-विशेषणवाचकपदत्व-रूपाकाङ्क्षाज्ञानमेव शाब्दबोधे कारणम्। वैशिष्ट्य च स्वविशिष्टो यः तदव्यवहितपूर्वत्वाभाववत्त्व-सम्बन्धेन। सम्बन्धघटक-वैशिष्ट्य च स्वेतरत्व-स्वाव्यवहितोत्तर-वृत्ति-श्रावणप्रत्यक्ष-विषयतावच्छेदक-धर्माभाववत्त्वम् इत्युभयसम्बन्धेन। समन्वयश्च समास-व्यास-साधारण्येन 'नीलघटः', 'नीलो घट' इत्यादौ उभयसम्बन्धेन घटपदविशिष्ट उदासीनः पटादिः, तन्निरूपिताव्यवहित-पूर्वत्वाभाववत्त्वस्य नीले विद्यमानत्वेन शाब्दसिद्धिः। 'नीलस्य घट' इत्यादौ तु उभयसम्बन्धेन घटविशिष्ट-ङस्-अव्यवहितपूर्वत्वेन वर्तमानत्वात् न शाब्दबोधः। 'नीलो घट' इत्यादौ सु-प्रत्यये ङस्त्व-भ्रमे तादृशाकाङ्क्षाज्ञानाभावात् न शाब्दबोधः। 'नीलस्य घट' इत्यादौ ङसि सु-प्रत्यय-भ्रमे तु तादृशाकाङ्क्षाज्ञानस्य सत्त्वात् न अनुपपत्तिः। एवञ्च समास-व्यास-साधारण्येन आकाङ्क्षाज्ञान-कार्यकारणभावे बहुतरलाघवम् इत्यलम्।

न च 'नीलस्य घट' इत्यत्र "सुपां सुलुग्" (P.7.1.39) इति सूत्रेण ङसः स्वादेशे 'नीलो घट' इति जाते तत्र स्वन्त-नीलपद-समभिव्याहृत-स्वन्त-घटपदत्व-रूप-आकाङ्क्षाज्ञानस्य विद्यमानत्वेन कारणान्तरस्यापि जागरूकत्वेन च शाब्दबोध आपतेदिति वाच्यम्। तत्र तात्पर्यज्ञानस्यापि कारणत्वेन तदभावात् तत्र अभेदान्वयविषयक-बोधाप्रतीतेः। न च कस्यचिदुपेक्षकस्य यदि तादृशबोधे तात्पर्य स्यात्, तदा बोधः कथं न इति वाच्यम्। षष्ठ्यर्थासंघटनात्। न च 'राहोः शिरः' 'नाम्नोः द्वयम्', इत्यादौ पातञ्जलभाष्योक्तप्रयोगे "व्यपदेशिवदेकस्मिन्" इति परिभाषामूलके 'राहु-अभिन्नं शिरः', 'नामाभिन्नं द्वयम्' इति बोधानुरोधेन अभेदोऽपि षष्ठ्यर्थः। एवञ्च "सुपां सुलुग्" (P.7.1.39) इति स्वादेशेऽपि स्थानिनामेव वाचकत्वम् इति पक्षम् अनुसृत्य अभेदः षष्ठ्यर्थ इति। स्वादेशस्य छान्दसत्वेन 'नीलस्य घट' इति वाक्यस्य लौकिकत्वेन वारणे तु, स्वातन्त्र्येण 'नीलस्य घट' इत्यत्र अभेदः षष्ठ्यर्थ इति अभेदान्वयविषयकः शाब्दबोधः स्यादिति वाच्यम्। पातञ्जलभाष्य-प्रयोगात् तत्र अभेदस्य षष्ठ्यर्थत्वेऽपि सर्वत्र तथा व्यवहारे प्रमाणाभावात्। किञ्च अभेदस्य षष्ठ्यर्थत्वे 'नीलो घट' इत्यत्रापि षष्ठ्यापत्तिश्च। न च प्रातिपदिकार्थसूत्रविषये षष्ठीविधाने तस्य वैयर्थ्यापत्तिरिति वाच्यम्। अर्थानूरोधेन स्वविषये तस्य चारितार्थ्यात्। तथा च 'नीलस्य घट' इत्यादौ अभेदस्य षष्ठ्यर्थत्वेन अभेदान्वयविषयक-शाब्दबोधे न किञ्चिद् बाधकमिति **सरयूपारीणशुक्लाः**। अत एव 'नीलो घट' इत्यादौ विशेषणविभक्तेः अभेदार्थकत्वे यद्यपि उक्तरीत्या लाघवं सम्भवति तथापि तत्रापि न नो विद्वेष इति **गदाधरोक्तं**

वक्ष्यमाणमूलं सङ्गच्छते। किञ्च सु-विभक्तिम् आरभ्य सुप्-पर्यन्त-यावद्विभक्तिषु अभेदार्थकत्वे स्वीकृते षष्ठ्येव अपराधिका यस्य अभेदो नार्थ इति वक्तुं शक्यते। स च अपराधो विशेषतः शिष्टविरोधो वा प्रदर्श्यताम्। एवञ्च विनिगमना-वैकल्येन षष्ठ्या अभेदार्थकत्वं निर्विवादमिति 'नीलस्य घट' इत्यादौ अपि अभेदान्वयबोधो भवत्येवेति गदाधरोक्तिः कथमिति विचारयन्तु धीधना इति शास्त्रार्थकलाकाराः।

उच्छृङ्खलास्तु -

विशेष्यस्यैव यल्लिङ्गं विभक्तिवचने च ये।
तानि सर्वाणि योज्यानि विशेषणपदेष्वपि।।
या विशेष्येषु दृश्यन्ते लिङ्गसंख्याविभक्तयः।
प्रायस्ता एव कर्तव्यास्समानार्थे विशेषणे।।

इत्युक्तिभ्यां व्यवहारबलेन च 'नीलस्य घट' इति प्रयोग एव न भवति। अस्ति विशेषानुशासने समानवचनकत्व-नियमाद्। 'वेदाः प्रमाणम्' अत्र तु 'वेदाः प्रमाणं स्मृतयः प्रमाणम्' इति महाभारतीयः शिष्टप्रयोग एव विशेषानुशासनरूप इति वदन्ते।

**VV-S 2.6.4:** अथ 'नीलो घट' इति। स्वोत्तरेति। स्वोत्तर-स्वादिभिन्नं यत्पदं तदुत्तरं यत् तद्भिन्नत्व-विशिष्टं यत् स्वोत्तरत्वादि तद्रूपम् इत्याशयः। समन्वयश्च 'नीलो घट' इत्यत्र स्वपदेन नीलपदस्य ग्रहणम्। स्वं = नीलपदम्। तदुत्तरं स्वादिभिन्नं पदं घटपदम्। तदुत्तरं यद्वस्तु तद्भिन्नत्वं घटपदे। तद्विशिष्टं स्वपदग्राह्यं नीलपदं, तदुत्तरत्वमपि घटपदे इति तद्रूपेति। समासस्थले 'नील-घट' इत्यत्रापि स्वं = नीलपदं, तदुत्तरं स्वादिभिन्नं पदं घटपदम्, तदनुत्तरत्वं च स्वन्तं घटपदेऽस्त्येव। तथैव स्वोत्तरत्वमपि इति। स्वरूप-नीलपदवत्-स्वाद्यन्त-घटपदत्व रूप-आकाङ्क्षा। उभयसाधारण्येन अभेदसंसर्गक-नीलप्रकारक-घट-विशेष्यक बोधप्रयोजिका इति तत्त्वम्। ननु स्वोत्तरपदानुत्तरत्व-विशिष्ट-इत्येव उच्यतां, स्वादिभिन्न-इति पदविशेषणं किमर्थम् इति चेत् ? न। 'नीलो घट' इत्यत्र स्वं = नीलपदं, तदुत्तरं पदं सु इति। "शक्तं पदम्" इति नियमात्। तदुत्तरत्वस्यैव घटपदे सत्त्वेन आकाङ्क्षाज्ञानाभावात् शाब्दबोधो न स्यात् इत्यभिधानात्। ननु स्वोत्तर-स्वादिभिन्नपदानुत्तरत्व-सम्बन्धेन नीलादिपदवन्मात्रम् आकाङ्क्षाज्ञानं कारणम् इत्येव अस्तु। किमितः अधिकनिवेशेन इति चेत् ? न। केवल-नीलपदेऽपि नीलाकाङ्क्षाप्रसक्तेः। न च स्वोत्तर-स्वादिभिन्नपदानुत्तरत्व-सम्बन्धेन नीलादि-पदवत्-स्वाद्यन्त-घटपदत्व-मात्रम् आकाङ्क्षाज्ञानं कारणम् इत्येव अस्तु, किं विशेषणे स्वोत्तरत्वनिवेशेन इति वाच्यम्। केवल-स्वाद्यन्त-घटपदेऽपि स्वपदेन गृह्यमाण-उदासीन-नील-पदोत्तर-स्वादिभिन्न-पट-मठादि-अनुत्तरत्व-सत्त्वेन केवल-

स्वन्त-घटपदेऽपि नीलाकाङ्क्षापत्ति-प्रयुक्त-शाब्दबोध-निवारणार्थं तस्यावश्यकत्वात्। नन्वेवं विशिष्टाकाङ्क्षा-स्वीकारे 'नीलस्य घट' इत्यत्राऽपि दोष। तथाहि डस स्वादित्वेन स्वोत्तरत्वादिभिन्न-पदानुत्तरत्वविशिष्ट-स्वोत्तरत्वरूप-स्वाव्यवहितोत्तरत्व-सम्बन्धेन नीलपदवत्-स्वाद्यन्त-घटपदत्वम् अस्त्येव इति चेत् ? न। समान विभक्तिकत्व-विशिष्ट-तत्तदाकाङ्क्षाज्ञानस्य कारणत्वेन उक्तस्थले विरुद्धविभक्ति कत्वेन अक्षतेः। नन्वेवम् अपि 'सुन्दरं दधि पश्यति' इत्यत्र विशेष्यवाचक अम्-अन्त-दधिपदस्य असत्त्वेन कथम् आकाङ्क्षाज्ञानम् इष्टं जनयेद् इति चेत् ? न। स्वाद्यन्त-इत्यस्य स्वाद्यव्यवहित-पूर्ववृत्तित्वेन अनुसन्धीयमान-इत्यर्थ-विधानेन दधि शब्दोत्तर-अमः अनुसन्धानेन लुप्तव्यवहारस्मृत्या स्वन्त-दधिपदसत्त्वेन अदोषात्।

**VV-S 2.6.5: 'नीलघटरूपम्' इत्यादिवाक्य-साधारण्यानुरोधेनेति।** ननु 'नीलघटरूपम्' इत्यत्र कियन्तो विग्रहास्सम्भवन्ति ? वाक्यसिद्धिश्च कथमिति प्रकाराः ? तथाहि -- नीलश्चासौ घटो नीलघटः, तस्य रूपमिति कर्मधारय-पूर्वपदक-षष्ठीतत्पुरुषः। नीलाभिन्नो यो घटः, तत्सम्बन्धि रूपमिति फलितार्थ। परन्तु अस्मिन् कल्पे निपातातिरिक्त-प्रातिपदिकार्थयोः साक्षाद् भेदसम्बन्धेन अन्वयः अव्युत्पन्न इति सिद्धान्तेन न भेदान्वयः। अभेदान्वयश्च विरुद्धविभक्तिकत्वात् न इति प्रथमः प्रकारः। घटस्य रूपं घटरूपम्, नीलञ्च तद् घटरूपमिति नीलघटरूपमिति षष्ठीतत्पुरुष-उत्तरपदक-कर्मधारयः। नीलाभिन्नघटसम्बन्धि रूपमिति शाब्द इति द्वितीयः प्रकारः। प्रशस्तो घटो घटरूपम्, प्रशंसायां रूपप् प्रत्ययः। नीलश्चासौ घटरूप इति नीलघटरूपः तत् नीलघटरूपम् इति द्वितीयान्तं पदम्। नीलाभिन्न-प्रशस्ताभिन्न-घटनिष्ठ-कर्मता-निरूपक-दर्शनम् इति शाब्दबोध इति तृतीयः प्रकारः। नीलश्चासौ घट इति नीलघटः, प्रशस्तो नीलघट इति विग्रहे रूपप्-प्रत्यये नीलघटरूपम् इत्यपि द्वितीयान्तपदम्। प्रशस्ताभिन्नो यो नीलाभिन्नो घटः तन्निष्ठ-कर्मता-निरूपकं दर्शनादि-क्रियावाचकं पदम् इति चतुर्थः प्रकारः। 'नीलघटं रूपयति' इति नीलघटरूपम् इति रूपक्रियायां रूप इति धातुः इति पञ्चमः प्रकारः। प्रथमकल्पे घटपदस्य घटीये लक्षणां कृत्वा अन्वयार्हत्वेऽपि पदार्थः पदार्थेन अन्वेति इति न्यायेन नीलपदार्थस्य घटीय-एकदेशे अन्वयानुपपत्तेः। द्वितीयकल्पे अन्यादृशी आकाङ्क्षैव योग्या इति वर्णनात्। तृतीय-चतुर्थ-कल्पयोरपि विलक्षणाकांक्षाज्ञानस्य एव अनुसर्त्तव्यत्वात् कथम् अनुपपत्त्याख्य-मूलग्रन्थ-सङ्गतिः इति चेत्? न। घटशब्दस्य घटीये लक्षणा। लाक्षणिकेन घटशब्देन साकं नील-शब्दस्य कर्मधारयः। नीलघटशब्दस्य च रूपशब्देन साकं कर्मधारय कर्मधारय-समासद्वय-करणेन अभेदेन नीलविशिष्टं यद्घटीयम् अभेदेन त रूपमिति शाब्दबोधः। एवञ्च विशेषणवाचक-नीलपदस्य स्तो

पदानुत्तरत्व-विशिष्ट-स्वोत्तरत्व-सम्बन्धेन घटपदे सत्त्वेऽपि लुग्-विधानेन घटपदस्य स्वन्तत्वाभावाद् एतद् आकाङ्क्षाज्ञान-अप्रवृत्त्या समासस्थले च अन्यादृश्या आकाङ्क्षाया आवश्यकत्वेन उभयसाधारणाकाङ्क्षाज्ञानस्य अनुपपत्ति-प्रवर्तकत्वेन ग्रन्थसङ्गतिः इत्याशयात्।

अप्रयोजकत्वादिति। वस्तुतस्तु स्वविशिष्ट-सुप्-पूर्वत्व-सम्बन्धावच्छिन्न-प्रतियोगिताक-स्व-अभावविशिष्ट-स्वपूर्वत्वरूप-स्व-अव्यवहितपूर्वत्व-सम्बन्धेन सुप्-प्रत्ययान्त-नीलादिपद-समभिव्याहृत-घटादिपदत्वरूप-आकाङ्क्षाज्ञानं कारणम् इत्येव कार्यकारणभावः। प्रथमवैशिष्ट्यं च (१)स्वप्रकृतिकत्व-(२)स्वप्रयोज्य-अभेदसम्बन्धावच्छिन्न-प्रकारता-निरूपित-विशेष्यता-प्रयोजक-पदोत्तर-सु-आदिवृत्ति-श्रावणप्रत्यक्ष-विषयतावच्छेदकधर्माभावप्रकारक-ज्ञानविषयत्वम् इत्युभयसम्बन्धेन। द्वितीयवैशिष्ट्यं च (१)स्वप्रयोज्य-अभेदसम्बन्धावच्छिन्न-प्रकारता-निरूपित-विशेष्यता-प्रयोजक-पदप्रकृतिकत्व-(२)स्वोत्तर-स्वादिवृत्ति-श्रावणप्रत्यक्ष-विषयता-वच्छेदक-धर्माभाव-प्रकारक-ज्ञानविषयत्वम् इत्युभयसम्बन्धेन। तथा च 'नीलो घटः' 'घटो नील' इत्यादि-सुप्रत्ययान्ते ङस्त्व-भ्रमे ज्ञानघटित-सम्बन्ध-सत्त्वात् न शाब्दबोधः। 'नीलस्य घटः', 'घटो नीलस्य' इत्यत्र च ङस्-प्रत्यये सुत्वभ्रमदशायां च अभीष्टः शाब्दबोधः सिद्ध्यति। एवञ्च समास-व्यास-साधारण्येन एकमेव आकाङ्क्षाज्ञानं कारणं शाब्दबोध इति न पार्थक्येन कार्यकारणभाव इति **मैथिलाः**।

**VV-S 2.7.1:** अथ 'नीलं घटमानय' इति। अत्र नील-पदार्थस्य घट-पदार्थे अन्वयस्य प्रकरण-तात्पर्यबलेन सर्वानुभवसिद्धतया प्रत्ययानां प्रकृत्यर्थान्वित-स्वार्थबोधजनकत्वम् इति नियमेन नीलपदार्थान्वित-कर्मत्वस्य न आनयन-क्रियायाम् अन्वयः। घटपदार्थान्वयीभूतस्य नीलपदार्थस्य प्रकरणाद्यनुरुद्धस्य कर्मत्वेऽपि अन्वये नीलपदार्थस्य द्विधा भानम्। नीले अनन्वितस्य कर्मत्वस्य न आनयन-क्रियायाम् अन्वयः, 'प्रकृत्यर्थान्वित-स्वार्थबोधजनकत्वं प्रत्ययानाम्' इति नियम-विरोधात्। किञ्च प्रकृत्यर्थे नीले न कर्मत्वान्वयः। कारकाणां क्रियान्वय-नियम-भङ्गापत्तेः। प्रत्ययार्थस्य प्रकृत्यर्थ-निरूपित-विशेष्यतया भानमिति नियम-विरोधात् च। तथा च कर्मत्वस्य कुत्र अन्वय इति पृच्छति - **कुत्रान्वय** इति।

**न कुत्रापीति**। अभेदान्वयबोधं प्रति समानविभक्तिकत्व-रूप-आकाङ्क्षा-ज्ञानं कारणम् इति नियम-रक्षणपुरस्सर-शाब्दबोध-सिद्ध्यर्थमेव। पदसाधुत्वार्थं वा तदुपादानम्।

**VV-S 3.1.1:** ननु 'सम्भवत्यर्थसाधुत्वे पदसाधुत्वम् अन्याय्याम्' इति व्याप्त्या पक्षान्तरमाह - **अभेद एव वा विशेषण-विभक्तेरर्थ** इति। ननु ग्रन्थारम्भे अभेदस्य संसर्गमर्यादयैव भानम् इत्युक्तम्, तत्कथं सङ्गच्छते इत्याशयेनाह - **समासस्थल**

एवेति। व्यासस्थले तु प्रकारतयैव भानमिति भावः। ननु लुप्तविभक्तिके स्मरणपूर्वक-समासेऽपि प्रकारतया भानं स्यादिति। अत आह आनुभविकत्वादिति। अत्र अभेदो नाम भेदाभावः। भेदाभावघटक-भेदपदार्थे नीलपदार्थस्य स्वनिष्ठ-प्रतियोगिताकत्व-सम्बन्धेन अन्वयः। भेदपदार्थस्य च स्वप्रतियोगिकत्व-सम्बन्धेन अभाव-पदार्थे अन्वयः। अभाव-पदार्थस्य च स्वरूप-सम्बन्धेन घट-पदार्थे अन्वयः। एवञ्च 'नीलो घट' इत्यत्र नीलनिष्ठ-प्रतियोगिता-निरूपक-भेदप्रतियोगिक-अभाव-विशिष्टो घट इति फलितार्थः।

**VV-S 3.1.2:** प्रकारतावादिमते शङ्कते - **अभेदो यदीति**। **भेदत्वावच्छिन्न-अभाव** इति। भेदत्व-पर्याप्तावच्छेदकताक-प्रतियोगिताकाभाव इत्यभिप्रायः। अत एव भेदत्वावच्छिन्न-प्रतियोगिताकस्य नीलभेदाद्यभावस्य वस्तुतः प्रसिद्धत्वेऽपि न विरोधाभासः। किञ्च भेदत्वेतर-धर्मानवच्छिन्न-प्रतियोगिताक-अभाव इत्यपि अर्थो वक्तुं शक्यते। तेन नीलघट-उभयाद्यभावस्य प्रसिद्धत्वेऽपि न त्रुटिः। अयं भावः - भेदस्य केवलान्वयितया अभावाप्रसिद्धिरित्यर्थः। घटादीनां पदार्थानां पटादि-पदार्थाद् भेदेन प्रतीतिः प्रसिद्धा एव। तद्भिन्नपदार्थभेदस्य सर्वपदार्थे प्रसिद्धत्वात्। अभावस्य प्रतियोगितावच्छेदकावच्छिन्नेन सह विरोधः स्पष्ट एव। भेदत्वावच्छिन्न-प्रतियोगिताक-अभावाप्रसिद्धिरिति फलति। अप्रसिद्ध-प्रतियोगिकाभावो नैयायिकैः न स्वीक्रियते इति सिद्धान्तः। परन्तु यदि 'अत्र भूतले घटो नास्ति' इत्यत्र एतद्-भूतलवृत्ति-घटकर्तृक-सत्ताभाव इति बोधः तर्हि एतद्-भूतलवृत्ति-घटकर्तृक-सत्ताया असत्त्वेन तत्प्रतियोगिक-अभावस्य अपि अप्रसिद्ध-प्रतियोगिकत्वात् कथं तत्र शाब्दबोधः ? किञ्च 'घट आकाशं न पश्यति', 'घट आकाशं न जिघ्रति', 'अभाव आकाशं न पश्यति', 'ईश्वरः स्वजन्म न जानाति', 'मनो रूपं न पश्यति' इत्यादि-विलक्षण-प्रयोगदर्शनेन अप्रसिद्ध-प्रतियोगिक-अभावोऽपि कथञ्चित्। ननु अप्रसिद्ध-प्रतियोगिक-अभाव-अनङ्गीकर्तृमते कथं ग्रन्थसङ्गतिः इति प्रश्नः। 'घटो नास्ति' इत्यादौ भेदत्वावच्छिन्न-प्रतियोगिता-निरूपकत्वस्य प्रसिद्धत्वेन भेदत्वा-वच्छिन्न-प्रतियोगिता-निरूपकत्वस्य अप्रसिद्धिः इत्याशयात्। अत्यन्ताभावीय-प्रतियोगितायां भेदत्वावच्छिन्नत्वस्य अप्रसिद्धिरिति वर्णनात्। भेदत्वे अत्यन्ताभावीय-प्रतियोगिताया अवच्छेदकत्वं प्रसिद्धमिति व्याख्यानाच्च। अथ च भेदत्वावच्छिन्ना-भावस्य अप्रसिद्ध्या एकदेशप्रसिद्धि-पदार्थेन साकं नैव अन्वयः। किन्तु 'घटो नास्ति' इत्यादौ घटादौ भेदस्य यत्किञ्चिद्भेदत्वावच्छिन्न-प्रतियोगिताकत्वस्य यत्किञ्चिद्भेदे प्रसिद्धस्य अत्यन्ताभावे अप्रसिद्धिः इति फलितार्थः।

न च 'भेद-घट-एतदुभयं नास्ति' इत्युभयाभावे भेदत्वावच्छिन्नत्वस्य प्रसिद्धिरिति वाच्यम्। भेदत्वमात्र-पर्याप्तावच्छेदकता-निरूपित-अवच्छेद्यतावत्-

प्रतियोगित्वस्य अप्रसिद्धिः इत्याशयात्। ननु न हि 'अवयवापर्याप्तस्य समुदाये पर्याप्तिः' इति नियमेन भेदत्वपर्याप्तापि सा इति चेत् ? न। भेदत्वगत-एकत्व-प्रतियोगि पर्याप्त्यनुयोगितावच्छेदकं यद्रूपं तद्रूपावच्छिन्न-अनुयोगिताक-पर्याप्ति-प्रतियोगिभूतावच्छेदकता-निरूपित-अवच्छेद्यतावत् प्रतियोगिताकाभावः अप्रसिद्ध इति तात्पर्य वर्णनात्। 'केवल-भेदो नास्ति' इत्यादौ एव एतत्सम्भव इति क्षतिविरह। नन्वेवमपि तत्रापि भेदत्वेन रूपेण भेदत्व-वृत्तित्वेन रूपेण वा भेदत्व एव पर्याप्ता अस्ति इत्यापत्तिः तदवस्था एवेति चेत् ? न । भेदत्वगत-एकत्ववृत्तिः या प्रतियोगिता तादृश-प्रतियोगिताक-अभावः अप्रसिद्ध इत्याशयः। भेदत्वगत-एकत्वे वृत्तिता च प्रतियोगितायाः केन सम्बन्धेन ? स्वनिरूपितावच्छेदकतात्वा-वच्छिन्न प्रतियोगिताक-पर्याप्त्यनुयोगितावच्छेदकत्व-सम्बन्धेन इति ग्रन्थसङ्गतेः सौष्ठवात्। ननु स्वरूप-सम्बन्धावच्छिन्न-प्रतियोगिताक-अभावस्य अप्रसिद्धत्वेऽपि संयोग-समवाय-जनकत्वादि-सम्बन्धावच्छिन्न-प्रतियोगिताकः अभावः प्रसिद्ध इति न ग्रन्थसङ्गतिरिति चेत् ? न। स्वरूप-सम्बन्धावच्छिन्न-प्रतियेगिताकाभाव-अप्रसिद्धौ एव ग्रन्थकारस्य निर्भरत्वात्।

ननु स्वरूप-संयोग-एतदुभय-सम्बन्धावच्छिन्न-प्रतियोगिताकाभावो 'घटवद् भूतलं न' इत्यादौ प्रसिद्ध इति वाढं शक्यम् ? भेदत्वगत-एकत्व-वृत्तिः या स्वरूपत्वगत-एकत्ववृत्तिः प्रतियोगिता तादृश-प्रतियोगिताक-अभावः अप्रसिद्ध इति तात्पर्यावधारणात्। स्वरूपत्वगत-एकत्वे वृत्तिता च प्रतियोगितायाः केन सम्बन्धेन? स्वनिरूपित-संसर्गतावच्छेदकतात्वावच्छिन्न-प्रतियोगिताक-पर्याप्त्यनुयोगितावच्छेद-कत्व-सम्बन्धेनेति न उभयसम्बन्धावच्छिन्न-प्रतियोगिताकाभाव-प्रसिद्धिरिति वर्णनात्। ननु 'भेदत्वेन घटो नास्ति' इत्यादौ प्रसिद्धिः उपात्त-धर्मस्यैव, प्रतियोगिता-वच्छेदकत्व-नियमादिति चेत् ? न। स्वरूपत्वगत-एकत्ववृत्तिर्या भेदनिष्ठा प्रतियोगिता तादृश-प्रतियोगिताकाभाव-अप्रसिद्धिरिति योजनेन प्रकृते च घटनिष्ठैव साक्षात् प्रतियोगिता इत्यदोषात्। ननु 'भेदत्वेन भेद-घटो नास्ति' इत्यादौ प्रसिद्धिः इति चेद् ? अत्र अयं चित्रविशेषः। भेदत्वगत-एकत्ववृत्तिः या प्रतियोगिता इत्येव मूलम्। भेदत्वगत-एकत्वे वृत्तिता च प्रतियोगितायाः स्वनिरूपितावच्छेदकतात्वा-वच्छिन्नप्रतियोगिताक-पर्याप्त्यनुयोगितावच्छेदकत्व-स्वनिरूपकाभावनिष्ठनिरूप्यता-निरूपितनिरूपकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वम् इत्युभयसम्बन्धेन इति विशिष्टाभिधानात्। ननु स्वरूपत्वेन स्वरूपस्य अप्रसिद्धत्वे अपि स्वरूपत्वेन संयोग-समवायावच्छिन्नः प्रसिद्धः। किञ्च 'स्वरूपत्वेन संयोगावच्छिन्न-स्वरूपैर्भेदो नास्ति' इत्यादावपि प्रसिद्धिरिति चेत् ? न। स्वरूपत्व-गत-एकत्वे वृत्तिता च प्रतियोगितायाः केन सम्बन्धेन? स्वनिरूपित-संसर्गता-

वच्छेदकतात्वावच्छिन्न-प्रतियोगिताक-पर्याप्त्यनुयोगितावच्छेदकत्व-स्वनिरूपकाभाव-निष्ठनिरूपकतानिरूपित-निरूप्यतावती या संसर्गता तादृशसंसर्गतावच्छेदकतात्वावच्छिन्नप्रतियोगिताक-पर्याप्त्यनुयोगितावच्छेदकत्वम् इत्युभयसम्बन्धेन। तत्र च द्वित्वे अवच्छेदकता इति। ननु 'भेदत्वेन घटो नास्ति, घटत्वेन भेदो नास्ति' इति समनियतपदार्थे तादृशाभावः प्रसिद्ध इति। समनियतत्वञ्च स्वव्याप्यत्व-स्वव्यापकत्वम् इत्युभयसम्बन्धेन। तथा च कथं ग्रन्थसङ्गतिरिति चेत् ? न। भेदत्वगत-एकत्वे वृत्तिता च प्रतियोगितायाः केन सम्बन्धेन इति ? एकश्च उक्तसम्बन्धः अपरश्च स्वनिरूपितानुयोगितात्वावच्छिन्नविशिष्ट-निरूप्यतानिरूपित-निरूपकतावच्छेदकतात्वावच्छिन्न-प्रतियोगिताक-पर्याप्त्यनुयोगितावच्छेदकत्वम् इति उभयसम्बन्धेन उत्तरस्वरूपं बोध्यम्।

किञ्च भेदत्वगत-एकत्ववृत्तिः योऽभाव इत्यपि व्याख्या। सम्बन्धश्च स्वनिरूपित-प्रतियोगितानिरूपित-अनुयोगित्वविशिष्टनिरूप्यतानिरूपित निरूपकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताक-पर्याप्त्यनुयोगितावच्छेदकत्वम् इति उभय-सम्बन्धेन।

ननु न भेदत्वावच्छिन्नाभावः अभेद इति व्याख्याया अप्रसिद्धिः आपतेत्। किन्तु भेदप्रतियोगिको नाम यत्किञ्चिद्-भेदव्यक्तिप्रतियोगिकोऽभावः अभेद इति तात्पर्यम्। एवञ्च 'नीलघटे नीलभेदो नास्ति' इति नीलभेद-प्रतियोगिकाभावरूपः अभेदः सर्वत्र प्रसिद्ध एव इति सर्वम् अभिप्रेत्य आह - **यदि चेति**। उत्तरम् आह - **तदेति**।

अत्रैव प्रसङ्गात् कथञ्चिद् अभाव-पदार्थो निरूप्यते। "द्रव्यादिषट्का-न्योन्याभाववत्त्वम् अभावत्वम्" इति **मुक्तावली**। "नञर्थ-प्रत्यय-विषयत्वम् अभावत्वम्" इति **उदयनाचार्य्याः**। तत्र नञर्थस्य प्रत्ययो नञर्थप्रत्ययः, षष्ठ्यर्थो विषयित्वम्। नञर्थस्य तत्र निरूपितत्व-सम्बन्धेन अन्वयः। एवञ्च नञर्थनिरूपित-विषयिताविशिष्ट-प्रत्ययनिरूपित-विषयताश्रयत्वम् अभावत्वम्। अभावत्वेऽतिव्याप्ति-वारणाय नञर्थः अभाव इति विहाय पूर्वोक्तप्रकारः। अभावत्वस्यापि "व्यक्त्याकृतिजातयः पदार्थ" इति **गौतमानुरोधेन** पदार्थत्वात्।

न च नञर्थप्रत्ययविषयत्वं सामान्यरूपेण अभावत्वे अस्त्येव इति कथं तस्य व्यावर्त्यत्वमिति वाच्यम्। प्रतियोगित्व-अनुयोगित्व-अन्यतरसम्बन्धावच्छिन्ना या प्रकारता तन्निरूपित-नञ्पदप्रयोज्य-विशेष्यताश्रयः अभाव इत्येवं तात्पर्या-भिवर्णनात्। वस्तुतस्तु भेदत्वम् अभावत्वं च अखण्डोपाधिरिति न अन्योन्याश्रय-शङ्केति। जन्यत्वञ्च जनकता-प्रतियोगित्वम्। जनकत्वञ्च कार्याव्यवहित-प्राक्क्षणावच्छेदेन कार्यसमानाधिकरणात्यन्ताभाव-अप्रतियोगित्वम्। परन्तु 'घटो

नास्ति', 'घटो नश्यति', 'घटः पटो न' इत्यभाव-त्रयाणाम् उदाहरणानि। प्रागभावत्वञ्च प्रतियोगि-विनाश्यभावत्वम्, 'घटो भविष्यति' इत्युदाहरणम्। ननु किमर्थम् एष आश्रीयते इति प्रश्नः। यावत्कारणसामग्रीसत्त्वेन कपाले घटोत्पत्त्य-नन्तरमपि घटान्तरोत्पत्ति-प्रसक्तेः। न च विद्यमान-घटो घटान्तरोत्पत्तिप्रतिबन्धकः स्याद्। एवञ्च न पुनः तेनैव कारणेन घटान्तरोत्पत्तिः इति वाच्यम्। एतद्-विडम्बनापेक्षया प्रागभावस्वीकृतावेव लाघवात्। परन्तु 'घटो भविष्यति' इति नोदाहरणं घटते। अभावरूपार्थस्तु 'घटो नास्ति' इत्यत्र नञर्थ एव। 'घटो नश्यति' इत्यत्र 'णश-अदर्शने' इति धातौ दर्शनप्रतियोगिकाभावो धात्वर्थः। तत्रास्ति नञ्पदम्। 'घटः पटो न' इत्यत्रापि नञ्पदम्। परन्तु 'घटो भविष्यति' इत्यत्र अभावरूपार्थो भूधातोः तिप्-स्ययोर्वा घटार्थो वेति विचिकित्सायाम् मुह्यन्ति तार्किका आधुनिका इति **शुक्लाः**। यत्किञ्चिद्भेदप्रतियोगिक-अभावस्यापि अभेदपदार्थे अनिष्टस्य 'नीलं जलम्' इति वाक्यस्यापि प्रामाण्यम् आपद्येत। "वर्णश्शुक्लो रसस्पर्शौ जले मधुरशीतलौ" इत्युक्तेः 'जलं नीलं न भवति' इति न्यायशास्त्र-सिद्धान्तः। जले नीलभेदस्य एव सत्त्वेन 'नीलं जलम्' इति रूपं न भवति। उक्तरीत्या भेदप्रतियोगिकाभावस्य अभेदत्वे तु जले नीलभेदाभावाभावेऽपि द्वित्वादिधर्मेण अर्थात् 'नीलभेद-घट-उभयं नास्ति' इति च घटत्व-नीलभेद-एतद्-उभय-प्रतियोगिकाभावस्य द्वित्वावच्छिन्न-प्रतियोगिताकस्य सत्त्वेन अनिष्टं 'नीलं जलम्' इति वाक्यस्यापि प्रामाण्यं स्यादेव। ननु द्वित्वावच्छिन्न-प्रतियोगिताकाभावो न गृह्यते, अपि तु केवल-नीलभेदत्वावच्छिन्नाभाव एव, नीलभेदत्वेरधर्मानवच्छिन्न-प्रतियोगिताकाभावश्च। तथा च जले नीलभेदरूप-प्रतियोगिनः सत्त्वेन तदभावा-भावेन 'नीलं जलम्' इति वाक्यस्य नैव प्रामाण्यम् इत्याशयेन आह - **नीलभेदत्वावच्छिन्नेति**। नीलपदेन उपस्थितस्य नीलपदार्थस्य विभक्त्यर्थ-विशेषणीभूत-नीलपदार्थे अन्वयो न सम्भवति।

न च नीलभेदत्वावच्छिन्नस्य विभक्त्यर्थत्वे 'पीतो घटः', 'सुन्दरो घटः', 'रक्तो घट' इत्यादिषु पीतभेदत्वावच्छिन्न-सुन्दरभेदत्वावच्छिन्न-इतिरीत्या विभक्त्यर्थकल्पने अननुगमः स्यादिति वाच्यम्। यथा तत्-पदं बुद्धिविशेषविषयत्व-उपलक्षित-वक्तृजिज्ञासित-तत्तद्धर्मावच्छिन्ने शक्तमिति रीत्या घटत्व-पटत्वादीनां धर्माणां बुद्धिविषयतावच्छेदकत्वेन अनुगमः तथा प्रकृत्यर्थतावच्छेदकत्व-धर्मेणैव अनुगमः। प्रकृत्यर्थतावच्छेदकत्व-उपलक्षित-धर्मावच्छिन्न-प्रतियोगिताकाभावे शक्तौ न गौरवम्।

**VV-S 3.1.3:** ननु विशेषणतया नीलपदार्थातिरिक्तत्वेन केवलभेद-प्रतियोगिक-अभाव एव विभक्त्यर्थः। नीलप्रतियोगिनः तु नीलपद-समभिव्याहारादेव

भेदे अन्वये सति न दोष इत्यत आह - न चेति। अभेदो विभक्त्यर्थः। तत्र अभेदः पदार्थः, भेदः पदार्थतावच्छेदकः। सम्बन्धश्च नीलभेदत्वावच्छिन्नप्रतियोगिताकत्व-रूपः। पदार्थद्वयसंसर्ग एव आकाङ्क्षालभ्यः। यथा घट इत्यादौ घट घटत्व-समवायेषु त्रिष्वेव शक्तिः। घटे घटत्वं समवायेन भासते। समवायश्च शक्त्युपस्थाप्यः। एवञ्च पदार्थतावच्छेदके भेदे शक्तिं विना समवायवत् नीलभेदत्वावच्छिन्न-प्रतियोगिताकत्व-सम्बन्धेन कथंकारं भानम् इत्याशयेन आह - **वृत्तिं विनेति**।

**VV-S 3.1.4:** ननु पार्थक्येन भेदे अभावे च खण्डशः शक्तिः। पृथक् पृथक् पदनिष्ठ-भिन्नशक्त्या उपस्थिति-विषयार्थद्वय-संसर्गभानमिति यावत्। अत एव आख्यातार्थस्थले कालस्तु व्यापारे विशेषणम्। कालकृत्योः परिच्छिन्नत्व-सम्बन्धः। वर्त्तमानादिकालत्वेन वर्त्तमानादौ कृतित्वेन कृतौ च शक्तिद्वयमिति परिच्छिन्नत्व-सम्बन्धस्य आकाङ्क्षाभास्यत्वेऽपि न दोषः। प्रकृते च भेद-अभावयोः एका एव शक्तिरिति न आकाङ्क्षाप्रयोज्यत्वं संसर्गस्य इति फलति। 'नीलं जलम्' इत्यत्र जले नीलभेदस्यैव सत्त्वेन नीलभेदाभावस्य अभावात् न 'नीलं जलम्' इत्यस्य प्रामाण्यम्। भेदस्य पदार्थत्वमेव, न तु पदार्थतावच्छेदकत्वम्। तथा च 'पदार्थः पदार्थेन अन्वेति न तु पदार्थैकदेशेन' इति नियमस्य अप्रवृत्त्या भेदपदार्थे नीलपदार्थान्वये न कोऽपि बाधक इत्यभिप्रायवान् आह - **निरस्तमिति**।

**VV-S 3.2.1:** अत्र कश्चिच्छङ्कते। प्रकारतावादिमते ननु यदि विशेषण-विभक्तेः अभेदार्थान्वयश्च खण्डशक्त्यैव, 'नीलो घट' इत्यत्र नीलनिष्ठ-प्रतियोगिता-निरूपक-भेदप्रतियोगिक-अभावविशिष्टो घट इति यथा बोधः तथैव 'नीलं घट' इत्यत्रापि विभक्त्यर्थोऽभेदः, तस्य भेदे अभावे च शक्तिः, नीलस्य भेदे भेदस्य अभावे, अभावस्य घटे अन्वयसम्भवात्। यदि च उच्यते अभेदान्यबोधं प्रति समानविभक्तिक-पदजन्योपस्थितिरेव कारणम्। अतो 'नीलं घट' इत्यत्र द्वितीयान्त-प्रथमान्त-सत्त्वेन न अभेदान्वय इति तर्हि 'धान्येन धनवान्' इत्यत्र विरुद्धविभक्तिसत्त्वेन अभेदान्वयबोधो न स्याद् इत्याशयवान् आह - **'धान्येन धनवान्'** इति। उत्तरमाह - द्वितीयान्तघटकप्रत्ययेन अभेदान्वयबोधे द्वितीयान्त-विशेष्यवाचकपद-समभिव्याहारः कारणमिति। एवं तृतीयार्थ-अभेदान्वयबोधं प्रति तृतीयान्त-विशेष्यवाचकपद-समभिव्याहारः कारणमिति रीतिः। न च एवम् उत्तरे 'धान्येन धनवान्' इत्यादौ अभेदान्वयो न स्यात्, उक्तविरुद्धविभक्तिकत्वात्। विरुद्धविभक्तिकत्वेऽपि क्वचित् अभेदान्वयो यदि स्यात्तर्हि 'नीलेन घटः', 'पीतेन घट' इत्यादौ अपि अभेदान्वयापत्तिः स्यात् इति वाच्यम्। 'नीलेन घट' इत्यादौ तृतीयाविधायक-सूत्र-वार्त्तिकाभावात्। 'धान्येन धनवान्' इत्यत्र तु "प्रकृत्यादिभ्य

उपसंख्यानम्" इति वार्तिकं विधायकम्। तथा च वार्त्तिकप्रामाण्यात् "प्रकृत्यादिभ्य उपसंख्यानम्" इति वार्तिकविहित-तृतीयाभिन्न-तृतीयार्थ-अभेद-प्रकारक-बोधे तृतीयान्त-विशेष्यवाचकपदसमभिव्याहारः कारणमिति कार्यकारणभावेन 'नीलेन घटः' 'पीतेन घट' इत्यादेः सुतरां निवार्यत्वात्।

द्वितीयादिना अभेदबोधन इति। ननु आदिपदेन अत्र यदि तृतीया गृह्यते तदा 'धान्येन धनवान्' इत्यत्र 'प्रकृत्या चारुः' इत्यत्र च अभेदसम्बन्धेन अन्वय-बोधो न स्यात्। यदि तृतीयाया ग्रहणं न स्यात्तर्हि 'सुन्दरेण घट' इत्यादौ अपि अभेदान्वयापत्तिः। अस्मिन् विकल्पप्रस्तावे शङ्कते। ननु 'सुन्दरेण घट' इति प्रयोगः कुतो न भवति ? "प्रकृत्यादिभ्य उपसंख्यानम्" इति वार्तिकेन अभेदे तृतीयाविधानानुशासनात्। न च सुन्दरशब्दस्य प्रकृत्यादिगणे पाठाभावेन तृतीया-विधानाभावात् कथम् अयं प्रयोग इति वाच्यम्। व्याकरणान्तरे प्रकृत्यादिगण-पठितातिरिक्त-शब्देभ्योऽपि तृतीयाविधानानुशासनात् तादृश-प्रयोग-सौष्ठवात्। अभेदान्वयबोधं प्रति समानविभक्तिकः-पदजन्योपस्थितिः कारणमिति नियमेन 'सुन्दरेण घट' इति प्रयोगस्य अप्रामाणिकत्वात्। यथायोगं सर्वविभक्त्यपवादः "प्रकृत्यादिभ्य" इति वार्त्तिकम्। अत एव 'सुखमेति', 'विषममेति', 'प्रकृतिश्चारुः', 'सुखं याति' इत्यादिप्रयोगा लोके न भवन्ति, शिष्टसम्प्रदायविरुद्धत्वात्। न च 'धान्येन धनम्', 'परमेण सुन्दर' इति प्रयोगाः शैष्टाः कथङ्कारं संगच्छन्त इति वाच्यम्। प्रकृत्यादिशब्दोत्तर-तृतीयातिरिक्ता मूलोक्तादिशब्दात् संग्राह्या इति कल्पनेन आपत्तिपरिहारात्। अयमेव मूलाशयो गदाधरभट्टाभिमत इति सिद्धान्तसमाधानमिति अलम्।

**VV-S 3.3.1:** दोषान्तरमाह **'प्रमेयो घट'** इति। अप्रसिद्ध-प्रतियोगिकाभाव-तात्पर्येण। तथा हि - प्रमेयपदोत्तरविभक्तेः भेदः अभावश्च अर्थः। तत्र प्रकृत्यर्थस्य प्रमेयस्य प्रमेयत्वावच्छिन्न-प्रतियोगिताकत्व-सम्बन्धेन भेदे अन्वयः, भेदस्य च भेदत्वावच्छिन्न-प्रतियोगिताकत्व-सम्बन्धेन अभावपदार्थे अन्वयः। सः कथं सङ्गच्छेत ? भेदस्य प्रतियोगितावच्छेदकेन सह विरोधात्। "सप्तानामपि साधर्म्यं ज्ञेयत्वादिकमुच्यते" (कारिकावली - १३) इत्युक्त्या प्रमेयत्वस्य सर्वत्र विद्यमानत्वात् प्रमेयत्वावच्छिन्न-प्रतियोगिताकभेदः अप्रसिद्ध एव इत्याह - **भेदाप्रसिद्ध्येति**। प्रथमो दोषः घटपदार्थे घटत्वं वर्त्तते कम्बुग्रीवादिमत्त्वञ्च धर्मद्वयम्। 'कम्बुग्रीवादिमान् घट' इत्यत्र विभक्त्यर्थ-भेदे लघुधर्मस्य घटत्वस्य अभावीयप्रतियोगितावच्छेदकत्व-सम्भवे घटत्वसमनियतस्य घटत्वसमानाधिकरणस्य गुरुधर्मस्य कम्बुग्रीवादिमत्त्वस्य अभावीयप्रतियोगितावच्छेदकत्वं न भवतीति 'कम्बुग्रीवादिमान् घट' इत्यादौ भेदा-भावयोः असंघटनेन अभेदान्वयोबोधो न स्यात्। घटत्वापेक्षया कम्बुग्रीवादिमत्वस्य

गुरुधर्मत्वात् इति द्वितीयो दोषः। ननु लघुधर्मसमनियत गुरुधर्मस्य अभाव-प्रतियोगितावच्छेदकत्वं न भवतीति नियमे अभावपदोपादानस्य किं प्रयोजनम्? लघुधर्मसमनियत-गुरुधर्मस्य न प्रतियोगितावच्छेदकत्वम् इत्येव अस्तु इति चेत् ? न। भासमानवैशिष्ट्यस्य प्रतियोगित्वानुयोगित्वे एव प्रकारत्व-विशेष्यत्वे इति युक्ति-सिद्धपक्षे गुरुधर्मस्यापि प्रतियोगितावच्छेदकत्त्वसिद्धये तदुपादानावश्यकत्वात्। ननु लघुधर्मसमनियत-गुरुधर्मस्य अभावावच्छेदकत्वं नास्ति इत्येव अस्तु नियमः, प्रति-योगितापदोपादानं किमर्थम् इति चेत्? न। 'कम्बुग्रीवादिमद्वान् देश' इत्यत्र संयोग-सम्बन्धावच्छिन्न-कम्बुग्रीवादिमत्वावच्छिन्न-प्रकारता-निरूपित-देश-निष्ठ-विशेष्यता इति बोधः। तत्र प्रकारताख्य-विषयताया गुरुधर्मस्यापि कम्बुग्रीवादिमत्त्वस्य विषयतावच्छेदकत्व-सिद्धये प्रतियोगिता पदोपादानस्य आवश्यकत्वात्।

**VV-S 3.3.2:** एवमिति। यत्र घटे नीलत्व-व्यवहार-सिद्धये 'नीलो घट' इति प्रयुज्यते तत्र नीलाभिन्नो घट इति शाब्दबोधो भवत्येव। परन्तु यत्र नील इति पट-तात्पर्येण उच्यते, घट इत्यपि उच्यते तत्र नीलाभेदप्रकारक-घटविशेष्यक-बोधो नेष्यते। भेदाभावयोः विशेषण-विभक्त्यर्थत्वे तु घटत्वेन पटत्वेन च रूपेण नीलयोः घट-पटयोः भेदेऽपि नीलत्वेन रूपेण तु भेदो नास्ति। नीलत्वेन पटभेदाभावस्य नीलपदोत्तर-विभक्त्यर्थत्वेन, तस्य च घटे सत्त्वात् पटान्वयतात्पर्येण प्रयुक्ते नीलपद-घटित-'नीलो घट' इति वाक्येऽपि अभेदसंसर्गक-नीलप्रकारक-घट-विशेष्यक-बोधः अनिष्टोऽपि स्यादेव। एतदर्थबोधनाय पटान्वय-तात्पर्यविषयीभूतस्य अपि 'नीलो घट' इति वाक्यस्य प्रामाण्य दुर्वारम् एवेति तृतीयो दोषः।

**VV-S 3.3.3:** एतेनेति। अयं भावः - भेदोऽभावश्च न विशेषणविभक्तेः अर्थः, अपि तु विशेषणतावच्छेदकीभूतं नीलत्वं प्रमेयत्वं च अर्थः। तस्य आश्रयतासम्बन्धेन विशेष्य-घटादौ अन्वये 'नीलत्वाश्रयो घटः', 'प्रमेयत्वाश्रयः घटः', 'प्रमेयवान् घट' इति रीत्या शाब्दबोधः। नीलरूपे शक्तौ गौरवम्। अतः यावन्नीलवृत्ति-नीलत्वजातौ एव शक्तिः। स्वाश्रयत्वसम्बन्धेन विशेष्ये अन्वयः। प्रकृत्यर्थस्य तत्र स्ववृत्ति-वृत्तित्व-सम्बन्धेन अन्वयः। 'नीलं जलम्' इति तु न प्रयोगः। नीलत्वस्य जले अत्यन्ता-भावात् इति कैश्चित् उक्तं तु एतेन नीलपटादिपर-'नीलो घट' इत्युक्तदोषेण निरस्तम् इत्याशयः।

**अभेदार्थकत्व-प्रवादोपपत्तिरिति**। ननु 'प्रमेयो घट' इत्यादौ विशेषणवाचक-प्रमेयपदोत्तर-सु-विभक्तेः कथं भेदाभावरूप-अभेदार्थकत्वम्? प्रमेयत्वावच्छिन्न-प्रतियोगिताक-भेदस्य अप्रसिद्धत्वात्। एवञ्च कथङ्कारम् अभेदार्थकत्वम् इति चेत्? न। क्वचित् मुख्य-अभेदो विशेषणविभक्त्यर्थः, क्वचिद् गौण-अभेदो विशेषण-विभक्त्यर्थो यथा 'ग्रामं गच्छति' इत्यत्र कर्मत्वं द्वितीयार्थो मुख्य एव। परन्तु

'शास्त्रं जानाति' इत्यत्र मुख्यार्थ-असंघटनाद् गौणार्थः विषयत्वं द्वितीयार्थः। 'नीलो घट' इत्यत्र विशेषणविभक्तेः अभेदार्थो मुख्यः। 'प्रमेयो घट' इत्यत्र तु गौण एव अभेद-रूपविभक्त्यर्थ इति प्रतीत्यनुसारेण विरोधविरहात्।

दूषणान्तरमपि आह 'प्रकृतिप्रत्ययार्थौ सहार्थं ब्रूतः तयोः प्रत्ययार्थः प्रधानम्' इति न्यायेन विभक्त्यर्थस्य नीलत्वस्य प्रमेयत्वस्य विशेष्यत्वात् तत्र प्रकृत्यर्थ-नीलत्ववतो नीलस्य ईकाङ्क्षाविरहाद् अन्वयो न स्यात्। उदाहरणम् घटत्ववति स्वाधिकरणत्वसम्बन्धेन अनुभवविरोधात् घटत्वान्वयो न भवति। एतेन सम्बन्धेन एकस्यैव घटस्य घटत्व-द्वयवत्त्व-प्रसक्तेश्च। एवं स्वाधेयत्व-सम्बन्धेन घटपदार्थस्य अनुभवविरोधाद् घटत्वेऽपि न अन्वयः।

अत एवेति। 'कर्म गच्छति' इत्यत्र कर्मत्वं द्वितीयार्थः। तस्य प्राधान्यात् प्रकृत्यर्थ-कर्मपदार्थान्वयः। तत्र अनुभवविरोधात् न भवति। एवम् अनेकानुभवबलेन नीलत्व-प्रमेयत्वादिकं न विशेषणविभक्त्यर्थः। न च मूले द्वितीयार्थ-विचारावसरे 'ग्रामं गच्छति' इत्यत्र ग्रामवृत्ति-संयोगे आधेयता-सम्बन्धेन ग्रामान्वयस्य वक्ष्यमाणत्वाद् विरोध इति वाच्यम्। ग्रामस्य संयोगे ग्रामत्वेन एव अन्वय इति विरोधपरिहारात्। एतावता ग्रन्थेन न अभेदो विशेषणविभक्त्यर्थः।

**VV-S 3.4.1:** ननु संसर्गतावादिमतेऽपि नीलपटादिपर-'नीलो घट' इति वाक्ये नीलभेदाभावरूप-नीलत्वस्यैव संसर्गता नीलत्वजातेश्च नीलपटवत् नीलघटेऽपि सत्त्वाद् आपत्तिः इत्याह - **प्रामाण्यापत्तेरिति** ।

**VV-S 3.4.2:** उत्तरमाह **स्ववृत्ति-नीलत्वादेरिति**। समवायसम्बन्धस्य एकत्त्वे वायौ स्पर्शसमवाय-सत्त्वेऽपि रूपसमवायो नास्ति इति 'रूपवान् वायुः' इति प्रयोगो न भवति। वायौ रूपाभावेन रूपसमवायप्रतियोगिकत्व-वाय्वनुयोगिकत्वयोः अवच्छेद्यावच्छेदकभावाभावात्। एवं नीलत्वस्य एकत्वेऽपि पटनिष्ठ-नीलत्वस्य पट एव सम्बन्धत्वं न घटे इति। तत्तात्पर्येण 'नीलो घट' इत्यस्य संसर्गतावादि-मीमांसकमतेन प्रामाण्यमिति तत्त्वात्।

**VV-S 3.5.1:** **वस्तुतस्तु** इति। अस्येदम् आकूतम् - निरुक्तरीत्या भेदोऽभावश्चैव विशेषणविभक्तेः अर्थः। भेदाभावपदेन तत्तद्व्यक्तित्वावच्छिन्न-भेदाभाव एव गृह्यते। पटान्वयतात्पर्यकवन्-नीलव्यक्तिः अन्या घटान्वयतात्पर्यक-नीलव्यक्तिः अन्यैवेति। यथा घट इत्यत्र घटस्य घटत्व-प्रकारेण भासमानत्वं तथा नीलत्व-प्रकरेण नीलघटव्यक्तेरेव भासमानत्वम्। एवञ्च पटान्वयतात्पर्यक-'नीलो घट' इत्यस्य न प्रामाण्यम्। अन्येऽपि पूर्वोक्ता दोषा निरस्ताः। अत्र विशेषणविभक्त्यर्थ-भेदाभावस्य सम्बन्धत्वं तु 'पर्वतो वह्निमान्' इत्यत्र वह्निप्रतियेगिक-पर्वतानुयोगिक-संयोगस्य संयोगत्वेन रूपेण वह्निप्रतियोगिक-संयोगत्वेन रूपेण च

सम्बन्धत्ववत् प्रकृतेऽपि नीलपटपरक-'नीलो घट' इतिवत् 'घटत्वेन पटोऽस्ति', 'घटत्वेन पटो नास्ति', नीलपटपरक'नीलो न घट' इत्यादीनाम् अप्रामाणिकत्वम् एव। तद्व्यक्तित्वावच्छिन्न-भेदप्रतियोगिकाभावत्वेन रूपेण सामान्यभेदप्रतियोगिका भावत्वेन रूपेण च 'नीलो घट' इत्यत्र विशिष्टबुद्धिश्च उपपन्ना इति।

**VV-S 3.5.2:** ननु

"यश्चोभयोरसमो दोषः परिहारस्तयोरसमः।

नैकः पर्यनुयोक्तव्यस्तादृगर्थविचारणे ।।"

इति न्यायेन प्रकारतावादिमतेऽपि प्रकारीभूतोऽभेदः तत्तद्व्यक्तित्वावच्छिन्नभेदाभाव एवेति पटनिष्ठ-नीलस्य तद्व्यक्तित्वावच्छिन्नस्य घटेऽभावेन पटान्वयतात्पर्यक 'नीलो घट' इत्यस्य (**भेदप्रतियोगिकाभावत्वेनेति**) इयं संसर्गता विषयतारूपा, यद्यपि अतिप्रसक्तधर्मः प्रतियोगितावच्छेदको न भवति तथापि विषयतावच्छेदको भवत्येवेति सिद्धान्तः। अत एव 'द्रव्यवत् कपालम्' इति निश्चये समवाय सम्बन्धावच्छिन्न-द्रव्यत्वावच्छिन्न-प्रकारता यद्यपि घटमात्रनिष्ठत्वेन अतिप्रसक्ता तथापि द्रव्यत्वम् एव अवच्छेदकम्, न तु अनतिप्रसक्तम् अपि घटत्वम्। अन्यथा 'द्रव्यवत् कपालम्', 'घटवत् कपालम्' इति प्रतीत्योः वैलक्षण्य अनापत्तेः। तथा च इयं संसर्गता विषयतारूपत्वात् भेदप्रतियोगिताकाभावत्वेन अवच्छिन्नत एवेति न विरोधाभासः।

न चैवास्ति प्रामाण्यम् इति दोषाभावेन प्रकारतावादिमतमेव न्याय्यतरम् इत्याशयं निधाय आह - न **चैवमिति**। तदुत्तरमाह - **तथा सत्यपूर्वेति**। अस्य इदं तात्पर्यम् - प्रकारीभूतपदार्थस्य अन्वयबोधं प्रति तच्छक्तिज्ञानाधीनोपस्थितिः कारणम्। एवञ्च 'नीलो घटो भविष्यति' इत्यादौ अपूर्वभाविनः तद्व्यक्तित्वस्य न उपस्थितिः। अतः तदवच्छिन्नभेदाभावे च विशेषणविभक्तेः न शक्तिग्रहसम्भव इति अपूर्वव्यक्तीनां भविष्यत्कालावच्छिन्नानाम् अभेदान्वयबोधो न स्यात्। न च संसर्गतावादिमतेऽपि विशेषापूर्वव्यक्तीनां 'नीलो घटो भविष्यति' इत्यादौ अभेदान्वयबोधो न स्यादिति वाच्यम्। संसर्गज्ञानस्य नैव विशिष्टबुद्धिनियामकत्वम् इति सिद्धान्तः। उपस्थित्यर्थमेव हि शक्तिज्ञानम् अपेक्षणीयं भवति। संसर्गतावादि मते तु आकाङ्क्षाभास्यत्वाद् अभेदस्य अभेदोपस्थितेः अपेक्षैव नास्तीति विशिष्ट-बुद्धौ संसर्गस्यैव कारणत्वम् अस्ति इत्यपूर्वव्यक्तिनिष्ठाभेदान्वये न क्षतिरिति समाधानम्। 'जात्या ब्राह्मणः महाकविः' इत्यादौ जातिपदार्थ-महापदार्थयोः ब्राह्मणत्वे कवित्वे अन्वयदर्शनात् तत्तद्व्यक्तित्वावच्छिन्न-अभेदरूप विभक्त्यर्थ-घटक-तद्व्यक्तित्वे नीलपदार्थान्वये 'पदार्थः पदार्थेन अन्वेति' इति नियमविरोधो न दर्शित इत्यलम्।

**संसर्गतामतेऽनुपपत्त्यभावादिति।** तत्तत्पदाद् यद्यपि अन्वयोपस्थितिः नैयायिकानां मते मीमांसकानाम् अन्विताभिधानमतस्य खण्डितत्वात् न उपस्थितेः कथम् अपि अपेक्षा तथापि तात्पर्यज्ञानार्थम् अन्वयोपस्थितेः आवश्यकत्वात्। न च अभेदादिसंसर्गस्य विशेष्यविशेषणभावविधया एव शाब्दबोध-विषयत्व-सम्भवात् न उपस्थितेः अपेक्षेति वाच्यम्। अपूर्ववाक्यार्थ-स्थले शाब्दबोधाव्यवहित-प्राक्क्षणावच्छेदेन ज्ञानाभावाद् विशेष्यविशेषणज्ञानाभावेन उपस्थितेः आवश्यकत्वात्। तात्पर्यबुद्धौ नीलविषयताविशिष्ट-ज्ञानविषयकत्वमेव स्वीक्रियते। तत्र वैशिष्ट्यञ्च स्वनिरूपित-सांसर्गिकविषयता-निरूपित-घटादिविषयताकत्व-सम्बन्धेन। एवञ्च सांसर्गिक-विषयतायाः प्रकारत्वासम्भवेन इष्टोपपत्तेः इत्यलम्।

**VV-S 3.5.3:** **न च विभक्त्यर्थेऽपीति।** ननु भेदाभावो न विशेषण-विभक्तेः अर्थो विशिष्टः, अपि तु खण्डशः शक्तिः भेदेऽभावे च। एवञ्च विभक्त्यर्थे भेदे नीलत्वेन तत्तन्नीलव्यक्तीनां तद्व्यक्तित्वावच्छिन्न-प्रतियोगिकत्व-सम्बन्धेन अन्वयेन 'नीलो घटो भविष्यति' इत्यादौ न अपूर्वव्यक्त्यभेदान्वयानुपपत्तिः। तत्तद्व्यक्तित्वस्य हि सम्बन्धकुक्षौ एव प्रवेशो नैव विभक्त्यर्थे प्रवेश इत्याशयेन शङ्कते - **न च विभक्त्यर्थेऽपीति।** तदुत्तरमाह **विशेषणतावच्छेदकावच्छिन्नेति।** अयमभिप्रायः। 'घटो नास्ति' इत्यादौ घटपदार्थस्य स्वप्रतियोगिताकत्व-सम्बन्धेन अन्वयः। घटत्वस्य च स्वावच्छिन्न-प्रतियोगिताकत्व-सम्बन्धेन स्ववृत्तिघटत्वावच्छिन्न-प्रतियोगिताकत्व-सम्बन्धेन वा। अत एव घटसत्त्वेऽपि प्रयागीय-घटाभाव-तात्पर्येण 'घटो नास्ति' इति न प्रयोगः। प्रतियोगितायाः सम्बन्धकुक्षौ प्रवेशः। प्रतियोगिता च प्रतियोगि-विशेषणतावच्छेदकावच्छिन्ना एवेति एतस्या एव सम्बन्धत्वेन भानं सार्वजनीनम्। प्रकृते पटतात्पर्यक-'नीलो घट' इति वाक्ये भेद-प्रतियोगि नीलत्वमेव, विशेषणतावच्छेदकञ्च तदेव, न तु तन्नीलव्यक्तित्वम्। तथा च नीलत्वावच्छिन्न-प्रतियोगितायाः सम्बन्धत्वे नीलत्वस्य सर्वत्र घट-पटादिषु एकत्वेन नीलपटादिपर-'नीलो घट' इति वाक्यस्य प्रामाण्यं दुर्वारम् एवेति तात्पर्यम्।

**VV-S 3.5.4:** **अन्यथा विशिष्टवैशिष्ट्येति।** ज्ञानं द्विविधं, (१) विशिष्ट-वैशिष्ट्यावगाहि (२) उपलक्षितवैशिष्ट्यावगाहि च। आद्ये विशेषणतावच्छेदक-प्रकारक-ज्ञानं कारणम्। 'दण्डो रक्तो न वा' इति संशयानन्तरं रक्तदण्डवान् इति बोधो न भवति। अतो विशिष्टवैशिष्ट्यावगाहि-बुद्धित्वावच्छिन्नं प्रति विशेषणता-वच्छेदक-प्रकारक-निश्चयस्य कारणत्वम् इति तत्त्वम्। द्वितीये विशिष्टबुद्धि-सामान्यं प्रति विशेषणज्ञानं कारणम्। विशेषणांशे प्रकारीभूतोऽपि धर्मो यत्र भासते तज्ज्ञानं विशिष्टवैशिष्ट्यावगाहि इति फलितार्थः। यस्मिन् ज्ञाने विशेष्ये विशेषणं

तत्रापि च विशेषणान्तरमिति रीतिः भासते, तद् ज्ञानम् उपलक्षित-वैशिष्ट्यावगाहि इति फलितार्थः। आद्ये उदाहरणं तु 'घटो नास्ति' इति। अत्र विशिष्टस्य घटत्व-विशिष्टस्य घटस्य स्वप्रतियोगिताकत्व-सम्बन्धेन अभावे वैशिष्ट्यं विराजते। अभावे प्रतियोगितासम्बन्धेन प्रतियोगी घटो भासते। प्रतियोगिनि घटे वर्त्तमानं घटत्वं तु स्वावच्छिन्न-प्रतियोगिताकत्व-सम्बन्धेन अभावे अन्वेति। घटत्वस्य अभावे स्वसमानाधिकरण-प्रतियोगिता-सम्बन्धेन अन्वयस्तु अनर्ह एव। द्वित्वावच्छिन्न-प्रतियोगिताकस्य अन्य-तद्व्यक्तित्वावच्छिन्न-प्रतियोगिताकस्य च घटाभावस्य घटसत्त्वेऽपि विद्यमानत्वाद् 'घटसत्त्वेऽपि घटो नास्ति' इति बुद्ध्यापत्तेः। तथा च विशेषणतावच्छेदकावच्छिन्नायाः प्रतियोगिताया एव सम्बन्धत्वम् अतो घटत्वस्य न उपलक्षणत्वमिति। अभावो विशेष्यः, तत्र प्रतियोगी घटो विशेषणम्। घटत्वं विशेषणतावच्छेदकं तत्र विशेषणतावच्छेदकत्वम् इति तत्त्वम्।

द्वितीयोदाहरणं तु 'गुणकर्मान्यत्वविशिष्ट-सत्तावान् गुण' इति। अत्र गुणे सत्ता अस्ति। सत्तायां तु गुणकर्मान्यत्वं भासते, न तु विशेष्यभूत-गुणे गुणकर्मान्यत्वम्। 'गुणे गुणान्यत्वम् असम्भवदुक्तिकम्' इति लौकिकप्रतीतेः। आद्यनियमानुसारेण गुणकर्मान्यत्व-विशिष्ट-सत्तावद् द्रव्यमिति सुगतः प्रयोगः। मूले **केवलं विशेष्ये विशेषणमिति** केवल-पदोपादानेन क्वचित् प्रतियोगि-प्रकारीभूतस्य उपलक्षित-वैशिष्ट्यावगाहित्वमेव न तु विशिष्टवैशिष्ट्यावगाहित्वम्। तथा हि 'गन्धप्रागभाववान् नास्ति', 'रक्तो दण्डो नास्ति', 'पीतो घटो नास्ति' - एषु प्रतियोगिपदार्थ-प्रकारीभूत-गन्धप्रागभाव-रक्तत्व-पीतत्वानामुपलक्षणत्वेन उपलक्षित-वैशिष्ट्यावगाहित्वम्। न च एवंविधाभाव-स्थलेऽपि यदि प्रकारीभूत-धर्मस्य उपलक्षणत्वं तर्हि उभयोः किं वैलक्षण्यम् ? "प्रतियोगिविशेषिताभावज्ञानं च विशिष्टवैशिष्ट्यबोध-मर्यादां नातिशेते" इति सिद्धान्तविरोधश्चेति वाच्यम्। प्रतियोगिप्रकारीभूत-पदार्थस्य विशेषणत्वम् उपलक्षणत्वञ्चेति द्वयं सिद्ध्यति। परन्तु प्रतीतिकालिक-प्रतियोगिप्रकारीभूत-पदार्थस्य प्रतियोगिनि यदि वर्त्तमानत्वं तदा तादृशप्रतियोगिप्रकारीभूत-पदार्थस्य विशेषणत्वम्, तेन तादृशस्थले विशिष्टवैशिष्ट्यावगाहि-बोधो न उपपद्यते। यथा 'घटो नास्ति' इति प्रतीतिकाले प्रतियोगिप्रकारीभूत-पदार्थस्य यदि प्रतियोगिनि अवर्त्तमानत्त्वं तदा प्रतियोगि-प्रकारीभूतपदार्थस्य उपलक्षणत्वम्। तेन तादृशस्थले उपलक्षितवैशिष्ट्यावगाहित्वम् इत्युभयोः वैलक्षण्यम्, उदाहरणं तु अभावस्थलीयम् उक्तमेव।

**VV-S 3.6.1:** इति चेत् प्रकारः, तर्हि प्रकारान्तरमाह **अभेदस्तादात्म्यम्** इति। "आत्मैवेदं सर्वम्" इति श्रुतिः। स च असौ आत्मा इति तदात्मा, तदात्मनः इदं तादात्म्यम्। स एव अयम् इति तत्त्वम्, प्रत्यभिज्ञावत्। 'नीलो घट' इत्यत्र घटे नीलतादात्म्यं भासते। नीलतादात्म्यवान् घट इति शाब्दः।

तच्चेति। तत्पदेन तादात्म्यं गृह्यते। स्ववृत्तीति। अत्र स्वपदेन घटो गृह्यते। घटवृत्ति यन्नीलतादात्म्यं तद् घटस्य असाधारणो धर्मः। तस्य नील-तादात्म्यस्य तद्घटव्यक्तिमात्रवृत्तित्वात्। एकव्यक्तिमात्रवृत्तिधर्म एवासाधारणधर्मः। असाधारण्यं च एकमात्रवृत्तित्वम् इति। अत्र एकमात्रवृत्तित्वं नाम एकवृत्तित्वे सति एकेतरावृत्तित्वम्। परन्तु एकत्वपदार्थस्य सर्वत्र संघटनीयत्वेन केवला-न्वयित्वाद् एकतरस्य अप्रसिद्ध्या एकत्वस्यापि अप्रसिद्धत्वात्। अत एव परिष्कार-निबन्धः स्वसामानाधिकरण्येति। अत्र स्वपदेन भेदो गृह्यते। एतद्घटव्यक्तौ अन्यघटव्यक्तेः भेदः प्रसिद्धः। तत्प्रतियोगिवृत्तिता तत्सामानाधिकरण्यञ्च घटत्वे तथा अन्यधर्मे च, भेदविशिष्टो घटत्वादिधर्मः, तद्भिन्नत्वं तद्घटव्यक्तौ इति समन्वयः। न च कालिकसम्बन्धेन प्रतियोगित्वेन आश्रीयमाण-तद्घटव्यक्तेरपि अनुयोगिनि पदार्थे विद्यमानत्वेन एवं कालिकेनैव सम्बन्धेन अनुयोगित्वेन आश्रीयमाण-तद्घटव्यक्तेरपि प्रतियोगिनि विद्यमानत्वेन तद्घटव्यक्तित्वं भेद-विशिष्टम् एवेति कथङ्कारं समन्वय इति वाच्यम्। स्वरूपसम्बन्धावच्छिन्न-वृत्तितायाः संसर्गांशे निवेशनीयत्वेन कालिकेन दोषदानस्य अनुचितत्वात्। न च समवायसम्बन्धेन वृत्तित्ववतां घटत्वादिपदार्थानां हि भेदविशिष्टान्यत्वापत्त्या 'नीलो घट' इति वाक्यस्य भिन्न-नीलघटपर-नीलपदघटितस्यापि प्रामाण्यापत्तिरिति वाच्यम्। कालिकसम्बन्धातिरिक्त-सम्बन्धावच्छिन्न-वृत्तिताया निवेशादिना अक्षतेः। न च उक्तसम्बन्धस्य वृत्त्यनियामकत्वेन ज्ञाने घट इति व्यवहार-सिद्धेन भेदविशिष्टा-न्यत्वम् अत्यन्तम् अप्रसिद्धमेवेति वाच्यम्। भेदविशिष्टान्यघटक-वृत्तित्वस्य स्वरूप-सम्बन्धावच्छिन्नस्यैव ग्रहणेन अदोषात्। ननु अभावाभावस्य अधिकरणस्वरूपत्वेन घटे यो हि पटत्वाभावः तत्र यो घटभेदः तस्य अभावात्मकत्वम् एव। एवञ्च घटगत-तद्व्यक्तित्वे घटभेद-प्रतियोगि-वृत्तित्वस्य तत्सामानाधिकरण्यस्य च सत्वेन तद्व्यक्तित्वेऽपि भेदविशिष्टत्वापत्तिरिति। किञ्च स्वस्मिन्नपि पूर्वक्षण-परक्षण-वृत्तित्वविशिष्ट-स्वभेदस्य विद्यमानत्वेन तद्व्यक्तित्वे तद्भेदविशिष्टत्वम् अस्त्येवेति तद्भिन्नत्वं सर्वथैव अप्रसिद्धमिति चेत् ? न। धर्मविशिष्टान्यत्वमेव हि एकमात्र-वृत्तित्वम्। वैशिष्ट्यञ्च स्वात्मकत्व-स्वपर्याप्तावच्छेदक-प्रतियोगिता-निरूपकता-वच्छेदक-भेदत्वावच्छिन्न-आधेयतानिरूपित-अधिकरणताश्रयवृत्तित्व-उभयसम्बन्धेन। तद्व्यक्तित्वस्य भेदत्वस्य अभावत्वस्य च अखण्डोपाधित्वं सार्वजनीनम्। अत एव न अन्योन्याश्रयः। 'तद्व्यक्ति-घटोभयं न तद्व्यक्तिः' इत्युभयभेदाश्रयेणापि दोषः, प्रतियोगितावच्छेदकतायाः तद्व्यक्तित्व-पर्याप्तत्वाभावात्। अस्मिन् विचारे पर्याप्ति-निवेश-प्रकारो योजनीय एव इति **अस्मद्गुरवः**।

**एकमात्रवृत्तित्वमि**ति। भेदविशिष्टान्यत्वम् एकमात्रवृत्तित्वम्। वैशिष्ट्यं च स्वसामानाधिकरण्य-स्वप्रतियोगिवृत्तित्व-उभयसम्बन्धेन। अत्र स्वपदेन भेदः = नीलघटव्यक्तिभेदः, तत्सामानाधिकरण्य द्रव्यत्वे इत्येकः। स्वम् = नीलघटव्यक्तिभेदः, तत्प्रतियोगिनी नीलघटव्यक्तिः, तद्वृत्तित्वमपि द्रव्यत्वे। एवं च उभयसम्बन्धेन भेदविशिष्टद्रव्यत्वमेव। तदन्यत्वञ्च तद्व्यक्तित्वे, अर्थात् तन्नीलघटव्यक्तिवृत्ति-तद्व्यक्तित्वे इत्यभिप्रायः। किञ्च एकस्मिन् घटे यः अन्यघटव्यक्तिभेदः स एव स्वपदेन गृह्यते। तत्सामानाधिकरण्यं तत्प्रतियोगिवृत्तित्वं च घटत्वे इति भेदविशिष्टं घटत्वं, तदन्यत्वञ्च तद्व्यक्तित्वे इति। सम्बन्ध निवेशफल-जिज्ञासायां स्वप्रतियोगिवृत्तित्वस्यैव सम्बन्धत्वे तु स्वं = नीलघटव्यक्तिभेदः, तत्प्रतियोगिनी नीलघटव्यक्तिः, तद्वृत्तित्वं तद्व्यक्तित्वे इति भेदविशिष्टमेव तद्व्यक्तित्वम्। अतः स्वसामानाधिकरण्यम् इति निवेशः। अस्मिन् सम्बन्धे तु स्वं = नीलघटव्यक्तिः, तत्सामानाधिकरण्यं तद्व्यक्तित्वे नास्ति। नीलघटव्यक्तिभेदवति पटादौ तद्व्यक्तित्वस्य अभावात्। स्वसामानाधिकरण्यस्यैव सम्बन्धत्वे तु स्वपदेन पटादिभेदः, तत्सामानाधिकरण्यं तद्व्यक्तित्वे इति भेदविशिष्टमेव भवतीति स्वप्रतियोगिवृत्तित्व-निवेशः। एवञ्च स्वं = पटादिभेदः, तत्प्रतियोगी पटादिः, तद्वृत्तित्वं तद्व्यक्तित्वे नास्ति इति। एकं घटगत-तद्व्यक्तित्वं प्रतियोगि अपरं घटगततद्व्यक्तित्वम् अनुयोगि। न च प्रतियोगित्वेन आश्रीयमाणघटगततद्व्यक्तित्वं कालिकसम्बन्धेन अनुयोगिघटगत-तद्व्यक्तित्वे वर्तते एव। तथा अनुयोगिघटगत-तद्व्यक्तित्वं कालिकसम्बन्धेन प्रतियोगिघटगत-तद्व्यक्तित्वे वर्तते इति भेद-विशिष्टमेव तद्व्यक्तित्वमिति वाच्यम्। स्वरूपसम्बन्धावच्छिन्नाया वृत्तितायाः ग्रहणेन अभीष्टसिद्धेः।

न च वृत्तितायां स्वरूपसम्बन्धावच्छिन्नत्व-निवेशे समवायसम्बन्धेन तत्र तत्तद्व्यक्तौ वृत्तित्ववतो घटत्वस्य भेदविशिष्टत्वानापत्तौ भेदविशिष्टान्यत्वेन अन्य-नीलघट-तात्पर्येणापि बोधनार्थं 'नीलो घट' इति वाक्यस्यापि प्रामाण्यं स्यादिति वाच्यम्। कालिकसम्बन्धातिरिक्त-सम्बन्धावच्छिन्ना या वृत्तिता तस्या एव निवेशेन उक्तस्थले समवायेन वृत्तित्ववतो घटत्वस्य भेदविशिष्टत्वमेव, न तद्भिन्नत्वमिति, तादृशवाक्यस्य अप्रामाणिकत्वे निरोधकाऽभावात्। न चैवमपि 'भक्षितेऽपि लशुने न शान्तो व्याधिः' इति न्यायेन घटगत-तद्व्यक्तित्व विषयक-ज्ञान-प्रतियोगिको यो भेदो घटे, तद्विशिष्टत्वमेव घटगत-तद्व्यक्तित्वे विषयिता-सम्बन्धेन; तस्य प्रतियोगिनि ज्ञाने स्वरूपसम्बन्धेन अनुयोगिनि घटे विद्यमानत्वात् विषयिता-स्वरूपसम्बन्धयोः द्वयोरपि कालिकसम्बन्धभिन्नत्वाद् भेदविशिष्टत्वमेव घटगत-तद्व्यक्तित्वे न तदन्यत्वमिति वाच्यम्। स्वरूपसम्बन्धावच्छिन्नाया वृत्तिताया

एव ग्रहणम्। पूर्वोक्तदूषणद्वयं तु न युक्ततरम्। भेदविशिष्टान्यत्वरूपे विभक्त्यर्थे 'नीलो घट' इत्यादौ प्रकृत्यर्थस्य नीलादिपदार्थस्य स्वरूपसम्बन्धावच्छिन्न-आधेयता सम्बन्धेनैव अन्वयः। तथा च तदधिकरणता-निरूपिताधेयताया भिन्नत्वात् अन्य-नीलघट-तात्पर्येण तादृशवाक्यस्य प्रामाणिकत्वविरहात्। स्वरूपसम्बन्धा-वच्छिन्नत्व-निवेशात् न कालिकसम्बन्धेन तद्वृत्तित्वमादाय भेदविशिष्टान्यत्वा-प्रसिद्धिरिति व्याख्यानात्।

**भेदविशिष्टं यत्तदन्यत्वमिति**। न च भेदः तादात्म्य-सम्बन्धावच्छिन्न-प्रतियोगिताकाभावरूपः। तादात्म्यञ्च भेदघटितम् इति आत्माश्रयदोष इति वाच्यम्। भेदत्वस्य अनुयोगिता-विशेषरूपत्वात् अखण्डोपाधित्वाच्च। ननु उभय-भेदस्य केवलान्वयित्वेन तमेव आदाय भेदविशिष्टत्वमस्त्येव। तद्व्यक्तित्वादाविति भेदे व्यासज्यवृत्तिधर्मानवच्छिन्न-प्रतियोगिताकत्व-विशेषणनिवेशेन तु न निरुक्तदोष-वारणम्। तद्व्यक्तित्वेन तद्व्यक्ति-घट-उभयभेदाश्रयणेन निरुक्तदोषस्य जागरूकत्वात् इति चेत् ? न। एकत्ववृत्ति-प्रतियोगिताक-भेदविशिष्टं यत्तदन्यत्वम् इत्यस्य स्वीकारात्। वृत्तित्वञ्च स्वावच्छेदकतात्वावच्छिन्न-प्रतियोगिताक-पर्याप्त्य-नुयोगितावच्छेदकत्व-स्वनिरूपकानुयोगिता-निरूपितावच्छेदकतात्वावच्छिन्न-प्रति-योगिताक-पर्याप्त्यनुयोगितावच्छेदकत्व-उभयसम्बन्धेन। समन्वयः स्वयम् ऊह्य इति केचित्।

न च भेदशब्दार्थः तादात्म्य-सम्बन्धावच्छिन्न-प्रतियोगिताकाभाव एव। तादात्म्यं च भेदविशिष्टान्यत्वमेव इति अन्योन्याश्रयदोष इति वाच्यम्। अभावविशिष्टान्यत्वमेव तादात्म्यमिति परिष्कारात्। वैशिष्ट्यञ्च स्वप्रतियोगिता-सामानाधिकरण्य-स्वसामानाधिकरण्य-उभयसम्बन्धेन। तत्तद्व्यक्तित्वाभावमादाय लक्षणसमन्वितिः। न च अभावत्वञ्च द्रव्यादिषट्कान्योन्याभाववत्त्वम्। तादात्म्यञ्च अन्योऽन्याभावत्वम्। तच्च तादात्म्य-सम्बन्धावच्छिन्न-प्रतियोगिताकाभावत्वम् एव इति पूर्वोक्तान्योन्याश्रयः तिष्ठति एवेति वाच्यम्। अभावत्वस्य भेदत्वस्य अन्यत्वस्य वा अखण्डोपाधित्वेन परस्परनिरपेक्षत्वेन अन्योऽन्याश्रयाभावात्।

**तादृशधर्मः तत्तद्व्यक्तित्वादिरूप एवेति**। 'नीलो घट' इत्यादौ निरुक्त-तद्व्यक्तित्वं सु-विभक्त्यर्थः। तत्र प्रत्ययार्थे नीलरूप-प्रकृत्यर्थस्य स्वरूपसम्बन्धा-वच्छिन्न-आधेयतासम्बन्धेन अन्वयः। तद्व्यक्तित्वरूप-प्रत्ययार्थस्य च स्वरूप-सम्बन्धेन घटपदार्थे अन्वयः। एवञ्च नीलवृत्ति-तद्व्यक्तित्ववान् घट इति शाब्दबोधः। ननु 'सुन्दरो घटो भविष्यति', 'विद्यावान् पुत्रो भविष्यति' इत्यादौ घटपुत्रादिगत-भविष्यद्व्यवहारस्य दृष्टिगोचरत्वाभावेन विभक्तिशक्तिग्रहस्य कर्तुं अशक्यत्वात् कथं तत्र शाब्दबोधविषयत्वम् इत्याशयेन आह **अपूर्वव्यक्तिनिष्ठेति**।

नैयायिकमते सामान्यलक्षणा प्रत्यासत्तिः। तथा च एकमात्रवृत्तिधर्मत्वेन एव अपूर्वव्यक्तिभानम्।

**VV-S 3.7.1:** **संसर्गतामतेऽपीति**। तादात्म्यलक्षणानुगताभेदस्य संसर्गतावादिमतेऽपि व्यवहारः। अत एव नञ्पद-समभिव्याहारे 'नीलो न घट' इत्यादौ नीलवृत्ति-तादात्म्याभाववान् घट इत्याकारको बोधः। सर्वावयवावच्छेदेन यत्र तादात्म्यं भासते, तेनैव रूपेण नञ्सत्त्वे निषेधः। अत एव यत्किञ्चित् नीलसत्त्वे 'नीलो न घट' इत्यस्य प्रयोग एव न। सामान्यलक्षणायाः प्रत्यासत्तेः एतदर्थम् आवश्यकत्वात्।

**तुल्ययोगक्षेमाविति**। अलब्धलाभो योगः लब्धरक्षणन्तु क्षेमम्, तयोः तुल्यम् एवेति।

**VV-S 3.7.5-6:** **इदन्तु तत्त्वमिति**। 'नीलो घट' इत्यादौ प्रकारतावादिमते अपूर्वशक्तिकल्पनरूप-गौरवात् संसर्गतावादिमतमेव ज्यायस्तरम्।

**असमस्त-'नीलो घट' इत्यादिस्थल** इति। ननु 'नीलो घट' इति कथनेनैव विभक्त्यन्तश्रुत्या असमासरूपार्थलाभे असमास इत्युक्तिः किमर्थेति चेत्? न। समासे विशेषणविभक्तेः अभावेन तत्र विशेषणविभक्तेः वृत्तिकल्पनम् अयुक्तम् इति ग्रन्थासङ्गतेः स्पष्टार्थमेव तदुपादानात्। किञ्च अत्र पङ्क्तौ असमास इति पदमेव विशेष्यार्थकं विशेष्यमिति यावत्। असति प्रतिबन्धके उद्देश्यतावच्छेदकावच्छेदेन अन्वय औत्सर्गिकः। तथा च विरुद्धविभक्तिक-वाक्ये विशेषणविभक्त्यभावेन तत्र विशेषणविभक्तेः वृतिकल्पनम् अनुचितमिति सन्दर्भासङ्गतेश्च।

न च संसर्गतामते 'नीलो घट' इत्यादौ विशेषणविभक्तेरभेदे शक्तिभ्रमे स्वारसिकलक्षणाग्रहे च अभेदप्रकारकोऽपि बोधः अभेदसंसर्गकोऽपि बोधः। विभिन्नविषयक-प्रत्यक्षत्वावच्छिन्नं प्रति शाब्दसामग्र्याः प्रतिबन्धकत्वम् इति नियमानुसारेण प्रतिबध्यप्रतिबन्धकभावे हेतुताद्वयं कल्पनीयम्। प्रकारतावादिमते तु हेतुरेक एवेति तस्मात् प्रकारतावादिमतमेव युक्तमिति वाच्यम्। तादृशे स्थलेऽपि अभेदसंसर्गकबोधस्यैव स्वीकारात्। इत्याशयेन आह- **उपगमादिति**। विशेषणविभक्ति-वृत्त्या उपस्थितत्वेऽपि अभेदस्य संसर्गत्वमेव मन्यते न तु प्रकारत्वमिति न हेतुताद्वयकल्पनेन गौरवम् इत्याशयः संसर्गतावादि-मीमांसकानाम्।

**इति दिगिति**। न च विभक्त्यर्थ-तादात्म्यस्य वृत्तिज्ञानाधीनोपस्थितस्य शाब्दबोधीय-विषयता-प्रयोजकस्य प्रकारतया भासमानस्य कथम् इच्छामात्रेण संसर्गतया भानमिति वाच्यम्। तात्पर्यज्ञानं शाब्दबोधे प्रधानं कारणम्। एवञ्च अभेदसंसर्गक-बोधस्य संसर्गतावादिमते अनादितात्पर्यकल्पनात्।

वस्तुतस्तु तत्रापि न नो विद्वेष इति। मूलवक्ष्यमाणरीत्या तादात्म्य-प्रकारकबोधस्य एव इष्टत्वात्। मीमांसकाभिमतोऽयं ग्रन्थो न सयुक्तिकः। सूक्ष्मद्रष्टारस्तु अभेदस्य संसर्गत्वमेव न तु प्रकारत्वम्। तथा हि - अनेकविभक्त्यर्थ-कल्पनापेक्षया "द्योतिका वाचिका वा स्युर्द्वित्वादीनां विभक्तयः" इत्युक्त्या विभक्तीनां द्योतकत्वेन अभेदस्य संसर्गतयैव भानमिति।

निष्कर्षतस्तु संसर्गतावादे 'राज्ञः पुरुष' इत्यादौ षष्ठीविधानं न स्यात्, शेषत्वाभावात्। यदि न स्वत्वं षष्ठ्यर्थः, तथा "षष्ठी शेषे" (P.2.3.50) इति पाणिनीय-सूत्रस्य प्रवृत्तिः न स्यात्। तथा च कथं तत्र संसर्गतावाद-चारितार्थ्यम् इति भावना विचारणीयैव।

केचित्तु संसर्गतावादिनां मते 'राज्ञः पुरुष' इत्यत्र ङस्-विभक्तिः साधुत्वार्थिकैव। अर्थात् "षष्ठी शेषे" (P.2.3.50) इत्यनेन षष्ठ्याः साधुत्वं सम्पाद्य पश्चात् संसर्गतया आकांक्षाभास्यत्वात् तद्भानं भवतु, न तु ङस्-वाच्यत्वेन प्रकारतया इति तत्त्वम्। न च स्वत्वसम्बन्धरूप-शेषे षष्ठ्या विधानात् स्वत्वं, तदर्थतया प्रकारतयैव भासतामिति वाच्यम्। "पाणिनीयं महाशास्त्रं पदसाधुत्व-लक्षणम्" इति शिष्टोक्त्या पदसाधनानन्तरं स्वत्वरूपार्थस्य अन्वयव्यतिरेकगम्यत्वेन लाघवानुरोधित्वेन च लाघवात् संसर्गतावादिपक्ष एव श्रेयानिति ग्रन्थनात्। किञ्च षष्ठीविधानान्तरं ङस्-विभक्तिः स्वत्वसंसर्गतात्पर्यग्राहिकैव। तेन संसर्गत्वसामान्येन अन्यसम्बन्धस्य ग्रहणं न भवतीत्यपि तात्पर्यमुन्नेयम् इति **शुक्लाः**। किञ्च "षष्ठी शेषे"(P.2.3.50) इति सूत्रे षष्ठ्यर्थः सम्बन्धत्वेन रूपेण सामान्यरूपेणेति यावत्। तत्तद्रूपेण च स्वस्वामिभावादिः। अत एव एकोनशतं षष्ठ्यर्था, एकशतं षष्ठ्यर्था इति "षष्ठी स्थाने योगा" इति भाष्यं सङ्गच्छते। षष्ठ्यर्थ-स्वत्वादयश्च सांसर्गिकविषयतयैव भासन्ते, न तु विभक्तिवाच्यत्वेन प्रकारतयेति तात्पर्यम्। अत एव "षष्ठी शेषे" (P.2.3.50) इति सूत्रभाष्ये राजा विशेषणं, पुरुषो विशेष्यम् इति स्पष्टीकृतम्। यदि प्रकारतया भानम् इष्टं स्यात् तर्हि राजनिरूपित-स्वत्वे विशेष्यता, पुरुषनिरूपित-स्वत्वे प्रकारता इत्येवं भाष्यकृता वक्तव्यमासीत्। केवल-राज्ञ इत्युक्ते अर्थानुसन्धानेऽपि अग्रे किं तत्, पुरः कः पदार्थ इति विशेष-जिज्ञासा उदेति। पुरुषादि-पदार्थ-संयोजनेन च सा जिज्ञासा निवर्त्तते। भाष्यसम्मन्थनेन षष्ठ्याः सामान्यसम्बन्धत्वं तत्तद्रूपेण स्वस्वामिभावादिविशेष-सम्बन्धत्वं विशेषणत्वं च इत्यर्थद्वयं समायाति। अतो विशेषणात् षष्ठी। राज्ञ इत्युक्ते तत्तत्स्वत्वादि-सम्बन्धाकाङ्क्षा सुखेन जायते। स्वत्वादिसम्बन्धाकाङ्क्षा-उत्पादक-स्वामित्वादिशक्तिरपि षष्ठ्यर्थ इति तत्रैव भाष्ये स्पष्टम्। स्वामित्वस्यापि षष्ठ्यर्थत्वेऽपि विशेषणादेव षष्ठी। यदि च पुरुषे स्वामित्वाद्यर्थविवक्षा तदा

पुरुषस्य राजेति प्रयोग इष्यत एव। राज्ञ इत्यादौ पदान्तरसमभिव्याहारं विना एव अध्याहृत-सम्बन्धिसामान्य-निरूपित-विशेषणत्व-प्रतीति इति वैचित्र्यम्।

न च पूर्वोक्तरीत्या सांसर्गिकविषयतया स्वत्वस्य भाने अर्थात् संसर्गतावादे "षष्ठी शेषे" (P.2.3.50) इत्यनेन षष्ठीविधानं कथं स्यात्? प्रकारतावादे तु स्वस्वामिभावादिः सम्बन्धः शेष इति षष्ठी भवत्येवेति वाच्यम्। सम्बन्धसामान्ये षष्ठीत्यस्य अनुक्तत्वात्। विषयता त्रिविधा, प्रकारताख्या विशेष्यताख्या संसर्गताख्या चेति। विषयत्वं षष्ठ्यर्थः। विषयतापदेन सम्बन्धसामान्यं गृह्यते। 'ग्रामस्य ज्ञानम्' इत्यत्र ग्रामविषयकं ज्ञानमिति प्रतीतेः। स्वत्वस्य शेषत्वेऽपि शाब्दबोधे प्रकारताख्य विशेष्यताख्य-विषयतया न भानम्, अपि तु संसर्गताख्य-विषयतयैव भानमिति न पाणिनीय-सिद्धान्तविरोध इति। संसर्गतावादिनां मताभिप्रायो राजा विशेषणं पुरुषो विशेष्य इति प्रकृत-सूत्रभाष्यात्। कारकप्रकरणे अन्यविभक्त्यर्थस्येव षष्ठ्यर्थस्यापि संसर्गमर्यादया एव भानम्। न च "प्रकृतिप्रत्ययौ सहार्थं ब्रूतस्तयोः प्रत्ययार्थः प्रधानम्" इति न्यायविरोध इति वाच्यम्। प्रत्ययार्थः प्रधानम् इत्यत्र प्रधानपदं प्रकारतान्यविषयतावत्परम् इत्यर्थाश्रयणात्। तथा च संसर्गतावादे शाब्दिक-मीमांसकयोः शुद्धयुक्तितयोः ऐक्यमिति। किञ्च स्वत्वस्य प्रकारतया भाने तत्र निरूपकत्व सम्बन्धादि कल्पनं गौरवमिति संसर्गतावाद एव युक्त इति **शुक्लाः**।

**VV-S 4.1.1:** 'मृदु पचति' इति। 'क्रियाविशेषणानां कर्मत्वम् एकत्वं नपुंसकत्वं च' इति नियमस्वरूपम्।

उभसर्वतसोः कार्या धिगुपर्यादिषु त्रिषु।
द्वितीयाम्रेडितान्तेषु ततोऽन्यत्रापि दृश्यते।।

इति कारिकाघटक-'ततोऽन्यत्रापि दृश्यते' इत्यस्य अन्यत्र कोऽर्थः? 'क्रियाविशेषणस्थले द्वितीया' इत्यस्य फलितार्थम् एतद्वचनम्, न अपूर्वम्। अत एव **पदवाक्यरत्नाकरे** 'स्तोकं पचति' इत्येव तदुदाहरणं दत्तम्। न च तादात्म्य-फलतावच्छेदक-अन्यतरसम्बन्धेन धात्वर्थतावच्छेदक-फलशालित्वात् "कर्तुरीप्सित" (P.1.4.49) इत्यनेनैव मुख्यकर्मत्वम् अलम्बनेन इति वाच्यम्। 'स्तोकः पच्यत' इत्यत्र कर्मणि लकारापत्तौ अनिष्टरूपापत्तेः। ननु "लः कर्मणि" (P.3.4.69) इति सूत्रे कर्तृपदसाहचर्याद् धात्वर्थे भेदेन अन्वयिनि कर्मणि लकारो, न अभेदान्वयिनि इति विशेषार्थेन तादृश-प्रयोगाभावात्। अतिदेशस्य लक्ष्यसाधकत्वेन न कर्मणि लकार इत्यपि बोध्यम्। अतएव 'स्तोकं पाक' इत्यादौ "कर्त्तृकर्मणोः" (P.2.3.65) इति षष्ठी न। फलतावच्छेदक-सम्बन्धमात्रेण धात्वर्थतावच्छेदक-फलाश्रये कर्मणि लकारविधानेन 'स्तोकः पच्यते' इत्यादीनाम् अनिष्टत्वाच्च। व्यापारस्य फल-

व्यधिकरणत्वे सकर्मकत्वं व्यापारस्य फलसमानाधिकरणत्वे अकर्मकत्वम्। अत एव 'स्तोकं तिष्ठति' इति वाक्यं न अनुपपन्नम्। किञ्च 'मन्दं गच्छति', 'द्रुतं गच्छति' इत्यादौ अपि कर्मत्वं न स्यात्। संयोगात्मकं फलं न मन्द-द्रुत-निष्ठं किन्तु तादात्म्य-सम्बन्धेन संयोगानुकूलव्यापारे। मन्दादेः अन्वयार्थमपि 'ततोऽन्यत्रापि दृश्यते' इति फलितार्थ-वचनस्वीकार इत्यभिधानाच्च।

न च क्रियाविशेषणनिष्ठ-द्वितीयाया एवंरीत्या विधाने कारकत्वाभावात् 'स्तोकपक्वा' इत्यादौ समासो न स्यादिति वाच्यम्। असति विशेषानुशासने कारकविभक्तिभिन्न-विभक्त्यन्तेन समासानभिधानात्। कारकाधिकाराभावेऽपि लोक-भाष्य-प्रामाण्येन प्रथमायाः कारकविभक्तिवत् 'ततोऽन्यत्रापि' इति विहिते कारक-विभक्तित्व-सौष्ठवात्। किञ्च 'स्तोकं पक्वा' इति दशायाम् एकार्थीभावे विवक्षिते कर्मधारय-समासः "तत्पुरुषः समानाधिकरणः कर्मधारयः" (P.1.2.42) इति सूत्रे। सामानाधिकरण्यञ्च तदर्थयोरेव, न तु समानविभक्तिकत्वं तत्र इष्टम्। अत एव "स्तोकनम्रा स्तनाभ्याम्" (उत्तरमेघ.) इति कालिदास-प्रयोगः, 'स्तोकपक्वा' इत्यत्र कर्मधारय एव इति **शब्दशक्तिप्रकाशिका**-ग्रन्थश्च सङ्गच्छेते। अत एव च 'महाकविर्महाविज्ञः' इत्यादौ एकदेशान्वयेऽपि समास-साधुतावत् स्तोकादेः पाकादौ एकदेशान्वयेऽपि समाससिद्धि-सुकरत्वात्। तथा च वैयाकरणानां मतं न युक्तमपि। 'क्रियाविशेषणानाम्' इति वचनं 'ततोऽन्यत्रापि दृश्यते' इति कारिकामूलकं न अपूर्ववचनम् इति युक्तियुक्तम्।

न च "उभयसर्वतसोः कार्या" इति द्वितीया-विधायक-कारिकायाम् एकत्वयोः चर्चा एव नास्तीति तयोः कथं संसर्गः? 'ततोऽन्यत्रापि' इत्यस्य फलितार्थमेव न अपूर्व वचनमिति कथं सुसङ्गतम् इति वाच्यम्। कारिकाया वार्तिकरूपत्वेन "सूत्रकारस्य अनुक्तिं वार्तिककारः पूरयति" इति सिद्धान्तात्। तावत्पर्यन्त-अर्थकल्पने क्षतिविरहात्, भाष्यप्रामाण्यात् शिष्टैः लोके तथैव अनुशिष्टत्वाच्च।

न च "क्रियाविशेषणानां कर्मत्वं नपुंसकत्वञ्च" इत्यनुशासने "जगाद मधुरां वाचं विशदाक्षर-शालिनीम्" इत्यादौ वाचः क्रियाविशेषणत्वात् नपुंसकत्व-आपत्तौ विभक्ति-लुकि वागितिरूपश्रुत्या च्छन्दोभङ्गादिरापतेदिति वाच्यम्। अनियतलिङ्गस्थले "ततोऽन्यत्रापि दृश्यते" इति फलितार्थ-क्रियाविशेषणानां कर्मत्वम् एकत्वं नपुंसकत्वञ्च इत्यस्य प्रवृत्तिस्वीकारेण 'गीर्वाग्वाणी सरस्वती' इति कोशबलेन "स्त्रियां क्तिन्" इत्याधिकारे "क्विब्वचि" इति वार्त्तिकेन तत्सहायकेन च वाक्शब्दस्य स्त्रीलिङ्गे नियतत्व-सौष्ठवात्।

**VV-S 4.1.2:** ननु 'स्तोकः पाक' इत्यादौ अपि पच्-धातोः पाकरूपोऽर्थः। स्तोकपदार्थस्य च तत्रैव अन्वयेन क्रियाविशेषणत्वात् कर्मत्वेन द्वितीया इति तात्पर्येण आह - **द्वितीयाप्रसङ्गः** इति। तदुत्तरम् 'क्रियाविशेषणानाम्' इति नियमे क्रियापदस्य सार्थकप्रत्ययान्त-धातुवाच्यार्थ-परत्वेन घञो भावे विधानेन अर्थवाचक-प्रत्ययाभावेन कर्मत्वाप्रवृत्तेः। 'स्तोकं स्थीयते' इति अकर्मकधातु-प्रयोगे भावप्रत्ययेऽपि न दोषः। वर्तमाने लटो विधानेन तत्र सार्थकप्रत्यय-सत्त्वात्।

न च वर्त्तमानत्वाविवक्षायां दोषः। वर्त्तमानबोधक-स्वरूपयोग्यतामादाय अपि सार्थकत्वसिद्धेः। अर्थबोधानुकूलाकाङ्क्षा-पर्याप्त्यधिकरणीभूत-प्रत्ययप्रकृति-भूत-धातुवाच्य-क्रियानिष्ठ-विशेष्यता-निरूपिताभेदसम्बन्धावच्छिन्न-कर्मत्व-प्रयोजक-पदाद् द्वितीया भवतीति नियमात्।

क्रियापदस्य तत्र सार्थकप्रत्ययान्तधातूपरथाप्य अर्थपरत्वात् 'स्तोकं स्थीयते' इति अर्थबोध-स्वरूपयोग्यतेति। ननु अत्र सार्थकप्रत्ययत्वं यदि भगवदिच्छीय-विलक्षणविषयतावच्छेदकवत्त्वम् अथवा शक्तिमद्वृत्तिप्रत्ययत्वव्याप्य-धर्मवत्त्वं वा ? सर्वथापि घञः करणाधिकरणार्थकत्वेन सार्थकत्वम् आपद्येत। अत आकाङ्क्षापर्यन्तानुधौतिर्ग्रन्थकृताम्। पाकादयो न संज्ञावाचकाः रागादयस्तु संज्ञावाचका एव योगरूढा वा।

वस्तुतस्तु सामान्यरूपेण घञो न निरर्थकत्वम्। अत एव "अकर्त्तरि च कारके संज्ञायाम्" (P.3.3.19) इत्यत्र संज्ञायाम् इति प्रायिकम्। तेन 'को लाभो भवता लब्ध' इत्यादीनां सिद्धिः। गम्-धातु-समभिव्याहृत-क्त-प्रत्ययस्य कालकर्माद्यर्थकत्वेन प्रसिद्धत्वात्। भावार्थक-क्त-प्रत्ययविशिष्ट-गम्-धातु-तदर्थ-विशेषण-स्तोकादि-पदोत्तरं तु द्वितीया-विभक्तिरेव। अकर्मकधातोः क्त-प्रत्ययस्य न केवल-भावार्थमात्रे विधानम्। भूतकालादिरूपार्थस्य तत्र सत्त्वात्। "स्त्रियां क्तिन्" (P.3.3.94) इति सूत्रविहित-क्तिन्-आदीनां केवल-भाव-मात्रार्थकत्वेन न प्राकृतं सार्थकत्वम् अत्र **सूक्ष्मधियः**।

न च पाक इत्यादौ एकत्वान्वित-पाकाद्यर्थ-विषयक-शाब्दबोध-स्वरूप-योग्यतां प्रति घञ्-प्रत्ययान्त-समुदायनिष्ठ-स्वादिसमभिव्याहारः कारणमिति। तस्य घञ्-प्रत्ययेऽपि विद्यमानत्वेन घञ्-प्रत्ययस्य सार्थकत्वं दुर्वारम् एवेति वाच्यम्। यद्रूपावच्छिन्ने यद्रूपावच्छिन्न-अव्यवहितोत्तरत्वम् अर्थबोध-स्वरूपयोग्यता-प्रयोजकं तद्रूपावच्छिन्नस्य तद्रूपावच्छिन्नान्तत्वमेव हि सार्थकप्रत्ययान्तत्वमिति तात्पर्यात्।

न च पच्-घञ्-एतदुभय-अव्यवहितोत्तरत्वं सुत्वावच्छिन्ने विद्यत एवेति पूर्वोक्त-स्वरूपयोग्यता-प्रयोजकत्वं समुदाये। तद्घटक-घञ्-प्रत्ययेऽपि पचि-अव्यवहितोत्तरत्व-प्रयोजकत्वं निर्बाधमिति वाच्यम्। समुदायगत-प्रयोजकतायाः

केवल-विशेषणेऽपि स्वीकारे मानाभावात् समुदायस्यैव क्लृप्तत्वेन प्रयोजन-विरहाच्च इत्यलम्।

**VV-S 4.2.1:** **केचित्तु** इति। **वदन्ति (VV 4.4.2)** इति सम्बद्धम्। अयमाशयः - यथा धातोः पाकादौ शक्तिः तथा घञन्तस्यापि पाकादौ शक्तिः । विनिगमनाविरहात् यदि घञन्तशक्तिः न स्यात् तदा संख्याकर्मत्वादीनां तत्र अन्वयो न स्यात्। "प्रत्ययानां प्रकृत्यर्थान्वित-स्वार्थबोधकत्वम्", "प्रकृतिप्रत्ययौ सहार्थं ब्रूतः तयोः प्रत्ययार्थः प्रधानम्"। यथा 'घटम् आनय' इत्यत्र द्वितीयायाः स्वप्रकृत्यर्थ-घटविशिष्ट-कर्मत्व-बोधकत्वम्, न तु घटानन्वित-कर्मत्व-बोधकत्वम्। घञा व्यवधानेऽपि संख्या-कर्मत्वादीनां पाके प्रकृत्येकदेशार्थे अन्वयस्तु वक्तुम् अशक्यः। 'पचन्तं पश्यति' इत्यादौ शत्रा व्यवधानेऽपि द्वितीयार्थ-कर्मत्वस्य पाके अन्वयेन अनिष्टापत्तेः। तदेव आह **अन्वयबोध-प्रसङ्गादिति**।

**VV-S 4.2.2:** एकत्र **विशेषणत्वेनेति**। ननु 'पचन्तं पश्यति' इत्यादौ कर्त्तरि विशेषणत्वेन अन्वितस्य पाकस्य कर्मत्वेन द्वितीयार्थेन साकं विशेषणतया न अन्वयः। "एकत्र विशेषणत्वेनान्वितस्य अन्यत्र विशेषणत्वेन न अन्वय" इति न्यायात्। तथा च कर्मत्वस्य पाके न अन्वय इत्याशयेन आह **एकत्रेति**।

एवमपि यत्र द्वौ कर्त्तारौ त्रयो वा 'पचन्तौ पश्यत' इति प्रयोग इदानीं केवल-सुबर्थ-संख्यायाः पाके अन्वये शत्रा व्यवधानेऽपि 'पचन्तौ पश्यति' इत्यादि आपद्येत। तदेव आह **प्रयोगप्रसंगस्य** इति।

ननु प्रत्ययार्थनिष्ठ-प्रकारता-निरूपित-धात्वर्थनिष्ठ-विशेष्यता-सम्बन्धेन शाब्दबुद्धित्वावच्छिन्नं प्रति तत्तद्धातूत्तर-प्रत्यय-धर्मिक-किञ्चिदर्थपरत्व-ज्ञानं प्रतिबन्धकम् इति प्रतिबध्यप्रतिबन्धकभावं प्रकल्प्य शतृप्रत्ययार्थ-कर्तृरूपार्थ-परत्व-ज्ञानमेव प्रत्ययार्थ-संख्यादीनां पाकादौ विशेषणतया अन्वयबोध-प्रतिबन्धकम् इति प्रकृत्येकदेश-पाके न संख्याया अन्वय इत्याशयेन आह - **प्रतिबन्धकतेति**। तदुत्तरम् आह - **गौरवादिति**। तस्माद् घञन्तस्य पाकादौ शक्तिः कार्या एवेति। प्रकृत्येकदेशार्थान्वयश्च न स्वीकार्य इति अभिप्रायः।

**VV-S 4.2.3:** ननु यथा 'पाके' इत्यत्र घञन्तस्य पाके शक्तिः तथा 'पचनम्' इत्यत्रापि ल्युडन्तस्यैव पाके शक्तिः, न तु धातुमात्रस्येति। तदेव आह - **एवमिति**। ल्युडन्तस्य यदि पाके शक्तिर्न किन्तु धातुमात्रेण पाकोपस्थितिः 'पाकः' इत्यत्र संख्यादीनाम् अन्वयानुपपत्तिः यथा तथा धातुमात्रोपस्थित-पाके शोभन-पदार्थान्वयो न स्याद् एव अभेदसम्बन्धेन। तत्र हेतुमाह - अयं हि नियमो विशेष्यविशेषणयोः अभेदसम्बन्धेन अन्वयबोधं प्रति सजातीय-विभक्ति-उपस्थाप्यत्वं कारणम्। एवञ्च विशेषणविभक्ति-सजातीयविभक्ति-प्रकृत्युपस्थाप्यत्वं विशेष्यस्य

अपेक्षणीयम्। पाकपदार्थस्य अत्र न विभक्तिप्रकृत्युपस्थाप्यत्वम्। एव 'पचनम्' इत्यत्र पचन-इति ल्युट्-प्रत्ययान्तस्यैव विभक्तिप्रकृतित्वेन धातुमात्रस्य पाकोपस्थापकस्य विभक्तिप्रकृतित्वाभावात्, ल्युटा व्यवधानात् इति तात्पर्यम्।

**VV-S 4.2.4:** ननु प्रत्ययविधौ उद्देश्यतावच्छेदक-आक्रान्तत्व वचनम् इत्यत्र प्रत्ययभाग इव धातुभागेऽपि अस्त्येव। प्रकृति-प्रकृत्येकदेश-उभयसाधारण्येन विशेषणविभक्ति-सजातीयविभक्ति-प्रकृतित्वमेव विशेष्य-विशेषणयोः अभेदान्वय-प्रयोजकम्। एवञ्च धातुभागेऽपि प्रकृतित्वसत्त्वात् शोभन-पदार्थान्वये न किञ्चिद् बाधकम् इत्याशयेन आह - **प्रकृत्येकदेशेति**। दूषणमाह - शोभनपदार्थान्वय इष्टोऽपि न स्यात्। अतो ल्युडन्तस्यैव पाके शक्तिः। कार्याधिकरणपदार्थ एव शोभनान्वयो न तु पाकादौ इत्यभिप्रायः।

ननु पदान्तरार्थनिष्ठ-प्रकारता-निरूपित-धात्वर्थनिष्ठ-विशेष्यता-सम्बन्धेन शाब्दबुद्धित्वावच्छिन्नं प्रति तत्तद्धातूत्तर-प्रत्ययधर्मिक-किञ्चिदर्थपरत्व-ज्ञानं प्रतिबन्धकम्। शोभन-पदार्थस्य धात्वर्थ-पाकादौ अभेदान्वये अधिकरणार्थपरत्वज्ञानं प्रतिबन्धकमिति। भावल्युटः तु निरर्थकत्वम् एव। एवञ्च शोभन-पदार्थस्य धात्वर्थपाके अन्वये न अनुपपत्तिः इति हृदि निधाय आह - **कस्यचिदिति**। प्रतिबध्य-प्रतिबन्धक-कल्पन-गौरवम् इत्युत्तरम्। एवञ्च वचनमिति ल्युडन्त-समुदायस्यैव पाके शक्तिरिति तत्त्वं सिद्धम्।

**VV-S 4.3.1:** स्वप्रकृत्यर्थविशिष्ट-स्वार्थबोधकत्वमेव प्रत्ययानाम्। 'प्रत्ययाव्यवहितपूर्ववर्त्तित्वमेव प्रकृतित्वम्' इति लक्षणे 'उपकुम्भम्', 'अर्द्धपिप्पली', 'सुन्दरम् उपकुम्भम्' इत्यादौ विभक्त्यर्थ-कर्मत्वादीनां सुन्दरादीनाम् अभेदेन अन्वयः पूर्वपदार्थेन सह न स्यात्। समासोत्तर-विभक्तिप्रकृतित्वाभावात् इत्याशयेन आह। तदुत्तरम् आह न **चैवमिति**। पूर्वपदस्य तात्पर्यग्राहकत्वमेव उत्तरपदस्येव कुम्भादेः समीपार्द्धादिरूपार्थकत्वात्। एवञ्चान्वये न किञ्चिद्बाधकम्।

**VV-S 4.3.2:** **वस्तुतस्त्विति**। प्रत्ययार्थनिष्ठ-प्रकारता-निरूपित-पूर्वपदार्थ-निष्ठ-विशेष्यता-सम्बन्धेन शाब्दबोधत्वावच्छिन्नं प्रति विभक्त्यव्यवहित-पूर्ववर्त्ति-कुम्भ-पदाव्यवहित-पूर्ववर्त्ति-उपपदज्ञानं कारणम्। इत्येवमाकाङ्क्षा। पदार्थान्तरान्वयबोधे तु अभेदसम्बन्धावच्छिन्न-सुन्दरत्वाद्यवच्छिन्न-प्रकारता-निरूपित-समस्त-उपकुम्भादि-पदार्थनिष्ठ-विशेष्यता-सम्बन्धेन शाब्दबुद्धित्वावच्छिन्नं प्रति समान-विभक्तिकयोः सुन्दरादिपद-उपकुम्भादि-पदयोः समभिव्याहार इत्याकाङ्क्षा-स्वरूपम्। अतिप्रसङ्गस्य अर्थात् विशिष्टे समासे शक्तिस्वीकाररूप-अतिप्रसङ्गस्य अभावादित्यर्थः।

**VV-S 4.3.3:** **धात्वर्थपाकादौ इति।** अयमाशयः उक्तसमासस्थले विशिष्टशक्तिं विहाय विलक्षणाकाङ्क्षाज्ञानं प्रकल्प्य अन्वयबोधः प्रदर्शितः। तथा पाक इत्यादावपि विशिष्टे घञन्ते शक्तिर्न कार्या, किन्तु घञो निरर्थकत्वात् धातोरेव पाकादौ शक्तिः। प्रत्ययार्थनिष्ठ-प्रकारता-निरूपित-धात्वर्थपाकनिष्ठ-विशेष्यता-सम्बन्धेन शाब्दबुद्धित्वावच्छिन्नं प्रति ल्युड्-घञाद्यन्त-समुदायस्य विभक्त्यव्यवहित-पूर्ववर्त्तित्व-ज्ञानं कारणम् इति स्वरूपम् आकाङ्क्षायाः। अभेद-सम्बन्धावच्छिन्न-पदार्थान्तरत्वा(सुन्दरत्वा)वच्छिन्न-प्रकारतानिरूपित-धात्वर्थपाकादि-निष्ठ-विशेष्यता-सम्बन्धेन शाब्दबुद्धित्वावच्छिन्नं प्रति ल्युड्-घञाद्यन्त-समुदायस्य पाक इत्यादेः विशेषणवाचक-सुन्दरादिपदस्य च समानविभक्तिकत्वज्ञानम् आकाङ्क्षा-स्वरूपं कारणम् इत्याशयेन आह - **धात्वर्थपाकादौ इति।**

एवंप्रकारे दोषमाह - यत्र अधिकरणार्थको ल्युट् तत्रापि उक्ताकाङ्क्षाया विद्यमानत्वेन प्रत्ययार्थस्य पदान्तरार्थस्य च धात्वर्थपाकादावेव अन्वयापत्तिः, न तु प्रत्ययार्थे पाकाधिकरणे। इष्टश्च पाकाधिकरण एवान्वय इति न तत्सम्भवः। एवञ्च पाक इत्यादौ घञाद्यन्तस्यैव पाकादौ शक्तिः। कुम्भपदस्य 'उपकुम्भम्' इत्यत्र कुम्भसमीपे लक्षणा। तत्र प्रत्ययार्थादीनाम् अन्वये न क्षतिः इत्याशयः।

**VV-S 4.4.1:** **अथ घञन्तसमुदायस्येति।** पाक इत्यादि-प्रयोगे घञाद्यन्तस्य इव पाकादौ शक्तिः इति स्वीकारे दीधितिग्रन्थ-विरोधं प्रदर्शयति। **दीधितिकृता** प्रचण्डपदार्थविदा संयोगपदस्य घञन्तस्य विभागपदस्य च संयोगत्व-विभागत्व-विशिष्टवाचकत्वं नास्तीति तात्पर्येण संयोगविभागादिपदानां नैमित्तिक-संज्ञात्वं नास्ति इत्युक्तम्। डित्थ-डवित्थाद्या संज्ञा यदृच्छासंज्ञा। घट-पटादिकं तु नैमित्तिक-संज्ञा। तत्र घटत्वं पटत्वञ्च प्रवृत्तिनिमित्तम्। विशिष्टबुद्धौ विशेषणज्ञानं कारणम्। घटत्व-पटत्वादिकं प्रवृत्तिनिमित्तीकृत्यैव प्रवृत्तिविधानात्। यस्याः संज्ञायाः जातिविशिष्टेऽर्थे सङ्केतः सा नैमित्तिकसंज्ञा इत्युच्यते। अत एव **शब्दशक्ति-प्रकाशिकायां** "जात्यवच्छिन्न-संकेतवती नैमित्तिकी मता" इत्युक्तम्। एवञ्च यदि संयोगत्व-विभागत्वावच्छिन्ने घञन्त-संयोग-विभागादि-पदानां शक्तिः स्यात् तदा संयोगत्वादि प्रवृत्तिनिमित्तीकृत्य नैमित्तिकसंज्ञात्वं स्यात्। संयोग-विभागादि-पदानां तु संयोगविभागत्वावच्छिन्ने शक्तिरेव नास्ति। अन्यथा संयुनक्ति, संयुज्यते, विभजते इत्यादौ संयोगविभागपदाभावात् संयोगविभागरूप-पदार्थयोः उपस्थितिरेव न स्यात्। संयोगविभागरूप-अर्थोपस्थितिरेव संयुनक्ति संयोगः, विभजते विभाग इत्यादौ अनुगतस्य धातोरेव लाघवात् संयोगविभागादौ शक्तिस्स्वीकार्या। न तु घञन्त-संयोग-विभाग-पदयोः इति। एवंरीत्या घञः साधुत्वमात्रार्थकत्वेन निरर्थकत्वम् एव इति दीधितिकृताम् आशयः। संयोग-पाक-पदयोस्तुल्यत्वे न

घञन्तत्वेन चेति घञो निरर्थकत्वमिति फलति इत्याशयेन आह **घञन्तसमुदायस्येति**।

उत्तरमाह - मया **गदाधरभट्टाचार्येण** घञन्तसमुदायस्यैव पाकादौ शक्तिः प्रदर्शिता, तत्र **दीधितिकृतां** ग्रन्थो युक्तिबलरहितो बाधको न भविष्यति। एवञ्च संयोगादिपदानामपि घञन्तशक्ति-विशिष्टत्वमेव। अधिकरणार्थक ल्युट् प्रत्ययस्थले विशेषणीभूत-शोभनादि-पदार्थस्य पाक एव अन्वयः स्यात्, न तु इष्टे अधिकरणे इति पूर्वोक्तदोषात् पाकादौ घञन्त-शक्तिरेव गरीयसी इत्याशयः।

**VV-S 4.4.2:** ननु घञन्तसमुदायस्यैव पाकादौ यदि शक्तिः तदा 'स्तोकः पाक' इत्यादौ कथं द्वितीया इति तदेव आह - **एवञ्च यत्रेति**। धात्वर्थमात्र-तात्पर्यान्वये 'स्तोकं पाकः', कृदन्तार्थ-समुदायान्वयतात्पर्ये 'स्तोकः पाक' इति मनोरथः। **वदन्ति** इति। **केचित्तु (VV 4.2.1)** इति। केचिदेव एतद् वदन्ति, न वयं वदामः। एवंविधा अरुचिः।

किञ्च धातुमात्र-शक्तेः एव रीतिसम्मतत्वात् कृदन्तसमुदाय-शक्तिकल्पने महागौरवम्। विवक्षयैव प्रथमा-द्वितीया-विभक्त्योः विधानात्। अत एव कारक विभक्तीनां वैवक्षिकत्व-नियमः सुगतः।

वस्तुतः तदनिर्देश्यं न हि वस्तु व्यवस्थितम्।
'स्थाल्या पच्यत' इत्येषा विवक्षा दृश्यते यतः।। (वा.प. ॥। (साध.) 91)

इत्युक्तिरपि स्तोकादीनां पाकादौ अभेदान्वयबोधे स्वन्त-स्तोकपद समभिव्याहृत-स्वन्त-पाकपदत्वरूप-आकाङ्क्षाज्ञानं कारणम्। अत एव पचमानौ इत्यादौ न दोषः। तत्तद्धातूत्तर-तत्तत्प्रत्ययधर्मिक-किञ्चिदर्थपरत्व ज्ञानस्य प्रतिबन्धकत्व-कल्पनेन तत्तद्दोषवारणम्। न च प्रतिबन्धकत्व-कल्पनं अपि गौरवम् इति वाच्यम्। एवं चेत् तर्हि आकाङ्क्षाशरीरे प्रथमात्वादिना न प्रवेशः। अपि तु यथावाक्यं सु-अम्-जस्-टा-ङे-इत्याद्युपस्थिति-कल्पनम् आकाङ्क्षा-शरीरे तु सुत्व अम्त्व-टात्व-ङेत्वादिना एव। प्रथमा-द्वितीयादीनां प्रवेशो न तु प्रथमात्वादिना इति प्रथमात्वादीनाम् अज्ञानेऽपि क्षतिविरह इति चेत्? एतादृशास्वरस-सूचनाय एव **वदन्ति** इत्युक्तमिति बोध्यम्। एवमरुचिसन्दर्भव्याख्यानाद् इत्यलम्।

**VV-S 4.4.3:** **तदर्थकपदोत्तर-विभक्त्येति**। परमतं प्रदर्श्य सिंहावलोकन न्यायेन विशेषणवाचकपदोत्तर-विभक्तिः साधुत्वमात्रार्था इति पूर्वमुक्तम् अर्थात् विशेषणवाचक-पदोत्तर-विभक्त्यर्थ-संख्यायाः शाब्दबोधे भानं न भवति। सिद्धान्तस्य एतस्य वचनमात्रेण सिद्धिर्न भवति। तदर्थं कार्यकारणभावमाह - **तदर्थकेत्यादि लेखेन**। अयम्भावः - यथा 'घटोऽस्ति', 'पटोऽस्ति', 'मठोऽस्ति' इत्यादि-वाक्ये घटाद्यर्थक-घटादिपदोत्तर-सुविभक्तेः एकत्वरूप-संख्यार्थ इति। घटपदजन्य

शाब्दबोधे घटे या विषयता भासते सा च अभेद-सम्बन्धावच्छिन्न-प्रकारता भिन्ना एव। तथा च घटपदोत्तर-स्वार्थसंख्यायाः शाब्दबोधे भानं भवति 'एको घटः', 'द्वौ घटौ' इत्यादि। 'नीलो घटः', 'पीतो घट' इत्यादौ नीलादौ या प्रकारता अस्ति (नीलस्य अभेदसम्बन्धेन घटे अन्वयः) सा च अभेद-सम्बन्धावच्छिन्ना एव। न तु अभेदसम्बन्धावच्छिन्ना प्रकारता भिन्ना इति तत्र विभक्त्यर्थसंख्यायाः शाब्दबोधे भानं न इति सिद्धम्। एवञ्च किञ्चिदर्थनिष्ठ-विशेष्यता-निरूपित-अभेदसम्बन्धावच्छिन्न-प्रकारताश्रयत्व-ज्ञानं तद्वाचकपदोत्तर-विभक्त्यर्थ-संख्याबोधे प्रतिबन्धकम् इत्येव फलितार्थ-कार्यकारणभावः।

**तदर्थनिरूपितेति।** संख्याबोधक-विभक्ति-प्रकृत्यर्थ-निरूपितो यो भेदः तदन्वय-विषयक इत्यर्थः, यथा 'राज्ञः पुरुष' इति। तत्र पुरुषनिष्ठ-विशेष्यता-निरूपित-प्रकारतैव राज्ञि वर्त्तते, परन्तु राजनिष्ठा या प्रकारता सा अभेदसम्बन्धानवच्छिन्नैव। भेदसम्बन्धेनैव राज्ञः पुरुषविशेषणत्वम्। एवञ्च तत्र राजपदोत्तर-ङस्-विभक्त्यर्थ-एकत्वसंख्याया एकराज-निरूपित-स्वत्ववान् पुरुष इति शाब्दबोधे भानं भवत्येव। 'राज्ञः पुरुष' इति वाक्यजन्यबोधो भेदसम्बन्धविषयक एव। अग्रे प्रत्युदाहरणमाह - **'नीलौ घटौ'** इति।

केवलान्वयित्वस्य एकत्वे 'नीलो घट' इत्यादौ अपि भानसम्भवाद् द्विवचनान्त-प्रयोगम् आह - **'नीलौ घटौ'** इति। अत्र अभेदसम्बन्धावच्छिन्न-नीलनिष्ठ-प्रकारतायाः सत्त्वेन नीलपदोत्तर-विभक्त्या द्वित्वं न शाब्दबोधे प्रत्याय्यते अपि तु घटपदोत्तर-विभक्त्यैव। तथा च संख्याबोधने अभेद-सम्बन्धावच्छिन्न-प्रकारताभिन्न-विषयताज्ञानं कारणम् इति नियमे सिद्धे क्रियाविशेषण-स्तोकादीनां क्रियायाम् अभेदसम्बन्धेनैव प्रकारत्वात् क्रियाविशेषणवाचक-स्तोकादिपदोत्तर-विभक्त्यर्थ-संख्यायाः शाब्दबोधे भानं न भवतीति। तादृशपदोत्तरं साधुत्वार्थम् औत्सर्गिकम् एकवचनमेव। 'स्तोकं स्थीयते' इतिवत् अत्र भावे लकारः। 'स्तोकं पाकः', 'स्तोकं पचति' इत्यादि सिद्ध्यति इति।

ननु 'नीलो घट' इत्यादौ नीलाभिन्नो घट इति बोधात् नीलपदार्थ-घटपदार्थयोः ऐक्यम्। एवञ्च अभेदसम्बन्धावच्छिन्न-प्रकारताभिन्न-घटत्वावच्छिन्न-विशेष्यताया नीलनिष्ठत्वात्। अपि च नीलत्वनिष्ठ-प्रकारता-निरूपितायाः तस्या नीले विद्यमानत्वाद् उक्तकार्य-कारणभाव-सत्त्वेन कथं न नीलपदोत्तर-संख्या-प्रतीतिः? किञ्च 'नीलो घटः', 'नीलस्येदं रूपम्' इति समूहालम्बनात्मकशाब्दबोधे नीलपदोत्तर-सु-प्रत्ययार्थ-संख्याबोधः स्यादेवेति। तत्र अभेदसम्बन्धावच्छिन्न-प्रकारताया विद्यमानत्वात्। किञ्च 'वेदाः प्रमाणम्' इत्यादौ 'सम्पन्नो व्रीहिः' इत्यादौ च स्वप्रकृत्यर्थतावच्छेदकवत्त्व-सम्बन्धेन स्वाश्रय-प्रमाणत्ववत्त्व-सम्बन्धेन

स्वाश्रयाश्रयत्व-सम्बन्धेन वा प्रमाणादौ एकत्वान्वये प्रामाणादिनिष्ठ-विषयताया अभेदसम्बन्धावच्छिन्न-प्रकारतात्मकत्वात् प्रमाणादौ एकत्वसख्याया इष्टोऽपि अन्वयो न स्यादिति अव्याप्तिरिति वाच्यम्। तद्धर्मावच्छिन्न-बोधक-तत्पदोत्तर-विभक्तिप्रयोज्य-संख्यानिष्ठ-प्रकारता-निरूपित-तद्धर्मावच्छिन्न-बोधक-तत्पद-प्रयोज्य -अभेद-सम्बन्धावच्छिन्न-प्रकारताभिन्न-विषयता-निरूपक-शाब्दसामग्री प्रयोजिका इति कार्यकारणभावः। नीलनिष्ठाया अपि घटत्वावच्छिन्न-विशेष्यताया नीलत्वा-वच्छिन्नत्व-विरहात् नीलत्वनिष्ठ-प्रकारता-निरूपिताया अपि तन्निष्ठ-विशेष्यताया नीलत्वावच्छिन्नत्व-विरहात् षष्ठ्यन्त-पदप्रयोज्य-विषयतायाः प्रथमान्त-नीलपद-प्रयोज्यत्व-विरहात् न उक्तस्थलद्वये दोषः। 'वेदाः प्रमाणम्', 'सम्पन्नो व्रीहिः' इत्यादौ प्रमाणत्वे व्रीहित्वे च विशेषणवाचक-पदोत्तर-विभक्त्या संख्याबोधार्थं कार्यतावच्छेदक-कोटीय-प्रकारतायां पर्याप्ति-सम्बन्धावच्छिन्नत्व-निवेशात् न दोषः। ननु प्रमाणत्व-व्रीहित्ववत् संख्याया एकत्वात्मिकाया नीलत्वेऽपि अन्वयोऽस्तु। तथा च 'नीलो घटा', 'नीलो घटौ' इति प्रयोगः स्यात् इति चेत् ? न। सति तात्पर्ये तादृशान्वयेन तादृशप्रयोगस्य इष्टत्वादिति पूर्वम् एव उक्तत्वात्।

ननु समानाधिकरण-प्रकारता-विशेष्यतयोः अभेदसम्बन्ध इति **जगदीश**-मतम्। तयोः अवच्छेद्यावच्छेदकभाव-सम्बन्ध इति **गदाधर**मतम् इति पक्षद्वयम्। तत्राद्यपक्षे संख्याया नीलादौ अन्वय-निषेधेऽपि द्वितीयपक्षे 'नीलौ घटौ' इत्यादौ नीलत्वादि-निष्ठ-प्रकारता-निरूपित-विशेष्यताया अभेद-सम्बन्धावच्छिन्न-भिन्नत्वात् नीलादौ संख्यान्वयः स्यादेवेति चेत्? न। अभेद-सम्बन्धावच्छिन्न-प्रकारता-प्रयोजक-पदप्रयोज्य-उपस्थितीय-विशेष्यता-प्रयोज्य-भिन्नविषयताक-शाब्दसामग्र्या अपेक्षा इति नियमः कार्यकारणभावीयः। उदाहरणञ्च 'नीलो घटः' इति। संघटन-प्रकारश्च इत्थम् - नीलत्व-प्रकारक-नील-विशेष्यता तु तत्प्रयोज्य-उपस्थितीया एवेति। नील-प्रकारता-प्रयोजकं पदं नीलपदं, तत्प्रयोज्यत्वस्य शाब्दबोधीय-विषयतायाम् इष्टायां सत्त्वेन तद्भिन्न-विषयत्वाभावात् तादृशापत्तेः वक्तुम् अशक्यत्वात्। ननु समानाधिकरण-प्रकारता-विशेष्यतयोः अभेद-सम्बन्ध इति **जगदीश**मतम्। तयोः अवच्छेद्यावच्छेदकभाव इति **गदाधर**मतम्। अनयोः किं ज्यायस्तरम् इति प्रश्नः। यथा 'संयोगेन दण्डाभाववान् पुरुष' इति बुद्धिः 'संयोगेन दण्डवान् पुरुष' इति बुद्धिं प्रतिबध्नाति। तथा अभेदपक्षे 'रक्तदण्डवत्-पुरुषवान् अयं देशः' इति बुद्धेरपि प्रतिबन्धकत्वापत्तिः। संयोग-सम्बन्धावच्छिन्न-दण्डत्वावच्छिन्न-प्रकारता-निरूपित-पुरुषत्वावच्छिन्न-विशेष्यताया रक्तत्वावच्छिन्न-प्रकारता-निरूपित-दण्डत्वावच्छिन्न-विशेष्यताभेदात्। अवच्छेद्यावच्छेदकभावे तु न प्रतिबन्धकत्वम्। संयोग-सम्बन्धावच्छिन्न-दण्डत्वावच्छिन्न-प्रकारतात्वावच्छिन्न-

निरूपकता-निरूपित-निरूप्यतावद्-पुरुषत्वावच्छिन्न-विशेष्यताशालि-ज्ञानस्यैव प्रतिबन्धकतावच्छेदकत्वेन विरोधाभावात्। एवं 'संयोगेन दण्डवान् पुरुषः', 'संयोगेन दण्डाभाववान् पुरुषः', 'रक्तदण्डवत्पुरुषवान् अयं देश' इति। तस्माद् गदाधरमतमेव सम्यग् इत्यलम्।

**अबाधितयोरिति।** यत्र हि कर्त्ता एक एव प्रतीयते स पाकद्वयं पाकत्रयं वा करोति तस्मिन् पाके यद्यपि न द्वित्व-बहुत्वयोः बाधः तथापि पाकादि-क्रियाविशेषणवाचक-स्तोकादिपदोत्तर-द्विवचनादिविभक्त्या बहुभिः प्रकारैः अपि पाकादिक्रियागत-द्वित्व-बहुत्वयोः प्रत्यायनं न भवति, अनुभवविशेषविरोधात्। अत एव "द्विबह्वोर्द्विवचनबहुवचने" इत्येव न्यासः, पार्थक्येन "द्व्येकयोर्द्विवचनैकवचने" (P.1.4.22) "बहुषु बहुवचम्" (P.1.4.21) इति सूत्र-द्वयं किमर्थमिति भाष्यकृता उक्तम्। अर्थाद् एकवचनम् उत्सर्गतः करिष्यत इति सुतरां सिद्धान्तः समायाति। तथा च भावाख्यातस्थलवत् क्रियाविशेषण-वाचकपदोत्तरम् एकवचनम् एव साधुत्वार्थं सर्वैः प्रयोक्तव्यमिति। अत एव आख्यातस्थले प्रयोगसंस्कारमात्रार्थका अपि शप्-श्यनादि-विकरणाः प्रतिनियताः सङ्गच्छन्ते।

**भावाख्यातस्थलवदिति।** भावाख्यातस्थले साधुत्वमात्रार्थम् एकवचनप्रयोगः। तथैव क्रियाविशेषणवाचक-पदोत्तर-एकवचनमपि।

अत्र केचित् - फलावच्छिन्नव्यापरे शक्तिः धातूनाम्। न च सर्वेषामपि सकर्मकत्वापत्तिः इति वाच्यम्। फलव्यधिकरण-व्यापारवाचकत्वं सकर्मकत्वम्, फलसमानाधिकरण-व्यापारवाचकत्वम् अकर्मकत्वम् इति लक्षणात्। किञ्च कर्मसंज्ञकार्थान्वय्यर्थकत्वं सकर्मकत्वम्, तदनन्वय्यर्थकत्वम् अकर्मकत्वम्। तेन "अध्यासिता भूमय" इत्यादौ कर्मप्रत्यय-सिद्धिः।

"कर्त्तुः" (P.1.4.49) इति सूत्रेण तादात्म्य-फलतावच्छेदक-अन्यतर-सम्बन्धेन फलाश्रयस्यैव कर्मत्वविधानम्। अत एव 'स्तोकं पचति' इत्यादौ स्तोकपदार्थस्य तादात्म्येन फलाश्रयत्वात् कर्मत्वम्। एतत् फलितमेव क्रियाविशेषणानां कर्मत्वमिति। अत्र क्रियापदं क्रियत इति व्युत्पत्त्या फलार्थकम्। न च 'स्तोकः पच्यते' इत्येवं कर्मणि लकारापत्तिरिति वाच्यम्। कर्त्तृपदसाहचर्येण भेदेन धात्वर्थान्वितस्यैव कर्मणो लकारादिप्रत्यय-विधायक-शास्त्रे ग्रहणेन उक्तप्रयोगासिद्धेः। अतः "कर्त्तृ कर्मणोः कृति" (P.2.3.65) इत्यनेन 'स्तोकं पाकः' इत्यादौ न षष्ठी। ननु 'मन्दं वहति पवनः' इत्यादौ व्यापारपदार्थे अभेदसम्बन्धेन एव मन्दपदार्थान्वयः। एवञ्च तत्र कर्मत्वं न स्यात्। अतः अपूर्व-कर्मत्व-विधायकं "क्रियाविशेषणानां कर्मत्वम् एकत्वं नपुंसकत्वञ्च" इति। क्रियापदं तत्र व्यापारार्थकं, न तु फलार्थकमिति चेत् ? न। मन्दपदार्थस्य व्यापरे अन्वयेन व्यापरस्य

मन्दत्वे परम्परया तज्जन्यफलस्याऽपि मन्दत्वं युक्तमेवेति कर्मत्व सौष्ठवात्। ननु "कर्मणि द्वितीया" (P.2.3.2) इति सूत्रस्य तादात्म्य-फलतावच्छेदक-अन्यतर-सम्बन्धेन फलाश्रये प्रवृत्तिस्वीकारे गौरवाधिक्यं गुर्वर्थबोधकत्वं च इति चेत्? न। कर्मत्व-शक्तिमत्त्वेन एव कर्मपदशक्यत्व-स्वीकारेण लाघवात् इत्याहुः इत्यलम्।

**VV-S 5.1.1:** ग्रन्थारम्भे अभेदेन प्रातिपदिकार्थे योऽन्वयः तत्र समान-विभक्तिकत्वं कारणम् इत्यादि-नियम-प्रबन्धम् उक्त्वा इदानीम् अभेद-विषयकः अन्योऽपि नियम उच्यते - **अभेदान्वयबोधश्चेति**।

**विरूपोपस्थितयोः एवेति**। ननु सर्वत्र अभेदान्वयश्च एकव्यक्तेः एव भवति इति **उपस्थितयोः** इति द्विवचनान्तोपादानं कथंकार सुसंगतमिति चेत्? न। तात्पर्यबलात् मूलभूतत्वाच्च पदयोः इत्येतद् व्यवह्रियते। षष्ठ्यर्थो जन्यत्वम्। तस्य च बोधे अन्वयः। उपस्थितयोः कोऽर्थः ? उपस्थापक-पदयोः। विरूपाभ्यां कोऽर्थः ? विभिन्नरूपाभ्याम् उपस्थिते विरूपोपस्थिते पदे, तयोः विरूपोपस्थितयोः पदयोरिति यावत्। तथा च भिन्नरूपेण तत्तदुपस्थापक-पदजन्य एव अभेदान्वयबोध इति। विभिन्नाभ्यां नीलत्व-घटत्व-धर्माभ्याम् उपस्थितयोः एव अर्थयोः नील-घटयोः अभेदान्वय-बोध इति **कृष्णंभट्टाः**।

अत्र अयमाशयो विभाति। शाब्दबोधीया अभेदत्वावच्छिन्ना या सांसर्गिक-विषयता सा उपस्थिति-विषयता-विशिष्टा बोध्या। वैशिष्ट्यञ्च स्वभिन्न-उपस्थिति-विषयता-वच्छेदकावच्छिन्न-विशेष्यता-निरूपितत्व-स्वावच्छेदकावच्छिन्न-प्रकारता-निरूपितत्व-उभयसम्बन्धेन। विरूपता चात्र यत्किञ्चिद्धर्मापेक्षया बोध्या। तेन विशेष्यता-प्रकारतयोः अवच्छेदकस्य एकत्वसत्त्वेऽपि न हानिरिति फलति। एको घटशब्दो 'घट इव आचरति घटति', 'घटतीति घट' इत्यर्थकः, अपरश्च कम्बु-ग्रीवादिमद्-व्यक्तिरूपार्थकः। उभयोः समूहालम्बन-दशायाम् अभेदान्वयविषय-शाब्दबोधप्रसिद्ध्या नात्र षष्ठ्यर्थो विषयत्वम्, अपि तु प्रतियोग्यनुयोगि-निरूपितत्वादिकम्। एतद्भिन्न-निरासार्थम् **एव**-पदोपादानम्।

न चैवमपि 'नीलो घटः', 'घटो घट' इत्याकारकः समूहालम्बनात्मको यत्र शाब्दबोधः तत्रापि घटत्वावच्छिन्न-प्रकारता घटत्वावच्छिन्न-विशेष्यता-निरूपित-अभेदनिष्ठ-संसर्गता-निरूपकत्व-सत्त्वेन व्यभिचार इति वाच्यम्। **उपस्थित**-शब्दे भावे क्तप्रत्ययः। उपस्थानम् उपस्थितम्, उपस्थितिः इत्यर्थः। विरूपे विभिन्न-प्रकारिके उपस्थिती तत्प्रयोज्या या प्रकारताख्या विशेष्यताख्या विषयता तन्निरूपको योऽभेदः, तद्विषयक-बोधः। अस्मिन् कल्पे षष्ठ्यर्थो विषयता तत्र उपस्थिति-पदार्थस्य प्रयोज्यत्व-सम्बन्धेन अन्वयः। तस्याश्च निरूपकत्व-सम्बन्धेन अभेदेऽन्वयः। विरूपोपस्थिति-प्रयोज्य-विषयता-निरूपकः अभेद इति

फलति। दोषवारणोपायस्तु उपस्थिति-विषयता-विशिष्टा अभेदनिष्ठा शाब्दबोधीया संसर्गता। वैशिष्ट्यञ्च स्वावच्छेदकधर्मेतर-धर्मावच्छिन्न-विषयताप्रयोज्य-विशेष्यता-निरूपितत्व-स्वप्रयोज्य-प्रकारता-निरूपितत्व-उभयसम्बन्धेन। 'नीलो घटः', 'घटो घट' इति समूहालम्बने अभेदनिष्ठायाः संसर्गता-भिन्नत्वात् तत्र नियमाप्रवृत्तौ तद्वाक्यस्य अप्रामाणिकत्वात्।

अयमाशयः। अभेदसम्बन्धेन शाब्दबुद्धित्वावच्छिन्नं प्रति समानविभक्तिकत्वं कारणम्। यथा 'नीलो घट' इति नील-घटयोः अभेदान्वयः तथैव 'घटो घट' इत्यपि प्रयोगः स्यात्। घटस्य स्वात्मना भेदाभावेन योग्यतात्वात् स्वात्मनि अभेद-सम्बन्धेन अन्वयाद् घटप्रकारक-घटविशेष्यक-शाब्दबोधः स्यादिति प्रशङ्क्य आह - **अभेदान्वयबोधश्चेति**। 'नीलो घट' इत्यादौ नीलत्व-घटत्व-धर्मयोः विरुद्धत्वात् ताभ्याम् उपस्थितयोः नील-घटयोः भेदान्वयः। परन्तु 'घटो घट' इत्यत्र घटत्वा-वच्छिन्ने घटत्वावच्छिन्नस्य अभेदसम्बन्धेन अन्वयो न भवति। घटत्वयोः विरुद्ध-धर्मत्वाभावात्। एवं संयोगेन दण्डवत्त्वावच्छिन्ने दण्डवत्त्वावच्छिन्नस्य, पाक-पचति-पदाभ्यां पाकत्वेन रूपेण उपस्थितस्य च अभेदेन अन्वयो न भवति। कर्तृविशेषणतया पाकोपस्थितिः पचति-पदेन अपि पाकपदेन अपि पाकत्वेन रूपेण एवेति।

**VV-S 5.1.2:** ननु सामग्रीसत्त्वे अवश्यं कार्यं जननीयम् इति नियमः। 'घटो घट' इत्यत्र समान-विभक्तिकत्व-आकाङ्क्षा-योग्यता-तात्पर्य-आसत्त्यादि-कारणानां विद्यमानत्वेन अभेदसम्बन्धावच्छिन्न-घटत्वावच्छिन्न-प्रकारतानिरूपित-घटत्वावच्छिन्न-विशेष्यताकः शाब्दबोधः कथं न इति आशयेन शङ्कते - **अथेति**। तत्प्रयोजक-इत्यस्य अभेदान्वयबोध-प्रयोजक-इत्यर्थः।

**VV-S 5.1.3:** **यादृशमिति**। यथा तन्तुपुञ्जेन पटोत्पत्तिरूपं फलं सम्भवति एव इति तन्त्वादि-पटोत्पादक-सामग्रीबलात् पटरूपं फलं सम्भवति। यादृशञ्च -

एष बन्ध्यासुतो याति खपुष्प-कृतशेखरः।
कूर्मक्षीरचये स्नातः शशशृङ्ग-धनुर्द्धरः।।

इत्यादिकं क्वचिदपि न प्रसिद्धं तदापादक-कारण-सामग्र्याः सर्वथैव अप्रसिद्धत्वेन शशविषाणाद्यापत्तेः अशक्यत्वम् एवेति। तथैव अभेद-सम्बन्धावच्छिन्न-घटत्वावच्छिन्न-प्रकारतानिरूपित-घटत्वावच्छिन्न-विशेष्यताक-शाब्दबोधस्य कदाचिद् अपि क्वचिद् अपि केनाप्युपायेन अदृष्टचरत्वात् अश्रुतचरत्वात् च तदापत्तिः न सम्भवति कथमपि। तद्धर्मावच्छिन्न-कार्यता-निरूपित-कारणताश्रयस्य अप्रसिद्धत्वेन तदापत्तेः अशक्यतरत्वात्। तथा हि - 'अहं तर्कयामि' इत्याकारक-अनुभवसाक्षिक-मानसत्वव्याप्य-जातिविशेषाश्रयः तर्कः। तर्क एव आपत्तिशब्दार्थ इति केचित्। कतिपय-कारणाधिकरणे कार्याभाव-प्रयोजक-जिज्ञासा एव आपत्तिरिति गुरवः।

किञ्च तदभावप्रयोजकीभूत-अभावप्रतियोगिविषया जिज्ञासा एव आपत्ति-पदार्थः। उदाहरणञ्च 'दण्डाभावे घटाभावः' इति। घटाभावस्य प्रयोजकीभूतो दण्डाभावः, तत्प्रतियोगी दण्डः, तस्य दण्डस्य या जिज्ञासा सैव आपत्ति पदार्थः। किमभाव-प्रयुक्तोऽत्र शाब्दबोधाभाव इति प्रश्नकर्त्तुः जिज्ञासा। सा च सम्भवत्येव नहि। अभेदसंसर्गक-घटत्वावच्छिन्नप्रकारक-घटत्वावच्छिन्नविशेष्यक शाब्दबोधस्य सर्वथैव अप्रसिद्धत्वेन तत्कारणसमूहस्यापि सर्वथैव अप्रसिद्धत्वात् अभेदसंसर्गक-घटत्वावच्छिन्न-प्रकारताक-घटत्वावच्छिन्न-विशेष्यताक-शाब्दबोधस्य योऽभावः तत्-प्रयोजकीभूतस्य अभावस्य यः प्रतियोगी तद्विषया या जिज्ञासा सा एव आपत्तिः अर्थात् सद्विषयाया एव जिज्ञासायाः सम्भव इति तत्त्वम्। प्रकृते च कारणाभावात् न आपत्तिः सम्भवतीति समाधानम्। कार्यापत्तिविषये कार्यव्याप्यत्वेन कारणकूटस्य एव आपादकत्वात् नास्त्येव शुद्धघटत्वावच्छिन्नप्रकारक-शुद्धघटत्वावच्छिन्न-विशेष्यक-शाब्दबोधत्वावच्छिन्नं प्रति प्रसिद्धा इति नापत्तिरिति हृदयम्।

**VV-S 5.1.4:** ननु घटे नीलघट-अभेदान्वयावगाहन-तात्पर्ये दण्डवति रक्तदण्डवदभेदान्वयावगाहनतात्पर्येण च 'घटो नीलघटः', 'दण्डवान् रक्तदण्डवान्' इत्यादौ विधेयकोटौ अर्थाद् विशेषणकोटौ अधिकावगाहि-शाब्दबोधस्य अभेद-सम्बन्धावच्छिन्न-नीलत्वावच्छिन्न-घटत्वावच्छिन्न-प्रकारतानिरूपित-घटत्वावच्छिन्न-विशेष्यताकस्य अभेद-सम्बन्धावच्छिन्न-रक्तत्वावच्छिन्न-दण्डवत्त्वावच्छिन्न प्रकारता-निरूपित-दण्डवत्त्वावच्छिन्न-विशेष्यताकस्य च दर्शनेन अत्र घटत्वमेव प्रकारता-वच्छेदकं विशेष्यतावच्छेदकञ्च एकम्। दण्डवत्त्वं प्रकारतावच्छेदकं विशेष्यता-वच्छेदकञ्च एकमेव। तथा च 'घटो नीलघट' इत्यादौ अभेदसंसर्गक-नीलघटत्वावच्छिन्न-प्रकारक-घटत्वावच्छिन्न-विशेष्यक-बोधस्य "अधिकन्तु प्रविष्टं न तु तद्धानिः" इति न्यायबलेन प्रसिद्धत्वात् तादृशकारणसामग्र्या 'घटो घट' इत्यत्र शाब्दबोधः पूर्ववत् स्यादिति तात्पर्येण आशङ्कते - **अथे**ति। उत्तरयति - **तर्हि** इति। अयम्भावः - 'घटो नीलघट' इत्यत्र शुद्धघटे शुद्धघटस्य अभेदेन सम्बन्धेन अन्वयो न भवति अपि तु नीलघटस्यैव अन्वयः।

एवञ्च घटे विशेषणीभूतो घटः, तत्र विशेषणीभूतो नीलपदार्थ इति विशेषणतावच्छेदकत्वेनैव नीलपदार्थप्रतीतिः। नीलपदार्थ-प्रतीति-नियामकञ्च नीलपदजन्य-नीलोपस्थितिः। तत्तात्पर्यज्ञानञ्च एतादृश-सामग्रीसत्त्वे शुद्धघटत्वा-वच्छिन्ने नीलघटत्वावच्छिन्नस्य अभेदेन अन्वयः। नीलपद-समभिव्याहारादि-कारण-कूटाभावाद् 'घटो घट' इत्यत्र अभेदसंसर्गक-घटप्रकारक-घटविशेष्यक-शाब्दबोधा-भावात् इति आह - **केचिदि**ति।

नवीनैः स्वीकारादिति। उद्देश्यघटक-सकलपदार्थानाम् विधेयघटकत्त्वेनैव भानम् इति नियमः। अभेदान्वयबोधस्थले उद्देश्यघटक-आश्रयांशात्मकत्वम् अवश्यमेव विधेयस्येति तात्पर्यम्। विधेयत्वञ्च अपूर्वबोध्यत्वम्। अर्थबोधनाय लोके वाक्यप्रयोगः। वाक्यरचनाफलञ्च प्रवृत्तिनिवृत्त्युपयोगि-विशिष्टविषयकज्ञान-सम्पत्तिः संशयनिवृत्तिश्चेति सर्वाभिमतः पन्थाः। एवञ्च घटत्वेन अवगतेऽपि उद्देश्ये 'घटे घटो नीलघटो न वा' इति संशयस्य सर्वानुभव सम्पन्नतया नीलघटार्थिनां तत्र प्रवृत्तिः न स्यात्। नीलाभिन्नघट-विषयक-शाब्दबोध-मात्रे तु असमानप्रकारकतया उक्तसंशयेन साकं प्रतिबध्य-प्रतिबन्धकभावो न स्यात्। अतो विधेयांशे अधिकावगाहि-शाब्दबोधो मन्तव्यः। तथा च नीलघटाभिन्नो घट इत्येव शाब्दबोधः। एतस्य च घटो नीलघटो न वा इति संशयप्रतिबन्धकं भवति एवेति अगत्या कस्यचिद् अशस्य अपूर्वत्वेऽपि तद्विशिष्टत्वेन पूर्वम् अवगतोऽप्यपूर्व एव इति अपूर्वबोध्यत्वरूप-विधेयत्वम् अस्त्येव इति अधिकावगाहिबोधो नवीनैः अङ्गीकृतः। मूले **नवीन** इति नामोच्चारणेन प्राचीनानां न अनुमतिः अस्मिन् पक्ष इति व्यञ्जना।

प्राचीनास्तु अभेदान्वयबोधस्थले उद्देश्यस्य अपूर्वबोध्यत्वरूप-विधेयत्वं नास्ति। उद्देश्यस्य घटादेः घटत्वेन रूपेण प्रथमावगतत्वात् पूर्वावगतत्वात् विधेयतया उद्देश्यावगाही शाब्दबोधो न भवति इति। अर्थाद् 'घटो नीलघट' इत्यादौ नीलाभिन्नो घट इत्येवमेव शाब्दबोधो न तु कदाचिदपि नीलघटाभिन्नो घट इति तात्पर्यम्। नन्वेवमभिधाने 'नीलो घट' इत्यादौ अपि केवल-नैल्यमात्रस्य विधेयत्वमापद्येत न तु आश्रयांशस्य घटस्यापि। घटस्य घटत्वेन रूपेण पूर्वावगतत्वादिति कीदृशो घट इति प्रश्ने 'नीलो घट' इति उत्तरणे घटस्य पूर्वमेव अनुगतत्वादिति चेत्? न। नीलस्य घटपदार्थेन साकम् अभेदान्वयो बाधितः अनुभवविरुद्धश्च। केवल-नैल्यमात्रान्वय-तात्पर्येण लोको 'नीलो घट' इति न प्रयुङ्क्ते, अपि तु नीलघटयोः अभेदान्वय-तात्पर्येणैव। अभेदान्वय-प्रतिभाषणेच्छयैव 'नीलो घट' इति प्रयुङ्क्ते भेदान्वयप्रतिभाषणेच्छया नैल्य-मात्रान्वय-तात्पर्येण च 'नीलस्य घट' इति षष्ठ्यन्तघटितमेव प्रयुङ्क्ते। 'राज्ञः पुरुष' इतिवत्, न तु 'राजा पुरुष' इतिवत्। अभेदान्वयबोधं प्रति समानवचनकत्व -नियमेनैव 'नीलो घटः', 'नीलस्य घट' इत्यनयोः वाक्ययोः वैलक्षण्यम्। यदि नैल्यमात्रस्य भेदसम्बन्धेनापि घटेऽन्वयः तर्हि शिष्टाभिमत-वाक्य-वैलक्षण्या-नुपपत्तिः। तथा च अगत्या आश्रयांशस्य घटस्यापि विधेयकोटौ प्रवेशेन नील-घटयोः द्वयोरेव अपूर्व-बोध्यत्वरूप-विधेयत्वं न तु नैल्यमात्रस्येति सिद्धान्तः। 'घटो नीलघट' इत्यादौ अपि शास्त्रसिद्धान्त-विरोधाभावात् लोकविरोधाभावाच्च

'नीलाभिन्नो घटः' इत्येव बोधः। नील-मात्रस्यैव विधेयत्वेन भानम्। एवञ्च नीलस्यैव अपूर्वबोध्यत्वरूप-विधेयत्वात् 'नीलाभिन्नो घटः' इति सिद्धान्तो न तु नीलघटाभिन्नो घट इति प्राचीनाभिमतिः।

ननु नवीनमतम् अभिप्रेत्य आपत्तिवारणोपायश्च 'घटो घट' इत्यत्र नीलोपस्थापक-नीलपदविरह एवेति पूर्वम् उक्तं कथं सङ्गच्छते? नीलोपस्थिति-विरहेऽपि घटत्वावच्छिन्न-प्रकारता-निरूपित-घटत्वावच्छिन्न-विशेष्यताक-शाब्द-बोधस्य 'पीतो घटः', 'रक्तो घट' इत्यादिष्वपि प्रतीतिविषयत्वात्। तथा च नीलो-पस्थिति-विरहस्य अकिञ्चित्करत्वाद् 'घटो घट' इत्यादौ अभेदसंसर्गक-घटप्रकारक-घटविशेष्यक-बोधः स्यादेव इति चेत् ? न। 'नीलघटो घट' इति उपलक्षणं 'पीतो घटो घटः', 'रक्तघटो घट' इत्यादीनामपि। तथा हि घटत्वेतर-धर्मोपस्थापक-सामग्रीसत्त्वे अभेदान्वयबोधो घटत्वेतर-धर्मोपस्थापक-सामग्र्या अभावेन अभेदान्वयबोधो इति तात्पर्यात्। 'घटो घट' इति स्थले तु घटेतर-धर्मोपस्थापक-सामग्र्या अभावेन अभेदान्वयबोधो न भवति इत्याशयात्। किञ्च 'नीलघटो घट' इति स्वरूपे नीलघटत्वावच्छिन्न-प्रकारतानिरूपित-घटत्वावच्छिन्न-विशेष्यताक-शाब्दबुद्धित्वादिरूपमेव तद्धर्मावच्छिन्न-कार्यसत्त्वम्। यच्च 'नीलघटो घट' इत्याद्याकांक्षाज्ञान-जन्यतावच्छेदकं तदवच्छिन्न-सामग्रीप्रयोज्यमेव। नीलादि-पदजन्य-नीलाद्युपस्थिति-घटित-सामग्र्या अभावेन 'घटो घट' इत्यादौ अभेदान्वयाभावात्। ननु प्रसिद्धव्यक्तेः कस्या अपि अन्यत्रोत्पत्तेः असम्भवो व्यवहारसिद्धः। तदापत्तिः कथमिति प्रश्ने प्रसिद्धो यो धर्मः तदवच्छिन्नकार्यता-निरूपित-कारणताश्रयबलेन तद्धर्मावच्छिन्नकार्यस्य आपत्तिरिति तात्पर्यकल्पनम्। एवञ्च अभेदसंसर्गक-घटत्वावच्छिन्नप्रकारक-घटत्वावच्छिन्नविशेष्यक-शाब्दबुद्धि-त्वावच्छिन्नं प्रति प्रथमान्तघटपद-समभिव्याहृत-प्रथमान्तघटपदत्वादि-रूप-आकाङ्क्षाज्ञानादेरेव कारणत्वेन तादृशसामग्र्याश्च 'नीलघटो घट' इत्यत्रत्यायाः सत्त्वेन नीलाद्युपस्थिति-विरहस्य निरर्थकत्वेन 'घटो घट' इत्यत्र अभेदान्वयः स्यादेवेति चेत् ? न। निर्विशेषस्य सामान्यस्य अभावेन सामान्यधर्मावच्छिन्ने कार्ये जननीये विशेषधर्मावच्छिन्न-कार्योत्पादकसामग्र्या एवापादकत्वम् इति निगमः। तथा च घटत्वावच्छिन्न-प्रकारता-निरूपित-घटत्वावच्छिन्न-विशेष्यताक-शाब्दबुद्धित्वरूप-सामान्यधर्मावच्छिन्न-कार्योत्पत्तिं प्रति नीलघटत्वावच्छिन्न-प्रकारतानिरूपित-घटत्वा-वच्छिन्न-विशेष्यताशालि-शाब्दबुद्धित्वरूप-विशेषधर्मावच्छिन्न-कार्योत्पादक-सामग्र्या नीलाद्युपस्थिति-घटिताया एव आपादकत्वेन नीलाद्युपस्थितेः अपेक्षणीयत्वेन तदभावाद् 'घटो घट' इत्यत्र आपत्त्यभाव इति तात्पर्यवर्णनात्।

शुद्धघटत्वावच्छिन्न-प्रकारता-निरूपित-घटत्वावच्छिन्न-विशेष्यताशालि-शाब्दबुद्धित्वावच्छिन्नं प्रति नीलघटत्वाच्छिन्न-प्रकारतया प्रसिद्धा सामग्री कथं 'घटो घट' इत्यादौ शाब्दबोधं जनयेत् इति ? एवञ्च नीलाद्युपस्थापक-नीलपदघटित-सामग्र्या अभावेन 'घटो घट' इत्यादौ अदोष इति विशिष्टाभिधानाच्च।

ननु व्यापकधर्मावच्छिन्ने कार्ये जननीये व्याप्यधर्मावच्छिन्न-कार्योत्पादक-सामाग्र्या केन रूपेण कारणता ? व्याप्यधर्मावच्छिन्न-कार्योत्पादक-सामग्रीकूटत्वेन कारणता ? आहोस्वित् यत्किञ्चित्सामाग्रीत्वेन ? आद्ये 'नीलघटो घट' इत्यत्र शाब्दबोधो न स्यात्, पीताद्युपस्थापक-पदाभावात्, सामग्रीकूटाभावात्। अन्त्ये योग्यता-तात्पर्यज्ञानयोः सत्त्वेन 'घटो घट' इत्यादौ आपत्तिः तदवस्थैवेति। यत्किञ्चिद्व्याप्य-धर्मावच्छिन्न-कार्योत्पादक-सामग्र्या एव कारणत्वम् इत्यपि न वक्तुं शक्यते। 'नीलघटा घट' इत्यादौ यत्किञ्चिद्व्याप्य-धर्मावच्छिन्न-कार्योत्पादक-सामग्रीसत्त्वेन 'घटो घट' इत्यादौ यत्किञ्चिदसत्त्वेन निर्वाहेऽपि यत्किञ्चित्पदप्रवेशेऽननुगतम् अदोषात् प्रयासो निरर्थकः।

**VV-S 5.2.1:** अथ नीलघटत्वावच्छिन्न-प्रकारताक-शाब्दबोधे 'नीलघटो घट' इति आकाङ्क्षाज्ञानस्य कारणत्वम्। पीतघटत्वावच्छिन्न-प्रकारताक-शाब्दबोधे 'पीतघटो घट' इति आकाङ्क्षा-ज्ञानस्य कारणत्वम्। एवं प्रत्येकं कार्यकारणभाव-कल्पनापत्तौ अनन्तकार्यकारणभाव-कल्पनापत्तिः। एवञ्च लाघवात् घटत्वावच्छिन्न-घटत्वेतर-धर्मावच्छिन्न-प्रकारताक-घटत्वावच्छिन्न-विशेष्यताक-शाब्दबोधे प्रथमान्त-घटपद-समभिव्याहृत-प्रथमान्तघटपदत्वरूप-आकाङ्क्षा-ज्ञानस्य हेतुताकल्पना-वश्यकत्वेन 'घटो घट' इत्यत्रापि तादृशाकाङ्क्षाज्ञानस्य सत्त्वेन घटत्वा-वच्छिन्न-घटत्वेतर-नीलत्वाद्यवच्छिन्न-प्रकारताक-शाब्दबोधापत्ति-सम्भव-निरासाय ग्रन्थकारप्रवृत्तिः। अर्थात् घटत्वेतर-धर्मस्य उपस्थापकाभावात् न शाब्दबोधो 'घटो घट' इत्यत्र। तत्र पदजन्य-वृत्तिज्ञानाधीनोपस्थितेः कारणात् पूर्वम् उक्तमपि प्रकारान्तरेण एतत्पुनरपि सारल्यार्थं विस्पष्टीकृतम्। आपत्तौ वारितायामपि 'द्रव्यं घट' इति दृष्टान्तेन 'घटो घट' इत्यत्र पुनरपि दर्शयति **अथेति**। धर्मितावच्छेदकता इत्यस्य विशेष्यतावच्छेदकता इत्यर्थः। 'द्रव्यं घट' इत्यत्र द्रव्यं धर्मी। धर्मितावच्छेदकं द्रव्यत्वम्। द्रव्यत्वनिष्ठा विषयता च धर्मितावच्छेदकता-रूपा। तत्रैव च सम्बन्धत्वम्। तेनैव सम्बन्धेन द्रव्यत्वे शाब्दबोधः। शुद्धघटत्वा-वच्छिन्न-प्रकारक-अभेदान्वयो यथा तथैव 'घटो घट' इत्यत्रापि धर्मितावच्छेदकता-सम्बन्धेन घटत्वे शुद्धघटत्वावच्छिन्न-प्रकारकाभेदान्वयबोधस्य आपत्तिः अस्त्येव इत्याह - **द्रव्यत्वादौ** इति। न च धर्मितासम्बन्धेन कार्यकारणभावः अस्तु, अलम् अवच्छेदकत्वनिवेशेन। तत्तद्धर्मिणां भिन्नत्वेऽपि एकधर्मावच्छिन्न-धर्मिताया अनुगमेन

सकलधर्मिषु धर्मितासम्बन्धेन शाब्दबोधो भविष्यति एवेति वाच्यम्। "व्यक्त्याकृति-जातयः पदार्थः" इति सूत्रबलेन द्रव्यत्वेऽपि शाब्दबोध इति व्यवहारानुपपत्ति तेन धर्मितासम्बन्धेन द्रव्यत्वस्य कार्याधिकरणवृत्तित्वाभावात्। विषयता सम्बन्धेन द्रव्यत्वस्य कार्याधिकरणवृत्तित्वाभावात्। विषयतासम्बन्धेन शाब्दबुद्धित्वावच्छिन्न प्रति विषयतासम्बन्धेन उपस्थित्यादिकं कारणमिति विषयनिष्ठ-प्रत्यासत्त्या कार्यकारणभावे विषयानिवेशप्रयुक्त-लाघवबलेन एव आपत्तिप्रदर्शनम्। तदेव आह **धर्मितेति। धर्मितावच्छेदकतासम्बन्धेन द्रव्यत्वादौ** इति। कार्यतावच्छेदक-कारणतावच्छेदक-अन्यतरसम्बन्धेन कार्यकारणान्यतराधिकरणीभूतो यो देशः तदवच्छिन्न-तद्धर्मावच्छिन्न-कार्योत्पत्ति-प्रयोजकत्वं तु तद्धर्मावच्छिन्न-कार्यता-निरूपित-कारणतावच्छेदकावच्छिन्नघटित-समुदायात्मक सामग्र्या एवेति नियमः। अत एव 'कपाले घट उत्पद्यत' इति वाक्ये अवच्छेदकत्वं सप्तम्यर्थम् आदाय लेके व्यवहारः सार्वजनीनः। तद्वत् 'पर्वते घट उत्पद्यते' इति न भवति, तद्देशावच्छिन्नत्वाभावात्। किन्तु विशल्या-व्रणहन्त्री बलवह्निकादि-महौषध्यादि-कार्यत्वावच्छिन्नं प्रति तादात्म्य-सम्बन्धेन हिमालय-विन्ध्यादीनामेव कारणत्वम्। अत एव 'कुलालगृहे घटा उत्पद्यन्ते', 'हिमालये विन्ध्यादौ वा महौषधय उत्पद्यन्त' इत्येवं सम्प्रदायसिद्धाः प्रयोगाः। तथा च प्रकृते धर्मितावच्छेदकता-सम्बन्धेन द्रव्यत्वादौ इत्यत्रापि 'कपाले घट उत्पद्यत' इत्यादिवत् अवच्छेदकत्वं सम्बन्धावच्छिन्नत्वं सप्तम्यर्थ इति योजना।

अत्रायमभिसन्धिः। ननु द्रव्यत्वावच्छिन्न-विशेष्यता-निरूपित-घटत्वाव-च्छिन्न-प्रकारताक-शाब्दबुद्धित्वावच्छिन्न-कार्यता-निरूपित-कारणतावच्छेदकधर्मो यद्यपि 'घटो द्रव्यम्' इत्यत्र घटत्वावच्छिन्न-प्रकारक द्रव्यत्वावच्छिन्न-विशेष्यक-योग्यताज्ञानादौ विद्यतेतराम्। अत एव तद्घटित-समुदायस्य सामग्रीत्वं तथापि कार्यतावच्छेदक-समवायसम्बन्धेन कारणतावच्छेदक-समवायसम्बन्धेन च पूर्वोक्त-कार्यकारणान्यतराधिकरणम् आत्मैव नान्यः कश्चनेति तदवच्छिन्न-कार्योत्पत्ति-प्रयोजकत्वमेव न तु द्रव्यत्वावच्छिन्नायां, धर्मितावच्छेदकता-सम्बन्धस्य कार्यता-वच्छेदक-सम्बन्धत्वाभावेन द्रव्यत्वस्य तद्देशीयत्वाभावाच्च। तथा च कथं ग्रन्थसङ्गतिरिति चेत् ? न। पूवोक्तनियमे हि कार्यतावच्छेदक-सम्बन्धेन कार्याधिकरणम् इत्यंशे अवच्छेदकता धर्म-संसर्ग-उभयसाधारणी गृह्यते। तद्धर्मा-वच्छिन्नकार्यता इत्यत्र अवच्छेदकता च पर्याप्तिसम्बन्धेनेति न आग्रहः, किन्तु अपर्याप्त्या अपि अवच्छेदकता गृह्यत इति विशिष्टव्याख्यावर्णनेन ग्रन्थानुपपत्ति-परिहारात्। तथा च धर्मितावच्छेदकताया द्रव्यत्वनिष्ठायाः कार्यतावच्छेदक-घटकत्वं सुघटमेव। तेन सम्बन्धेन द्रव्यत्वस्य कार्याधिकरणदेशत्वमित्यलम्।

अत्र कार्यकारणभावे प्रकारद्वयम्। आत्मनिष्ठ-प्रत्यासत्त्या शाब्दबोधः विषयनिष्ठ-प्रत्यासत्त्या च। प्रत्यासत्तिः सम्बन्धः। आदौ समवाय-सम्बन्धः अन्त्ये विषयता-सम्बन्धः। समवाय-सम्बन्धेन शाब्दबोध-कारणीभूत-उपस्थिति-योग्यता-तात्पर्य आसत्ति-ज्ञानानां ज्ञानरूपत्वेन आत्मनि स्थितिः भवति इति शाब्दबोधादि-प्रतियोगाक-आत्मनिष्ठ-समवायेन कार्यकारणभावः। समवायेन उक्तकारणानाम् आत्मनिष्ठत्वेन शाब्दबोधरूपकार्यम् अपि आत्मनि एव उत्पद्यते। समवायसम्बन्धेन शाब्दबुद्धत्वावच्छिन्नं प्रति समवाय-सम्बन्धेन उपस्थित्यादिकं कारणम् इति कार्य-कारणभाव। परन्तु समवायेन पटविषयकोपस्थितत्त्वे समवायसम्बन्धेन आत्मनि घटत्त्वावच्छिन्नविषयक-शाब्दबोधापत्तिः स्याद्, अतो विषयप्रवेशः। तथा च समवाय-सम्बन्धेन पटत्वावच्छिन्नविषयक-शाब्दबुद्धित्वावच्छिन्नं प्रति समवाय-सम्बन्धेन पटत्वावच्छिन्न-विषयकोपस्थित्यादिकं कारणमिति। अत्र अनन्त-विषयणाम् अनन्त-धर्मितावच्छेदकानां वा प्रवेशः। विषयनिष्ठप्रत्यासत्त्या कार्यकारणभावस्तु ज्ञानस्य विषयतासम्बन्धेन विषये स्थितिः। ज्ञानस्य समवायेन आत्मस्थितिवत् ज्ञान-स्वरूप-शाब्दबोध-तत्कारणानां विषयता-सम्बन्धेन विषये सम्भवात्। विषयता-सम्बन्धेन शाब्दबुद्धित्वावच्छिन्नं प्रति विषयतासम्बन्धेन उपस्थित्यादिकं कारणमिति। परन्तु अत्रापि समवायेन देवदत्तात्मनि उपस्थित्यादि-कारणसत्त्वे यज्ञदत्तस्यापि शाब्दबोधापत्तिः। अतः तत्पुरुषीयत्व-निवेशः। तथा च देवदत्तीय-घटत्वावच्छिन्न-विषयक-शाब्दबुद्धित्वावच्छिन्नं प्रति विषयता-सम्बन्धेन देवदत्तीय-घटत्वावच्छिन्न-विषयकोपस्थित्यादिकं कारणम्। एवञ्च आत्मनिष्ठप्रत्यासत्त्या शाब्दबोधे विषयप्रवेशः। विषयनिष्ठप्रत्यासत्त्या शाब्दबोधे तत्पुरुषीयवत्त्वनिवेश इति उभयत्र तुल्यत्वमेव। विशेष्यविशेषणयोः तुल्यसंख्याकत्वेन लाघवत् नापि गौरवम्। परन्तु यत्र विशेष्यविशेषणयो विषमसंख्याकत्वं न भवति, अर्थात् विशेषणानि बहूनि 'नीलो घटः', 'पीतो घटः', 'सुन्दरो घट' इति, विशेष्यञ्च एकमेव तत्र आत्मनिष्ठप्रत्यासत्त्या शाब्दबोधे यदात्मनि उपस्थित्यादिकं तदात्मन्येव शाब्दबोधः। आत्मनां च नानात्वेन पृथक् पृथक् अनन्तकार्यकारणभावः। तथा हि समवाय-सम्बन्धेन अभेदसम्बन्धावच्छिन्न-नीलत्वावच्छिन्न-प्रकारतानिरूपित-घटत्वावच्छिन्न-विशेष्यताक-शाब्दबुद्धित्वावच्छिन्नं प्रति समवायेन अभेदसम्बन्धावच्छिन्न-नीलत्वावच्छिन्न-प्रकारतानिरूपित-घटत्वावच्छिन्न-उपस्थित्यादिकं कारणम्। एवं समवायेन अभेदसम्बन्धावच्छिन्न-पीतत्वावच्छिन्न-प्रकारता-निरूपित-घटत्वावच्छिन्न-विशेष्यताक-शाब्दबुद्धित्वावच्छिन्नं प्रति समवायेन अभेद-सम्बन्धावच्छिन्न-पीतत्वा-वच्छिन्न-प्रकारतानिरूपित-घटत्वावच्छिन्न-उपस्थित्यादिकं कारणम्। एवं समवायेन अभेदसम्बन्धावच्छिन्न-सुन्दरत्वावच्छिन्न-इत्याद्यनन्त-कार्यकारणभावाः गौरवग्रस्ताः।

विषयनिष्ठप्रत्यासत्त्या शाब्दबोधे तु घटत्वावच्छिन्न-विशेष्यता-निरूपित अभेद-सम्बन्धावच्छिन्न-प्रकारतावच्छेदकता-सम्बन्धेन तत्पुरुषीय-शाब्दबुद्धित्वावच्छिन्न प्रति घटत्वावच्छिन्नविशेष्यता-निरूपित-अभेदसम्बन्धावच्छिन्न-प्रकारतावच्छेदकतासम्बन्धेन तत्पुरुषीयोपस्थित्यादिकं कारणम् इति एकेनैव कार्यकारणभावेन पूर्वोक्तवाक्ये निर्वाहः। किञ्च यत्र विशेषणम् एकमेव विशेष्याणि बहूनि 'नीलो घटः', 'नीलः पटः', 'नीलो मठः' इति, अत्र आत्मनिष्ठप्रत्यासत्त्या शाब्दबोधे यदात्मनि उपस्थित्यादिकं तदात्मन्येव शाब्दबोध इति पूर्वक्तोरीत्या समवायेन अभेदसम्बन्धावच्छिन्न-नीलत्वावच्छिन्न-प्रकारतानिरूपित-घटत्वावच्छिन्न-विशेष्यताक-शाब्दबुद्धित्वावच्छिन्नं प्रति समवायेन अभेदसम्बन्धावच्छिन्न-नीलत्वावच्छिन्न-प्रकारतानिरूपित-घटत्वावच्छिन्न-उपस्थित्यादिकं कारणम्। एवं समवायेन अभेदसम्बन्धावच्छिन्न-नीलत्वावच्छिन्न-प्रकारतानिरूपित-पटत्वावच्छिन्न-विशेष्यताक-शाब्दबुद्धित्वावच्छिन्न प्रति समवायेन अभेदसम्बन्धावच्छिन्न-नीलत्वावच्छिन्न-प्रकारतानिरूपित-पटत्वावच्छिन्नविशेष्यताक-उपस्थित्यादिकं कारणमिति। आत्मनाम् अनन्तत्वेन पृथक् पृथक् अनेककार्यकारणभावा गौरवग्रस्ताः। विषयनिष्ठप्रत्यासत्त्या शाब्दबोधे तु अभेदसम्बन्धावच्छिन्न-नीलत्वावच्छिन्न-प्रकारता-निरूपित-विशेष्यतावच्छेदकता-सम्बन्धेन शाब्दबुद्धित्वावच्छिन्नं प्रति अभेदसम्बन्धावच्छिन्न-नीलत्वावच्छिन्न-प्रकारता-निरूपित-विषयता(धर्मितावच्छेदकता)सम्बन्धेन तत्पुरुषीयोपस्थित्यादिकं कारणमिति लाघवसम्पन्न एक एव कार्यकारणभावः। तथा च प्रकृते मूलग्रन्थसलग्न-इच्छया आत्मनिष्ठ-प्रत्यासत्त्या शाब्दबोधे चिकीर्षिते विषयप्रवेशाद् द्रव्य-घट-पदाभ्यां द्रव्यत्वेन घटत्वेन चोपस्थितिः। तदा आत्मनि समवायेन तद्विषयक-शाब्दबोधः तत्रैव। 'घटो घट' इत्यत्र द्वाभ्यां घटपदाभ्यां घटत्वेन एकरूपेणैव उपस्थितिः इति वैषम्यात् तादृशदृष्टान्तेन 'घटो घट' इत्यत्र आपत्तिः न सम्भवति इत्याशयेन आत्मनिष्ठप्रत्यासत्तिं गौरवान्वितां विहाय लाघवोपस्कृत-विषयनिष्ठ-प्रत्यासत्त्या शाब्दबोधमाह **धर्मितावच्छेदकतासम्बन्धेने**ति। अयमभिप्रायो ग्रन्थकृताम्। धर्मितावच्छेदकता-सम्बन्धेन 'द्रव्यं घट' इत्यत्र द्रव्यत्वे अभेदसम्बन्धेन घटप्रकारको बोधो भवति। तथैव रीत्या 'घटो घट' इत्यत्रापि धर्मितावच्छेदकता-सम्बन्धेन घटत्वे घटप्रकारकाभेदान्वयबोधो विषयनिष्ठप्रत्यासत्त्या लाघवानुगृहीतया अभीष्टः। स कथं न स्यात् ? 'द्रव्यं घट' इति अत्रत्या घटप्रकारक-अभेदान्वयबोधीया या सामग्री सा च घट इत्यत्रापि वरीवर्ति एव। स्वात्मना आभेदस्यापि सत्त्वात् योग्यताज्ञानबलेन 'घटो घट' इत्यत्र घटत्वावच्छिन्न-प्रकारता-निरूपित-घटत्वावच्छिन्न-विशेष्यताक-शाब्दबोधस्य आपत्तिः अस्ति इति एतत्सर्वं मनसि निधाय आह - पूर्वपक्षकर्त्ता **धर्मितावच्छेदके**ति ग्रन्थेनेति।

ननु अभेदान्वयविषयक-तात्पर्यज्ञानादिघटित-सामग्रीबलेन 'द्रव्यं घट' इत्यत्र घटत्वावच्छिन्न-प्रकारक-अभेदान्वयबोधेऽपि तद्बोधानुकूल-सामग्र्या 'घटो घट' इत्यत्राभाव एवेति कथम् अभेदान्वयबोध इति आशयेन आह - न च तत्र आपादकाभाव इति। सामग्रीकदम्बं वक्ति तात्पर्यज्ञानविशेषादीति। अयमभिप्रायः। 'द्रव्य घट' इत्यत्र यावती शाब्दबोधप्रयोजिका सामग्री वरीवर्त्ति तावत्येव 'घटो घट' इत्यत्रापि इति दृष्टान्ते कियती सामग्री। घटपदं द्रव्यपदार्थानन्वित-स्वार्थ बोधयतु इति तात्पर्यज्ञानम्। घटत्वावच्छिन्नाभेदसंसर्गवान् द्रव्यपदार्थ इति योग्यता-ज्ञानम्। धर्मितावच्छेदकतासम्बन्धेन योग्यताज्ञानं द्रव्यत्वे विद्यते इयत्याः सामाग्र्या 'घटो घट' इत्यत्रापि निरन्तरं विद्यमानत्वात् तस्या उत्पादकत्वेन घटत्वावच्छिन्न-प्रकारक-घटत्वावच्छिन्न-विशेष्यक-अभेदसंसर्गकबोधः स्यादेवेति तात्पर्यम्।

ननु घटोत्पादकत्वेनापि कुलालः पटं कर्त्तु न शक्नोतीति न्यायेन 'द्रव्यं घट' इत्यत्र द्रव्यपदजन्य-द्रव्यत्वप्रकारक-उपस्थिति-योग्यताज्ञानादिघटिता सामग्री धर्मितावच्छेदकता-सम्बन्धेन द्रव्यत्वे शाब्दबोधं जनयति। सा कथं 'घटो घट' इत्यत्र शाब्दबोधं जनयेदिति चेत् ? न। धर्मितावच्छेदकता-सम्बन्धेन द्रव्यत्वे शाब्दबोधोत्पादिका यादृशी सामग्री तादृशी 'घटो घट' इहापि इति तात्पर्यात्। यथा 'द्रव्यं घट' इति वाक्यं घटान्वितद्रव्यपरम् इतिवत् 'घटो घट' इति वाक्यं घटान्वितपरमिति तात्पर्यज्ञानात्। एवं योग्यताज्ञानादयोऽपि।

ननु एवमपि दृष्टान्तदार्ष्टान्तिकयोः महद्वैषम्यम्। तादृशोपस्थितियोग्यता-ज्ञानादीनाम् आत्मनिष्ठतया धर्मितावच्छेदकता-सम्बन्धेन जायमान-शाब्दबोधस्य विषयनिष्ठतया सामानाधिकरण्याभावात् कथं तस्य धर्मितावच्छेदकता-सम्बन्धेन द्रव्यत्ववृत्ति-शाब्दबोध-उत्पादकत्वम्। किञ्च अन्यत्र वर्त्तमानस्य तादृशोपस्थिति-योग्यताज्ञानादेः अन्यत्रापि धर्मितावच्छेदकता-सम्बन्धेन घटत्वावच्छिन्न-प्रकारताक-शाब्दबोधोत्पादन-सामर्थ्यकल्पने तत्र स्थित-तादृशोपस्थिति-योग्यताज्ञान-बलादेव 'घटो घट' इत्यत्राऽपि घटत्वादौ तादृश-शाब्दबोधापत्तिः दुर्वारैव। सत्यमेतत् । घटत्वावच्छिन्न-प्रकारताक-द्रव्यत्वावच्छिन्न-विशेष्यताक-अभेदान्वयबोधस्य आत्म-निष्ठत्वस्य कारणत्वम् उक्तयोग्यताज्ञानोपस्थित्यादेः भवताम् अभिमतम्। एवञ्च तादृश-शाब्दबुद्धित्वाक्रान्तस्य धर्मितावच्छेदकतासम्बन्धेन द्रव्यत्वे जायमानशाब्दबोधे अपि सत्त्वेन द्रव्यत्वे घटत्वावच्छिन्न-प्रकारताक-अभेदान्वयबोधस्य घटत्वावच्छिन्न-प्रकारताक-द्रव्यत्वावच्छिन्न-विशेष्यताक-शाब्दबुद्धित्वाक्रान्तत्वेन तं प्रति तादृश-योग्यताज्ञानादीनां हेतुत्वम्। तादृश-शाब्दबुद्धित्वावच्छिन्न-धर्मितावच्छेदकतासम्बन्धेन द्रव्यत्वे जायमान-शाब्दबोधं प्रति कारणत्वं न इति किं विनिगमकम् इति भवतैव विचिन्त्यताम्। न हि सम्बन्धकालभेदेन नानास्थले जायमानः तादृश-शाब्दबोधः।

समवायसम्बन्धेन जायमानो यः शाब्दबोधः तयोः परस्पर-भेदोपपादन-कथनमपि भवितुमर्हति। किञ्च घटत्वेऽपि तदेव ज्ञानं शाब्दबोधं जनयत्विति कथमपि न युक्तियुक्तम्। द्रव्यत्ववृत्तिधर्मितावच्छेदकतायाः तादृशयोग्यताज्ञान-निरूपित-कार्यतावच्छेदककोटि-प्रविष्टतया तादृश-शाब्दबोधजनकत्वेऽपि तत्कार्यतावच्छेदकाप्रविष्ट-घटत्ववृत्ति-तादृश-शाब्दबोधजनकत्वे मानाभावात्। न च द्रव्यत्वावच्छिन्न-विशेष्यताकयोग्यताज्ञान-निरूपित-कार्यतावच्छेदकत्वं यदस्ति तदेव घटत्वावच्छिन्न-प्रकारताक-घटत्वावच्छिन्न-विशेष्यताकाभेदान्वयस्यापि अस्ति तत्कुक्षिप्रविष्टत्वात्। घटत्वेऽपि तादृशसम्बन्धबलेन तादृशयोग्यताज्ञानादिबलात् शाब्दबोधः स्यादेवेति वाच्यम्। तादृशयोग्यताज्ञानादिघटित-सामग्र्याः तादृश-शाब्दबोधं प्रति अव्यापकत्वेन कारणत्वाभावात्।

नन्वेवमपि धर्मितावच्छेदकता-सम्बन्धेन शाब्दबुद्धित्वावच्छिन्नं प्रति द्रव्यत्वावच्छिन्न-विशेष्यताक-योग्यताज्ञानस्य कारणत्वम् इत्येव फलितं भवति। यथा च 'घटः प्रमेय' इत्यादौ प्रमेयत्वेऽपि धर्मितावच्छेदकता-सम्बन्धेन शाब्दबोधो न स्यात्। द्रव्यत्वावच्छिन्न-विशेष्यकोपस्थितेः योग्यताज्ञानादेः अभावात्। प्रमेयत्वावच्छिन्न-विशेष्यताक-योग्यताज्ञानादीनामपि कारणत्वकल्पने परस्परजन्यबोधे व्यभिचारापत्त्या तद्वारणाय कार्यतावच्छेदककोटौ कारणानन्तर्यनिवेशस्य आवश्यकतया गौरवात्। न च धर्मितावच्छेदकता-सम्बन्धेन शाब्दबोधं प्रति योग्यताज्ञानादीनाम् एवास्तु कारणत्वम्। एवञ्च न गौरवं नापि परस्परजन्यबोधे व्यभिचार इति वाच्यम्। तथा सति 'घटो द्रव्यम्' इति योग्यताज्ञानदशायां 'घटः प्रमेय' इत्यादि-वाक्यादपि शाब्दबोधापत्तिः। न च द्रव्यत्ववृत्ति-धर्मितावच्छेदकता-सम्बन्धेन शाब्दबोध एव तादृशयोग्यताज्ञानस्य कारणत्वमिति वाच्यम्। योग्यताज्ञानाभावेऽपि घट-पटयोः अभेदान्वयापत्तेः। न च धर्मितावच्छेदकता-सम्बन्धेन द्रव्यत्ववृत्ति-शाब्दबोधे द्रव्यत्वावच्छिन्न-विशेष्यताक-योग्यताज्ञानादेः कारणत्वमिति न दोष इति वाच्यम्। तथा सति अनन्तकारणभावापत्तौ परस्परजन्यबोधे व्यभिचारवारणाय अव्यवहितोत्तरत्व-निवेशेऽपि 'घटो द्रव्यम्', 'घटः प्रमेयः', 'घटो घट' इति समूहालम्बने व्यभिचारापत्तेः उक्तगौरवस्य दुरुद्धरत्वाच्च।

अत्र **मान्यास्तु** तत्तत्पुरुषाणां तत्तद्विषयाणाञ्च आनन्त्यात् कथं लाघव-गौरव-निर्णय इति विचिकित्सायां लाघवोपायप्रदर्शनम्। तत्तत्सङ्ख्यापरिमित-पुरुषविषयसम्बन्धे लाघवम्। यथा दश पुरुष दश विषयाश्च अध्यारूढाः। तत्र कार्यकारणभावविचारे लाघवानुगमः। समवायस्य संसर्गत्वपक्षे समवायेन 'घटवद् द्रव्यम्' इति शाब्दबुद्धित्वावच्छिन्नं प्रति 'घटो द्रव्यम्' इत्याकारकं योग्यताज्ञानं समवाय-सम्बन्धेन कारणम्। एवमेव 'समवायेन घटो द्रव्यम्' इत्याकारक-

शाब्दबुद्धित्वावच्छिन्नं प्रति 'समवायेन घटो द्रव्यम्' इत्याकारकं योग्यताज्ञानं कारणम्। तथा 'समवायेन मठो द्रव्यम्' इत्याकारक-शाब्दबुद्धित्वावच्छिन्नं प्रति 'समवायेन मठो द्रव्यम्' इत्याकारकं योग्यताज्ञानं कारणम्। तथा 'समवायेन कटो द्रव्यम्' इत्याकारकशाब्दबुद्धित्वावच्छिन्नं प्रति 'समवायेन कटो द्रव्यम्' इत्याकारकं योग्यताज्ञानं कारणम्।

एवं प्रकारेण दशविधपुरुषविशेष्यका दशविधकार्यकारणभावाः सम्पद्यन्ते। एवञ्च यथा द्रव्यपदार्थान्वययोग्यता घटादिपदार्थे तथैव पुरुषेष्वपि द्रव्यान्वय-योग्यता निराबाधैवेति। 'समवायेन द्रव्यं चैत्र' इत्याकारक-शाब्दबुद्धित्वावच्छिन्नं प्रति 'द्रव्यं चैत्र' इत्याकारक-योग्यताज्ञानं समवायेन कारणम्। एवं 'द्रव्यं मैत्रो', 'द्रव्यं विष्णुमित्र' इत्यादावपि पार्थक्येन विलक्षण एव कार्यकारणभावः सङ्कलने च विंशतिः कार्यकारणभावाः। धर्मितावच्छेदकतासम्बन्धेन शाब्दबुद्धित्वावच्छिन्नं प्रति धर्मितावच्छेदकतासम्बन्धेन योग्यताज्ञानं कारणमिति मते तु धर्मितावच्छेदकता-सम्बन्धेन चैत्रीयद्रव्यत्वावच्छिन्न-अभेदसम्बन्धावच्छिन्न-प्रकारताक-शाब्दबोधे धर्मिता-वच्छेदकता-सम्बन्धेन चैत्रीय-द्रव्यत्वावच्छिन्न-अभेदसम्बन्धावच्छिन्न-प्रकारताक-योग्यताज्ञानं कारणम्। एवं 'द्रव्यं मैत्र' इत्यत्रापि धर्मितावच्छेदकता-सम्बन्धेन मैत्रीय-द्रव्यत्वावच्छिन्नाभेद-सम्बन्धावच्छिन्न-प्रकारताक-शाब्दबोधे धर्मितावच्छेदता-सम्बन्धेन मैत्रीयद्रव्यत्वावच्छिन्न-प्रकारताक-योग्यताज्ञानं कारणम्। एवं रीत्या दशविधपुरुषप्रयुक्ता दशैव कार्यकारणभावाः न तु विशेष्य-दशभेदप्रयुक्ता अपि कार्यकारणभावाः।

एवञ्च लाघवस्य विद्यमानत्वात् धर्मितावच्छेदकतायाः प्रत्यासत्तित्वं निर्विवादम्। एवञ्च द्रव्यत्वावच्छिन्न-विशेष्यत्वावच्छिन्न-प्रकारकज्ञानवत् घटत्वा-वच्छिन्न-प्रकारताक-ज्ञानत्वरूपकारणतावच्छेदकस्य प्रतीतिसिद्धस्य घटत्वावच्छिन्न-प्रकारक-घटत्वावच्छिन्न-विशेष्यकज्ञानेऽपि वर्त्तमानत्वात् तद्घटित-समुदायस्यापि कारणसामग्रीत्वं सम्भवत्येव इति धर्मितावच्छेदकता-प्रत्यासत्त्या घटत्वे घटत्वावच्छिन्न-प्रकारक-शाब्दबोधः कथं न इति ग्रन्थाशयः इति ऊचुः।

**VV-S 5.2.2:** तत्कार्यतावच्छेदक-सम्बन्धता-विरहेऽपीति। आत्मनिष्ठ-समवायस्यैव तादृशकार्यतावच्छेदकत्वात् द्रव्यत्वनिष्ठाया धर्मितावच्छेदकतायाः तत्कार्यतावच्छेदक-धर्मघटकत्वात्।

अयमभिप्रायः। यद्यपि 'पर्वतो वह्निमान्' इत्यादौ बह्न्यवयवेषु वह्न्युत्पत्तौ चिकीर्षितायां समवाय-सम्बन्धस्यैव कार्यतावच्छेदकसम्बन्धत्वं, न तु संयोगस्य इति। तथापि कार्यतावच्छेदकसम्बन्धत्वाभावेऽपि कार्यतावच्छेदक-धर्म-घटकत्वं संयोगस्य अस्त्येव इति। किञ्च समवायसम्बन्धेन वह्न्युत्पत्तौ संयोगस्य

कार्यतावच्छेदकसम्बन्धत्वाभावेऽपि अन्यत्र पर्वतादौ वह्न्युत्पत्तौ पर्वतानुयोगिक-वह्निप्रतियोगिक-कार्यतावच्छेदक-सम्बन्धत्वम् अस्त्येव।

एवञ्च प्रकृतेऽपि 'द्रव्यं घट' इत्यत्र अभेदान्वयबोधे जननीये समवायस्यैव कार्यतावच्छेदकसम्बन्धत्वम्, न तु धर्मितावच्छेदकतायाः। तथापि द्रव्यत्वनिष्ठाया धर्मितावच्छेदकतायाः कार्यतावच्छेदकधर्मघटकत्वम् अस्त्येव। विषयतारूपा धर्मितावच्छेदकता द्रव्यत्वनिष्ठा स्वनिरूपित-विषयिता-सम्बन्धेन शाब्दबोधे शाब्दबोधत्वस्य इव उक्तधर्मितावच्छेदकता-वैशिष्ट्यस्यापि सत्त्वात्। अभेदसम्बन्धावच्छिन्न-घटत्वावच्छिन्न-प्रकारतानिरूपित-द्रव्यत्वावच्छिन्न-विशेष्यताक-शाब्दबोधत्वमेव कार्यतावच्छेदकं, तथापि स्वनिरूपित-विषयिता-सम्बन्धेन धर्मितावच्छेदकत्वं तत्र वरीवर्त्त्येव।

ननु आत्मनि विद्यमाना द्रव्यत्वावच्छिन्नोपस्थिति-योग्यताज्ञानादिघटिता सामग्री-स्वीयकार्यतानवच्छेदक-धर्मितावच्छेदकता-सम्बन्धेन घटत्वेऽपि अभेद-सम्बन्धावच्छिन्न-घटत्वावच्छिन्न-प्रकारताक-शाब्दबोधं कथं न उत्पादयतीति चेत् ? न। घटत्वे धर्मितावच्छेदकता-सम्बन्धेन जायमान-घटप्रकारक-अभेदबुद्धित्वस्य कार्यतावच्छेदक-द्रव्यत्वावच्छिन्न-विशेष्यताक-शाब्दबुद्धित्व-घटकत्वाभावात्। 'द्रव्यं घट' इत्यत्र तु द्रव्यत्वे विद्यमान-धर्मितावच्छेदकताया एव कार्यतावच्छेदकधर्म-घटकत्वेन तत्र इष्टबोधस्य निर्विवादत्वात्।

न च द्रव्यत्वावच्छिन्नोपस्थिति-योग्यताज्ञानादि-घटिता या सामग्री तत्कार्यतावच्छेदकं घटत्वावच्छिन्न-विशेष्यताक-शाब्दबुद्धित्वम्। एवं स्वीकारे घटत्वनिष्ठ-धर्मितावच्छेदकतायाः स्वीयकार्यतावच्छेदक-धर्मघटकत्वं स्याद् एवेति वाच्यम्। व्यापकधर्मावच्छिन्ने कार्ये जननीये व्याप्यधर्मावच्छिन्न-कार्योत्पादक-सामग्र्या अपेक्षेति यत्तच्छब्दप्रवेशः। यद्धर्मावच्छिन्नकार्यत्वावच्छिन्नं प्रति यद्धर्मावच्छिन्नसामग्र्या व्याप्यत्वं स एव धर्मः तत्सामग्र्याः कार्यतावच्छेदकमिति फलति। द्रव्यत्वावच्छिन्न-विशेष्यता अन्या घटत्वावच्छिन्न-विशेष्यता अन्या इति कार्यतावच्छेदकभेदात् न आपत्तिरिति वर्णनात्।

**VV-S 5.2.3:** **अनन्तकारणता-कल्पनमपेक्ष्येति**। न च धर्मितावच्छेदकता-सम्बन्धेन एव यदि कार्यकारणभावः तर्हि यस्य पुरुषस्य 'घटो द्रव्यम्' इति वाक्ये द्रव्यत्वावच्छिन्न-विशेष्यक-योग्यताज्ञानं तदपेक्षया अन्यस्य पुरुषस्यापि तेनैव योग्यताज्ञानेन शाब्दबोधापत्तिरिति वाच्यम्। कार्यकारणतावच्छेदक-कोटौ तत्तत्पुरुषीयत्वस्य निवेशेन दोषाभावः तत्पुरुषीयद्रव्यत्वावच्छिन्न-विषयक-शाब्दबुद्धि-त्वावच्छिन्नं प्रति तत्पुरुषीय-योग्यताज्ञानं कारणमिति न पुरुषान्तरस्य शाब्दबोध इति कल्पनात्। न च तत्तद्विषयाणां तत्तत्पुरुषाणां च अनन्तत्वेन अपरिमितकार्य-

कारणभावापत्तौ महद्गौरवमिति वाच्यम्। देवदत्तादि-दशपुरुषान् घटादिदशविषयान् अहं जानामि इत्यादौ देवदत्तादि-दशपुरुष-विषयक-घटादि-दशविषय-विषयक-ज्ञानवान् अहम् इत्येव शाब्दबोधः। तत्र दशैव पुरुषा दशैव विषयाः च एवं च आत्मनिष्ठ-प्रत्यासत्त्या कार्यकारणभावे स्वीकृते तत्तत्पुरुषत्वस्यापि धर्मितावच्छेद-कत्व-सम्भवः अस्त्येवेति दशसंख्याका एव कार्यकारणभावाः। घटादिविषयनिष्ठ-घटत्वादि-धर्मस्यैव धर्मितावच्छेदकत्वेन घटादिविषयाणां भिन्नत्वेन धर्मितावच्छेदक-भेदाद् दश कार्यकारणभावा इति विंशतिः कार्यकारणभावाः। धर्मितावच्छेदकनिष्ठ-प्रत्यासत्त्या, अर्थाद् धर्मितावच्छेदकता-सम्बन्धेन शाब्दबोधे स्वीक्रियमाणे तु तत्तत्पुरुषीयत्वस्य तत्तत्पुरुषभेदेन भिन्नत्वाद् दशैव कार्यकारणभावा इति दशकार्य-कारणभाव-स्वीकारेण महल्लाघवम् इति वर्णनात्।

अत्र केचिन्मान्याः। तत्तद्वाक्यार्थे यथा धर्मितावच्छेदकता-प्रत्यासत्त्या कार्यकारणभावस्तथा विनिगमनावैकल्येन प्रकारतावच्छेदकता-प्रत्यासत्त्यापि कार्य-कारणभावो भवेत्। यथा एकैकस्मिन् प्रकारे विशेष्य-दशकत्वम्। तथैव एकस्मिन् विशेष्ये प्रकार-दशकत्वम् एव। एवञ्च धर्मितावच्छेदकता-सम्बन्धेन यथा कार्य-कारणभावः तथा प्रकारतावच्छेदकता-सम्बन्धेन अपि इति न गौरवानुसन्धानमिति ग्रन्थाशयमाहुः।

आत्मनिष्ठ-प्रत्यासत्त्या कार्यकारणभावे हि आत्मनाम् अनन्तत्वाद् गौरवं लाघवाद् धर्मितावच्छेदक-निवेशं विनैव विषयनिष्ठ-प्रत्यासत्त्या कार्यकारणभावं चिकीर्षुः आपत्तिं पुनरपि दर्शयति - **धर्मितावच्छेदकम् अनिवेश्येति**।

**VV-S 5.2.4:** न च **योग्यताज्ञानस्येति**। अयमाशयः - यदि योग्यताज्ञानस्य शाब्दबोधं प्रति हेतुत्वं धर्मितावच्छेदकता-सम्बन्धेन एवेति कथ्यते चेत् तर्हि 'घटः प्रमेय' इत्यादौ धर्मितावच्छेदकता-सम्बन्धेन अभेद-सम्बन्धावच्छिन्न-घटत्वावच्छिन्न-प्रकारताकः शाब्दबोध इव तादृश-योग्यताज्ञानबलादेव द्रव्यत्वावच्छिन्न-उपस्थितिं विनैव धर्मितावच्छेदकता-सम्बन्धेन 'घटो द्रव्यम्' इत्यत्र शाब्दबोधापत्तिः स्याद् इत्याशयेन आशङ्कते - **न चेति**। विषयनिष्ठ-प्रत्यासत्त्या नैव कार्यकारणभाव इति प्रश्नकर्त्तुः अभिप्रायः। 'द्रव्यं घट' इत्यत्र शाब्दबोधे घटत्वं घटे प्रकारो, घटश्च द्रव्ये प्रकारः, द्रव्यत्वञ्च द्रव्ये प्रकारः, द्रव्यमेव विशेष्यम्। प्रकारता-विशेष्यतयोः निरवच्छिन्नत्वेन उपस्थितौ प्रकारतावच्छेदकत्वेन विशेष्यतावच्छेदकत्वेन च यद्यपि कस्यचिदपि पदार्थस्य प्रतीतिर्न भवति तथापि द्रव्य-प्रकारतया उपस्थितत्वात् द्रव्यत्वस्य प्रकारतायां भानं भवत्येव। तदेव द्रव्यत्वं शाब्दबोधेऽपि द्रव्य-प्रकारतया भासते। तथा च द्रव्यत्वनिष्ठा प्रकारता समानप्रकारतया प्राप्नोति एवेति समान-प्रकारता-सम्बन्धेन उपस्थितेः कारणत्वात् द्रव्यत्वे प्रकारता-सम्बन्धेन

उपस्थिति-शाब्दबोधयोः उभयोः सत्त्वेन उपस्थितेः अकारणत्वम् उपस्थिति-राहित्यस्य अकिञ्चित्करत्वञ्च नास्तीति समाधानम्। प्रकारतासम्बन्धेन शाब्दबुद्धित्वावच्छिन्नं प्रति प्रकारतासम्बन्धेन उपस्थितिः कारणमिति कार्यकारणभाव इति फलितार्थः।

**VV-S 5.2.5: समानप्रकारता-प्रत्यासत्त्या पदार्थोपस्थितेः शाब्दबोधे हेतुत्वो-पगमाद्** इति। ननु 'घटो द्रव्यम्' इत्याकारक-शुद्ध-केवल-योग्यताज्ञानादेव प्रमेयत्वे शाब्दबोधो जायतेतराम्। एवञ्च स्वन्तघटपदसमभिव्याहृत-स्वन्तद्रव्यपदत्वरूप-आकाङ्क्षा-ज्ञानस्य न कारणत्वं, न वा तत्सहकारित्वम्। तथा च द्रव्यत्वे पूर्वोक्त-शाब्दबोधापत्तिः दुर्वारैवेति चेत्? न। सामान्यं विशेषसहितं, विशेषरहित-सामान्या-भावात्। एवञ्च निर्विशेषसामान्याभावेन तत्तद्धर्मावच्छिन्न-कार्योत्पत्तित्वावच्छिन्नं प्रति स्वीकार्यतावच्छेदक-संबन्धावच्छिन्न-तत्तद्धर्मावच्छिन्न-कार्याधिकरणे तत्तद्धर्मव्याप्य-यत्किञ्चिद्-धर्मावच्छिन्न-कारणानि कार्यप्राक्क्षणावच्छेदेन अपेक्ष्यन्ते इति नियमा-नुरोधेन केवलयोग्यताज्ञानस्य न कारणत्वम्, अपि तु घटत्वावच्छिन्न-प्रकारता-निरूपित-द्रव्यत्वावच्छिन्न-विशेष्यताक-शाब्दबुद्धितवावच्छिन्नं प्रति 'घटो द्रव्यम्' इति स्वन्तघटपद-समभिव्याहृत-स्वन्तद्रव्यपदत्वरूप-आकाङ्क्षाज्ञानस्यापि हेतुत्वेन उक्त-आपत्ति-कारणात्।

नन्वेवमपि 'घटः प्रमेयः' इति स्वन्तघटपदसमभिव्याहृत-स्वन्तप्रमेयपदत्व-रूप-आकाङ्क्षाज्ञानकालावच्छेदेनापि द्रव्यत्वे शाब्दबोधापादनं दुर्वारमेव। तथा हि घटत्वावच्छिन्न-प्रकारतानिरूपित-प्रमेयत्वावच्छिन्न-विशेष्यताक-शाब्दबुद्धित्वस्यापि व्याप्यत्वेन पूर्वोक्त-आकाङ्क्षाज्ञानस्य निरुक्त-कारणत्व-व्याप्त्या तदवच्छिन्न-कारणत्वाद् इति चेत्? न। द्रव्यत्वे प्रकारतया उपस्थितेः अभावेन आपत्तिवारण-सौष्ठवात्।

ननु 'घटः प्रमेय' इति वाक्योच्चारणानन्तरं 'घटो घटपदवाच्यः', 'प्रमेयः प्रमेयपदवाच्यः' इति रीत्या शक्तिज्ञानकालावच्छेदेन आकाङ्क्षाज्ञान-बहिर्भूत-केवलपदनिष्ठवृत्तिज्ञानजन्य-द्रव्योपस्थितिकालावच्छेदेनैव द्रव्यत्वज्ञानेन तदानीमेव द्रव्यत्वे शाब्दबोध आपद्येतेति चेत्? न। शक्तिज्ञानकालीन-पदनिष्ठशक्तिज्ञानजन्य-उपस्थितिकारणतावच्छेदककोटावपि विशेषरूपेण तत्तत्पदानां निवेशः। एवञ्च 'घटः प्रमेय' इति वाक्यीय-शक्तिज्ञानकाले प्रमेयपदसत्ता कारणत्वेन अपेक्ष्यते। 'घटो द्रव्यम्' इत्यत्र तु द्रव्यपदसत्ता अपेक्ष्यते। एवञ्च 'घटः प्रमेयः' इति ज्ञानाद् द्रव्यत्वे शाब्दबोधवारणस्य सुगतत्वात्।

न च विशेषणः कारणतावच्छेदककुक्षौ तत्तत्पदप्रवेशे 'घटो द्रव्यम्' इत्यत्र घटत्वावच्छिन्न-प्रकारता-निरूपित-द्रव्यत्वावच्छिन्न-विशेष्यताक-शाब्दबुद्धित्वमेव तद्-

व्याप्यम्। अतः तदवच्छिन्नकारणसामग्र्या द्रव्यपदनिष्ठ-शक्तिज्ञानजन्य-उपस्थिति-सहकृत-'घटो द्रव्यम्' इत्याकारक-आकङ्क्षाज्ञान-घटितत्वेन 'घटो घट' इत्यत्र कथमपि असम्भवात् कथं 'घटो द्रव्यम्' इति धर्मितावच्छेदकता-सम्बन्धेन इति घटत्वे आपत्ति-प्रदर्शनपरो मूलग्रन्थः सङ्गच्छते इति वाच्यम्। घटपदजन्य-द्रव्यत्वावच्छिन्न-उपस्थिति-सहकृत-'घटो घट' इत्याकारक-आङ्क्षाज्ञानघटित-समुदायस्य एव सामग्रीत्वम्। अत एव नियमेन तत्सामग्र्या घटपदलक्षणाज्ञान-जन्य-उपस्थिति-घटितत्वमेव। एवञ्च 'घटो द्रव्यम्' इत्याकारक-आकाङ्क्षा-ज्ञानस्य द्रव्यपदलक्षणाज्ञानजन्य-उपस्थितिसहकृतस्य प्रमेयत्वे शाब्दबोध-जनकत्ववत्-तद्घटित-सामग्रीकालावच्छेदेन घटत्वेऽपि धर्मितावच्छेदकता-सम्बन्धेन इति निरुक्त-मुद्रया आपत्तिसम्भवेन मूलग्रन्थ-सौष्ठवात्।

न च उपस्थितिकारणतावच्छेदकदले विशेषरूपेण तत्तत्पदानां निवेशे कार्यतावच्छेदकदलीय-व्यभिचारनिवृत्त्यर्थं तत्तदुपस्थित्यव्यवहितोत्तरत्व-निवेशस्य आवश्यकत्वेन योग्यताज्ञान-कार्यतावच्छेदकावच्छिन्न-व्यापकता तदवच्छिन्नस्य नैव सम्भवति इति **येन सम्बन्धेन** इति ग्रन्थानुपपत्तिः इति वाच्यम्। सर्वत्रैव वाक्ये द्रव्यत्व-प्रमेयत्व-अभिधेयत्वादौ धर्मितावच्छेदके शक्तिलक्षणान्यतर-ज्ञानजन्य-द्रव्यपद-प्रयोज्य-द्रव्यत्व-प्रमेयत्व-उपस्थित्यव्यवहितोत्तर-शाब्दबुद्धेः विद्यमानत्वेन व्यापकत्व-अक्षतेः।

न च शक्तिलक्षणाज्ञानजन्योपस्थितौ परस्परं व्यभिचारवारणाय तत्तदव्यवहितोत्तरत्वनिवेशः, परन्तु वृत्तित्वेन अनुगमः तद्विषयक-शाब्दबोधं प्रति तत्पदनिष्ठ-वृत्तिज्ञानाधीनोपस्थितिः कारणमिति न कार्यकारणभाव-द्वयम्, नापि व्यभिचार इति वाच्यम्। वृत्तित्वस्य अनुगत-अनतिप्रसक्तस्य दुर्वचत्वेन घटपद-निष्ठ-शक्तिज्ञानजन्य-उपस्थिति-अव्यवहितोत्तर-जायमान-घटविषयक-शाब्दबोधं प्रति घटपदनिष्ठ-शक्तिज्ञानं कारणम्। गङ्गापदनिष्ठ-लक्षणाज्ञानजन्योपस्थित्य-व्यवहितोत्तर-जायमान-गङ्गापदशक्यसम्बन्धि-तीरविषयक-शाब्दबोधं प्रति गङ्गा-पदनिष्ठ-लक्षणाज्ञानाधीनोपस्थितिः कारणमिति समाधानातिरिक्त-समाधानाभावात् अव्यवहितोत्तरत्व-निवेशस्य गरीयस्त्वात् इत्यलम्।

**VV-S 5.2.6:** ननु धर्मितावच्छेदकतासम्बन्धेन शाब्दबोधे जननीये प्रकारता-सम्बन्धेन द्रव्यत्वोपस्थितेः सत्यपि सम्भवे कथङ्कारमुपयोग इति आशङ्क्य विस्पष्टयति **येन सम्बन्धेनेति**। अस्य अयमाशयः - अधिकदेशवृत्तित्वं व्यापकत्वम् अल्पदेशवृत्तित्वं व्याप्यत्वम्। 'द्रव्यं घट' इत्यत्र विशेष्यता केवलद्रव्य एवास्ति प्रकारता तु घटे घटत्वे द्रव्यत्वे च त्रिषु एवास्ति। एवञ्च प्रकारतासम्बन्धेन शाब्दबोधस्य घट-घटत्व-द्रव्यत्वेषु विद्यमानत्वात् अधिकदेशवृत्तित्वेन व्यापकत्वम्।

धर्मितावच्छेदकता-सम्बन्धेन शाब्दबोधस्तु द्रव्यत्वमात्रेऽस्तीति तस्य व्याप्यत्वम्। व्याप्यधर्मावच्छिन्ने कार्ये जननीये तु व्यापकधर्मावच्छिन्न-कार्योत्पादक सामग्र्या अपेक्षेति नियमः। सामान्यधर्मावच्छिन्नस्य शाब्दबोधत्वस्य हि व्यापकत्वम्।

**येन सम्बन्धेन यद्धर्मावच्छिन्नकार्यं प्रति** इति। यद्धर्मं प्रति यस्य धर्मस्य व्यापकत्वं तद्धर्मावच्छिन्न-कार्यतावच्छेदक-सम्बन्धेन तद्धर्मावच्छिन्न-कार्योत्पत्तित्वावच्छिन्नं प्रति तद्धर्मावच्छिन्न-कार्यतावच्छेदकसम्बन्धेन कारणतावच्छेदक-सम्बन्धेन वा तद्धर्मावच्छिन्नसामग्री अपेक्ष्यते इत्याकारवर्णनेन निर्वाहे **येन सम्बन्धेन** इत्यादिकथनं कार्यकारणतावच्छेदकसम्बन्ध-सूचनायैव। इह व्यापकताघटकाभावश्च तद्धर्मावच्छिन्नाधिकरणे तद्धर्मावच्छिन्नोत्पत्तिकालावच्छेदेन विद्यते योऽभावः स एव। अत एव संयोगत्वावच्छिन्न-कार्यत्वावच्छिन्नं प्रति विभागत्वावच्छिन्नस्य उत्पत्तिकालावच्छिन्नत्वाभावेन व्यापकत्वाभावत् संयोगोत्पत्तौ विभागसामग्र्या न अपेक्षेति सार्वजनीनः पन्थाः।

ननु उत्पत्तिकालावच्छेदेन घटनिष्ठपाकजरूपत्वावच्छिन्नं प्रति 'एको घटो निष्पन्नो भविष्यति' इति हृदि निधाय घटगतैकत्वसंख्याप्रवेस्य अवश्यम्भावाद् घटगतैकत्वसंख्याया अपि व्यापकत्वापत्त्या पाकजरूपत्वावच्छिन्न-कार्यत्वावच्छिन्नं प्रत्यपि संख्यारूपसामग्र्या अपेक्षितत्वापत्तिरिति चेत्? न। तदभावाप्रतियोगित्वोत्पत्तिकालावच्छिन्न-स्वाधिकरणताकत्वस्यैव प्रकृते समाश्रयणात्।

घटत्वावच्छिन्न-प्रकारक-अभेदसम्बन्धावच्छिन्न-शाब्दबोधत्वावच्छिन्नस्य व्याप्यत्वम्। घटत्वरूप-व्याप्यधर्मावच्छिन्न-घटरूपकार्ये जननीये द्रव्यत्वरूपव्यापक-धर्मावच्छिन्न-कार्योत्पादक-समवायिकारण-समवधानादिरूप-सामग्र्या एव अपेक्षा। प्रकृते च अभेदसंसर्गक-घटत्वावच्छिन्न-प्रकारक-शाब्दबोधत्वरूप-व्याप्यधर्मावच्छिन्ने कार्ये जननीये शुद्धशाब्दबोधत्वरूप-व्यापकधर्मावच्छिन्न-कार्योत्पादिका या सामग्री (प्रकारतासम्बन्धेन उपस्थितिः) तस्या एवापेक्षा भवति। एवञ्च प्रकारतासम्बन्धेन द्रव्यत्वे द्रव्यपदजन्योपस्थित्यभावे धर्मितावच्छेदकता-सम्बन्धेनापि द्रव्यत्वे शाब्दबोधो न भवतीति प्रकारतासम्बन्धेन शाब्दबोधे उपस्थितेः कारणत्वस्वीकारस्य आवश्यकत्वात्। ननु 'सुन्दरो घटो नील' इत्यादौ सुन्दररूपदार्थे प्रकारता-सम्बन्धेन उपस्थित्यभावाद् धर्मितावच्छेदकता-सम्बन्धेन कथं शाब्दबोध इति चेत्? न। तादृश्याः सामग्र्या निरविच्छिन्न-धर्मितावच्छेदकता-सम्बन्धेन शाब्दबोधं प्रत्येव कारणत्वेन अत्र सुन्दरत्वावच्छिन्नत्वेन अदोषात्।

**VV-S 5.2.7:** प्रकारता-सम्बन्धेन उपस्थितेः कारणत्व-स्वीकारे दूषणम् आह - **न च यत्र प्रमेयत्वाद्यवच्छिन्नेति**। इदं तात्पर्यम् - यदि समान-प्रकारता-प्रत्यासत्त्योपस्थितेः शाब्दबुद्धित्वावच्छिन्नं प्रति कारणत्वम् अङ्गीक्रियते

तदा प्रमेयपदेन प्रमेयत्वावच्छिन्न-विषयकोपस्थितिः उद्‌बोधकान्तराद् द्रव्यत्वा-वच्छिन्न-विषयकोपस्थितिरपि समूहालम्बनात्मक-प्रमेय-द्रव्योपस्थितौ प्रमेयपद-जन्यत्वेन। पदजन्यतापि प्रमेयस्य विशेष्यत्वेन द्रव्यस्य प्रकारत्वात् प्रकारता-सम्बन्धेनोपस्थितिरपि, तच्छाब्दबोधवारणाय तद्धर्मावच्छिन्नविशेष्यक-वृत्तिज्ञानजन्य-तद्धर्मप्रकारक-पदार्थोपस्थितिः कारणम् इतिरीत्या तत्पुरुषीयत्व-निवेशेन कार्य-कारणभावे गौरवं स्यात् इति।

**VV-S 5.2.8:** उत्तरमाह **स्वजनकज्ञानीयेति**। अत्र स्वपदेनोपस्थितिः, तज्जनकं ज्ञानं तु प्रमेय प्रमेयपदजन्य-बोधविषयत्वनिष्ठ-प्रकारता-निरूपित-इश्वरेच्छीय-विशेष्यतावान् इत्येवं विधम्। विशेष्यता प्रमेये विशेष्यतावच्छेदकता प्रमेयत्वे सामानाधिकरण्य-सम्बन्धेन तद्वैशिष्ट्यं प्रमेयत्वनिष्ठ-उपस्थितीय-प्रकारतायाम् एव न तु उद्‌बोधकान्तराद् भासमान-द्रव्यत्वनिष्ठयाम् इति। द्रव्यत्वे प्रकारता-सम्बन्धेन शाब्दबोधो न भवति। विशेष्यतावच्छेदकता-विशिष्ट-प्रकारता-सम्बन्धेन उपस्थित्यभावात्।

ननु प्रमेयत्वावच्छिन्न-उपस्थितिजनका अनेकप्रकाराः। तथा हि प्रमेयः स्वजन्यबोधविषयत्वनिष्ठ-प्रकारतानिरूपित-इच्छीयविशेष्यता-सम्बन्धेन प्रमेयपदवान्। प्रमेयपदं प्रमेयत्वावच्छिन्न-विषयताक-बोधजनकत्वनिष्ठ-प्रकारतानिरूपित-इच्छीय-विशेष्यतावत् इत्यादयः। वृत्तित्वस्य अनुगताननतिप्रसक्तत्वाभावस्य सर्वत्र प्रसिद्धत्वात् शक्तित्वेन लक्षणात्वेन पृथगेव कार्यकारणभावः। परस्परजन्यबोधे व्यभिचारवारणाय अव्यवहितोत्तरत्व-निवेशेऽपि। एवञ्च घटत्वावच्छिन्न-अभेदसम्बन्धावच्छिन्नप्रकारताक-शाब्दबुद्धित्वावच्छिन्नं प्रति धर्मितावच्छेदकता-सम्बन्धेन कस्यापि कार्यतावच्छेदकस्य व्यापकत्वाभावेन तद्धर्मावच्छिन्नकार्ये तद्धर्मावच्छिन्न-कार्योत्पादक-सामग्र्या धर्मिता-वच्छेदकता-सम्बन्धेन अपेक्षाभावाद् अनुपस्थिति-दशायामपि द्रव्यत्वे पूर्वोक्तरीत्या शाब्दबोध आपतेदिति चेत्? न। व्यापकधर्मावच्छिन्ने कार्ये जननीये व्याप्यधर्मा-वच्छिन्न-कार्येत्पादक-सामग्र्या एव अपेक्षेति शुद्धो नियमः। प्रकारता-सम्बन्धेन शाब्दबुद्धित्वरूप-कार्यत्वावच्छिन्नं प्रति तत्तदव्यवहितोत्तरत्व-विशिष्ट-तत्तद्धर्मस्यैव व्याप्यत्वेन प्रसरात्। प्रकारताख्य-सम्बन्धेन शाब्दबोधे तादृशोपस्थितीनाम् एव अपेक्ष्यत्वम्। यत्र च धर्मितावच्छेदकता-सम्बन्धेन शाब्दबोधः। तत्र व्यापकसामग्री-विधया तादृशोपस्थितीनाम् अपेक्षा इत्येव तात्पर्य्यम्। एवञ्च अनुपस्थिति-दशायां धर्मितावच्छेदकता-सम्बन्धेन शाब्दबोधापत्तिरूप-पूर्वोक्तदोषाभावात् 'द्रव्यं द्रव्यपद-शक्यम्', 'प्रमेयः प्रमेयपदशक्यः' इत्येवं समूहालम्बनात्मक-वृत्तिज्ञानात् केवल-प्रमेयत्वावच्छिन्नोपस्थितौ सत्यामेव विशेष्यतावच्छेदकता-सम्बन्धेन उपस्थिति-सत्त्वाद् द्रव्यत्वे शाब्दबोधवारणाय प्रकारता-सम्बन्धेन इत्यस्य निवेशः। प्रमेयत्वनिष्ठ-

विशेष्यतावच्छेदकता-वैशिष्ट्यं कालिकसम्बन्धेन आदाय द्रव्यत्वनिष्ठप्रकारताया दोषवारणाय सामानाधिकरण्य-सम्बन्धेन वैशिष्ट्यस्य विवक्षितत्वात्। घटो घटपद-शक्यः, पटः पटपदशक्य इत्येवं शक्तिज्ञाने उद्बोधकान्तरवशात् प्रमेयत्वावच्छिन्नस्य कदाचिद् उपस्थितिः। तत्र प्रमेयत्वावच्छिन्नप्रकारतायां विशेष्यतावच्छेदक-वैशिष्ट्य-सत्त्वात् प्रमेयत्वावच्छिन्न-प्रकारताक-शाब्दबोध-निवृत्तये स्वानवच्छेदक-धर्मा-वच्छिन्नत्वस्यापि वैशिष्ट्यघटकत्वेन संयोजनात् प्रमेयवान् प्रमेयपदशक्य इति ज्ञानानन्तरं प्रमेयत्वावच्छिन्न-प्रकारताकोपस्थितौ एव उद्बोधकान्तरवशात् घटत्वावच्छिन्नस्य भानं कदाचिद् आयाति। तदा निरवच्छिन्नघटत्वनिष्ठ-प्रकारताक-शाब्दबोधवारणाय स्वानवच्छेदक-धर्मानवच्छिन्नत्व-सम्बन्धावच्छिन्न-स्वनिरूपित-वृत्तित्ववत्वस्य निवेशनीयत्वात्। कालिकसम्बन्धेन द्रव्यत्वविशिष्टो द्रव्यपदशक्य इति ज्ञाने हि उद्बोधकान्तर-वशाद् घटत्वविशिष्ट-घटस्य यदि भानं तदा समवाय-सम्बन्धावच्छिन्न-घटत्वप्रकारक-शाब्दबोधवारणाय स्वावच्छेदक-सम्बन्धावच्छिन्नत्वस्य अपि निवेश्यत्वात्। **अस्मदगुरवस्तु** केवलं स्वप्रयोज्यत्वमात्रं वैशिष्ट्यनियामकं बोध्यम् इत्याहुः।

**VV-S 5.2.9:** ननु 'द्रव्यं घट' इत्यत्र द्रव्यं विशेष्यं घटश्च प्रकार इति द्रव्ये विशेष्यता-सम्बन्धेन द्रव्यत्वे च विशेष्यतावच्छेदकता-सम्बन्धेन शाब्दबोधो भवति। तथा पदार्थे घटेऽपि प्रकारतासम्बन्धेन शाब्दबोध इष्यते एव। परन्तु तादृशोक्त-प्रकारतासम्बन्धेन उपस्थितिस्तु नास्त्येव। घटपदजन्य-घटोपस्थितौ घटपदार्थस्य विशेष्यतयैव भानं, न तु प्रकारतयेति घटे घटपदजन्योपस्थितीय-प्रकारतैव नास्तीति प्रकारतासम्बन्धेन कथं घटे उपस्थितिः स्यात् इति आशङ्क्य आह - **न च पदार्थेऽपीति**।

**VV-S 5.2.10:** **परामर्शकारणताविचारदर्शितदिशेति**। परामर्शकारणतायां यो विचारः, तत्र दर्शिता या दिक् तया तद्रीत्या व्यभिचारो वारणीय इत्यभिप्रायः। 'पर्वतो वह्निमान्' इत्यादौ वह्न्यनुमितित्वावच्छिन्नं प्रति धूमपरामर्शस्य कारणत्वम्। आलोकपरामर्शस्यापि कारणत्वम्। धूमपरामर्श-आलोकपरामर्शयोः परस्परजन्यबोधे व्यभिचारः। तद्वारणाय धूमपरामर्शाव्यवहितोत्तरत्वविशिष्ट-अनुमितित्वावच्छिन्नं प्रति धूमपरामर्शज्ञानं कारणम्। एवम् आलोकपरामर्श-अव्यवहितोत्तरत्व-विशिष्ट-अनुमितित्वावच्छिन्नं प्रति आलोकपरामर्शज्ञानं कारणम् इति मुद्रया कार्यतावच्छेदक-कोटौ कारणाव्यवहितोत्तरत्व-निवेशेन यथा व्यभिचारो निवारितः। तथैव स्वजनक-ज्ञानीयवृत्तिनिष्ठ-प्रकारता-निरूपित-विशेष्यतावच्छेदकता-विशिष्ट-प्रकारता-सम्बन्धेन उपस्थित्यव्यवहितोत्तरत्वविशिष्ट-शाब्दबोधं प्रति स्वजनकज्ञानीयवृत्तिनिष्ठ-प्रकारता-निरूपित-विशेष्यतावच्छेदकता-विशिष्टप्रकारता-सम्बन्धेन उपस्थितिः कारणम्। यथा 'द्रव्यं घट' इत्यत्र द्रव्यत्वे।

घटे जायमान-शाब्दबोधं प्रति तु निरुक्तप्रकारता-सम्बन्धेन उपस्थितेः कारणत्वमेव नास्ति। यतो घटे असत्त्वाद् व्यभिचारित्वं स्यात्। तथा च घटे यादृश- प्रकारता-सम्बन्धेन उपस्थित्यव्यवहितोत्तरं शाब्दबोधो निष्पद्यते तादृशप्रकारता- सम्बन्धेन एवोपस्थितेः कारणत्वमिति व्यभिचाराभावः। एवञ्च विषयता-सम्बन्धेन कार्यकारणभावे दोषाभावेन योग्यताज्ञाने द्रव्यत्वावच्छिन्न-धर्मिकत्व-प्रवेशापेक्षाभावेन 'द्रव्यं घट' इत्यत्र अभेदसंसर्गक-घटत्वावच्छिन्नप्रकारक-योग्यताज्ञानं यादृशं शाब्दबोधं जनयति तादृशस्यैव योग्यताज्ञानस्य 'घटो घट' इत्यत्रापि सत्त्वात् कारणसत्त्वे कार्यावश्यम्भावेन अभेदसंसर्गक-घटत्वावच्छिन्न-प्रकारक-घटत्वावच्छिन्न-विशेष्यक-शाब्दबोधः स्यादेव इति प्रश्नकर्त्तुः आशयः।

समाधत्ते **तर्हि** इति। तद्धर्मावच्छिन्न-अभेदसंसर्गावच्छिन्न-प्रकारता-निरूपित-विशेष्यतावच्छेदकता-सम्बन्धेन शाब्दबुद्धित्वावच्छिन्नं प्रति तद्धर्मभेदस्य (प्रकारतावच्छेदक-धर्मभेदस्य) कारणत्वम्। अत्र तद्धर्मपदेन प्रकारतावच्छेदक-घटत्वादिधर्मस्य ग्रहणम्। यत्र हि प्रकारतावच्छेदक-विशेष्यतावच्छेदक-धर्मयोः भेदोऽस्ति तत्रैव अभेदान्वयो यथा 'द्रव्यं घटः', 'नीलो घटः' इति। विशेष्यता-वच्छेदकं द्रव्यत्वं प्रकारतावच्छेदकं घटत्वं भिन्नम्। विशेष्यतावच्छेदकं घटत्वं प्रकतारतावच्छेदकं भिन्नं नीलत्वम् इति उभयत्र अभेदान्वयः।

प्रकृते 'घटो घट' इत्यत्र घटत्वमेव विशेष्यतावच्छेदकं घटत्वमेव हि प्रकारतावच्छेदकम् इति विशेष्यतावच्छेदक-प्रकारतावच्छेदक-धर्मयोः भेदाभावात् न अभेदान्वयापत्तिः इति तात्पर्यम्।

वस्तुतस्तु 'द्रव्यं घटः', 'घटो घट' इति दृष्टान्त-दार्ष्टान्तिकयोः महद् वैषम्यम्। तथा हि 'द्रव्यं घटः' इत्यत्र घटमुद्दिश्य द्रव्यत्वविधानं सार्वजनीनं न तु द्रव्यमुद्दिश्य घटत्वविधानम्। एवञ्च घटे उद्देश्यतासम्बन्धः। उद्देश्यता च विशेष्यतापरपर्याया प्रसिद्धैव। द्रव्यत्वे च विधेयतासम्बन्धः। विधेयता च प्रकारता-परपर्याया प्रसिद्धैव। एवञ्च 'द्रव्यं घट' इत्यत्र घटविशेष्यक-द्रव्यप्रकारक एव शाब्दबोधः। तथा च 'द्रव्यं घट' इति दृष्टान्तेन 'घटो घट' इत्यत्र घटप्रकारक-शाब्दबोधापत्तिः कथमिति विवेकयन्तु धीधनाः।

केचित्तु उद्देश्यतायां विशेष्यत्वे विधेयतायां प्रकारत्वे 'पर्वते वह्निः' इत्यत्र शाब्दबोध-प्रलयः। वह्नावेव विधेयत्वं प्रथमान्तार्थ-मुख्यविशेष्यक-बोधश्च तर्काभिमतः। कथं च वह्नौ विशेष्यत्वम् इष्टम् अभिरक्षितं स्यात्। किञ्च 'सर्वेषु घटेषु रूपम्' इत्यत्रापि **शक्तिवादे** सर्वशब्दार्थ-विचारावसरे रूपस्यैव विधेयत्वं विशेष्यत्वं च कथङ्कारं सिद्ध्येत् ? एवञ्च क्वचित् प्रकारतायाम् उद्देश्यता-

सम्बन्धः क्वचिद्विशेष्यतायां विधेयतासम्बन्धः, तत्तद्वाक्यार्थानुरोधात्। तथा च 'द्रव्यं घट' इत्यत्र घटनिष्ठा या उद्देश्यता तत्र प्रकारता-सम्बन्ध-प्रबन्धानुरोधेन आपत्ति-प्रदर्शनं सयुक्तिकं सङ्गच्छते इति **शुक्लाः**।

ननु यदि अभेदसंसर्गक-शाब्दबोधं प्रति प्रकारतावच्छेदक-विशेष्यतावच्छेदक-धर्मभेदः कारणम् इत्युच्यते चेत् ? तर्हि 'यः खल्वत्र जातिमान् अस्ति स घट आनेतव्यः' भवद्भिः इति माहावाक्यघटके 'स घट' इति वाक्ये 'घटः स' इति वाक्ये च विशेष्यतावच्छेदक-प्रकारतावच्छेदक-धर्मयोः भेदाभावेन अभेदान्वय-बोध इष्टोऽपि न स्यात्। तथा हि जात्यवच्छिन्ने तत्पदशक्त्या तत्पदेन जातिमान् एव गृह्यते। जातिमान् पदार्थ एव उद्देश्यः। तस्यैव विशेष्यत्वम्। घटपदार्थश्च प्रकारः। प्रकारतावच्छेदक-धर्मश्च घटत्वमेव। तत्पदवाच्य-जातिमद् विशेष्यपदार्थे। विशेष्यतावच्छेदक-धर्मस्तु जातिरेव नान्यः। तथा च जातौ घटत्वभेदो नास्त्येव। जातेस्तु घटत्वादिरूपत्वं सार्वत्रिकम्। घटत्वस्य घटत्वत्वेन भानं तु भवत्येव न हि। जात्यखण्डोपाध्यतिरिक्त-पदार्थस्यैव किञ्चिद्धर्मप्रकारेण भानम् इति नियमात्। अत्र घटत्वस्य जातित्वेन एव प्रतीतिः। तत्पदस्य जातिमत्येव शक्तत्वाद् विशेष्यतावच्छेदक-जाति-घटत्वपदार्थयोः भेदाभावेन अभेदान्वयबोधो न स्यात्। एवं 'घटः स' इति वाक्ये घटत्वजात्योः भेदाभावेन अभेदान्वयबोधो न स्यादिति आशयेन आह **स घट** इति। कार्यतावच्छेदकदले विशेष्यतावच्छेदकता प्रकारतावच्छेदकता च निरवच्छिन्नत्व-विशेषणविशिष्टा ग्राह्येति तत्त्वम्।

तथा च अयं कार्यकारणभावः। तद्धर्मनिष्ठ-निरवच्छिन्नावच्छेदकताक-अभेदसंसर्गावच्छिन्न-प्रकारता-निरूपित-विशेष्यता-निरवच्छिन्नावच्छेदकता-सम्बन्धेन शाब्दबुद्धित्वावच्छिन्नं प्रति तद्धर्मभेदः कारणम्। अर्थात् निरवच्छिन्नावच्छेदकताक-विशेष्यताकम्, (निरवच्छिन्नविशेष्यतावच्छेदकताकम्, निरवच्छिन्नावच्छेदकताक-प्रकारताकम्, निरवच्छिन्नप्रकारतावच्छेदकताकम्) च शाब्दबोधं प्रति तद्धर्मभेदस्य कारणत्वमिति फलितम्। 'द्रव्यं घट' इत्यत्र द्रव्यत्वस्य जातित्वेन स्वरूपतो भासमानत्वाद् द्रव्यत्वनिष्ठा या विशेष्यतावच्छेदकता सा निरवच्छिन्नैव। घटत्व-निष्ठा या प्रकारतावच्छेदकता सापि घटत्वस्य जातित्वेन स्वरूपतो भासमानत्वात् निरवच्छिन्नैवेति। तादृशशाब्दबोधं प्रति द्रव्यत्व-घटत्व-धर्मयोर्भेदः। परन्तु पूर्वोक्त 'जातिमान् घट' इत्यत्र विशेष्यो जातिमानेव। विशेष्यतावच्छेदकता च जातौ अस्ति। जातेश्च जातित्वावच्छिन्नत्वेन सावच्छिन्नत्वमेव। तथा च कार्यकारण-भावस्य अत्र अप्रवृत्त्या अत्र तद्धर्मभेदाभावेऽपि शाब्दबोधस्य अभेदसंसर्गकस्य निर्विवादत्वात्। 'द्रव्यं घट' इतिवत् विशेष्यतावच्छेदकं घटत्वं प्रकारतावच्छेदकं च नीलघटत्वमिति द्वयोर्भेदात् शाब्दबोधः।

नवीनमते तु विधेयांशे अर्थात् विशेषणकोटौ घटापेक्षया नीलस्यापि प्रवेशात् नीलघटत्वावच्छिन्न-प्रकारता-निरूपित-अभेद-संसर्गावच्छिन्न इति शाब्दबोध-प्रतीतेः घटत्वं विशेष्यतावच्छेदकम्, नीलघटत्वं प्रकारतावच्छेदकमिति। तयोर्भेदात् न शाब्दबोधानुपपत्तिः।

अत्रैव प्रसङ्गात् जातिलक्षणं विचार्यते। नित्यत्वे सति अनेकसमवेतत्वं जातित्वम् इति प्रसिद्धलक्षणं तु न युक्ततरम्। विभुद्वयसंयोग-स्वीकारे संयोगपदार्थे अतिव्याप्त्यापत्तेः। किञ्च नित्यत्वं नाम प्रागभावाप्रतियोगित्वे सति ध्वंसा-प्रतियोगित्वम्। उत्पाद-विनाश-शून्यत्वं वा। तथा च नित्यत्वस्य गुरुशरीरत्वेन प्रचण्डगौरवाच्च।

एवञ्च समवेत-रहित-सर्वान्योन्याभाव-समानाधिकरण-समवेतं सामान्यं जातिरिति फलितं लक्षणम्। अभावे समवाये च दोषनिरासाय समवेतेति पदम्। संयोगे द्वित्त्वादौ च दोषवारणाय रहितान्तं समवेत-विशेषणम्। विशेषपदार्थे दोषवारणाय सर्वेति विशेषणम्। सर्वान्योन्याभाव-सामानाधिकरणञ्च उभयावृत्ति-धर्मावच्छिन्न-प्रतियोगिताक-भेदव्यापकत्वम्। व्यापकत्वञ्च सामानाधिकरण्यसम्बन्धेन बोध्यम्।

अथ अत्र विलक्षणाः। ननु जातिव्यक्त्योः समवाय एव संसर्गः। परन्तु भेदाभेदयोः विरुद्धत्वेन सैव ततोऽन्या अनन्या च नैव सम्भवति। अत एवोक्तम् -

पृथक्त्वे व्यक्तितो जातिर्दृश्यते पृथगेव सा।<br>
अभेदे व्यक्तिमात्रं स्याद् द्विधा चेन्न विरोधतः।। इति।।

तथा च जातिव्यक्त्योः अभेद एव न तु भेद इति सिद्धान्तः। न च यदि जातिपदार्थापेक्षया व्यक्तिपदार्थो भिन्नः तदा का आपत्तिः? जातेः सर्वत्र सत्त्वाद् व्यक्तेः तु एकत्रैव सत्त्वमिति प्रत्यक्षव्याप्तेरिति वाच्यम्। जातेः सर्वत्र सत्त्वानुपलब्धेः। न च केवलव्यक्तौ तत्सत्तेति वाच्यम्। केवलव्यक्तौ जातिसत्तायाम् उत्पन्नायां व्यक्तौ तद्देशावच्छेदेन प्रागसती जातिर्व्यक्तौ कथङ्कारम् उपलभ्या भवेत् इति अभिप्रायात्। न च व्यक्तौ जातिरुत्पद्यत इति वाच्यम्। नित्यत्व-विशेषण-विशिष्टायाः जातिरुत्पत्त्ययोगात्। न च व्यक्त्यन्तराद् व्यक्त्यन्तरे जातिः आगच्छति। तथा च जातिसत्तायां न हानिरिति वाच्यम्। जातेः अमूर्त्तत्वेन तदागमनासम्भवात्। न च जातेरपि तदागमने मूर्त्तत्वेन न बाध इति वाच्यम्। व्यक्त्यन्तरे तदुपलब्ध्यभावापत्तेः। न च अंशांशिभावेन व्यक्तौ जातिसम्बन्ध इति वाच्यम्। जातेः निरशंत्वात्। न च जातेः अंशवतीत्वे का बाधेति वाच्यम्? व्यक्तिनाशे सति तदंशात्मकजातेरपि विशेषानुपलब्ध्या जातिरपि विनंक्ष्यतीति दोषात्। न च जातिः अन्यत्रापि याति इति वाच्यम्। अमूर्त्तत्वेन जातेर्गमनासम्भवात्

इति पूर्वोक्तेः। न च व्यक्त्यन्तरे पूर्वमेव जातिरवस्थितेति न काचित् क्षतिरिति वाच्यम्। जातेः पुनः प्रवेशे द्विगुणाया जातेः उपलब्ध्यापत्तेः। तदेव शिष्टैरुक्तम् पद्यम् - न याति न च तत्रासीदस्ति पश्चान्न चांशवत्।
जहाति पूर्वन्नाधारमहो व्यसनसन्ततिः।। इति।

न च चक्रभ्रमणवदेकव्यक्तौ विद्यमाना जातिर्व्यक्त्यन्तरेऽपि गच्छेदिति वाच्यम्। सा जातिः यदि हि एकस्यां व्यक्तौ सर्वावयवावच्छेदेन वर्त्तते चेत् ? तथा हि व्यक्त्यन्तरेषु तदुपलब्ध्यभावापत्तेः। न ह्येका सती युगपदनेकत्र सर्वावयवावच्छेदेन वर्तितुं शक्नोतीति व्याप्तेश्च।

न च जातिः सावयवा व्यक्तौ गच्छतीति वाच्यम्। जातेः सर्वथा निरवयवत्वात् कथङ्कारमनेकविधासु अतीतानागतवर्त्तमानासु व्यक्तिष्ववयवतो वृत्तिः सम्भाव्यते। व्यक्तौ च वर्तमाना इह प्रत्ययमनुभवेत्। न चापि इह गोत्वमिति कस्यचिदपि पुरुषस्य प्रतीतिरनुगुणेति। तथा च जातिव्यक्त्योरभेदे सर्वबाधाभाव इति निश्चितः सिद्धान्तः केषाञ्चित्। परन्तु जातिर्व्यक्तिभिन्नैव पदार्थः। व्यक्तिद्वारा जातिलाभश्च। यथा रसाल-जम्बीरादि-फलनिष्ठ-माधुर्यगुणस्य रसालादिद्वारैव लाभः तद्वत्। न हि लोके माधुर्यं स्वातन्त्र्येण उपलभ्यते। तथैव रीत्या जातेः स्वातन्त्र्येण उपलब्धिविषयत्वाभावाद् व्यक्तिद्वारैव जातेर्व्यक्तौ समुपलब्धिः। न च गुणगुणिनोः अभेद इति वाच्यम्। यथा रसालादीनां चाक्षुषप्रत्यक्षत्वं तथा तद्गतमाधुर्यादेरपि चाक्षुषत्वापत्तेः। रसालमाधुर्ययोः गुणगुणिनोः अभेदात्।

एवञ्च तद्गतधर्मस्य तद्द्वारेणैव उपलब्धिः। एवं प्रकारेण गुणगुणिनोः क्रियाक्रियावतोः जातिव्यक्त्योश्च भेद एव सम्बन्ध इति 'घटस्य रूपम्', 'चैत्रस्य ज्ञानम्', 'चैत्रस्य क्रिया' इति सिद्धान्तवाक्यप्रयोगवत् अभेदप्रत्ययाद् 'घटत्वं घटः', 'घटो रूपम्', 'ज्ञानं चैत्रः', 'क्रिया चैत्रः' इत्यादि-प्रयोगाणां सम्प्रदायविरुद्धत्वात्। तथा च जातेः अमूर्त्तत्वात् विभुत्वाच्च न सा गच्छति नायातीति नोत्पद्यत इत्यपि। जात्यभिव्यञ्जकत्वं व्यक्तेः संस्थानस्य च। तथा च उत्पन्नघटे घटत्वं ज्ञायत इति सिद्धान्तमार्गः। अत एव "आकृतिग्रहणा जातिः" इति पातञ्जलं सङ्गच्छते। तत्राकृतिग्रहणा इत्यस्य आकृति-ज्ञानजन्य-ज्ञानविषया इत्यर्थः। अथ वा कस्यचिद् अपदेशाद् एकघटविषयके ज्ञाने जातेऽपि घटान्तरविषयकज्ञानम् उपदेशान्तरम् अन्तरेण न भवेदिति व्यवहारलोप-प्रसक्तेश्च घटत्वं तत्र अवश्यमुपेयम्। सामान्यलक्षण-प्रत्यासत्त्या प्रथमघटज्ञानानन्तरं सकलघटज्ञानम् उत्पद्यते। अत एव व्यवहारसिद्धिः। अथ च विषयानुगमं विना प्रतीतेः अनुगतत्व-सम्भवो नास्तीति व्याप्तिः। 'अयं घट' इति प्रत्ययानाम् अनुगताकारत्वं विषयानुगतत्वम् अन्तरेण नैवास्ति। अनुगतो विषयश्च घटत्वमेव। तथा च

जाति-व्यक्त्योः गुण-गुणिनोः क्रिया-क्रियावतोश्च सर्वथैव भिन्नत्वं न, अभेदः संसर्ग इति तत्त्वमूचुः।

**VV-S 5.3.1:** वस्तुतस्तु घटत्वावच्छिन्न-अभेदसंसर्गावच्छिन्न-प्रकारता-निरूपित-विशेष्यतावच्छेदकता-सम्बन्धेन घटत्वे शाब्दबोधः। तत्र घटत्वभेदाभावात् कार्यकारणभावे व्यभिचारः स्याद्। अतः तद्धर्मपर्याप्त-अवच्छेदकताक-अभेद-संसर्गावच्छिन्नप्रकारता-निरूपित-विशेष्यतावच्छेदकता-संबन्धेन शाब्दबुद्धित्वावच्छिन्नं प्रति तद्धर्मभेदः कारणम्। प्रकारतावच्छेदकता विशेष्यतावच्छेदकता च यत्र एकधर्मे पर्याप्ता तत्रैव अभेदान्वयबोधे तद्धर्मभेदस्य कारणत्वम्। यथा 'द्रव्यं घट' इत्यत्र प्रकारतावच्छेदकता एकस्मिन्नेव घटत्वे धर्मे विशेष्यतावच्छेदकतापि एकस्मिन्नेव द्रव्यत्वारब्ध-धर्मे इति। परन्तु 'नीलघटो घट' इत्यत्र तु प्रकारतावच्छेदकता नीलत्व-घटत्व-एतदुभय-धर्मपर्याप्ता। विशेष्यतावच्छेदकता तु केवलघटत्वधर्मे पर्याप्ता इति विशेष्यतावच्छेदकीभूतघटत्व-प्रकारतावच्छेदकीभूतनीलघटत्वयोः अधिकावगाहि-शाब्दबोध-स्वीकृतिपक्षे भेदाभावेऽपि अभेदान्वयो निर्बाध एव। तद्धर्म-भेदस्य हेतुत्वास्वीकारद् इत्यप्यभिप्रायः। तमेवाह - **दर्शितरीत्येति**। 'घटो नीलघट' इत्याद्यन्वय-बोधस्य प्रामाणिकत्वे अन्यत्र दर्शितरीत्या इति।

अस्य अयमाशयः। निरवच्छिन्ना या घटत्वनिष्ठावच्छेदकता तद्भिन्ना या अवच्छेदकता तन्निरूपितत्वाभाववत्-प्रकारताक-शाब्दबुद्धित्वावच्छिन्नं प्रत्येव हि घटत्वभेदस्य कारणत्व-स्वीकारेण नीलघटत्वावच्छिन्न-प्रकारताक-शाब्दबोधस्य तादृशकारण-अनाक्रान्तत्वेन क्षतिविरहादिति मुद्रया दर्शितरीत्या इत्यस्य निरुक्त-प्रकारेण पर्याप्तिविवक्षयेति तात्पर्यम्।

न चैवं स्वीकारेऽपि तात्पर्ये नीलत्व-घटत्व-उभयधर्मावच्छिन्न-प्रकारतानिरूपित-विशेष्यतावच्छेदकतासम्बन्धेन शाब्दबुद्धौ नीलत्वभेद-घटत्वभेदयोः कारणत्वेन 'नीलघटो नीलघटः' इत्याकारक-शाब्दबोधापत्तिः। नीलत्वभेद-घटत्वभेदयोः कारणत्वेन विधेयांशेऽधिकावगाहि-'नीलघटो घट' इति शाब्दबोधस्य अनुपपत्तिश्चेति वाच्यम्। तद्रूपवृत्ति-प्रकारतानिरूपित-विशेष्यतावच्छेदकतात्वा-वच्छिन्न-प्रतियोगिताक-पर्याप्त्यनुयोगितावच्छेदकता-सम्बन्धेन शाब्दबुद्धित्वावच्छिन्नं प्रति तद्रूपभेदः कारणमिति तात्पर्याभिप्राय-वर्णनात्।

अत्र **मान्याः** 'जातिमान् जातिमान्', 'जातिमद्घटो जातिमान्' 'जातिमान् जातिमद्घट' इत्याद्यनुपपत्ति-वारणाय घटत्वगत-एकत्ववृत्ति-प्रकारता-निरूपित-विशेष्यतावच्छेदकतात्वावच्छिन्न-पर्याप्त्यनुयोगितावच्छेदकत्व-सम्बन्धेन शाब्दबुद्धि-त्वावच्छिन्नं प्रति घटत्वनिष्ठ-निरवच्छिन्नावच्छेदकताक-प्रकारता-विशिष्ट-भिन्नत्वं कारणम्। वैशिष्ट्यञ्च प्रकारताया भेदे स्वावच्छेदकतात्वावच्छिन्न-प्रतियोगिताक-

पर्याप्त्यनुयोगितावच्छेदकत्व-सम्बन्धेन। एवञ्च 'घटो घट' इत्यादौ वारणम्। विधेयांशेऽधिकावगाहि-'नीलघटो घट' इत्यादीनां सिद्धिश्च।

'नीलघटो नीलघटो', 'द्रव्यम् नीलघटो', 'नीलघटः घटो', इत्यादिषु वाक्येषु आपत्त्यनुपपत्त्योः वारणाय नीलत्व-नीलघटत्वगत-त्रित्ववृत्ति-प्रकारता-निरूपित-धर्मितावच्छेदकता-पर्याप्त्यनुयोगितावच्छेदकता-सम्बन्धेन शाब्दबुद्धित्वा-वच्छिन्नं प्रति नीलत्वावच्छिन्न-नीलनिष्ठावच्छेदकता-निरूपित-निरवच्छिन्नघटत्व-निष्ठावच्छेदकता-प्रकारता-विशिष्ट-भिन्नत्वं कारणमिति कार्यकारणभाव-वर्णनेन इत्यभिधानात्।

ननु यत्रोद्देश्यतावच्छेदक-विधेयतावच्छेदकयोरैक्यं न कथमपि भेद। एवं तात्पर्येण कालिकसम्बन्धावच्छिन्न-घटत्व-विशिष्टपर-तच्छब्दघटितं 'स घट' इति वाक्यं तत्र शाब्दबोधो न स्यात्। किञ्च कालिक-सम्बन्धावच्छिन्न-प्रमेयत्व-विशिष्टवत्परेण स्वरूपेण प्रमेयत्वविशिष्टवत्परेण तच्छब्देन घटितं ''स स'' इति वाक्यं तत्र शाब्दबोधो न स्यात्। उद्देश्यविधेयभाव-अवच्छेदकतावच्छेदकगत-रूपस्य तदवच्छिन्नस्य च भेदाभावाद् अप्रसिद्धेश्चेति चेत्? न। कालिकासम्बन्धावच्छिन्न-घटत्वादिगत-रूपभेदस्य समवाय-घटत्वगत-रूपे सम्भवोऽस्त्येव। धर्म-संसर्ग-साधारण-उद्देश्यविधेयभावावच्छेदकत्व-तदवच्छेदकत्वादीनां या पर्याप्तिः तस्या एव विवक्षणात्।

नन्वेवमपि कालिकसम्बन्धेन घटत्वविशिष्टत्वे सति समवायेन द्रव्यत्व-विशिष्टपरेण, समवायेन घटत्वविशिष्टत्वे सति कालिकसम्बन्धेन द्रव्यत्वविशिष्ट-परेण च तच्छब्देन घटितं यत् 'स स' इति वाक्यं, तस्मात् शाब्दबोधानुपपत्तिः इति चेत्? न। अत्र विशेष्यतात्व-सम्बन्धेन शाब्दबुद्धित्वावच्छिन्नं प्रति प्रकारता-विशिष्ट-भिन्नं कारणम् इति परिकल्पनात्। वैशिष्ट्यञ्च स्वनिरूपितत्वं स्वनिरूपिता-वच्छेदकतात्व-व्यापकत्व-उभयसम्बन्धेन। अत्र व्यापकता च स्वनिरूपिता-वच्छेदकताविशिष्टत्व-सम्बन्धेन। अवच्छेदकतावैशिष्ट्यञ्च (१)स्वसामानाधिकरण्य-(२)स्वावच्छेदकसम्बन्धावच्छिन्नत्व-(३)स्वानच्छेदकानवच्छिन्नत्व-(तत्सम्बन्धावच्छिन्न)-(४)स्ववृत्तित्व-एतच्चतुष्टयसम्बन्धेन। तथा च उद्देश्यविधेययोः ऐक्येऽपि विधेयांशेऽधिकावगाहेऽपि न विवाद इति गूढतत्त्वं विस्पष्टमाहुः।

वस्तुतस्त्वयमभिप्रायः। अभेदसंसर्गावच्छिन्ना या तद्धर्मवृत्तिः प्रकारता तादृश-प्रकारता-निरूपित-विशेष्यतावच्छेदकतात्वावच्छिन्न-प्रतियोगिताक-पर्याप्त्य-नुयोगितावच्छेदकत्व-सम्बन्धेन शाब्दबुद्धित्वावच्छिन्नं प्रति तद्धर्मभेदः कारणमित्येव कार्यकारणभावः। तद्धर्मे वृत्तित्वञ्च प्रकारतायाः केन सम्बन्धेन? स्वनिरूपित-अवच्छेदकतात्वावच्छिन्न-प्रतियोगिताक-पर्याप्त्यनुयोगितावच्छेदकत्व-

सम्बन्धेन। अत्र स्वपदेन अभेदसम्बन्धावच्छिन्न-प्रकारता गृह्यते। घटे या स्वरूपसम्बन्धेन अभेदसम्बन्धावच्छिन्ना प्रकारता सैव स्वरूपसम्बन्धेन घटत्वगतैकत्वेऽपि इति 'घटो घट' इत्यत्र घटप्रकारक-घटविशेष्यकबोध एवापत्ति-विषयः। तत्र विशेष्यतावच्छेदकत्वं घटत्वे विशेष्यतावच्छेदकतायाञ्च पर्याप्ति-सम्बन्धावच्छिन्ना प्रतियोगितास्त्येव। विशेष्यतावच्छेदकतायां विशेष्यतात्वम् अप्यस्ति एव। अतः प्रतियोगिता विशेष्यतावच्छेदकतात्वावच्छिन्ना भवत्येव। एवञ्च विशेष्यता-अवच्छेदकतात्वावच्छिन्न-प्रतियोगिताक-पर्याप्तेः अनुयोगितावच्छेदकमपि घटत्वगत-एकत्वमेव। प्रकारतावच्छेदकतात्वावच्छिन्न-प्रतियोगिताक-पर्याप्त्यनु-योगितावच्छेदकमपि घटत्वगतैकत्वम् एवेति, विशेष्यतावच्छेदकता-पर्याप्तिस्तु घटत्वनिष्ठैव वाच्या। घटत्वमनुयोगि, अनुयोगितावच्छेदकञ्च घटत्वगतैकत्वमेव नान्यत्। तादृश-शाब्दबुद्धित्वावच्छिन्नं प्रति 'घटो घट' इत्यत्र तद्धर्मभेदः कारणम् इत्यादि-नियमाप्रवृत्त्या न अभेदान्वयबोधः। परन्तु 'घटो नीलघट' इत्यत्र अभेदा-न्वयो भवत्येव। विशेष्यतावच्छेदकतात्वावच्छिन्न-प्रतियोगिताक-पर्याप्त्यनुयोगिता-वच्छेदकं घटत्वगत-एकत्वमेव। प्रकारतावच्छेदकतात्वावच्छिन्न-प्रतियोगिताक-पर्याप्त्यनुयोगितावच्छेदकञ्च नीलत्व-घटत्व-एतदुभयगतं द्वित्वम् इति एकत्व-द्वित्वयोः परस्परभेदात् तद्धर्मभेदरूप-कारणसामग्रीसत्त्वे अभेदान्वयो नवीनाभिमतः सयुक्तिक एव इत्यप्यभिप्रायः। अत एव न हि अवयवापर्याप्तन्यायेन उभयपर्याप्तापि प्रकारतावच्छेदकता वस्तुत्वेन प्रमेयत्वेन वाच्यत्वेन च रूपेण घटत्वेऽपि पर्याप्तैवेति घटत्वगत-एकत्वभेदाभावाद् एवं कार्यकारणभाव-कथमिति वदन्तः परास्ताः।

न च घटस्य इत्यत्र 'जातिमान् घट' इति प्रतीतौ जातित्वावच्छिन्न-घटत्वनिष्ठ-प्रकारतावच्छेदकताक एव अभेदान्वयबोधः। तत्र घटत्वगतम् एकत्वमेव तन्निष्ठप्रकारतावच्छेदकतात्वावच्छिन्न-प्रतियोगिताक-पर्याप्त्यनुयोगितावच्छेदकम् इति तद्भेदस्य घटत्वगत-एकत्वे अभावेन कथं कार्यकारणभावो निर्दुष्ट इति ? निरवच्छिन्नत्व-निवेशेन तु न व्यभिचारवारणम्। 'नीलघटो घट' इति अधिका-वगाहिबोधे विधेयांशे शाब्दबोधानापत्तेः इति वाच्यम्। स्वविशिष्ट-धर्मावच्छिन्ना-नुयोगिताक-पर्याप्तिप्रतियोगिभूतावच्छेदकता-निरूपितावच्छेद्यतावद्-अभेद-सम्बन्धा-वच्छिन्न-प्रकारतानिरूपित-विशेष्यतावच्छेदकतात्वावच्छिन्न-प्रतियोगिताक-पर्याप्त्यनु-योगितावच्छेदकत्व-सम्बन्धेन शाब्दबुद्धित्वावच्छिन्नं प्रति स्वनिरूपितावच्छेदकता-त्वावच्छिन्नप्रतियोगिताक-पर्याप्त्यनुयोगितावच्छेदक-रूपधर्मभेदः कारणमिति प्रबन्धः। वैशिष्ट्यञ्च स्वनिरूपित-निरवच्छिन्नावच्छेदकतात्वावच्छिन्न-प्रतियोगिताक-पर्याप्त्य-नुयोगिता-वच्छेदकत्वम् इत्येकमेव। एवञ्च घटत्वगत-एकत्वे नीलघटत्व-उभयगत-द्वित्व-भेदस्य सत्त्वेन आपत्तिविरहात्। न च विधेयांशेऽधिकावगाहि-शाब्दबोधस्थले

निरुक्तरीत्या वारणेऽपि उद्देश्यांशेऽधिकावगाहि-'नीलघटो घट' इत्यापत्तिः अनिष्टापि। तत्र नीलघटत्व-उभयगत-द्वित्वमेव हि विशेष्यतावच्छेदकतात्वावच्छिन्न-प्रतियोगिताक-पर्याप्त्यनुयोगितावच्छेदकम्। तत्र घटत्वगत-एकत्व-भेदस्य प्रकारतावच्छेदकतात्वावच्छिन्न-प्रतियोगिताक-पर्याप्त्यनुयोगितावच्छेदकस्य सुतरां विद्यमानत्वेन कथं वारणोपाय इति वाच्यम्। स्वनिरूपित-अभेदसम्बन्धावच्छिन्न-विशेष्यतावच्छेदकता-सम्बन्धेन शाब्दबुद्धित्वावच्छिन्नं प्रति स्वविशिष्ट-भेदस्यैव कारणत्वात्। वैशिष्ट्यञ्च (१)स्वावच्छेदकतात्वावच्छिन्न-प्रतियोगिताक-पर्याप्त्यनुयोगितावच्छेदकधर्मावच्छिन्न-प्रतियोगिताकत्वं (२)स्वनिरूपित-विशेष्यतावच्छेदकतात्वावच्छिन्न-प्रतियोगिताक-पर्याप्त्यनुयोगितावच्छेदकरूप-अवच्छिन्नानुयोगिताकत्वम् इति उभयसम्बन्धेन। तथा च घटत्वगत-एकत्वावच्छेदेन नीलघटत्व-उभयगत-द्वित्वावच्छिन्न-प्रतियोगिताक-भेदः अस्त्येव। नीलघटत्व-उभयगत-द्वित्वावच्छेदेन तु नीलघटत्व-उभयगत-द्वित्वावच्छिन्न-प्रतियोगिताक-भेदस्य घटत्वगत-एकत्वावच्छिन्न-प्रतियोगिताक-भेदस्य च अविद्यमानत्वात्।

यदि च विधेये विशेष्यता उद्देश्ये प्रकारता न तु उद्देश्ये विशेष्यता विधेये प्रकारता इति, तदा अधिकावगाहिविशेष्यक-बोध इष्ट एव। कार्यकारणभावे विशेष्यतां प्रकारताञ्च विहाय उद्देश्यता-विधेयतयोः निवेश इति तदा न कोऽपि विवादः।

ननु 'स घटः', 'जातिमान् घटः', 'घटः स', 'घटो जातिमान्' इत्यत्र इष्ट-अभेदान्वय-उपपत्तये प्रकारतावच्छेदकताया विशेष्यतावच्छेदकतायाश्च कार्यकारणभावे निरवच्छिन्नाया एव ग्रहणम् इत्युक्तम्। परन्तु 'स स' इति जातिमान् इत्यर्थक-वाक्ये विशेष्यतावच्छेदकतावच्छेदकस्य जातित्वस्य प्रकारतावच्छेदकतावच्छेदकस्य जातित्वस्य च भेदाभावेऽपि अभेदान्वयबोधापत्तिः। तत्पदस्य जातिमति शक्तत्वेन प्रकारतावच्छेदिका विशेष्यतावच्छेदिका च जातिरेव नान्यः पदार्थः। जातिनिष्ठा प्रकारतावच्छेदकता, विशेष्यतावच्छेदकता तु जातित्वावच्छिन्नत्वेन सावच्छिन्नैव, न तु निरवच्छिन्ना इत्यनिष्टः अभेदान्वयबोधो दुर्वार इति चेत्? न। तद्धर्मावच्छिन्नावच्छेदकताक-प्रकारता-निरूपित-धर्मितावच्छेदकता-सम्बन्धेन शाब्दबुद्धित्वावच्छिन्नं प्रति तद्धर्मभेदः कारणमिति कार्यकारणभावोऽप्यङ्गीकार्यः। एवञ्च 'जातिमान् जातिमान्' इत्यर्थके 'स स' इत्यत्र जातिमान् पदार्थो विशेष्यः, विशेष्यतावच्छेदिका जातिरेव। विशेष्यतावच्छेदकतावच्छेदकम् एकं जातित्वम् एव। एवं प्रकारः जातिमान् पदार्थः, प्रकारतावच्छेदिका जातिरेव प्रकारतावच्छेदकतावच्छेदकम् एकं जातित्वमेव। तथा च प्रकारतावच्छेदक-विशेष्यतावच्छेदकतावच्छेदक-जातित्व-धर्मयोः एकस्वरूपत्वेन भेदाभावाद् अभेदान्वय-निवारणस्य

सौष्ठवात्। एतत् कार्यकारणभावोदाहरणं तु 'जातिमान् प्रमेयवान्' इत्यत्र विशेष्यतावच्छेदकतावच्छेदकं जातित्वं प्रकारतावच्छेदकतावच्छेदकं प्रमेयत्वं तयोश्च परस्परभेदाद् अभेदान्वयबोध इष्टः सङ्गच्छते।

अत्र केचित् मान्याः। प्रकारतावच्छेदकता-विशेष्यतावच्छेदकता च उभयी यत्र स्थले सावच्छिन्ना निरवच्छिन्ना वाऽस्ति तत्र स्थले अभेदान्वयेन शाब्दबुद्धित्वावच्छिन्नं प्रति तद्धर्मभेदः कारणम् इत्येक एव कार्यकारणभावः। 'द्रव्यं घट' इत्यत्र प्रकारतावच्छेदक-विशेष्यतावच्छेदक-घटत्व-द्रव्यत्वयोः निरवच्छिन्नत्वेन सिद्धिः। 'जातिमान् प्रमेयवान्' इत्यत्र तु जातित्व-प्रमेयत्वाभ्यां सावच्छिन्नत्वमेव। विशेष्यतावच्छेदक-प्रकारतावच्छेदक-जातिपदार्थ-प्रमेयपदार्थयोरिति तयोः भेदाद् अभेदान्वयः सम्पन्नः। 'स स', 'जातिमान् जातिमान्' इत्यत्र तु न अभेदान्वयबोधः। विशेष्यतावच्छेदकता-प्रकारतावच्छेदकतयोः जातित्वेन सावच्छिन्नत्वेऽपि प्रकारतावच्छेदक-विशेष्यतावच्छेदक-जातेः सत्त्वात् जातित्व-धर्मयोः भेदाभावात्। 'स घट' इति निरुक्तोदाहरणे तु न अभेदान्वयानुपपत्तिः। तत्र केवल-विशेष्यतावच्छेदकता एव सावच्छिन्ना न तु प्रकारतावच्छेदकताऽपि सावच्छिन्ना। उभयोः प्रकारतावच्छेदकता-विशेष्यतावच्छेदकतयोः यत्र सावच्छिन्नत्व-न्निरवच्छिन्नत्वं वा तत्रैव तादृशकार्य-कारणभाव-प्रवृत्तिः इत्याशयात्। एवं 'घटः स' इत्यत्रापि केवलप्रकारतावच्छेदकता एव सावच्छिन्ना न तु द्वे इति कार्यकारणभाव-अप्रवृत्त्या तद्धर्मभेदाभावेऽपि अभेदान्वयो युक्ततर इति प्रोचुः।

**VV-S 5.3.3:** 'स स' इतिवत् 'दण्डवान् दण्डवान्' इत्यत्रापि नाभेदान्वयबोध इष्ट इति कार्यकारणभावान्तरम्। तद् वारकमाह - **दण्डसंयोगत्वाद्यवच्छिन्ना** इति। 'दण्डवान् दण्डवान्' इत्यस्य दण्डसंयोगवान् दण्डसंयोगवानित्यर्थः। दण्डसंयोगवान् पुरुषविशेषः। पुरुषो विशेष्यः, तत्र दण्डसंयोगः प्रकारः। दण्डसंयोगे दण्डः प्रकारः। दण्डे दण्डत्वं प्रकारः। द्वितीये दण्डसंयोगवान् इत्यत्र पुरुषः प्रकारः, तत्र दण्डसंयोगः प्रकारः, तत्र दण्डः प्रकारः, तत्र दण्डत्वं प्रकारः। अत्र विशेष्यतावच्छेदकतावच्छेदकतावच्छेदकं तु दण्डत्वमेव। प्रकारतावच्छेदकतावच्छेदकतावच्छेदकमपि दण्डत्वमेवेति दण्डत्वस्य एकत्वात् तयोः भेदाभावात् न अभेदान्वयबोधः।

**VV-S 5.4.1:** नन्वेवं कार्यकारणभावे 'जातिमद्वान् दण्डवान्', 'दण्डवान् जातिमद्वान्' इत्यत्र अभेदान्वयबोधः सर्वाभिमतो न सिद्ध्येत्। तथा हि - जातिमद्वान् दण्डसंयोगवान् पुरुषो विशेष्यः, तत्र दण्डसंयोगः प्रकारः, तत्र दण्डः प्रकारः, तत्र जातिः प्रकारः। एवञ्च विशेष्यतावच्छेदकतावच्छेदकतावच्छेदिका जातिः। प्रकारतावच्छेदकतावच्छेदकतावच्छेदिकापि जातिरेवेति। सा च दण्डत्वम्

एवेति तयोर्भेदो नास्तीति चेत्? न। निरविच्छिन्नत्व-निवेशात्। निरवच्छिन्नविशेष्यतावच्छेदकतावच्छेदकत्व-प्रत्यासत्त्या शाब्दबोधं प्रति दण्डत्व-धर्मभेदः कारणम् इति योजना। एवं निरवच्छिन्न-प्रकारतावच्छेदकतावच्छेदकतावच्छेदकत्वम् अपि संयोजनीयम्। अतो 'जातिमद्वान् दण्डवान्' इत्यत्र दण्डत्वजातेः जातित्वावच्छिन्नत्वेन सावच्छिन्नत्वमेव। विशेष्यतावच्छेदकतावच्छेदकतावच्छेदकतायाः एव 'दण्डवान् जातिमद्वान्' इत्यत्र प्रकारतावच्छेदकतावच्छेदकतावच्छेदिकाया जातेः जातित्वावच्छिन्नत्वेन निरवच्छिन्नत्वाभावात् कार्यकारणभावाप्रवृत्त्या तद्धर्मभेदाभावेऽपि भेदान्वयस्य निर्विवादत्वात्। यत्र कुत्रापि शाब्दबोधः, तत्र ज्ञानमेव प्रधानकारणम्। एवञ्च ज्ञानस्य शाब्दबोधापेक्षया व्यापकत्वम्। व्याप्यधर्मावच्छिन्नकार्ये जननीये व्यापकधर्मावच्छिन्न-कार्योत्पादक-सामग्री अपेक्ष्यते इति अभिप्रायेण अनेक-कार्यकारणभावे गौरवमिति सर्वानुगतम् एकमेव कार्यकारणभावमाह - **वस्तुतस्त्विति**। अत्र विषयतापदेन यत्र यादृशी विषयता वर्त्तते सैव विशेष्यतारूपा विशेष्यतावच्छेदकतारूपा विशेष्यतावच्छेदकतावच्छेदकतारूपा च। एवं प्रकारतारूपा प्रकारतावच्छेदकतारूपा प्रकारतावच्छेदकतावच्छेदकतारूपेति। 'द्रव्यं घट' इत्यत्र घटत्वाद् भिन्नं द्रव्यत्वं, तन्निष्ठविशेष्यतावच्छेदकताख्या एव विषयतासम्बन्धः। घटत्व-द्रव्यत्व-धर्मयोः भेदश्च इत्यभेदान्वयः सिद्धः। 'घटो घट' इति प्रत्युदाहरणम्।

**वस्तुतस्तु तद्धर्मान्यवृत्तिविषयतासम्बन्धेनेति**। न च 'घटो द्रव्यम्' इत्याकारक-घटत्वावच्छिन्न-प्रकारता-निरूपित-धर्मितावच्छेदकता-सम्बन्धेन शाब्दबुद्धित्वावच्छिन्नं प्रति घटत्वान्यवृत्ति-विषयता-सम्बन्धेन ज्ञानत्वावच्छिन्नस्य नैव अस्ति व्यापकता। तदपेक्षया एतस्य अल्पदेशवृत्तित्वात्। किं पुनः समवायेन 'जातिमान् घटः', 'प्रमेयवान् पटः' समवायेन इत्यादौ जातित्वेन प्रमेयत्वेन वा धर्मित्व-प्रकारत्वावच्छेदकत्वेन रूपेण घटत्वावगाहि-शाब्दबोधस्य अवच्छिन्नघटत्वनिष्ठ-अवच्छेदकताक-प्रकारता-निरूपित-धर्मिता-निरूपितावच्छिन्न-अवच्छेदकत्वसम्बन्धेन शाब्दबुद्धित्वावच्छिन्नं प्रति च व्यापकत्वं न स्यादिति वाच्यम्। निरवच्छिन्नत्व-विशिष्ट-घटत्वनिष्ठावच्छेदकताक-प्रकारता-निरूपित-विशेष्यता-निरूपित-निरवच्छिन्नावच्छेदकता-सम्बन्धेन शाब्दबुद्धित्वावच्छिन्नं प्रति घटत्वान्यवृत्ति-विषयता-सम्बन्धेन ज्ञानत्वावच्छिन्नस्य व्यापकत्व-सम्भवात्। जातित्वावच्छिन्न-अवच्छेदकताक-प्रकारता-निरूपित-धर्मितावच्छेदकतावच्छेदकता-सम्बन्धेन शाब्दबुद्धित्वावच्छिन्नं प्रति प्रमेयत्वावच्छिन्न-अवच्छेदकता-प्रकारता-निरूपित-धर्मितावच्छेदकता-सम्बन्धेन शाब्दबुद्धित्वावच्छिन्नं प्रति च जातित्वान्यवृत्तिविषयतासम्बन्धेन प्रमेयत्वान्यवृत्तिविषयतासम्बन्धेन च ज्ञानत्वावच्छिन्नस्य व्यापकत्ववर्णनात्।

ननु एवमपि जातित्वान्वयवृत्तिविषयता-सम्बन्धेन ज्ञानत्वावच्छिन्नस्य नैव व्यापकत्व-सिद्धिप्रत्याशा। समवायसम्बन्धावच्छिन्न-जातित्वावच्छिन्नावच्छेदकताक-प्रकारता-निरूपिता या धर्मिता तादृशधर्मितानिरूपित-कालिकसम्बन्धादच्छिन्नावच्छेदकता-वच्छेदकत्वस्य जातित्वे प्रमेयत्वे वा विद्यमानत्वादिति कथं व्यापकत्वलक्षणसमन्वय इति चेत्? न। उभयोः अवच्छेदकत्वपदार्थयोः एकसम्बन्धावच्छिन्नत्वस्य एव व्याप्यलक्षणांशे निवेशः। एवञ्च कालिकसम्बन्धसत्तया न आपत्तिरिति समाधानात्।

ननु विधेयांशेऽधिकावगाहिशाब्दबोधो नवीनैः स्वीकृतः। एवञ्च अस्मिन्पक्षे 'घटो नीलघट' इत्यत्र घटत्वपदार्थेऽपि निरवच्छिन्न-घटत्वनिष्ठावच्छेदकताक-प्रकारतानिरूपित-निरवच्छिन्नावच्छेदकत्व-सम्बन्धेन शाब्दबोधस्य वर्त्तमानतया तत्र घटत्वान्यवृत्तिविषयता-सम्बन्धेन ज्ञानत्वावच्छिन्न-प्रतियोगिकाभावात् कथङ्कारं व्यापकत्व-लक्षणसंघटनेति। व्याप्यलक्षणे केवल-शुद्धघटत्व-मात्रावच्छिन्नत्व-निवेशेन तु नैव निर्वाहः अभ्युपेयो? 'नीलघटो नीलघट' इत्येवंविधशाब्दबोधस्य वज्रलेपायितत्वात् इति चेत् ? न। घटत्वादिगत-एकत्वान्यवृत्ति-विषयता-वच्छेदकतात्वावच्छिन्न-पर्याप्त्यनुयोगितावच्छेदकत्व-सम्बन्धेन ज्ञानत्वावच्छिन्नं प्रति घटत्वगत-एकत्वभेदस्य कारणत्व-अङ्गीकारात्।

ननु एवं समाधानेऽपि उद्देश्यांशेऽपि अनिष्ट-अधिकावगाहि-शाब्दबोधस्य जन्मसहस्रेणापि निवारयितुम् अशक्यत्वम् इति चेत्? न। निरवच्छिन्न-घटत्व-मात्रावच्छिन्न-प्रकारता-निरूपित-विशेष्यतावच्छेदकता-सम्बन्धेन शाब्दबुद्धित्वावच्छिन्नं प्रति घटत्वान्यवृत्ति-विषयता-सम्बन्धेन ज्ञानत्वावच्छिन्नस्य व्यापकत्व-सम्भवेन आपत्ति-परिहारात्।

किञ्च निरवच्छिन्न-घटत्व-निष्ठावच्छेदकता-निरूपित-नीलत्वावच्छिन्न-प्रकारता-निरूपित-नीलत्वावच्छिन्न-विशेष्यता-निरूपित-अनवच्छिन्नावच्छेदकता-सम्बन्धेन शाब्दबुद्धित्वावच्छिन्नं प्रति घटत्वान्यवृत्ति-विषयता-सम्बन्धेन ज्ञानत्वा-वच्छिन्नस्य व्यापकत्वात् चेति मुद्राबोधनात्।

**VV-S 5.4.2:** घटत्वस्यैव विशेष्यतावच्छेदकत्वात् प्रकारतावच्छेदकत्वाच्च न अभेदान्वयबोध इत्याशयेन आह - **एवञ्चेति**।

ननु 'जातिमान् घट' इत्यत्र घटत्वे जातित्वमत्त्वात् घटत्वनिष्ठा-वच्छेदकताक-अभेदसम्बन्धावच्छिन्न-प्रकारतानिरूपित-विशेष्यतावच्छेदकतासम्बन्धेन शाब्दबोधः। एवञ्च घटत्वावच्छिन्न-प्रकारताको घटत्वान्यवृत्तिविषयता-सम्बन्धेन ज्ञानव्याप्य इति तत्र अभीष्टः अभेदान्वयः कथमिति ?

किञ्च 'नीलघटो घट' इत्यत्रापि घटत्वे शाब्दबोधः कथमिति चेत् ? न। आद्यदोषवारणाय व्याप्यांशे निरवच्छिन्नत्व-निवेशनात्। द्वितीयदोषवारणाय

प्रकारतायां घटत्वेतरधर्मानवच्छिन्नत्व-निवेश इति तत्त्वात्। घटत्वेतर-नीलत्वेन अवच्छिन्नत्वेन न आपत्तिरिति यावत्।

**VV-S 5.4.3:** एको द्वौ इति। एकपदवाच्या एकत्वेन रूपेण घटादिव्यक्तिरेव। तदुत्तरविभक्तेरपि एकत्वमर्थः। एक इत्यस्य 'एकत्ववान् एकत्ववान्' इत्यर्थः। प्रकृत्यर्थ-प्रत्ययार्थौ एकत्वसंख्याविशिष्टघटव्यक्तिम् उद्दिश्य एकत्वविधानम्। उद्देश्या एकव्यक्तिः उद्देश्यतावच्छेदकमेकत्वम्। विधेयम् अपि एकत्वम् एव । उद्देश्यतावच्छेदक-विधेययोः ऐक्येन समवायसम्बन्धेन एकत्वसंख्याया उद्देश्यभूत व्यक्तौ अन्वयः। तद्वारणाय एकत्वत्वनिष्ठेन एकत्वत्वावच्छिन्न-समवायसम्बन्धावच्छिन्न-प्रकारतानिरूपित-विशेष्यतानिरूपित-समवायसम्बन्धावच्छिन्न-अवच्छेदकतावच्छेदकत्वसम्बन्धेन शाब्दबोधं प्रति एकत्वत्वभेदः कारणमिति कार्यकारणभावो न कर्तव्यो भवति। एकत्वत्वयोः भेदाभावात् पूर्वोक्तेनैव वारणमिति लाघवमिति तात्पर्येण आह - **अनुदयादिति**।

**VV-S 5.4.4:** एवं 'कर्म गच्छति' इति। अयं भावः। 'ग्रामं गच्छति' इत्यत्र शाब्दबोधो भवति। ग्रामपदार्थ आधेयतासम्बन्धेन द्वितीयार्थकर्मतायां प्रकारः, प्रकारतावच्छेदकं च ग्रामत्वम्, विशेष्यतावच्छेदकं कर्मतात्वम्। परन्तु ग्रामस्य कर्मपदार्थत्वेन कर्मपदवाच्यत्वेऽपि 'कर्म गच्छति' इति न भवतीति तात्पर्येण आह - **एवमिति**। 'कर्म गच्छति' इत्यत्र कर्मपदस्य प्रकृतिभूतस्य कर्मत्वावच्छिन्ने शक्तिः। तदुत्तर-लुप्त-द्वितीयाविभक्तेः कर्मत्वावच्छिन्ने कर्मत्वे शक्तिः, प्रत्ययार्थ-प्राधान्यात्। तत्र शाब्दबोधवारणाय कर्मत्वत्वावच्छिन्नावच्छेदकताक-आधेयतासम्बन्धावच्छिन्न-प्रकारता-निरूपित-धर्मितावच्छेदकतालक्षणसम्बन्धेन शाब्दबुद्धित्वावच्छिन्नं प्रति कर्मत्वत्व-भेदः कारणमिति पृथग्लक्षणं न कर्तव्यं भवति। पूर्वोक्तलक्षणेनैव वारणसम्भवादिति तात्पर्यम्।

**'घटो न घट'** इति। न च 'घटभेदव्याप्यवान् घट' इत्याकारको यदि परामर्शः स्यात् तदेव घटत्वावच्छिन्न-धर्मिक-घटत्वावच्छिन्न-प्रतियोगिताक-भेदानुमितिः स्यात्। परन्तु तादृश-परामर्शस्तु भवत्येव न हि। आरोपादिना यदि कथञ्चिद् भविष्यति तादृशोऽपि परामर्शः तर्हि तादृशस्य अनुमितिजनकत्वानर्हत्वम् इति कथं ग्रन्थ इति वाच्यम्। 'भेदव्याप्यवान् घट' इति एवंविधे परामर्शे भेदसामान्यापेक्षया घटभेदस्य लघुत्वेन लाघवज्ञानात् अनुमित्यापत्ति-सम्भवेन ग्रन्थस्य सयुक्तिकत्ववर्णनात्। अस्मिन्वाक्ये पदार्थनिर्देशः। धर्मी घटः, घटभेदः तत्र प्रकारः, प्रकारतावच्छेदको घटः, प्रकारतावच्छेदकतावच्छेदकं घटत्वमेव। धर्मितावच्छेदकमपि तदेव घटे घटत्वं समवायेन भासत इति नियमात्। समवायेन घटत्वं घटे प्रकारः। घटत्वावच्छिन्न-प्रतियोगिताकत्व-सम्बन्धेन घटभेदे घटपदार्थः।

प्रकारः भेदश्च स्वरूपसम्बन्धेन विशेष्यभूतघटे प्रकार इति। घटे च घटभेदस्य असम्बन्धः। घटे घटभेदानुमितेः निवारणाय घटत्वनिष्ठेन घटत्वावच्छिन्न-भेद-निष्ठप्रकारतानिरूपित-धर्मितावच्छेदकता-लक्षणसम्बन्धेन शाब्दबोधं प्रति घटत्वभेदः कारणमिति पृथक् कार्यकारणभावो न कर्तव्यो भवति। तद्धर्मान्यवृत्तिविषयता-सम्बन्धेन इति कार्यकारणभावेनैव गतार्थत्वात्। प्रकारतावच्छेदकं विशेष्यता-वच्छेदकञ्च घटत्वमेव इत्यभिमानः। 'दण्डवान् दण्डवान्', 'घटो घट' इत्यादि-सकलापत्तिवारणं लाघवेन जातमिति विविच्य आह - **सकलातिप्रसङ्गेति**।

ननु येन सम्बन्धेन यद्धर्मावच्छेदेन यद्वत्ता येन वाक्येन नञ्रहितेन प्रतीयते तेन वाक्येन नञ्घटितेन तत्सम्बन्धावच्छिन्न-तन्निष्ठप्रतियोगिताकाभावः तद्धर्मावच्छेदेनैव प्रत्याय्यत इति नियमेन स्वरूपसम्बन्धेन 'घटो घट' इति वाक्याद् घटत्वावच्छेदेन घटाभेदवत्ताप्रतीतेः असत्त्वात् तदवच्छेदेन घटाभेदाभावप्रतीतेः अकिञ्चनत्वात् कथं लाघवकल्पनं ग्रन्थकृतामिति चेत्? न। येन सम्बन्धेन यद्धर्मावच्छेदेन यद्वत्ताप्रतीतौ यद्वाक्यं साकाङ्क्षं तेन वाक्येन नञ्घटितेन तेन सम्बन्धेन तदवच्छेदेन तदभावः प्रत्याय्यत इत्याकारको नियमः। यद्यपि 'घटो घट' इति वाक्यं न तादृश-शाब्दबोधजनकं तथापि तादृश-शाब्दबोधाय तद् 'घटो घट' इति वाक्यं साकाङ्क्षम् अस्त्येव इति व्याख्यानात्।

अत्र **अस्मद्गुरवः**। ननु कालिकादिसम्बन्धेन समवायसम्बन्धेन घटत्व-विशिष्टस्य घटत्वविशिष्टे अभेदान्वयः प्रतीतिसिद्धः। एवञ्च तत्र घटत्वनिष्ठ-निरवच्छिन्नावच्छेदकताक-अभेदसम्बन्धावच्छिन्नप्रकारता-निरूपित-विशेष्यतावच्छेद-कतासम्बन्धेन शाब्दबोधस्य घटत्वेऽपि विद्यमानत्वाद् घटत्वान्यवृत्तिविषयता-सम्बन्धेन ज्ञानव्यापकेनैव स बोध इति चेत्? न। घटत्वनिष्ठनिरवच्छिन्ना-वच्छेदकताविशिष्टावच्छेदकता-सम्बन्धेन शाब्दबोधस्य व्याप्यत्ववर्णनात्। अवच्छेदकता-वैशिष्ट्यञ्च स्वनिरूपितावच्छेद्यतावद्-अभेदसम्बन्धावच्छिन्न-प्रकारता-निरूपित-विशेष्यता-निरूपितत्व-स्वावच्छेदक-सम्बन्धावच्छिन्नत्वम् इत्युभयसम्बन्धेन। उद्देश्यपदार्थे प्रकारत्वं विधेयपदार्थे विशेष्यत्वं यत्र तत्र तु शाब्दबोध इष्ट एव विशेष्यांशे अधिकवगाहिशाब्दबोधेऽपि। तथा च तत्र दोषवारणाय व्याप्यकोटौ प्रकारता-विशेष्यतयोः स्थाने विधेयता-उद्देश्यतयोः प्रवेशेन क्षतिविरहादिति आहुः।

*इति श्रीत्रिकोणयन्त्रसन्निभ-काशीप्रयागायोध्यास्त्य-तीर्थत्रयमध्यभूमि-(उदयपुर-बदलापुर-जौनपुर)जन्म-श्रीसरयूपारीण-शुक्ल-कौमुदीकल्पलतिका परिष्कारदर्पण-परिभाषेन्दुशेखर-शास्त्रर्थकलाद्यनेक-ग्रन्थकृद्-वैयारकरणशिरोमणि-घटिकाशतशतावधान-संस्कृताशुकविचक्रवर्ति-पण्डितराज-श्रीवेणीमाधवशास्त्रि-विरचित-शास्त्रर्थकला-सहित-व्युत्पत्तिवादे प्रथमाकारके अभेदान्वयप्रकरणं समाप्तम्।*

=======

# परिशिष्टः - १*

पं. रामप्रसाद त्रिपाठी

"पदार्थः पदार्थेनान्वीयते न तु पदार्थैकदेशेन" इत्येषा व्युत्पत्तिः। सा च कार्यकारणभावमूलिका। यतो हि तत्पदजन्य-तदर्थविषयक-शाब्दबोधत्वावच्छिन्नं प्रति तत्पदनिष्ठ-वृत्तिज्ञानस्योपस्थितिः कारणतया कल्प्यते - इति कार्यकारणभाव एव तत्र मूलं वर्त्तते। एवमेव "प्रतियोग्यभावान्वयौ च तुल्ययोगक्षेमौ", येन रूपेण सम्बन्धेन यो यत्र वर्त्तते, तेनैव सम्बन्धेन तत्र तदभावः प्रत्येतव्य इत्येषा व्युत्पत्तिः प्रतिबन्ध्य-प्रतिबन्धकभावं कल्पयति। एवं च व्युत्पत्तिः नियमविशेष इति वक्तुं शक्यते। उत्पूर्वकात् पद्-धातोः क्तिन् प्रत्ययान्त उत्पत्तिशब्दः, तत इयं निष्पद्यते। उत्कृष्टा पत्तिः उत्पत्तिः, पदगतौ इति धातोः आयाति अयम् उत्पत्तिशब्दः। सर्वे गत्यर्थकाः धातवः ज्ञानार्थका, 'गतिर्ज्ञानम्' इति नियमात्। उत्कृष्टा पत्तिः गतिः ज्ञानं वा उत्पत्तिः प्रतिपत्तिर्वा। तत्रापि 'वि'-इत्युपसर्गाद् विशिष्टा उत्पत्तिः प्रतिप्रत्तिर्वा व्युत्पत्तिः। प्रतिपत्तौ वैशिष्ट्यं कार्यकारणभावमूलकत्वं प्रतिबन्ध्य-प्रतिबन्धकभाव-मूलकत्वम्। एवं च तादृशानां व्युत्पत्तीनां वादः **व्युत्पत्तिवादः**। 'वद व्यक्तायां वाचि'-इत्यस्माद् धातोः घञ्-प्रत्ययान्तो वाद-शब्दः। तत्र षष्ठीतत्पुरुषसमासः कर्त्तव्यः - व्युत्पत्तीनां वादः **व्युत्पत्तिवादः**। किं वा नानाविधा व्युत्पत्तीः वदति प्रतिपादयति यः ग्रन्थः स **व्युत्पत्तिवादः**। अस्मिन् पक्षे 'कर्मण्यण्' (P. 3.2.1) इति सूत्रेण कर्मवाचके सुबन्ते उपविशति, वद्-धातोरण् प्रत्ययो निष्पाद्योऽयं शब्दः। यथा कुम्भकारः तथैव व्युत्पत्तिवादः। तथा च - षष्ठीसमासे अयं विवादो वर्त्तते, 'उपपदमतिङ्' (P.2.2.19) इत्यनेन उपपदसमासः कुतो न ? तदुपरि भगवता भाष्यकारेणोच्यते महर्षिणा पतञ्जलिना - '**षष्ठीसमासाद् उपपदसमासो विप्रतिषेधेन**'। एवं च विप्रतिषेधमहिम्ना उपपदसमासः स्वीकृतः। तदुपरि पुनः वार्तिकम् आयाति -'**विभाषाषष्ठीसमासो यदा न षष्ठीसमासस्तदा उपपदसमासः**' । अनेन भाष्येण किमायाति ? षष्ठीसमासो यदा न भवति तदा उपपदसमासः। पक्षद्वयेऽपि - "**गतिकारकोपपदानां कृद्भ्यः समासवचनं विप्रतिषेधेन**" इत्येषा परिभाषा अग्रे वर्तते। एवं च 'व्युत्पत्ति। अम्। वाद। सु' इति अलौकिको विग्रहोऽत्र न कर्त्तव्यो भवति, अपि तु 'वाद' इत्येव। किन्तु भट्टोजीदीक्षितमतेन - 'यत्र कारकविशेषोपादानं तत्रैवैषा परिभाषा प्रवर्त्तनीया'। यथा - 'कर्त्तृकरणे कृता बहुलम्' (P.2.1.32) इति सूत्रे 'हरिणा कृतम्', 'नखैर्भिन्नं' इत्यादिषु

सत्सूदाहरणेषु एषा परिभाषा प्रवर्त्तनीया। कारकविषयस्य कर्तृरूपस्य करणरूपस्य वा उपादानं तत्र वर्त्तते। यत्र च कारकविशेषोपादानं नास्ति, तत्रैषा परिभाषा न प्रवर्त्तते। "**द्वितीयाश्रितातीतपतितगतात्यस्तप्राप्तापन्नैः**" (P.2.1.24) इत्यत्र 'कृष्णं श्रितः कृष्णश्रितः' इत्यस्य 'कृष्ण। अम्। श्रित' इति विग्रहो भवतु, अथवा 'कृष्ण। अम्। श्रित। सु' इत्यस्यां विचारणायां भट्टोजीदीक्षितस्य मते एषा परिभाषा न प्रवर्त्तते। अतश्च 'कृष्ण। अम्। श्रित। सु' इति स्वीकार्या। तथैव व्युत्पत्ति। अम्। वाद। सु - इत्येव तत्र अलौकिकविग्रहो भवितुमर्हति। किन्तु श्रीमता उद्योतकृतोच्यते - यत्र कारकविशेषस्य उपादानं तत्र एषा परिभाषा न वक्तुं शक्यते। यतश्च यदा न षष्ठीसमासः तदोपपदसमास इत्युच्यते भगवता भाष्यकृता। तर्हि उपपद-समासस्य उत्सर्गत्वं षष्ठीसमासे एवं च षष्ठीसमासोऽपि 'गतिकारकोपपदानाम्' इत्यस्याः परिभाषाया विषयो वर्त्तते। यदि कारकविषयस्य उपादानं नास्ति, तर्हि उपपदसमासस्य योग्यता तत्र न वर्त्तते। अतो हेतोः भाष्यकारीयवचनेनेदं ज्ञायते यत् कारकविषयस्योपादानं भवतु। येन केनापि रूपेण कारकस्य चर्चा यत्र स्यात्, तत्र एषा परिभाषा प्रवर्त्तनीयेति कृत्वा अत्राप्येषा परिभाषा प्रवर्त्तते। अतो हेतोरलौकिके विग्रहे सुबुत्पत्तिर्न कर्त्तव्या। तर्हि 'द्वितीया श्रितातीत..' (P.2.1.24) इत्यस्य का गतिः ? तत्रैव उद्योतग्रन्थे तैः प्रत्यपादि यत् तत्रापि 'गतिकारकोपपदानाम्' इत्यस्याः परिभाषाया अनित्यत्वमङ्गीकृत्य कथञ्चित् 'कृष्ण। अम्। श्रित। सु' इत्यलौकिके विग्रह प्रतिपादयितुं शक्यते नान्यथा, इति तेषां सरणिः।

कौमुदीकृता उच्यते - 'द्वितीयान्तं तदादि श्रितादिप्रकृतिकैः सुबन्तैः सह समस्यते'। 'श्रितादिप्रकृतिकैः सुबन्तैः' इत्यत्र श्रितादयः शब्दाः प्रकृतिभूता येषु सुबन्तेषु, सुबन्तस्य प्रकृतित्वं तत्र नास्ति, अपितु सुब्-विभक्तेः प्रकृतित्वं वर्त्तते - इत्येषा विरुद्धोक्तिः कथं सङ्गमनीया ? तत्रायं समासो विद्वद्भिर्विधीयते यत् श्रुतादयः शब्दाः प्रकृतिभूता येषु सुबन्तेषु सप्तम्यर्थे बहुव्रीहिर्विधीयते तदायं विरोधः परिहर्त्तुं शक्यः।

इत्थं **व्युत्पत्तिवाद**-शब्दे उपपदसमासः किं वा षष्ठीसमास इति पक्षद्वयेऽपि अलौकिके विग्रहे सुब्-विभक्तराहित्यमेव वर्तते। अतश्च नानाविधा व्युत्पत्तीर्वदति यः ग्रन्थः स **व्युत्पत्तिवादः**।

### *व्युत्पत्तिः का ?*

व्याकरणदर्शने व्युत्पत्तिः का ? प्रकृतिप्रत्ययभेदज्ञानं व्युत्पत्तिः। एवं च प्रकृति-प्रत्यय-भेदग्रहविशिष्टत्वं व्युत्पन्नत्वम्। तद्-विरुद्धत्वमव्युत्पन्नत्वम्। अत एव भगवता पाणिनिना 'अर्थवदधातुरप्रत्ययः प्रातिपदिकम्' (P.1.2.45) इति अव्युत्पत्तिपक्षम् अवलम्ब्य, 'कृत्तद्धितसमासाश्चेति' (P.1.2.46) व्युत्पत्तिपक्षमवलम्ब्य सूत्रं विरचितम्।

न्यायदर्शने व्युत्पत्तिः नियमविशेषः। स च कार्यकारणभावमूलकः, प्रतिबन्ध्य-प्रतिबन्धकभाव-मूलकश्चेति उपपन्नम् एव। तदुपरि प्रथमा इयं पङ्क्तिर्व्युत्पत्तिवादस्य

आयाति - **शाब्दबोधे चैकपदार्थेऽपरपदार्थस्य संसर्गः संसर्गमर्यादया भासते**। इत्येषा व्युत्पत्तिनियमविशेष उक्त आचार्येण। इदं तावदत्रालोचनीयम् - कं कार्यकारणभावमादाय एष विचारः प्रवर्त्तितः ? यतो हि कार्यकारणभावमूलिका एवैषा व्युत्पत्तिः, उताहो प्रतिबन्ध्य-प्रतिबन्धक-भावमूलिका इत्यस्यां विचारणायां कार्यकारणभावमूलिका एवेयं व्युत्पत्तिः प्रदर्शिता। यतो हि शाब्दबोधे -

पदज्ञानं तु करणं द्वारं तत्र पदार्थधीः।
शाब्दबोधः फलं तत्र शक्तिधीः सहकारिणी ।। (का.मु. ८१)

- इत्येका पद्धतिः। अन्यत्र "आसत्ति-योग्याता-तात्पर्यज्ञानमिष्यते"। आकाङ्क्षाज्ञानमपि शाब्दबोधे कारणम्। तदर्थविषयक-शाब्दबोधत्वावच्छिन्नं प्रति आकाङ्क्षाज्ञानं कारणम्, आकाङ्क्षाज्ञान-शाब्दबोधयोः कार्यकारणभावमादाय एषा व्युत्पत्ति प्रवर्त्तिता - '**शाब्दबोधे चैकपदार्थेऽपरपदार्थस्य संसर्गः संसर्गमर्यादया भासते**' इति। अस्मिन् वाक्ये पदज्ञानं पदार्थज्ञानं च विवेचनीयम्, तत एव वाक्यार्थचर्चा आयास्यति। '**शाब्दबोधे**' - इत्यत्र सप्तम्यर्थः निरूपितत्वम्। निरूपितत्वं च स्वनिष्ठनिरूपकता-निरूपित-निरूप्यतावत्त्वम्, '**एकपदार्थे**' - इत्यत्र सप्तम्यर्थः अनुयोगित्वम्, '**अपरपदार्थस्य**' - इत्यत्र षष्ठ्यर्थः प्रतियोगित्वम्, भास्-धात्वर्थविषयकः लडर्थः आश्रयः। **संसर्गमर्यादा** का - संसर्गस्य संसर्गज्ञानस्य मर्यादा सीमा यया सा संसर्गमर्यादा, लक्षणया आकाङ्क्षा, तया **संसर्गमर्यादया**। तृतीयार्थः प्रयोज्यत्वम्, "हेतौ" (तृतीया) (P.2.3.23) इति स्मरणात्। एवं च - **एकपदार्थे** इत्यत्र अनुयोगित्वं सप्तम्यर्थः। अनुयोगित्वरूपेऽर्थे 'एकपदार्थ' इति प्रकृत्यर्थस्य केन सम्बन्धेन अन्वय इति विचारणायां वृत्तित्वसम्बन्ध आधेयत्व-सम्बन्धो वा स्वीक्रियताम्। अनुयोगित्वस्य संसर्गपदार्थेन निरूपकतासम्बन्धेन अन्वयः, प्रथमान्तार्थ-मुख्यविशेष्यकः शाब्दबोध एतन्मते प्रतिपाद्यते। अतश्चैकपदार्थनिष्ठानुयोगिता-निरूपकः इति **एकपदार्थ** इत्यस्य व्याख्या। 'अपरपदार्थस्य' इत्यत्र षष्ठ्यर्थः प्रतियोगित्वं, तत्र प्रकृत्यर्थस्य वृत्तित्वसम्बन्धेनान्वयः। पुनः प्रतियोगित्वस्य निरूपकतासम्बन्धेन संसर्गपदार्थे अन्वयः, अतश्च अपरपदार्थनिष्ठप्रतियोगिता-निरूपकश्च तत्संसर्गः। एकपदार्थनिष्ठ-अनुयोगिता-निरूपकः अपरपदार्थनिष्ठ-प्रतियोगिता-निरूपकश्च य संसर्गः स आकाङ्क्षया भासते। आकाङ्क्षा-पदार्थः प्रकृत्यर्थः प्रयोज्यत्वरूपे प्रत्ययार्थे निरूपितत्वसम्बन्धेन अन्वेति। आकाङ्क्षानिरूपिता या प्रयोज्यता तादृश्याः प्रयोज्यतायाः पुनः स्वरूपसम्बन्धेन भास्-धात्वर्थविषयतायाम् अन्वयो विधेयः। अतश्च आकाङ्क्षानिरूपितप्रयोज्यतावती या विषयता, तस्याः विषयतायाः पुनः निरूपितत्वसम्बन्धेन आख्यातार्थे आश्रयत्वे अन्वयः, तन्निरूपिताश्रयता, तादृशाश्रयतावान् संसर्गः, स्वरूपसम्बन्धेन संसर्गपदार्थे अन्वयः। '**शाब्दबोधे**' इत्यत्र निरूपितत्वं सप्तम्यर्थः, तदेकदेशे निरूपकत्वे पुनः शाब्दबोधरूप-प्रकृत्यर्थस्य निरूपकत्वसम्बन्धेन अन्वयः। शाब्दबोधनिरूपिता या निरूपकता

तादृशनिरूपकता-निरूपित-निरूप्यतावती या विषयता, तादृशविषयता-निरूपिताश्रयवान् संसर्गः। एवं च एकपदार्थनिष्ठानुयोगिता-निरूपकः अपरपदार्थनिष्ठप्रतियोगिता-निरूपकश्च य संसर्गः, तादृशं संसर्गम् उद्दिश्य शाब्दबोधनिरूपित-निरूपकानिरूपित-निरूप्यतावती या आकाङ्क्षानिरूपित-प्रयोज्यतावती या विषयता, तादृशविषयतानिरूपिताश्रयवान् भवतु स संसर्गः। संसर्गमुद्दिश्य विषयतानिरूपिताश्रयता, किं वा आकाङ्क्षाप्रयोज्यत्वं विधीयते इति उद्देशविधेयभावः। अत्र च 'च'-शब्द वर्त्तते। तस्य 'च शब्दस्त्वर्थे' इति **शाब्दबोधे च** इति 'शाब्दबोधस्तु' इत्यर्थः। अनेन ज्ञायते यदन्यस्यां प्रमायां किञ्चिद् वैलक्षण्यं वर्तते। अत्र वैलक्षण्यम् त्वित्थम् - प्रत्यक्षप्रमायां यथा घट इति प्रत्यक्षं जायते, तत्र घटत्वं, समवायः, घटः, विषयाः। तस्मिन् प्रत्यक्षे इन्द्रियार्थसन्निकर्षेण चक्षुषा घटस्य संयोगसन्निकर्षेण प्रत्यक्षं भवति। स्वसंयुक्तसमवायसन्निकर्षेण घटत्वस्य प्रत्यक्षं भवति। समवायस्यापि तेनैव सन्निकर्षेण प्रत्यक्षं जायते नैयायिकानां मते। न तत्र सामग्र्यन्तरापेक्षा। एवमेव अनुमानप्रमाणेन जायमानायाम् अनुमितिप्रमायां 'पर्वतो वह्निमान् धूमात्' -- इत्यत्र संयोगसम्बन्धेन पर्वते वह्निर्वर्त्तते। एवं संयोगसम्बन्धसिद्ध्यै किञ्चिदन्यत् प्रमाणं न देयं भवति। तेनैव मानेन संयोगस्य मितिर्भवति। उपमानप्रमाणेऽपि सादृश्यज्ञानात् 'गोसदृशो गवय' इति वाक्येन गवयपदार्थ-निरूपितशक्तिज्ञानं गवयपदनिष्ठं जायते, तत्रापि सम्बन्धस्य यज्ज्ञानं तत् तेनैव प्रमाणेन सम्पादयितुं शक्यम्। किन्तु शाब्धबोधे एकपदार्थेऽपरपदार्थस्य यः संसर्गः, स तु तयैव सामग्र्या न भासयितुं शक्यते, यतो हि पदज्ञानं, पदनिष्ठ-वृत्तिज्ञानम्, एवं च वृत्तिज्ञानजन्या पदार्थोपस्थितिः, पदार्थोपस्थित्या च शाब्दबोधः सञ्जायते। किन्तु 'नीलो घटः' इत्यत्र अभेदः संसर्गः, अथ च 'राज्ञः पुरुषः' इत्यत्र स्वस्वामिभावः संसर्गः शाब्दबोधे भासते। तर्हि तस्य संसर्गस्य कृते वृत्तिर्नास्ति। एवं च वृत्त्या तदुपस्थित्यभावात् कथङ्कारं तस्य शाब्दबोधे विषयता -- इति कृत्वा आकाङ्क्षाज्ञानं शरणीकरणीयम्। अतश्च 'संसर्गमर्यादया आकाङ्क्षया भासते' इत्येका सरणिः।

अन्या च - अतश्च शाब्दबोधे एकपदार्थेऽपरपदार्थस्य संसर्गः आकाङ्क्षाज्ञानेन सञ्जायते, येन यस्य पदार्थस्य भानं भवति तेनैव तस्य संसर्गस्येति न वक्तुं शक्यते। एतद्-विषये मीमांसकानां मतभेदो वर्तते। तत्रापि अन्विताभिधानवादिनां प्राभाकराणाम्। तेषां मते संसर्गेऽपि वृत्तिः स्वीक्रियते, यतो हि अन्विताभिधानवादस्य तात्पर्यं तु इदमेव यद् घटो घटपदशक्यः। अन्विताभिधानवादे इतरपदार्थेनान्वितः सन्नेव घटः घटपदवाच्यो भवति। द्वितीयकक्षायां कार्यान्विते शक्तिरित्यस्ति द्वितीयपक्षः। कार्यतावान् घटः घटपदशक्यः। एवं च तृतीयपक्षे येन केन सम्बन्धेन सम्बन्धः स्वीकार्यः। तर्हि अन्विताभिधानवादिनां मते अन्वयांशेऽपि वृत्तिः स्वीकार्या। कुत इति चेत् ? यदि तदर्थविषयकशाब्दबोधं प्रति तत्पदजन्य-तदर्थविषयक-शाब्दबोधत्वावच्छिन्नं प्रति तत्पदजन्य-तदर्थविषयकोपस्थितिर्हेतुः इत्येव कार्यकारणभावः स्यात्, तदा मन्ये घटपदेन उच्चारितेन 'एकसम्बन्धिज्ञानमपर-

सम्बन्धिनं स्मारयति' इति रीत्या यदि समवायसम्बन्धेन आकाशस्य उपस्थितिः स्यात्, तर्हि 'घटमानय' इत्यत्र आकाशविषयकोऽपि शाब्दबोध उपपादयितुं शक्यते। एवं च तादृशं बोधं वारयितुम् एषा उक्तिः - तत्पदजन्य-तदर्थविषयक-शाब्दबोधत्वावच्छिन्नं प्रति तत्पदजन्य-तदर्थनिरूपित-वृत्तिज्ञानाधीनोपस्थितिर्हेतुः। न तु येन केन सम्बन्धेन यस्य कस्यचन पदार्थस्य उपस्थितिः। अतश्च समवायसम्बन्धाधीना या उपस्थितिः न तत्र आकाशस्य सम्भवः। यदि तत्पदजन्य-तदर्थविषयक-शाब्दबोधं प्रति तत्पदनिष्ठवृत्तिज्ञानाधीनोपस्थितिः हेतुस्तर्हि 'नीलो घटः' इत्यत्र अभेदांशेऽप्यवश्यं वृत्तिः स्वीकार्या। यतश्च वृत्तिज्ञानाधीनोपस्थितिम् अन्तरा शाब्दबोधविषयता तत्र प्रापयितुं न शक्येति। अत अन्विताभिधानवादिभिः मीमांसकैः तत्र वृत्तिः स्वीक्रियते। तत्र च सम्बन्धसामान्ये यथा - अन्वितो घटो घटपदशक्यस्तथा केनापि पदार्थेन केनापि सम्बन्धेन अन्वितः सम्बन्धवान् खल्वयं घटः, तर्हि सम्बन्धसामान्ये वृत्तिः। पुनश्च सम्बन्धविशेषः लक्षणाभास्यः आकाङ्क्षाभास्यो वा। भाट्टानां मते तु सर्वत्रैव वाक्यार्थो लक्ष्य एवेति ये विदुर्भाट्टाः तेऽपि इत्थमेवाहुः लक्षणया ग्रहं गतिम्। ते तु लक्षणामुररीकुर्वन्ति। किन्तु प्रभाकरमतानुयायिनो लक्षणां न स्वीकुर्वन्ति, अपितु आकाङ्क्षाज्ञानेन योग्यताबलादेव च शाब्दबोधविषयतां मन्वते। यथा - घटपदस्य घटत्वावच्छिन्ने शक्तिः, एवं च 'घटमानय' इत्यत्र घटत्वविशिष्टाः सर्वे घटाः गृहीताः स्युः, तर्हि तेषां सर्वेषाम् आनयनं न शक्यते कर्तुम्। तर्हि किं कर्त्तव्यम्? योग्यताबलात् घटविशेष एव तत्र आनेतव्य इति शाब्दबोधे तस्यैव विषयता सम्पाद्यते। तथैवात्रापि सम्बन्धसामान्ये वृत्तिः स्वीकृता सम्बन्धविशेषेऽवतीर्णा भवति। एवं च 'नीलो घटः' इत्यत्र योग्यतामहिम्ना आकाङ्क्षामहिम्ना वा अभेदः संसर्गो भासते। भट्टमते तु लक्षणात्र कार्या। अतश्च वृत्तिज्ञानाधीना हि संसर्गस्य उपस्थितिस्तस्यापि मते भवति, इति मीमांसकानां सरणिः।

शाब्दिकदर्शने तु वाक्यस्फोटो गृह्यते। वाक्यस्फोट इत्यस्य किं तात्पर्यम्? वाक्यं चासौ स्फोटश्च वाक्यस्फोट इति वाक्यमेव स्फोटः। स्फुटति प्रकाशते अर्थोऽनेनेति स्फोटः अर्थविषयक-प्रकाशकर्त्तेति यावत्। अर्थविषयक-प्रकाशकर्तृत्वं वाक्ये वर्त्तते। प्रकाशश्च प्रमात्मकः। एवं चार्थविषयक-प्रमाजनकत्वं स्फोटत्वम्। यदि अयमेव स्फोटपदार्थस्तर्हि धूमेऽपि चक्षुरादावपि प्रमाजनकत्वं वर्त्तत एवेति तेष्वपि लक्षणम् अतिव्याप्नोतीति कृत्वा स्फुट्यते ध्वनिना व्यज्यते असौ इति स्फोट इति द्वितीया व्युत्पत्तिरादर्त्तव्या। चक्षुरादौ ध्वनिना व्यज्यमानत्वं नास्तीति अतिव्याप्तिरपास्ता। अपि च - ध्वनिव्यङ्ग्यत्वे सति अर्थविषयक-प्रमाजनकत्वं स्फोटलक्षणम् आगतम्। इदमेव लक्षणं भगवता महाभास्यकारेण प्रतिपादितम् -- 'गौरित्यत्र कः शब्दः' इति प्रघट्टके "येन उच्चरितेन सास्नालाङ्गूलककुद-खुरविषाणानां सम्प्रत्ययो भवति स शब्दः" इति शब्दस्य स्वरूपमत्र प्रतिपादितम्। 'उच्चरितेन' इत्यस्य किं तात्पर्यम्? अत्र प्रदीपकारः - उच्चरितेन इति अभिव्यक्तेन, प्रकाशितेन वा। न तु ध्वनिरूपेणोच्चरितः शब्दोऽत्राभिप्रेतः।

न्यायमते तु उच्चार्यमाणः शब्दो ध्वन्यात्मक एव। व्याकरणदर्शने पुनः ध्वन्यात्मकः शब्दो व्यञ्जकः। तेन व्यञ्जकेन अभिव्यक्तिमायाति कश्चन स्फोटपदार्थः। स च स्फोटपदार्थः क इति जिज्ञासायामुच्यते - अन्तःकरणावच्छिन्नश्चिदात्मा एव स्फोटः। यतो हि प्रकाशकत्वं तु तत्रैव वर्त्तते। ध्वनिरूपे जडात्मके शब्दे प्रकाशकताशक्तिः कुतः ? चेतनतत्त्वमेव भवति प्रकाशकम्। अत एव गहनमवगाहमानं व्याकरणदर्शनं चेतनतत्त्वम् अवगृह्णाति। तच्च तत्त्वमन्तःकरणावच्छिन्नचिदात्मकम्। यथा - टङ्कणयन्त्रेण श्वेतकर्गजपत्रे वाक्यं टङ्क्यते। तत्र आदौ कर्गजपत्रं स्वच्छं वर्त्तते, किन्तु यन्त्रेण मसिप्रक्षेपणात् तत्र स्फोटनं भवति। तथैवेयं चितिरतीव स्वच्छा, मुखात्मकेन यन्त्रेण इयमुरञ्जिता भवति। इत्थं ध्वनिना उपरक्तः आत्मा स्फोटपदवाच्यः। न तु स्फोटः कश्चन विलक्षणः शृगालः। आत्मैव स्फोटपदवाच्य इति मन्तव्यम्। ध्वनिव्यङ्ग्यत्वे सति, ध्वनिरूपरूपितत्वे सति अर्थविषयक-प्रमाजनकत्वं स्फोटे आत्मनि वा वर्त्तते। अतश्च भगवता भाष्यकृतोच्यते - "सम्प्रत्ययो भवति" इति। समीचीनः प्रत्ययः सम्प्रत्ययः। स च प्रमात्मकः। इत्थं व्याकरणदर्शने स्फोटनये वाक्यस्य शक्तिर्वर्त्तते। 'रामो गच्छति', 'नीलो घटः', 'राज्ञः पुरुष' इत्यत्र वाक्यस्य स्वत्वसंसर्गे किं वा अभेदसंसर्गे शक्तिरेव वर्तते। वाक्यं स्फोटः। अथ च शक्त्यैव विषयीक्रियमाणः संसर्गो व्याकरणदर्शने भासते। लक्षणया विषयीक्रियमाणः संसर्गो मीमांसानये भासते, आकाङ्क्षया पुनर्विषयीक्रियमाणः संसर्गो न्यायनये भासते।

न्यायनये च संसर्गांशे नापि शक्तिः, नापि लक्षणा। आकाङ्क्षैव तत्र प्रयोजिका। तत्पदजन्य-तद्-धर्मावच्छिन्नविषयक-शाब्दत्वावच्छिन्नं प्रति तत्पदजन्य-तद्धर्मप्रकारकतद्-विशेष्यक-वृत्तिज्ञानं, तादृशवृत्तिज्ञानाधीनोपस्थितिः हेतुरिति कार्यकारणभावे स्वीकृते संसर्गांशे वृत्तेरावश्यकता नास्ति। अतश्च घट-घटत्वयोः समवायः यः संसर्गः तत्रापि नास्त्येषा आवश्यकता। संसर्गांशे वृत्तेरपेक्षा न क्रियते इति कृत्वा 'नीलो घट' इत्यत्र अभेदांशेऽपि वृत्तेरावश्यकता नास्ति। अतो हेतोः **संसर्गमर्यादया भासत** इत्येका सरणिः प्राप्यते। तत्र वृत्तिज्ञानमन्तरैव आकाङ्क्षया संसर्गो भासत इति न्यायदर्शनस्य प्रथिता प्रणाली।

इदं चात्र आलोचनीयं यदस्मिन् दर्शने आकाङ्क्षाज्ञानेन भासमानः संसर्गः इति सत्यम्। एकपदार्थेऽपरपदार्थस्य संसर्गस्तावत् अपरपदार्थनिष्ठप्रतियोगिता-निरूपकः एकपदार्थनिष्ठानुयोगितानिरूपकश्च। एकं यत् पदमित्येकपदं कर्मधारयः समासः। तस्यार्थ एकपदार्थः इत्येष समासो यदि विधीयते, तर्हि 'नीलो घटः' इत्यत्र नीलपदम् एकपदं, तदर्थनिष्ठप्रतियोगितानिरूपकः, अथ च अपरं पदं घटपदं, तदर्थनिष्ठानुयोगितानिरूपकः संसर्गः अभेदः संसर्ग इति। किन्तु 'एव'-कारस्थले अव्याप्तिरागमिष्यति। यतो हि 'एव'-शब्दस्य कोऽर्थः ? अन्ययोगे व्यवच्छेदे च 'एव' -शब्दस्य खण्डशः शक्तिः। एका

शक्तिस्तु स्वीकर्त्तुं न शक्यते। अन्यत्वस्य केवलान्वयित्वात् सर्वव्यापित्वाच्च। तस्य व्यवच्छेदः शशशृङ्गायमाण इति कृत्वा, अन्ययोगे व्यवच्छेदे शक्तिरेकैव वर्त्तते खण्डशः। यथा फलद्वयं फलत्रयं वा अवलम्बमानं विराजते एकमेववृन्तं तथैव एकस्यामेव शक्तौ पदार्थद्वयम् - अन्ययोगो व्यवच्छेदश्च। अनया रीत्या यदि खण्डशः शक्तिः स्वीक्रियते, तर्हि कामं तावत् अन्ययोगेऽपि विशेषणता च विशेष्यता च। व्यवच्छेदेऽपि च विशेषणता च विशेष्यता च स्वीकर्त्तुं शक्यते। इत्थं 'पार्थ एव धनुर्धरः' इत्यत्र एवकारस्य त्रिविधोऽर्थः - अयोगव्यवच्छेदः, अन्ययोगव्यवच्छेदः, अत्यन्तायोगव्यवच्छेदश्च। यत्र विशेष्यसङ्गत एव शब्दस्तत्र अन्ययोगव्यवच्छेदं करोति। पार्थान्यकरणादौ धनुर्धरत्वस्य यः योगस्तत्र व्यवच्छेदो विधीयत इति विज्ञाप्यते। एवं च - 'पार्थः धनुर्धर एव' इति ईदृशः अयोगव्यवच्छेदः। तत्र पार्थे धनुर्धरत्वस्यायोगो व्यवच्छिद्यते। 'नीलं सरोजं भवत्येव' अत्र क्रियासङ्गत एवकारः अत्यन्तायोगव्यवच्छेदार्थक इति रीत्या 'एव'-शब्दस्य अन्ययोगे व्यवच्छेदे अयोगे व्यवच्छेदे वा यदि खण्डशः शक्तिः स्वनिष्ठप्रतियोगितानिरूपकत्व-स्ववृत्तिधर्मावच्छिन्न-प्रतियोगिता-निरूपकत्व-स्वसम्बन्धेन वाऽन्वयो विधीयते, तस्मिन् संसर्गे इदं लक्षणं संघटते।

पदस्यार्थः पदार्थः, एकश्चासौ पदार्थ इत्येकपदार्थः। एवम् एकपदार्थनिष्ठ-प्रतियोगितानिरूपकः एकपदार्थभिन्नः य अपरः पदार्थः, इति रीत्या विधीयमानायां व्याख्यायाम् एव-कारस्थले दोषस्तु नास्ति। अन्ययोग एकपदार्थः अपरश्च पदार्थो व्यवच्छेदो भविष्यति। परन्तु 'नीलो घटः' इत्यत्र पुनः दोषः संवृत्तः। यतश्च पदार्थस्य ऐक्यम् अभेद एव वा तत्र संसर्गः। नील इति एकः पदार्थः एव यदि स्वीक्रियते, तर्हि अपरः पदार्थः घट-पदार्थः स्वीकर्त्तुं न शक्यते। 'नील'-शब्देनापि स एवार्थो नीलत्वेनोच्यते। प्रकारतावच्छेदके विशेष्यतावच्छेदके भेदो वर्त्तते, गत्यंशे तु भेदो नास्तीति कृत्वा अभेद एव तत्र संसर्गस्तर्हि कुतो नाम तत्र सङ्गतिर्विधेया ? अतश्च 'एकश्चासौ पदार्थः' इत्यपि विशेषसमासो वक्तुं न शक्यते। तर्हि पदार्थतावच्छेदकं एकत्वमन्वीयते। एकं यत् पदार्थतावच्छेदकं तद्भिन्नं यत् अपरं पदार्थतावच्छेदकम् इत्ययमर्थो यदि कथञ्चित् स्वीक्रियते तर्हि योजना भवेत्। तर्हि पदार्थतावच्छेदकस्य नीलत्वस्य घटत्वस्य तत्रापि भेदः। एवं च एवकारस्थलेऽपि अन्ययोगत्वस्य व्यवच्छेदस्य भेदो वर्त्तते। पदार्थतावच्छेदकभेदं स्वीकृत्य यदि निर्वाहो विधीयते तदा योजना घटयितुं शक्या। अत्र वादिभिर्नैयायिकैः परिष्कारप्रणाली इत्थम् उच्यते - धर्मविशिष्टः संसर्गः आकाङ्क्षाभास्यः। अत्र अर्थः शक्त्या वा लक्षणया वा आनेतुं शक्यते। अयमर्थः किमनुमेयः ? आचार्यः श्री गदाधरभट्टः - एतद्-विषयकतात्पर्यवान् तद्-वाक्यप्रयुक्तत्वाद् इत्थमर्थम् अत्र मनुते। अनया रीत्या अनुमेयोऽयमर्थः। धर्मविशिष्टः संसर्गः आकाङ्क्षाभास्यः। वैशिष्ट्यं च स्वावच्छिन्नानुयोगितानिरूपकत्वं, स्वेतरधर्मावच्छिन्नप्रतियोगितादिरूपकत्वमिति। यथा 'नीलो

घट' इत्यत्र धर्मपदेन घटत्वं, घटत्वावच्छिन्ना अनुयोगिता घटनिष्ठा, तादृशानुयोगिता-निरूपकत्वम् अभेदसंसर्ग। एवं च घटत्वेतरधर्मः नीलत्वरूपो धर्मः, तादृशनीलत्व-धर्मावच्छिन्ना प्रतियोगिता नीलपदार्थनिष्ठा प्रतियोगिता, तादृशप्रतियोगिता-निरूपकत्वम् अभेदसंसर्ग इति रीत्या समन्वयो विधातव्यः। धर्मविशिष्टः संसर्ग आकाङ्क्षाभास्यः, वैशिष्ट्यं च स्वावच्छिन्नानुयोगितानिरूपकत्वम्, स्वेतरधर्मावच्छिन्नप्रतियोगिता-निरूपकत्वम् इति सम्बन्धद्वयम्। पुनरप्यत्र - पशुपदार्थः लोमवल्लाङ्गूलवान् पशुरित्यत्र यदि धर्मपदेन लाङ्गूलत्वं गृह्यते, तर्हि धर्मविशिष्टः संसर्गः लोमलाङ्गूलयोः संयोगः संसर्गः। लोमतत्त्वं विकारभूतम्, अतः संयोगः संसर्गः। यद्यवयवः स्यात् तर्हि समवायः सम्भवेत्, परन्तु विकारभूतत्वात् - लोमानि नखाश्च विकारभूता इति न्यायात् संयोग एव सम्बन्धः स्वीकार्यः। एवं च धर्मपदेन लाङ्गूलत्वं ग्राह्यम्, तदवच्छिन्नानुयोगितानिरूपकत्वं संयोगसंसर्ग, स्वेतरधर्मो लाङ्गूलत्वातिरिक्तो धर्मः लोमत्वरूपः, तदवच्छिन्नप्रतियोगिता-निरूपकत्वं संयोगसंसर्ग। एवं संयोगसम्बन्धेऽप्याकाङ्क्षाभास्यत्वमागतम्। तत्र वृत्ति च वृत्तिभास्यत्वमेव वर्त्तते। यथा घट-घटत्वयोः समवाये घट-पदस्य शक्तिः, तथैव तत्रापि शक्तिभास्यः संयोगः संसर्गो ग्राह्यः। अस्मिंश्च संसर्ग आकाङ्क्षाभास्यत्वापत्तिरापतिता। अत एव अयमतिव्याप्तिदोषोऽत्र समायातः।

एवमेव 'राज्ञो राजा राजराजः' इत्यत्र यदि सादृश्यात् राजत्वम् अखण्डोपाधि स्वीकृत्य एक एव धर्मः स्वीक्रियते, तदायं दोषः। वस्तुतस्तु निरूपकभेदात् राजत्वं भिन्नमेव वर्त्तते। परन्तु कथञ्चित् अखण्डोपाधिरूप एव धर्म इति स्वीक्रियते, तदा 'राज्ञो राजा राजराजः' इत्यत्र स्वत्वसम्बन्धे आकाङ्क्षाभास्ये लक्षणं न संघटते। द्वयोः राजत्वयोरैक्यात्। स्वं राजत्वरूपो धर्मः, तदवच्छिन्नानुयोगिता-निरूपकत्वम्, एवं च स्वेतरधर्मो राजत्वरूपो धर्मो नास्ति। तथैव समवायेन अभावो नास्तीति अत्राप्यभावः 'नञर्थेऽभावे' गच्छति। नञ्पदभणिते स्थले नञर्थाभावविशेष्यक एव बोधः। एवं च नञर्थाभावे अभावपदार्थस्य अन्वयः स्वनिष्ठ-प्रतियोगितानिरूपकत्वसंसर्गेण, अभावत्वस्य स्वावच्छिन्न-प्रतियोगिता-निरूपकत्वसंसर्गेण, कर्त्तुं शक्यते। तत्र च स्वनिष्ठप्रतियोगिता-निरूपकत्वसम्बन्धेन अभावस्य नञार्थाभावेऽन्वयो विधीयते। तत्राप्येष नियमो न संघटते, यतो हि नञ्पदजन्यप्रतीतिविषयकाभावेऽभावपदजन्योपस्थितविषयेऽभावे च अभावत्वम् अखण्डोपाधिरूपः धर्मः इति कृत्वा स्वेतरत्वं तत्र नास्तीति तृतीयो दोषः संवृत्तः।

एतान् दोषान् निवारयितुं परिष्क्रियते यत् उपस्थितिविषयताविशिष्टः संसर्गः आकाङ्क्षाभास्यः। वैशिष्ट्यं चात्र स्वप्रयोज्यशाब्दबोधीयविशेष्यतानिरूपकत्वं स्वनिरूपित-त्वाभावोपस्थितीयविषयताप्रयोज्य-शाब्दबोधीयविषयताप्रयोज्य-प्रकारतानिरूपकत्वम् - इति सम्बन्धद्वयेन परिष्कारः स्वीकार्यः। अस्मिन् परिष्कारे 'लोमवल्लाङ्गूलवान् पशुः' इत्यत्र यद् शक्तिभास्यत्वमेव संयोगसम्बन्धे वर्त्तते न तु वृत्तिभास्यत्वम्, वृत्तिभास्यत्वमेव वा वर्त्तते

न त्वाकाङ्क्षानिरूपितप्रयोज्यतावती तत्र विषयता। स्वनिरूपितत्वाभाववती उपस्थितीया विषयता अत्र न सम्पन्ना। यतो हि एकैव शक्तिरेकैव चोपस्थितिरिति उपस्थितीया विषयता लाङ्गूलत्वावच्छिन्न-विशेष्यत्वाख्या विषयता, तन्निरूपितैव उपस्थितीया लोमत्वावच्छिन्ना प्रकारता न तु स्वनिरूपितत्वाभाववतीति कृत्वा अत्रापि समन्वयः। 'राज्ञां राजा राजराजः' इत्यत्र तु यद्यपि राजत्वम् अखण्डोपाधिरूपेण स्वीकृत्यैवमापत्तिः प्रकटीकृता, तत्रापि प्रथमराजपदनिष्ठ-वृत्तिज्ञानाधीनोपस्थितिः, द्वितीयराजपदनिष्ठ-वृत्तिज्ञानाधीनोपस्थितिर्भिन्नेति कृत्वा उपस्थितेर्भेदात् तत्र स्वनिरूपितत्वाभाववत्युपस्थितीया विषयता प्रथमराजपदनिष्ठ-वृत्तिज्ञानाधीनोपस्थितिविषयीभूता या विषयता राजत्वावच्छिन्ना सा संवृत्ता। अथ चात्रापि दोषो निराकृतः। समवायेन - 'राज्ञां राजा राजराजः' इत्यत्र राजपदद्वयं वर्त्तते। एवं च यद्यपि राजत्वमखण्डोपाधिरूपमेकं स्वीक्रियते किन्तु वृत्तिज्ञानं तु भिन्नमेव। प्रथमस्य राजपदस्य निरूपिका या वृत्तिः, तज्जन्या या उपस्थितिः सा द्वितीयराजपदनिष्ठ-वृत्तिज्ञानजन्योपस्थितेर्भिन्ना। उपस्थितेर्भेदात् स्वनिरूपितत्व-अभाववती उपस्थितिः संवृत्तेति रीत्या समन्वयः कथञ्चित् कर्त्तुं शक्यते। ज्ञानभेदे सति विषयभेदो न इत्यपि मतं वर्त्तते, किन्तु वस्तुतस्तु राजत्वं भिन्नं भिन्नमेव। राजतेऽसाविति राजा - यत्किञ्चिन्निरूपितराजत्वं भवति। तन्निरूपकभेदात् परस्परेण भिन्नम्। अयं दोषः अत एव द्रढीयान् नास्ति। अभावो नास्तीत्यत्र नञ्पदनिष्ठ-वृत्तिज्ञानाधीना या उपस्थितिः, अथ च अभावपदनिष्ठ-वृत्तिज्ञानाधीना या उपस्थितिः, तयोः नञ्पदनिष्ठवृत्तिज्ञानाधीनाभावत्वावच्छिन्नाभावविषयिणी उपस्थितिः वर्त्तते। एवं च अभावपदार्थस्य स्वनिष्ठप्रतियोगितानिरूपकत्वसम्बन्धेन नञ्पदार्थे अभावे एवान्वयः। यथा - 'घटो नास्ति' इत्यत्र घटपदार्थस्य नञर्थाभावे स्वनिष्ठप्रतियोगिता-निरूपकत्वसम्बन्धेन नञि स्वीकृते घटनिष्ठप्रतियोगितानिरूपक अभावः, इति रीत्या अत्रापि यद्येषा सरणिः स्वीक्रियते तर्हि प्रथमान्तार्थविशेष्यक-शाब्दबोधवादिनां नैयायिकानां मते 'भूतले घटो नास्ति' इत्यत्र अस्तित्वाभाववान् घटः, भूतलादावभिवर्णिता या सत्ता, तादृशसत्ताभाववान् घटः, इति प्रथमान्तार्थमुख्यविशेष्यक एव बोधः। तथा अत्रापि अस्तितावान् सत्तावान् योऽभावः, तादृशाभावप्रतियोगिकः अभाव इत्येव बोधः कथञ्चिद् भवितुमर्हति। परन्तु यदि अभावमुख्यविशेष्यकः बोधः स्वीक्रियते तदायं दोषः।

'भूतले न घटः' इत्यस्य अर्थद्वयं वर्त्तते - भूतलनिरूपितवृत्तित्वाभाववान् घटः किंवा भूतलाधिकरणकः यो घटः तस्य अभावः। यदि नञर्थाभाव एव मुख्यविशेष्यकः स्वीक्रियते, तदा भूतलनिरूपिताधेयतावान् यः घटः, तादृशघटनिष्ठप्रतियोगिता-निरूपकः अभाव इत्यर्थः स्यात्। यदि भूतलपदार्थस्य वृत्तित्वसम्बन्धेन अन्वयः आधेयत्वे स्वीक्रियते, भूतलनिरूपिता या वृत्तिता या आधेयता, तादृशाधेयताभाववान् घटः इति आधेयत्वस्य नञर्थाभावेऽन्वयः क्रियते, (व्युत्पत्तिवादे एव ग्रन्थे अग्रे इदं सरणिद्वयं प्रतिपादितम्) - तत्रापि नञर्थाभावस्य अन्वयोऽभावे, किं वा अभावस्यान्वयो नञर्थाभावे भवतु, तथापि

अभावत्वमखण्डोपाधिरेक एव धर्म इति तावता स्वनिरूपितत्वाभाववती या उपस्थितीया अन्या विषयता इति उपस्थितीय-विषयतयोः परस्परं भेदं स्वीकृत्य अत्रापि निर्वाहः कर्त्तव्यः। यतश्च नञपदनिष्ठ-वृत्तिज्ञानाधीनोपस्थितिरन्या, अभावपदनिष्ठवृत्तिज्ञानाधीनो-पस्थितिरन्या। तत्रापि यदि अभावत्वस्य अन्वयः क्रियते यथा हि न हि केवलं विशेष्ये विशेषणमिति रीत्या कश्चिदभ्युपैति, अपितु विशेषणतावच्छेदकावच्छिन्नमेव विशेषणं विशेष्ये गच्छति। तर्हि 'भूतले घटः नास्ति' इत्यत्र घटत्वावच्छिन्न एव घटः नञर्थाभावे स्वीकार्यो न पुनः केवलस्य घटाभावः। अभावपदार्थः अभावत्वावच्छिन्न एव प्रतीयते तर्हि अभावत्वस्याप्यन्वयः स्वावच्छिन्नप्रतियोगितानिरूपकत्वसम्बन्धेन भवितुमर्हति, किन्तु तत्र पदार्थस्य नास्ति, पदनिष्ठवृत्तिज्ञानाधीनोपस्थितीयमुख्यविशेष्यतानाश्रयत्वात्। अतश्च पदार्थत्वम् अभाव एव वर्त्तते इति रीत्या अयमेव समाधिस्तत्र वक्तव्यो यदभावपदार्थ एव स्ववृत्तिधर्मावच्छिन्न-प्रतियोगिताकत्व-सम्बन्धेन अभावे गच्छति अतश्चाभावत्वस्यान्वयस्तत्र आवश्यकता न वहति, इति तृतीया सरणिः।

अत्रायमपि प्रकार उदेति यत् स्वनिरूपितत्वाभाववती या उपस्थियीया विषयता, तादृशविषयताप्रयोज्यशाब्दबोधीय-प्रकारतानिरूपकत्वमित्यस्य सम्बन्धस्य स्थाने अपरोऽपि सम्बन्धः स्वीकर्तुं शक्यते। स चैकः सम्बन्धस्तादृश एव स्वप्रयोज्यशाब्दबोधीय-विशेष्यतानिरूपकत्वम् अपरश्च उपस्थितीयविशेष्यताविशिष्ट एव संसर्गस्तस्मिन् एव अंशे द्वितीयः संसर्गः अनेन रूपेण परिष्क्रियते। उपस्थितीयविषयता प्रयोज्या शाब्दबोधीयविशेष्यता तन्निरूपकत्वम्, अथ च स्वप्रयोजकं यद् वृत्तिज्ञानं तादृशवृत्तिज्ञानीयविषयतानिरूपता या वृत्तिज्ञानीया अन्या विषयता तादृशविषयताप्रयोज्योपस्थितीय-विषयतानिष्ठ-प्रकारता-निरूपकत्वम् इत्येषापि रीतिः वक्तुं शक्या। वृत्तिज्ञानेऽपि भेदो वर्त्तते, तादृशं भेदमादाय अयं परिष्कारो द्रढीयान् भवति।

किन्तु अस्मिन् परिष्कारे अपि एष दोषः समायति - 'घटः' इत्यत्र शाब्दबोध भवति 'एकत्वविशिष्टो घट' इति। अत्र घटोपदोत्तरा सुविभक्तिः, सुविभक्तेरर्थ एकत्वम्, घटपदार्थश्च घटत्वावच्छिन्नः, तत्र समवायसम्बन्धेन एकत्वस्य घटेऽन्वयः क्रियते। एवञ्चैकत्वप्रतियोगिक-घटानुयोगिकः यः समवायः संसर्गः, स च समवायः संसर्ग आकाङ्क्षाभास्यः। किन्तु घटत्व-घटयोः य समवायः स तु शक्तिभास्यः। समवायस्यैकत्वात् तत्राप्ययं दोषो वर्त्तते यत् एकत्र समवायो यदि आकाङ्क्षाभास्यः, तर्हि अपरत्रापि स्थले आकाङ्क्षाभास्य एव भवतु। यद्येकत्र शक्तिभास्यः तर्हि अपरत्रापि शक्तिभास्य एव भवतु। अस्यां शङ्कायां किं समाधानम् ? समवायस्यैकत्वे तु इयं शंका आपतत्येव। अस्मिन् प्रसंगे न्यायविद्भिरुच्यते यत् उपस्थितीयविषयताविशिष्टः संसर्गः। संसर्गे वैशिष्ट्यं मा भवतु, अथ च उपस्थितीयविषयताविशिष्टा या संसर्गता, सा आकाङ्क्षाप्रयोज्या। संसर्गतायाम् आकाङ्क्षाप्रयोज्यत्वं विधीयते। एवं च - संसर्गताया निरूपकभेदेन भिन्नत्वाद्

दोषः। संसर्गस्यैकत्वेऽपि तन्निष्ठायाः संसर्गतायाः सखण्डोपाधिपक्षे निरूपकभेदाद् भिन्नत्वं स्वीकृत्य अयं पक्षो निर्वोढुं शक्यः। तत्र चोपस्थितीयविषयताविशिष्टा संसर्गता, संसर्गतायां वैशिष्ट्यं किदृशम् ? उपस्थितीयविशेष्यतेति स्वप्रयोज्यशाब्दबोधीयविशेष्यता, तन्निरूपितत्वं संसर्गतायाम्। पुनश्च स्वप्रयोजकवृत्तिज्ञाने विषयत्वनिरूपिता या अपरा वृत्तिज्ञानीया विषयता तादृशविषयता प्रयोज्या या उपस्थितीया विषयता, तादृशविषयप्रयोज्या या शाब्दबोधीया प्रकारता, तन्निरूपितत्वम् इति अनेन सम्बन्धद्वयेन एष परिष्कारो निर्बाह्यः। अत्र चायमेव विशेषो यत् संसर्गस्यैक्ये अपि संसर्गतायां भेदः। अतश्च संसर्गतायां सखण्डोपाधिपक्षं स्वीकृत्य भेदावगाहनेनायं परिष्कारः कथञ्चिन्निर्वाह्यः। अथ धर्मविशिष्टः संसर्गः आकाङ्क्षाभास्यः इति। तस्यैव विशदीकृतं स्वरूपमेतत् यदुपस्थितीयविषयता-विशिष्टा या संसर्गता सा आकाङ्क्षाप्रयोज्या इति। अनेन रूपेण एकः पक्ष उपस्थापितः।

महामनीषिणा श्रीमता भट्टोजिदीक्षितेन महामहोपाध्यायेन कैयटेन चाभेदस्य संसर्गता स्वीकृता। नैयायिकैरप्यभेदस्य संसर्गता स्वीक्रियते। तत्र च द्विष्ठत्वं कीदृशमिति विवेचनायां - द्वित्वविशिष्टत्वं द्विष्ठत्वम्। वैशिष्ट्यं च स्वसामानाधिकरण्य-स्वाश्रयाश्रयत्व-इत्येकतरत्वसम्बन्धेन। यथा 'राज्ञः पुरुषः' - इत्यत्र स्वत्वं संसर्गः, तत्र द्वित्ववैशिष्ट्यं वर्त्तते स्वसामानाधिकरण्य-स्वाश्रयाश्रयत्व-इत्येकतरत्वसम्बन्धेन राजनि पुरुषे च। तत्रैव स्वत्वसंसर्गोऽपि वर्त्तते। अतश्च सामानाधिकरण्यमेका वृत्तिः द्वयोः संघटते। एवमेव 'नीलो घटः' इत्यत्र स्वाश्रयाश्रयत्वरूपः द्वितीयः सम्बन्धो योजनीयः। स्वं द्वित्वं, तदाश्रयता नीलत्वे घटत्वे च, प्रकारतावच्छेदके, विशेष्यतावच्छेदके, पुनश्च तदाश्रयता नीलघटयोः। स्वसामानाधिकण्यं भेदस्थले, स्वाश्रयाश्रयत्वमभेदस्थले इति रीत्या नैयायिकप्रवरैः द्वित्वविशिष्टं द्विष्ठत्वं संयोज्य सम्बन्धिभिन्नत्वे सति द्विष्ठत्वे सति विशिष्टप्रतीति-नियामकत्वम् इत्येतत् लक्षणं सम्बन्धस्य सङ्गमयितुं शक्यते।

परन्तु अस्मिन्नवसरे विचारः अभेदविषये कर्तव्यो वर्त्तते। तत्र व्युत्पत्तिवादे श्रीमद्भिर्गदाधरभट्टैरुल्लिख्यते - "अभेदश्च प्रातिपदिकार्थे स्वसमानविभक्तिकेन स्वाव्यवहितपूर्ववर्तिना पदेन चोपस्थापितस्यैव संसर्गमर्यादया भासते" इति। यथा - 'नीलो घटः' इत्यत्र प्रातिपदिकार्थे घटरूपे अर्थे अभेदः स्वसमानविभक्तिकेन स्वाव्यवहितपूर्ववर्तिना पदेन चोपस्थापित इति। स्वं 'घटः' इति प्रथमान्तं प्रथमैकवचनं पदम्, तत्समानविभक्तिकं पदं 'नीलः' इति। तेनोपस्थापितः अभेदः घटे भासते - इत्येका सरणिः। अन्या च - स्वाव्यवहितपूर्ववर्तिना पदेन, 'नीलघटः' इति समासस्थले स्वसमानविभक्तिकत्वं नीले नास्ति, स्वाव्यवहितपूर्ववर्त्तित्वं वर्त्तते। स्वं घटः इति विशेष्यवाचकं पदम्, तदव्यवहित-पूर्ववर्तिपदं नील-पदम् तेनोपस्थापितः नीलपदार्थः, तस्याभेदः घटे भासत इति रीत्या समन्वयः कर्तुं शक्यः। परन्तु अत्रेयं शङ्का जागर्ति यत् - राज्ञः पुरुषो राजपुरुषः इति षष्ठीसमासस्थलेऽपि - स्वं पुरुष इति विशेष्यताप्रयोजकं पदं, तदव्यवहितपूर्ववर्तिपदं

राज-पदम्, तेनोपस्थापितः राजपदार्थः, तस्यापि अभेदः पुरुष-पदार्थे कथं भासते ? अस्याः शङ्कायाः समाधानं मूले न वर्त्तते, टीकायामपि न वर्त्तते। **गूढार्थतत्त्वालोके** एषा शङ्का निवारिता श्रीमद्भिर्बच्चाझामहोदयैः। तत्र एषा सरणिः प्रदर्शिता - वह्निमत्त्वे धूमः इति कथनेन अयोगोलकमपि वह्न्यधिकरणभूतम्, किन्तु तत्र धूमो नास्ति। मास्तु नाम धूमः। व्याप्यानधिकरणे यदि व्यापकं स्यात् तर्हि का क्षतिः ? धूमः व्याप्यः, वह्निमत्त्वं व्यापकम् तद् यदि अयोगोलके वर्त्तते, वर्त्ततां नाम। व्याप्यानधिकरणेऽपि व्यापकस्य सत्ता भवत्येव विषमव्याप्तिस्थले वर्त्तत, यत्र तु समा व्याप्ति स्यात् तत्र द्वयोः सामानाधिकण्यं वर्त्ततां नाम। अत्र तु विषमा व्याप्तिरिति धूमस्य नाधिकरणत्वमयोगोलके, वह्निमत्तायाश्चाधिकरणता वर्त्तते, वर्त्ततां नाम। तथैव 'राज्ञः पुरुषः राजपुरुषः' इत्यत्रापि अभेदश्च प्रातिपदिकार्थे स्वसमानविभक्तिकेन स्वाव्यवहितपूर्ववर्तिना पदेन चोपस्थापितस्यैव, यथा -- धूमो वह्निमत्त्वे, वह्निमत्ता त्वयोगोलकेऽपि, धूमस्तत्र नास्तीति न कापि क्षतिः। तथैव अत्रापि यद्यभेदः संसर्गः राजपुरुषे न भासते, मा भासतां नाम। राजपुरुषे स्वाव्यवहितपूर्ववर्त्तिना पदेन चोपस्थापितत्वं भासते, भासतां नाम। व्यापकताया अधिकरणेऽनधिकरणत्वेऽपि न काचन क्षतिः इतिरीत्या तत्र समन्वयः कार्यः।

अतश्च "स्वसमानविभक्तिकेन स्वाव्यवहितपूर्ववर्त्तिना पदेन उपस्थापितस्य एव अभेदो भासते" इत्येषा सिद्धान्तसरणिः। तत्र 'वेदाः प्रमाणम्' इति स्थलं गृह्यताम्। अत्राभेदो भासते। प्रमाणपदार्थस्य अभेदः संसर्गः वेदपदार्थे भासते इत्येकः सिद्धान्तः। विशेष्यवाचकं पदं वेदा इति पदम्। विशेष्यवाचकपदसमानविभक्तिकेन उपस्थापितस्य समानविभक्तिकत्वं प्रमाणपदे। यतश्च विभक्तिः प्रथमा, एवं च प्रथमात्वेन गृहीत्वा समानविभक्तिकं प्रथमान्ते प्रमाणपदे ग्राह्यम्। एवं च 'वेदाः प्रमाणम्' इत्यत्र अभेदो भासते। अत्रैषा शङ्का समुदेति 'नीलो घट' इत्यत्र -

या विशेष्येषु दृश्यन्ते लिङ्गसङ्ख्याविभक्तयः ।
प्रायास्ता एव कर्त्तव्या समानार्थे विशेषणे ।।

इति शिष्टोक्त्या विशेष्यवाचकपद-समानवचनकत्वं विशेषणे, अभेदस्थले दृश्यते अनुभूयते च। यदि एष नियमस्तर्हि 'वेदाः प्रमाणम्' इत्यत्रापि समानवचनकत्व-व्यवस्था आपतति। किन्तु नैषात्र दृश्यते। तथापि शिष्टोक्तत्वात् साधुतास्य वाक्यस्य वर्त्तत एव। यद्युच्यते - समानलिङ्गकस्थल एव एष नियमः 'वेदाः प्रमाणम्' इति भिन्नलिङ्गकं स्थलम्, अतश्च नियमाति - क्रान्तिरिति कृत्वा दोषः पराहत इति। परन्तु समानलिङ्गकस्थले एव नियमः, इति कथनविषये काव्यप्रकाशीयेयं कारिका स्मरणीया -

शक्तिर्निपुणता लोकशास्त्रकाव्याद्यवेक्षणात् ।
काव्यज्ञशिक्षयाभ्यास इति हेतुस्तदुद्भवे ।।

अस्याः कारिकाया वृत्तौ - 'तत्र समुदिता न तु व्यस्तास्तस्य काव्यस्य हेतुः' इति मम्मटभट्टा आहुः। समानलिङ्गकस्थले यद्येष नियमस्तर्हि कथमस्मिन् 'त्रयः समुदिताः हेतवः' इति कथनीयं स्यात्। अथ च - द्वितीया शङ्का अप्यत्र जागर्ति - यदि समानलिङ्गकस्थले एष नियमस्तर्हि भिन्नलिङ्गकस्थले तावत् औत्सर्गिकमेकवचनमेव सर्वत्र। 'प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानि' इति न्यायदर्शनीय-सूत्रे 'प्रमाणम्' इत्येव वक्तव्यं स्यात्। अत एव एतासां समासां समस्यानां समाधानाय कमप्यनुगमकं तावद् वक्तव्यम्। अत्र ग्रन्थकृतैव स्वत उच्यते - "यत्र विशेष्यवाचकपदोत्तरविभक्ति-तात्पर्य-विषयसंख्या-विरुद्धसंख्याया विशेषणवाचकपदोत्तरविभक्त्या अविवक्षितत्वम्, तत्र विशेष्यविशेषण-वाचकपदयोः समानवचनत्वम्" इत्येष नियमः। 'वेदाः प्रमाणम्' इत्यत्र विशेष्यवाचकं पदं वेद इति, विशेष्यवाचकपदोत्तरा विभक्तिः 'जस्'-विभक्तिः, तत्तात्पर्यविषयीभूता संख्या बहुत्वसंख्या, तादृशसंख्याविरुद्धसंख्या एकत्वसंख्या, एकत्व-संख्याया विशेषणवाचक-पदोत्तरविभक्त्या प्रमाणपदोत्तर-'सु'-विभक्त्या विवक्षितत्वम्। यत्र अविवक्षितत्वम्, तत्र समानवचनकत्वनियमः, यत्र विवक्षास्ति तत्र तु न समानवचनकत्वनियम इति रीत्या 'वेदाः प्रमाणम्' इत्यस्य सङ्गमनं जायते। ननु 'वेदाः प्रमाणम्' इत्यत्र विवक्षा कथम् ? उक्तं तावदत्र - प्रमीयते अनेन इति प्रमाणम् इति तावत् प्रमाणपदार्थः, करणे ल्युट्। एवं च प्रमितिकरणं प्रमाकरणं वा प्रमाणम्। तत्र समस्तेषु वेदेषु प्रमाणत्वमेकमेव, न तु भिन्नं भिन्नमिति वक्तुराचार्यस्य तात्पर्यम्। समस्तानां वेदानाम् एकविधमेव प्रामाण्यमिति विवक्षितत्वात्। तच्च कथम् ? - शब्दत्वजातिरेकैव वर्त्तते समस्तेषु वेदेषु। एवं च अवच्छेदकस्य ऐक्याद् अवच्छेद्ये ऐक्यं वर्त्तते। वेदः शब्दराशिरिति शब्दत्वं तत्र जातिभूतो धर्मः। प्रमितिकरणतावच्छेदकमत्र शब्दत्वं, प्रमितिकरणता वेदे, वेदश्च शब्दराशिः। शब्दत्वावच्छिन्ना शब्दत्वनिष्ठावच्छेदकता-निरूपितावच्छेद्यता प्रमिति-करणता शब्दत्वरूप-धर्मस्य ऐक्यत्वात् प्रमितिकरणतायाम् अप्यैक्यम्। कुत्रचिन्निरूपक-भेदाद् भेदः, कुत्रचिदवच्छेकभेदाद् भेदः, कुत्रचिच्च लाघवानुरोधेन अवच्छेदकस्य ऐक्याद् ऐक्यम्। अतश्च 'प्रमाणम्' इत्यत्र प्रमितिकरणताया ऐक्यत्वद्योतनाय सुब्-विभक्तिः। एकत्वविशिष्टं यत् प्रमितिकरणत्वं तदवच्छिन्ना वेदा इति तात्पर्यम्। अत्र एकत्वं प्रमितिकरणत्वरूपे धर्मे शक्यतावच्छेदके अन्वेति।

ननु अत्र 'वेदाः प्रमाणं सन्ति' इत्युच्यते उताहो 'वेदाः प्रमाणम् अस्ति' इति ? वेदा अत्र उद्देश्यभूता पदार्था इति 'वेदाः प्रमाणं सन्ति' इत्येव वक्तव्यम्। 'प्रमाणम्' इत्यस्य विधेयता, उद्देश्यनुसारिणी क्रिया भवति। तथैव व्युत्पत्तिवादे अग्रे उदाह्रियते 'एको वृक्षः पञ्चनौका भवति' इति। अत्र वृक्षे उद्देश्यतेति 'वृक्षः पञ्चनौका भवति' इत्येव वक्तव्यम्।

इत्थं च 'यत्र विशेष्यवाचकपदोत्तरविभक्ति-तात्पर्यविषय-संख्याविरुद्ध-संख्याया विशेषणवाचकपदोत्तरविभक्त्या अविवक्षितत्वं तत्र विशेष्यविशेषणवाचकपदयोः समान-

वचनकत्वमिति नियम आगतः। यत्रेति वाक्ये। घटकत्वं सप्तम्यर्थः। एवं च यद्-वाक्यघटकं विशेष्यवाचकपदं वर्त्तते, तदव्यवहितोत्तरा या विभक्तिः तात्पर्यविषयीभूता विभक्तिजन्यबोधविषयत्वेन इच्छाश्रयीभूता या संख्या तादृशसंख्याविरुद्धा या अपरा संख्या तादृशसंख्याया यदि अविवक्षितत्वं विशेषणवाचकपदोत्तरविभक्त्येति विशेषणवाचक-पदोत्तरविभक्तिप्रयोज्या बोधविषयता तत्र नास्ति, बोधविषयत्वमेव इच्छाविषयत्वं तत् यत्र नास्ति तत्र समानवचनकत्वनियमः।

तथैव 'तत्र समुदिता न व्यस्तास्तस्य काव्यस्य निर्माणे हेतुः' इत्यत्र हेतुपदं काव्योत्पत्तिप्रयोजकतावच्छेदकसमुदायत्वावच्छिन्नपरम्। शक्ति-निपुणता-अभ्यासेति त्रितयावयवके समुदाये समवायत्वम्, तदेव समवायत्वं प्रयोजकतावच्छेदकीभूको धर्मः, तदवच्छिन्नः समुदायः। एकत्वस्यात्रापि समुदायत्वे अर्थः। काव्योत्पत्ति-प्रयोजकतावच्छेदकीभूते समुदाये एकत्वं गच्छति, एकत्वविशिष्टं यत् काव्योत्पत्ति-प्रयोजकतावच्छेदकसमुदायत्वम्, तदवच्छिन्ना भिन्नाः शक्तिनिपुणताभ्यासाः। तृणारणिमणिन्यायवत् अत्र स्वतन्त्रता नास्ति, दण्डकुलालचक्रन्यायेन त्रयाणां मिलिता कारणता। विशेष्यवाचकं पदं 'समुदिता' इति पदं, तदुत्तरा विभक्तिः जस्-विभक्तिः, तत्तात्पर्यविषयीभूता संख्या बहुत्वसंख्या, तद्-विरुद्धा एकत्व-संख्या, तस्याः विशेषणवाचक-हेतु-पदोत्तर-सु-विभक्त्या विवक्षितत्वं वर्त्तत इति रीत्या समानवचनत्व-नियमाक्रान्तिर्न जाता।

किन्तु 'पितरो देवताः' इत्यत्र धर्मशास्त्रीये वाक्ये पितृपदमपि बहुवचनान्तं प्रयुक्तम्, देवतापदमपि बहुवचनान्तं प्रयुक्तम्। तदुपरि ग्रन्थकृता श्रीभट्टाचार्यणोच्यते - 'पितरो देवता' इत्यत्र देवतात्वं नाम त्यागोद्देश्यत्वम्। तत्र देवतात्वधर्मो जातिरूपो धर्मो नास्ति, किन्तु सखण्डोपाधिरूपो धर्मः त्यागोद्देश्यत्वरूपः। अतश्च त्यागत्वावच्छिन्नविधेयतानिरूपितोद्देश्यतावच्छेदकता पितृत्वे, पितामहत्वे, प्रपितामहत्वे च वर्त्तते। एवं पितृत्व-पितामहत्व-प्रपितामहत्वादीनां त्यागीयोद्देश्यतावच्छेदकतेति रीत्या तत्र द्वयोः स्थलयोर्बहुवचनान्ततैव। अतश्चात्र विशेष्यविशेषणयोर्द्वयोरपि समानवचनकत्वनियमः।

'पुरूरवोमाद्रवसौ विश्वेदेवाः' इत्यत्र तु विभिन्नवचनकत्वमेव, यतश्च पुरूरवप्रभृतयः एको देवराशिः, माद्रवप्रभृतीनां द्वितीयो देवराशिः, एवं च द्वयोः समानात् द्वित्वसंख्या तत्र विवक्षितेति कृत्वा 'विश्वेदेवा' इति विशेष्यवाचकपदस्य बहुवचनान्तत्वेऽपि 'पुरूरवोमाद्रवसौ' इति विशेषणवाचकपदस्य द्विवचन्ततैव। अत्रेदमालोचनीयम् - विशेष्यवाचकपदोत्तरविभक्तितात्पर्यविषयसंख्या-विरुद्धसंख्याया अविवक्षितत्वं यत्रास्तु तत्र समानवचनकत्वम्, यत्र च विवक्षा वर्त्तते तत्र विभिन्नवचनकत्वमिति नियमः। तत्र 'मैथिली तस्य दाराः' इत्यत्र वाक्ये मैथिलीति विशेष्यवाचकपदमेकवचनान्तम्, दारा इति च बहुवचनान्तम्। विशेष्यवाचकं पदं मैथिलीति, तदुत्तरा विभक्तिः सु-विभक्तिः, तत्तात्पर्यविषयीभूता एकत्वसंख्या, तद्-विरुद्धा संख्या बहुत्वसंख्या, तस्याः संख्याया

दार-पदोत्तर-जस्-विभक्त्या विवक्षितत्वं नास्ति, दार-पदार्थोऽपि एक एव। किन्तु कोशे 'पुंभूम्निदाराः ' इति नियमात् दारशब्दः पुंलिङ्गः अथ च बहुवचनान्त एव प्रयोक्तव्यः। अत एव 'मैथिली तस्य दाराः' इत्यत्र जस्-विभक्त्या बहुवचनत्वमविवक्षितं वर्त्तते, अतश्च विशेष्यस्यैकवचनात् 'मैथिली तस्य दारः' इत्येव प्रयोगः कार्य इति शङ्का जागर्ति।

अस्याः शङ्कायाः निवारणाय टीकाकृद्भिरुच्यते - अत्रानुगमकं किञ्चिदवश्यं कर्त्तव्यम्। अनुगमकं किम् ? स्वविशिष्टं पदं स्वसमानवचनम्। स्वेन पदेन विशेष्यवाचकं पदं ग्रहीतुं शक्यते। वैशिष्ट्यं च स्वप्रयोज्य-विशेष्यतानिरूपिताभेद-सम्बन्धावच्छिन्न-प्रकारताप्रयोजकत्वम् इति एकः सम्बन्धः। स्वाव्यवहितोत्तर-विभक्तिवृत्तिधर्मवद्-विभक्तिप्रकृतित्वमिति द्वितीयः। स्वाव्यवहितोत्तरविभक्तितात्पर्यविषयसंख्या-विरुद्धसंख्या-विषयकबोधजनकत्वप्रकारक-तात्पर्यविषयविभक्ति-प्रकृतित्वसम्बन्धावच्छिन्नप्रतियोगिताक-स्वाभाववदिति तृतीयः। अनन्तरं च स्वाव्यवहितोत्तरविभक्तिवाच्य-संख्यावच्छिन्नानुयोगिता-निरूपक-पर्याप्तिप्रतियोगिभूतधर्मावच्छिन्नबोधजनकत्वम्, स्वाव्यवहितोत्तरविभक्तिवृत्त्यानु-पूर्वीयसमानानुपूर्वीक-विभक्तिप्रकृतित्वप्रकारक-सम्भावनाप्रयोज्य-साधुत्व-प्रकारक-सम्भा-वनाविषयत्वाभाववद् इत्युभयसम्बन्धावच्छिन्नप्रतियोगिताकस्वाभाववदिति चतुर्थः सम्बन्धः। चतुर्थे सम्बन्धे अभावे प्रतियोगितावच्छेदकौ इमौ द्वौ सम्बन्धौ। स्वविशिष्टं पदं स्वसमानवचनम्। यथा - 'नीलो घटः' इत्यत्र स्वं विशेष्यताप्रयोजकं घट इति पदम्, तद्-विशिष्टं पदं नील इति पदम् इति स्वसमानवचनत्वं तत्र आयाति। वैशिष्ट्यं त्वत्र स्वपदेन घटत्वम्, घटपदप्रयोज्या विशेष्यता, तन्निरूपिता अभेदसम्बन्धावच्छिन्नाप्रकारता-प्रयोज्यकत्वं नीले इति बोध्यम् इति एकः सम्बन्धः।

द्वितीयो यथा - स्वं घट इति पदम्, तदव्यवहितोत्तरा विभक्तिः, सु-विभक्तिः, 'नीलो घटः' इत्यस्यैकवचनान्तत्वात्, तादृशविभक्तिवृत्तिधर्मः प्रथमात्वम्, तद्-धर्मवती विभक्तिः अपरा सु-विभक्तिः, तस्याः प्रकृतित्वं नीलपदे इति।

तृतीयो यथा - स्वाव्यवहितोत्तरविभक्तिः सु-विभक्तिः, तत्तात्पर्यविषयीभूता संख्या एकत्वसंख्या, तद्-विरुद्धा संख्या द्वित्व-बहुत्वसंख्ये, एवं च तादृशसंख्याविषयक-बोधजनकत्वप्रकारक-तत्-तात्पर्यविषयीभूता विभक्तिः औ-विभक्तिः जस्-विभक्तिश्च, तादृशविभक्ति-प्रकृतित्वसम्बन्धावच्छिन्न-प्रतियोगिकताकस्वाभाववत्त्वं नीलपदे। यतश्च नीले पदे औ-विभक्ति-प्रकृतित्वं स्यात्, जस्-विभक्ति-प्रकृतित्वं स्यादिति एष सम्बन्धस्तत्र न घटते, सम्बन्धाभावात् सम्बन्धिनोऽभावः। अतश्च प्रकृतित्वसम्बन्धावच्छिन्न-प्रतियोगिकताक, स्वाभावः घटः इति विशेष्य-पदस्य अभावस्तत्र गतः - नीलपद इति तृतीयः सम्बन्धः समन्वितः।

चतुर्थो यथा - स्वं घटपदम्, तदुत्तरा विभक्तिः सु-विभक्तिः, तद्-वाच्या संख्या एकत्वसंख्या, तादृशसंख्यावच्छिन्नानुयोगितानिरूपक-पर्याप्तिप्रतियोगीभूतो धर्मः नीलत्वरूपो

धर्मः। यतो हि नीलत्वं नीलगुणः प्रत्येकं पर्याप्तम्, न्यायनये अस्य भिन्नत्वात्, तादृशधर्मावच्छिन्नबोधकत्वं नीलपदे वर्त्तते। किन्तु द्वितीयः सम्बन्धो नास्ति। अभावीय-प्रतियोगितावच्छिन्नः द्वितीयः सम्बन्धस्तत्र न घटते। यतश्च स्वं घट इति पदम्, तदुत्तरा विभक्तिः सु-विभक्तिः, तद्-वृत्त्यानुपूर्वी-समानानुपूर्वीका अपरा सु-विभक्तिः, तादृश-सु-विभक्तिप्रकृतिः स्यात्, तदा नीलपदं साधुः स्यात्, इति वक्तुं न शक्यते, न तत्र नियतवचनकं नियतलिङ्गकत्वं वा वर्त्तते - इति रीत्या साधुत्वप्रकारता सम्भावना अत्र विद्यते इति। सम्भावनायाः सत्त्वात् सम्भावनाविषयत्वाभावोऽत्र नास्ति। अतश्च सम्भावना-विषयत्वाभावरूपो द्वितीयः सम्बन्धः नागतः इति कृत्वा उभयसम्बन्धावच्छिन्न-प्रतियोगिताक-स्वाभावः समागत इति चतुर्थोऽपि सम्बन्धो घटते।

'वेदाः प्रमाणम्' इत्यत्र सम्बन्धचतुष्टयसमन्वयं कर्तुं न शक्यते। अतश्च न समानवचनकत्वनियमाक्रान्तिः। यतो हि स्वप्रयोज्यविशेष्यतानिरूपित-अभेदसम्बन्धा-वच्छिन्नप्रकारताप्रयोजकत्वं प्रमाणे सदैव वर्त्तते इति प्रथमः सम्बन्धः। द्वितीयः स्वाव्यवहितोत्तरविभक्तिवृत्तिधर्मवद्-विभक्तिप्रकृतित्वम्। स्वं वेदा इति पदम्, तदुत्तरा विभक्तिः जस्-विभक्तिः, तद्-वृत्तिर्धर्मः प्रथमात्वं, तद्-वती विभक्तिः सुब्-विभक्तिः, तत्प्रकृतित्वं प्रमाणपदे इति द्वितीयः सम्बन्धोऽपि सम्पन्नः। किन्तु तृतीयः सम्बन्धो न सङ्घटते। यतश्च स्वं वेदा इति बहुवचनान्तं विशेष्यवाचकं पदम्, तदव्यवहितोत्तरा विभक्तिः जस्-विभक्तिः, तत्-तात्पर्यविषयीभूता संख्या बहुत्वसंख्या, तादृशसंख्याविरुद्ध-संख्या एकत्वसंख्या, एकत्वसंख्याविषयक-बोधजनकत्वप्रकारक-तात्पर्यविषयीभूता विभक्तिः सु-विभक्तिः, तादृश-सु-विभक्ति-प्रकृतित्वमेव प्रमाणपदे वर्त्तते, तादृशप्रकृतित्वसम्बन्ध-प्रतियोगिताक-स्वाभावो न गतः, अतश्च तृतीयः सम्बन्धो विच्छिन्न इति समानवचनकत्वनियमाक्रान्तिर्न सञ्जायते।

'मैथिली तस्य दाराः' इत्यत्र विशेष्यवाचकं पदमेकवचनं, तत्रापि एष नियमो न सङ्घटते। यतो हि विशेष्यवाचकं पदं मैथिलीपदं, स्वप्रयोज्यविशेष्यता-निरूपित-अभेदसम्बन्धावच्छिन्नप्रकारताप्रयोजकत्वं दारपदे वर्त्तते। अथ च स्वाव्यवहितोत्तर-विभक्तिः सु-विभक्तिः, तद्-वृत्तिधर्मः प्रथमात्वरूपो धर्मः, तद्-धर्मवती विभक्तिः जस्-विभक्तिः, तादृशविभक्तिप्रकृतित्वं दारपदम् इति द्वितीयः सम्बन्धः सङ्घटते। तृतीयः सम्बन्धो यथा - विशेष्यवाचकं पदं मैथिलीति पदं, तदव्यवहितोत्तरविभक्तितात्पर्यविषयीभूता एकत्वसंख्या, तद्-विरुद्धा संख्या बहुत्वसंख्या, तादृशसंख्याविषयक-बोधजनकत्वप्रकारक-तात्पर्य-विषयीभूता विभक्तिः जस्-विभक्तिः तत्र नास्ति, दारपदोत्तरा या विभक्तिस्तस्या बहुत्वेऽतात्पर्यात्। बहुवचनान्ते प्रयुज्यमानेऽपि दारपदे तात्पर्यं त्वेकत्व एव इति कृत्वा संख्याविरुद्धसंख्याविषयकबोधजनकत्वप्रकारक-तात्पर्यविषयीभूतविभक्ति-प्रकृतित्व-सम्बन्धावच्छिन्नप्रतियोगिताक-स्वाभावोऽपि समायात इति तृतीयोऽपि सम्बन्धः सङ्गतः।

किन्तु चतुर्थसम्बन्धे तावत् स्वाव्यवहितोत्तरविभक्तिः मैथिलीपदोत्तरा सु-विभक्तिः, तद्-वाच्या संख्या एकत्वसंख्या, तादृशैकत्वसंख्यावच्छिन्नानुयोगिताक-पर्याप्तिप्रतियोगिभूतो धर्मः दारत्वम्। दारत्वं प्रत्येकं पर्याप्तमिति कृत्वा दारत्वप्रतियोगिका यः पर्याप्तिसम्बन्धः, तादृशपर्याप्तिसम्बन्धीयाऽनुयोगिता एकस्मिन्नेकस्मिन्, एवं चानुयोगितावच्छेदक एकत्वरूपो धर्मः, मैथिलीपदोत्तरविभक्तिः सु-विभक्तिः, तद्-वाच्या संख्या एकत्वसंख्या, तादृशैकत्व-संख्यावच्छिन्नानुयोगिताक-पर्याप्तिसम्बन्धीया प्रतियोगिता दारत्वे, एवं प्रतियोगिरूपो धर्मः दारत्वधर्मः तादृशधर्मावच्छिन्नबोधकत्वं दारपदम् इति प्रथमः सम्बन्धः सङ्गतः। द्वितीयः सम्बन्धो न सङ्घटते - यतश्च स्वाव्यवहितोत्तर-विभक्तिः सु-विभक्तिः, तत्समानानुपूर्विका अपरा सु-विभक्तिः तादृश-सु-विभक्तिप्रकृतित्वप्रकारक-सम्भावना यदि दारपदं सुविभक्ति-प्रकृतिकं स्यात् तर्हि साधु स्यात् इति न घटते कोशविरोधात्। अतश्च सम्भावनाविषयत्वा-भावः समायातः। एवं सम्बन्धद्वयेन स्ववत्ता एव संवृत्ता, न तु सम्बन्धद्वयावच्छिन्न-प्रतियोगिताकः स्वाभावः। यतश्च चतुर्थसम्बन्धे अभावीयप्रतियोगितावच्छेदकं सम्बन्धद्वयं वर्त्तते, इति रीत्या अभावप्रतियोगितावच्छेदकौ इमौ द्वौ सम्बन्धावेवात्र समायातौ, उभयसम्बन्धावच्छिन्नप्रतियोगिताकस्वाभावो नैव समायातः। चतुर्थसम्बन्धस्य अभावात् समानवचनकत्वनियमो न प्राप्त इति मैथिली तस्य दारा इत्यस्य सङ्गतिः।

ननु 'द्वौ पुरुषौ', 'त्रयः पुरुषाः' इत्यत्र पुनरपि दोषो जागर्ति। 'द्वौ पुरुषौ' इति कथं न भवति ? द्वाविति द्विवचनान्तं भवतु नाम किन्तु पुरुषविशेष्ये एकवचनमेव साधु। अत्रोच्यते - विशेष्यवाचकं पदं 'पुरुष'-पदम्, तत्प्रयोज्या विशेष्यता पुरुषपदार्थनिष्ठा, विशेष्यतानिरूपिताभेदसम्बन्धावच्छिन्ना प्रकारता द्वि-पदार्थनिष्ठा, प्रकारताप्रयोज्यकत्वं द्वि-इतिपदे इति प्रथमः सम्बन्धः, द्वितीयस्तु स्वाव्यवहितोत्तरविभक्तिः सु-विभक्तिः (द्वौ पुरुष इत्यत्र), तादृशविभक्तिवृत्तिरूपो धर्मः प्रथमात्वरूपो धर्मः, तद्-धर्मवती विभक्तिः 'औ'-विभक्तिः, तत्प्रकृतिकत्वं 'द्वौ' इत्यत्र वर्त्तते। तृतीयः सम्बन्धो यथा - स्वाव्यवहितोत्तर-विभक्तिः सुविभक्तिः, तत्-तात्पर्यविषयीभूता संख्या एकत्वसंख्या, तद्-विरुद्धा संख्या द्वित्वसंख्या, तादृशसंख्याविषयकबोधजनकत्वप्रकारक-तात्पर्यविषयीभूता विभक्तिः औ-विभक्तिः, औ-विभक्तिप्रकृतित्व-सम्बन्धावच्छिन्नप्रतियोगिताकः स्वाभावः तत्र घटते। यतश्च औ-विभक्तिप्रकृतित्वमेव वर्त्तते द्वि-पदे, अतश्च तृतीयसम्बन्धस्य अभावाद् अत्र समानवचनकत्वानापत्तिः इति शङ्का जागर्ति। अत्र चतुर्थे सम्बन्धे विशेषता आयाति। स्वाव्यवहितोत्तरविभक्तिवाच्यसंख्यावच्छिन्नानुयोगितानिरूपकपर्याप्ति-प्रतियोगिभूत-धर्मावच्छिन्न-बोधकत्वमित्येकः सम्बन्धः। यदि 'द्वौ पुरुषौ' इत्युच्यते, तदा स्वाव्यवहितोत्तर-विभक्तिवाच्या संख्या एकत्वसंख्या, तदवच्छिन्नानुयोगितानिरूपक-पर्याप्तिप्रतियोगिभूतो धर्मो द्वित्वं भवितुं नार्हति, एकस्मिन् द्वित्वस्यापर्याप्ति-भूतत्वादिति रीत्या तत्र प्रथमः सम्बन्धो न सङ्घटते। उभयसम्बन्धावच्छिन्न-प्रतियोगिताकस्वाभावोऽत्र समायात इति समानवचनकत्व-

नियमाक्रान्तिः। यतो हि चतुर्थसम्बन्धस्तु स्वाव्यवहितोत्तर-विभक्तिवृत्त्यानुपूर्वीय-समानानुपूर्वीकापरा विभक्तिः सु-विभक्तिः, तादृश-विभक्ति-प्रकृतित्व-प्रकारतासम्भावना-प्रयोज्या या साधुत्व-प्रकारकसम्भावना, सा द्वि-शब्दे नास्ति। सु-विभक्ति-प्रकृतिः स्यात् तर्हि साधुः स्यादिति सम्भावनाया अभावात् सम्भावनाविषयत्वाभावः वर्त्तते। एकत्वे अपि द्वयं नास्तीति प्रथमसम्बन्धाभावात् च चतुर्थसम्बन्धस्यापि तत्र सङ्गमना वर्त्तते इति रीत्या तत्रापि समानवचनकत्वमायाति, यतश्च तृतीये सम्बन्धे स्वाव्यवहितोत्तर-विभक्तिजन्य-बोध-विषयत्वप्रकारकतात्पर्यविषयीभूता या संख्या, तद्-विरुद्धा या संख्या, तादृशसंख्याविषयक-बोधजनकत्व-प्रकारकतात्पर्य-विषयीभूता या विभक्तिः सा औ-विभक्तिः, तत्प्रकृतित्व-सम्बन्धावच्छिन्न-प्रतियोगिताक-स्वाभावत्त्वम्, औ-विभक्ति-प्रकृतित्वे पुरुषपदमेकवचनान्तम् एव प्रयोक्तव्यमिति कोशे नियमाभावात् समन्वयः कर्त्तुं शक्यते। अतः तृतीयसम्बन्धस्यापि सङ्गमना शक्या एव।

'पुष्पवन्तौ देवौ' - इत्यत्र एकयैव शक्त्या सूर्यः चन्द्रश्चेत्युभावर्थौ गम्येते। सूर्यश्च चन्द्रश्चेति शक्यतावच्छेदकपर्याप्तिः सूर्यत्वे चन्द्रत्व इति धर्मद्वये वर्त्तते। 'पुष्पवन्तौ देवौ' इति प्रयोगो भवति न तु 'पुष्पवन्तौ देवः' इति। तर्हि 'पुष्पवन्तौ देवः' इत्यत्र समागता आपत्तिरपि सम्बन्धचतुष्टयेन निराक्रियते। स्वं विशेष्यताप्रयोजकं पुष्पमिति पदम्, तादृशपदप्रयोज्यतानिरूपिताभेदसम्बन्धावच्छिन्न-प्रकारताप्रयोजकत्वं देवपदे इति प्रथमः सम्बन्धः। द्वितीयस्तु स्वं पुष्पवत् इति पदम्, तदुत्तरा विभक्तिः औ-विभक्तिः, तद्-वृत्तिः धर्मः प्रथमात्वरूपो धर्मः, तादृशधर्मवृत्तिप्रकृतित्वं देवपदे वर्त्तते। तृतीयः सम्बन्धः पुष्पवत् पदोत्तरा विभक्ति औ-विभक्ति, तत्-तात्पर्यविषयीभूता संख्या द्वित्वसंख्या, तत्संख्याविरुद्धा-संख्या एकत्वसंख्या, तादृशैकत्वसंख्याविषयक-बोधजनकत्वप्रकारक-तात्पर्यविषयीभूता विभक्तिः, सु-विभक्तिः, सु-विभक्तिप्रकृतित्वसम्बन्धावच्छिन्नप्रतियोगिताकः स्वाभावः तत्र नास्ति, यतश्च देवौ इत्यस्यापि प्रयोक्तुं शक्यत्वात् तत्र सुविभक्तिप्रकृतित्वमेव साधीय इति वक्तुं न शक्यते। तस्मिन्नेव काले औ-विभक्तिप्रकृतित्वमपि तत्र वारयितुं शक्यते ?' चतुर्थः सम्बन्धस्तु, स्वाव्यवहितोत्तरविभक्तिवाच्या संख्या द्वित्वसंख्या, तादृशसंख्यावच्छिन्ना-नुयोगिताक-पर्याप्तिप्रतियोगिभूतो धर्मः सूर्यत्वरूप इत्येक एव धर्मः कथंचित् ग्राह्यः दोषश्च देयः। सूर्यत्वावच्छिन्नबोधजनकत्वमप्यत्र अपर्याप्त्या वर्त्तते पुष्पवत् पदे। अथ च स्वाव्यवहितोत्तर-विभक्तिवृत्त्यानुपूर्वी-समानानुपूर्वीक-विभक्तिप्रकृतित्व-सम्भावना-प्रयोज्यसम्भावना-विषयत्वाभाव इति चतुर्थः सम्बन्धः। अत्र एवं योजना कार्या - चतुर्थः सम्बन्धो यदि विषयत्वाभावः, तत्समानानुपूर्वीका विभक्तिः औ-विभक्तिः, तादृशविभक्ति-प्रकृतित्वं देवशब्दे विशेषणताप्रयोजके वर्त्तते। विभक्तिप्रकृतित्वप्रकारकसम्भावनाप्रयोज्या साधुत्वप्रकारकसम्भावना नास्ति। यतश्च देवशब्दः एक-द्वि-बहुवचनान्तः, नात्र कोशो वा शिष्टप्रयोगो वा नियामकः। अतश्च चतुर्थसम्बन्धे अभावीयप्रतियोगितावच्छेदकः

द्वितीयस्तथा च प्रथमः सम्बन्धोऽपि समायातः। अतश्च उभयसम्बन्धेनात्र स्ववत्ता एव संवृत्ता न तु स्वाभाववत्ता। अतश्च सम्बन्धचतुष्टयेन समन्वयो न सम्पन्न इति 'द्वौ पुरुषौ' इत्यस्य नियमाक्रान्तिर्नास्ति।

'पुष्पवन्तौ देवः' इत्यस्यापि साधुता न सम्भवति। इदमत्रालोचनीयम् - चतुर्थसम्बन्धघटकसम्बन्धे अभावीयप्रतियोगितावच्छेदकप्रथमसम्बन्धे इत्थं योजना कर्त्तव्या - स्वाव्यवहितोत्तरविभक्तिवाच्यसंख्याविशिष्टो धर्मः, तादृशधर्मावच्छिन्नबोधकत्वं, संख्याया वैशिष्ट्यं धर्मे, स्वनिष्ठावच्छेदकतानिरूपित-स्वावच्छिन्नानुयोगिताकपर्याप्तिप्रतियोगित्वमिति एकः सम्बन्धः, अथ च स्वस्वाश्रयधर्मवृत्त्यवच्छेदकता-स्वाश्रयधर्मपर्याप्तावच्छेदेकता-निरूपितावच्छेद्यतावती या शक्यता, तादृशशक्यतानिरूपितशक्यतावत्त्वम् पुष्पवन्त-पदे द्वित्वाश्रयत्वरूपो धर्मः सूर्यत्व-चन्द्रत्वरूपो धर्मः, धर्मपर्याप्तावच्छेदेकता-निरूपिता-वच्छेद्यतावती शक्यता, न त्वेकधर्मपर्याप्तावच्छेदकतानिरूपितावच्छेद्यतावती शक्यता-वच्छेदकपर्याप्त्या उभयधर्मे वर्त्तते। एवं च - संख्याविशिष्टो धर्मः वैशिष्ट्यनियामकः, एवमपि द्वितीयः सम्बन्धोऽत्र समावेश्यः संख्याश्रयीभूतधर्मपर्याप्त्या निरूपितावच्छेद्यतावती या शक्यता तन्निरूपितशक्यतावत्त्वम्। अनया रीत्या यदि व्याख्या विधीयते, तर्हि तत्रापि लक्षणसमन्वयः। अतश्च 'पुष्पवन्तौ देवौ' इत्येव साधु, न तु 'पुष्पवन्तौ देवः' इति।

किन्तु एतावति परिष्कारे कृतेऽपि 'शतं ब्राह्मणाः' इत्यस्य कथं सङ्गतिः ? 'शतानि ब्राह्मणाः' इति भवितुमर्हति। यतश्चात्रापि सम्बन्धचतुष्टयेन 'ब्राह्मण' इति विशेष्यवाचकपदं, तद्-वैशिष्ट्यं 'शतं'-पदे समायति। यदि कोशबलाद् एतत् न तु उच्यते, "विंशत्याद्या सदैकत्वे सर्वाः संख्येयसंख्ययोः ' इति नियमात्, तर्हि तत्र शतत्वगतमेकत्वमत्र विवक्षणीयं स्यात्। यथा 'वेदाः प्रमाणम्' इत्यत्रैकत्वं विवक्षितम्। विशेष्यवाचकपदोत्तर-विभक्तितात्पर्यरूपा संख्या बहुत्वसंख्या, तद्-विरुद्धसंख्या एकत्वसंख्या, तस्याः विशेषणवाचकपदोत्तरविभक्त्या अविवक्षितत्वं नास्ति, विवक्षितत्वमेव वरीवर्तीति रीत्या 'शतं ब्राह्माणाः' इत्यस्य सङ्गतिः।

अन्यच्च - 'मैथिली दाराः' इतिवत् 'रुक्मणीसत्यभामे कृष्णस्य दाराः' इति स्यात्। तत्रेयं विचिकित्सा 'रुक्मणीसत्यभामे' इति द्विवचनान्तं पदं विशेष्यता प्रयोजकम्, एवं च 'मैथिली दारास्तस्य' इति प्रयोगापेक्षया अत्र वैलक्षण्यम्। अत्र मैथिलीपदोत्तरा सु-विभक्तिः, तदर्थ एकत्वम्, एवमेकत्वावच्छिन्नानुयोगिताकपर्याप्तिप्रतियोगिभूतो धर्मः दारत्वं प्रत्येकं पर्याप्तम्। किन्तु 'रुक्मणीसत्यभामे' इत्यत्र द्वित्वम्, द्वित्वावच्छिन्नानुयोगिताक-पर्याप्तिप्रतियोगिभूतो धर्मः दारत्वं नास्ति। कुतो हेतोः ? अत्र सम्बन्धचतुष्टयं सङ्घटते इति रीत्या तत्र समानवचनकत्वापत्तिः समायाता। स्वप्रयोज्यविशेष्यता-निरूपिताभेद-सम्बन्धावच्छिन्नप्रकारताप्रयोजकत्वं दारपदे। स्वाव्यवहितोत्तरविभक्तिः औ-विभक्तिः, तद्-वृत्तिः धर्मः प्रथमात्वरूपो धर्मः, तद्-वती

अपरा जस्-विभक्तिर्नास्ति, विभक्तिप्रकृतित्व-सम्बन्धावच्छिन्न-प्रतियोगिताक: स्वाभावोऽत्र समायात: इति तृतीयोऽपि सम्बन्धो घटित:। अथ स्वाव्यवहितोत्तरविभक्तिवाच्या संख्या द्वित्वसंख्या तादृशसंख्यावच्छिन्नानुयोगिताकपर्याप्ति-प्रतियोगिभूतो धर्मो दारत्व नास्तीति पर्याप्ति-प्रतियोगिभूतधर्मावच्छिन्नबोधजनकत्वम् इत्ययं सम्बन्धो न समायात:। द्वितीयश्च सम्बन्ध: - स्वाव्यवहितोत्तरविभक्तिवृत्त्यानु-पूर्वीसमानानुपूर्वीकविभक्तिप्रकृतित्व-सम्भावना-प्रयोज्यसम्भावनाविषयत्वाभाव इति, स तत्र वर्त्तते। किन्तु प्रथम: सम्बन्धो न घटित:। अत एव चतुर्थ: सम्बन्ध: सङ्गत:, एकसत्त्वेऽपि द्वितीयं नास्तीति न्यायेन। अतश्चात्र समानवचनत्वापत्ति:। अत्र चतुर्थसम्बन्धस्याभावे प्रतियोगितावच्छेदकेऽपि प्रथमं सम्बन्धे पुनरपि कश्चन निवेशो विधीयताम्। 'स्वाव्यवहितोत्तरविभक्तिवाच्यसंख्याविशिष्टो धर्म:', तादृशधर्मावच्छिन्नबोधकत्वमित्यत्र वैशिष्ट्यं स्वावच्छिन्नानुयोगिताक-प्रयाप्तिप्रतियोगित्वम। स्वन्यूनसंख्यानुयोगिताकपर्याप्तिप्रतियोगित्वम् इत्यन्यतरसम्बन्ध:। रुक्मणी-सत्यभामे इत्यत्र द्वित्वम्, ततो न्यूनसंख्या एकत्वसंख्या, न्यूनसंख्यानुयोगितानिरूपकपर्याप्तिप्रतियोगिभूतो धर्मो दारत्वं भवितुमर्हति इत्यत्रापि समन्वय:।

******************

*अयं प्रबन्ध: **न्यायसत्रम्** इति आचार्य-राधावल्लभत्रिपाठि-महाभागेन न्यायदर्शनस्याखिल-भारतीयोच्चतराध्ययनसत्रे (Sept-Oct.1982) विद्वद्भि: प्रस्तुतानां व्याख्यानानां सम्पादनात्मके ग्रन्थे "व्युत्पत्तिवाद:" इति शीर्षकेण प्रकाशितोऽस्ति। व्युत्पत्तिवादाध्येतणामुपकारायात्र सम्पादाकानामनुज्ञया सोऽयं प्रबन्ध: पुन: प्रकाश्यते।

